# भूमिका ।

---

अस्तिकिलपरमप्रसिद्धः परमात्माश्रुतिस्मृति सूत्रभाष्यवार्त्तिकादिग्रन्थेषु परमास्तिकेषु तदन्तःकरणेषु च साक्षित्वेन, सत्यसच्चिदानन्दघनः परमदयालुः सर्वजनोद्धारायाङ्गोपाङ्गादिनानाविधशास्त्राणितत्तन्महर्षि द्वारा प्रकाशितानीतिनिर्मत्सराविदुषां स्वानुभवरसिकानाञ्चविदितमेव, तत्रापि यद्व्याकरणं तच्च सर्वज्ञ सकलशास्त्रयथार्थमर्मज्ञमहर्षिप्रकाशितन्तत्तत्पोषकत्वेन चकात्यायनप्रणीत वार्त्तिकं महर्षिपतञ्जलयोगाचार्यप्रणीतं महाभाष्यञ्च, वेदार्थपरिज्ञानप्रयोजनप्रज्ञानकर्दमकलुषितजनवाणीपरिशोधनेकतकबीजायतेकिल, तथाचोक्तम्महाभाष्यकारैः । एकः शब्दः सम्यग्ज्ञातः सुष्ठुप्रयुक्तः स्वर्गेलोकेकामधुग्भवतीति, शब्दयथार्थपरिज्ञानं तदर्थज्ञानं धर्मार्थकाममोक्षाणां परमकारणं, च, नहिपदज्ञानंविनायथार्थज्ञानं वाक्यार्थज्ञानं च सम्भवति, तच्चशब्दसाधुत्वासाधुत्व ज्ञानं, शीघ्रं वाक्यार्थज्ञानं च व्याकरणादेवभवति, वेदरक्षाच । तथाचोक्तं महाभाष्ये,रक्षोहागमलघ्वसन्देहाद्यष्टादशप्रयोजनं महाव्याकरणस्य, तत्र पाणिनिप्रोक्तंव्याकरणस्यैवलौकिकवैदिकशब्दसाधुत्वादिज्ञापनेन सर्वस्मात्प्रधानत्वं वेदाङ्गत्वञ्चेतिनपाणिपिहितमनीषिणांसच्छास्त्रनिपुणविचाररसिकानां पदवाक्यप्रमाणपारीणधुरीणानामिति । उक्तञ्च ब्राह्मणेननिष्कारणोधर्मः षडङ्गोवेदोऽध्येयोज्ञेयश्चेति, षडङ्गेषुपाणिनिप्रोक्तमहाव्याकरणस्यैवप्रधानत्वं वेदाङ्गत्वात्सर्वशब्दार्थशुद्ध्यशुद्धिज्ञानेप्रथमत्वाच्चेति, तथाचोक्तमहाभाष्यकारैः । प्रधानेकृतोयत्नः फलतिसफलोभवतीतियावत् महाव्याकरणपरिज्ञाने च, सर्वशास्त्राणामचिरसुलभैवशीघ्रम । शिक्षायामप्युक्तमहर्षिपाणिनिना । मुखं व्याकरणंप्रोक्तम् । शरीरावयवश्रोत्रादीन्द्रियाणांसर्वेषांमुखमेवकार्यंकरोतिस्वस्यापि, सर्वाणीन्द्रियाणितुस्वंस्वमेवकार्यं नान्येषामितिसुस्पष्टम् । तस्मादेववेदपुरुषशरीरावयवीभूतशिक्षाकल्पादिषडङ्गेषु महाव्याकरणस्यमुख्यत्वम् । किञ्च,शब्दज्ञानमन्तराक्रियापिन फलति,तथाहिस्वर्गकामोयजेदिति यजधातोरर्थोऽपरिज्ञानेन, कामनाविषयकशब्दस्यानुपपत्त्यायजतिददातीत्यादिक्रियासिद्ध्यति, तयाविना, च स्वर्गफलाऽनुपपत्तिः । एवंपरम्परासम्बन्धेन धर्मप्रो

क्षाद्यनुपपत्तिरपि बोध्या । असुरत्वादिप्राप्त्या नरकादिप्राप्तिश्च, तस्माद् दुःश ब्दः स्वरतो वर्णतोऽर्थतश्च हीनोऽनर्थमाहेति सुष्ठूक्तम् । किञ्च, गृह्यसूत्रे प्रथमा- ध्याये नामकरणसंस्कारे "नामचास्मै दद्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं, द्व्य- क्षरं चतुरक्षरं वा, कुमारस्य नामकीर्तयेदिति विधौ, व्याकरणाध्ययनाऽभावे, डिंडियादिवाग्घोषयुक्तापिति तद्विपरीततया, विधिवैपरीत्ये दोषतादवस्थ्या- त् । तथाच महाव्याकरणजन्यशब्दज्ञाने वर्णोच्चारणस्य ज्ञानपूर्वकस्यावश्यकत- याघोषप्रयत्नस्य तद्वत्त्वाद् घोषप्रयत्नवान् वर्णो ज्ञायेऽयस्मिन्नित्यर्थः फलति । वेदानां वेदमिति प्रामाण्यादपि व्याकरण प्रमाणत्वम् । एवं सन्त्यन्यान्यपि प्रयो- जनानि तत्तच्छास्त्रगुरुभ्यो ज्ञातव्यानि । तस्मात्सर्वशास्त्राणामुपरिवर्त्ति, धर्मार्थकाममोक्षरूपव्यवहारसाधनेषु मुख्यतया व्याकरणमिति यत्नवताऽध्येतव्या करणाऽध्ययनेऽध्यापने चेति विभावयन्तु सुधियो विचाररसिकास्तत्त्वज्ञाश्चेति, तत्र- प्रथमं श्रीशङ्करप्रसादमुपलभ्य वर्णसमाम्नायमङ्गीकुर्वन् भगवान् वेदाचार्यो ब्रह्मनिष्ठः पाणिनिरष्टाध्यायीग्रन्थरत्नं वृद्धिरादैच् अअइत्यन्तं व्यरीरचत् । अथ तन्मुखकमलनिःसृतसुधामधुरमधुझरीमास्वादयितुमशक्तिमतामाधुनिकबोधाय पद- वाक्यप्रमाणपारावारीणधुरीणश्रीभट्टोजिदीक्षितैः सिद्धान्तकौमुदीव्याख्या- कौमुदीव निरवद्यानन्दकरीति वैयाकरणप्राचीनतमरीतिमनुसृत्य सर्वशास्त्र- लघुमञ्जूषाभूतशब्देन्दुशेखरव्याख्याशेखरमिव मुख्यतया सर्वशास्त्रविशारदशारदा कृपाकटाक्षभूतभक्त शङ्करपतञ्जलिस्वरूपपदवाक्यप्रमाणपारावारीणधीवरवर शिवभट्टसुत सर्वशास्त्रमर्मज्ञनागेशभट्टकृतातिमनोहरसुललित पद्युक्ताविरचि- ता, सर्वजन परमबोधकरीति किमिव वयं ब्रूमः । सोऽयं शब्देन्दुशेखर चन्द्रक- लाव्याख्याविभूषितो विद्यारसिकहरिदासात्मजजयकृष्णदासेन पाठशालीय- महामहोपाध्यायपण्डितैः परिष्कृत्य निजविद्याविलासमीरीजयन्त्रालये मुद्रापयि त्वा पाठकजनपरमसौलभ्याय प्रकाशितः । आनन्दयतु च परमेश्वर एतादृशसर्व जनपरोपकारपरायणं वैश्यकुलभूषणमिति प्रार्थयामहे—

प्रज्ञानानन्दसरस्वतीस्वामिनः { सर्वमुमुक्षुजनपरमहितैषिणः
श्रीमद्दण्डिस्वामिप्रकाशीकैवल्यधा
मनिवासिनः । ब्रह्माघाट काशी ।

सटीकशब्देन्दुशेखरस्य ।

# सूचीपत्रम् ।

पृ

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

# ॥ अथ लघुशब्देन्दुशेखरः ॥

पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ॥

---

॥ श्रीगणेशाय नमः ॥

सीताचर्चितपादपद्मयुगलं ध्यात्वाऽद्वितीयं विभुं
मुद्रां ज्ञानमयीन्दधानमपरं हस्ताम्बुजं जानुनि ॥
कुर्वे चन्द्रकलां शिवां शिशुहितां टीकामजं राघवं
सुग्रीवाङ्गदमारुतिप्रभृतिभिः संस्तूयमानं परम् ॥ १ ॥
शब्देन्दुशेखरस्यैव टीका चन्द्रकलाभिधा ।
रच्यते भैरवेणात्र क्षमध्वं दयया बुधाः ॥ २ ॥
मान्यान् प्रणम्य विज्ञप्तिं करोमि यदि मे वचः
दूष्यं विचार्य्यं मात्सर्यं विहाय विबुधाः परम् ॥ ३ ॥

ग्रन्थारम्भे हेतुभूतानर्थान् स्वीयग्रन्थे शिष्यसादृश्यं स्वस्य कुलगुरुत्वञ्च व्यञ्जनया शब्दतो वा दर्शयन् विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति । * पातञ्जले * इत्यादिना । प्रथमं पातञ्जलशब्दोपादानं पल्पशस्तरमङ्गलाय । महाभाष्यमात्रोक्तौ शारीरकसूत्रभाष्यस्यापि बोधस्स्यादत पातञ्जलपदम् । तावन्मात्रोक्तो योगकेऽतिव्याप्तिरतो महाभाष्येति । महत्पदानुपादाने पातञ्जलिप्रणीतसूत्रसम्बन्धिभाष्ये व्यासकृतेऽप्यतिव्याप्तिरतो महत्पदम् । न च पातञ्जलपदस्य प्रोक्तार्थकाणन्ततया तद्भेदस्य व्यासकृते विरहान्नातिव्याप्तिरिति वाच्यम् । दृष्टिघटितत्वादिरूपमहत्त्वस्य भाष्यान्तरे विरहाद्रैव सकलातिप्रसङ्गनिरासे पातञ्जलपदमत्र योगभाष्यसङ्ग्रहार्थमेवेत्याशयात् । विनापि चकारमहत्त्वनयमानो ग्राममश्वम्पुरुषम्पशुमित्यत्र समुच्चयस्य दृष्टत्वात् । एतेन दम्भाद्यानुपाती यस्तुशस्त्यो विकल्प इति पातञ्जलसूत्रमादाय वक्ष्यमाणसिद्धान्तार्थकथनसङ्गतपातञ्जलभाष्यार्थानवबोधादिति शङ्काया नावकाश इति सूचितम् । * कृतभूरिपरिश्रम इति * । सापेक्षत्वेऽपि गमकत्वात्समासः । न च चैत्रस्य गुरुकुलमित्यत्रेव नित्यसापेक्षत्वादेव न दोष इति वाच्यम् । नित्यसापेक्षत्वाभावेऽपि भवतामस्मापणीयानाङ्किमोदनशालीनामित्यादौ समासदर्शनेन गमकत्वस्यैव प्रयोजकत्वात् । गमकत्वं च विग्रहवाक्यजन्यशाब्दबोधसमानप्रकारकशाब्दबोधप्रयोजकत्वमेव । कृतभूरिपरिश्रम इत्यनेन पातञ्जलमहाभाष्यप्रभावादेव सर्वतन्त्रार्थावगमनशोधनेनान्यत्र [illegible] भवति । पितृकीर्त्यधिगतगामीहेति ।

शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ॥ १ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ॥
शृङ्गवेरपुराधीशाद् रामतो लब्धजीविकः ॥ २ ॥
नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम् ॥
मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम् ॥ ३ ॥

ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमाय समुचितऋषित्रय- नमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्ग लाय च निबध्नाति ॥ मुनित्रयमिति ॥ कारकविभक्तेर्बलवत्त्वाद् द्वितीया ॥ परिभाव्येति ॥ तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् प्राचामुक्तीस्तिरस्कृ त्येत्यर्थः । मुनित्रयोक्तीर्विचार्येत्यर्थो वा । परीभावस्तिरस्क्रियेति कोशा- त्तिरस्कारार्थकस्य धातोर्विचारार्थकत्वेऽपि न बाधकम् । धातूनामनेकार्थ-

---

* शिवभट्टसुत इति * । * धीमान् * ऊहापोहकुशलः । एतेन स्वस्य विवेचकत्वं ध्वनितम् । * सतीदेव्या इति * सञ्ज्ञा । सतीति भाषितपुंस्कत्वाभावान्न पुंवद्भावः । न च सञ्ज्ञापूरण्योश्चेति सूत्रेण सञ्ज्ञायाः पुंवत्त्वनिषेधसामर्थ्याद्भाषितपुंस्कत्वं त- स्यास्तीति वाच्यम् । योगरूढस्य दत्तादिशब्दस्य तत्र ग्रहणात् । देवीत्युपादानं तदन्तनामेति सूचनाय । सती दीव्यति पातिव्रत्येन जिगीषतीति वा । कुशाग्र- भक्षणे बुद्धिमान्द्यसम्भवात्कथं धीमत्त्वमत आह । * याचकानामित्यादि * अभेद रूपकद्वयम् । * अरिकक्षेति * अरय एव कक्षाः शुष्ककाननं तत्र हुताशनः । एतेन महाशूरत्वं ध्वनितम् । * रामत * । रामसिंहनामकक्षत्रियात् । * नागेश इति * एतेन व्याकरणसिद्धान्तज्ञानवत्त्वं सूचितम् । ननु मनोरमयैव मूलार्थज्ञानसम्भवादस्य व्यासवैयर्थ्यमत आह । * मनोरमोमार्द्धदेहमिति * एतेन तदुक्तानामर्थानां प्राय कथनाभावो ध्वनितः । * लघुशब्देन्दुशेखरमिति * शब्द इवेन्दुः शब्देन्दुः । लघुश्चासौ शब्देन्दुश्च लघुशब्देन्दुः कलात्मकश्चन्द्रः स शेखरे यस्य । यद्वा लघवः शब्दा यस्मिन् स लघुशब्दः स इन्दुशेखर इवेत्यर्थः । शब्दो व्याकरणाभिव्यङ्ग्यः । स इन्दुरिव शब्देन्दुः । तस्मिन्निन्दुतादात्म्यमर्थप्रकाशकत्वेन दोषरहितत्वेन वा विवक्षितम् । स एव शेखरः शिरोभूषणं यस्येति वा । न चेन्दुसादृश्यादेवा- र्थप्रकाशकत्वे लब्धेऽर्थप्रकाशकमित्यस्य पृथग्भूतस्योपादानं व्यर्थमिति वाच्यम् । मनोरमादिना यादृशार्थस्य प्रकाशो न तस्यापि प्रकाशकमित्यर्थात् ॥

* ग्रन्थप्रचारादीति * आदिना तदध्येतृव्याख्यातॄणां श्रद्धातिशयादिपरि- ग्रहः । * समुचितेति * त्रयाणामपि शास्त्रप्रणेतृत्वात् । * अनुषङ्गत इति * कुल्या इवान्यार्थं एतस्यानुद्देश्यत्वेनाप्रयोजकत्वात् । नमःस्वस्तीति चतुर्थीमाशङ्क्याह । * कारकविभक्तेरिति * उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादित्यर्थः । कृधातूपस्थाप्यक्रियानिरूपितकर्मत्वात् केवलनमःशब्दयोगे चतुर्थीविधानं च रितार्थम् । इदमस्तु सन्निकृष्टमित्यभियुक्तवचनेन सन्निकृष्टस्यैवेदमा परामर्शो

त्वात्। अत एव, परा शुराऽवज्ञान इति सङ्गच्छते। एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता समूलत्वञ्च व्यनितम्। भाविनोऽपि बुद्ध्या विषयीकरणादियमिति निर्देशः। सिद्धान्तप्रकाशकत्वेनातिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम्। अनेन वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारीत्यादि सूचितम्॥

अइउण्॥ एषा क्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन सञ्ज्ञासूत्रत्वम्। क्रमस्य सञ्ज्ञाद्वारैवोपयोगात्। एकवाक्यता चादिरकारादिरन्त्येनेता सदृशेन णकारादिना सहोच्चार्यमाण आद्यन्ता-

---

युक्त। कौमुद्यास्तु सिद्धत्वाभावादेतदनुपपन्नमत आह। * भाविन इति * यथा भाविघटविषयेऽत्र घटो भविष्यतीति व्यवहारस्तथेयमिति निर्देश। सत्कार्यवादसिद्धान्ताश्रयणेन वा इयमितिनिर्देश इति भाव। स्त्रीलिङ्गनिर्देशोऽपि ग्रन्थे उपमानकौमुदीगतलिङ्गस्यारोपेणोपपद्यत एव। बुद्धिसत्तासमाविष्टस्य शाब्दबोधविषयत्वमितिसिद्धान्त इति भाव। कौमुदीसादृश्यप्रयोजकधर्ममाह। * सिद्धान्तेति * अत्रोपमालङ्कारो व्यङ्ग्य॥

सञ्ज्ञा च परिभाषा च विधिर्नियम एव च।

अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणमिति—

प्राचीनपठितसूत्रलक्षणेषु यस्य सत्त्वं तदाह। * एषामिति॥

* क्रमबोधकत्वेऽपीति * अत्र क्रमपदमर्श आद्यजन्तम्। क्रमेण बोधकत्वेऽपीति वार्थ। एतेन क्रमे शक्त्यभावेन क्रमबोधकत्वेऽपीत्यनुपपन्नमित्यपास्तम्। एषा क्रमेण बोधकत्वादेव यमा यमीतियथासङ्ख्यविज्ञानस्य इणादिप्रत्याहारे उकारादिग्रहणस्य च सिद्धि। वृत्तिपरिच्छेदकत्वञ्च शक्तिग्राहकत्वम्। ननु वृत्तिपरिच्छेदकत्वम सञ्ज्ञासूत्रत्वसाधकम्। कर्त्तरिकृदित्यादौ व्यभिचारात्। आदिरन्त्येन सहेतिसूत्रैकवाक्यतापन्नत्वे सति वृत्तिपरिच्छेदकत्वमपि न। इश्चानुप्रयुज्यत इतिसूत्रघटककृञ्पदस्यादिरन्त्येनेत्येतदेकवाक्यतया शक्तिग्राहकत्वेऽपि सञ्ज्ञासूत्रत्वाव्यवहारात्। उक्तहेतोर्वृद्धिरादैजित्यादावसत्त्वेन सञ्ज्ञासूत्रसामान्या सूचितया परिभाषाद्यन्यतमभिन्नत्वविशिष्टसूत्रत्वरूपपक्षतावच्छेदकाव्यापकतया स्वरूपासिद्धत्वाच्चेति चेन्न। सञ्ज्ञास्वरूपावच्छिन्नशक्तिग्राहकत्वमात्रस्यैव हेतुत्वात्। तादृशहेतौ पक्षेष्वेषु सूत्रेषु सत्त्वमादिरन्त्येनेतिसूत्रैकवाक्यतयेतिसूचयितुमादिरन्त्येनेत्येनदेकवाक्यतयेतितृतीयान्तोल्लेख। एतस्योभयार्थत्वमभ्यादिशन्नभिप्राह। * क्रमस्येति *। * इता सदृशेनेति *। प्रथमभाव। प्रत्याहारेऽनुबन्धानाङ्कथमग्रहणेषु नेति पूर्वपक्षे, आचारादप्रधानत्वाल्लोपश्च बलवत्तर, इत्युभयोक्तरीत्यान्त्येनेता सहोच्चारणासम्भवेनैतद्भिन्नसदृशे लक्षणाया आवश्यकत्वात्।

क्षिप्तानां सञ्ज्ञेति । स्वौजसित्यादीनामप्येतदेकवाक्यतया सुबादिसञ्ज्ञाभूत्त्वं स्वादिविधायकत्वञ्चेति बोध्यम् । एषु संहिताया अविवक्षणान्न संहिताकार्यम् । अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः । कारप्रत्ययोऽपि न । बाहुलकात् । यत्तूपजीव्यविरोधात् सन्धिर्न । तथा ह्यजा-

---

प्रसङ्गादाह । * स्वौजसित्यादि * आदिना तिप्तस्झीत्यस्य कृञ्चानुप्रयुज्यत इत्यस्य च सङ्ग्रहः । एतेषु सन्धिकार्यमाशङ्क्याह । *एष्विति* । *अनुकरणत्वेनेति* । अनुकार्यानुकरणयोरभेदविवक्षायामित्यर्थः । भेदविवक्षायान्त्वाह । *सौत्रत्वाच्चेति* । अयम्भावः । यदानुकार्यानुकरणयोरभेदविवक्षापक्षस्तदा शब्दजन्यशाब्दबोधे प्रकारतया यदनुकरणं भाति । तदेवानुकार्यस्यापि भानम् । भेदाभावाद् इति नानुकार्ये शक्तिरित्यनुकरणशब्दस्य वृत्त्यार्थबोधकत्वरूपार्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन विभक्त्यनुत्पत्तिः । वस्तुतस्तु भेदो निरूपयितुमशक्यः । घटादिस्थादिष्वन्यनुकरणस्थलेऽनुकार्यस्यानियतत्वादनुकरणस्य वर्णमयत्वाद्भिन्नधर्मयोरेकत्रासमावेशात् । घटपटादिशब्दानुकरणस्थलेऽप्यर्थपदार्थकत्वशब्दपदार्थकत्वाभ्यां भेदस्य न्याय्यत्वात् । न च तयोर्भेदेऽनुकार्योपस्थितिनिमित्तजिका तत्र वृत्तिरपेक्षेति प्रातिपदिकत्वमनुकरणस्य प्राप्नोतीति वाच्यम् । सादृश्यसम्बन्धेनोपस्थितस्याप्यनुकार्यस्य शाब्दबोधे व्युत्पत्तिवैचित्र्येण भानसम्भवात् । यदि त्वनुकरणस्याप्यस्य शाब्दबोधे भानमङ्गीकार्यं । तदा तत्रानुकरणशक्तिसत्त्वेऽपि सौत्रत्वाद्विभक्त्यभाव इति—

न च

संहितैकपदे नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते—

इत्यनेन वाक्ये एव संहिताया विवक्षाधीनत्वं बोधितम् । प्रकृते विभक्त्यभावेन वाक्यत्वस्यैवानुपपत्तिरिति वाच्यम् । यत्र कारकान्विता क्रिया प्रतीयते तत्रैव तादृशवाक्यत्वाङ्गीकारात् । अन्ते तु शक्तपदसमुदायस्य वाक्यपदेन ग्रहणम् । यथा गवित्ययमाहेत्यस्य वाक्यत्वात्समासग्रहणनियमस्योपपत्तिः । न हि तादृशवाक्यत्वस्य, वाक्ये तु सत्यत्र गहणे चतुरित्यत्र कदाचिद्यणरहितप्रयोगोऽपि स्यादिति वाच्यम् । संहितैकपद इत्यनेन तत्र संहिताया नित्यत्वबोधनात् । स्वरसन्धिस्तु न प्रवर्तते । वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादादिति कैयट कथितवान् । तच्च कौस्तुभे मूलकारो 'वर्णोपदेशे इत्सञ्ज्ञायामच्प्रत्याहारे निष्पन्ने प्रवर्तमानानां यणादीनां सुध्युपास्य इत्यादौ तदस्य इकोऽस्यतावच्छेदकरूपाभावात् ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वाद्, अन्यथा तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घो न स्यादिति' रीत्या दूषितवान् । तदुद्धारः सिद्धान्तरत्नाकरे कृत । तन्दूषयितुमुपन्यस्यति । * यत्त्विति * । अयम्भावः । अविवक्षिताकारादिविषयताधि-

दिसञ्ज्ञाग्रहकाले आद्गुण इत्यादीनामनिष्पत्त्या तदप्रवृत्तावविकृतरूपाका- दिषु गृहीताजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुध्येत। न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवतीति। तन्न। पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात्। न च सन्धौ सन्देहः। व्याख्यानतो निर्णयसम्भवात्। ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इति व्यवहाराऽनुपपत्तिराम्नायसमाम्नायशब्दयोर्वेद एव प्रसिद्धेरित्यत आह। माहेश्वराणीति। महेश्वरादागतानीत्यर्थः। महेश्वरप्रसादलब्धानीति फलितम्। एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा तत्प्रसादात्पाणिनिना लब्धा। श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्। अत्र प्रमाणं, 'येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तम्' इति शिक्षावचनम्। लण्सूत्रे णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति-- व्याख्यानत इति, इत्यादावाचार्यपदेन महेश्वरः। अनुबन्धाश्च महेश्वरकृता एवेत्यनुपदं स्फुटीभविष्यति। ञमङणनमित्यत्र मकारप्रत्याख्यानपरं भाष्यं तु, किमदृष्टार्थमेव तदुच्चारणमुत दृष्टार्थमपीत्येवंविचारपरम्। सर्वत्र प्रत्याख्यानमेवम्परमेव। अन्यथाङ्गानामपि पारायणे धर्मश्रवणेन तत्र तत्र पाणिनिन्यासप्रत्याख्यानस्याप्यङ्गतिः स्यात्। तदुक्तमिको यणचीति सूत्रे। 'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे

---

शिष्टशक्तिज्ञानस्याद्गुणइत्यादिनाऽच्जन्यशाब्दबोधहेतुतया तदुत्तरं तादृश विषयताविशिष्टशक्तिग्रहासम्भव इति। एतद् दूषयति। * तन्न पुनरित्यादिना * अर्थान्तरे विकृताकारादौ सन्धौ सतीति शेषः *व्याख्यानत इति।शिष्टकृतादित्यादि * पाणिनिपाठितप्राथमिकशिष्यज्ञानपरम्परया निर्णयसम्भवादिति भावः। * समाम्नाय इति व्यवहार इति * अस्य भाष्ये कृते इत्यादि। * अस्यैव वेदाङ्गत्वमिति * एवकारेणेतरव्याकरणानां व्यवच्छेदो न त्वङ्गानाम्। सजातीयत्वात्। नन्वेषा महेश्वरप्रसादलब्धा चेत्तर्हि लण्सूत्रे आचार्यप्रवृत्तिरित्यत्राचार्यत्वासङ्गतम्। आचार्यपदेन तत्र तत्र पाणिनेर्व्यवहारादत आह। * लण्सूत्रे णकारविषयेति * नन्वनुबन्धानां पाणिनिकर्तृकतया कथम्महेश्वरग्रहणमत आह। * अनुबन्धाश्चेति*। *अनुपदम्*। नृत्तावसान इत्यादिना। नन्वनुबन्धानां महेश्वरकृतत्वे ञमङणनमित्यत्र मकारप्रत्याख्यानपरभाष्यविरोध इत्यत आह। * ञमङणनमित्यत्रेति *। * एवम्परम् * एवं विचारपूर्वकशुद्धादृष्टार्थत्वप्रतिपादनपरम्। * इकोयणचीतिसूत्र इति * तत्सूत्रस्थभाष्य इत्यर्थः। * सामर्थ्ययोगादिति *। ल्यब्लोप इति पञ्चमी। फलजननसामर्थ्ययुक्तं विहायेत्यर्थः। तच्च फलं बहुषु

यदनर्थकं स्यादिति' । किञ्चिद्दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथानर्थकं न किञ्चिदिति तदर्थः । वृद्धिसूत्रस्थे, वर्णेनाप्यनर्थकेन न भवितव्यमिति भाष्यग्रन्थेऽनर्थकत्वं बोद्ध्यार्थराहित्यरूपमिति न निष्प्रयोजनत्वरूपानर्थक्येन तत्र तत्र प्रत्याहारयानपरभाष्यासङ्गतिः । अत एव सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिरिति भाष्यमुपादायोक्तं भर्तृहरिणा । यथैवेदमव्युच्छिन्नं चन्द्रतारकादि, एवमस्याऽक्षरसमाम्नायस्य न कश्चिद् आधुनिकः कर्तास्त्येवमेव वेदपारम्पर्येण स्मर्यमाणमिति । आधुनिकः शरीरी । पुष्पितत्वं तन्मूलकशब्दशास्त्रद्वारेण । शब्दप्रयोगेण च फलितत्वम् । उक्तञ्चैतच्चतुर्दशसूत्रव्याख्याया नन्दिकेश्वरकृतकाशिकायाम् ।

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च १४ वारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥
अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये, इति ॥

धात्वर्थं । धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । अत एवानुबन्धकरणार्थश्च वर्णानामुपदेश इत्युक्तं भाष्ये । अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम् । तत्करणञ्चोपदेशकर्तृकमेव । प्रत्यासत्तेः । तेन तद्व्यतिरिक्तस्य

दृष्टादृष्टोभयम् । कचिच्छुद्धादृष्टमेव । ननु 'गाङ्कुटादिभ्य' इत्यादिषु प्रत्याख्यानपरभाष्यासङ्गतिः । वृद्धिसूत्रभाष्ये प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं, किं पुनरियता सूत्रेणेत्युक्तत्वादत आह । * वृद्धिसूत्रस्थ इति* । *अत एव* । वर्णसमाम्नायस्य श्रुतित्वादेव । *प्रतिमण्डित इति*शोभित इत्यर्थः ।*ननाद*। अन्तर्भावितण्यर्थतया नादयामासेत्यर्थपरम् । *एतत्* ढक्कानादरूपं शिवसूत्रजालं चतुर्दशसूत्रीरूपेण परिणतं बभूवेति शेषः । * इत्येतद्विमर्शे * विचारयामि । आर्षमेतत् । अथ वा सप्तम्यन्तमेतत् । विमर्शे विचारे कृते सति । प्रतीम इति सर्वत्रैव । एतेन मृशतेः परस्मैपदित्वाद्व्यत्ययेनात्मनेपदेऽप्युत्तमपुरुषैकवचनस्येटो ङित्त्वाद् गुणानुपपत्तिः । सर्वकार्यान्तो छान्दसत्वकल्पने गौरवमिति परास्तम् । * अत्र सर्वत्रेति * ढक्कानादरूपसूत्रेष्वित्यर्थः । * अन्त्यं वर्णचतुर्दशमिति * वर्णानाञ्चतुर्दशमितिसमासः । चतुर्दशत्वञ्च चतुर्दशसङ्ख्यापूरकत्वं, तच्च सर्वेषामस्ति । यथा भाष्ये यदा समर्थः पदविधिरित्येषोऽध्यायश्चरमं गण्यते, तदा सोऽप्यष्टमो भवतीत्युक्तम् । कचित्तु अन्त्यवर्णचतुर्दशमिति पाठः । अन्त्या वर्णाश्चतुर्दश यस्मिन्नित्यर्थः । वर्णानामुपदेश इत्यत्रोपदे

सर्वस्यानादित्वं सूचितम् । अत्र सनकाद्युद्धरणेच्छयास्य ब्रह्मोपदेशरूपत्व सूचितम् । तच्च श्रुतित्वाभावे न सङ्गच्छते । श्रोतव्यः श्रुतिवाक्येभ्य इत्युक्तेः । ऋक्तन्त्रव्याकरणे शाकटायनोऽपि । इदमक्षरञ्छन्दो वर्णशः समनुक्रान्तं यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिरिति । ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः । तत्त्वञ्च नन्दिकेश्वरकाशिकायां स्पष्टम् । अत एव वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्य इति भाष्ये उक्तम् । पाणिनेर्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण सन्निवेशस्तदर्थं इति तदर्थः। स चाणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः । एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम् । मन्त्रोपदेश इतिवच्चात्रोपदेशपदप्रयोगः । अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यं फलमिति भाष्ये उक्तम् । व्याकरणमुपक्रम्य वेदानां वेद इति छन्दोगश्रुतिरप्येतत्परैवेति दिक् । तत्प्रयोजनमाह । सञ्ज्ञार्थानीति। एतच्चोपपादितम् । सञ्ज्ञाप्रणयनञ्च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम् । सञ्ज्ञार्थत्वोपपत्तये आह । एषामिति । अकारश्चेति । तेन रप्रत्याहारसिद्धिः। अनन्यत्वात्पृथगुक्तिः । इदं तुल्यास्यसूत्रस्थकैयटानुरोधेन । परे त्वस्याऽनुनासिकत्वेऽतोल्लेति सूत्रे पाणिनिर्लकारं नोच्चारयेत् । प्रत्याहारेणैव नि-

---

शाशब्दो बोधनपरः । * अक्षरञ्छन्द इति * अक्षरबोधको वेद इत्यर्थः । * वर्णश इति । * वीप्सायां शस् । वर्णं वर्णं समनुक्रान्तम् सम्यगनुक्रमेण दर्शितम् । मयेतिशेषः । पूर्वोक्तं छन्दस्त्वं दृष्टान्तप्रदर्शनेन द्रढयति । * यथेति * पाणिनिकर्तृकत्वशङ्कां वारयति । * अत एवेति * अन्यकर्तृकत्वादेवेत्यर्थः । एतेन पाणिनिकर्तृकशास्त्रबहिर्भूतत्वमस्य स्पष्टमेव लभ्यते । अत एव मङ्गलार्थमादितो वृद्धिशब्दं प्रयुङ्क्त इति भाष्यं सङ्गच्छते । * एतच्चोपपादितमिति * एतेषां क्रमबोधकत्वेऽपीत्यपिनेति शेषः । सञ्ज्ञाप्रयोजनमाह । * सञ्ज्ञेति * । * रप्रत्याहारेति * । उरण्रपर इतिसूत्रनिर्दिष्टेति शेषः । कैयट इत्युक्तिसूचितामरुचिम्प्रकाशयति । * परेस्त्वित्यादिना । * नन्वतोल्लेति सूत्रेऽपि रप्रत्याहारानिर्देशे रदाभ्यां, वनो र चेति सूत्रेऽपि रप्रत्याहारग्रहणापत्तिः । अतस्तथा निर्देशो रप्रत्याहारानित्यत्वज्ञापनार्थः । न च रदाभ्यामित्यत्र फलाभाव इति वाच्यम् । प्रफुल्लामित्यत्र नत्वापत्तेः सुवचत्वात् । वनो र चेत्यत्र तु पक्षे लत्वप्राप्तिः स्फुटैव । किञ्च प्रत्याहारसिद्धिरित्त्वाधीना, तच्चानुनासिकत्वप्रतिज्ञासमधिगम्यमिति, अतोल्लेतिसूत्रेऽनुवादसमर्पकेऽतोल्लेति पदेऽनुनासिकत्वप्रतिज्ञाया अकल्पनेऽपि न क्षः

र्थोहात् । किञ्चास्येत्सञ्ज्ञकत्वे बहुषु यण्घटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन यमप्रत्याहारेणैव व्यवहरेत् । किञ्चानुबन्धानामप्रत्याहारे ग्रहणाभावे, आचारादप्रधानत्वाल्लोपश्च बलवत्तर इति भाष्योक्तस्य तृतीयहेतोरव्यापकत्वापत्तिः । तत्र लोपस्य बलवत्त्वेऽपि हलप्रत्याहारासिद्धेः प्रागचपदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्सञ्ज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हलप्रत्याहारे लणित्यकारप्रवेशे मामाँख्रायस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा ।

---

तिरित्यरुचेराह । * किञ्चास्येति । * इदानीं शक्तिग्रहश्च यशब्दस्यैव पाणिनीयव्यवहाराद्भविष्यतीति भावः । न चलोलेतिसूत्रे लकारोच्चारणेनानुनासिकमजनुबन्धमादाय प्रत्याहारः क्वाचित्कोऽस्तीति कल्प्यते । अत एव रात्सस्य, योचीत्यादौ न दोषः । यण्शब्दे णकारोच्चारणञ्च चरितार्थमित्यरुचेराह । * किञ्चानुबन्धेति * । अत्राप्रत्याहार इत्यघटितपाठः प्रत्याहारेऽनुबन्धानामित्यस्य सूत्रचतुष्टयानन्तरं पाठेन भाष्यकृतोपन्यासात् इत्यन्तः । वस्तुतस्त्वइउणित्यादिसूत्रघटकानुबन्धानां तत्तद्व्यक्तित्वेन पक्षत्वे पक्षतावच्छेदकानां नानात्वापत्तिः अतोऽनुबन्धपदघटितविषयतात्वावच्छिन्नविषयता पक्षतावच्छेदिका वाच्या । प्रत्याहारघटकत्वाभावः साध्यः । आचारादिति हेतुः । अत्राचारः पाणिनेः कृतिरेव । न चाचार्यकृते पक्षे समवायेनासत्त्वात् स्वरूपासिद्धिरिति वाच्यम् । तादृशकृतेः स्वसाध्यप्रत्याहारप्रयोज्यकार्यजनकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्सहकारसम्बन्धेन हेतुत्वात् । सुध्युपास्य इत्यत्रैकारे स्वसाध्ययण्रूपकार्यजनकत्वसम्बन्धेन स्थितायाः कृतेस्तत्सम्बन्धावच्छिन्नाभावस्तुपिस्तृपिसृपेरिति सूत्रस्थे घृषिशब्दावयवककारेऽनुबन्धसदृशोऽस्तीति हेतौ पक्षसत्त्वोपपत्तेः । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे हेतुतावच्छेदकसम्बन्धाप्रसिद्धिरिति हेत्वन्तरमाह । * अप्रधानत्वादिति । * अत्र प्रधानत्वं प्रत्याहारग्रहणफलकमहेश्वराभिप्रायविषयत्वम् । तदभावः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको हेतुः । हेत्वन्तरमाह । * लोपश्च बलवत्तर इति * । लोपस्य बलवत्त्वञ्च प्रत्याहारासिद्धिप्राक्कालिकभासित्वम् । बलवत्तरलोपप्रतियोगित्वं हेतुरिति फलितम् । * तृतीयहेतोरव्यापकत्वापत्तिरिति * । न च हेतौ साध्यव्याप्यत्वमेवानुमापकत्वप्रयोजकन्तु व्यापकत्वमित्येतदसङ्गतमिति वाच्यम् । पक्षतावच्छेदकाव्यापकत्वापत्तिरित्यर्थात् । पक्षतावच्छेदकावच्छेदेनानुमितौ हेतौ पक्षतावच्छेदकव्यापकत्वावगाहिपरामर्शस्यैव हेतुत्वादिति भावः । तदेतदुपपादयति । * तत्रेत्यादि * मत इति शेषः । एतदुपपादनमित्सञ्ज्ञालोपयोरभावेत्यन्तेन । नन्वेवमपि यस्यानुनासिकत्वं तस्य लक्ष्येऽसत्त्वादेव न दोष इत्यत आह । * प्रत्याहारेष्विति । * अत एव सर्वेतकाराणां अल्पदबोध्यत्वोपपत्तिः । अनुनासिकत्वसमानाधिकरणजातिविषयताप्रामाण्यादाह । * मामाँख्रायस्वेति * । अनिवे क्विबन्तस्यानिति सम्बुद्ध्यन्तम् ।

सोऽस्तीत्यादौ सुलोपाद्यापत्तिश्च । अत एव, प्रत्याहारेऽनुबन्धाना कथम-ज्ग्रहणेषु नेत्यनेन, प्रत्यहारे वर्णसमाम्नाये य एतेऽक्षु अबोधकास्तेषु प्र-त्याहारार्था अनुबन्धाः क्रियन्ते तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाच्प्र-त्याहारे शङ्का कृता, न हल्प्रत्याहारे । भाष्ये चाइउणित्यादिसूत्रचतुष्टयो-पादानेनैवास्य प्रवृत्तिर्दर्शिता । तत्र प्राधान्यं प्रत्याहारेषु ग्रहणार्थत्वरूप । हल्षु च तथोपदेशस्तेषाम् । अक्षु तु स्वराणामेव तथोपदेश इति प्राधान्या-त्तेषामेव सञ्ज्ञित्वमिति भाष्ये स्पष्टम् । न च हशादिप्रत्याहारे टग्रहणस्या-पत्तिरिति वाच्यम् । हकारादिषु पुनः पुनरकारोच्चारणेन उच्चारणार्थवर्ण-

---

ननु तर्हि ह्रस्वत्वविशिष्टजातिनिर्देश एवास्तामत आह । * सोऽस्तीति * । ननु यण्घटितसूत्रेष्वित्यादिनोपपादितलाघवत्र मार्गेत्रिकम् । इको यण्, इग्यण इत्या दौ तदभावात् । किञ्चैको यणचीतिसूत्रे यप्रत्याहारेण निर्देशे प्रक्रियागौरवम् । क्वचिन्मात्रालाघवसत्त्वेऽपि जातेरल्लोविषयाद्योपधात्, ङेय्यं, योचीत्यादीना विषयविभागानुपपत्ति । तथासति जातेरितिसूत्रे प्रत्याहारग्रहणे महाशूद्रीत्यत्र ङीषभावापत्ति । ङेय्यं इत्यत्र प्रत्याहारनिर्देशो यकारादेरप्यादेशत्वप्रसङ्ग । एव योचीत्यत्राप्यनिष्ट बोध्यम् । एतेन तृतीयहेतोरव्यापकत्वापत्तिरित्यसङ्गतम् । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वादिति चेन्न । उदा त्तस्वरितयो, सयोगादेरात, उदात्तयणोहल्पूर्वादित्यादौ लाघवाय प्रत्याहा-रेणैव निर्देशोऽस्त्वित्याशयात् । यत्र तु न लाघव तत्रान्यार्थे ल्णित्यत्र कृतेन णकारानुबन्धेनैव निर्देशोऽस्तु । जातेरितिसूत्रे प्रत्याहारग्रहणन्तु न शङ्का स्पदम् । तादृशप्रत्याहारग्रहणस्य भाष्येऽदर्शनात् । कषायेतिनिर्देशस्यैव सत्त्वाच्च ङेय्यमित्यत्रापि तथा शङ्का । योचीत्यत्रापि न प्रत्याहारसम्भावना । पूर्वा त्तरसूत्रयो प्रत्याहारयोरप्यनभिधायकतयात्रापि तत्साहचर्येण तथा कल्पनात् । पक्षतावच्छेदकसामानाधिकरण्येनेत्यादि तु न शङ्कास्पदम् । अपितु, अइउणित्या दिसूत्रचतुष्टयनिर्दिष्टानामनुबन्धानामुक्तानुगतधर्मपुरस्कारेणैव पक्षतावच्छेदका-वच्छेदेनैव साध्यसिद्धेर्भाष्याभिप्रेतत्वात् । न च सोस्यादिरिति निर्देशेनाकारे सुलोपाभावज्ञापनात्सोस्तीत्यस्य सिद्धिरिति वाच्यम । तेन निर्देशेनानेकाक्षिप्र-कल्पनापेक्षया लण्सूत्राकारस्यानुनासिकत्वाभावकल्पने लाघवसम्भवात् । * अत एव * । लण्सूत्राकारस्यानित्सञ्ज्ञकत्वादेव । * प्रत्याहार इति * । व्याख्यातमेतत् । * न हल्प्रत्याहार इति * । अन्यथा, अकारानुबन्धस्य विजातीयत्वात्तस्यापि हल्प्रत्याहारे ग्रहणशङ्कासमाधानयो कर्तुमुचितत्वादिति भाव । * टग्रहण स्यापत्तिरिति * । तथा च रामष्टीकत इत्यादौ हशि चेत्युत्वापत्ति । * पुन पुनर-

रहितहलां तद्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् । तद्विषयप्रयोगाणामनभिधानाच्च । तस्मादस्यानुनासिकत्वमप्रामाणिकम् । उरण्रपर इत्यत्र लग्रहणं कर्तव्यमेव । ऋलृवर्णयोः सावर्ण्यविधानादित्याहुः । ननु हये-ष्वादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गोऽत आह । हकारादिष्विति । न पुनरन्तरेणाच्च व्यञ्जनस्योच्चारणमपि भवतीत्युच्चैरुदात्त इति सूत्रस्थभाष्यात् । एषा ह्याचार्यस्य शैली लक्ष्यते, यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्ष्विति प्रत्याहारेऽनुबन्धानामित्यत्र भाष्यागेति भावः । स्यादेतत् । न विभक्तावित्यादेः सार्थक्याय हलन्त्यमित्यस्योपदेशेऽन्त्यं हलिदित्यर्थावश्यकत्वेन हलन्त्यमादिरन्त्येनेत्यनयोः परस्परापेक्षत्वेनान्योन्याश्रयाल्लकारे इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं पाणिनेरयुक्तम् । न च हयवरडित्यादेरारभ्य शषसरित्यन्तं समुदायमुद्दिश्य हलित्यनेन हलसञ्ज्ञापि विधेयेति वाच्यम् । दशसूत्र्यावृत्तौ गौरवात् । ननूपदेशे इदन्त्यम्, अच्, अनुनासिक इति सूत्रत्रयमस्तु । अजित्यनन्त्यार्थम् । तृतीयेऽजित्यनुवृत्तिसामर्थ्यादचेदिद्भवति तर्ह्यनुनासिक एवेति नियमाश्रयणाद्भ्रमभृतौ न दोषः । योगविभागसामर्थ्याच्चानन्तरस्येति न्यायं बाधित्वा व्यवहितस्यापि तेन नियमः । मिदचोऽन्त्यादिति ज्ञापकाच्च न विपरीतनियमः । एवञ्च हल-

---

कारोच्चारणेनेति * । न चाकारोच्चारणाभावे व्यञ्जनोच्चारणासम्भव इति वाच्यम् । हयादिवर्णानां संयुक्तानामुच्चारणसम्भवात् । * तद्घटितेनेति * । उच्चारणार्थावर्णसहितहल्घटितेत्यर्थः । न च को यण्कंकृत्व इत्यादिकविप्रयोगदर्शनात्तद्विषयप्रयोगाणामदर्शनादित्यनुपपन्नमिति वाच्यम् । तेषां पातयाम्प्रथमासकरेण पच्यादित्यादिमहाकविप्रयोगतुल्ययोगक्षेमत्वात् । उपसंहरति । * तस्मादिति * । अस्य लण्सूत्रस्थाकारस्य । न चोच्चारणार्थानामित्सञ्ज्ञाया वक्ष्यमाणत्वादिदमसङ्गतमिति वाच्यम् । हकारादिस्थाकारवदस्याप्युच्चारणमात्रफलकत्वान्निवृत्त्यभावेऽपि क्षत्यभावात् । प्रत्याहारे हकारादिघटिते ग्रहणापत्तिस्तु न । पुनःपुनरुच्चारणात् । अप्रधानत्वाच्च । तदेतद्ध्वनयति । * न पुनरन्तरेणाचमित्यादिना * । * न विभक्ताविस्यादेरिति * । आदिनाजादिपदघटितविधिसूत्राणाम्परामर्शः । अन्योन्याश्रयाभावाय शङ्कते । * नन्विति * । * भ्रमभृतावीति * । भ्रशब्द इति निर्दिष्टधातुप्रभृतिष्वित्यर्थः । अशोकवनिकान्यायेनैतदुक्तिः । अनुनासिकश्चेदिद्भवति तर्ह्यजेवेति विपरीतनियमशङ्कां वारयति । * मिदचोन्त्यादितीति * । * अस्या

ग्रहणमपि व्यर्थमन्योन्याश्रयश्च न । न च पाणिनिसूत्रभेदे पारायणादाव-दृष्टहानिः । तथा च तत्र तत्र भाष्यमपाणिनीयन्तु भवतीति वाच्यम् । कल्प्यमानन्यासस्य लघुत्वेऽस्यादोषत्वात् । सूत्रभेद तमुपाचरन्ति यत्र तदेवाऽन्यत् सूत्रं क्रियते भूयो वा, यदि तदेवोपसहृत्य क्रियते नासौ सूत्रभेद इत्यच उपसर्गाच इति सूत्रभाष्यात् । नासौ सूत्रभेद इत्यस्य दोषायेति शेषः । सति सम्भवे दृष्टद्वारैवाज्ञानामदृष्टार्थत्वमिति तदा-शयः । अत एव तत्र तत्र ज्ञापकपरसकलभाष्योच्छेदो नेति चेन्न । योगविभागनियमज्ञापकाश्रयणेऽतिगौरवात् । न हि वर्णाभिव्यक्तिजनक-कण्ठाद्यभिघातगौरवमेवादर्त्तव्य, न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञास्ति । न च सह आसमन्ताद् एति गच्छतीति सहेता मध्यमो वर्ण इत्यर्थ इत्यतो नान्योन्याश्रय इति वाच्यम् । अन्योन्याश्रयतत्परिहारादी-न् वदता, भाष्यकारेण कटी, वीत्यत्र माश्लिष्टादीङ्गतावित्यत इण्गतावि-त्यतश्च सहाइपूर्वात्कृजभावबोधनात् । किञ्च योगमर्यादया तत उक्तार्थाला-भः । आसमन्तादित्यस्यानन्वितार्थत्व व्यर्थत्वञ्च । रूढौ तु न मानम् । अतः सूत्रान्तरया तं परिहरति । हलन्त्यमिति । भाष्येऽप्यन्योन्याश्रयमाशङ्क्य इ-

---

ोषत्वादिति * । अपाणिनीयत्वस्यादोषत्वादित्यर्थ । अत्रैव भाष्यसम्मतिमाह। ॰सूत्रभेदमिति* । *उपाचरन्ति* । वर्णयन्ति । *तदेव* । तदर्थकमेव । *भू-। * । तदपेक्षयाधिकम् । *तदाशय* । पूर्वपक्षाशय । *राजाज्ञास्तीति* । एवञ्च [र्वोक्तव्याख्याने गौरवमिति भाव । कस्यचिन्मत दूषयति । *न चेति* । अत्र सहेताशब्द उद्देश्यबोधक । एवञ्च सहेता मध्यमो वर्ण । अन्त्येन सहितो य ादिस्तदभिन्न इति वाक्यार्थ । अत्र सहेताशब्दो योगरूढ । सह युगपत् एति [ुद्धिविषयो भवतीत्यर्थ । * मध्यम इति * । रूढ्यर्थप्रदर्शनम् । मत खण्डयति। * अन्योन्याश्रयेत्यादिना * । अत्र, इण् गतावित्यतश्चेत्यपपाठ । एत्येधत्यूठ स्वेतिवृद्ध्यापत्तेः । एतद्धि वाध्यसामान्यचिन्तया पररूपमात्रस्य बाधकम् । अत एवावैहीति वृद्धिघटितस्य तेन साधुत्वमुक्तम । तच्च वाध्यविशेषचिन्तामाश्रित्य [िक्षितैर्दूषितमिति त्वन्यत् । सञ्ज्ञापूर्वकविधेस्तेनानित्यत्वस्वीकारात्तद्रीत्या वा तदभिधानम् । एवञ्च योगरूढिसद्भावे मानाभाव इति भाव । अत्र भाष्यमपि बाधकमित्याह । *भाष्येऽपीति* । कैयटकृत भाष्यव्याख्यान दूषयति । *इसमी

हलन्त्यमित्संज्ञं भवति लकारश्चेद्वर्ततीति वक्तव्यमित्युक्तं लोपनिर्देशाद्वा सिद्धम्। हल् च हल् च हलौ, हलन्त्यमित्युक्तम्। तस्यार्थं भाष्यम्। एकशेषेण हलपदेन सम्बन्धसामान्यषष्ठ्या समासः। अन्त्यशब्दस्य च द्वन्द्वान्ते श्रूयमाणस्योभयत्रान्वयः। एवञ्च हल्सूत्रान्त्यं हल्रूपान्त्यं चेति बोधः। अन्त्ये शाहोः गिर इतिवत् षष्ठीति। अत्राधारषष्ठ्या लुगेकशेषनिर्देशौ बोद्धव्यौ तथा दृश्या बोधः। हलसमीपो लकार इत्, हल्रूपान्त्यश्चेति फलितोऽर्थः। अन्यथा तु, हलित्संज्ञं न भवति हलन्त्यश्चेतीति वदेदित्युक्तम्। ननु एवमपि न विभक्ताविति विभक्तिपदबोध्यसुप्तिङ्गतानां हलन्त्यमिति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरम्, इत्यन्योन्याश्रयस्तदवस्थ एवेति चेत्। अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात्। न ह्यभावज्ञाने प्रतियोगिज्ञानस्येव प्रतियोगिज्ञानेऽभावज्ञानस्य कारणता कस्यापि सम्मता। प्रतियोगिज्ञानं विना निषेधवाक्यार्थोऽसम्भवाच्च। पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा इत्यस्य त्वयं भावः। लक्ष्यैकचक्षुष्कस्य उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गः कृतसंस्कारबुद्ध्यानुत्सर्गापवादयोर्विषयव्यवस्थानापत्त्या भुक्तवन्तम्प्रति मा भुङ्क्था इति वाक्यस्येवापवादशास्त्रस्य व्यर्थापत्त्या चापवादशास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय तदविषयं लक्ष्यं तत्तद्विषयवाक्योपस्थितद्वारोत्सर्गेण संस्करोतीति। अन्यथा विकल्पापत्तिरिति। यद्यपि भुक्तवन्तं प्रतीति न्यायो लुगादिना जातनिवृत्तेर्व्यभिचरितः। तथापि तत्राप्यनुपपत्तिरेवेति न दोषः। न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्त्वाच्च। अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्योत्सर्गेण लक्ष्यसंस्कारं जानीते। तथापि-

---

प इत्यादिना*। *इत्यूह्यमिति*। सामीप्यस्य षष्ठ्यर्थत्वाभाव इत्यपि बोध्यम्। * न चेदमिति *। पूर्वोक्तान्योन्याश्रयपरिहारेऽपि। * अभावज्ञाने प्रतियोगिज्ञानस्येवेति *। विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वादिति भावः। ननु पूर्वं ह्यपवादा इति भाष्योक्त्याऽपवादवाक्यार्थज्ञानस्य कारणता प्रमेत्यत आह। *पूर्वमिति*। *अपवादशास्त्रपर्यालोचनेन* अपवादशास्त्रार्थबोधेनेत्यर्थः। * तदविषयमिति *। अपवादशास्त्राविषयमित्यर्थः। एवं च लक्ष्यसंस्कारे क्रमा

शास्त्रप्रक्रियास्मरणपूर्वकप्रयोगे एव धर्मोत्पत्तेः। तदुक्तम्। प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तत इति। प्रकल्प्य परित्यज्य। यत्तु प्रकल्प्य चेत्यस्यायमर्थः। यथा, न सम्प्रसारण इति वचनात् परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इति अभ्यस्तसञ्ज्ञासूत्रे कैयटः। तन्न। न सम्प्रसारण इतिसूत्रस्थभाष्यविरोधात्। तत्र हि, एतदेव ज्ञापयति परस्य न पूर्वस्येति। यद्वा सम्प्रसारणाश्रयस्य प्रतिषेध इत्याद्युक्तम्। न हि न्यायेन सिद्धे एवमुक्तिरुचिता। तस्माद् न्यायस्य मदुक्त एव विषय इति बोध्यम्। यदप्यपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थः। तदपि न। उक्तयुक्तेः। न विभक्तौ तुस्मा इति शास्त्रे तुस्मपदार्थज्ञानमात्रेण पादीनामेव तद्विषयत्वाभावबुद्ध्या तेषु हलन्त्यसूत्रप्रवृत्त्या सुप्तिङ्रूपविभक्तिपदार्थज्ञानं सुलभमिति दिक्। अत्राप्युपदेश इति सम्बद्ध्यते। तद्बललभ्यमाह। सूत्र इति॥

आदिरन्त्येन॥ आदिरितिकिम्। अन्त्यशब्देन पूर्वेषामाक्षेपादिगादिप्रत्याहारेऽकारादिग्रहणं मा भूदिति। एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु आदीनाङ्ग्रहणं मा भूदिति। आदिः, अन्त्येनेत्युभयोपादाने तु अयमादिरन्त्यो वेत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः। परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः। पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इति अकारादिग्रहणे इकारणकारादीनामाद्यन्तत्व-

पेक्षा न तु वाक्यार्थबोध इति भावः। * चत्विति *। यथा न सम्प्रसारणे सम्प्रसारणमित्यपवादशास्त्रप्रवृत्तिः स्वयोग्यविषये भवति, तथा परिचिन्त्य पूर्वमुत्सर्गः ष्यङयुवेत्यादि प्रवर्त्तते इत्यर्थः। एतेनान्त्यस्य सम्प्रसारणमिति फलितम्। एतत्कैयटोक्तव्याख्या खण्डयति। * तन्नेति *। भाष्यविरोधमुपपादयति। *न हीति*। *न्यायेन*। पूर्वं हीति न्यायेन। पूर्वोद्दृष्टितान्योन्याश्रयासम्भवमुपपादयति। * न विभक्ताविति *। * पदार्थज्ञानमात्रेणेति *। मात्रपदेन वाक्यार्थज्ञानव्यवच्छेदः। * अत्रापीति *। आवृत्तहलन्त्यमिति सूत्र इत्यर्थः।

* आदिरिति किमिति *। अन्त्यपदेन तल्लाभः सम्भवतीति भावः। न चाक्षिप्तस्य शाब्दबोधविषयत्वं पदानुपस्थितत्वान्न सम्भवतीति वाच्यम्। प्रविश पिण्डीमित्यत्रेव सम्भवात्। आदेरेवाक्षेप इत्यत्र मानाभाव इत्युत्तराभिप्रायः। अन्यतरानुपादाने इदन्त्यसहितं पूर्वं परसहितं आदिरित्यपि सम्भाव्येत। स्व-

स्यैवानापत्तेः। अत्राद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदाय आक्षिप्तः सञ्ज्ञी। तस्य च लक्ष्ये प्रयोगाभावात्प्रत्येकं सञ्ज्ञित्वम्। अन्त्यस्य तु न तत्कार्यम्। तस्येत्सञ्ज्ञालोपाभ्यामपहारात्। एतत्फलितकथनमेव भाष्ये, मूले च, स्वस्य च रूपस्येति। स्वमित्यनुवृत्तिपरत्वेन व्याख्यानन्तु हेयमेव। अनुवृत्तौ फलाभावात्। इतेति किम्। अमङणनेति णकारादिभिः प्रत्याहारो मा भूदिति। सहग्रहणाच्च समुदाय एव सञ्ज्ञेति समुदायादेवैक इत्यादौ विभक्त्युत्पत्तिर्नादिमात्रात्। न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारादादिरन्त्येनेत्यसङ्गतम्। सूत्रेष्वित्सञ्ज्ञायामपि इगादिशब्देषु तदभावात्। अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थात्। व्यक्तिपक्षे एवमेवौचित्यात्। सादृश्यमूलिकैव चात्र तत्त्वमत्यभिज्ञेत्याहुः। अचि श्नुधात्विति सूत्रे इण इत्येव सिद्धे य्वोरिति निर्देशादिण् परेणैवेति लण्सूत्रे भाष्ये स्पष्टम्।

हलन्त्यम्। अत्र पदद्वय। समासेऽन्त्यशब्दस्य पूर्वनिपातापत्तेः। कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वाच्च। यद्यपि सर्वोऽपि हल् त त समुदाय प्रत्यन्त्यो भवति, तथाप्यन्त्यपदोपदेशपदाभ्यां प्रत्यासत्त्याऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदाय प्रत्यन्त्य इह गृह्यते। अत एव मकारेत्सञ्ज्ञापरित्राणार्थस्थमोक्कारश्चारितार्थः। समुदायोपदेश एव सर्वत्र ज्ञापितात्पर्येणाऽवयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूपज्ञापकत्वाभावात्। उपदेशेऽन्त्यमिति। तत्र विद्यमानमन्त्यमित्यर्थः। तेन अइउणित्यादौ णादीनां हल्प्रत्याहारसिद्ध्युत्तर तत्सिद्धिः। अन्यत्र स्व-

---

रूपमित्यनुवृत्तिपरव्याख्यानं निष्प्रयोजनमित्याशयेनाह। * अत्राद्यन्तेति *। प्रत्याहारप्रसङ्गादाह। * अचि श्नुधात्विति *।

* पूर्वनिपातापत्तेरिति *। विशेषणत्वात्। * सूत्रकारशैलीसिद्धत्वादिति * । प्रायोवादोऽयम्। अपृक्त एकाल्, निपात एकाच्, इत्यादौ समासदर्शनात्। * अत एवेति *। समुदायान्त्यग्रहणादेव। * इत्सञ्ज्ञापरित्राणमिति *। इत्सञ्ज्ञाया परित्राणमित्यर्थः। सुप्सुपेतिपञ्चम्य सपूर्वपदक समास। * तत्सिद्धिरिति *। इत्सञ्ज्ञासिद्धिरित्यर्थ। अणाद्योच्चारणकाले विद्यमानस्यापि णकारस्येत्सञ्ज्ञाविधायकशास्त्रजन्यवाक्यार्थबोधात्त प्राप्तिरिति भाव। *अन्यत्र*। स्व

न्तरङ्गत्वात्प्राय उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्सञ्ज्ञा । पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव । उपदेशोत्तरकालेत्सञ्ज्ञेति नाज्झलाविति सूत्रे भाष्यात् । धुडित्यादौ सानुबन्धाद्विभक्तिस्तु तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा । इत्सञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्रानर्थक्यात् तदुपस्थाप्य एव । स्पष्टञ्चेद, तित्स्वरितमित्यत्र कैयटे । वैयाकरणे चित्स्वरस्तु न । तस्येचकारसदृशत्वेऽपि तत्त्वाभावात् । विभक्त्यादिसञ्ज्ञापि सूत्रान्तर्गतानामेवेति तत्रैव, न विभक्तावित्यादीनां प्रवृत्तिः । अत एवेदम इशि स्यादावण्त्वात्सवर्णग्रहणं मासमप्रत्यय इत्यनेन निषिध्यत इति भाष्योक्तं सङ्गच्छते । यत्त्वनेकाल्सूत्रे इशो शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्वमिति भाष्ये उक्तम् । तस्येत्सञ्ज्ञकशकारकरणाद्भूतपूर्वानेकाल्त्वमादाय

---

नादिप्रत्ययाद्यवचनादौ । *पदार्थोपस्थितिरिति* । अनुबन्धविनिर्मुक्तस्यैव पदार्थस्योपस्थितिरित्यर्थः । चैत्रस्य गुरुकुलमितिवत् सापेक्षत्वेऽपि समासः । एतादृशे विषये प्राय एव जसः शीत्यादिस्थले विलम्बेनैव सेति सूचनाय । यद्यपि नाज्झलाविति सूत्रे उत्तरत्वमात्रमुक्तम् । तथापि तदव्यवहितत्वसहितं ज्ञेयम् । अधिककालव्यवायसाधकाभावात् । ननु तदुपस्थाप्ये चेदित्कार्यं तदा वैयाकरण इत्यत्र चिदुपस्थाप्यैकारस्य चित्कार्यप्रसङ्गोऽत आह । * वैयाकरण इति * । नन्वनुबन्धविनिर्मुक्तस्य पदार्थस्योपस्थितिस्वीकारे सुब्विषयेऽन्तरङ्गत्वादित्सञ्ज्ञा स्यात् । एवञ्च जसादावित्सञ्ज्ञाया लोपे च कृते अकारमात्रस्य विभक्तिसञ्ज्ञाप्रसङ्ग । न विभक्ताविति सूत्रस्य प्राग्दिशीये चारितार्थ्यादत आह । *विभक्त्यादिसञ्ज्ञापीति* । आदिना प्रत्ययादिसञ्ज्ञापरिग्रहः । अत्रार्थे भाष्यसम्मतिमाह । * अत एवेति * । अनुबन्धविनिर्मुक्तोपस्थितिस्वीकारादेव । तत्सूत्रभाष्ये, अप्रत्यय इति किमर्थम् । सनाशंसभिक्ष उः । अत्यल्पमिदमुच्यते । अप्रत्ययादेशटित्किन्मित इति वक्तव्यमित्युक्त्वा, आदेशोदाहरणमिदम इशित्युपन्यस्तम्, । न चानुबन्धविनिर्मुक्तपदार्थोपस्थितिस्वीकारे णित् कर्मण्यण्सूत्रघटक सन्प्रत्ययोपश्चैतदुपस्थाप्य प्रयोगस्थ प्रत्ययो न स णिदिति कुम्भकार इत्यादिरूपासिद्धिरिति वाच्यम् । यथा द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या भ्रमरपदस्य द्विरेफपदव्यवहार्यत्वेऽपि शब्दार्थयोस्तादात्म्यमधुमतेऽपि द्विरेफपदप्रवृत्तिस्तथोपस्थापकस्य सूत्रघटकस्य णित्त्वादुपस्थाप्येऽपि णित्त्वमित्याशयात् । यद्यनुबन्धरहितस्य पदार्थस्योपस्थितिस्तदादेशस्यापि शकाररहितस्योपस्थिति स्यात् । तथा च शिद्ग्रहणस्य ज्ञापकत्वोपपादनपरभाष्यविरोध इत्यत आह । * यत्त्विति * ।

कत्वम् । उपस्यार्थत्वाद्दिशेरुच्चारणाङ्गत्वात् । अत एव, एकाच उपदेशे इति सूत्रे कैयटेनोक्तमित्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्दृश्यत इति । आदेच इति सूत्रेऽपि येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहार इति । तत्र सूत्रे भाष्येऽपि, उद्देशश्च प्रातिपदिकानां नोपदेश इति । प्रकृत सूत्रे भाष्येऽपि, प्रत्यक्षमाख्यानमुपदेश इत्युक्तम् । तस्य चोक्त एवार्थः । परे तु, उपदेश इति किमर्थमभ्रआँ अप', क पुनरुद्देशोपदेशयोर्विशेष इति भाष्ये उक्तम् । यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि लुट-सद्वा, निष्ठेति विहितानां शतृशानच्क्तक्तवतूनामनयनस्येत्सञ्ज्ञानापत्तिः । तथा, राजसूयसूर्य-चित्याग्निचित्येत्यादिनिपातनानुमितनयवादीनां पादेरित्त्वानापत्ति' । यदः सुपीत्यत्रोच्चारितस्तु नैतत्सम्बन्धी । अत एव, तस्यापत्यमत इञिति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूप शेषश्चमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम् । एवम् अभ्रआँ इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्भवति येन स विशेष क- इति प्रश्नः । तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्यै-

---

घात इत्यस्योपलक्षणम् । अत्र हि टस्येत्त्वे डीनापत्ति । * अत एवेति * । दिशेरुच्चारणार्थत्वादेव । हलन्त्यमिति सूत्रे भाष्यप्रन्थोपदेशपदानुवृत्तिं सूचयन् सिद्धान्तमाह । * परे त्वित्यादिना * । * उपदेशे किमिति * । पूर्वसूत्र एव किमर्थमिति प्रश्न । अत एव सूत्रद्वयविषये उपदेशपदस्य प्रत्यक्षाख्यानपरत्वे दूषणाभिधानसङ्गति । प्रत्यक्षमाख्यानमिति । अत्राख्यानं शब्दोच्चारणम् । तत्र प्रत्यक्षत्वाव्यभिचार इन्द्रियजन्यतावच्छेदकविषयताश्रयविषयकत्वम् । विषयता च व्यापारानुबन्धिनी । तथा चेदृशाधस्य यदाख्यानं स उपदेश । * लुट स द्वेत्यादि * । अत्र सदादिशब्दजन्योपस्थितिविषये तादृशविषयत्वाभाव स्पष्ट एव । सदादिसञ्ज्ञानुबन्धविनिर्मुक्तस्येति यदि ब्रूयात्तदाप्याह । * तथा राजसूयेत्यादि * । * अत एव * । एकमम्बन्धिनोऽन्यसम्बन्धित्वाभावादेव । न च राजसूयेत्यादिनिपातनेनैवानुबन्धलोपो भविष्यतीति वाच्यम् । निपातनेनापूर्वसञ्ज्ञायकल्पनापेक्षया हलन्त्यमित्यत्रोपदेशपदासम्बन्धकल्पने लाघवमिति भाव । * लोकव्यवहारेणेति * । अनुवाकप्रश्ने इत्येवकाद्यनुवाकाख्याने उद्दिष्टो मेऽनुवाक इति । मार्गप्रश्नेऽभ्युपिभवरकाशो हस्तदक्षिणो ग्राह्य इत्याद्याख्याने उपदिष्टो मे पन्था इति व्यवहारादिति यावत् । एतेन सर्वेषु पूर्वोक्तेष्वित्यसिद्धिरनिष्टे तदभाव इति विषयविभागालाभ सूचित । धात्विषे उपदेश इत्यनन्तरमुद्धा

तद्व्यावृत्तये तत्सङ्ग्रहाय चोपदेशनेऽजनुनासिक इति वक्तव्यं, किं पुनरुपदेशनं शास्त्रमित्युक्तं वार्त्तिककृता । तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहः, अभ्रआँ इत्येतद्व्यावृत्तिश्च सिद्धा । तस्य च वार्त्तिकस्य बाहुल्कात्करणे घञा प्रत्याख्यानं भगवता कृतम् । किञ्च हलन्त्यसूत्रे भाष्यप्रन्तोपदेशपदानुवृत्तौ भवतष्ठक्छसावित्यादिविहितेष्वित्सञ्ज्ञानापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वाभावात् । यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इदित्यर्थ उच्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्र उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽभ्रआँ अटित इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे व्यवसितान्त्यमिति वक्तव्य, किंपुनर्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा इति वार्त्तिकानुत्थानमिति वाच्यम् । समुदायद्वारावयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातुत्वादि तु धातुत्वादियोग्यघटितत्वाद् बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादिति कैयटः ।

---

रित इत्यध्याहार्यं बोध्य । * प्रयोगशासनकरणेति * । अत्र करणशब्दोपादानेन परिनिष्ठितभिन्नस्य ग्रहणमिति सूचितम् । लट् सञ्ज्ञेत्यादिषु सञ्ज्ञासञ्ज्ञिभावबोधकेऽनुबन्ध उच्चारित एव, राजसूयेत्यादिष्वनुबन्धरहितानुमानमिति भाव । * हलन्त्यसूत्रे व्यवसितपदार्थत्वेनेति * । एतेन तत्सूत्रे उपदेशपदासम्बन्ध सूचित । तत्सम्बन्धे दोषमप्याह । * किञ्चेति * । * अत एव * । हलन्त्यसूत्रे उपदेशपदप्रयोजनाभावादेव । * अत्रसूत्रे * । उपदेशोऽजिति सूत्रे । * व्यवसितान्त्यमिति * । धातुत्वादिना परिच्छिन्नान्त्यमित्यर्थ । * अन्त्यग्रहणसामर्थ्येनेति * । यत्यादिव्यावृत्त्यर्थमन्त्यग्रहण चरितार्थमिति, चिन्त्यमेतदिति । तदेव चिन्त्यम् । य प्रत्ययस्य चुटू इतिसूत्रारम्भेणादेर्हलो यदीत्त्व भवति तदोक्तस्थलेष्वेवेति ज्ञापनात् । ननु न धातुलोपसूत्रभाष्ये, धातुग्रहण किम् कृत्, लविता पूत्र परि इत्यनेनानुबन्धलोपोत्तरमेव धातुसञ्ज्ञेत्यस्य लाभाद्धातुत्वादिना परिच्छिन्ना स्येत्यर्थमित्यनुपपन्नमत आह । * तत्रानुबन्धेति * । पूर्वोक्तार्थे वार्तिकान्तरस

कत्वम् । उपस्थाप्यार्थत्वादिशेरुच्चारणक्रियत्वात् । अत एव, एकाच उपदेश इति सूत्रे कैयटेनोक्तमित्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यत इति । आदेच इति सूत्रेऽपि येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहार इति । तत्र सूत्रे भाष्येऽपि, उद्देशश्च प्रातिपदिकानां नोपदेश इति । प्रकृत-सूत्रे भाष्येऽपि, प्रत्यक्षमाख्यानमुपदेश इत्युक्तम् । तस्य चोक्त एवार्थः । परे तु, उपदेश इति किमर्थमभ्रआँ अप', क पुनरुद्देशोपदेशयोर्विशेष इति भाष्ये उक्तम् । यदि प्रत्यक्षमाख्यानमुपदेशो गुणेः प्रापणमुद्देशस्तर्हि लृट' सद्वा, निष्ठेति विहितानां शतृशानच्क्तक्तवतूनामवयवस्येत्संज्ञानापत्तिः । तथा, राजसूयसूर्य-चित्याग्निचित्येत्यादिनिपातनानुमितयपजादीनां पादे-रित्वानापत्तिः । नद' सुपीत्यत्रोच्चारितस्तु नेतत्सम्बन्धी । अत एव, तस्या-पत्यमत इञिति न्यासेऽन्यशब्दसंबद्धापत्यार्थस्यानुक्तरूप शेषश्चमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं कर्तव्यम् । एवम् अभ्रआँ इत्यादावपि प्राप्नोतीति तेषां संग्रहोऽस्य व्याख्यानैर्भवति येन स विशेषः क-इति प्रश्नः । तत्संग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्य-

---

याद इत्यास्योपलक्षणम् । अत्र हि हस्वेत्त्वे डीबापत्ति । * अत एवेति * । दि-देरच्चारणार्थत्वादेव । हलन्त्यमिति सूत्रे प्रागधमन्तोपदेशपदानुवृत्तिं सूचयन् सिद्धान्तमाह । * परे त्वित्यादिना * । *उपदेशे किमिति * । पूर्वसूत्र एव किमर्थ-मिति प्रश्न । अत एव सूत्रद्वयविषये उपदेशपदस्य प्रत्यक्षाख्यानपरत्वे दूषणा-भिधानसङ्गति । प्रत्यक्षमाख्यानमिति । अत्राख्यानं शब्दोच्चारणम् । तत्र प्रत्य-क्षस्याव्यभिचार इन्द्रियजन्यतावच्छेदकविषयताश्रयविषयकत्वम् । विषयता च व्यापारानुबन्धिनी । तथा चेहशाब्दस्य यदाख्यानं स उपदेश । * लृट स द्वेत्यादि * । अत्र सदादिशब्दजन्योपस्थितिविषये तादृशविषयत्वाभावः स्पष्ट एव । सदादिसंज्ञानुबन्धविनिर्मुक्तस्येति यदि ब्रूयात्तदाप्याह । *तथा राजसूये त्यादि* । * अत एव * । एकसम्बन्धिनोऽन्यसम्बन्धित्वाभावादेव । न च राज-सूयेत्यादिनिपातनेनैवानुबन्धलोपो भविष्यतीति वाच्यम् । निपातनेनापूर्वेत्सञ्ज्ञा-भावकल्पनापेक्षया हलन्त्यमित्यत्रोपदेशपदासम्बन्धकल्पने लाघवमिति भावः । * लोकव्यवहारेणेति * । अनुवाकप्रश्ने इषेत्वेत्याद्यनुवाकाख्याने उद्दिष्टो मेऽनु-वाक इति । मार्गप्रश्ने भुम्मिजनकादौ हस्तदक्षिणो ग्राह्य इत्याद्याख्याने उपदिष्टो मे पन्था इति व्यवहारादिति यावत् । एतेन सर्वेषु पूर्वोक्तेषु प्रसिद्धिर्गनिष्टे तदभाव इति विषयविभागलाभः सूचितः । वार्तिके उपदेशा इत्यनन्तरमुद्धा

तद्व्यावृत्तये तत्सङ्ग्रहाय चोपदेशनेऽजनुनासिक इति वक्तव्य, किं पुनरुपदेशनं शास्त्रमित्युक्त वार्तिककृता । तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहः, अभ्रर्आ इत्येतद्व्यावृत्तिश्च सिद्धा । तस्य च वार्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यान भगवता कृतम् । किञ्च हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ भवतष्ठक्छसावित्यादिविहितेष्वित्सञ्ज्ञानापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वाभावात् । यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इदित्यर्थ उच्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्र उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽभ्रर्आ अस्ति इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे व्यवसितान्त्यमिति वक्तव्य, केपुनर्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा इति वार्तिकानुत्थानमिति वाच्यम् । समुदायद्वारावयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातुत्वादि तु धातुत्वादियोग्यघटितत्वाद् बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादिति कैयटः ।

---

रित इत्यध्याहार्यं बोध्य । * प्रयोगशासनकरणेति * । अत्र करणशब्दोपादानेन परिनिष्ठितभिन्नस्य ग्रहणमिति सूचितम् । लट सद्धेत्यादिषु सञ्ज्ञासङ्कभायनो नकेऽनुबन्ध उच्चारित एव, राजसूयेत्यादिष्वनुबन्धरहितानुमानमिति भाव । * हलन्त्यसूत्रे व्यवसितपदार्थत्वेनेति * । एतेन तत्सूत्रे उपदेशपदासम्बन्ध सूचित । तत्सम्बन्धे दोषमप्याह । * किञ्चेति * । * अत एव * । हलन्त्यसूत्रे उपदेशपदप्रयोजनाभावादेव । * अत्रसूत्रे * । उपदेशेऽजिति सूत्रे । * व्यवसितान्त्यमिति * । धातुत्वादिना परिच्छिन्नान्त्यमित्यर्थ । * अन्त्यग्रहणसामर्थ्येनेति * । यस्मादित्यावृत्त्यर्थमन्त्यग्रहण चरितार्थमिति, चिन्त्यमेतदिति । तदेव चिन्त्यम् । प प्रत्ययस्य चुट्टू इतिसूत्रारम्भेणादर्हलो यदीत्त्व भवति तदोक्तस्थलेष्वयेति ज्ञापनात् । ननु न धातुलोपसूत्रभाष्ये, धातुग्रहण किम् लूञ, रुचिता पूञ् पवि इत्यनेनानुबन्धलोपोत्तरमेव धातुसञ्ज्ञेत्यस्य लाभाद्धातुत्वादिना परिच्छिन्नान्त्यस्येत्यमित्यनुपपन्नमत आह । * तत्रानुबन्धेति * । पूर्वोक्तार्थ वार्तिकान्तरस्त

फत्वम् । उपदेशार्थत्वादिदिशेरुच्चारणक्रियत्वात् । अत एव, एचइच उपदेश इति सूत्रे कैयटेनोक्तमित्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यत इति । आदेच इति सूत्रेऽपि येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहार इति । तत्र सूत्रे भाष्येऽपि, उद्देशश्च प्रातिपदिकानां नोपदेश इति । प्रकृत सूत्रे भाष्येऽपि, प्रत्यक्षमाख्यानमुपदेश इत्युक्तम् । तस्य चोक्तः पर्यायः । परे तु, उपदेश इति किमर्थम् अभ्रआँ अप, क पुनरुद्देशोपदेशयोर्विशेष इति भाष्ये उक्तम् । यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि लट् सद्भा, निष्ठेति विहितानां शतृशानच्क्तक्तवतूनामनवयवत्वेनेत्सञ्ज्ञानापत्तिः । तथा, राजसूयसूर्य-चित्याग्निचित्येत्यादिनिपातनानुमितरयवादीनां पा-रित्त्वानापत्तिः । रुदः सुपीत्यत्रोद्घागित्तस्तु नैतत्सम्बन्धी । अत एव, तस्या-पत्यमत इञिति न्यासेऽन्यशब्दसन्निधापनार्थस्यानुक्तरूप शेषत्वमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम् । एवम् अभ्रआँ इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽन्यव्यावृत्तिर्भवति येन स विशेषः क-इति प्रश्नः । तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्ये-

---

चार इत्यस्योपलक्षणम् । अत्र हि दस्येत्यत्र दीर्घापत्तिः । * अत एवेति * । दि-शेरुच्चारणार्थत्वादेव । हलन्त्यमिति सूत्रे भाष्यमन्तोपदेशपदानुवृत्तिं सूचयन् सिद्धान्तमाह । * परे त्वित्यादिना * । *उपदेशे किमिति * । पूर्वसूत्र एव किमर्थ-मिति प्रश्नः । अत एव सूत्रद्वयविषये उपदेशपदस्य प्रत्यक्षाख्यानपरत्वे दूषणा-भिधानसङ्गतिः । प्रत्यक्षमाख्यानमिति । अनाख्या शब्दोच्चारणम् । तत्र प्रत्य-क्षत्वाव्यभिचार इन्द्रियजन्यतावच्छेदकविषयताश्रयविषयकत्वम् । विषयता च व्यापारानुबन्धिनी । तथा चेदृशार्थस्य यदाख्यानं स उपदेशः । * लट् स-द्भेत्यादि * । अत्र सदादिशब्दजन्योपस्थितिविषये तादृशविषयताभाव स्पष्ट एव । सदादिसञ्ज्ञानुबन्धविनिर्मुक्तस्येति यदि ब्रूयात्तदाप्याह । *तथा राजसूये-त्यादि * । * अत एव * । एकसम्बन्धिनोऽन्यसम्बन्धित्वाभावादेव । न च राज-सूयेत्यादिनिपातनेनैवानुबन्धलोपो भविष्यतीति वाच्यम् । निपातनेनापूर्वेत्सञ्-ज्ञाकल्पनापेक्षया हलन्त्यमित्यत्रोपदेशपदासम्बन्धकल्पने लाघवमिति भाव । * लोकव्यवहारेणेति * । अनुवाकप्रश्ने इषे त्वेत्याद्यनुवाकाख्याने उद्दिष्टो मेऽनु-वाक इति । मार्गप्रश्नेऽमुष्मिन्नवकाशे दक्षिणो ग्राह्य इत्याद्याख्याने उपदिष्टो मे पन्था इति व्यवहारादिति यावत् । एतेन गर्गेषु पूर्वाह्णेष्वित्यसिद्धिरिति तद्भान इति विषयविभागाऽलाभ सूचित । वार्तिके उपदेशेन इत्यनन्तरमुच्चा-

तद्व्यावृत्त्यर्थं तत्तद्ग्रहणाय चोपदेशेनेऽजनुनासिक इति वक्तव्य, किं पुनरुपदेशनं शास्त्रमित्युक्तं वार्त्तिककृता । तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहः, अभ्रआ इत्येतद्व्यावृत्तिश्च सिद्धा । तस्य च वार्त्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम् । किञ्च हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ भवतष्ठक्छसावित्यादिविहितेष्वित्सञ्ज्ञानापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वाभावात् । यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इदित्यर्थ उच्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्र उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽभ्रआ अटित इति प्रयोजनमुक्त, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे व्यवसितान्त्यमिति वक्तव्य, के पुनर्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा इति वार्त्तिकानुत्थानमिति वाच्यम् । समुदायद्वारावयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातुत्वादि न धातुत्वादियोग्यघटितत्वाद् बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादिति कैयटः ।

---

रित इत्यध्याहार्यं बोध्य । * प्रयोगशासनकरणेति * । अत्र करणशब्दोपादानेन परिनिष्ठितमिश्रस्य ग्रहणमिति सूचितम् । लट् सङ्गेत्यादिषु सङ्ख्यासंज्ञाभावबोधकेऽनुबन्ध उच्चारित एव, राजसूयेत्यादिष्वनुबन्धरहितानुमानमिति भाव । *हलन्त्यसूत्रे व्यवसितपदार्थत्वेनेति* । एतेन तत्सूत्रे उपदेशपदासम्बन्ध सूचित । तत्सम्बन्धे दोषमप्याह । * किञ्चेति * । *अत एव* । हलन्त्यसूत्रे उपदेशपदप्रयोजनाभावादेव । * अत्रसूत्रे * । उपदेशोऽजिति सूत्रे । * व्यवसितान्त्यमिति * । धातुत्वादिना परिच्छिन्नान्त्यमित्यर्थ । * अन्त्यग्रहणसामर्थ्येनेति * । यत्वादिव्यावृत्त्यर्थमन्त्यग्रहण चरितार्थमिति, चिन्त्यमेतदिति । तदेव चिन्त्यम् । ष प्रत्ययस्य चुटू इतिसूत्रारम्भेणादेर्हलो यदीत्त्व भवति तदोक्तस्थलेष्वधति न रूपनात् । ननु न धातुलोपसूत्रभाष्ये, 'धातुग्रहण किम् वृश्च, लवित्वा पूञ परि इत्यनेनानुबन्धलोपोत्तरमेव धातुसञ्ज्ञेत्यस्य लाभाद्धातुत्वादिना परिच्छिन्नस्येत्नमित्यनुपपन्नमत आह । * तत्रानुबन्धेति * । पूर्वोक्ताय वार्त्तिकान्तरस्य

एवञ्चोदश्विदादिप्रातिपदिकान्त्यस्यापि लोपः प्राप्नोतीति प्रातिपदिकानां प्रतिषेधो वाच्योऽकृत्तद्धितान्तानामिति वार्त्तिककृतोक्तम्, कुम्भकार इत्यादौ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति अकृदित्यादि । तच्च फलाभावान्नेत्सञ्ज्ञेत्यादिना भाष्ये प्रत्याख्यातम् । अत्राद्योच्चारणार्थकोपदेशपदानुवृत्त्या त्वस्य वार्त्तिकस्यानुत्थानमेव स्यात् । उद्देशश्च प्रातिपदिकानां नोपदेश इत्यादेश्च इति सूत्रभाष्ये उक्तेः । एतच्चाप्यैकवाक्यतया पस्पशाह्निकान्तस्थे, अग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यो मञ्चको मञ्चक इति मा भूदिति भाष्ये उपदेशशब्दोऽग्रहण कर्त्तव्यमित्यर्थकः । तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोध्यम् । नन्वेवं तस्मिन्निति निर्दिष्टे इति सूत्रे षष्ठीप्रकल्पकत्वे तस्येति पक्षे गुप्तिज्किद्भ्य इत्यादावपि षष्ठीप्रक्लृप्त्यापत्तिः । न च सन् सनेरादेशो भविष्यतीति बाधकाभाव इति वाच्यम् । उपदेश इत्युच्यमाने इत्सञ्ज्ञा न प्रकल्पेतेत्युक्त भाष्ये, तद्विरुद्धेतात्रोपदेशपदानुवृत्ताविति चेन्न । तस्यैकदेशयुक्तित्वेनासाधकत्वात् । तथा हि । तत्र, ङमो ह्रस्वादचीत्यादौ यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते, तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवानिति सिद्धान्तिनोक्तम् । तत एकदेशिना यथार्थं वा षष्ठीनिर्देशः कर्त्तव्य इति समाधानान्तरमुक्तम् । यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या इति तदर्थः । तेषु सप्तमीनिर्देशस्य कार्यि-

---

तिमाह । * एवञ्चेति * । *उदश्विदादीति* । आदिना शकृदित्यस्य सङ्ग्रहः । एतावव्युत्पन्नाविति कैयटः । * कुम्भकार इत्यादाविति * । ननु पूर्वमित्सञ्ज्ञा ततः प्रातिपदिकसञ्ज्ञेति क्रमात्कथमत्र प्रतिषेधप्राप्तिरत आह । * अपवादेति * । यदि चोदकेन श्वयति वर्द्धत इति व्युत्पत्तिसिद्ध उदश्विच्छब्द इत्युच्यते तदापि द्वितीयस्याव्युत्पन्नत्वमेव । न चाम्यापि शकेऋतिश्चित्युणादिसूत्रनिष्पन्नत्वमिति वाच्यम् । तथोप्युपदेशेऽन्त्यस्य तकारस्य नेत्यभिप्रायात् । * प्रत्याख्यातमिति * । न चोणादिप्रत्ययान्तानामव्युत्पत्तिपक्षे राजन्नित्यादौ नकारस्येत्त्वव्यावृत्त्यर्थमस्य वार्त्तिकस्यावश्यकत्वम् । न च फलाभाव । नित्स्वरस्यैव फलत्वादिति वाच्यम् । भीह्रीतिसूत्राल्लितीत्यत्रैव प्रत्ययादित्यस्यानुवृत्त्या सप्तम्या विपरिणामेन चेष्टसिद्धेः । * अग्रहणेति * । गणादावपठितानामित्यर्थः । उपदेशपदानुवृत्तौ भाष्यविरोधमाशङ्कते । *नन्विति* । *कश्चित्पूर्वपक्षेति* । इतोत्सर्ग-

पूर्वत्र क्वचिदुत्तरत्रावश्यकत्वेनोभयनिर्देशे गौरवेणैवैकदेश्युक्तिः । परेणैकदेशिना षष्ठीपदानुवृत्त्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य यथार्थं वा षष्ठीत्येकदेश्युक्तिः प्रत्याख्याता । षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वयोरेकः पूर्वपरयोरिति पूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः । ततः पूर्वेणैकदेशिना तत्पक्षे शुश्रिजित्यादौ दोषः शङ्कितः । ततः षष्ठीप्रक्लृप्तिवादिनैकदेशिनोक्तम् । स्यादेष दोषो यदीत्सञ्ज्ञा आदेश प्रतीक्षेत । तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति, उपदेश इति हीत्सञ्ज्ञोच्यते, इति । एवञ्च त्वदुक्तिर्व्याहतेत्याशयः । तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्याथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम् । यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यतीति समाधानान्तरं कृतं, तत्र परत्वाविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्वमिति तदर्थं कैयट आह । एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्त्तिकस्यैकदेश्युक्ततद्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितं लक्ष्यासिद्धेश्च । अइउणित्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात् प्रातिपदिकत्वम् । चित्रङश्चोः क्रुरित्यादेरपि प्रातिपदिकत्वम् । लोपश्चेत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात् प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु लोपो वीत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात् सर्वादेशत्वं बोध्यम् । एकाच उपदेश इत्य-

---

नामस्थाने गोतोणिदित्यादौ । *क्वचिदुत्तरत्र* । ङमो ह्रस्वादचि ङमुण्नित्यम् मय उञो वो वेत्यादौ । * उभयोः प्रकल्पकत्वेति * । पर्यायेणेत्यादि । एक पूर्वपरयोरित्यस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकत्वाश्रयणम् । * लक्ष्यासिद्धेरिति * । ठक्छसावित्यादिविहितेत्यर्थः । स्वरीत्या व्यवसितान्त्यग्रहणे सूत्रस्य शब्दाग्रहणात्कथं तदन्त्यस्येत्सञ्ज्ञेत्यत आह । *अइउणित्यादीनामिति* । *लोपश्चेति* । तत्र लोप इति भिन्नं पदं शाइति च भिन्नम् । पूर्वस्य विभक्तिसकारस्य श्चुत्वेन शकारे द्विशकारको निर्देशः । व्यपदेशिवद्भावेन शकारस्य प्रातिपदिकान्तत्वादित्सञ्ज्ञा । अनेकान्तत्वपक्षे समीपेऽवयवारोपेण बहुर्व्रीहिस्वीकारात् लोपस्य शित्त्वम् । मुख्यपक्षे त्वाह । * अनुबन्धानामिति * । ननु येकाच उपदेश इतिसूत्रस्यस्येत्सञ्ज्ञाविधायकस्योच्चारणवचन उपदिशिर्गृह्यत इति कैयटस्य का गतिरित्यत आह । *एकाच उपदेश इति* । *अन्योपि* । उपदेशेत्यत इतिसूत्रस्य ।

त्रत्य. कैयटोऽपि चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । एकाच उपदेशे, आदेच उपदेशे इत्यादौ तु भावसाधन एवेति सुधियो विभावयन्त्वित्याहु ।

ननु शास्त्रेऽनुनासिकोच्चारणाभावात् तत्त्वज्ञान दुर्लभमत आह । प्रतिज्ञेति । प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थ । पाणिनीया इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः । प्रतिज्ञा चायमत्रमिति कथन वर्णाना तत्त्वज्ञापको व्यवहारश्च । ताभ्या तज्ज्ञान सुलभमिति भावः । प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्तार एवेति दिक् । निर्देशादिति । तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भाव । न चेत्त्वविधानसामर्थ्याद् यणभावः सिद्ध. । तस्यापि प्रत्याहारेष्वनुनन्याग्रहणज्ञापनद्वारेव यणभावकल्पकत्वौचित्यात्साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात् । निर्देशादित्यस्य तन्मूलभूतेत्त्वविधानसामर्थ्यादित्यर्थ इति तात्पर्यम् । आदिना तृपिमृभिक्षुपेरेरू. पूर्वेत्यादिसङ्ग्रह. । ननु प्रत्याहारेऽनुनन्याना कथमग्रहणेपु नेति वार्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धे प्रत्याहारेष्वितामित्यनुपपन्नमत आह । आदिरन्त्येनेतीति । वार्तिके तादर्थ्याच्चाच्छब्द्यमिति भावः ।

ऊकालोऽच् । कुक्कुटरुते ऊकार एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ता । ऊदिति एकद्वित्रिमात्राणा क्रमेण प्रश्लेषनिर्देशो व्याख्यानात् । तेन स्वोच्चारणकालसदृशो लक्ष्यते । स कालो यस्येति बहुव्रीहिः । तत्क-

---

वस्तुतोऽयमेव ग्राह्य । एकाच उपदेश इति सूत्रस्थस्य कर्मणि व्युत्पन्नत्वात् ।

तस्येति । अनुनासिकस्येत्यादिरित्यर्थ । * व्यवहारश्चेति * । इदितो नुमित्यादि व्यवहारश्चेत्यर्थ । * यणापत्तिरिति * । न च वकारस्याचत्वेऽनुनासिकत्वाद्वात्वयेव वकारे यणादेश यञ्जियमा यस्येति लोप एव वक्तुमुचित इति वाच्यम् । यणुद्देश्यतानिमित्तकार्यसामान्योपलक्षणत्वात् । यणभावोपादान तु तृपिमृषिकृषेरित्यत्रादिपदग्राह्ये यण एव प्राप्तिरित्यभिप्रायेण । * तन्मूलभूतेति * । निर्देशमूलभूतेत्यर्थ ।

ननु वर्णसमाम्नाये अकारस्य प्राथम्यादाकार इयुचितमत आह । * कुक्कुटेति । * व्याख्यानादिति * । विभाषा पृष्टेति हे. प्लुतविधानाच्च मात्रिकस्यान्ते धनो दीर्घो लोपीति दीर्घविधानाच्च मध्ये प्रवेश । द्वित्रिमात्रयोर्न द्विमात्रस्यान्ते प्रयोग । ओमभ्यादान इति ङिदादिन्यादि । * सदृशो लक्ष्यत इति * । न चैव मुरारौच्चारणकाले स्वसदृशत्वाभावादुकारे एतत्सूत्रविधेयसंज्ञा न स्यादि

लितमाह । उश्च ऊश्च उ३श्चेति । ननु उकालो ह्रस्व इति वाक्येऽण्त्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां मदाय मलूयेत्यादौ ह्रस्वस्येति तुक्स्यादिति चेन्न । ऊअजित्येवाज्ग्रहणसामर्थ्यादुसदृशोऽजित्यर्थे सादृश्यस्य व्याख्यानात् कालकृतस्यैव ग्रहणमिति सिद्धे अधिक कालग्रहणमुच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा, न तु तेन गृहीतसम्बन्धिकालसदृशकालस्यापीत्यर्थेनादोषात् । तदुक्तं भाष्ये, यावत्तपरकरणन्तावदत्र कालग्रहणमिति । न चाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात्तितउच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति तुगापत्तिरिति वाच्यम् । ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् । अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तानित्यतुक एव प्राप्तेश्च । अज्ग्रहणं प्रतक्ष्यत्यादौ ह्रस्वस्येति तुग्व्यावृत्त्यर्थम् ।

उच्चैरु । नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः । श्रुतिप्रकर्षस्याव्यवस्थितत्वाच्च । किन्तु स्थानकृतम् । उच्चैरित्यधिकरणशक्तिप्रधानम् । अधिकरणत्वञ्चोच्चारण प्रति । तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह । ताल्वादीति । इद प्राचामनुरोधेन । वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम् । एवमन्यत्रापि बोद्धव्यम् । प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽच् व्यञ्जयति तदा स उदात्त इति भावः । अजिति । ऊकाल इत्यतस्तदनुवर्त्तते । उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्ध-

ति वाच्यम् । नञिवयुक्तमिति भाष्येऽन्यशब्दोपादानसामर्थ्येन सादृश्यस्य भेदाघटितत्वात् । वक्ष्यमाणा तुल्यास्येतिसूत्रव्याख्याकालिकी रीतिर्वा बोध्या । * ननूकाल इति * । वाक्ये उकारस्योइदित्यादण्उदित्सूत्रप्रवृत्तौ प्रथमसदृशस्य संज्ञात्रयप्रसङ्ग इत्याशङ्कते । * नन्विति * । अधुना यथासङ्ख्यन्तु स्यतामी लल्युटोरितियच्छन्दत साम्यात् । न च स्वविषये दीर्घप्लुतसञ्ज्ञाभ्यां बाध । आकाडारीयसञ्ज्ञातिरिक्तत्वात् । न चैवमभ्यासस्य ह्रस्वविधाने दीर्घप्लुतयोरप्यापत्तिरिति वाच्यम् । ङ्यापोऽन्यतरस्यामिति सूत्रेण विकल्पेन ह्रस्वविधानात् । प्लुतापत्तिस्तु न । प्लुतश्च विषये स्मृत इति न्यायात् । वर्णग्रहणे जातिग्रहणादिति, निपात एकाजनाङिति सूत्रस्थैकग्रहणेन ज्ञापितत्वात् । *अन्तरङ्गत्वेन* । उकारमात्रस्य प्राधिम्यात् ।

अव्ययभिधानाद्विति । नीचैरपि रोगार्त्तस्योच्चैः । उच्चैरपि कर्णापाटवयुक्तस्य नीचैः । एव हि न प्राप्ति किन्त्वार्यन्तकेमाधीनो इति । * प्राचामनुरोधेनेति * । परपक्षाश्रयणाभ्य अनुसरणि

त्वेन हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोध्यम्। आये इति। यच्छब्दः फिषोऽन्त इत्यन्तोदात्तः। जस्सुप्त्वादनुदात्तः। एकादेश उदात्तेनेत्यैकार उदात्तः।

अर्वाङिति। अभिमुखवाच्यव्युत्पन्न, फिषोऽन्त इत्यन्तोदात्तम्। आद्यस्य शेषनिघातेनानुदात्तत्वम्। अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम्।

एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह। वर्णधर्माविति। बाहुलकादधिकरणे घञ्। अर्शआद्यजित्यन्ये। इयं त्रिसूत्री स्पष्टार्था। लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात्।

ह्रस्वग्रहणमिति। ह्रस्वपदघटितग्रहणमित्यर्थः। अतन्त्रमिति। स्वशास्त्रसङ्केतितरूपेणाबोधकमित्यर्थः। किन्त्वर्थमात्रारूपार्थबोधकमिति भावः। एवञ्च दीर्घादिष्वप्यर्धमात्रैवोदात्ता। इत आरभ्य नवसूत्र्या अ अ इत्यतः

---

*लोकप्रसिद्धत्वेन*। यथात्रैव भाष्ये। ननु न केवलमत्र व्यवहार एव प्रयोजकः। किन्तु राजदृषदित्यादौ समासान्तोदात्तत्वमन्त्यहलाज्ग्रहणाननुवृत्तौ प्राप्नोतीत्यत आह। * हल्स्वरेति *। यतोऽनाव इति सूत्रे नौप्रतिषेधाल्लिङ्गात्। अन्यथा य स्वरयोग्यो नासावादिरिति तदर्थं स्यात्। नकारस्य स्वरस्तु पक्तुमहावयो निमित्तस्य व्यञ्जकत्वस्य विनाशापत्ते।

* मेलनविरोधादिति *। न चोदात्तत्वादात्म्य सम्भवत्येवेति वाच्यम्। धर्मिद्वयतादात्म्यस्य क्वाप्यदृष्टत्वात्। धर्मद्वयसमावेशस्तु सम्भवत्येव। यथा नानाजातीयरसवद्द्रव्यारब्धेऽवयविनि स्वाश्रयसमवेतत्वसम्बन्धेनावयवगतस्य रसस्यैव भानञ्च तु चित्ररसाङ्गीकारस्तथात्रापि। अत एव तस्यादित उदात्तमर्धह्रस्वमिति सूत्र स्वरसत सङ्गच्छते। तेनानुवर्तमानयोरुदात्तानुदात्तशब्दयोर्भावप्रधाननिर्देशपरत्वमावश्यकमिति भाव। न चानुवर्तमानयोरुदात्तानुदात्तपदयोर्लक्षणया धर्मपरत्वे तयोर्द्वन्द्वे ततो भावप्रत्यये उदात्तत्वानुदात्तत्वशब्दाद्वर्णधर्मवृत्तिधर्मबोधापत्तिरिति वाच्यम्। इतरेतरयोगद्वन्द्वेऽपि समूहस्यैव प्राधान्यस्य स्वीकाराच्च प्रति समूहिनो विशेषणतया द्वन्द्वोत्तरत्वप्रत्ययेन धर्मस्यैव प्रतिपादनसम्भवात्।

तस्यादित इति सूत्रस्थार्धह्रस्वशब्दस्य ह्रस्वस्यार्धमित्यर्थकत्वे दीर्घप्लुतस्वरितयोरसङ्ग्रह इत्यत आह। * ह्रस्वपदघटितेति *। स्वशास्त्रसङ्केतितरूपेण, अवयवव्युत्पत्त्या पूर्वोपदर्शितरीत्या लब्धेन धर्मेण। * अर्धमात्रारूपेति * तदुक्तम्भाष्ये अर्धह्रस्वशब्दोऽर्धमात्राया रूढ इति। हरिरप्याह। प्रमाणमेव ह्रस्वादावनुपात्त प्रतीयते इति। * इत आरभ्येति *। इमं मे गङ्गे यमुने इति मन्त्रे

प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः। सर्वञ्चेदं भाष्ये स्पष्टम्। अर्धमुदात्तमिति वृत्तिस्तु सत्या सत्यभामेतिवद् व्याख्येया। उत्तरार्धमित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः। वेदे तु यथाप्रयोगं प्रातिशाख्यादिस्माच्च व्यवस्था। तस्य चेति। अनुदात्तस्येत्यर्थः। उदात्तेति। उदात्तस्वरितयोः परत्वे सतीत्यर्थः। तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव। अन्यत्र। उदात्तस्वरितयोः परत्वाभावे। प्रातिशाख्ये इति। लोके त्वनुदात्त एवेति भावः। ह्रस्वस्वरितमुदाहरति। वेति। किमोदित्यत् क्वातीति क्वादेशे, तित्स्वरितमिति स्वरितः। दीर्घं तमुदाहरति। रथानामिति। येरा इति। स्वरितो वानुदात्ते पदादावित्येकारः स्वरितः। नोदात्तस्वरितोदयमिति निषेधस्तूदात्तादनुदात्तस्य स्वरित इत्यस्यैवानन्तरस्येति न्यायात्। स्वरितपरमुदाहरति। शतचक्रमिति। अहेरित्यर्थेऽह्यः शृत्रस्येत्यर्थः। छन्दसि वा वचन प्राङ्णौचङ्युपधाया इति वचनाद् गुणाभावः। उदात्तस्वरितयोरिति स्वरितः। उदात्तयणो हल्पूर्वादिति तु न। छान्दसत्वात्। य-

---

मेशब्दमाश्रित्य सर्वेण निघात। इममित्युदात्तात्परस्यानुदात्तमेशब्दाद्ययचेकारस्य स्वरितत्वे स्वरितात्संहितायामिति गङ्गेप्रभृतीनां प्रचयो यथा स्यादिति देवब्रह्मणोरनुदात्त इत्यनेन ज्ञापकेनैतत्काण्डस्य अत्र इत्यत प्राक् पाठस्य कल्पनमावश्यकम्। अन्यथा देवा ब्रह्माण इत्यत्रामन्त्रितानुदात्तत्वे शेषनिघातेनानुदात्तस्योदात्तादनुदात्तस्य स्वरित इतिसूत्रेण स्वरितस्य देवब्रह्मणोरनुदात्त इत्यनुदात्तत्वे कर्तव्ये सिद्धत्वात्तदसङ्गति स्पष्टैव। * गुणाभाव इति *। अहिशब्दे घेर्ङितीति सूत्रेण प्राप्तगुणाभाव इत्यर्थः। अहिरिव भोगैरित्यत्राद्युदात्तत्वेन पठ्यमानतया प्रामादित्वादूष्मादित्वाद्वा आद्युदात्तत्वं भवति। तत्र शेषनिघातेनेकारस्यानुदात्तत्वे, उदात्तादनुदात्तस्य स्वरितत्वे तस्य यणि स्वरितस्थानिकयण परत्वाद्विभक्त्यकारस्य स्वरितत्वम्। न चोदात्तादनुदात्तस्येत्यस्यासिद्धत्वात्पूर्वमेव यणि न स्वरितस्थानिकत्वम्। छान्दसत्वेनासिद्धत्वाभावस्य कल्पनात्। यद्वा तत्राद्युदात्तपाठेऽपि प्रवृत्ते घृतादित्वादन्तोदात्ते तस्य यण्। यद्वा योऽह्य इत्यत्र यच्छब्द क्विप इत्यन्तोदात्तस्ततस्सोरुत्वोत्वे उदात्तानुदात्तयोरेकादेशस्योदात्तत्वे पूर्वरूपे स्वरितोऽन्यस्य वैकल्पिकत्वात्तदभावे, एकादेशउदात्तेनेति पुनरुदात्तत्वे अहिशब्देकारस्य स्वरितत्वे तस्य यणि कृते स्वरितयण परस्य सुप स्वरितत्वसिद्धि। * उदात्तयण इति *। स्वरित उदात्तभागसत्त्वाभिप्रायेणेदम्। यदि चोदात्तस्वरितयोरिति सूत्रे स्वरितशब्दस्य पृथगुपादानात्स्वतन्त्रोदात्तस्यैवादेशो यण् उदात्तयण्पदेन गृह्यत इत्युच्यते तदा नैतत् सूत्रप्राप्तिरिति यो

च्छन्दः किप इत्यन्तोदात्तस्तदेकदेशश्च वा स्वरितः । स इति । उदात्तादि ह्रस्वादिसञ्ज्ञक इत्यर्थः ।

मुख । उच्यतेऽसौ वचनः । बाहुलकात् कर्मणि ल्युट् । मुखमासिका नासिकेति विग्रहः । तया वचन इति, साधनं कृतेति समासस्तदाह । मुख-सहितेत्यादि । मुखेति किम् । यमानुस्वाराणामेव प्रसज्येत । एवञ्चाटोऽनुनासिक इत्यत्रानुस्वारः स्यात् । नासिकेति किम् । शक्नोत्यादावनुना-सिकापदेशेत्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीद न व्यक्तिपक्षे व्यक्तीनामानन्त्यात्, तथाप्यष्टादशधर्मवत्त्वमकारजातीयानामित्यर्थः । ह्रस्व-त्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्यैतद-भ्योद्धरम् । एवमग्रेऽपि । लृवर्णस्येति । विवृतस्येत्यर्थः । तेन लृति लृवंति निधेयस्येपतस्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । दीर्घाभावादिति । अत एव तु-ल्यास्यसूत्रे भाष्ये लृतिसवर्णे इत्यनेन पक्षे द्विलकारकाभावे ऋऌ सवर्ण इति दीर्घत्वे होतॄकार इति ऋकारघटितप्रयोगः सङ्गच्छते । ह्रस्वाभावादि-ति । इदमेओऽडित्यादौ भाष्ये स्पष्टम् । गानरोदनादौ चतुर्मात्रार्धमात्रादी नामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः । अत एवानुदात्ततरस्यानुक्तिः । एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणं तस्या लोकेऽपि सत्त्वात् ।

तुल्यास्य । तुल्यावास्यप्रयत्नौ यस्येत्यर्थः । आस्ये भवमास्यं व्या-

ख्यम् । किं बहुनात्र शास्त्रे यद्यदुदात्तसम्बन्धि कार्यं तत् स्वतन्त्रोदात्तसम्बन्ध्येव । अत एवात्र मूले तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टमित्यत्रोदात्तात्पृथक् स्वरितशब्दोपादानं सङ्गच्छते ।

* यमानुस्वाराणामिवेति* । अनुस्वारयमानाञ्च नासिकास्थानमिष्यत इति शिक्षोक्तेः । स्वोक्तमष्टादशत्व धर्मे व्युत्पादयति । *ह्रस्वत्वादीनामित्यादिना* । *अत एवेति* । दीर्घाभावादेवेत्यर्थः । * अत एवानुदात्ततरस्येति * । लौकिके प्रयोगेऽनुपलम्भादेवेत्यर्थः । * एकश्रुते स्वरान्तरत्व इति * । किमियमेकश्रुति-रुदात्ता नाहोस्विदनुदात्ता इति विचारे नोदात्ता यथयमुभौ स्वरौ वा वषट्कार इत्याह अत अन्तरनिर्देश । नानुदात्ता यदयमुदात्तस्वरितपरस्य सन्नतर इत्याह, अत अन्तरनिर्देश इति भाष्ये स्पष्टम् ।

* व्याख्यानादिति, * । वायुसयोगस्य ग्रहणं ह्रस्वदीर्घयो सावर्ण्याभावाप

ख्यानात् । तच्च वर्णोपयोगित्वात्स्थानमेव । प्रयत्नस्य पृथगुपादानात् । प्रकृष्टो यत्न आभ्यन्तरः । तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात् । जनकत्वं पष्ठ्यर्थः । तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः । वस्तुतः सादृश्यस्य भेदघटितत्वमिति न कश्चिद्दोषः । स्पष्टञ्चेदं भाष्ये । तदाह । ताल्वादीति । शिक्षायाङ्कण्ठादीनाङ्कण्ठत्वादिनैव स्थानतोक्ता । तद्रूपेणैवास्यभवशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोद्धव्यम् । यस्यैतद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः । यजुष्येकेषामिति निर्देशाद्यावदास्यभवतुल्यत्वं ग्राह्यम् । अत एवैचोः सावर्ण्यमाशङ्क्य नैतौ तुल्यस्थानाविति भाष्ये समाहितम् । अत एव वलयोर्न सावर्ण्यम् । तेन, तद्वानामामित्यादौ तोर्लीति न । अत एव प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किञ्चित्प्रयत्नभेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेत्यर्थो झरो झरि सवर्णे इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये । तेन स्थानांशे यावत्स्थानसाम्ये इत्येव स्वारसिकोऽर्थ इति प्रतीयते । न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थम् । प्रयत्नस्याप्यास्यभवत्वादिति वाच्यम् । ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः । तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात् । तस्मादास्यभवानाङ्कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किम् । तप्तं । झरो झरीति लोपो मा भूत् । प्रयत्नेति किम् । वाश्च्योतति । प्रेति किम् । शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात् । कस्य किं स्थानमित्याशङ्कायामाह । अकुहेति । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽपि, तथा अकारादीनामुच्चारणे तु नेति भावः । कचयोस्तु न सावर्ण्यम् । यावत्स्था-

स्थो तुल्यास्येतिरूपस्यैवाप्युपपत्तिरिति भावः । * भेदघटितेति * । लोके भिन्ने वस्तुनि सदृशव्यवहारस्य सुप्रसिद्धत्वात् । इदं सादृश्यमतिरिक्तमखण्डोपाधिः । अत एव केन धर्मेण सादृश्यमाह्लादकत्वेन मुखे चन्द्रसादृश्यमिति व्यवहार सङ्गच्छते । * यजुष्येकेषामितीति * । यत्किञ्चिदास्यप्रयत्नग्रहणे इकारैकारयोस्तास्थ्यत्वाविशेषात्सवर्णदीर्घापत्तिरिति भावः । * सवर्णग्रहणेन ज्ञापकेनेति * । हलो यमां यमीत्यत्रेव यथासङ्ख्यनिरासाय सवर्णग्रहणम् । तेन शिण्ढीत्यत्र ढकारस्य ढकारे परे लोपसिद्धिः । प्रयत्नांशेऽपि चेद्यावत्तौल्यं तदा ढकारढकारयोर्यावत्प्रयत्नतौल्याभावाद्रूपासिद्धिः स्फुटैव । * अकाराद्युच्चारणे तु नेति * ।

नसाम्याभावात् । भिन्नस्थानकथनवैयर्थ्यापत्तेश्च । अत्र कण्ठपदं कण्ठस्था-
नतत्समीपजिह्वामूलस्थानोभयपरम् । तेन, 'कण्ठ्यावहौ, जिह्वामूले तु कुः
प्रोक्त' इति शिक्षया न विरोधः । जिह्वामूलीयपदस्य च वर्णविशेषे रूढिरिति-
न व्यवहारातिप्रसङ्गः । अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्त-
द्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्था-
नत्वनिर्णयेऽप्यकुहेत्यादिकथनं साधारणधर्मबोधनायाऽनुवादकम् । न त्वे-
तदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम् । विसर्जनीयपदेनात्र साह-
चर्यादकाराश्रयस्य ग्रहणम् । अत एव, 'अयोगवाहा विज्ञेया आश्रयस्थान-
भागिनः' इति शिक्षया न विरोधः । दन्ता इति । दन्तसंयुक्तदेशा इत्यर्थः ।
अतो भग्नदन्तस्याप्युच्चारणं भवत्येव । उश्च पश्च ध्मायेते अनेन तत्र भव
इति योगे णोपध्मानीयस्योष्ठ्यत्वमित्याह । उपूपेति । रूढत्वाच्च न व्यवहारा-
तिप्रसङ्गः । नासिका चेति । येन स्वस्ववर्गानुकूलं ताल्वादि स्पृश्यते । अत
एवैषा प्रातिशाख्ये नासिकायां भव इत्यर्थकनासिक्यशब्देन व्यवहारः ।
यत्तु, 'अनुस्वारयमानां च नासिकास्थानमिष्यते' इति शिक्षोक्तेरेषां नासिका
करणम् । किञ्च स्थानत्वे कङयोः सावर्ण्यापत्तिः, यावत्स्थानैक्याभावात् ।
यत्किञ्चित्स्थानैक्येन तत्त्वे तु ञमागपि परस्परं सावर्ण्यापत्तिरिति । तन्न ।
कण्ठादीनामपि करणत्वस्यैवास्यन्त्यनेन वर्णानिति भाष्यात्प्रतीतेः । स्था-
नत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे
वर्णाधारत्वारोपेण । तत्तत्स्थानजिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जि-
ह्वाग्रादौ तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः ।

---

एतेन वर्णोच्चारणे यद्व्यापारः आवश्यकस्तस्य स्थानमिति सूचितम् । जिह्वामूले तु
कुः प्रोक्त इति शिक्षाविरोधं परिहरति । *अत्र कण्ठेति* । *अत एव* । रूढि-
स्वीकारादेव । यदि कवर्गोऽपि जिह्वामूलीयः स्यात्तदा तस्याक्षरसमाम्नाये प्रयोग-
सत्त्वाज्जिह्वामूलीयानां तेषु गणनं विरुध्येतेति भावः । उश्च पश्चेतियोगेनोपध्मा-
नीयपदस्य पवर्गेऽपि प्रसङ्ग इत्यत आह । *रूढत्वाच्चेति* । *अत एव* । नासि-
कायाः स्थानत्वादेव । परमतं खण्डयितुं तन्मतमनुवदति । * यत्त्विति * । ना-
सिका करणमिति शिक्षायाः स्थानत्वोक्तिकरणत्वादेवेति तद्भावः । अस्यन्त्यनेनेति
भाष्यीयव्यवहारात् स्थानमात्रे करणत्वं प्राप्नोति । कण्ठादौ स्थानत्वव्यवहारस्य
प्रयोजनं तन्नासिकायामपि समानमित्याशयेन खण्डयति । *तन्नेति* । वर्णानां
नित्यत्वादाह । * वर्णानिति * । वर्णजनकेत्यपि तदर्थकमेव । * तत्सम्बन्ध

वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको यत्नो गुणशब्देनोच्यते। अकारादिनिष्ठानुनासिक्यस्य, भेदकत्वाद् गुणस्येत्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या। एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाकारादीनां नासिकास्थानं नोक्तं मूले। एकोऽयमात्मोदकन्नाम तस्य गुणभेदादन्यत्वं भवति। अन्यदिदं शीतमन्यदिदमुष्णमिति दृष्टान्तपरभाष्येण तथैव प्रतीतेः। आत्मात्र द्रव्यम्। उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोद्धव्यम्। हादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहेणोभयोः स्थानत्वम्। अनुस्वारयमानाञ्चेति शिक्षायाञ्चेन हादीनामपि सङ्ग्रह इति युक्तम्। अत एव कण्ठ्योऽकार इत्याद्युक्त्वा नासिक्यान्नासिक्ययमानुस्वारानिति स्थानानीत्युक्तं प्रातिशाख्ये। नासिक्या ह्रजणनमा इति तद्व्याख्यातारः। कङयोः सावर्ण्यन्तु भवत्येव। आस्ये तुल्यदेशप्रयत्नमितिवार्त्तिके किमास्योपादाने प्रयोजनमिति प्रश्ने प्रयत्नविशेषणमास्योपादानमित्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य, यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण इति भाष्येण तस्य बाह्यप्रयत्नत्वोक्त्यात्र सूत्रे नासिकाया आस्यशब्देन तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहणबोधनात्। नासिकाऽऽस्यबाह्येति वदतां मते तद्ग्रहणाभावाच्च। अत एव बाह्यप्रयत्नानुपक्रम्य।

---

जनक इति *। एतेन व्यापारवत्त्वसूचनात्करणत्वव्यवहारो नानुपपन्न इति भाव। बाह्यप्रयत्नेषु यो व्यवहारस्तमुपपादयति। * वर्णाभीति *। भेदकत्वाद्गुणस्येतिभाष्यीयव्यवहाराद्यत्न, इत्यानुनासिक्यमपि यथा गुणस्तथोपपादयति। * अकारादीति *। तथा च यथा पटादौ गुण पश्चादुत्पद्यते तथैतस्यापि पश्चादुत्पत्त्या गुणत्वव्यवहार इति भाव। ननूदात्तादौ गुणव्यवहारस्य भाष्यादिस्थस्य का गतिरत आह। * उदात्तत्वादीनामिति *। हादीनामुभयं स्थानमित्युपपादयति। * हादीनामिति *। नन्वेव कङादीनां सवर्णसञ्ज्ञा यावत्स्थानसाम्याभावान्न प्राप्नोतीत्यत आह। * कङयो सावर्ण्यन्त्विति *। इदमुपलक्षणञ्चमादीनाम्। * आस्ये तुल्यदेशप्रयत्नमिति *। वार्त्तिककारीयन्यासे यथास्यशब्द प्रयत्नविशेषणम्। तदा सौत्रत्वाद् द्वन्द्वो बोध्य। * वदताम्मत इति *।

स्पृष्टत्वमीपद्विवृतत्वञ्च बोधितम् । नेम इत्यर्थे । तेन शाल्मामीपाद्विवृततरं णपेक्षयाधिकविवृततरं चेति बोद्धम् । अत्र शिक्षोक्तव्याप्यधर्मवतां व्याकधर्ममादाय न सावर्ण्यमिति, यणाञ्चवर्गादिभिर्न सावर्ण्यम् । तेनाश्वित त्यादौ न यादिः परसवर्णः । निवृतमेवेति । प्रक्रियादशायां विवृतत्वम्प्रतिज्ञेयमित्यर्थः । तेन दण्डाढकादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण सावर्ण्याभावात्स न स्यादिति भाव । दीर्घाकारस्य निवृततरत्वन्तु पाणिनिशिक्षानुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् । तस्य प्रयोगे संवृतत्वे मानमाह ।

अ अ । प्रयत्नभेदाद्दीर्घाभावः । अत्रोद्देश्ये सवर्णग्रहण जातिनिर्देशो वा न व्याख्यानात् ।

अधिकारत्वे फलमाह । त्रिपाद्यामपीति । अन्यथा गोधुङ्मानित्यत्र घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः । वस्तुतो घत्वे कृते

---

इति वाक्येन पुनस्तद्बोधनं किमर्थमिति चिन्त्यमिति । तन्न । ताभ्यामित्यादिवाक्येन विवृततमस्वरस्योक्ततया यणस्त्वीपदित्यत्र विशेष्याकाङ्क्षायां तस्यैव परामर्शापत्ते । * दीर्घाकारस्य विवृततरत्वन्त्विति * । अत एवाहउणसूत्रे अकारस्य विवृतोपदेश आकारग्रहणार्थ इति वार्तिक सम्यगुपपद्यते ।

* व्याख्यानादिति * । यथोद्देशत्वेऽस्य सूत्रस्यासिद्धत्वात् व्यापकजाति निर्देशोपि न तपरनिर्देशादेकशेषनिर्देशाद्वा सिद्धमिति भाष्यमूलकाद्व्याख्यानादिति ।

अतिदेशस्य फलम्मनोरथादिसिद्धिरूप मनोरमायामेव स्फुटमिति । सूत्रस्याधिकारत्वे फलमाह । *अधिकारत्व इत्यादिना* । *गोधुङ्मानिति* । अयम्भाव । सिद्धान्ते हस्य झयुभिन्न येनादौ निरवकाशत्वेन जशत्वापवादत्वाद् घस्ततो जशत्वानुनासिकयोरसिद्धत्वाद्भष्भावेऽनुनासिकस्यासिद्धत्वाज्जश्त्वे ततोऽनुनासिके तेषामसिद्धत्वाद्धत्वाप्राप्त्या गोधुङ्मानित्यस्य सिद्धि । अधिकारत्वाभावे तु निरवकाशत्वेन जश्त्वात्पूर्वं घस्ततोऽन्तरङ्गत्वेनानुनासिकात्परत्वेन [illegible] भष्भावादौ जश्त्वम् । एव सति झष् तत्वविरहाद्भष्भावानापत्तिरिति । ननु प्रागुक्तरीत्या जश्त्वात्पूर्वं घत्वेऽपि तदुत्तरमनुनासिकत्वजश्त्वाभ्या पूर्वं निरवकाशत्वेन येन नाप्राप्ति न्यायेन घा बाधकयोर्वत्वभष्भावयोरेव प्राप्ति । यद्यपि तसाविल्मित्व विषये तडित्वानित्यादौ वत्वस्य व्यारितार्थ्यम् । तथापि प्रत्याहारनिर्देशसामर्थ्याद्धत्वस्य जश्त्वबाधकत्वम् । तयोश्च वर्णमात्रापेक्षत्वेनान्तरङ्गत्वाद्धत्वमेवोचितमिति चेत्तथेनाह । * वस्तुत इति * । उक्ताशयानभिज्ञ शङ्कते । * न चेति *।

क्षय इति वत्वापत्तिर्दोषः । न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तद्प्राप्तिरिति वाच्यम् । विप्रतिषेधे परमित्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः । पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात् । अन्यथा परस्यासिद्धत्वे विप्रतिषेधसूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्यापि कार्यकालपक्षे तेनाकर्षणापत्तेः । अत एव भाष्ये वत्वमेवापादितम् । अधिकारत्वादेव श्चुत्व ष्टुत्व सिद्ध वाच्यमित्यादि चरितार्थम् । एवं च यत्रानुवृत्तिस्तस्यासिद्धत्वम् । पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः । क्वचित्सूत्रान्तरसहितायाः । तत्रायमर्थः । होढ इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः । हस्य ढो भवति इदञ्च शास्त्र पूर्वत्रासिद्धमिति । अत एव न मुने इत्यादिभिस्तन्निषेध उपपद्यते । पूर्वत्रेति सङ्ग्राहकमेव, शास्त्रग्राहिकयैव तु तत्तच्छास्त्र प्रति तस्यासिद्धत्व प्रतिपाद्यते । तेनापवादस्य यं प्रत्यपवादत्व तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्व भवत्येव । असिद्धमिति । सिद्ध निष्पन्न प्रवृत्तम् । सिद्धश्च प्रत्ययाविधावित्यादौ तथा दर्शनात् । तद्भिन्नमसिद्धमनिष्पन्नमप्रवृत्तम् । यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं दृष्ट,तथापीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्त्यप्रवृत्तौ च नियामक इति बोध्यम् । अत्र कार्यासिद्धत्वेऽमू इत्याद्यसिद्धिः । अद अ औ इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेना-

---

परोक्तमङ्गीकृत्यापि समाधत्ते । * विप्रतिषेध इति * । यथोद्देशपक्षे दोषाभावेऽपि कार्यकालपक्षे दोष एवेति चेत्तत्राह । * पूर्वत्रासिद्धे नास्तीति * । अधिकारत्वे सति तत्र तत्र यथा वाक्यार्थस्तन्दर्शयति । * तत्रायमर्थ इति * । तत्र, अधिकारत्वे सति । * अत एवेति * । विधेयभेदे वाक्यभेदस्वीकारादेवेत्यर्थ । इत्यादिभिरित्यादिना न मुटादेश इति वार्तिकसङ्ग्रह । * तन्निषेध * । शास्त्रासिद्धत्वनिषेधः । यदि पदैकवाक्यता स्यात्तदा होढ इति सूत्रस्य पूर्वत्र कर्त्तव्ये सिद्धत्वविशिष्टो ढो भवतीति यथार्थस्तथा अदसोसेरितिसूत्रस्यापि पूर्वत्र कर्तव्येऽसिद्धत्वविशिष्टो मुभावो भवतीति पर्य्यवसितार्थ स्याद् । एवञ्च न मुने इति सूत्रस्यापि नाभावे कर्त्तव्येऽसिद्धत्वविशिष्टो मुभावो न भवतीत्यर्थ स्याद् । तथा चामुनेति रूपासिद्धि स्यादिति भाव । न चैव वाक्यभेदेऽपि कार्य्यासिद्धत्वस्यैव लाभ स्यादिति शङ्क्यम् । पूर्वत्रेतिशब्देन पूर्वशास्त्रस्य पुर स्फूर्तिकतया प्रत्यासत्त्या पूर्वशास्त्रे कर्त्तव्ये एतत्कार्यविधायकशास्त्रमसिद्धमित्यर्थस्य लाभादिति मनोरथादिसिद्धिसम्भवात् । * सङ्ग्राहकमिति * । उपस्थितानां सूत्राणामेकेन शब्देन बोधकमित्यर्थ । * इह, * । व्याकरणे । * शास्त्रेति * । पूर्वत्रे

काराभावेन परस्पराश्रयानापत्तिः । अतिदेशस्यारोपरूपत्वान्निरधिष्ठानारोपा-
सम्भवेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु यत्राप्यन्त-
रङ्गत्वात्त्रैपादिकं प्रवृत्तं तत्रापि तत्तच्छास्त्रे प्रवृत्त्यभावारोपेण तन्निमित्तबुद्धेर-
भाव आदेशबुद्ध्यभावो लक्ष्ये जाततद्बुद्ध्यभावश्च । जायमानकार्ये त्वादेश
एव स्थानिबुद्ध्या प्रवर्त्तते । न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोच-
रयतीति न दोषः । यत्र तु सह प्रसङ्गस्तत्राप्रवृत्तिरेवाभावारोपात् । न च
पूर्वत्र नेत्येव सूत्रमस्त्विति वाच्यम् । पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे न लोपः
सुपीति सूत्रासङ्गतेः । तद्धि नियमार्थम् । त्वद्रीत्या राजन् अश्व इत्यस्या
दशायामस्यापि पूर्वशास्त्रस्याप्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते भुक्तवन्त-
मिति न्यायेनैतदप्रवृत्तौ राजाश्वेति दीर्घसिद्ध्या नियमानुपयोगात् । राज-
भ्यामित्यादावपि दीर्घापत्तेश्च । पूर्वशास्त्रविषयसम्भावनायामित्यर्थे राज-
भ्यामित्यादौ नलोपे सुब्विधिदीर्घविषयसम्भावनया सर्वथा नलोपानापत्ते-
रिति दिक् । बाह्यप्रयत्न इति । काकल्काधस्तात्कलविरसङ्कोचविकास-

---

ति शास्त्रेत्यर्थः । * यत्राप्यन्तरङ्गत्वादिति * । अत्रान्तरङ्गत्वं सपादसप्ताध्यायी-
शास्त्रप्राप्तिकालिकप्राप्तिकत्वमात्रम् । न त्वन्तरङ्गपरिभाषया प्रवृत्तिः । त्रिपा-
द्या सर्वथा तदप्राप्तेर्ग्रन्थकारसम्मतत्वात् । यथा ऊढमाख्यदिति विग्रहे णिज-
न्ताल्लुङि च्लेश्चङि इत्यादिकं द्वित्वे कर्त्तव्येऽसिद्धं भवति । तथा च ऊह्त्शब्द-
स्यैव द्विर्वचनम् । न चैवमपि रजतायां मीलितचक्षुः पटं न हि न पश्यतीति
न्यायेनास्य त्रैपादिकत्वेऽपि ऊह्त्शब्दबुद्ध्या जायमानं द्वित्वं वस्तुगत्या ढकारवि-
शिष्टस्यैव स्यादित्यौजढदित्यस्यासिद्धिरिति वाच्यम् । द्वित्वविधायकशास्त्रदृ-
ष्ट्या यथा ढत्वादीनामसिद्धत्वं भवति । तथा ऊहृदित्येतद्द्वित्वस्याप्यसिद्धतया
ढकारबुद्ध्या ढुत्वस्य प्रवृत्तिसम्भवात् । * यत्र त्विति * । अमू अमी इत्यत्र ।
* पूर्वत्र नेति * । पूर्वत्र कर्त्तव्ये जातं तत्कालप्राप्तिकं च परत्र भवतीत्यथा भवि-
ष्यतीति भावः । अत्र पूर्वशास्त्रप्राप्तावित्यर्थो वा पूर्वशास्त्रविषयत्वसम्भावनाया-
मित्यर्थो वोभयथापि न सम्भवतीत्याह * । पूर्वशास्त्रेत्यादिना * । * एतन्निषे-
धाप्रवृत्तौ * । पूर्वत्रेति निषेधस्याप्रवृत्तावित्यर्थः । ननु जातस्यापि सत्ता तेन
निषिध्यत इत्यत आह । * भुक्तवन्तमितीति * । * एतदप्रवृत्तौ * । पूर्वत्र ने-
त्यस्याप्रवृत्तौ । न चैवमुक्तौ पौनरुक्त्यमिति वाच्यम् । पूर्वत्राप्राप्तिरशास्त्रस्य
ज्ञोद्देश्यतावच्छेदकाभावात्पुनस्तु भुक्तवन्तमिति न्यायहेतुकाप्राप्तिरुक्तेत्याश-
यात् । ननु नियमानुपयोगे तदकरणे लाघवमेवेत्यत आह । * राजभ्यामित्यादा-
वपीति * । द्वितीयमर्थं दूषयति । * पूर्वशास्त्रेति * । * दिगिति * । अत्रासि-
द्धमित्यस्यानिष्पन्नमिति व्याख्यानेन जातस्यासिद्धत्वमेवोपलभ्यत इति न शङ्क्यम् ।

ध्वानोत्पत्तिध्वनिविशेषरूपनादतद्विशेषरूपघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूप-कार्यकरत्वमेषाम् ।

तथाहि ।

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते इति शिक्षायामुक्तम् ॥

आत्मान्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्यैकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति । तदिच्छावन्मनः कायाग्निञ्जाठरमग्निमभिहन्ति । स कायाग्निः । सोदीर्णः । स मारुत उदीर्ण ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः । एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषेण गलविवरविकासादीन्करोति । तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते । गलविवरविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद् बाह्या इति । मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशप्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य वायुप्रेरणरूपकार्यमास्याद्बाह्यदेशमिति तदपि बाह्यमेव । अत एवाऽइउण्सूत्रे भाष्ये ह्रस्वत्वादिजनकयत्नस्यास्य विशेषणेन सवर्णसूत्रेऽग्रहणमित्युक्तम् । यद्यप्येक एव यत्नः सर्वकार्यजनको वर्णनाश-

---

पूर्वक्षणमात्रस्थितिकालिकाभावप्रतियोगीत्यर्थेन सर्वसामञ्जस्यादित्यादिकमनेन सूचितम् । * ध्वनिविशेषरूपनादेति * । एतद्विशेषपदोपादानेनोत्तरत्राभिहिते न पौनरुक्त्यम् । * आत्मेति * । आत्मा अन्तःकरणं बुद्ध्या स्वसमवेतबुद्ध्यात्मकवृत्तिविशेषेणार्थान्समेत्य एतस्यैव परिणामविशेषो मनः तत्कर्म इच्छया स्वीयवृत्तिविशेषेण युक्तं करोति । उभयत्रात्मनः कर्तृत्वमिति समानकर्तृकत्वोपपत्तिः । * संस्काररूपेण स्वगतानिति * । संस्कारस्यापि मनःपरिणामतया परिणामपरिणामिनोरभेदाद्विषयाणां संस्कारविषयत्वे स्वविषयकसंस्कारपरिणामित्वसम्बन्धेन विषयाणामन्तःकरणगतत्वमिति भावः । युङ्क्ते इत्यन्तर्भावितण्यर्थम् । अत एव युक्तं करोतीति विवरणं सङ्गच्छते । * आस्यान्तर्गततत्तत्कार्येति * । स्पर्शादिरूपकार्येत्यर्थः । * बहिर्भूतदेशे इति * । काकल्काधस्ताद्देश इत्यर्थः । ह्रस्वत्वादीनाञ्चानेनैवान्तर्भाव इत्याशयेनाह । * मात्राकालिकत्वादीति * । * स-

कर्षेति परः सन्निकर्ष इति सूत्रे भाष्ये उक्तम् । तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा तथा व्यवहार इति बोध्यम् । उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेऽपि उदात्तादिशब्दैर्विना बोधितानां तेषामनुदात्त इत्यनेनाविवक्षाबोधनात् सवर्णसंज्ञानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम् । इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम् । शर इति । शषसाः । अनुप्रदान बाह्यप्रयत्नः । विवृण्वत इति । तदभिव्यक्त्युत्तरजायमाने कण्ठबिलविकासे तेषाङ्कर्तृत्वविवक्षा बोध्या । विवार एषां प्रयत्न इति भावः । अन्ये त्विति । वर्गतृतीयचतुर्थपञ्चमास्तद्यमा हकारानुस्वारौ यरलवा इत्यर्थः । नादभागिनस्तत्प्रयत्नकाः । यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामुक्तिः । अल्पासवोऽल्पप्राणाः । यत एतदुच्चारणोत्तर प्राणानामल्पत्वमिव भवति । वर्गेष्विति । विद्यमानानामिति शेषः । चतुर्णामिति । निर्धारणे षष्ठी । अन्यतमादिति शेषः । पूर्वसदृश इति । सादृश्यं यत्नकृतम् । अत एवायोगवाहेषु यमानां गणनं भाष्ये चत्वारश्च यमाः स्मृता इति पाणिनिशिक्षा च सङ्गच्छते । अयञ्च वेदे एव तदाह । प्रातिशाख्य इति । अन्येषामिति । अचामुक्तान्यहलाञ्चेत्यर्थः । यरलवाश्चेति । चेनाचामपि ग्रहणम् । सुपां सुलुगिति सूत्रे इकारस्यान्तर्यतो दकार इति भाष्यात् । घोषसंवारनादाल्पप्राणत्वमचाम् । अन्यथा तदौ पर्यायेण स्याताम् । अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम् । अचां घोषत्वं परःसन्निकर्ष इति सूत्रे भाष्येऽपि स्पष्टम् । अन्ये इति । द्वितीयचतुर्थौ तत्प्रमौ शषसहा अयो-

---

र्थस्यार्पंजनक इति * । स्वोत्पादितवर्णनिष्ठहृस्वत्वादिजनक इत्यर्थः । * वर्णनाशक इति * । नच यत्नस्य वर्णनाशकत्वे मानाभाव इति वाच्यम् । येनैव यत्नेन यो वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन्वर्णे स यत्नमुपादाय द्वितीयं प्रवर्तत इति परः सन्निकर्ष इति सूत्रभाष्यस्यैव मानत्वात् । न्यूनत्वं मूलस्य परिहरति । *इदमिति* । एतञ्चात्र प्रकरणे मूलोक्तं न नियमपरमिति भावः । पूर्वसदृश इति मूले पूर्वेणैव सदृश इत्यर्थः । किञ्च पूर्वसदृश एव न तु पूर्व इत्यप्यर्थः । तत्रो भयत्र प्रमाणमाह । * अत एवेति * । एवञ्च वर्णान्तरत्वं स्पष्टमेवेति भावः । * इति भाष्यादिति * । तत्र ह्येवमुक्तम्, छुवि किमुदाहरणम् । आर्द्रचर्मन् लो हितचर्मन् नैतदस्ति । पूर्वसवर्णमाप्येतित्सद्धम्, न सिद्ध्यति, यद्यत्र पूर्वसवर्ण

गवाहाश्चेत्यर्थः । जिह्वामूलीययमादीनां स्थानप्रयत्नकथनं तु स्वरूपनिर्णयाय न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति बोध्यम् । अनुपयुक्ता इति । तुल्यास्यसूत्रे प्रशब्दग्रहणात् । उपयुक्तत्वे हि शछयोरपि सावर्ण्यं स्यादिति भावः । आन्तरतम्यपरीक्षा च घोषवत इत्यादिना तत्र स्फुटीभविष्यति । स्पर्शाः तत्पदव्यवहार्याः । अन्तस्थाशब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः । ऊष्माण इति । ऊष्मा वायुस्तत्प्रधाना इत्यर्थः । एव सोष्माण इत्यस्य वायुना सह वर्त्तन्त इत्यर्थ इति प्रातिशाख्यभाष्ये स्पष्टम् । यद्यपि वर्गद्वितीयचतुर्थयोरपि स्थानेऽन्तरतममत्र भाष्यादूष्मत्वं तथापि विवृतमूष्मणामित्यत्रैत एव गृह्यन्ते । अन्यथा कण्ठादीनां सावर्ण्यानापत्तौ नाऽऽज्झलावित्यादिनिर्देशासङ्गतिरिति भावः । अचः स्वरा इति । उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः । तद्धर्मत्वादुदात्तादयोऽपि स्वरा इत्युच्यन्ते । कपाभ्यामिति खफयोरप्युपलक्षणम्, अं अ इत्युपलक्षणमिकारादेरपि तदाहाचः पराविति । ऋऌवर्णयोरिति । आ च ऌवर्णश्चेति विग्रहः । ऋत्यक इति प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे ऌकारपाठः । अन्यथा तस्यासत्त्वशङ्कयास्य वचनस्यैवाशक्यत्वं स्यात् । ध्वनित-

---

स्यादान्तर्यतो दकार स्यादिति । * जिह्वामूलीययमादीनामिति * । आदिना नुस्वारविसर्गपरिग्रह । आन्तरतम्यपरीक्षादावीति । आदिना सावर्ण्यकार्यपरिग्रह । * शछयोरपीति * । तत्त्वे हि शार्ङ्गिदिछन्धीत्यत्रानुस्वारपक्षे झरो झरीति लोपापत्ति । अन्तस्थाशब्द आदन्त । 'हकार पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतमिति' शिक्षावचनमत्र प्रमाणम् । पदश्चाय विजन्त । यद्वा बाहुलकादातश्चोपसर्ग इति कर्त्तयाडि कृते तत्रष्टाप्यय साधु । अत एव सामान्येनोक्तम् । * आदन्त इति * । न त्वायन्त इति । * ऊष्मा वायुरिति * । एवञ्चोष्माण इत्यत्र विनापीत्यनेनोत्तरपदलोपो बोध्य । एव हि प्रातिशाख्येनाविरोधसूचनायाह । * एव सोष्माण इति । भाष्यादूष्मत्वमिति * । तत्र ह्येवमुक्तम् । 'वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणाविति । *कण्ठादीनामिति*। यावदाभ्यन्तरप्रयत्नतौल्याभावादिति भाव । * तद्धर्मत्वादिति * । तात्स्थ्यात्साधर्म्यमिति भाव । ननु ऋऌवर्णयो परस्परसावर्ण्ये ईकारादीनामिकारादिनेव ऋकारेण ऌकारग्रहणसिद्धौ ऌकारोपदेशो व्यर्थ इत्यत आह । * एतदर्थमेवेति * । ऋकारऌकारयो सवर्णसंज्ञाबोधनार्थमेवेत्यर्थ । * अन्यथा * । ऌका-

श्छेदमेओङिति सूत्रे शेषे भाष्ये । तत्र हि सँय्यँन्तेत्यादौ हलोऽनन्तरा इति सूत्रे प्रत्याहारघटकेष्वपि ग्रहणकशास्त्रप्रवृत्तया मात्राकालस्य यद्वयादेरणुदित्सूत्रेण यादिग्रहणेन ग्रहणाद् द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोतीत्याशङ्क्य मात्रिकव्यञ्जनानुपदेशादनुपदिष्टस्याग्रहणात् । असम्प्रतिपत्तेरशक्यत्वाच्च अणुदित्सूत्रेण तद्ग्रहणमित्युक्तम् । न च वत्साग्निरेत्यादावनृत इति निषेधात् प्लुतानापत्तिः । ऋॡवर्णयोः पृथगनुबन्धत्वकरणेन क्वचित्परस्पराग्राहकत्वकल्पनेनादोषात् । अकारहकारयोरिति । एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति मते एकारशकारादीनामप्युपलक्षणमिदम् । एतेन नाज्झलावित्येवसूत्रयितुमुचितमित्यपास्तम् । हशि चेत्येव सिद्धेऽतोरोरित्याकारे व्यावृत्त्यर्थम् ।

सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं दर्शयति । आकारसहित इति । अत एव वेलास्विति निर्देश उपपद्यते । समाहारद्वन्द्वे तु टच्प्रसङ्गोऽज्झलिति समाहारद्वन्द्वं कृत्वा आपदेन द्वन्द्वे तु अज्भिराकारस्य सावर्ण्यं न स्यादिति भावः । अत एव भाष्ये प्रयत्नभेदेनैव सावर्ण्याभावः साधितः ।

---

शोपदेशाभावे । * ध्वनितश्छेदमेओङितीति * । वर्णसमाम्नायानुपदिष्टस्याग्रहणकमात्रे ध्वनितमित्यर्थः । * द्विव्यञ्जनाश्रय इति * । संयोगसंज्ञारूप । वर्णैकदेशाना वर्णग्रहणेन ग्रहणाभाव इति भावः । अत्र यद्यप्येवमाकारादिष्वप्यसम्प्रत्ययाशङ्का भवति, तथापि पचिमर्थीत्याद्यभिधानादिना सा यथापनीयते तथा लृकारविषयेऽपि गमॢधातौ लृकारोपदेशेन लृदित इत्यनुवादाच्च सा निवर्त्तनीयेति बोध्यम् । अत एव शङ्कापदोपादानम् । न्यूनतामङ्गीयाह । *एकारस्येति* । *इति मत इति * । तालव्यावेकारश्चवर्गौ विवृतैकारी यकारः शकारः शेषः ओष्ठ्योपपाद्य इति बह्वृचप्रातिशाख्यं येषां तेषां मत इत्यर्थः । एकारादीनां शादिभिः सावर्ण्ये हरे शेते, पथावद्देशाक्त्या, गोयानम् भानो यातीत्यादावेचोऽयवायाव इत्यस्यापत्तिः । ननु इकाराकारादिवर्णयोः परस्परं सवर्णसंज्ञायां हशि चेत्येव सिद्धेऽतोरोरिति व्यर्थमित्यनेनैव ज्ञापकेनाज्झलोः सावर्ण्याभावे सिद्धे नाज्झलाविति व्यर्थमत आह । * हशि चेति * ।

* अत एव * । आकारप्रश्लेषादेव । समासान्तरशङ्कां वारयति । * अज्झलिति समाहारद्वन्द्वं कृत्वेति * । *अज्भिराकारस्येति * । अनेष्टापत्तिं वारयति । *अत एवेति * । अज्झलोरेव सावर्ण्याभावसाधनादेव । यद्यकाराकारयोरपि सावर्ण्याभावः सूत्रकाराभिप्रेतः स्यात् तदाज्झलोः प्रयत्नभेदेनैव तयोरपि

एतेषु परेष्विति । इदमुपलक्षणम् । एतेषु विधीयमानस्येत्यपि बोद्धव्यम् । तेन इकारादीनामकारादिषु परतो दीर्घादिसङ्ग्रहः । अच्त्वं स्यादिति । अच्पदबोध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्तिरिति मते, व्यक्तिपक्षे च बोद्धव्यम् ।

अणुदि ॥ अणमुद्दिश्य सवर्णबोधकतात्र विधीयते । सवर्णस्येत्यस्य बोधक इति शेषः । आदेशादौ सवर्णग्रहणवारणायाह । प्रतीयते इति । परे तु प्रत्ययग्रहणमेकदेशानुमत्या भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषां ज्ञापयतीति युक्तम् । प्रत्ययपदस्य तदर्थत्वन्तु न युक्तं । वार्त्तिककृता टित्किन्मित्सूपसंख्यानोक्तेः । भाष्यकृता चाप्रत्ययग्रहणमेतत्परिभाषाज्ञापकमि-

---

सावर्ण्याभाव प्रकारान्तरेण साधित स्यादिति भाव । *अच्त्व स्यादिति* । अन्वयच्छब्दस्य सञ्ज्ञाशब्दत्वेनात्र शब्दरूपस्यैव प्रवृत्तिनिमित्तत्वेन भावप्रत्ययान्तेऽनन्वयापत्तिरत आह । * अच्पदबोध्यत्वमिति * । एवञ्चाच्त्वमच्पद इकारादिसम्बन्धी स्यादित्यभिप्रेतमिति भाव । ननु उच्चारित शब्द प्रत्यायको न त्वनुच्चारित इतीकारस्याच्पदबोध्यत्वेऽपि तस्यानुच्चारितत्वात्प्रत्यायकता नोपपद्यते इति इकारादीनामित्यादिपदानुपपत्तिरत आह । *इद प्रत्याहारघटकेत्यादि* । *मते* । अज्झलो प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वादिति वदतो वार्त्तिककारस्य मते । जातिपक्षे ग्रहणकशास्त्रस्यैवाभावादाह । *व्यक्तिपक्षे चेति* ।

* अणुदित्सवर्ण * । कुक्कुटादौ तु नैतत्सूत्रप्रवृत्तिरुकारस्योच्चारणमात्रफलकत्वात् । अस्य सूत्रस्य मूलोक्तसञ्ज्ञासञ्ज्ञिभावबोधकत्व समानाधिकरणपदोपादानाभावादयुक्तमत आह । * अणमुद्दिश्य सवर्णबोधकतेति * । स्वसिद्धान्तमाह । * परे त्विति * । प्रत्ययस्यापि भाव्यमानतया भाव्यमानसामान्यस्य प्राचीनसम्मतपरिभाषाविषयत्वसिद्धौ प्रत्ययस्यापि तत्र सिद्धमेव स्थालीपुलाकन्यायेनेतिभाव । *तदर्थत्वम्* यौगिकार्थपरत्वम् । *वार्त्तिककृतेति* । तदुक्तम्भाष्ये । अप्रत्यय इति किमर्थम्, सनाशंसभिक्ष उ । प्रसाम्प्रतिके । अत्यल्पमिदमुच्यते, अप्रत्ययादेशटित्किन्मित इति वक्तव्यमिति । यत्त्वत्राप्रत्ययग्रहणमित्यस्य व्यर्थ सदिति दोष । प्रत्ययसञ्ज्ञाया अन्वर्थत्वात्सनाशंसेत्युकारोऽप्यदीर्घस्याप्रत्यायकत्वेन विधातुमशक्यत्वादिति । तन्न । उपक्रमस्थभाष्येऽप्रत्ययपदस्य यौगिकार्थपरत्व स्याभिप्रेतम् । अन्यथा वार्त्तिकोत्थानस्यैवासम्भवापत्ते । एवञ्चोकाराकारप्रत्यययोर्ग्राहकत्व व्यावृत्त्यर्थमप्रत्ययग्रहणचारितार्थ्येन दोषपूरणासङ्गते । किञ्चात्र सूत्रे अप्रत्ययग्रहणाभावेऽपि सामान्यस्य सवर्णबोधकत्वमुद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयबोधकत्व व्युत्पत्तिसिद्धमित्युकाराकारयोरपि दीर्घग्राहकत्वे स्यादेव ।

त्युक्तेः । ज्यादादीयस इति सूत्रे भाष्ये ध्वनितमिदम् । तत्र हि किमर्थमा-दित्युच्यते । ज्याद इत्येवोच्यतां, का रूपासिद्धिः । आन्तर्यतो दीर्घस्य दीर्घो भविष्यति, एवन्तर्हीदमनेन ज्ञापयति भवत्येषा परिभाषा भाव्यमानेने-त्यादि । त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निष्फलत्वापत्तिः। जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयम् । व्यक्तिपक्षे गुणा-भेदकत्वप्राप्तश्च वारणीयम् । तेन घटवदित्यादौ नानुनासिको वकारः । एतेनाणुदिदित्येव सिद्धेऽण्ग्रहणेनाण्सु गुणभेदकत्वं ज्ञाप्यते इति परास्त-मित्याहुः । ननु चोरित्यादावनुवादे कथमुदित्त्वमिति चेन्न । व्याकरणान्तरे एषामुदित्संज्ञकत्वेनादोषात् । उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वे ऽस्यापि शास्त्रत्वेनेत्त्वप्रवृत्तेः सुलभत्वाच्च । चो भिन्नक्रम इत्याह उदिच्चेति । यद्यपि समुदायसवर्णिनो ऽप्रसिद्धास्तथापि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोद्ध्याः । ह्रस्वाकाराद्योरपि कालपुरुषाद्युपाधिभेदेन स्थानेषु

---

अ-वर्णसंज्ञया तु न स्यादिति । प्रत्ययस्वार्थिकानां यथा कनादीनां तत्र प्रत्यय-पदोपस्थितिसामर्थ्याद्यथाभावेऽपि प्रत्ययसंज्ञा तथाण्त्वरूपोद्देश्यतावच्छेदका-क्रान्तयोरकाराकारयोर्ग्राहकसूत्रोपस्थितिसामर्थ्यादन्वर्थत्वाभावेऽपि दीर्घयो प्र-त्ययसंज्ञा स्यादेवेत्याशयात् । उद्देश्यतावच्छेदकसङ्कोचे [illegible] न मानमिति भावः । *ज्ञापकमिति* । ननु सूत्राक्षरमर्यादया भाष्यरूढतायमर्थः साधितः । प्रत्ययशब्द-स्य प्रत्ययसंज्ञकपरत्वे भाष्यान्तरमपि साधकमाह । * ज्यादादीयस इतीति * । भाव्यमानेनेति परिभाषाया इहाश्रयणे फलान्तरमप्याह । * जातिपक्ष इति * । भाव्यमानेनेति परिभाषाया अस्वीकारे प्रत्ययपदस्य यौगिकत्वेऽपि यञाणुदित्सूत्रे-ण ग्रहणप्रसङ्गस्तत्रैव निषेधप्रसङ्गः स्यात् तु जातिपक्षे, एवञ्च व्यापकत्वात्परिभाषा-स्वीकार एवावश्यक इति भावः । * व्यक्तिपक्षे इति * । अस्मिन्पक्षेऽण्ग्रहण-सत्त्वेऽपि यौगिकार्थाश्रयणेऽपि सूत्रप्राप्तस्यैव सवर्णग्रहणस्याप्रत्यय इत्यनेन वार-णं कर्तुं शक्यत्वे तु गुणाभेदकत्वात्प्राप्तस्येति भावः । * वकार इति * । वकार-स्यानुनासिकत्वान्मादुपधाया इत्यनेनान्तरतम्यादनुनासिकः स्यादिति भावः । कौस्तुभोक्तिं खण्डयति । * एतेनेति * । भाव्यमानेनेति परिभाषाया व्यापक-त्वस्वीकारेणेत्यर्थः । विधेयविषये गुणाभेदकत्वप्रयुक्तदोषस्यानया परिभाषयैव व्यावृत्तत्वेनोद्देश्यविषये भेदकत्वस्य प्रयोजनाभावेनाण्ग्रहणस्य स्वविषये चारि-तार्थ्याभावेन ज्ञापनासम्भवादिति भावः । * अनुवादे कथमिति * । विधेये तूप-देशत्वादुपदेशे इत्संज्ञया सिद्धमिति भावः । * अस्यापि * । चोरित्याद्यनुवा-दविषयस्यापि । न चोच्चारणाद्यानामित्संज्ञा विना निवृत्त्यभावेन कुङ्गादौ सय-

भेदमारोप्य तुल्यस्थानत्वं सूपपादम् । अत्रेति । ग्राहकसूत्र एवेत्यर्थः । व्याख्यानादिति भावः । उपसर्गादृतीत्यादि तपरकरणादिति तु न युक्तम् । लृकारग्रहणेन चारितार्थ्यात् । एवमिणपि परेणैव । अचि श्नुधात्विति सूत्रे इण इत्येव सिद्धे य्वोरिति गुरुनिर्देशाद्व्याख्यानाच्चेति लण्सूत्रे भाष्ये स्पष्टम् । नन्वेवमस्य च्वावित्यादौ सवर्णग्रहणं न प्राप्नोति । अण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णोपस्थितेषु उच्चारिताभेदेन गृहीतेषु सूत्रस्य चारितार्थ्येन व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेन प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेन्न । जातिपक्षाश्रयणेनादोषात् । अत एवानेकतकारादीनां झल्त्वादिसिद्धिः । सूत्रेऽण्ग्रहणं च न कार्यम् । ऋॢवर्णयोः सावर्ण्यमित्यनेन समानजातित्वस्यैवातिदेशेनोपसर्गादृतीत्यादौ न दोषः । एतद्व्यतिरिक्तसवर्णे समानजातित्वसत्त्वात्, पृथगनुस्वारकरणाच्च न ऋदिल्लृदिरप्रयुक्तकार्यसंकरः । अत्र पक्षे अइउण्सूत्रशेषोक्तभाष्यरीत्या तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववदप्रत्यय इत्यस्य योगविभागेन तत्प्राप्तसवर्णग्रहणनिषेधकत्वात् त्यदादीनाम इत्यादौ विधेये न दोषः । एवं गुणाभेदकत्वमप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य बोध्यम् । अत एव

---

र्णग्राहकत्व दुर्वारमिति वाच्यम् । उदित्पदेऽवधारणगर्भबहुव्रीह्याश्रयणेनादोषात् । * व्याख्यानादिति * । उक्तं दीति सू त्रेतपरकरणमूलकादिति भावः । एतत्स्वरूपमन्यत्रोक्तम् । * लृकारग्रहणेनेति * । इदं तपरसूत्रस्य विधायकत्वमते । यत्तु सूत्रकारमते ऋकारलृकारयोस्सावर्ण्याभावेन वार्तिककारमतेऽण्ग्रहणस्यैवाभावेन तत्र ज्ञापकानुपयोगाच्चिन्त्यमेवदिति । तन्न । लृकारग्रहणेनेत्यस्य सवर्णसंज्ञाज्ञापनद्वारेत्याद्यिपूरणेन ऋकारलृकारयोः सवर्णविधिरिति वार्तिकोक्तार्थस्यापि क्रोडीकारसम्भवात् । एवञ्च तज्ज्ञातिकथापूर्वमिति भावः । * इणपि परेणैवेति * । अस्य सर्वत्रेति शेषः । * व्याख्यानादिति * । अत्र ज्ञापकातिरिक्तव्याख्यानमुपदेशपरम्परारूपं बोध्यम् । व्यक्तिपक्षाभिप्रायेण शङ्कते । * नन्विति * । * एतद्व्यतिरिक्तेति * । लृकारव्यतिरिक्ते दीर्घऋकारे । * अत्र पक्षे * । जातिपक्षे । * योगविभागेनेति * । अत्र पक्षे सूत्रे अण्ग्रहणाभावेनोदिद्घटितवाक्ये अप्रत्यय इत्यस्य प्रयोजनाभावेन योगविभाग इति भावः । * तत्प्राप्तेति * । जातिपक्षप्राप्तेत्यर्थः । पूर्वोक्तमपि दार्ढ्याय पुनराह । * गुणाभेदकत्वेति * । ननु येयोजितिसूत्राभावे पचोऽयजायाव इत्यादौ यथासंख्यानुपपत्तिरत आह ।

न हाविति शिक्षोक्तेर्यण इति नोक्तम् । तेन सय्यँन्तेत्यादौ परसवर्णनिष्पन्नानुनासिकयवलानामनचि चेति द्वित्वं सिध्यति । हलो यमामिति लोपस्तु वैकल्पिकः । अत्रेदं बोध्यम् । व्यक्तिः पदार्थो गुणा भेदका इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति ।

अतो भिस इत्यादौ तपरकरणात्ताद्दिवहोरिति सूत्रस्थवर्णग्रहणाद्व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह । तः परइत्यादिना । वर्णग्रहणे तु तत्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तेः । आद्योदाहरणमतो भिस इति, अन्त्योदाहरणं वृद्धिरादैजिति । यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्धस्तथापि तपरकरणाद् भाष्यप्रामाण्याच्च तात्परशब्दबोध्यो वर्णः स्वसमकालग्राहक इत्यर्थेनादोषः । इदं च विध्यर्थमेनाण्ग्रहणानुवृत्तेः । गुणानां भेदकतयानणि विधित्वेऽपि वृद्धिरादैजित्यादावाकारांशे सावकाशेनानेनातो भिस इत्यादौ परत्वेनाणुदित्सूत्रबाधः । सत्याकृतव्यवहारस्य परस्परपरिहारेणैव

---

इति * । * नहाविति * । अत्र च हयवरट्सूत्रस्थ रेफस्यानुनासिकपरसवर्णोच्चिरन्तनप्रतिषेधो वक्तव्य इति प्रघट्टकस्थ भाष्यम्मानम् । * अनुनासिकयवलानामिति * । वा पदान्तस्येति सूत्रेण सवर्णपदेनैव विधानं न विशिष्याणुबोधकशब्देनेति भाष्यमानेनेति निषेधो न शक्य । *हलो यमामितिलोप इति* । अस्य वैकल्पिकत्वे इदमेवाण्ग्रहणम्मानमिति भावः । * अभिमानेनेति * । अस्य भाष्यसिद्धान्तासम्मतत्वादिति भावः ।

* बहुव्रीहिपञ्चमीतत्पुरुषाविति * । इदं पञ्चमीभयेनेति सूत्रे पञ्चमीतियोगविभागेन तत्पुरुषसञ्ज्ञाविधायकमितिमतेन । वस्तुतस्तु तत्पुरुषपदमाचारकिबन्तम् । तेन सुप्सुपेति समाससङ्ग्रह इति । * वर्णग्रहणे त्विति * । यथा ढ्रहिवहोरोदवर्णस्येत्यादौ । तेन उदवोढामित्यादौ वकाराकारस्य गुरुच्युत्तमप्योत्वसिद्धि । * सञ्ज्ञेति * । ऐजिति यथा । * तपरकरणादिति * । न चाय मात्रार्थो गुणभेदकत्वेनैव सङ्ग्रहसम्भवात् । नु तपरकरणस्यासन्देहार्थतया पूर्वोक्तत्व सम्भवत्येवेत्यत आह । * भाष्यप्रामाण्यादिति * । प्लोङ्येओजिति-सूत्रस्थभाष्यप्रामाण्यादित्यर्थः । तत्र हि खट्वेन्द्र खट्वैल्केत्यादौ त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रादेशाः प्राप्नुवन्तीत्याशङ्क्य तपरे गुणवृद्धी इत्यादिना समाहितम् । * इदञ्चेति * । तपरसूत्रञ्चेत्यर्थः । इदं चानिश्चकारस्तम् । विधिपक्षेऽतोभिसऐसित्यादावष्टादशानां ग्रहणं वारयति । * गुणानां भेदकत्वेत्यादि * । परत्वं विरोधसत्त्वे बलवत्त्वप्रयोजकमतोऽविरोधमुपपादयति । * सत्याकृतेति * । नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभत इति भाष्यकारोक्तेः । *अत्र

न ह्वाविति शिक्षोक्तेयेण इति नोक्तम् । तेन सय्यँन्तेत्यादौ परसवर्णनिष्पन्नानुनासिकयवलानामनचि चेति द्वित्व सिद्धमिति । हलो यमामिति लोपस्तु वैकल्पिकः । अत्रेद बोद्धव्यम् । व्यक्तिः पदार्थो गुणा भेदका इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति ।

अतो भिस इत्यादौ तपरकरणात्ताद्दिग्होरिति सूत्रस्थवर्णग्रहणाच्च व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह । तः परइत्यादिना । वर्णग्रहणे तु तत्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्रामरचिः । आद्योदाहरणमतो भिस इति, अन्त्योदाहरण वृद्धिरादैजिति । यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्धस्तथापि तपरकरणाद् भाष्यप्रामाण्याच्च तात्परशब्दबोध्यो वर्णः स्वसमकालग्राहक इत्यर्थेनादोषः । इद च सिद्धर्थमेवाण्ग्रहणाननुवृत्तेः । गुणाना भेदकत्वानाणि विधित्वेऽपि वृद्धिरादैजित्यादावाकाराशे सावकाशेनानेनातो भिस इत्यादौ परत्वेनाणुदित्सूत्रबाधः । सत्याकृतव्यवहारस्य परस्परपरिहारेण

इति * । * ह्वाविति * । अत्र च हयवरट्सूत्रस्थ रेफस्यानुनासिकपरत्वघटितवैयर्थ्यनप्रतिपत्तौ वक्तव्य इति प्रघट्टकस्थ भाष्यस्वारस्यम् । * अनुनासिकयवलाना मिति * । या पदान्तस्येति सूत्रेण सवर्णपदेनैव विधान न विशिष्याण्बोधकशब्देनेति भाव्यमानेनेति निषेधो न शङ्क्य । *हलो यमामितिलोप इति* । अस्य वैकल्पिकत्वे इदमेवाण्ग्रहणमानमिति भावः । * अभिमानेनेति * । अस्य भाष्यसिद्धान्तासम्मतत्वादिति भाव ।

* बहुव्रीहिपञ्चमीतत्पुरुषाविति * । इद पञ्चमीमयेनेति सूत्रे पञ्चमीतियोगविभागेन तत्पुरुषसमासविधायकमितिमतेन । वस्तुतस्तु तत्पुरुषपदमाचारक्विबन्तम् । तेन सुप्सुपेति समाससङ्ग्रह इति । * वर्णग्रहणे त्विति * । यथा सहिवहोरोदवर्णस्येत्यादौ । तेन उदवोढामित्यादौ वकाराकारस्य वृद्ध्युपरम प्योरत्वसिद्धि । * सञ्ज्ञेति * । ऐजिति यथा । * तपरकरणादिति * । न चाय माकारार्थो गुणाभेदकत्वेनैव सङ्ग्रहसम्भवात् । ननु तपरकरणस्यासन्देहार्थतया पूर्वार्थत्व सम्भवत्येवेत्यत आह । * भाष्यप्रामाण्यादिति * । एओङ्ऐऔजिति सूत्रस्थभाष्यप्रामाण्यादित्यर्थः । तत्र हि खट्वेन्द्र खट्वैलकेत्यादौ त्रिमात्रचतुर्मात्राणा स्थानिना त्रिमात्रचतुर्मात्रादेशा आप्नुवन्तीत्याशङ्क्य तपरे गुणवृद्धी इत्यादिना समाहितम् । * इदञ्चेति * । तपरसूत्रञ्चेत्यर्थः । इद चातिरिक्तारम्भम् । विधिपक्षेऽतोभिसऐसित्यादावष्टादशाना ग्रहण वारयति । * गुणाना भेदकत्वेत्यादि * । परत्व विरोधेसत्येव यत्नस्य प्रयोजकमतोऽविरोधमुपपादयति । * सत्याकृतेनेति* । नहि त्रिपुत्रोद्विपुत्रव्यपदेश लभत इतिभाष्यकारोक्ते । *अत्र

दृष्टतयेह विरोधस्य सत्त्वात् । गुणानामभेदकत्वे ऽनवकाशत्वाद्बाध इति बोध्यम् । अत्रावद्धत्वधिमतोः साजात्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टा- द्विभक्त्युत्पत्तिः सौत्रत्वाद्बोध्या । तत्कालस्येतरस्य तदुच्चारणकालसमका- लस्येत्यर्थस्तदाह । समकालस्यैवेति । एवकारो न्यायसिद्धनाप्यवाधकभाव- स्यानुवादक इति भावः । जातिपक्षे तु नियमार्थमेव सवर्णग्रहणानुवृत्तेः । एवं गुणानामभेदकत्वमिति वृद्धिरादैजिति सूत्रभाष्यसम्मतसिद्धान्तपक्षेऽपि नि- यमार्थमेव । इदमाद्गुण इत्यादौ विभक्तितकारे न मत्वेन । उपसर्गादृतीति तपरकरणात् । ऋदोरबित्यादौ दकार एवेति न दोषः । स च पञ्चमीसमा- साभावे तकार इवोच्चारणार्थो मुखसुखार्थो वा । तपरसूत्रे दकारप्रश्लेषपक्षे

---

वकाराभावादिति * । अत्रापि वृद्धिरादैजित्यादौ यत्नेन भाष्ये तद्गुणाभेदकत्वेनैव साधितमिति तपरत्वमतो भिसऐसित्यर्थं, त... नकारादागिति भाव । ननु तद्- गुणसंविज्ञानबहुव्रीहिणा सजातीयत्वाने विधास्यति, तत्समकालवर्णस्याप्रसिद्ध इत्यत आह । * अभावध्यविधिमतोरिति * । यथा च ... तद्गुणसंविज्ञानबहु- व्रीहिणा वर्णमात्रस्यैव सजातीयत्वं बोध्यते । तत्समकालस्य प्रसिद्ध एवेति भाव । एवं सति विशिष्टाद्भत इत्यादौ विभक्त्युत्पत्ति कथमत आह । * सौत्रत्वादिति * । भाष्यकारमतमाह । * जातिपक्ष इति * । * सवर्णग्रहणानुवृत्तेरिति * । तपर सवर्णस्य चेद्ग्राहकस्तदा समकालस्यैव नान्यस्येति नियम पर्यवसन्न । एव वि- धिनियम सवर्णग्रहणानुवृत्तिमन्तरा न सम्भवतीत्यत्र पक्षे सवर्णग्रहणानुवृत्तेरि- त्युक्तमिति भाव । व्यक्तिपक्षेऽप्याह । * एव गुणानामिति * । ननु तपरत्वाद् आद्गोरयितिसूत्रेणाप् यथ स्तव इत्यादावेव स्यात् ... पय इत्यादावित्यत आह । * ऋदोरबिति * । * पञ्चमीसमासाभाव इति * । नेदं पञ्चमीसमास- स्याकर्त्तव्यत्वाभिप्रायेण । किन्त्वादौ यदा बहुव्रीहिसमासो ददा... तदा तकारो मुखसुखार्थ एवेतिभाव । * तपरसूत्रे दकारप्रश्लेषपक्षे त्विति * । अय भाव । किरति गिरतीत्यादौ स्वरितत्ववारणाय तिति प्रत्ययग्रहण कर्त्तव्यमित्युक्तम् । ततो ऋत इत्यत्र नैव तकार किन्तर्हि दकार, यदि तकारो दीर्घस्य ऋकारस्य दीर्घ प्राप्नोतीति शङ्कामभाव्यमानत्वेन परिहृत्य यदि भाव्यमानो न ग्राहकस्तदा ऽदसोसेरित्यादौ दोष इत्याशङ्क्य भाव्यमानोऽप्युकार सवर्णान् गृह्णाति । यद्वा दिव उदिति तपरकरणं करोति इत्युक्तम् । ततो दिव उदित्यत्र वकार- स्यार्द्धमात्रिकस्य तावन्मात्रिक एवोकारो भविष्यतीत्याशङ्क्य द्युभ्यामित्यादौ परत्वात्...ग्रहणानुवृत्तिपक्षे ऊठि कृतेऽपि द्विमात्रस्योकारस्य पुन प्रसङ्ग-

तु धकारादिस्थानिको दकारो बोद्धयः ।

वृद्धिरा॰॥ वृद्धिः आत् ऐजिति पदत्रयमिति न समासान्तादिप्रवृत्तिशङ्का। तपरकरणमसन्देहार्थतया पूर्वार्थम् । प्रकृतसूत्रे भाष्ये ऽत्र शास्त्रे गुणानामभेदकत्वज्ञापकादाश्रित्य सवर्णग्रहणार्थत्वाभावस्योक्तत्वात्। कृष्णौत्कण्ठ्य, गङ्गौघ इत्यादौ त्रिमात्रव्यावृत्तये परार्थमपि। वृद्धिशब्दो ऽत्र पदपरो ऽर्थपरत्वासम्भवात् । आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थः । पदपदार्थयोस्तादात्म्यस्याङ्गीकारात् । "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः। वृद्धिशब्दस्य सञ्ज्ञा-

---

विज्ञानात् मात्रिकाकारो यथास्यादित्येवमर्थन्तपरत्वमेव भाव्यमानोकारस्य सवर्णग्राहकत्वे ज्ञापकमुक्तम् । एवञ्च प्रत्ययग्रहणाभावे स्वरितत्व घुभ्यामित्यादौ प्राप्नोतीति दकारस्तपरसूत्रे प्रश्लिष्यत इति । चर्त्वस्यासिद्धत्व तु न भयति सौत्रत्वात् । अथ दकारप्रश्लेषपक्षे दिवति तुनाऽरुचि सूचिता । सा च घुभ्यामित्यादौ सुसनधर्मिणो वकारस्यान्तरतमेऽनुदात्त उकारे कृते दकारेकारस्योदात्तस्य यणि उदात्तस्वरितयोरिति सूत्रेणोकारस्य स्वरितत्व प्राप्नोतीत्युकारस्योदात्तत्वन्निपातनीयम् । एवञ्च तेनैव निपातनेन तित् स्वरितमित्यस्यापि बाधसिद्धौ दिवउदस्तान्तत्वेऽपि न क्षतिरिति । तदेतद्वक्ष्यति अयमुकारोऽन्तोदात्तो निपात्यते, तेन द्युभिरक्तुभिरित्यत्रान्तोदात्तत्व पठ्यमान न विरुध्यत इति ।

- *वृद्धिरादैच्* । *इदम्पदत्रयमिति* । वृद्धि आत् ऐजिति भाष्ये पदविभागप्रदर्शनात् । वृद्धिशब्दोऽत्र पक्षे च वृत्त्योद्देश्याभ्यामन्वेति । *असन्देहार्थतयेति* । एतदाकारार्थत्वमस्य नेति ध्वनितम् । तदेतदुपपादयति । * प्रकृतसूत्रइति * । *परार्थमपीति* । तात्पर इति पञ्चमीसमासाश्रयणात् । भेदाभेदरूपतादात्म्यस्य स्वीकारे यादृशो वाक्यार्थबोधोऽन्यत्र प्रसिद्धस्तन्दर्शयति। *रामेतीति*।

रामेति द्व्यक्षरन्नाम मानभङ्गः पिनाकिनः ।
शौर्यभङ्गो रावणस्य मदभङ्गश्च वालिन इति ॥

अत्र । भेदाभेदयोर्मध्ये भेदो व्यावहारिकोऽभेदः प्रातिभासिकः। न तु द्वौ समप्राधान्यौ विरोधात् । अभेदस्य प्रातिभासिकत्वादेवैतादृशशुक्तिरजतेन कटादिवन्न मुक्तादिदाह । शब्दार्थयोस्तादात्म्यादेव सर्वेषु सञ्ज्ञाशब्देषु सञ्ज्ञासञ्ज्ञिनोः सामानाधिकरण्येन निर्देशः सङ्गच्छते । तथा तथत्सञ्ज्ञासूत्रार्थोऽभेदबोध एव । संज्ञासञ्ज्ञिभावस्तु, फलितः। *सञ्ज्ञात्वन्तु व्याख्यानादिति* । एव

स्य तु व्याख्यानात्। विधेयत्वेऽपि तस्य पूर्वपाठो मङ्गलार्थः। अपृक्त एकाल् इत्यादौ तथाकरणं विधेयस्य प्रथमं प्रयोगे ऽसाधुत्वभ्रमवारणायेति भाष्ये स्पष्टम्। सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञापकतया विधित्वम्। किञ्च सर्वे सर्वार्था इत्यभ्युपगमो योगिदृष्ट्या नास्मदृष्ट्या। सर्वशब्दानामर्थानाञ्च विशिष्य ज्ञानाभावात्। सामान्यतस्तथा ज्ञानञ्च न बोधोपयोगि। शास्त्र त्र-

---

स्यानेका समानफलिका सत्ता न प्रमाणसिद्धा। एतच्चानाकृति सङ्केत्यादिना भाष्ये एव स्पष्टम्। ननु वृद्धिशब्दस्य सञ्ज्ञात्वे विधेयता वाच्या। सा च न सम्भवति। उद्देश्यस्य पूर्वमप्रयोगादत आह। *विधेयत्वेऽपीति*। *मङ्गलार्थ इति*। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्त इति भाष्योक्तेः। स ञ्ज्ञासूत्राणां नियमार्थत्वं प्राचीनोक्तं कटाक्षयन्नाह। * सर्वशब्दानामिति *। योगिदृष्ट्या तेषां सर्वशब्दार्थज्ञानात्। * सामान्यत *। सामान्यरूपेण, । तच्च रूपं केवलान्वयि प्रमेयत्वादिकम्। तथा च सामान्यलक्षणया सर्वशब्दार्थानां ज्ञानसम्भवेऽपि यावच्छक्यतावच्छेदकस्याखिलशक्यतावच्छेदकरूप त्वाज्ञानात्तत्तद्धर्मावच्छिन्नविशेष्यकस्य शक्तिग्रहस्याभावेन तत्तद्धर्मावच्छिन्नविषयकशाब्दबोधासम्भव इति भावः। एतेन सामान्यत इति प्रतीकमुपादाय इदञ्चिन्त्यम् घटा इति सामान्यज्ञानस्य तस्य बोधोपयोगित्वदर्शनात् सर्वं विष्णुमयं जगदित्यादौ गत्यन्तराभावादिति यत्तत्परास्तम्। समानधर्मप्रकारकबोधे तु तद्धर्मावच्छिन्नविशेष्यकशक्तिग्रहस्य सत्त्व घटा रूपवन्त इत्याकारकवाक्यजन्यशाब्दबोधहेतुताया अनुभवसिद्धत्वात्। सर्वशब्दस्य चोद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः प्रवृत्तिनिमित्तम्। उद्देश्यतावच्छेदकव्यापकत्वञ्च तत्समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्। विधेयव्याप्यत्वञ्च स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विधेयतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्त्वम्। अतो न सर्वे घटा प्रमेयत्ववन्त इत्यादौ विधेयतावच्छेदकावच्छिन्ननिरूपितस्य स्वाभाववद्वृत्तित्वरूपव्याप्यत्वस्योद्देश्यतावच्छेदकव्यापकधर्मेऽप्रसिद्धावपि क्षतिः। व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य सुलभत्वात्। इत्थञ्च तादृशो धर्मस्सर्व घटा इत्यादौ घटनिष्ठघटत्वमेव। एवमेव सर्वं विष्णुमयं जगदित्यत्राप्युपपत्तिः। अत्र जगत्पदम्प्रागभावप्रतियोगिपरम्। विष्णुमयपदार्थस्य विष्णुसमेतत्वातिप्रयोज्यपरतया प्रागभावप्रतियोगित्वव्यापकं तादृशव्याप्यत्वं सुलभमेव। तत्तत्स्थाने प्रसिद्धाना

स्पदाद्युद्देशैनैर प्रवृत्तामिति बोद्ध्यम्।तत्रैव सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैवेत्येषां यदृच्छाशब्दत्वेन व्यवहारः स्वेच्छया सञ्ज्ञाः क्रियन्त इति च। एतदुपदेशरूपसङ्केतात्प्राक्। तत्र सञ्ज्ञात्वाग्रहेण तासामनित्यत्वव्यवहारः। अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपक्रमकरणादन्यार्थाग्रहणरूपनियमः कृत्रिमाकृत्रिमन्यायमूलतयोक्तः संख्यासञ्ज्ञासूत्रे भाष्ये। आर्थिकमेतादृशं नियममादाय सञ्ज्ञासूत्रेषु नियमत्वव्यवहारो व्यवहाराय नियम. सञ्ज्ञायाः सञ्ज्ञिनि क्वचिदित्यादिना कृतः। वाचकताबोधकत्वे ऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः। आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमित्यन्यत्र विस्तरः। कार्यकालपक्षे ऽपि मृजेर्वृद्धिरित्यादौ वृद्धिपदार्थजिज्ञासायां वृद्धिरादैजित्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधिवाक्यार्थबोधः। अत एव ष्यङः सम्प्रसारणमिति सूत्रे भाष्ये कार्यकाल सञ्ज्ञापरिभाष भस्येत्युपस्थितमिद भवति यचि भमितीत्युक्तम्। ईदूदेदितिसूत्रे भाष्ये ऽपि कार्यकाल सञ्ज्ञापरिभाष प्रगृह्यः प्रकृत्येत्युपस्थितमिद भवति ईदूदेद्द्विवचनं प्रगृह्यमिति। निष्ठेति सूत्रे कैयटे ऽपि निष्ठेत्युक्ते सञ्ज्ञावाक्य क्तक्तवतू निष्ठेति स्मर्यत इत्याह। अत्र पक्षे एकत्र शक्तिग्रहे वृत्तेऽपि तत्प्रदेशस्थस्यैव तत्रार्थे शक्तिरिति सम्भावनया प्रदेशा-

---

व्यवहाराणामेकवाक्यतामाह। * तत्रैवेत्यादिना *। *एषामिति*। सञ्ज्ञाशब्दानामित्यर्थः। * आसामिति *। स्वेच्छया कृतानां सञ्ज्ञानामित्यर्थः। * अत एव *। नित्यत्वादेव। एतेन नियमार्थत्वं फलितम्। न तु शब्दमर्यादालब्धम्। किन्तु यस्य सञ्ज्ञा कृता तस्यैवोपस्थितिर्नान्यस्येति। * कृत *। अस्य हरिणेति शेषः। ननु पाणिनिकृतसञ्ज्ञानामनादित्वाभावाच्छास्त्रविषयता न स्यादसाधुत्वादत आह। *आसाञ्चेति*। *शिष्टेति*। शब्दतत्त्वविद्भिः। एतेन भाषानुसारेण क्रियमाणानां लौकिकसञ्ज्ञानामसाधुत्वमिति सूचितम्। केचित्तु सञ्ज्ञाविषये यदि यथोद्देशपक्षस्तदा स्वप्रदेश एव वाक्यार्थबोधस्तस्मिन्काले चाविधीयमानत्वात्त्रिमात्रादानामपि तपरत्वाभावे वृद्धिसञ्ज्ञा स्यात्तदा खट्वेन्द्रादौ त्रिमात्रादिव्यावृत्त्यर्थं तपरत्वं परार्थमिति सम्भवति। कार्यकालपक्षे तु विधिशास्त्रैकवाक्यतया मृजेर्वृद्धिरित्यादिशास्त्रैकवाक्यतया सञ्ज्ञासूत्राधीनो बोधो वाच्य। एवञ्चैचो विधेयतया न सवर्णग्राहकतासम्भव इति न तपरकरणमपार्थमित्याहुस्तान्दूषयितुमुपक्रमते। *कार्यकालपक्ष इत्यादिना*। *अत एव*। सञ्ज्ञासूत्रस्य सम्पूर्णस्योपस्थितिसत्त्वादेव। * अत्र पक्षे *। कार्यकालपक्षे।

न्तरस्थे चौरे न स्यादिति सर्वप्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं भिन्नवाक्यार्थबोधः। यथोद्देशे तु एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः। एतेन कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव। आदैच्पदार्थस्य वृद्धिविशेषणतया विधेयत्वेन सवर्णग्रहणाप्रसक्तेः। यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इति क्रमेण सञ्ज्ञासूत्राणामर्थादित्यपास्तमित्यन्यत्र विस्तरः। अप्राप्तज्ञापितानामपि आदैचां ग्रहणम्। तेन शालीयादिसिद्धिः।

भूवादयो॥ क्रियावाचिनः किम्। विकल्पार्थकवाशब्दस्य निपातस्य धातुत्वेऽप्रातिपदिकत्वात्सुबभावे पदत्वानापत्तेः। तदुक्तौ तु न दोषः। वार्थस्य विकल्पस्य भूतभविष्यत्कालसम्बन्धाभावेन क्रियात्वाभावात्। अस्त्याद्यर्थस्यापि तत्त्वं भूतभविष्यत्कालसम्बन्धात्। भ्वादयः किम्। आणवयति वट्टयतीत्यादीनां धातुत्वे शास्त्रविषयतया साधुत्वापत्तेः। सूत्रशेषे भाष्ये स्फुटमेतत्। स्तम्भ्वादीनामुदित्त्वेन धात्वधिकारविहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमानान्न तेषु दोषः।

प्राग्रीश्व॥ अधिरीश्वर इत्यभिव्याप्य प्राग्निपाता इत्यधिकारः। प्राङ्निपाताः सन्तो गत्यादिसञ्ज्ञा इत्यर्थः। तेन ताभिः समावेशः। अधिरीश्वरे, विभाषा कृञीत्यत्र निपातपदसम्बन्धश्च सिद्धः। एषां द्योतकत्वं वाचकत्वञ्च यथाकार्यं यथाप्रयोगं बोद्धव्यमित्यन्यत्र विस्तरः।

---

एतेन वाक्यैकवाक्यताविधिसूत्रैरिति सूचितम्।

* वाशब्दस्येति *। धातुसूत्रेष्वर्थनिर्देशस्यापाणिनीयत्वेन वा इत्यानुपूर्व्याश्चोभयत्र समानत्वेन विकल्पार्थकवाशब्दस्यापि भ्वादित्वमिति भावः। * पदत्वानापत्तेरिति *। अत्र केचित्। निपातस्यानर्थकस्येति वार्त्तिकेऽनर्थकग्रहणसामर्थ्या निपातसामान्यस्य तेन प्रातिपदिकत्वेऽस्यापि प्रातिपदिकत्वसम्भव इत्याहुः। तन्न। सूत्रारम्भकारके वार्त्तिकाभाव तद्रीत्यैतत्प्रयोजनकथनात्। भाष्यरीत्या द्विपशब्द एवाव्युत्पन्ने क्रियावाचि न इत्यस्य प्रयोजनमस्तु। * क्रियात्वाभावादिति *। कालपरिच्छेद्यत्वस्य क्रियात्वव्यापकत्वात् क्रियाभेदाय काल इत्यपि हर्युक्ते। सौत्राणां धातुत्वमुपपादयति। * स्तम्भ्वादीनामिति *।

* प्राग्रीश्वरात् *। रीश्वरादिति ल्यब्लोपे पञ्चमी रीश्वरशब्दमभिव्याप्येत्यर्थबोधनाय। * एषामिति *। प्रादीनां च्वादीनाञ्चेत्यर्थः। * द्योतकत्वमिति * अत एव प्रजयतीत्यत्र प्रकर्षस्य प्रशब्दद्योत्यस्य धात्वर्थविशेषणत्वसिद्धिः। द्योतकत्वञ्च समभिव्याहृतपदवाच्यार्थबोधकत्वम्। पदमत्र शक्तम्। तच्च प्रा

अत एवानुभूयते सुखम् साक्षात्क्रियते गुरुरित्यादौ कर्मणि लकारस्येष्टस्यमनुभवतीत्यत्र कर्मणि सुपश्चासिद्धि'। न चैतेष्वनुभवादिरन्वादिनिपातानामेवार्थं, स्वस्वयुक्तनिपातार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति नानुपपत्तिरिति वाच्यम्। अनुगच्छतीत्यादितोऽप्यनुभवानुकूलव्यापारबोधापत्तेः। संयोगात्मकफलाधरूद्धव्यापारेऽनुशब्दार्थावयासम्भवेन गमधातोर्व्यापारसामान्यार्थकत्वस्यास्वीकार्यत्वात्। अनुभ्वादिनिष्ठविशिष्टानुपूर्वी शक्ततावच्छेदिकेति चेन्न। गौरवात्। धातोः फलव्यधिकरणव्यापारावाचकतया सकर्मकत्वानुपपत्तितादवस्थ्याच्च। न च धातोर्न तादृशार्थकत्वं, किं तु लक्षणया तत्तदर्थबोधकत्वम्, लाक्षणिकार्थमादायैव चेष्टपूर्वोक्तप्रयोजनसिद्धिरिति वाच्यम्। प्रादीनां तात्पर्यग्राहकता विना विलक्षणार्थावगमासम्भवेन द्योतकत्वस्यैव सिद्धिसम्भवात्तात्पर्यग्राहकत्वस्यैव द्योतकत्वात्। उपसर्गाः क्रियायोग इतिसूत्रस्यापि प्रादयः क्रियाविशेषणीभूतार्थतात्पर्यग्राहकत्वे उपसर्गसंज्ञाः स्युरित्यर्थसम्भवात्। एवं प्रतिष्ठत इत्यत्र द्योतकता विना न निर्वाहः। प्रशब्दस्याभावबोधकत्वे धातोरनेकार्थत्वेन गतिबोधकत्वेऽपि गत्यभाव एव प्रतीयते। यदि स्थाधातुर्गतिनिवृत्त्यर्थक एव प्रशब्देन चाभाव प्रतिपाद्यत इत्युच्यते, तदा गत्यभावत्वावच्छिन्नाभावो ज्ञायेत न तु विलक्षणगतित्वेन। अतो धातोरेव तादृशार्थकत्वं। प्रशब्दस्तात्पर्यग्राहकः। एवं चैत्रमिव पश्यतीत्यादौ चैत्रपदस्य चैत्रसादृश्यविशिष्टे लक्षणा। इवशब्दस्तात्पर्यग्राहकः। एवं साक्षात्क्रियते, अलं क्रियते, नमस्क्रियते, ऊरीक्रियते गुरुरित्यादौ तत्तदर्थे वर्तमानात्कृञो लकारस्य कर्मणि सिद्ध्यर्थंतस्य तत्तद्वाचकत्वमनुमेयम्, तात्पर्यग्राहकत्वममीषामस्तु। न च कृञः सकर्मकत्वात्कर्मणि लकारो नानुपपन्न इति वाच्यम्। साक्षात्काराद्यर्थे न स्यात्, क्वचित्सकर्मकत्वात्कर्मणि लकारे विकुरुते वायुरित्यत्रापि स्यात्। साक्षात्कारादेरधात्वर्थत्वे तु धात्वर्थफलाश्रयस्वरूपकर्मत्वविशिष्टे एव तत्तद्धातूत्तराख्यातस्य विधानाच्च स्यात्। न च साक्षात्कारादेः साक्षात्पदादिशक्यत्वमस्तु। तदनुकूलव्यापारस्तु धात्वर्थ इति वाच्यम्। स्वार्थफलव्यधिकरणव्यापारावाचकतया धातोः सकर्मकत्वाभावापत्तेः। किञ्च साक्षात्पदार्थस्य नामार्थतया धात्वर्थे भेदसम्बन्धेनान्वयोपि न स्यात्। विशेष्यतासम्बन्धेन भेदसम्बन्धावच्छिन्ननामार्थप्रकारताकशाब्दबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वस्यौदनं पचतीतिवाक्यात् कर्मत्वसंसर्गकबोधवारणाय स्वीकरणीयत्वात्। एवं घटो घटश्चेत्यादौ समुच्चयोपि द्योत्य एव। अन्यथा शोभनः समुच्चय इतिवच्छोभनश्चेत्यस्याप्यापत्तिः। न च चशब्दार्थसमुच्चयस्य नित्यपरतन्त्रतया न विशेषणान्वय इति वाच्यम्। किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे इतराविशेषणतया पदजन्योपस्थितेर्हेतुत्वेन वाचकत्वस्वीकारे तथोपस्थितेः सत्त्वाच्छाब्दबोधे शोभनादिविशेषणान्वयसम्भवात्। एवञ्चकारशक्यार्थस्य समुच्चयस्य षष्ठीं विनाऽनन्वयापत्तिश्च स्यात्। विभक्त्यर्थमद्वारीकृत्य नामार्थयोर्भेदेनान्वयबोधायोगात्। अन्यथा राजा पुरुष इत्यत्रापि तदापत्तेः। एवसदिरयो समुच्चय इतिवद्धवस्य च खदिरस्य

चकत्वञ्च यथाकार्यं यथाप्रयोगं बोद्ध्यमित्यन्यत्र विस्तरः ।

असत्त्वे इति पर्युदासो लाघवादित्याह । अद्रव्येति । विशेष्यतया द्र-

---

वेत्यपि वाचकत्वपक्षे स्यात् । यदि च समुच्चिताभिधायकत्वं चकारस्योपेयते । एवं च भेदाभावान्न घटादिपदेभ्यः षष्ठी शब्दशक्तिस्वाभाव्यात्तस्यासत्त्वरूपतैव धातूपस्थाप्यार्थस्यैवोपेयत इति मन्यसे, तदा धर्म्यंशस्यान्यलभ्यत्वात्तत्र पुनश्चस्य शक्तिकल्पने गौरवम् । न च षष्ठीवारणान्यथानुपपत्त्या फल्गु-त्वेन नायं दोष इति वाच्यम् । घटः पटश्चेत्यत्र पटपदार्थस्य समुच्चयं प्रतियोगितासम्बन्धेनान्वयो वाच्यस्स च पदार्थैकदेशत्वान्न स्यादिति द्योतकत्वस्वीकारस्यावश्यकत्वात् । एवं शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिवेत्य-त्रापि वाचकत्वेऽगतिः । उस्रपदोत्तरतृतीययोस्रपदार्थस्य करणत्वं प्रतिपादनी-यम् । तच्च न सम्भवति । उदीच्यकर्मकोद्धारे उस्राणामकरणत्वात् । इवशब्दस्य सदृशार्थकत्वमन्यार्थकतया तदुत्तरतृतीयाया अभावेनोस्रसदृशाभिन्नैः शरै-रितिबोधासम्भवात् । यदि त्वव्ययादिति ज्ञापकात्सर्वार्थेभ्यस्त्युत्पत्तिं स्वीक्रियते, तदोस्रपदोत्तरतृतीयानन्वयप्रसङ्ग इति समभिव्याहृतपदार्थे उपमानत्वस्या-भेदान्वयस्य द्योतक इवशब्द इति स्वीकार्यमिति न कापि क्षतिः । एवमेव वाग-र्थाविव सम्पृक्तावित्यत्राप्यूह्यामिति दिक् । * वाचकत्वञ्चेति * । अयम्भावः । यथा घटमानयेत्यादिवाक्यात्प्रथमं बोधः प्रयोज्यवृद्धस्येति बालस्य यद्यप्य-न्यान्वितं शक्तिग्रहस्तथाप्यावापोद्वापाभ्यां घटादिपदस्यैव वाचकत्वं कल्प्यते । तथेहापि निपातानामन्वयव्यतिरेकाभ्यां सिध्यति । न च प्रतिष्ठत इत्यादावनुपपत्तिरिति वाच्यम् । प्रकारतासम्बन्धेन धात्वर्थविशेष्यकबोधे कारकविभ-क्तिनिपातान्यतरजन्योपस्थितेर्हेतुत्वस्य कल्पनात् । निपातातिरिक्तत्वविशेषणं नामार्थधात्वर्थयोरभेदान्वयबोधप्रयोजकव्युत्पत्तौ देयम् । नामार्थयोरभेदान्वयप्र-योजकव्युत्पत्तावप्येवम् । वाचकत्वादेव ननैत्युक्तेऽभावमानप्रतीतिः सार्वजनीना निर्वहति । न च प्रसज्यप्रतिषेधार्थकनञः क्रियान्वयनियमभङ्ग एवं सति स्यादिति वाच्यम् । गम्यमानक्रियामादाय कस्मात्त्वं नधा इत्यत्रेव तदुपपत्तेः । अथवा प्रकृत्यादिधर्मा आधर्थेस्तथा च स्तोकं पचतीत्यादिस्थलवदभेदान्वयसम्भवः । न च निपातानां वाचकत्वे घटादिपदानामिव केवलानामपि प्रयोगः स्यादिति वाच्यम् । केषाञ्चिच्चआदीनां तथात्वस्येष्टत्वात् । कुत्र चित्तु ते प्राग्धातोरिति सूत्रस्य नियामकत्वात् । कुत्र चित्तु प्रकृतिप्रत्यययोरिव स्वभावत केवलाप्रयोगस्वीकारात् । एवं सति यत्र द्योतकतां विना न गतिस्तत्र द्योतकत्वस्यैव स्वीकार उचित इति नास्माकमेकतरपक्षाग्रह इत्याशयेनाह । * यथाकार्यं यथाप्रयोगमिति ॥

* विशेष्यतयेति * । द्रव्यावृत्तिविशेष्यताकोपस्थितिजनका इत्यर्थः । अत्र द्रव्यपदं न गुणाश्रयपरम् । किन्तु वस्तूपलक्षणम् । यत्र सर्वनाम प्रयुज्यते द्रव्य

व्यभिन्नार्था इत्यर्थः । तेन क्रियाविशिष्टद्रव्यवाचिनां विमादिघटकमादीना न । चादयः किम् । स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति ।

उपसर्गाः ॥ योगग्रहणं यदर्थे मादीनामन्वयस्तं प्रत्येवोपसर्गत्वादीत्यर्थबोधनाय । तेन विगताः सेचका अस्माद्विसेचको ग्राम इत्यादौ षत्वन्न ।

गतिश्चेति । च उपसर्गसञ्ज्ञासमावेशार्थः । तेन प्रतिप्रणीतमित्यादौ गतित्वाद्गतिरनन्तर इति स्वर उपसर्गत्वात् णत्वञ्च सिद्ध्यति । प्रादय इति । योगविभागस्तु क्रियायोगाभावे ऽपि निपातत्वाय । एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति दिक् । प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः । निस्दुसिति । अत्रेदं बोध्यम् । सान्तग्रहणे रान्तस्याग्रहणमेव । यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणे ऽपि न सान्तग्रहणं । तद्दृष्ट्या रुत्वस्यासिद्धत्वात् । यत्र तु रुत्वस्य सिद्धत्व यथा षत्वणत्वयोस्तद्विषयोपसर्गत्वप्रतिषेधपरे दुरः षत्वणत्वयोरिति वार्त्तिके कु-

---

मित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित इति लक्षणलक्षितमेव गृह्यते । यस्तूपलक्षणम् । यस्तूपलक्ष्यते परामृश्यते येन तत्सर्वनाम यत्र परामर्शाय प्रयुज्यते सोऽर्थो द्रव्यमित्युच्यते । अथ वा भेद्यत्वेन लिङ्गसङ्ख्यानिरूपितविशेष्यत्वेन विवक्षित इत्यर्थः । * क्रियाविशिष्टेति * । प्रकर्षविशिष्टपूरणादिक्रियेत्यर्थः । अद्रव्यार्थाः किम् । पशुः ॥

* इत्यर्थबोधनायेति * । क्रियायामित्येवास्तु । अन्वेतीत्यस्याध्याहारेण क्रियायोग इत्यर्थलाभसम्भवादिति भावः ॥

* समावेशार्थ इति * । अन्यथा आकडारीयत्वात्स न स्यात् । * निपातत्वायेति * । तेन प्रगत आचार्यः प्राचार्य इत्यादावव्ययपूर्वपदप्रकृतिस्वरसिद्धिः । नन्वेतन्निपातसञ्ज्ञाया न फलम् । उपसर्गप्रतिरूपकत्वादेवाव्ययत्वसिद्धेरत आह । * एतत्सिद्धमेवेति * । योगविभागसिद्धमेवेत्यर्थः । * अनुकार्यानुकरणयोरिति * । इदम्प्राचामनुरोधेन । अनुकरणमनुकार्याद्भिन्नमेवेति सिद्धान्तिमते सुबुत्पत्तावपि प्रकृतिवदित्यतिदेशेनाव्ययत्वाद्विभक्तेर्लुक् अनुकार्यस्वरूपभङ्गभिया च पदान्तत्वप्रयुक्तं कार्यन्न । * सान्तग्रहण इति * । यथा निसस्तपतावनासेवने इत्यत्र । * यत्र तु रुत्वमसिद्धन्तत्र * । यथा न सुदुर्भ्याम् निर कुष, सुदुरोरधिकरणे इत्यत्र । * यत्र तु रुत्वस्य सिद्धत्वमिति * । स्फुरतिस्फुलत्योर्निर्निविभ्य इत्यत्र । * यथा षत्वणत्वयो * । अत्र छेदः । * तद्विषयोपसर्गत्व-

तरेफसान्तस्यापि ग्रहणम् । पत्वणत्वयोरित्यस्य तद्विधायकशास्त्रयोरित्यर्थात् । अत एव सुषामादिषु दुस्दुशब्दपाठः सार्थकः । स हि अपदु:सुषु स्थः कुरिति दुस्पूर्वकस्याधातोः कुप्रत्यये साधुः । अन्यथा दुस्पूर्वकात्कुप्रत्यये उपसर्गादित्येव पत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । न चास्य रूढत्वेनाव्ययत्वार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु प्रतिष्ठानिष्ठादिषु पत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्प्रकृते ऽपि दुस् पाठस्तु दुरयतइत्यादौ रत्वासिद्धत्वाभावार्थ इति दिक् ।

न वेति । इतिर्लोके ऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत् । यथा गाविरययमाहेत्यादावनुकरणे । इह तु स्वं रूपमिति परिभाषणाच्छब्दपदार्थकस्यार्थपदार्थत्वकृत् । क्वचिदितेर्न पदार्थविपर्यासकत्वं यथा ऽनुवादवाक्ये ।

---

प्रतिषेधपरं वार्तिकं इति * । इदं वार्तिकं यद्यपि गतिश्चेति सूत्रे पठितं तथाप्युपसर्गसञ्ज्ञाया कार्यकालत्वेन प्रतिषेधवचनस्य णत्वापेक्षया पत्वे बोध्यम् । पत च इह णत्वं माभूदिति भाष्यकारोक्त्या दुःस्थितमित्यस्यार्थे दु ष्ठितमित्यासम योगादर्शनाध्यवसीयते । * सान्तस्यापि ग्रहणमिति * । तेन दु सेधतीत्यत्र कदापि पत्वम् । * अत एव * । वार्तिके उभयोर्ग्रहणादेव । यदि रेफान्तस्यैव ग्रहणं स्यात् । तदा सान्तपूर्वकस्य पत्वे सिद्धे सुषामादिषु पत्वार्थं तत्पाठो व्यर्थं स्यादिति भावः । * उपसर्गत्वाभाव इति * । क्रियाविशेषणीभूतार्थद्योतकत्वाभावात् । न च यदा दुस्पूर्वकात्कुस्तदा वार्तिकेन निषेधे प्राप्ते पत्वार्थं पाठस्यावश्यकत्वेनात एवेत्यसङ्गतमिति वाच्यम् । उणादिव्युत्पन्नाना सञ्ज्ञाशब्दतया तस्यानभिधानादिति । न च निस् निर् इत्यनयोस्सकारोच्चारणं स्थिरतीति चिकल्पानन्तरश्चिर कुप इत्यस्य वैयर्थ्यम् । एकाच उपदेश इति सूत्रानन्तरं रेफान्तनिर्घटितं निर कुषोऽनिष्ठायामिति पठनीयम् । तेन सान्तोपपदे रत्वस्यासिद्धत्वादिड् न भविष्यतीति रूपद्वयसिद्धौ लाघवसम्भवादिति वाच्यम् । अनिष्ठायामित्यस्य पर्युदासत्वे इत्स्वेव प्रवृत्त्यापत्ते । प्रसज्यप्रतिषेधे तु न लाघवं च ॥

* लोकेऽर्थपदार्थकस्येति * । यथा घट पट इत्यादौ घटादिपदाच्छब्दप्रकारिकार्थोपस्थितिर्यद्यपि भवति तथापीतिशब्दसमभिव्याहारे घट इत्यादौ न शब्दप्रकारिकोपस्थितिस्तथाऽत्र शाखेऽग्नेर्ढगित्यादौ स्वं रूपमितिपरिभाषणाच्छब्दस्यैव प्राधान्येन भानम् । इतिशब्दसमभिव्याहारे तु शब्दप्रकारिकैवोपस्थितिरित्येवं पदार्थविपर्यासकत्वम् । यद्यपि शब्दार्थौ द्वावपि पदार्थौ तथापि तयोर्या विषयता तद्विपर्यासकत्वादेव पदार्थविपर्यासकत्वमिति भावः । * अ-

स च नवाशब्दाभ्यां प्रत्येकं सम्बध्यते व्याख्यानात् । तेन नवाशब्दयोरर्थौ संज्ञिनौ । स्वरूपमित्यस्य प्रत्याख्याने त्वितिशब्दो व्यर्थ एव । अर्थे कार्यस्याबाधात् । तयोरेव संज्ञित्वे तु विभाषाश्वेरित्यादौ नवाशब्दावादेशौ स्याताम् । प्राप्तविभाषासु नास्योपयोगः । तासां पक्षे निवृत्तिमात्रफलकत्वात् । अप्राप्तविभाषास्वपि न । तासां पक्षे विधिमात्रार्थत्वात्, अप्राप्तत्वेन निषेधासम्भवाच्च । तस्मादुभयत्र विभाषार्थमिदम् । विभाषाश्वेरित्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात् । कित्सु तु नित्यमेव समप्रसारणं स्यात् । निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्तेत न पित्सु । उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदापत्तेश्चाशक्या । सञ्ज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं कित्सु निषेधस्ततः किदकिद्रूपे सर्वस्मिन् लिटि पैकरूप्यं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः । भाष्यकृतस्तु, एवं हि हृक्रोरन्यतरस्यामित्यादावनुपपत्तिर्विभाषापदाभावात् । इतिशब्दस्य विभाषेत्यत्रापि सम्बन्धात् विभाषापदार्थः सञ्ज्ञेति तु न युक्तम्, अर्थे सञ्ज्ञात्वस्यादृष्टत्वात् । अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यपि न युक्तम्, एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्यानाकृतिः सञ्ज्ञेति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात्, तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटितेऽपि तथैवास्तु, किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्र

---

नुवादवाक्य इति * । यथा श्वा किमेतदिति क्रोधादाभाष्य महिषासुर इत्यत्र, इति हेतुस्तदुक्तव इत्यत्र च जयेति देवाश्च मुदा इत्यादौ च । निषेधविकल्पयोर्विभाषासञ्ज्ञाविधानोपयोग दर्शयितुमुपक्रमते । *प्राप्तविभाषास्विति* । *वैरूप्याद्वाक्यभेदापत्तेश्चेति* । यतो नैकशोभयरूपेण प्रवृत्तिः किन्त्वेकत्र विधिमुखेनापरत्र निषेधमुखेन एवञ्च वैरूप्यमिति । सूत्रावृत्त्या क चिद्विधिमुखेन क चिन्निषेधमुखेन प्रवृत्तौ वाक्यभेदापत्तिरिति भाव । प्राप्तविभाषा यथा तिरोऽन्तर्द्धाविति सूत्रादन्तर्द्धावित्यनुवर्तमाने विभाषा कृञीति । अत्र भावाशस्य सिद्धत्वात् पक्षे निवृत्तिफलिकैवास्य प्रवृत्तिरित्यादि । अप्राप्तविभाषा यथा विभाषोपयमने । अत्रोपयमन गन्धनाङ्गं विवक्षितम् । यदा यमो गन्धन इति नित्यमेव शास्त्रम्पूर्वविप्रतिषेधेन प्रवर्त्तेत इति तत्सूत्राविषयमेवैतत्सूत्रप्रवृत्तिर्वाच्या । तत्राभावांशस्य सिद्धत्वाद्विधिमुखेनैवास्य प्रवृत्ति । विभाषा श्वेरित्यादावुभयत्र विभाषासु उभयमुखेनैव प्रवृत्तिर्वाच्या सा पूर्वोक्तरीत्या न सम्भवतीति सूत्रस्यावश्यकतेति भाव । काकाक्षिगोलकन्यायेनोभाभ्यामितिशब्द सम्बध्यत इति भाष्योक्तिं खण्डयति । *इति शब्दस्येति* । *जातिव्यक्तिपक्षयोरिति* । आ

तरेफसान्तस्यापि ग्रहणम् । षत्वणत्वयोरित्यस्य तद्विधायकशास्त्रयोरित्यर्थात् । अत एव सुषामादिषु दुष्ठुशब्दपाठः सार्थकः । स हि अपदु:सुषु स्थः कुरिति दुस्पूर्वकस्थाधातोः कुप्रत्यये साधुः । अन्यथा दुस्पूर्वकात्कुप्रत्यये उपसर्गादित्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । न चास्य रूढत्वेनान्वयव्यतिरेकार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु प्रतिष्ठानिष्ठादिषु षत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्प्रकृते ऽपि दुसः पाठस्तु दुरयतइत्यादौ रुत्वासिद्ध्या लत्वाभावार्थ इति दिक् ।

न वेति । इतिर्लोके ऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत् । यथा गविस्त्ययमाहेत्यादावनुकरणे । इह तु स्व रूपमिति परिभाषणाच्छब्दपदार्थकस्यार्थपदार्थत्वकृत् । क्वचिदितेर्न पदार्थविपर्यासकत्वं यथा ऽनुवादवाक्ये ।

---

प्रतिषेधपरे वार्तिक इति * । इद वार्तिकं यद्यपि गतिश्चेति सूत्रेपठितन्तथाप्युपसर्गसञ्ज्ञाया कार्यकालत्वेन प्रतिषेधवचनस्थ स्त्वापेक्षया परत्व नोध्यम् । एतच्च इह णत्व माभूदिति भाष्यकारोक्त्या दु स्थितमित्यस्यार्थे दु ष्ठितमित्यासम्प्रयोगादर्शनाच्चाध्यवसीयते । * सान्तस्यापि ग्रहणमिति * । तेन दु सेधतीत्यत्र कदापि षत्वम् । * अत एव * । वार्तिके उभयोर्ग्रहणादेव । यदि रेफान्तस्यैव ग्रहण स्यात् । तदा सान्तपूर्वकस्य षत्वे सिद्धे सुषामादिषु षत्वार्थं तत्पाठो व्यर्थः स्यादिति भाव । * उपसर्गत्वाभाव इति * । क्रियाविशेषणीभूतार्थद्योतकत्वाभावात् । न च यदा दुस्पूर्वकात्कुस्तदा वार्तिकेन निषेधे प्राप्ते षत्वार्थं पाठस्यावश्यकत्वेनात एवेत्यसङ्गतमिति वाच्यम् । उणादिष्वव्युत्पन्नानां सञ्ज्ञाशब्दतया तस्यानभिधानादिति । न च निस् निर् इत्यनयोरस्वीकारे स्वरति सूतीति निश्शब्दानन्तरञ्चिर क्रुप इत्यस्य वैयर्थ्यम् । एकाच उपदेश इति सूत्रानन्तरं रेफान्तनिर्घटित निर कुषोऽनिष्टायामिति पठनीयम् । तेन सान्तोपपदे इत्यस्यासिद्धत्वादिड्न भविष्यतीति रूपद्वयसिद्धौ लाघवसम्भवादिति वाच्यम् । अनिष्टायामित्यस्य पर्युदासत्वे इत्स्वेव प्रवृत्त्यापत्ते । प्रसज्यप्रतिषेधे तु न लाघव च ॥

* लोकेऽर्थपदार्थकस्येति * । यथा घट पट इत्यादौ घटादिपदाच्छन्दप्रकारिकार्थोपस्थितिर्यद्यपि भवति तथापीतिशब्दसमभिव्याहारे घट इत्यादौ न शब्दप्रकारिकोपस्थितिस्तथाऽत्र शाखेऽग्नेर्ढगित्यादौ स्व रूपमितिपरिभाषणाच्छब्दस्यैव प्राधान्येन भानम् । इतिशब्दसमभिव्याहारे तु शब्दप्रकारिकैवोपस्थितिरित्येव पदार्थविपर्यासकत्वम् । यद्यपि शब्दार्थौ द्वावपि पदार्थौ तथापि तयोर्या विषयता तद्विपर्यासकत्वमेव पदार्थविपर्यासकत्वमिति भाव । * स

स च नवाशब्दाभ्यां प्रत्येकं सम्बध्यते व्याख्यानात् । तेन नवाशब्दयोरर्थौ संज्ञिनौ । स्वरूपमित्यस्य प्रत्याख्याने त्वितिशब्दो व्यर्थ एव । अर्थे कार्यस्याबाधात् । तयोरेव संज्ञित्वे तु विभाषाश्वेरित्यादौ नवाशब्दावादेशौ स्याताम् । प्राप्तविभाषासु नास्योपयोगः । तासां पक्षे निवृत्तिमात्रफलकत्वात् । अप्राप्तविभाषास्वपि न । तासां पक्षे विधिमात्रार्थत्वात्, अप्राप्तत्वेन निषेधासम्भवाच्च । तस्मादुभयत्र विभाषार्थमिदम् । विभाषाश्वेरित्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात् । कित्सु तु नित्यमेव संप्रसारणं स्यात् । निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु । उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदापत्तेश्चाशक्या । सञ्ज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं कित्सु निषेधस्ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः । भाष्यकृतस्तु, एवं हि हृक्रोरन्यतरस्यामित्यादावनुपपत्तिर्विभाषापदाभावात् । इतिशब्दस्य विभाषेत्यत्रापि सम्बन्धात् विभाषापदार्थः सञ्ज्ञेति तु न युक्तम्, अर्थे सञ्ज्ञात्वस्यादृष्टत्वात् । अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यपि न युक्तम्, एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्यानाकृतिः सञ्ज्ञेति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात्, तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटितेऽपि तथैवास्तु, किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं

---

नुवादवाक्य इति * । यथा आ किमेतदिति क्रोधादाभाष्य महिषासुर इत्यत्र, इति हेतुस्तदुद्भव इत्यत्र च जयेति देवाश्च मुदा इत्यादौ च । निषेधविकल्पयोर्विभाषासञ्ज्ञाविधानोपयोगं दर्शयितुमुपक्रमते । *प्राप्तविभाषास्विति* । *वैरूप्याद्वाक्यभेदापत्तेश्चेति* । यतो नैकत्रोभयरूपेण प्रवृत्तिः किन्त्वेकत्र विधिमुखेनापरत्र निषेधमुखेन पत्रश्च वैरूप्यमिति । सूत्रावृत्त्या क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तौ वाक्यभेदापत्तिरिति भावः । प्राप्तविभाषा यथा तिरोऽन्तर्धावितिसूत्रादन्तर्धावित्यनुवर्त्तमाने विभाषा कृञीति । अत्र भाषांशस्य सिद्धत्वात् पक्षे निवृत्तिफलिकैवास्य प्रवृत्तिरित्यादि । अप्राप्तविभाषा यथा विभाषोपयमने । अत्रोपयमनं गन्धनं च विवक्षितम् । यदा यमो गन्धन इति नित्यमेव शास्त्रम्पूर्वविप्रतिषेधेन प्रवर्त्तेत इति तत्सूत्राविषयपरैतत्सूत्रप्रवृत्तिर्वाच्या । तत्राभाषांशस्य सिद्धत्वाद्विधिमुखेनैवास्य प्रवृत्तिः । विभाषा श्वेरित्यादावुभयत्र विभाषा तु उभयमुखेनैव प्रवृत्तिर्वाच्यां सा पूर्वोक्तरीत्या न सम्भवतीति सूत्रस्यावश्यकतेति भावः । काकाक्षिगोलकन्यायेनोभाभ्यामितिशब्दः सम्बध्यत इति प्राचामुक्तिं खण्डयति । *इति शब्दस्येति* । *जातिव्यक्तिपक्षयोरिति* । जा-

प्रत्याचख्युः ।

स्वं रूपं० ॥ स्वरूपमित्यस्य बोध्यमिति शेषो व्याख्यानात्तदाह । सञ्ज्ञीति । राज्ञो यदित्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासम्भवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्र स्वशब्द आत्मीयत्वेनार्थमाह । रूपशब्देन शब्दस्वरूपमेतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्यम्, उक्तयुक्तेः । किं तु शब्दविशेषणम् । एवञ्चार्थविशिष्टः शब्दः सञ्ज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्धा । अत्र चार्थः कल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादिबोध्यः शास्त्री-

---

तिपक्षे सकृद्विधेकरूपेण प्रवृत्तावपि चारितार्थ्येन सूत्रं सार्थकमिति वैरूप्यमेकस्य विभाषादिवेरित्यस्योभयरूपेणप्रवृत्तौ सम्भाव्यत इति न वेति सूत्रमावश्यकम् । व्यक्तिपक्षे तु प्रतिलक्ष्यं लक्षणभेदात्क्वचिन्निषेधमुखेनैकस्य क्वचिद्विधिमुखेना परस्य प्रवृत्तिर्भविष्यतीति नार्थः सूत्रेणेति प्राचामुक्तिः सा न युक्तेतिभावः । यत्तु श्वेश्छिन्त्यम् अशिष्यो वा विहितत्वादिति प्रत्याख्यानभाष्ये वाशब्दस्वारस्येन तस्य पाक्षिकत्वलाभाज्जातिव्यक्तिपक्षमाश्रित्यारम्भानारम्भाभिप्रायेणैव व्याख्यानमुचितमिति । तन्न । अशिष्येत्यक्षरस्वारस्यभङ्गापत्तेः । सूत्रस्य प्रयोजनकथनसमये एकस्यैव सूत्रस्य प्राप्तिविषयेऽप्राप्तिविषये चोपयोगाभावमुपपाद्योभयविभाषाया विभाषा श्वेरित्यत्र विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिरित्यनेनाप्येकस्यैव वैरूप्येणावृत्तिशङ्का कृत्वा सिद्धं तु पूर्वणोत्तरस्य बाधितत्वादित्यनेन श्रुतप्रमाणानुरोधेन सम्प्रसारणनिषेधविकल्पयोर्विधिप्रदेशो उपस्थित्या सन्निभेदेन वाक्यभेदं कृत्वा स्याद्य सा शङ्का परिहृता । एवञ्च यथारम्भपक्षे शङ्कासमाधानाभ्यामेकस्यैव लक्षणस्य निर्दिष्टत्वं प्रतिपादितं तथैवाशिष्यो वेतिप्रत्याख्यानभाष्येऽपि व्याख्यानमुचितम् न तु व्यक्तिपक्षेऽनावश्यकत्वाभिप्रायेणेति दिक् ॥

ननु स्वं रूपमितिसूत्रस्य सञ्ज्ञास्वरूपबोधकत्वं न सम्भवति, सामानाधिकरण्येनोभयोरनिर्देशात् । नापि स्थान्यादेशभावबोधकत्वम्, सूत्रस्यैव वैयर्थ्यात् । नाप्यागमागमिभावस्तस्य लिङ्गानुपलम्भात् । अतस्सूत्रारम्भसार्थक्याय बोध्यमित्यस्याध्याहार एवेत्याशयेनाह । *व्याख्यानादिति* । * नियमार्थमिति * । स्वरूपमेव बोध्यमित्यर्थः । * उभयसञ्ज्ञीति * । रूपग्रहणसामर्थ्यात् । * प्रकृतिप्रत्ययादीति * । आदिना निपातपरिग्रहः । उपपादितमेतत् । *शास्त्रीयोपीति* अपिना लौकिकपरिग्रहः । तत्र प्रकृते शास्त्रीयार्थग्रहणाद्दधौ जग्धिरिति जग्धादेशो मदी हप इतिधात्ववयवाच्छब्दस्य न । अर्थवत प्रत्ययस्य ग्रहणात्सन्यङोरिति द्वित्वसूत्रेऽयपङिति विहितेयाङि न प्रवर्त्तते । उपसर्गस्यार्थवतो ग्रहणादुद

योऽपि । स च मुख्यः प्रसिद्धश्चेति गौणमुख्यन्यायो ऽभिव्यक्तपदार्था ये इति न्यायश्च सिद्धः । अत एवेयं विशिष्टरूपोपादान एव, इदं सूत्रञ्च तन्त्रशार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च न तु वर्णग्रहणे इत्याकरे स्पष्टम् । दाधाध्वित्यस्येहल्यघोरित्यादौ चारितार्थ्येनोपसर्गे घोरित्यादौ स्वं रूपमित्यनेन परत्वाद्बाधशङ्कावारणार्थमशब्दसञ्ज्ञेति । नात्र षष्ठीतत्पुरुषः । कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाप्रवृत्तौ कर्मण्यणित्यादौ स्वरूपग्रहणापत्तेः । किन्तु सप्तमीतत्पुरुषः । शब्दपदेन च शब्दशास्त्रे तदाह । शब्दशास्त्रे इति । भाष्ये तु अर्थे कार्यस्य बाधेऽप्युपस्थितत्वाद्राज्ञ इत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम् । उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतया ऽन्वयसम्भवेन चार्थवत्परिभाषापि सिद्धा । लक्ष्यानुसारात् तत्तत्संज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसङ्ख्यावाचकषष्शब्दस्य षट्सञ्ज्ञाकरणेन शब्दशास्त्रीयसञ्ज्ञायां स्वरूपाग्रहणज्ञापनाच्चोपसर्गे घोरित्यादावदोषेणाशब्दसञ्ज्ञेत्यपि व्यर्थमित्युक्तम् । अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषः । अत एव वृक्षादिषु विशेषाणां ग्रहणं स्वे पुष इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं, सभाराजेत्यत्र पर्यायाणामेव ग्रहणं, पक्षिमत्स्यमृगान्हन्तीत्यादौ मृगपक्षिणोः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं, मत्स्यपदेन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति । अन्यथा तदर्थं यत्नः कर्त्तव्यः । परेश्च घाङ्कयोरित्यत्र घस-

---

स्यास्तम्भोरिति पूर्वसवर्णो गस्त्स्थानमित्यादौ न । * मुख्यः प्रसिद्धश्चेतीति * । अत्र शीघ्रोपस्थितिकरत्वेनान्तरङ्गत्वं बीजं । मुख्य इत्यस्य मुखमिव प्राथमिकोपस्थितिविषय इत्यर्थो न तु प्रकारतानात्मकविशेष्यताश्रय इत्यर्थः । तत्र मुख्य इत्यनेन गौणलाक्षणिकस्य व्यावृत्तिः । एतेनाग्निसोमौ माणवकावित्यत्रेदग्नेरिति न । प्रसिद्धस्येत्यनेन सञ्ज्ञाशब्दव्यावृत्तिः । तेन सञ्ज्ञाश्वशुरस्यापत्यमित्यत्र राजश्वशुराद्यदिति न । * न तु वर्णग्रहण इति * । तेनेको यणचीत्यादौ न परिभाषाप्रवृत्तिः । अन्यथा दध्यत्रेत्यादावेव यणादि स्यान्न तु पचत्यत्रेत्यादौ । तस्मादिदुदुत्तरस्येत्यादिनिर्देशोऽप्यत्र मूलम् । * ईहल्यघोरित्यत्र चारितार्थ्येनेति * । आत इत्यनुवृत्त्येति भावः । पूर्वोक्तसूत्राशयवर्णनमात्रमित्याशयेनाह । * भाष्ये त्विति * । द्वितीयप्रयोजनान्यथासिद्धिमाह । * उपस्थितार्थेति * । अशब्दसञ्ज्ञेत्यपि व्यर्थमित्याह । * लक्ष्यानुसारादिति * । * अत एव * । सूत्राभावादेव । * वृक्षादिष्विति * । विभाषावृक्षेति सूत्रे । * यत्नः कर्त्तव्य इति * । तदुक्त

ब्देन स्वरूपग्रहणं नदीपौर्णमासीत्यत्र नदीपदेन स्वरूपग्रहणं सिध्यति । लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः । ज्ञापकपक्षे ऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्च दोषः । अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक् ।

येन वि ॥ येनेति करणे तृतीया विधिरिति भावे किः । कर्माणि विधेयं कर्त्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव । यत्तु करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणमिति लब्धमिति तन्न । सुब्विभक्तौ न लक्षणेत्यस्य सर्वसम्मतत्वात् । किं बहुना येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानं कृतं शास्त्रेण तेषामन्यत्रार्थे तदर्थे चान्येषां लक्षणया ऽपि साधुत्वाभावस्य प्रत्ययः पुयोगादित्यादिभाष्यतो लाभात् । करणस्य व्यापारवत्त्वनियमादन्येषाञ्च व्यापाराभावाद्वि-

---

भाष्ये । सित्तद्विशेषाणां वृक्षाद्यर्थम् पित्पर्यायवचनस्य च स्वाद्यर्थम् । येन विशेषाणां स्वरूपस्य च ग्रहः । जित्पर्यायवचनस्यैव राजाद्यर्थम् । झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् । अहन्चैतस्य पर्यायवचनस्येष्यते श्रीमान् हन्ति भैनिक इति । ननु यदा पश्चाच्छब्दस्य सञ्ज्ञाप्रकरणे ज्ञापकेन स्वरूपाग्रहणमिति स्वीक्रियते तदा नदीपौर्णमासीत्यत्र नदीपदेन स्वरूपग्रहणञ्च प्राप्नोतीत्यत आह । * ज्ञापकपक्षेऽपीति * । * अत एव * । ज्ञापकसिद्धस्यासार्वत्रिकत्वादेव ॥

* येनेति करणे तृतीयेति * । कर्त्तरि तु न सम्भवति । षष्ठ्या बाधात् । नापि हेतौ । करणतृतीयायाः कारकविभक्तित्वेन प्राबल्यात् । * न लक्षणेति * । कर्तृकर्मणोः कृतीति सूत्रारम्भात् । यदि सुब्विभक्तावपि लक्षणा स्यात्तदा तद्विषये शेषे षष्ठीं विधाय लक्षणया कर्तृत्वकर्मत्वाभ्यामेव बोधस्याप्युपपत्तिः कृतया कर्तृकर्मणोरिति सूत्रस्यानारम्भ एव कार्यः । न केवलं सुब्विभक्तावेव न लक्षणा किन्त्वन्यत्रापीत्याह । *किम्बहुनेति* । *प्रत्ययः पुयोगादिति* । आद्ये प्रत्ययेति महासञ्ज्ञाकरणेन प्रत्याययतीति प्रत्यय इत्यनेन यस्मिन्नर्थे शास्त्रेण विधानं कृतं तत्रैव साधुत्वं भवति नान्यत्रेत्यनेन लभ्यते । साधुत्वविधानपर्यन्तं शास्त्रव्यापारात् । एवं परश्चेति सूत्रे तस्य प्रयोगनियमार्थत्वं व्यवस्थापितम् । प्रत्ययः परो भवत्येवेति हि नियमस्तस्मात्कल्प्यः । एतेन प्रकृते प्रत्ययासमभिव्याहारे साधुत्वमुत्क्रमायम् । पुयोगादिति सूत्रेऽपि किं पुनरिहोदाहरणम् । प्रष्ठी प्रचरी कथम् पुनरयं प्रष्ठशब्दोऽकारान्तः स्त्रियां वर्तते । तस्येदमित्यनेनाभिसम्बन्धेन, यथैव पुयोगादाख्यायां तद्धितलुग्वचनं कर्त्तव्यम् । तस्येदमिति प्राप्नोति । न तर्हीदानीमिदम्भवति, प्राष्ठ्य इमा प्राचर्य्ये इमाः, भवति च विभाषा लुग्वक्तव्यः ।

पणमेवात्र करणतृतीयान्तेनोच्यते । तस्य चेतरव्यावृत्तिकरणमेव व्यापारः । तदुक्तं भाष्ये । येनेति करणे एषा तृतीया ऽन्येन चान्यस्य विधिर्भवति यथा चैत्रस्य सङ्ग्रामे हस्त्यश्वादिभिर्विग्रहे एवमचो यदिति अचा धातोर्यत

---

यदा लुक् तदा षष्ठी यदा न लुक् तदा प्राग्दीव्यतीया, यद्वेयं नाम्यां लुका विभाषा तद्धितोत्पत्तिः । यदा तद्धितोत्पत्तिस्तदा प्राग्दीव्यतीया, यदा न तद्धितोत्पत्तिस्तदा षष्ठी । एवमपि लुग्वक्तव्य । न ह्यन्तरेण लुकं परार्थे शब्दो वर्त्तते । अत्र परार्थे शब्दो न वर्त्तेत इति सामान्यतोऽभिधानेन प्रकृतेः प्रत्ययस्य प्रसिद्धस्वार्थमपरित्यज्यान्यत्र वृत्तिर्नास्तीति स्पष्टमेव लभ्यते । ततो यदि पुनस्तस्यामेव षष्ठशब्दो वर्त्तते कथं पुनस्तस्यामप्रतिष्ठमानायामषष्ठशब्दो वर्त्तते, यथैव ह्यनायकुर्वती किञ्चित्पाप तत्कृतान्वधबन्धनक्लेशाननुभूते । एवमषष्ठशब्दमपि लभत इत्युक्तम् । एतेन भाष्यग्रन्थेन न ह्यन्तरेणेत्येतत्स्वारस्येन प्रकृतिमात्रस्य लुकमन्तरा तद्धितार्थे वृत्तिर्नास्तीति प्रतिपादितामिति लक्षणया वृत्तिर्नेति स्पष्टमेव लभ्यते । अग्रिमस्य यदि पुनरित्यस्य प्रस्थानादिक्रियाया यथा कथञ्चित्समर्थाचरणाद्विना कर्त्तृत्या स्पष्टशब्दप्रवृत्तिर्भविष्यतीत्यभिप्रायः । यथा पञ्चभिर्हलैः कृषतीत्यत्र प्रतिविधानात्कर्त्तृत्वमिति कथं पुनस्तस्यामिति यदा प्रतिविधानमपि नेति भाव । तत्कृतान् भर्त्तृपापकृतान् । तथा च भर्त्तृसम्बन्धाद्दाम्पत्यरूपाद्यथा वधबन्धनादिजनितक्लेशानुभवस्तस्यास्तथा तच्छब्दस्यापि तत्सम्बन्धादेव प्रवृत्तिरितिभाव । सा च तत्र षष्ठत्वरूपप्रवृत्तिनिमित्तारोपरूपा । एवञ्चारोपितषष्ठत्वप्रवृत्तिनिमित्तकोऽत्र षष्ठशब्द स्वार्थं एव प्रवर्त्तते । शक्यतावच्छेदकारोपात्मिका लक्षणा यत्र शास्त्रेण यस्य साधुत्वमन्वाख्यायते ततोऽन्यत्रापीष्यते एव । लक्षणया साधुत्वाभाव इत्यस्य त्वयम्भाव । शक्यतावच्छेदकातिरिक्तधर्मप्रकारकबोधफलिकान्यधर्मावच्छिन्ने शक्यसम्बन्धप्रयोज्या लक्षणा नास्त्येवेति गौणमुख्यविभागस्यापि शब्दस्य स्वीयप्रवृत्तिनिमित्तप्रकारकप्रतीतिविशेष्यप्रसिद्धार्थकत्वं मुख्यत्वम् तद्धर्मप्रकारकप्रतीतिविशेष्याप्रसिद्धार्थत्वञ्च गौणत्वमित्युपपत्तिरिति दिक् । * इतरव्यावृत्तिकरणम् * । विशेष्यप्रकारकेतरभेदानुमितिकरणज्ञानविषयीभवनमित्यर्थ । * अन्येन चान्यस्येति * । अन्यशब्दसम्बन्धी यो विधि सोऽन्येन भवति तत्र दृष्टान्त । *चैत्रस्येति* । चैत्रसम्बन्धी यः सङ्ग्रामस्त हस्त्यश्वरथपदातिभिर्विधत्त इत्यन्वय । एवञ्च विशेषणसम्बन्धाभावे उद्देश्यसामान्यसम्बन्धित्वेन सम्भाव्यमान विधेय विशेषणेन परिच्छिन्नविशेष्यसम्बन्धित्वेन बोधयति । एवञ्च विशेषणस्य करणत्वमुपपन्नम् । अत्र दृष्टान्ते व्यापारान्तरस्या

विधत्ते इति । अन्येन चान्यस्येत्यनेन यस्य कार्यं यस्मिन्परतश्च तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणं । तत्र शब्दोपस्थितविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकम् । क्वचित्सति गमके तादृशं स्वरूपं विशेष्यमादायापि तदन्तविधिः । तच्चान्तरङ्गत्वात्समानाधिकरणमेव । तत्र तदन्तविधौ सति तथा विशेषणत्वयोग्यताप्येतत्प्रवृत्तौ निमित्तम् । अत एवेन्हनित्यादौ इनशे तदन्तविधिर्न हीनङ्गमित्यन्वयो भवति । तदन्तस्येत्यस्य तदन्तशब्दस्येत्यर्थः । नन्वेवमेरजित्यय इत्यत्र न स्यादत आह । स्वस्य चेति । स्वमित्यनुवृत्तं षष्ठ्या विपरिणम्यतइति भावः । स्वरूपमित्यस्य प्रत्याख्याने तु तदन्तस्य चेति पाठ्यमिति बोद्ध्यम् । समासमेति । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम् । एवञ्च द्वितीयाश्रितेत्यादौ श्रितादयो ऽधिकारप्राप्तसमर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः । तेन कृष्णं परमाश्रित इत्यत्र न समासः । नडादिभ्यः फगित्यादावपि नडादि विशेष्यं प्रातिपदिकं विशेषणमिति सौननाडिरित्यत्र न फक् । उगिदिति । तेनातिभवतीत्यत्रोगित-

---

पि सन्धीभवनाद्विरूपस्य करणाभिमते हस्त्यश्वादौ यद्यपि सम्भवस्तथापि करणत्वमात्रे दृष्टा तदेति बोध्यम् । * तत्र * । विशेष्येषु । * तादृशम् * । शब्दोपस्थितम् । यथा पादः पदित्यत्र । * क्वचित्सति गमक इति * । यथा सर्वादीनि सर्वनामानीत्यादौ । * तच्चेति * । विशेषणञ्चेत्यर्थः । * अन्तरङ्गत्वादिति * । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावस्य तत्र सम्बन्धत्वात् । नन्वेवमि ह्-भित्यत्रोपात्तेन शब्दस्याङ्गविशेषणस्य तदन्तग्राहकतेष्यते । सा च नोपपद्यते नहीनङ्गमिति सम्भवतीत्यत आह । * तत्र तदन्तविधावीति * । एवञ्चेष्टे विषये सूत्रघटकशब्दजन्यप्रथमोपस्थितस्य विशेष्याभिमतस्य स्वरूपात्मकतयाप्यमाश्रय यद्यपि न सम्भवति तथापि तदन्तोपस्थितौ विशेष्याभिमतत्र सम्भवतीत्येतादृशयोग्यताया अप्येतच्छास्त्रप्रवृत्तिनियामकत्वं प्राह्यमिति भावः । * पाठ्यमिति * । लोकप्रसिद्धव्यपदेशराज्ञावस्य शास्त्रेणाबाध्यायेति शेषः । समासेतिवचनाङ्गीकारे गौरवं स्यादत आह । *विशेषणेति* । *समर्थैरित्यस्येति* । इदं विभक्तिविपरिणामेन निर्दिष्टम् । * तस्य * । विशेष्यस्य । * सुपेत्यनेन * । अन्यथा सर्वत्रान्वयासम्भवः । यद्यपि क्रिया सम्बुद्धौ च सम्भवस्तथापि शास्त्रस्यान्यत्रापि कष्टं श्रितः कष्टश्रित इत्यत्र यथा स्यात् । कष्टम्परमश्रित इत्यत्र मा भूदितिभाष्यप्रामाण्यात्प्रवृत्तिरिष्टैवेति भावः । * उगिदिति * । उगिता वर्णेन च यत्र विशेष्यते, तत्र तदन्तविधिर्भवत्येवेति फलितम् । * अतिभवतीति * । सर्वादिपठितभवतुनाम्ना तमेतत् । * उगितश्चेति * । सूत्रे उ

श्चेति ङीप्, दाक्षिरित्यत्रात इञ् सिद्धः। एवञ्चोक्तनिषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्तीत्यनेनैकवाक्यत्वलाभात्। उगिद्वर्णेति त्वेकदेशानुवाद इति बोध्यम्। अत एव वनोरचेत्यादौ प्रत्ययग्रहणे तदन्तग्रहणमित्यस्य नाय निषेध इति दिक्।

विरामः॥ भावे घञ्। शब्दानुशासनप्रस्तावादाह। वर्णानामिति। उच्चारणाभाव इत्यर्थः। स च व्याख्यानात्किंचिद्वर्णोच्चारकालिक एव गृह्यते। प्रदेशा वावसानइत्यादयः। अभावस्यापि बुद्धिकृत पौर्वापर्यं वर्णवत्।

---

गिदन्तप्रातिपदिकग्रहणात्। *एवञ्च*। वर्णग्रहणे तदन्तविधिस्वीकारे च। *गृह्यमाणप्रातिपदिकेति*। प्रातिपदिकमात्रवृत्तिधर्मप्रकारकप्रतीतिजनकतावच्छेदकरूपेणोपात्तप्रातिपदिक यत्रेत्यर्थः। * नाय निषेधइति *। न चास्य निषेधेपि वन्मात्रस्याप्रातिपदिकत्वात्सामर्थ्यात्तदन्तविधि स्यादिति वाच्यम्। एवमपि वन्नन्तान्तमित्यर्थलाभो न स्यादित्यत्र तात्पर्यात्। समासप्रत्ययेतिवचनस्य प्रत्ययविधिविषयत्वस्वीकारादप्सुमित्यादौ गृह्यमाणप्रातिपदिकविषयेपि तदन्तविधिर्भवत्येव।

वर्णानां सिद्धान्ते नित्यत्वात्तत्सामान्याभावाप्रसिद्धिरत आह। * उच्चारणाभाव इति *। *स च*। वर्णोच्चारणाभावश्च। *व्याख्यानादिति*। र प्रतो हलादेर्लघोरिति सूत्रे तद्व्याख्यानभाष्ये च रेफस्य विसर्गीकरणमूलकादिप्रयादि। न च पूर्वकालिकोच्चारणाभावस्यावसानसञ्ज्ञायामपि नास्ति रेफस्य प्रकृते प्राप्ति। रेफस्य पदान्तत्वविरहादिति वाच्यम्। अवसाने यत्र रेफस्य विसर्गप्राप्तिस्तत्र पदान्तत्व रेफस्यावश्यमस्त्येवेति तद्घटितवाक्ये पदान्त इत्यस्य सम्बन्धात्। किञ्च तद्घटितवाक्ये तत्सम्बन्धेपि र्वोरुपधाया दीर्घ इत्येतत्सूत्रे य आदौ रेफस्तस्य पदान्ततया विसर्गापत्तिर्दुर्वारा च सञ्ज्ञा। न चैवमपि तस्मिन्निति परिभाषयाऽवसानपरत्व एव विसर्गप्रवृत्त्या न तत्र विसर्गप्राप्तिरिति वाच्यम्। तस्मिन्निति सूत्रे दिशेरुच्चारणार्थकस्य सत्त्वेन यस्योच्चारणसम्भवस्तद्विषये एव तत्परिभाषाप्रवृत्ति। अवसानस्य तु वर्णोच्चारणाभावरूपतयाऽभावस्योच्चारणासम्भवेन नात्र परिभाषाप्रवृत्ति। किन्तु बौद्धोपश्लेषसत्त्वाद्विसर्गापत्तिरित्याशयात्। * वर्णवदिति *। यथा वर्णानामुच्चारितप्रध्वंसितया नोपश्लेषसम्भव। उपश्लेषस्य स्थिरपदार्थनिष्ठत्वात्। किन्तु बौद्ध एव स। तथाऽभावस्यापि वाच्य।

परशब्दो नान्यार्थोऽन्यतरस्याव्यभिचरितत्वादित्याह । अतिशायिन
इति । स्वभावसिद्धार्थमात्रातिरिक्तकालव्यवायेन रहित' । तेन तद्व्यवायेन
वाक्ययोरुच्चारणे संज्ञा न । सन्निकर्षश्च भाव. परेण । स्व विपूर्वेणापि । अ
त एवावसानकार्याणां संहिताधिकारे पाठ. । न चावसानसंज्ञया पदसत्त्वे
सावकाशाया. संहितासंज्ञाया. सत्यपि सम्भवे बाधन भवतीतिन्यायेन
विषयभेदेऽपि बाधः स्यादिति तत्सङ्गतिरेवेति वाच्यम् । तदधिकारे तेषां
पाठेनाधिकारसूत्रस्य स्वशास्त्रीयसंज्ञामात्रविषयत्वकल्पनात् । एवं तु न
तथा । लोकेऽपि सत्त्वात् । तदुक्तं वार्त्तिककृता । संहितावसानयोर्लोकवि-
दितत्वादिति । न चावसानकार्येषु संहिताधिकारसम्बन्ध एवास्तु अग्रे
च मण्डूकप्लुतिरस्त्विति वाच्यम् । सत्यामुपपत्तौ मण्डूकप्लुतेरयुक्तता

---

*पूर्वेणापि* । अवसानविषये । *अवसानकार्याणाम्* । वायम्मा इत्यादी-
नाम् । *तदधिकारे* । संहिताधिकारे । *सावकाशायास्संहितासंज्ञाया इति* ।
एतेनावसानसंज्ञा तु निरवकाशेति सूचितम् । यदि त्वेवमपि दे व इत्यादौ सम्बो-
धने सावकाशेति मन्यते । तदा परत्वादवसानसंज्ञया संहितासंज्ञाया बाध
स्यादिति शङ्काभिप्राय' । *अग्रे* । तां ह्यित्यादौ । अविचिन्द्र्यादीत्यत्र संहिता
भावे परसवर्णो माभूदित्यर्थमिति भाव । * अयुक्तत्वादिति * । एतेन यत्र
वर्णानां विरामस्तत्र राम इत्यादौ द्वयोस्संज्ञयोस्समावेश इति सूचितम् ।
यत्तु इह प्रश्नस्तत्तुल्यभाष्यार्थं वटयिष्यद्भम् । तत्र वर्णाद्वर्णान्तरोच्चारणे प्राप्ति
वर्णे विरामसंज्ञायात्तवसानसंज्ञया संहितासंज्ञाबाध प्राप्नोतीत्याशङ्क्य वृक्ष
इत्यादौ वर्णान्तरानुच्चारणे सावकाशामवसानसंज्ञां संहितासंज्ञा बाध
ते, यत्तुभयोः समावेशस्तर्हि बाधकवचनानर्थक्यमिति । तन्न । द्वयो संज्
ञयोर्लौकिकत्वेऽपि बाध्यबाधकभाव । यथा राज्ञा स्वप्राधिकारदानसम
ये एका संज्ञा क्रियते, पुनस्तदपेक्षयाऽपि महतोऽधिकारस्य दानसमये
ऽपरा संज्ञा क्रियते । तथैव च संज्ञया लाघवं लौकिकैर्यावज्जीवनं स व्यवह्रियते ।
तथाऽत्रापि संहितासंज्ञाया लौकिकत्वेऽप्यनयाऽवसानसंज्ञया बाधो भविष्य
तीत्यभिप्रायेणात्र बाधकवचनात् । अयञ्च बाध्यबाधकभावो न युक्त इत्यभिप्राये
ण । अथ याऽवसानसंज्ञाया प्रकर्षगतिर्विवक्ष्यते, साधीयो यो विराम इति,
कश्च साधीय य शब्दार्थयोर्विराम । अथवेति सर्वत्र विरामसंज्ञायात्पुन श्रुत्या
विशेष आधीयते अन्यत्र तु सत्यपि शब्दाविरामे पदार्थस्य वाक्यार्थस्य वा वि
रामाभावस्यावसानसंज्ञा इति भाष्यकैयटयोरुक्तम् । अत्र शब्दस्य विराम
श्रवणकृतोऽर्थस्य बोधकृत इति भाव । * अन्यत्र त्विति * । वर्णान्तरे वर्णो
च्चारणे मध्यमकाल इत्यर्थ । येतन पूर्वभाष्यमभ्युपेत्यवादेनेति स्पष्टमेव ।

त्। ध्वनितश्चेद् विसर्जनीयस्य स इति सूत्रे भाष्ये। सन्निकर्षः सामीप्यम्।

सुप्तिङ्॥ सुबिति सुपः पकारेण प्रत्याहारो व्याख्यानात्। यद्यपि प्रत्ययग्रहणे तदन्तग्रहणमित्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम्। प्रत्ययेन स्वप्रकृत्यवयवकसमुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति न युक्तम्। इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्। आक्षिप्तस्य शाब्दे ऽनन्वयाच्च। तथापि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावज्ञापनार्थमन्तग्रहणम्। तेन घसञ्ज्ञातरप्तमपोरेव। न तदन्तस्य। तेन गौरीब्राह्मणितरेत्यत्र न ह्रस्वः। एतन्निषेधसामर्थ्यादेव प्रदेशेष्वपि न

---

* ध्वनितामिति *। तत्र हि अनवकाशत्वाद्बाधपक्षे पूर्वपरसन्निकर्ष एव संहितासञ्ज्ञेति पक्षे चाणोऽप्रगृह्यस्येत्यत्रोभयसम्बन्धेन दोषोद्भावनेन। एतेन मण्डूकप्लुतिरयुक्तेति स्पष्टमेव लभ्यत इति भावः। सन्निकर्षः संयोगादिर्वर्णानामसम्भवतीत्यत आह। * सन्निकर्षः सामीप्यमिति *।

*व्याख्यानादिति*। न कपो नापि सप्तमीबहुवचनमेव। किन्तु तिङ्साहचर्यात्सुप पकारेण प्रत्याहार इत्यर्थकात्। अन्तग्रहणवैयर्थ्यं शङ्कते। *यद्यपीति* प्राचामुक्तिं खण्डयति। *प्रत्ययेनेति*। प्रकृतिं विना प्रत्ययोत्पादासम्भवादिति भाव। * आक्षेपासम्भवादिति *। प्रत्ययोत्पत्तौ प्रकृतेरपेक्षासत्त्वेऽपि तस्य स्थितौ व्यभिचारेण प्रकृतेराक्षेपासम्भवादिति भाव। * आक्षिप्तस्य शाब्देऽनन्वयादिति *। पदजन्यपदार्थोपस्थितेः शाब्दबोधे कारणत्वात् आक्षिप्तार्थस्य मानसज्ञानविषयत्वेऽपि तद्वाचकशब्दानुच्चारणेन उच्चारितः शब्दः प्रत्यायको नानुच्चारित इति भाष्यसंवादेन तस्यार्थस्य वृत्त्या पदजन्यपदार्थोपस्थितेरभावादिति भाव। * गौरी ब्राह्मणितरेति *। इदञ्च परिनिष्ठितम्। किन्तु लौकिकसमासार्थवाक्यम्। अत्र गौरीशब्दस्य न-ह्रस्व इत्यर्थः कल्प्य। अत्र तु पुम्वद्भावेन गौरब्राह्मणितरेति भवति। तदन्तस्य सञ्ज्ञायान्तु परत्वात्पुंवद्भावस्य बाधक ह्रस्वत्व गौरीशब्दस्य स्यादिति गौरिब्राह्मणितरेति स्यादिति भाव। *एतन्निषेधसामर्थ्यादिति*। सञ्ज्ञाविधाविति निषेधसामर्थ्यादित्यर्थ। * प्रदेशेषु *। घरूपकल्पेत्यादिषु। घादे प्रत्ययस्य तदन्तग्राहकता यद्यपि प्राप्ता। सञ्ज्ञाविधाविति वचनेन तस्मिन् प्रदेशे निषेधस्तु कर्तुमशक्य। सञ्ज्ञाविधावित्यत्र सञ्ज्ञाया विधाविति कर्मषष्ठ्या समासात्। ननु सञ्ज्ञाविधाविति समासाभिप्रायेण प्रत्ययग्रहणे चापञ्चम्या इत्यस्य व्याख्यावसरे कैयटेन रदाभ्यामित्यत्र रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य यस्तकारस्तस्य नत्वमिति व्याख्याने यच्छङ्कितम्‌ च सञ्ज्ञाविधाविति निषेधावतार इति, तत् कर्मषष्ठ्या समासे विरुध्यत इति चेन्न। तृतीयासमासे कैयटस्यापि यत्र हि सञ्ज्ञाविधान-

तदन्तविधिः । न च ज्ञापिते ऽपि व्यर्थम्, पदप्रदेशे प्रत्ययग्रहणे तदन्तः ग्रहणेनैव सिद्धेरिति वाच्यम् । पदत्वस्य प्रकृतिसाधारणतया पदग्रहणे

---

न्तग्रहणनिषेध इत्यादिलेखनेन सम्मतिर्नास्तीतिकल्पनात् । तद्भ्रमे पुनस्तेनैव शङ्कित सञ्ज्ञाविधाविति निषेधस्य तर्हि किं प्रयोजनम् । तर्हीति । प्रदेशेषु तदन्त ग्रहण यदि तर्हीत्यर्थः । उच्यते । यदि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य सञ्ज्ञा स्यात्प्रदेशे पुनस्तदन्तविधिस्स्यादिति प्रत्ययान्तात् गृह्यत । तस्मात्सञ्ज्ञाविधावपि तदन्तविधे प्रतिषेधो रदाभ्यामित्यत्र च । एतच्चोद्योते व्याख्यातम् । प्रत्ययग्रहणे चापञ्चम्या इति वचनाभ्यामिति भावः । एवं शङ्कासमाधानाभ्यां षष्ठीसमासस्यैव तदभिप्रेतत्व लभ्यते । न च तद्व्याख्यावसरे एतन्निषेधसामर्थ्यादिति नोद्भावित, किन्तु तदन्तविधिद्वयप्रसक्तिरेवोद्भाविता तेनास्य विरोध इति वाच्यम् । तत्र कैयटेन प्रौढ्या तथाभिधानात् । उद्योतेऽपि स्वरूपव्याख्यैव परा क्रिया इत्याशयेन निषेधसामर्थ्यं नोक्तमित्येव युक्तम् । न हि तदन्तविधिद्वयप्रसक्तिभिया प्रत्ययग्रहणपरिभाषाया अप्रवृत्तिः । किन्तर्हि तग्रहणज्ञापनयत्नेनैव । तच्च ज्ञापनं प्रदेशे पुनस्तदन्तग्रहणेनैव निर्वहतीति बोध्यम् । न च लेखग्रहणज्ञापिते नोत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणमिति वचनेनैव वरूपेति सूत्रे तदन्तविध्यभावोपपत्तौ निषेधसामर्थ्यात्तत्र तदन्तविध्यभावोपपादनमयुक्तमिति वाच्यम् । उत्तरपदेतिवचनस्य रात्रेः कृतीति सूत्रस्थभाष्यप्रामाण्येनानित्यत्वात् । तत्र हि । तत्सूत्रस्य रात्रिमटो राज्यट इत्युदाहरणमुक्तम् । रात्रिशब्दात्कृतोऽसम्भवात् । न च रात्रिशब्दप्रकृतिकाचारक्विबन्तात्कृतस्सम्भव इति वाच्यम् । अभिव्यक्तपदार्था ये इति न्यायेन तत्रैतत्सूत्राप्रवृत्ते । यद्वा । उत्तरपदाधिकारे प्रत्ययग्रहण इति वचनस्य प्रत्ययपदं प्रत्ययसञ्ज्ञावाच्यतावच्छेदकानुपूर्व्यवच्छिन्नपरम् । तथा च तादृशानुपूर्व्यवच्छिन्नस्योपादानं यत्र तत्र प्रत्ययग्रहणेन तदन्तग्रहणमित्यर्थः । यथाणिति । रात्रे कृतीति सूत्रे तु कृत्त्वेनैवोपादानमिति निषेधाप्रवृत्तिवद्वरूपेति सूत्रेऽपि वशब्देन तदुपादानम् । तच्च न तच्छक्यतावच्छेदकमित्युत्तरपदेति वचनाप्रसक्तौ वशब्देन पुनस्तदन्तविधौ सञ्ज्ञाविधावितिवचनासार्थक्यानुपपत्तिरिति निषेधसामर्थ्यात्तत्राप्रवृत्तिरित्युपादानं सार्थकम् । अत्र रात्रे कृतीति सूत्रमेव मानमिति दिक् । * पदप्रदेश इति * । सुप्तिङ्मात्रपदसञ्ज्ञायामपीत्यादि । न चात्र पूर्वोक्त सामर्थ्यान्न तदन्तविधिरिति समाधानं सम्भवति । सुप्तिङ्मात्रस्य पदसञ्ज्ञाविधानसामर्थ्यात्तदन्तग्रहणसम्भवात् । पदा ते पदे प्रवर्तमान दृष्टेतिसूत्रमेव तदन्तग्रहणे ज्ञापकं भविष्यतीत्यपि बोध्यम् । प्रकृतिसाधारणतयेति । स्वादिष्वित्यनेन प्रकृतेरपि पदसञ्ज्ञाविधानात् पदसञ्ज्ञाविधायकशास्त्रे यस्मात्प्रत्ययविधिरित्यनुवृत्त्या व्याख्याने यस्मादिति परिभाषया स्मरणात्तदेकवाक्यतया कृत्तद्धितेति सूत्रेणापि प्रातिपदिकत्वाभिया-

प्रत्ययग्रहणपरिभाषाभावात्। तस्मात्प्रत्ययविधिरित्याद्युक्तेः पदसमुदायस्य न पदत्वम्। इयानित्यादौ यस्मात्प्रत्ययविधिस्तदादितदन्तत्वं व्यपदेशिवद्भावेन बोध्यम्। तेनाग्नीयस्याप्येकाच्त्वादेरतिदेशात्। विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहाये ऽपि कर्तव्यानीति तदर्थात्। अत एवेयत्याश्रयदित्यादौ एकाजन्तात्स्वार्थे इति भाष्यसिद्धिः। हरिषु इत्यादौ सोस्तु नैव पदत्वं। हलि सर्वेषामिति निर्देशेन समुदाये तदप्रवृत्तेः। नित्यं चत्वार प्रकारा इति भाष्यमभ्युपेत्यवादेन। ध्वनितश्चेदमादेच उपदेशे तास्यनुदात्तेदित्यादौ भाष्ये। तत्र हि डौकतइत्याकारस्य इव इत्यादावकारस्यैजन्तोपदेशत्वसत्त्वात्तदन्तोपदेशत्वं व्यपदेशिवद्भावेनानङ्गीकार्यवता व्यपदेशिभाव इत्युक्तम्। यो वर्णोऽर्थवांस्तेन व्यपदेशिवद्भावः। वर्णस्यार्थवत्त्वं चाव्यवायेऽसहाये एव। न तु प्रकृते इति तदर्थः। एकस्मिन्नित्यस्यार्थवत्त्वस्यनेनोक्त इति दिक्।

हलो ऽनन्तराः। गार्ग्यः शतं दण्डयन्तामित्यत्र समुदाये शतदण्डनद्यत्र समुदायस्यैव संज्ञा न प्रत्येकम्। अनन्तरा इत्युक्तेश्च। तस्य विशेषणताया एवौचित्यात्। यत्तु संयुज्यन्ते वर्णा यत्रेत्यन्वर्थसंज्ञावशाच्च प्रत्येकं सेति। तन्न। घटपटौ संयुज्येते यत्रेत्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतया प्रतीतिर्व्युत्पन्नत्वेन तदतिरिक्ततद्घटितपदवाच्यरूपसमु-

---

मित्यादौ साधनीयस्तत्त्व धातुभिश्चतरपदस्य विशेषणादिति भावः। * तस्मादिति। तत्राविधौ प्रत्ययग्रहणं इत्यत्र स्यात्। अनिष्टरूपस्यापि सूत्रे स्पष्टग्रहणेन कल्पनसम्भवात्। एवमेतत्प्रकृतेरभावान्नोपपद्यते इत्याशङ्कायामाह। * इयानित्यादाविति *। * अग्नीयस्यापीति *। व्यपदेशिवद्भावस्य लौकिकत्वात्। अन्यसहाय एव व्यपदेशिवद्भावप्रवृत्तौ नित्यं चत्वार प्रकारा इति भाष्यमिकारमात्रे एतत्स्वोपपादनासम्भवेनानुपपन्नमत आह। * नित्यं चत्वार इति *। * ध्वनितश्चेदमिति *। असहाय एव व्यपदेशिवद्भाव इत्येतत्। * असहाय एवेति * एतच्चार्थवत्त्वेनेति नापूर्वमिति भावः। * दिगिति *। अर्थस्य त्यागोपादानाभ्यां व्यपदेशिवद्भाव इति कैयटोक्तं युक्तम्। तथोपपादने मुख्यस्यैव व्यवहारस्य भाष्यरीत्या सम्भवादित्यादिरन्यत्र प्रपञ्चितम्।

* विशेषणताया एवौचित्यादिति *। एवञ्चानन्तर्यं संयोगपदशक्यतावच्छेदकघटकमिति सूचितम्। अनन्तरा इत्यत्राविद्यमानमन्तरं वर्णान्तरव्यवधानं येषामिति, अविद्यमानमन्तरं येषामिति वा समासः। उभयथा समुदायस्यैव लाभः द्वयोश्चैव मध्यसम्भवात्। कैयटोक्तिं खण्डयति। * यत्त्विति *। * अनि-

दायस्य सञ्ज्ञापत्तावनिष्टापत्तेः। महासञ्ज्ञा तु प्राचामनुरोधादेव। तेन सुदृषद्ब्राह्मणीत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः। हल इति बहुवचनं सौत्रम्। यद्वा। हलौ च हलश्चेत्येकशेषः। स्वरितात्संहितायामिति सूत्रे ऽनुदात्तानामिति पदे तथैकशेषस्य भाष्ये करणात्। तेन द्वयोरपीति शिखेत्यादौ गुरोश्च हल इत्यप्रत्ययः सिद्ध्यति। यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव न बहूनाम्। झलि परे संयोगादिलोपविधानाद् बहूनामित्यपि चिन्त्यमेव फलाभावात्। तत्र तत्राद्यपदद्वयात्मकावयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम्। आनन्तर्यं व्यवधानञ्च विजातीयेनैवेत्याशयेनाह। अज्भिरिति। अत्र कुत्वं न्याय्यम्। अत एव हयवरट्सूत्रे ऽचो ऽज्भ्विति भाष्यप्रयोगे कुत्वं दृश्यते। स्वैरव्यवहिता इति सूचिता वृत्तिः। हलः किम्। तितउ देव। अत्र गुरोरिति प्लुतः

---

ष्टापत्तेरिति *। प्रपदुक्तरीत्याविमेतिसमुदायस्य सञ्ज्ञायां शोभनधिप्रशब्दाय पयनकाराकारस्य गुरुसंज्ञापत्तौ तस्य प्लुतापत्तिरूपानिष्टापत्तेरित्यर्थः। नन्वेवं महासंज्ञाकरणं व्यर्थमत आह। * महासञ्ज्ञाकरणं त्विति *। * तेन *। समुदायसंज्ञाकरणेन। * सौत्रमिति *। द्वयोर्द्विवचनस्य न्याय्यत्वात्। सौत्रस्य कल्पने गौरवप्रसङ्गादाह। * यद्वेति *। नन्वेवमपि भिन्नवचनोपादानेन सह विवक्षाप्रदर्शनमयुक्तमन्यथादर्शनादत आह। * स्वरितादिति *। * तथैकशेषस्य *। अनुदात्तस्यानुदात्तयोश्चानुदात्तानाञ्चानुदात्तानामित्येवम्प्रदर्शनेनैकशेषस्य। तत्र यथाऽनुदात्तयोरित्यत्रानुदात्तानामित्येव चैकशेषं कृत्वा पुनरेकशेषस्तद्वत्। अत्रैव विग्रहप्रदर्शनेन विभक्त्यन्तानामेकशेष इति न भ्रमितव्यम्। एव प्रदर्शनस्यानेकार्थत्वप्रदर्शनमात्रतात्पर्यकत्वात्तत्र तन्त्रेण। एकशेषस्तर्हि व्यर्थ इति चेत् एकशेषशब्दस्य तत्परत्वस्यैव कल्पनात्। * द्वयोरपीति *। न चापिशब्दसङ्ग्राह्याणां बहूनां संयोगसञ्ज्ञाया फलाभावात् न हेत्वपिशब्दोपादानमनर्थकमिति वाच्यम्। बहुस्थलीयतादृशसमुदायसमुच्चायकत्वात्। ननु बहूनां संयोगसञ्ज्ञाया फलन्द्वयोः सञ्ज्ञाव्यावृत्तिरेव भविष्यतीत्यत आह। * तत्र तत्रेति *। तथा च शास्त्रबोधस्य तत्फलस्यासम्भवेन बहूनां निष्फलत्वात्र भविष्यतीति भावः। * कुत्वं न्याय्यमिति *। पदान्तत्वात्। परन्तु सञ्ज्ञास्वरूपभङ्गापत्त्या न कृतम्। * उचितेति *। सन्देहस्यैव तत्रानुदयादिति भावः। * तितउदेवेति *। तितउना दीव्यतीति विग्रहः। अत्र तकाराकारावयवकस्य त इति समुदायस्य संयोगसञ्ज्ञाया तीतीकारस्य गुरुसञ्ज्ञा स्यात्। न चैव घटेत्यादावप्यापादनसम्भवाद्विशिष्यात्रैतस्योपादानमनर्थकमिति वाच्यम्। अशोकवनिकान्यायेनास्योक्तेः। यदि तु विजातीयव्यवहितभिन्ना सजातीया वर्णा

स्यात् । अनन्तराः किम् । द्रप्सम् । अत्र सकारमकारयोः संयोगत्वे स्कोरिति लोपः स्यात् ।

संयोगे गुरुः ॥ भेत्तेत्यादौ गुणस्तु क्नो' क्त्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणाद् बोध्यः ।

इति सञ्ज्ञेति । प्रथमाध्यायस्थाना मन्त्रिकार्योपयोगिनीनां सञ्ज्ञाना

---

एव गृह्यन्ते तदा तितउम्यामित्यत्र संयोगान्तलोपापत्तिर्बोध्या । असलोपे लोपविधानात् । एव हे नर अउ इति कुरु इत्यत्रप्लुतापत्ति । द्रप्समिति । द्रप्सन्दधि घनेनरत् । अत्र सकारमकारयोः संयोगसञ्ज्ञायां संयोगादिलोपापत्ति । यद्यपि भाष्ये पनसमित्येतदेतद्व्यावर्त्यमुक्तन्तथापि पञ्चम्यन्तस्य झल इत्यस्य स्कोरितिसूत्रे ऽनुवृत्तिं कृत्वापि सकारलोपाभावशङ्का स्यादित्यस्योपन्यास । वस्तुतस्तु तत्र न झल इत्यस्य सम्बन्ध । भ्रष्टेत्यादौ सकारलोपानापत्ते ।

ननु संयोगे गुरुसञ्ज्ञा यदि ह्रस्वस्य लघुव्यवहाराभावसाधिका । तदा नित्यत्वात्तासि गुरुसञ्ज्ञाया गुणो न स्यादत आह । *भेत्तेत्यादावपीति* । यत्तु समप्रवृत्त्या गुरुसञ्ज्ञया लघुसञ्ज्ञाया बाधेपि पूर्वं प्राप्ताया अन्तरङ्गायास्तस्या बाधे माना भाव इति । तन्न । परसंयोगनिमित्तिकाया गुरुसञ्ज्ञाया येन नाप्राप्तिन्यायेन लघुसञ्ज्ञापवादत्वात् । न चात्तेत्यादावाकारादौ संयोगेगुर्वितिवारणार्थमिति वाच्यम् । शास्त्रीयसञ्ज्ञामात्रस्यान्यासाध्यतत्फलजनकत्वस्य फलत्वेनैतादृशेषु दीर्घञ्चेति सूत्रेणैव सिद्धतया प्रकृतसूत्रस्य तदविषयकत्वात् । न च ह्रस्वं लघ्विति सूत्रे सत्याकडारीयत्वाद्गुरुसञ्ज्ञाया लघुसञ्ज्ञाबाध प्रसज्यते । तदेव न । ऊकालोऽज्झ्रस्वदीर्घप्लुत इति सूत्रे ह्रस्वग्रहणमपनीय तत्स्थाने लघुग्रहणस्यैव करणेन लघुसञ्ज्ञाया अनाकडारीयत्वात् । यत्र यत्र ह्रस्वग्रहण तत्र सर्वत्र लघुग्रहणेनैव निर्वाहादिति वाच्यम् । संयोगे गुर्विति सूत्रेऽनुवृत्त्यर्थं ह्रस्वग्रहणस्यावश्यकत्वात् । न च संयोगो लघु गुरु इत्येव सूत्रमास्त्विति वाच्यम् । तथा सत्यत्र सूत्रे लघोरुद्देश्यतया लघुगुरुसञ्ज्ञयो समावेशापत्ते । न चेष्टापत्ति । अचिक्षमादित्यत्र दीर्घो लघोरिति सूत्रेण दीर्घापत्ते' । न च तस्मिन् सूत्रे लघुग्रहणस्यैव सति वैयर्थ्यापत्तिरिति वाच्यम् । स्वाभाविकस्य लघो परिग्रहार्थत्वात् । तथा कल्पने सूत्रस्य प्रवृत्तिरततक्षदित्यत्र स्यादप्रवृत्तिश्चापीभवदित्यादौ सन्वद्भावे सति सन्यत इतीत्वस्यापत्ति ।

* प्रथमाध्यायेत्यादि * । अत्राद्यविशेषणेनाभ्याससनाम्रेडितसञ्ज्ञयोर्द्वितीयेन प्रगृह्यसञ्ज्ञाया व्यावृत्ति । नच टिसञ्ज्ञाया शकन्ध्वादिषु पररूपमिति वार्तिकसाध्यसन्धिकार्योपयोगित्वेनात्रप्रकरणे तदनुपादानान्न्यूनतापत्तिरिति वाच्यम् । तत्र शकन्ध्वादिसिद्ध्यनुगुण पररूपमिति व्याख्या

दायस्य सञ्ज्ञापत्तावनिष्टापत्तेः । महासञ्ज्ञा तु प्राचामनुरोधादेव । तेन सुदृषद्ब्राह्मीत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः । हल इति बहुवचनं सौत्रम् । यद्वा । हलौ च हलश्चेत्येकशेषः । स्वरितात्संहितायामिति सूत्रे ऽनुदात्तानामिति पदे तथैकशेषस्य भाष्ये करणात् । तेन द्वयोरपीति शिक्षेत्यादौ गुरोश्च हल इत्यप्रत्ययः सिध्यति । यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव न बहूनाम् । झलि परे संयोगादिलोपविधानाद् बहूनामित्यपि चिन्त्यमेव फलाभावात् । तत्र तत्राङ्गपदधात्ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम् । आनन्तर्यं व्यवधानश्च विजातीयेनैवेत्याशयेनाह । अज्भिरिति । अत्र कुत्वं न्याय्यम् । अत एव हयवरट्सूत्रे ऽचो ऽज्विति भाष्यप्रयोगे कुत्वं दृश्यते । स्वरैरव्यवहिता इति सूचिता वृत्तिः । हलः किम् । तितउ देव । अत्र गुरोरिति प्लुतः

---

ष्टापत्तेरिति * । अयदुक्रीत्याद्यभिप्रेतिसमुदायस्य सञ्ज्ञायां शोभनविप्रशब्दावयवनकाराकारस्य गुरुसञ्ज्ञापत्तौ तस्य प्लुतापत्तिरूपानिष्टापत्तेरित्यर्थः । नन्वेवं महासञ्ज्ञाकरणं व्यर्थमत आह । * महासञ्ज्ञाकरणन्त्विति * । * तेन * । समुदायसञ्ज्ञाकरणेन । * सौत्रमिति * । द्वयोर्द्विवचनस्य न्याय्यत्वात् । सौत्रत्वकल्पने गौरवप्रसङ्गादाह । * यद्वेति * । नन्वेवमपि भिन्नवचनोपादानेन सह विवक्षाप्रदर्शनमयुक्तमन्यत्रादर्शनादत आह । * स्वरितादिति * । * तथैकशेषस्य * । अनुदात्तस्यानुदात्तयोश्चानुदात्तानाञ्चानुदात्तानामित्येवम्प्रदर्शनेनैकशेषस्य । तत्र यथाऽनुदात्तयोरित्यत्रानुदात्तानामित्येवं चैकशेषङ्कृत्वा पुनरेकशेषस्तद्वत् । अत्रैव विग्रहप्रदर्शनेन विभक्त्यन्तानामेकशेष इति न भ्रमितव्यम् । एवं प्रदर्शनस्थाने कार्यस्यप्रदर्शनमात्रतात्पर्यकत्वात्तन्त्रेण । एकशेषस्तर्हि व्यर्थ इति चेत् एकशेषशब्दस्य तत्परत्वस्यैव कल्पनात् । * द्वयोरपीति * । न चापिशब्दसमाश्रयणा बहूनां संयोगसञ्ज्ञाया फलाभावात् न सेत्यपिशब्दोपादानमनर्थकमिति वाच्यम् । बहुग्रहणलीयतादृशसमुदायसमुच्चायकत्वात् । ननु बहूनां संयोगसञ्ज्ञाया फलन्द्वयो सञ्ज्ञाव्यावृत्तिरेव भविष्यतीत्यत आह । * तत्र तत्रेति * । तथा च शास्त्रबोधस्य तत्फलस्यासम्भवेन बहूनां निष्फलत्वान्न भविष्यतीति भावः । * कुत्वन्न्यायमिति * । पदान्तत्वात् । परन्तु सञ्ज्ञास्वरूपभङ्गापत्त्या न कृतम् । * उचितेति * । सन्देहस्यैव तत्रानुदयादिति भावः । * तितउदेवेति * । तितउना दीव्यतीति विग्रहः । अत्र तकाराकारावयवकस्य त इति समुदायस्य संयोगसञ्ज्ञायां तीतीकारस्य गुरुसञ्ज्ञा स्यात् । न चैव घटेत्यादावप्यापादनसम्भवाद्विशिष्यात्रैतस्योपादानमनर्थकमिति वाच्यम् । अशोकवनिकान्यायेनास्योक्ते । यदि तु विजातीयव्यवहितभिन्ना सजातीया वर्णा

नुवादेन विहितस्येति वार्थात् । ध्वनितञ्चेदमत्रैव भाष्ये । अस्याश्च विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं तदाह । विधीयते इति । अत एवातो गुणे वृद्धिर्यस्येत्यादौ न दोषः । एतेन शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन त्यदादीनाम इत्यादिव्यावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थमित्यपास्तम् । एतन्मूलक एव विधौ परिभाषोपतिष्ठते नानुवादे इत्युद्द्योतः । एवञ्च पदोपस्थापकपरिभाषाविषये विधीयतइत्यस्यैवाऽध्याहारो बोध्यः । एवञ्च तस्मिन्निति निर्दिष्टे षष्ठीस्थाने इत्यादेरनुवादे ऽपि प्रवृत्तिः । तेन प्रत्ययस्थात्कात्पूर्वस्योदात्तस्वरितयोर्यण इत्यादौ न दोषः । उदीचामातः स्थाने इति स्थाने ग्रहणन्तु स्पष्टार्थमेव । तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वानिर्णयः । अत एव गुणादिपदानामिरूपदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता । तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः । इयञ्च एधितेत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं भिन्नमित्यादौ निषेध-

---

ध्वनितमिति * । लक्षणप्रतिपदोक्तपरिभाषया विवक्षितार्थकथनाभावेन ध्वनितमित्यर्थः । * विधेयसमर्पकेति * । विधेयतात्पर्यकतयोपात्तगुणवृद्धिपदश्रवणासिद्धमित्यर्थः । न च वृद्धिर्यस्येत्यत्र वृद्धिपदस्य प्रथमान्ततया प्रथमायाश्च विधेयबोधतात्पर्यकतया तत्रापि परिभाषोपस्थितिस्स्यादिति वाच्यम् । तत्सूत्रे तच्छब्दयुक्तस्य वृद्धिपदस्यैव निर्णयबोधकत्वात् । वृद्धिशब्दयुक्तोद्देश्यबोधकवाक्यार्थप्रधानार्थविशेषणबोधक एव । एवञ्चात्र सूत्रे विधीयत इति पदाध्याहारो बोध्यः । एतेन विधीयत इति पदाध्याहारेण वाक्यार्थपर्यवसानकथनेन एतत्सूत्रे गुणवृद्धिपदश्रवणमेव तदध्याहारे लिङ्गम् । * एतन्मूलक एवेति * । अध्याहारमूलक इत्यर्थः । * उद्द्योत इति * । एतेन तस्या उदीचामात इतिसूत्रोक्तस्थानशब्दस्यापि तत्र नेति सूचितम् । * प्रथमाया इति * । वृद्धिरचीत्यादौ । * अत एव * । विधेयसमर्पकत्वादेव । * वाक्यार्थान्वयितेति * । स्वार्थसमर्पणद्वारा । एतत्सूत्रप्रयोजनमाह । * इयञ्चेति * । ननु दुक् क्वित्यादिज्ञापकेनाकारादेर्गुणो न भविष्यतीत्यत आह । * भिन्नमित्यादाविति * । आदिना न्यधुक्षीत्यादिसङ्ग्रहः । केचित्तु विधौ परिभाषोपतिष्ठत इति परिभाषाज्ञापनार्थमुदीचामिति सूत्रे स्थानेग्रहणमावश्यकमेव । अत एव प्रतिदीव्न इत्यत्र व्यवहिताकारस्याच परस्मिन्निति स्थानिवत्त्वाल्लोपाभाव । किन्त्वेषा विधाविति परिभाषा पुनर्गुणवृद्धिपदोपादानेनानित्येति ज्ञायते । तेनोदात्तस्वरितयोरित्यनुवादे न दोष इत्याहुः । अत्रेदं चिन्त्यते । परिभाषासत्त्ववादिनः कोऽर्थोऽभिमतः साक्षादनूद्यमानविशेषणनियामिका परम्परया वा यद्विशेषणन्तन्नियामिका साक्षात्परम्परासा

प्रकरणमिति समाप्तमित्यर्थः। तेनाम्रेडितप्लुतप्रगृह्यसञ्ज्ञालोपसञ्ज्ञाद्यनुपन्यासेऽपि न क्षतिः। अ अ इत्याद्युपन्यासस्तु प्रासङ्गिकः॥

इति सञ्ज्ञाप्रकरणम्॥

इको गुण॥ परिभाषेयं, व्याख्यानात्। गुणवृद्धिशब्दाभ्यामिति। गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः। अनुवर्त्तमानश्च सञ्ज्ञिपरमेव स्यात्। सञ्ज्ञाकरणेनान्यत्र सञ्ज्ञिपरत्वात्। यद्वा तदप्यनुवर्त्य गुणो वृद्धिरिति योजनयैतल्लाभः। स्थादिष्वितिसूत्रेऽनुवृत्तपदपदस्य सञ्ज्ञापरताया एव दृष्टत्वात्। ष्णान्तेति सूत्रे सङ्ख्यापदस्य तदन्तत्वासम्भवादर्थपरतेति बोध्यम्। लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः। तत्र प्रतिपदोक्तस्येत्यस्य साक्षादुच्चारितस्येति साक्षात्तच्छब्दा-

---

नेनेष्टसिद्ध्या टेरित्यनुपादानेऽपि क्षतिविरहात्। मूले यदुक्तं टेरिति तत्फलितार्थकथनमित्याशयः। ननु कथं सञ्ज्ञानुक्रमे अ अइत्यस्य पूर्वत्रासिद्धमित्यस्य चोपादानमत आह। * अ अ इत्याद्युपेति। * प्रासङ्गिक इति *। न तु प्राधान्येनेति शेषः॥

इति सञ्ज्ञाप्रकरणम्॥

* इको गुणवृद्धी *। *परिभाषेयमिति*। न तु विधिः। तत्तद्विधायकशास्त्राणां वैयर्थ्यापत्तेः। नापि नियमः। प्रकरणोत्कर्षणकरणेन लाघवतात्पर्यकत्वात्। नाप्यधिकारः। पृथक्पाठसामर्थ्यादित्याशयेनाह। *व्याख्यानादिति*। सामर्थ्यादिति भाव इति *। यद्यप्येतत्सूत्रघटको गुणवृद्धिशब्दो गुणवृद्धिशब्दयोर्व्याकारादिलाक्षणिकः। ननु पूर्वसूत्रस्थयोर्गुणवृद्धिशब्दयोः स्वरूपपरतयाऽनुवृत्त्यैव सिद्धे इत्यनुपपन्नमत आह। * अनुवर्त्तमानामिति *। ष्णान्ता षडित्यत्र यथा। तथा च शब्दाधिकारेण सङ्ख्याशब्दो यथा स्वरूपबोधकसूत्रभिन्नसूत्रान्तरैकवाक्यतापन्नत्वादर्थपरस्तथाऽयमपि स्यात्। अनुवर्त्तमानगुणवृद्धिशब्दोभय पक्षे। सञ्ज्ञिबोधकत्वं साध्यम्। स्वस्वरूपबोधकसूत्रभिन्नसूत्रैकवाक्यतापन्नत्वं हेतुरित्यूह्यम्। स्पष्टप्रतिपत्तये वक्ष्यमाणदोषाच्च। पक्षान्तरमाह। * यद्वेति *। यो यत्सूत्रोपात्तश्शब्दस्स ततोऽन्यत्रार्थान्तरपर इति सामान्यतो न नियमः। स्थादिष्विति सूत्रे ऽनुवृत्तपदशब्दे व्यभिचारादित्याशयेनाह। * स्थादिष्विति *। सिद्धान्तरत्नाकरोक्तिं खण्डयति। * लक्षणेति *। साक्षादुच्चारितस्येति *। यथा गातिस्थेति सूत्रे पाघ्रा देन पापाने इत्यस्य धातुषु पठितस्य। *तत्तच्छब्दानुवादेनेति*। विभाषा दिक्समासे इत्यत्र दिङ्नाम्न्यन्तराल इति सूत्रे तद्बहुव्रीहिसञ्ज्ञाविशिष्टस्य यथा ग्रीमोपस्थितिकरमेयामुभयत्र हेतुर्बोध्य।

नुवादेन विहितस्येति वार्थात् । ध्वनितश्चेदमत्रैव भाष्ये । अस्याश्च विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं तदाह । विधीयते इति । अत एवातो गुणे वृद्धिर्यस्येत्यादौ न दोषः । एतेन शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन त्यदादीनाम इत्यादिष्वावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थमित्यपास्तम् । एतन्मूलक एव विधौ परिभाषोपतिष्ठते नानुवादे इत्युद्घोषः । एवञ्च पदोपस्थापकपरिभाषाविषये विधीयत इत्यस्यैवाऽध्याहारो बोध्यः । एवञ्च तस्मिन्निति निर्दिष्टे पष्ठीस्थाने इत्यादेरनुवादेऽपि प्रवृत्तिः । तेन प्रत्ययस्थात्कात्पूर्वस्योदात्तस्वरितयोर्यण इत्यादौ न दोषः । उदीचामातः स्थाने इति स्थाने ग्रहणन्तु स्पष्टार्थमेव । तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः । अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता । तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः । इयञ्च परितेत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं भिन्नमित्यादौ निषेध-

---

ध्वनितमिति * । लक्षणप्रतिपदोक्तपरिभाषया विवक्षितार्थकथनाभावेन ध्वनितमित्यर्थः । * विधेयसमर्पकेति * । विधेयतात्पर्यकतयोपात्तगुणवृद्धिपदश्रवणासिद्धमित्यर्थः । न च वृद्धिर्यस्येत्यत्र वृद्धिपदस्य प्रथमान्ततया प्रथमायाश्च विधेयबोधतात्पर्यकतया तत्रापि परिभाषोपस्थितिरस्त्विति वाच्यम् । तत्सूत्रे यच्छब्दयुक्तस्य वृद्धिपदस्यैव विधेयबोधकत्वात् । वृद्धिशब्दयुक्तोद्देश्यबोधकवाक्यार्थप्रधानार्थविशेषणबोधक एव । एवञ्चात्र सूत्रे विधीयत इति पदाध्याहारो बोध्यः । एतेन विधीयत इति पदाध्याहारेण वाक्यार्थपर्यवसानकरणेन एतत्सूत्रे गुणवृद्धिपदश्रवणमेव तदध्याहारे लिङ्गम् । * एतन्मूलक एवेति * । अध्याहारमूलक इत्यर्थः । * उद्घोष इति * । एतेन तस्या उदीचामात इतिसूत्रोक्तस्थानशब्दस्यापि तत्र नेति सूचितम् । * प्रथमाया इति * । वृद्धिरेचीत्यादौ । *अत एव* । विधेयसमर्पकत्वादेव । *वाक्यार्थान्वयितेति * । स्वार्थसमर्पणद्वारा । एतत्सूत्रप्रयोजनमाह । *इयञ्चेति* । ननु क्नुकः कित्त्वादिज्ञापकेनाकारादेर्गुणो न भविष्यतीत्यत आह । * भिन्नमित्यादाविति * । आदिना न्यधुक्षीत्यादिसङ्ग्रहः । केचित्तु विधौ परिभाषोपतिष्ठत इति परिभाषाज्ञापनार्थमुदीचामिति सूत्रे स्थानेग्रहणमावश्यकमेव । अत एव प्रतिदीव्न इत्यत्र व्यवहिताकारस्याच परस्मिन्निति स्थानिवत्त्वाल्लोपाभाव । किन्त्वेषा विधाविति परिभाषा पुनर्गुणवृद्धिपदोपादानेनानित्येति ज्ञायते । तेनोदात्तस्वरितयोरित्यनुवादे न दोष इत्याहुः । अत्रेदं चिन्त्यते । परिभाषासत्त्ववादिनः कोऽर्थोऽभिमतः साक्षादनूद्यमानविशेषणनियामिका परम्परया वा यद्विशेषणन्तन्नियामिका साक्षात्परम्परासा-

प्रकरणमिति समाप्तमित्यर्थः । तेनाम्रेडितप्रगृह्यसञ्ज्ञालोपसञ्ज्ञानुपन्यासेऽपि न क्षतिः । अथ इत्याद्युपन्यासस्तु प्रासङ्गिकः ॥

इति सञ्ज्ञाप्रकरणम् ॥

इको गुण ॥ परिभाषेयं, व्याख्यानात् । गुणवृद्धिशब्दाभ्यामिति । गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः । अनुवर्त्तमानञ्च सञ्ज्ञिपरमेव स्यात् । सञ्ज्ञाकरणेनान्यत्र सञ्ज्ञिपरत्वात् । यद्वा तदप्यनुवर्त्य गुणो वृद्धिरिति योजनयैतल्लाभः । स्वादिष्विति सूत्रेऽनुवृत्तपदस्य सञ्ज्ञापरताया एव दृष्टत्वात् । ष्णान्तेति सूत्रे सङ्ख्यापदस्य तदन्तत्वासम्भवादर्थपरतेति बोध्यम् । लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः । तत्र प्रतिपदोक्तस्येत्यस्य साक्षादुच्चारितस्येति साक्षात्तच्छब्दा-

---

नेनेष्टसिद्धौ टेरित्यनुपादानेऽपि क्षतिविरहात् । मूले यदुक्तं टेरिति तत्फलितार्थकथनमित्याशयः । ननु कथं सञ्ज्ञानुक्रमे अ अङ्गस्येत्यस्य पूर्वत्रासिद्धमित्यस्य चोपादानमत आह । * अथ इत्याद्युपेति । * प्रासङ्गिक इति * । न तु प्राधान्येनेति शेषः ॥

इति सञ्ज्ञाप्रकरणम् ॥

* इको गुणवृद्धी * । *परिभाषेयमिति* । न तु विधिः । तद्विधायकशास्त्राणां वैयर्थ्यापत्तेः । नापि नियमः । प्रकरणोत्कर्षेण करणे लाघवतात्पर्यकत्वात् । गाव्यधिकारे । पृथक्पाठसामर्थ्यादित्याशयेनाह । * व्याख्यानादिति * । सामर्थ्यादिति भाव इति * । एवञ्चैतत्सूत्रघटकौ गुणवृद्धिशब्दौ गुणवृद्धिशब्दयोर्व्याकारादिलाक्षणिकौ । ननु पूर्वसूत्रस्थयोर्गुणवृद्धिशब्दयोः स्वरूपपरतयाऽनुवृत्त्यैव सिद्धे इत्यनुपपन्नमत आह । * अनुवर्त्तमानामिति * । ष्णान्ता षडित्यत्र यथा । तथा च शब्दाधिकारेण सङ्ख्याशब्दा यथा स्वरूपबोधकसूत्रभिन्नसूत्रस्थैकवाक्यतापन्नत्वादर्थपरास्तथाऽयमपि स्यात् । अनुवर्त्तमानगुणवृद्धिशब्दोभय पक्षे । सञ्ज्ञिबोधकत्वं साध्यम् । स्वस्वरूपबोधकसूत्रभिन्नसूत्रैकवाक्यतापन्नत्वं हेतुरित्यूह्यम् । स्पष्टप्रतिपत्तये वक्ष्यमाणदोषाच्च । पक्षान्तरमाह । * यद्वेति * । यो यत्सूत्रोपात्तशब्दस्स ततोऽन्यत्राप्यन्यपर इति सामान्यतो न नियमः । स्वादिष्विति सूत्रेऽनुवृत्तपदशब्दे व्यभिचारादित्याशयेनाह । * स्वादिष्विति * । सिद्धान्तरत्नाकरोक्तिं खण्डयति । * लक्षणेति * । साक्षादुच्चारितस्येति * । यथा गातिस्थेति सूत्रे पाशब्देन पापाने इत्यस्य धातुषु पठितस्य । *तत्तच्छब्दादुपादानेति* । विभाषा दिक्समासे इत्यत्र दिङ्नामान्यन्तराल इति सूत्रस्थबहुव्रीहिसञ्ज्ञाविशिष्टस्य यथा शीघ्रोपस्थितिकरमेवामुभयत्र हेतुर्बोध्यः ।

नुवादेन विहितस्येति वार्थात् । ध्वनितञ्चेदमत्रैव भाष्ये । अस्याश्च विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्ग तदाह । विधीयते इति । अत एवातो गुणे वृद्धिर्यस्येत्यादौ न दोषः । एतेन शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन त्यदादीनाम इत्यादिव्यावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थमित्यपास्तम् । एतन्मूलक एव विधौ परिभाषोपतिष्ठते नानुवादे इत्युद्घोषः । एवञ्च पदोपस्थापकपरिभाषाविषये विधीयतइत्यस्यैवाध्याहारो बोद्धव्यः । एवञ्च तस्मिन्निति निर्दिष्टे पष्ठीस्थाने इत्यादेरनुवादे ऽपि प्रवृत्तिः । तेन प्रत्ययस्थात्कात्पूर्वस्योदात्तस्वरितयोर्यण इत्यादौ न दोषः । उदीचामातः स्थाने इति स्थाने ग्रहणन्तु स्पष्टार्थमेव । तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः। अत एव गुणादिपदानामिकपदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता । तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः । इयञ्च एधितेत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं भिन्नमित्यादौ निषेध-

---

ध्वनितमिति * । लक्षणप्रतिपदोक्तपरिभाषया विवक्षितार्थकथनाभावेन ध्वनितमित्यर्थः । * विधेयसमर्पकेति * । विधेयतात्पर्यकतयोपात्तगुणवृद्धिपदश्रवणासिद्धमित्यर्थः । न च वृद्धिर्यस्येत्यत्र वृद्धिपदस्य प्रथमान्ततया प्रथमायाश्च विधेयबोधतात्पर्यकतया तत्रापि परिभाषोपस्थितिस्स्यादिति वाच्यम् । तत्सूत्रे तच्छब्दयुक्तस्य वृद्धिपदस्यैव विधेयबोधकत्वात् । वृद्धिशब्दयुक्तोद्देश्यबोधकवाक्यार्थप्रधानार्थविशेषणबोधक एव । एवञ्चात्र सूत्रे विधीयत इति पदाध्याहारो बोध्य । एतेन विधीयत इति पदाध्याहारेण वाक्यार्थपर्यवसानकरणेन एतत्सूत्रे गुणवृद्धिपदश्रवणमेव तदध्याहारे लिङ्गम् । * एतन्मूलक एवेति * । अध्याहारमूलक इत्यर्थः । * उद्घोष इति * । एतेन तस्या उदीचामात इतिसूत्रोक्तस्थानशब्दस्यापि तत्त्व नेति सूचितम् । * प्रथमाया इति * । वृद्धिरेचीत्यादौ । *अत एव* । विधेयसमर्पकत्वादेव । *वाक्यार्थान्वयितेति * । स्वार्थसमर्पण द्वारा । एतत्सूत्रप्रयोजनमाह । *इयञ्चेति* । ननु लुकः क्त्वादिज्ञापकेनाकारादेर्गुणो न भविष्यतीत्यत आह । * भिन्नमित्यादावेति * । आदिना न्यग्धुर्वीत्यादिसङ्ग्रहः । केचित्तु विधौ परिभाषोपतिष्ठत इति परिभाषाज्ञापनार्थमुदीचामिति सूत्रे स्थानेग्रहणमावश्यकमेव । अत एव प्रतिदीव्न इत्यत्र व्यवहिताकारस्याच परस्मिन्निति स्थानिवत्त्वाल्लोपाभाव । किन्त्वेषा विधावेति परिभाषा पुनर्गुणवृद्धिपदोपादानेनानित्येति ज्ञाप्यते । तेनोदात्तस्वरितयोरित्यनुवादे न दोष इत्याहु । अत्रेदं चिन्त्यते । परिभाषासत्त्ववादिनः कोऽर्थोऽभिमत साक्षादनूद्यमानविशेषणनियामिका परम्परया वा यद्विशेषण तन्नियामिका साक्षात्परम्परासा-

प्रवृत्तये इग्लक्षणत्वसम्पत्यर्थश्चेति दिक् ।

प्लुतश्चेरिति । ऊकाल इति सूत्राद् ह्रस्वदीर्घप्लुत इत्यजिति चानुवर्त्तते ह्रस्वेत्यादिपदञ्च तृतीयया विपरिणतमिति भाव । तेन दिव उत्पुन आ विभक्तावित्यादावेतदनुपस्थिति । शेष प्राग्वत् ।

आद्यन्तौ ॥ यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न प्राप्नोति तथापि समूहयोरन्वयबोधोत्तर यथासंख्यमिति सूत्रारम्भसामर्थ्यात्पुनः प्रत्येकान्वयः । लोके त्वेव रीत्या प्रयोगो ऽसाधुरेवेति भाष्ये स्पष्टम् । अनेन यथासंख्यसूत्रोपन्यासो युक्तः । द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येक संबन्धः । पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवाद । प्रत्ययपरत्वन्तु पर-

---

धारणविशेषणनियामिकेति वा । नाद्य । इकोयणचीत्यस्य व्यवहितेपि प्रवृत्त्यापत्ते तस्मिन्निति सूत्रेणैव व्यापत्तेश्च । न द्वितीय । स्थानेग्रहणस्य ज्ञापकत्वा सङ्गते । न तृतीय । इको यणचीत्यादौ लोपनादवस्थ्यात् । प्रतिदर्शनेत्यत्र स्थानिवद्भावस्तु न पदान्तेतिसूत्रे दीर्घग्रहणेन ज्ञापकेनाच परस्मिन्नित्यत्र पूर्वस्यस्य व्यवहिताव्यवहितसाधारण्येन कल्पनेन सिद्ध । परिभाषाभावादेवो वात्तस्थाने यणित्यस्य षष्ठीस्थान इति परिभाषया लाभ । न च विधायिति परिभाषाभावे अच परस्मिन्नित्यस्य व्यवहितेपि प्रवृत्त्यर्थम् । दीर्घग्रहणस्य ज्ञापकत्व कल्पनीयमिति गौरवमिति वाच्यम् । परिभाषासत्त्वे तत्र स्थानेग्रहणस्य ज्ञापकत्व तदनित्यत्वे च मत्तत्सूत्रस्थगुणवृद्धिग्रहणस्य ज्ञापकत्व कल्पनीयमिति मत्पक्ष एव गौरवात् ॥

*शेषमिति*। तत् अत्रापि विधीयते इत्यस्याध्याहार । तस्मिन्सति यत्र विधेयसमर्पकह्रस्वादिपदोपादानं तत्राच इत्यस्योपस्थितौ सम्भवति सामानाधिकरण्ये इति न्यायेन ह्रस्वो नपुंसक इत्यादौ सामानाधिकरण्येन ह्रस्वमेघानामित्यादौ वैयधिकरण्येन सम्बन्ध इति लक्ष्यानुसारिव्याख्यानात्कल्पनीयमिति भाव ।

* नैकत्रान्वय इति * । यत्रैको धर्मा ऽन्वयितावच्छेदकस्तत्रैव साहित्यव्यवहारस्य प्रसिद्धत्वादिति भाव । * समूहयोरिति * । साहित्यस्योद्देश्यतावच्छेदकत्वस्य विधेयतावच्छेदकत्वञ्च प्राथमिकबोधे तता यथासङ्ख्यसूत्रसहायेन लक्ष्यसंस्कारसिद्ध्यर्थं द्वितीयोपि बोध कल्प्यत इति भाव । * लोक इति * । अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजा धन कस्याव इति भाष्यात् । तत्र गमकाभावेन प्रत्येकमन्वय । इह तु यथासङ्ख्यसूत्रमेव गमकमिति भाव । अत एवाह । *अनेनेति* । *द्वन्द्वान्त इति* । यदि द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमन्वयस्तदैव साहित्यस्योपपत्ति । एव द्वन्द्वादौ श्रूयमाणस्यापि सम्बन्धो बोध्य । * पुरस्तादिति * । वाक्यविशेषाविवक्षितयेति भाव । * परे

त्वादमुं बाधते तेन परेणादयः परा एव भवन्ति । अत एवयत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते अदाह । यस्योक्तानिति । आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः । यथासंख्यसिद्धमर्थमाह । क्रमादिति । इताविति किम् । टुक् पर्यायेणाद्यन्तयोर्मा भूत् ।

मिद्चो । अथ बाध्यसामान्यचिन्तया स्थानेयोगत्वप्रत्ययपरत्वयोरपवादः । तृणह इति निर्देशात् । निर्धारणे इति । यस्य समुदायस्य मिद्विहितस्तस्याचां मध्ये इत्यर्थः । सौत्रमेकवचनमिति भावः । तस्यैवेति । यस्य विहितस्तस्यैवेत्यर्थः । अत एव समुदायभक्तो नोत्सहते ऽवयवस्येगन्तता विहन्तुमिति भाष्यं सङ्गच्छते । अन्तावयव इति । पूर्वसूत्रात्समस्तमप्यन्तपदमेकदेशे स्वरितत्वप्रतिज्ञाबलादनुवर्त्तते इति भावः । मुञ्चतीत्यादिविषये तु फलाभावादयोग्यत्वाच्चान्तावयव इत्यस्याप्रवृत्तिः ।

---

एवादय इति * । आदिना ल्युडादिसङ्ग्रहः । * अत एव * । स्थानेयोगत्वमात्रापवादत्वादेव । प्रकृतार्थलाभायाह । * आद्यन्ताक्षिप्त इति * । एतेनाक्षेपः प्रकृते युक्त एव । आद्यन्तावयववाचकपदस्यावयविनि नित्यसाकाङ्क्षत्वात् शब्दाध्याहारो बोध्यः । * इताविति किमिति * । टकारादित्येवार्थे आद्यन्तमस्त्वित्यभिप्रायेण प्रश्नः । न चैकेन ककारेण टुकोऽन्त्यावयवत्वे सिद्धे ककारद्वयोच्चारणमेवैतत्सम्बन्धेन परावयवत्वबोधनं नान्येनेत्यत्र ज्ञापकम्भविष्यतीति प्रकृतमित्ग्रहणं व्यर्थमिति वाच्यम् । ककारद्वय एव विशेषापेक्षज्ञापकत्वसम्भवात् ।

मिदच इति सूत्रविषये बाध्यसामान्यचिन्तायां ज्ञापकमाह । * तृणहेति * । * अत एव * । समुदायावयवत्वस्वीकारादेव । एवञ्च पञ्चारत्नीनीत्यत्र नुम समुदायभक्तत्वात्त्रिगन्तत्वात्तेति स्वरसिद्धिस्तदाह । * समुदायेत्यादि * । इत्यस्या प्रवृत्तिरिति * । परत्वादास्तु प्रवर्त्तत एव । तेन न मुचादीनामित्यस्य स्थानषष्ठीत्वसम्भावनयाऽलोन्त्यपरिभाषाप्रवृत्तिः । परशब्देन चात्र न परावयवत्वबोधनं किन्तु यस्य मिद्विहितस्तस्य योन्त्याच् ततः परत्वमात्रम् । अन्यथा पञ्चारत्नीनीत्यत्र स्वरासिद्धिस्स्यात् । अमुञ्चदित्यादौ मुमि कृते विशिष्टस्याङ्गत्वन्तु तन्मध्यपतितन्यायेन । न चावयवावयवस्य समुदायावयवत्वेन यस्यार्द्धधातुकेति सूत्रविहितेट् तस्य टित्त्वबुद्धिस्स्यात् । एवञ्च कारिता सङ्घुद्धिरित्यादौ टित्यान्ङीबापत्तिरिति वाच्यम् । तुडादित्त्वेनैव सिद्धे टयुट्युलौ टित्त्वेनागमे तत्सम्बन्धहारसम्पादकानुबन्धस्य न स्वीयागमस्य यत्रागमत्वन्तद्घटितसमुदाये तत्सम्बन्धप्रयोजकत्वमिति स्वीकारात् । न चावयवानुबन्धस्य समुदायोपकारकत्वाभावे तुल्यन्यायेन धेटष्टित्त्वात्स्तनन्धयीति प्रयोगस्यासिद्धिरेव सति स्यादिति

परिभाषाणामनियमे नियमकारिणीत्वादाह । अनिर्धारितेति । तेनोदुपधाया गोह इत्यत्र स्थानेयोगत्वं न । उपधापदसन्निधानेनावयवषष्ठीत्वनिर्णयात् । स्थानेयोगेत्यस्य स्थानपदार्थनिरूपितसम्बन्धार्थिकेत्यर्थः । स्थानेन योगो यस्या इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात् । अस्ते रनन्तरे इत्यादेरपि अनन्तरादिनिरूपितसम्बन्धे इत्येवार्थः । षष्ठीमात्रोच्चारणे स्थानपदार्थाध्याहार इत्यन्यत्र विस्तरः । प्रसङ्ग इति । दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथा दर्शनात् । भावे ल्युट् स्थानशब्दे । प्रसङ्गश्च सति सम्भवे ऽर्थवत एव । अर्थप्रत्यायनार्थं शब्दप्रयोगात् । इको यणित्यादेरप्य-रेकारघटितशब्दस्यार्थबोधनाय प्रसक्ते तत्परयकारघटितं प्रयोक्तव्य इत्यर्थः ।

---

वान्यम् । द्विरुक्तस्य धातावुपकाराभावेन समुदायोपकारसम्भवात् । आगम विषय एव पूर्वोक्तज्ञापककल्पनाच । इत्थञ्च यत्रावयवसम्बन्ध्यनुबन्धोऽवयवस्यो पकारं करोति स समुदायानुबन्धो न भवति, यत्र तु नावयवोपकारस्तत्र समु दायोपकारकत्वं कल्प्यत इति दिक् ।

* स्थानपदार्थेत्यादि * । स च सम्बन्ध आदेश्यादेशभावरूप । * निपा तनादिति * । तृतीयासमासे निपातनादेत्वमिति भाव । स्थानरूप सम्बन्धो न षष्ठ्यर्थ स्थान योगस्सम्बन्धो यस्या इत्यर्थकस्थानयोगेत्युपादानेन सिद्धे तृतीयाया एव निपातनादिति भाष्येण तथा बोधनादेव व्यधिकरणबहुव्रीहि करणमिति ज्ञापकमिति बोध्यम् । नन्वेवमस्तेर्भूरिति सूत्रघटकषष्ठ्यर्थोऽस्तेरनन्तरे ष्मीपि चेत्यादिभाष्ये अनन्तरादिपदोपादानेन तेषां षष्ठ्यर्थत्व कल्प्यते । तथा च स्थानात्मक एव सम्बन्ध षष्ठ्यर्थो भविष्यतीत्यत आह । *अस्तेरनन्तर इति* । एवञ्च यद्यनन्तरपदाध्याहारस्स्यात्तदाऽनन्तरपदार्थनिरूपितो योऽव्यवहितदेश वृत्तित्वरूपस्सम्बन्धस्स भूशब्दे प्रतीयेत । परन्तु प्रकृते षष्ठीस्थानेयोगेतिशास्त्र बलात् स्थानपदार्थनिरूपितसम्बन्धार्थिका षष्ठी बोध्या । परिभाषाया अनियमे नियमकारकत्वस्वभावत्वाच्च षष्ठीमात्रोच्चारणेनानेकसम्बन्धसम्भावना तत्र षष्ठ्या स्थानपदार्थनिरूपितसम्बन्धार्थकत्वमनया बोध्यत इति निष्कर्ष । * अन्यत्र * । *उद्योतादौ* प्रसङ्ग इति । ननु स्थानपदस्य प्रसङ्गार्थकत्वमन्यत्र न दृष्टमत आह । * दर्भाणामिति । सति सम्भव इति * । एतेन इको यणची त्यादौ तस्मादित्युत्तरस्येत्यादिनिर्देशादनर्थकस्य स्थानित्वेपि न क्षति । शब्दा नाश्रित्यत्वसमर्थनाय कल्पनायामप्याह । * इको यणचीति * ।* अर्थबोधनाय प्रसङ्ग इति * । आनुमानिकस्थान्यादेशभावकल्पक वाक्य स्थान्यर्थबोधनसमर्थ मेव कल्प्यते इति भाव । कार्यविपरिणामात्सिद्धमिति वार्तिकरीत्याह ।

एरुरित्यादेश्च तेस्तुरिति, अतो न शब्दनित्यताहानिः । किं चेकारबुद्धिप्रसङ्गे वकारबुद्धिरित्यर्थः । अत एवाचः परस्मिन्नित्यादि सङ्गच्छते । स्पष्टश्चेदं दाधाघ्विति सूत्रेस्थानिवत्सूत्रयोर्भाष्ये ।

स्थानेऽन्त ॥ षष्ठीत्यनुवृत्त्या यत्र स्थानषष्ठी तत्रेदमुपतिष्ठते इति विध्येकवाक्यतयैवास्य नियामकत्वं न तु विहितानां नियमः । भुक्तवन्तमिति न्यायविरोधात् । फलितमाह । प्रसङ्गइति । सदृशतम इति । अर्थात्प्राप्यमाणानां मध्यएव । अत एव गङ्गोदकमित्यादौ त्रिमात्रो न । तमप् किम् । वाग्घरिरित्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयो मा भूत् । किं तु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति । स्थाने ऽन्तरतमे इति सप्तम्यन्तपाठस्तु दीर्घेषु यणसिद्ध्या दुष्ट इति भाष्ये स्पष्टम् । यत्रानेकेति । स्थानेग्रहणे एकदेशानुवृत्त्या ऽनुवर्त्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति सम्भवे स्थानत एवान्तरतम इत्यर्थमिति भावः । स्थानत इति । स्थानेनेत्यर्थः । तत्र स्थानत इको यणचीति, अर्थतस्तृज्वत्क्रोष्टुरिति । इह क्रोष्टुशब्दस्थाने पञ्चतृशब्दो

---

* किञ्चेकारेति * । कार्यस्य सम्प्रत्ययस्य विपरिणाम इति तद्र्थ । एवञ्च विषयियुद्द्युन्मज्जननिमज्जनयोर्विषये आरोपेण तयोस्स्थान्यादेशभावव्यवहार सङ्गच्छत इति अन्यथा सर्वत्र समुदायादेशत्वेऽजादेशाप्रसिद्धिरेव स्यादिति भाव । * दाधाघ्विति * । तत्र हि प्रनिदापयतीत्यत्र णत्वभावार्थं कृतस्य समानशब्दानाम्प्रतिषेध इति वार्त्तिकस्यार्थात्परिभाषाखण्डनं कृत्वा प्रणिदापयतीत्यत्र णत्वाप्राप्तिमाशङ्क्य न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते इत्युक्त्वा नित्येष्वागमविधानमनुपपन्नमित्याशङ्क्य नित्येष्वादेशशासनं यथा बुद्धिविपरिणामेन तथात्रापीत्याशयेनादेशास्तर्हि भविष्यन्ति अनागमकानां सागमका आदेशा कथं सर्वं सर्वपदादेशा इत्युक्तम् । स्थानिवत्सूत्रे तु कार्यविपरिणामादिति, स्पष्टमेवाभिप्रेतम् । * अत एव * । प्राप्यमाणानामित्यर्थकरणादेव । * त्रिमात्रो नेति * । अदेङ्गुण इति सूत्रे तपरकरणात् । * स्थानेऽन्तरतम इति * । स्थानेऽन्तरतम उरणपर इतिसहितापाठेऽन्तरतमशब्दस्सप्तम्यन्त प्रथमान्तो वेति सन्देह सप्तम्यन्तपाठेआदेशानुरोधेन स्थानिसङ्कोच । प्रथमान्तत्वे स्थान्यनुरोधेनादेशसङ्कोच । तत्र सप्तम्यन्तच्छेदो न युक्त । दीर्घेषु यणोऽसिद्ध्यापत्ते स्तत्र स्थानिनोऽत्यन्तविलक्षणत्वात् । * तृज्वत्क्रोष्टुरितीति * । यदि तु तृज्वत्क्रोष्टुरिति त्रिसूत्री प्रयोगनियमार्थेति नायमादेश इति विभाव्यते तदा सर्वं सर्वपदादेशा इति पक्षे एरुरित्यत्र श्रुतयोस्स्थान्यादेशयोर्बोधकपदयोस्त

नादेशः । गुणतस्तु वाग्घरिरित्यादौ । प्रमाणतो ऽदसो ऽसेरित्यादौ ।

तस्मिन्निति । अत्र तस्मिन्निति पञ्चतत्र तस्मादिति सप्तम्यन्तपदपञ्च-म्यन्तपदार्थक' स्वतन्त्रस्य सर्वनाम्नो निर्देशो व्याख्यानात् । बहुलस्यस स्कारानुरोधाच्च । न तु तत्तत्पदपरम् । अन्यथा तस्मिन्नणि च तस्मान्नुडचि तस्माच्छसो न इत्यत्रैव प्रवर्तेयाताम् । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दा-र्थत्वमिति बोधनाय तद्बोध्यार्थस्य निर्दिष्टइत्यनेन सामानाधिकरण्याय च । इतिशब्दः पुनस्तस्य तदर्थपरत्वं बोधयति । निःशब्दो नैरन्तर्ये दिशिरुच्चा-रणे । एवञ्च सप्तम्यन्तार्थे ऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमि ति वाक्योऽर्थः । एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्चम्यन्त-पदस्य चार्थो लिङ्गम् । अत्र सूत्रे उपश्लिष्टपदाध्याहारेण निर्दिष्टइति औप-श्लेषिके ऽधिकरणे सप्तम्येवोचिता,उपपदविभक्तेरिति न्यायात् । न तु सति-सप्तमीति तत्र च दीयते इति सूत्रे कैयटे स्पष्टम् । स्तुक्रमोरिति सूत्रे च कै-यट आह तस्मिन्निति परिभाषायां सत्यां सतिसप्तम्याश्रयणमशक्यमिति । उपश्लेषः समीपवर्तित्वं तच्च वर्णयोर्दौन्द्रष्टव्यम् । एवमिको यणचीत्यादा-

---

वन्तपरतया इयणा तस्योवर्णान्तादेशः इति कल्पनायामपि भवतीत्यत्र तिशब्द स्य तुशब्द एव न तु तुशब्द इत्यत्रार्थत आन्तरतम्यमेव नियामकम् ।

* व्याख्यानादिति * । तस्मिन्नणि च युष्माकास्माकाविति सूत्रस्य यौष्माकीण अस्मभ्य देहीत्यत्र परस्यादेशनिवृत्ति पूर्वसूत्रस्योच्चरण आनुपलम्भत इत्यत्रोत्त रसूत्रस्य पूर्वदासयययमकारेऽप्रवृत्तिश्च फल यद्यपि स्यसमानानुपूर्वीकानुकार्य-ग्रहण सम्भाव्यते तथापि तस्मिन्नणि चेत्यत्र निर्दिष्टयो प्रत्ययत्यात्ताभ्या यस्मा द्विहितस्तदादेरित्यस्याक्षेपेण तस्माच्छसो नस्तस्मान्नुडचीत्यनयो परस्येत्युपा दानेन या दोषाभावस्सूत्रव्यानारम्भेपि साधयितु शक्य इत्याशयमूलकाद्बहुल स्यसस्कारानुरोधाच्चेत्यर्थस्तदाह । * व्याख्यानादित्यादि * । * सप्तम्यन्ता नामिति * । तत्तत्सूत्रावयवानामचि इलीत्यादीनाम् । नन्वेवमितिशब्दो व्यर्थ इत्यत आह । * इति शब्द इति * । इतिशब्दाभावे सप्तम्यन्तपदानामेव सप्त मीप्रकृतिवाच्यत्व स्यात्तथा च तस्य लक्ष्यस्य निरन्तरोच्चरितत्वासम्भव इति भाव । *तस्य* ।सप्तम्यन्ताचीत्यादिपदस्य । *तदर्थपरत्वम्* । सप्तम्यन्तपदा र्थपरत्वम् । न च नेड्वशि इति उरसीत्यादिपञ्चम्यर्थसप्तमीनिर्देशो यत्र तत्रापि तस्मिन्निति सूत्रप्रवृत्तिस्स्यादिति वाच्यम् । तदर्थपरत्वमित्यस्य सप्तम्यर्थविशि ष्टप्रकृत्यर्थपरत्वमित्यर्थ । नेड्वशीत्यादौ तु न सप्तम्यर्थ इति भाव । * पदस्य चार्थ इति * । सप्तम्यर्थविशिष्टप्रकृत्यर्थो लिङ्गमित्यर्थ । न च सप्तमीनिर्दिष्टे पूर्वस्येति कुतो न सूत्रितमिति वाच्यम् । तथा सप्तमीपद यत्रोच्चरित तत्र सर्व स्याज्ञेड इत्यादावेव प्रवृत्त्यापत्तेः । * वोत्तमिति * । शब्दयोरुपश्लेषो न सं

वर्णीयमेवेति संहितायामिति सूत्रे भाष्ये । तत्रोपश्लेषः पूर्वस्यैव परस्याव्यवहितस्यैव व्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात् वर चित्सतीत्यध्याहारात्सप्तम्याश्रयणेनास्याः प्रवृत्तिरिति श्नान्नलोप इत्यत्र भाष्ये उक्तम् । अत एव कर्तृकर्मणोः कृतीत्यत्र नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थः कर्तृकर्मणोः षष्ठीति तदर्थात् । तस्मादिति सूत्रे निर्दिष्ट इति निर्दिष्टादित्यर्थक विभक्तिविपरिणामात् । सा चोत्तरस्येति दिग्योगलक्षणेति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः । उदः स्था इत्यादौ चोद इति दिग्योगलक्षणा पञ्चमी । तत्रानियतादिरूशब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति तस्मादित्यनेन नियम्यते । अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थस्तत्फलितमाह । सप्तमीनिर्देशेनेत्यादि । यदि तु अर्धमात्राधिक कालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपद संहिताधिकारश्च विफल

---

योग । द्रव्ययोरेव संयोगात् । नापि स्वोत्पत्त्यधिकरणक्षणाव्यवहितक्षणोत्पत्तिकत्वम् । वर्णस्य नित्यत्वात् । किन्तु स्वज्ञानाधिकरणक्षणाव्यवहितक्षणवृत्तितत्समानाधिकरणज्ञानविषयत्वम् । एवञ्चोपश्लेषो बुद्धिकृत एव पर्यवसन्न इति भाव । न चायमुपश्लेष पूर्वपरसाधारणो यद्यव्यवधानगर्भस्तदा तस्य व्यवहितसाधारण्यञ्चोपपद्यत इति निर्दिष्टपद व्यर्थमिति शङ्क्यम । ज्ञानस्य द्विक्षणवृत्तितया सुद्ध्युपास्य इत्यत्रोपशब्दावयवोकारविषयकज्ञानाव्यवहितक्षणवृत्तिज्ञानविषयत्व यथा धकारेकारे तथा ईकाराधिकरणाव्यवहितधकारज्ञानोत्पत्त्यधिकरणक्षणवृत्तिज्ञानविषयत्व सु इत्युकारविषयकज्ञानेपाते सुशब्दावयवोकारस्य यणभावार्थं निर्दिष्टपदोपादानात् । यदि च स्वविषयकज्ञानोत्पत्त्यधिकरणक्षणाव्यवहितक्षणोत्पन्नज्ञानविषयत्वमेवोपश्लेषस्स च स्वाभाविकार्द्धमात्राकालव्यवधानेनोच्चारणे एव न तु तदधिककालेनोच्चारणे इति कल्प्यते । तदा निर्दिष्टपद व्यर्थमेव । तदेतद्वक्ष्यति । * यदि त्वर्द्धेत्यादि * । * नियमार्थमिदमिति * । एतेनैतयो परिभाषात्व ध्वनितम् । * श्नान्नलोप इति सूत्रे भाष्ये उक्तमिति * । तत्र हि किमर्थं श्नम शकारस्य ग्रहण क्रियते इति प्रश्ने नन्दिता नन्दक इत्यत्रापि प्राप्नोतीति दोषे कथिते क्ङितीति वर्त्तते एवमपि हिनस्तीत्यत्र न प्राप्नोति । नैषा परसप्तमी का तर्हि सत्सप्तमी क्ङिति सति एवमपि नन्दमान इत्यत्रापि प्राप्नोति एवन्तर्हि नशब्द एव क्ङित्त्वेन विशिष्यते क्ङिच्चेन्नशब्दो न भवतीत्युक्तम् । एतेन प्रघट्टकेनैवोपश्लेषिकाधारे यत्र सप्तमी तत्र तस्मिन्निति परिभाषाप्रवृत्तिरिति लभ्यते । ननु व्यवहितेऽर्द्धमात्राधिककालेन वा व्यवधानेऽप्युपश्लेषस्तत्राऽवग्रहेऽप्यानङ् भवति भवदुक्तनियमे स न स्यादत

इति संहितायामिति सूत्रे भाष्ये स्पष्टम् । अवग्रहे च समन्ताय एवं शरण मिति आनङादिविषये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक् । अकृतव्यूह-परिभाषा त्वनित्या नास्त्येव वा । न लक्षणेन पदकारा अनुवर्त्याः, पद-कारैर्नाम लक्षणमनुवर्त्यमिति भाष्येण तदनुरोधेन शाखासङ्कोचस्य शास्त्र-करणाभावस्य च स्पष्टमुक्तत्वाच्च । एतेन संहिताधिकारस्तद्बहिर्भूतानामर्ध मात्राधिककालव्यवाये प्रवृत्तिज्ञापनार्थस्तेनाग्नाविष्णू इत्यादाववग्रहे आन-ङादिसिद्धिरित्यपास्तम् । प्रत्ययः परश्चेत्यादौ तूत्तरागनिरूला तस्मादिति परिभाषा प्रवर्त्तते । तेन न प्रत्यया व्यवहिता' । अत एव छन्दसि परे ऽपि व्यवहिताश्चेति सूत्र सार्थकम् । आगमविधावप्याने मुगित्यादौ तस्मिन्निति परिभाषया पूर्वसम्बन्धित्वनिर्णयः । अत एवात्र पूर्वस्येत्यादि न स्थानषष्ठी । तत्तद्विधिभिरेव सम्बन्धस्य निर्णीतत्वेन षष्ठी स्थानइत्यस्याप्रवृत्ते' । गाङ्कुटा-दिभ्य इत्यादावपि षष्ठ्यशविकलैतत्परिभाषाप्रवृत्तिर्बोध्या । परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्र न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्या-दित्येतावतेति दिक् ।

अलोऽन्त्यस्य ॥ षष्ठी स्थाने इत्यनुवर्त्तते तदाह । षष्ठीत्यादि । स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थ । स्थानेत्यादि किम् । इद् वृत ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति । साहचर्यादल इति षष्ठ्यन्तमन्त्य स्याल इत्यर्थः । अल इति किम् । पदस्येति विधीयमान वसुस्रंस्विति दत्व-स्यनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् । स्थाने विधीयमान इति

आह । *अवग्रह इति* । *तदनुरोधेन* । अवग्रहानुरोधेन । * एतेन* । पूर्वा क्तव्याख्यानेन । * उत्तराशविकलेति * । परश्चेत्यस्य नियामकत्वे तु षष्ठ्यश विकलेति बोध्यम् । * अत एव * । तदंशरहितस्याप्युपस्थितिरूपोऽपरादेव । * अत एव * । आगमविषयेऽपि परिभाषाप्रवृत्तिस्वीकारादेव । अतिदेशविषये प्याह । * गाङिति * । एतत्परिभाषाप्रवृत्तिरिति । तस्मादितिपरिभाषाप्रवृत्ति रित्यर्थः । ननु परिभाषात्वमनियमे नियमकारकत्वमिति शिष्टसमाचारस्तु ना पपद्यते । परिभाषा त्वभिमतवाक्यैकवाक्यतया विधिसूत्रलक्ष्यसाधनादिति शङ्का परिहारार्थमाह । * परिभाषाणान्नियमत्वन्त्विति * । सूत्रमित्येकवचनन्तु जातौ । एवञ्चाधिको नियमत्वव्यवहार इति भाव ।

षष्ठीस्थाने इत्यनुवृत्तौ यथा वाक्यार्थस्तथा दर्शयति । * स्थान इति * । निर्दिष्ट इत्यध्याहारलभ्यम् । * स्थानेत्यादि किमिति * । अनुवृत्ते प्रश्न । *वसुस्रंस्विति* । न तु जसन्तम । लोपात्सश्रादेशविषयेऽयमनश्चक्षुरित्यादौ परिभाषाप्रवृत्त्यापत्ते । * अन्त्यस्य पदस्येति * । अधिकारलब्धस्येत्यादि ।

प्रत्यासत्तिलभ्यम् । एतच्चाल एवेति अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायोत्तर स्थानषष्ठ्यस्या लिङ्गम् । अत एवेतोदित्यादौ नास्याः प्रवृत्तिः । पञ्चादीनामित्यस्यावयवषष्ठीत्वादित इत्यस्याल्समुदायोत्तरत्वाभावाच्च ।

ङिच्च ॥ अनेकालर्थमिदम् । आदेरिति । आदेरल इत्यर्थः । तेन द्वीपमित्यादौ पान्तसमुदायस्य नेत्वम् । अत्र परस्येत्यानुवर्तते । तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेदम् । तेन नित्यं ङित इत्यादौ न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वात् ।

अनेकाल् शित् ॥ शित उदाहरणम् । इदम इश् । ननु शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थम् । किं च । सानुबन्धकनिर्देशे यथा नाल्ःस्थानित्वं भोभगो इति सूत्रे भाष्ये उक्तम्, तथादेशत्वमपि सूत्रोपात्तस्यैवेति तद्व्यर्थम् । विधौ निर्दिष्टो यो ऽनेकाल् स सर्वस्येति सूत्रार्थः । उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति नाणुदित्सूत्रभाष्यविरोधः । घ्वसोरिति लोपस्य लोपो यीति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः । अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेन्न । नानुबन्धकृतमनेकाल्त्वमिति शा-

* लिङ्गमिति * । यच्चाल्समुदायबोधकपदोत्तर यत्र स्थाने षष्ठी तत्रान्त्यस्याल इत्युपतिष्ठत इति वाच्योऽर्थ । अत्र मानं तु परिभाषाया नियमकारकत्वमेव । यतोऽल्समुदायोत्तर स्थानषष्ठी तत्रैवैतत्परिभाषाभावेऽनियमप्रसक्तेः ।

* आदेरल इति * । अल्ग्रहणानुवृत्त्यायमर्थः फलति । * तेन * । अल्ग्रहणानुवर्तनेन । अन्यथालोऽन्त्यस्येत्यत्रान्त्यपदानुवृत्ते कृतत्वादन्त्यस्यादेरित्यर्थोपस्थापात्तसमुदायस्यापत्ति । अल्ग्रहणानुवृत्तौ तूपात्तशब्दस्यादेरलोऽन्त्यादित्यसम्भवेन तदनुवृत्ति । * धातोरित्यस्य विहितेति * । इदञ्च धातोरित्यस्य फलाभावेऽप्यनुवृत्तिशङ्कायाम् । वस्तुतस्तस्याननुवृत्तिरेव युक्ता ।

ननु विधेयत्वाख्यविषयताया विशिष्टे स्वीकारेऽणुदित्सूत्रेऽप्रत्ययादेशटित्किन्मित इति वक्तव्यमिति वार्तिकव्याख्यावसरे आदेशोदाहरणमिदम इशित्युक्तम्भाष्ये तन्नोपपद्यते विधेय वाच्यविषयतापर्याप्तियोंदृशसमुदाये तस्य नाणत्वम् यस्य चाणत्वं तस्य न तादृशविषयत्वाधिकरणत्वमिति शङ्कायामाह । * उद्देश्यत्वेति * । ननु शिद्ग्रहणाभावे घ्वसोरितिविहितलोपस्य सर्वादेशत्वार्थं यच्छिशकारको निर्देश इत्युक्तन्तद्विरोध इत्यत आह । * घ्वसोरितीति * । नन्वनुबन्धानामनेकान्तत्वेनैशो नानेकाल्त्वमित्यत आह । * अनुबन्धानामिति * । * नानुबन्धकृतमिति * । अनुबन्धत्वयोग्यकृतमित्यर्थः । एवञ्चात्र सूत्रे शित्पदस्य सम्भाव्यमानशकारवर्जमेवार्थः । नन्वौतस्तकार उच्चारणार्थ इति कथमस्येत्सञ्ज्ञे-

पनेन चारितार्थ्यात् । तेन दिव औदित्यादीनां न सर्वादेशत्वम् । तस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते । नानेकाल् शिदिति तु नोक्तम् । अनन्तरस्येति न्यायेनादेः परस्येत्यस्यैव निषेधापत्तेः । परत्वादिति । आदेः परस्येत्यस्यावकाशः । अन्तरपसर्गेभ्यो, द्वीपम् । शित्सर्वस्येत्यस्य इश् । एवमतो भिस इत्यादिविषये ऽनेकालित्यनेनादेः परस्येति परत्वाद्बाध्यते । एतेन ङिच्चेत्यत्र ङिदेवानेकालन्त्यस्येति नियमेन सिद्धे ऽनेकाल्ग्रहणं व्यर्थमित्यपास्तम् ।

स्वरितेन ॥ इत्थंभूतलक्षणे तृतीया । स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमज्झल्साधारणं स्वरूपमधिक्रियमाणपदघटकाशिष्टं वा । तच्चानुनासिकत्ववत्प्रतिज्ञागम्यम् । विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः क्वचित्पूर्वत्रापि । कियद् दूरमधिकार इत्यत्रासति गमके व्याख्यानमेव शरणम् । किं च, स्वरितेनाधिकारगतिः । तेन गोस्त्रियोरित्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम् । एतेन व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति, आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वाच्च किं सूत्रेणेत्यपास्तम् । स्पष्टं चेदं भाष्ये । परनित्येति । परं विप्रतिषेधसूत्राद्बलवत् । नित्यं कृता-

---

ष्यत आह । * तस्य चेति * । उच्चारणार्थानामित्सञ्ज्ञां विना निवृत्त्यसम्भवादिति वक्ष्यत इत्यर्थः । मात्रालाघवाभिप्रायकशङ्कायामाह । * नानेकालित्यादि * । * निषेधापत्तेरिति * । न चान्त्यस्यादेरित्युभयानुवृत्त्योभयव्यावृत्तौ दोषाभाव इति वाच्यम् । पारिशेष्यान्मध्यगस्यैवेत्यपि सम्भावनापत्तेः । एतेन ङिच्चेत्यत्र ङिदेवानेकालिति । अत्रानेकालिति पदाभावात्कथमस्य लाभ इति नाशङ्कनीयम् । ङिच्चेति सूत्रस्यानङाद्यादेशार्थमेवारम्भेण तेषामनेकाल्त्वात् । * अपास्तमिति * । आदिरित्येतद्बाधकतयाऽनेकालित्यस्यावश्यकत्वात् ।

* इत्थंभूतलक्षणे तृतीयेति * । अत्र सूत्र इत्यादि । अधिकारत्वप्रातस्येव स्वरितत्वलक्षणम् । * विनियोग * । स्वीयसूत्रोत्तरसूत्रैकवाक्यतया विवक्षितवाक्यार्थनिष्पादनम् । यत्र तु पूर्वत्र विनियोगस्तत्र पूर्वसूत्रैकवाक्यतया विवक्षितवाक्यार्थनिष्पादनम् । रायो हलीत्यत्र हलीतिपदस्य यथा । * असति गमक इति * । यथा प्राग्दीव्यत इत्यस्य सत्त्वेनाणस्तेन दीव्यतीत्यत्र प्रागेव नियोगः । यत्र तु न तथा तत्र लक्ष्यानुसारिशिष्टवृद्धव्याख्यानमेव । मुख्यसूत्रप्रयोजनमाह । * अधिकारगतिरिति * । अस्मिन्पक्षेऽधिकारगतिरिति शब्दस्याधिकार्यार्थज्ञानमित्यर्थः । तेन गौणाधारस्याप्यधिकरणसञ्ज्ञा । यथासङ्ख्येन सम्बन्धः । गोस्त्रियोरिति सूत्रे स्त्रीग्रहणेन स्त्र्यधिकारीयटाबादिग्रहणमित्येषा व्यवस्था सिध्यति । * एतेन * । किञ्चेत्यादिनार्थान्तरकरणेन । * तत्कल्पनामिति * ।

कृतप्रसङ्गि तद्विपरीतमनित्यम्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम्। अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। तदीयनिमित्तसमुदायानन्तर्भूताङ्गकं बहिरङ्गम्। तस्य बलवत्त्वे बीजमाह। असिद्धमिति। इयञ्च वाह ऊठ्सूत्रेण ज्ञापिता। यद्यपि प्रत्यङ्गवर्त्ती लोको दृश्यते। मनुष्यो ऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिनामिति न्यायमूलकत्वमस्या अचः परस्मिन्निति भाष्ये उक्तं, तथापि तेन न्यायेन युगपत्प्राप्तिविषयत्वैव स्यात्। ज्ञापकेन तु

---

अभावकल्पनमित्यर्थः। एवञ्च नित्येनानित्यस्य बाधे लाघवरूपा युक्तिः प्रमाणमितिफलम्। बहिरङ्गपरिभाषां निरूपयितुं तद्घटकपदार्थानाह। *अन्तरिति*। मध्यत्वस्य नियतावध्याकाङ्क्षत्वात्तच्छान्त्यर्थमाह। *बहिरङ्गेति*। शेषपूरणेन व्याचष्टे। *अन्तर्भूतेति*। अङ्गशब्दस्य लोके शरीरावयववाचकत्वेपि प्रकृते निमित्तपरत्वमित्याशयेनाह। *निमित्तानीति*। *इयञ्च वाह ऊठ्सूत्रेण ज्ञापितेति*। तत्रत्योठ्ग्रहणेन ज्ञापितेत्यर्थः। तथाहि तस्मिन्सूत्रे ऊठ्ग्रहणाभावेपि सम्प्रसारणमात्रविधानेन लघूपधगुणे वृद्धिरेचीति वृद्धौ विश्वौह इत्यादिसिद्धौ तद्वैयर्थ्यं सिद्धमेव। सत्या हि तस्या बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यादित्यूठ्ग्रहणं सफलम्। ननूठ्ग्रहणाभावे रूपासिद्ध्यभावेपि विश्वौह इत्यादावृद्धिरमिति सूत्रेणोडिदम्पदाद्यप्पुम्रैद्युभ्य इत्यादिना विभक्तिरुदात्ता स्यादित्यर्थकेन विभक्त्युदात्तत्वस्य स्यात्। तस्मिन्सूत्रे ऊठस्स्थाने सम्प्रसारणग्रहणन्तु कर्त्तुमशक्यम्। यून यूनेत्यादावतिप्रसङ्गादिति चेन्न। ऊडिदमिति सूत्रे वूडिदमिति पठित्वा स्थानसम्बन्धार्थकषष्ठ्या व ऊरिति समासे ततः वुश्च ऊठ् चेति द्वन्द्वेन सुवचत्वात्। वकारपाठफलं तु पृधातोः क्विपि पुर पुरेत्यादौ तस्या अप्रवृत्तिः। न चैवमपि वप् धातोः क्विपि उप उपेत्यत्र प्राप्नोतीति वाच्यम्। ऊठ्साहचर्येणण्यन्ताङ्गोद्देश्यकस्य वेर्ग्रहणेनादोषात्। ऊठुपधाग्रहणमिति वार्त्तिकेपि वूठुपधेति पाठ्यम्। न चैवमपि वेञः क्विपि सम्प्रसारणे उच्छब्दात्प्राप्नोतीति वाच्यम्। इणन्तेत्यस्य परिनिष्ठिते श्रूयमाणो य इण् तदन्तेत्यर्थात्। किञ्चैव सत्यक्षद्युवेत्यादौ स्वराप्राप्त्या ऊठुपधाग्रहणमिति वार्तिकमनावश्यकम्। ऊठ उदाहरणन्तु जूर जूरेत्यादि। अथ वा ऊडिदमितिसूत्रानन्तरं वाह इति सूत्रं कर्त्तव्यम्। यदि च हलादिविभक्तेरपि प्राप्नोतीत्युच्यते तदा शतुरनुम इति सूत्रानन्तरन्तथा पाठेन सामञ्जस्यात्। न चैव सूत्रान्तरकरणे गौरवमिति वाच्यम्। अधिकपदाकरणेन साम्यात्। नन्वस्या परिभाषाया ज्ञापकानुपयोगः। लोकन्यायेनैव सिद्धेरिति चेन्न। जातस्य बहिरङ्गस्यासिद्धत्वप्रतिपादनार्थमस्यावश्यकत्वात्। तदेतद्व्युत्पादयितुमाह। *यद्यपीति*। *प्रत्यङ्गवर्त्तीति*। अङ्गानां प्रत्यासन्न-

सर्वविषयता षोढ्वलन इति वाह ऊठ्सूत्रे कैयटे स्पष्टम् । अन्यथा वाहः सम्प्र-
सारणे पूर्वरूपे च कृते व्याश्रये गुणे वृद्धिरेचीति वृद्धौ प्रष्ठौह इत्यादिसि-
द्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति नायके
इन्द्रमित्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रा-
माण्यादुक्तत्वात् । अकृतेति । न कृतो विशिष्ट ऊहस्तत्र निमित्तविनाशेऽपि
कार्यस्थितिरूपो यथा दण्डविनाशेऽपि घटस्थितिः, स यैस्तत्पर्यन्तदाह ।
निमित्तमित्यादि । तत्प्रयुक्तं कार्यजातमपि न कुर्वन्ति नोपारयन्तीत्यर्थ
इति कैयटादयः । अन्ये तु व्यूहोऽन्तरङ्गशास्त्रं बहिरङ्गबाधनरूपत्वात् । त

---

स्याः प्रत्यासत्तिरूपगुणमस्य प्रादुर्भावाद् प्रत्यासत्तेर्लाक्षणिकत्वेन दौर्बल्यादप्र-
तिपत्तेश्चास्यार्थाभावः । * सर्वविषयमिति * । अन्तरङ्गे कर्तव्ये जाते तत्प्रा-
प्तिकं शास्त्रमसिद्धमित्यर्थकल्पनेनेति भावः । एवञ्च सा परिभाषा पृथक् न कार्येति
ध्वनितम् । ननु बहिरङ्गान्तरङ्गयोरिति परिभाषा निष्फला । असिद्धमिति
परिभाषा तु नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरित्येतद्विषयाऽस्त्विति सर्वविषयत्वम-
स्या इत्यनुपपन्नमित्यत आह । * नाजानन्तर्यपरिभाषा त्विति * । षत्वतुकोर-
सिद्ध इति सूत्रे तुग्ग्रहणमस्याः ज्ञापकम् । तदुदाहरणमधीत्य प्रेत्येति । तत्रासिद्ध-
परिभाषयैव सिध्यति । अन्तरङ्गे तुकि कर्तव्ये पदद्वयसम्बन्धिवर्णद्वयापेक्षस्यैका-
देशस्यासिद्धत्वात् । नाजानन्तर्यपरिभाषास्वीकारे तु तुक्यन्तरङ्गेऽजानन्तर्या-
श्रयणेनासिद्धपरिभाषानिषेधे बहुव्रीहिपर्यन्तमस्याहिरायात्रस्याभावेन पूर्व-
मेवैकादेशे तुगर्थं तुग्ग्रहणं चरितार्थम् । परिभाषास्वीकारादेवास्याः सिद्धिरिति सिध्य-
ति । अन्यथाऽन्तरङ्गे यणि ऊठोऽसिद्धत्वाद्यण् न स्यात् । * नास्त्येवेति * । ष-
त्वतुकोरिति सूत्रस्थतुग्ग्रहणमसिद्धपरिभाषाया अनित्यत्व एव ज्ञापकमस्तु ।
एवञ्चासिद्धपरिभाषाया अप्रवृत्त्यैव लक्ष्यसिद्धौ सा नारब्धव्येति भावः ।
* वचनप्रामाण्यादिति * । तथापवादत्वं द्विविधम् । येन नाप्राप्तिन्यायेन निर-
वकाशत्वेन वा । अधिकमन्यत्र स्पष्टम् । * अकृतेति * । कैयटादिसम्मत-
व्याख्यानमाह । * न कृत इति * । विशेषद्योत्यमर्थमाह । * विशिष्ट इति * ।
ऊहस्तत्र इत्येतद्विवृणुते । * निमित्तविनाशेऽपीति * । ऊहस्यात्र ज्ञानरूपत्वे-
ऽपि प्रकृते निश्चीयमानतादृशकार्यस्थितिरेव ऊहपदेन विवक्षितेति भावः । * पा-
णिनीया * । पाणिनिप्रोक्ताध्येतारो निमित्तविनाशसमानकालिककार्यस्थिति-
विषयकनिश्चयाभाववन्त इति फलितम् । एतेन निमित्तापाये नैमित्तिकस्याप्य-
पाय इति फलितम् । लाघवादाह । * अन्ये त्विति * । * व्यूहोऽन्तरङ्गशास्त्रमिति * ।
प्रकृतस्य व्यूहपदस्याचारक्विबन्तप्रकृतिकाच्प्रत्ययान्तत्वात् । यथा लौकिकव्यूह-
स्य सैन्यरचनाविशेषस्य परचक्रनिवारकत्वं तथाऽन्तरङ्गशास्त्रमप्यस्मिन् व्याकरणे

न्निमित्तविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ।

इति परिभाषाप्रकरणम् ॥

स्यादिति । कार्यशब्दवादे इदम् । संहिताया विषयइति । कार्यिनिमित्तयोः संहिताया विषयभूतायामित्यर्थः । स्थानत इति । इदं यथासंख्यसूत्रे भाष्ये स्पष्टम् । जातिपक्षे यथासंख्येनापि निर्वाह इति स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टम् । अनुनासिकस्थाने ऽपि निरनुनासिक एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् । गुणाभेदकत्वपक्षे ऽपि न विधेयाणविषये दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम् । अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः । त्वादय इत्यादिनिर्देशा-

---

परिभाषाबलाद्बलवत् । भाविनिमित्तविनाश इत्यध्याहारः । निमित्तञ्चोपस्थितत्वादन्तरङ्गस्य गृह्यते । तथा च स्वनिमित्तविनाशसम्भावनासमानकालिकी या ऽन्तरङ्गशास्त्रप्रवृत्तिस्तद्विषयकनिश्चयाभाववन्त पाणिनीया इति फलितम् । अन्ये त्वित्यनेनास्यार्थस्य लोकाप्रसिद्धत्वमेवारुचिस्सूचिता । शेषमन्यत्र द्रष्टव्यम् ।

* इति परिभाषाप्रकरणमिति * । प्राधान्येन सूत्रात्मकपरिभाषाणाम्प्रकरणं समाप्तमित्यर्थः । परनित्येत्यादि तु प्रासङ्गिकत्वेनोक्तमिति दिक् ।

इति परिभाषाप्रकरणम् ॥

* इको यणचि * ननु यण् स्यादिति व्याख्यानेन यण्कर्तृकं भवनम्प्रतीयते तन्नोपपद्यते धातूनामनित्यत्वादत आह । * कार्यशब्देति * । संहितायामिति वैषयिकाधारे सप्तमी वाच्या । एवञ्च संहिताया विषयभूतायामिति पौनरुक्त्यादनुपपन्नमत आह । * कार्यिनिमित्तयोरिति * । संहितायामिति सप्तम्यन्तपदप्रतीयमानं पदार्थं स्पष्टत्वार्थं विवृत इति भावः । * इदं यथासंख्यसूत्र इति * । यथासङ्ख्यमनुदेशः समानाम् । किमुदाहरणम् । इको यणचि, दध्यत्र मध्वत्र । नैतदस्ति । स्थानेन्तरतमेनाप्येतत्सिद्धम् । इत्युक्तम् । ननु स्थानेऽन्तरतम इति सूत्रे यथासङ्ख्येनाप्येतत्सिद्धमित्युक्तं तथानुपपन्नम् । यण्शब्दबोध्या सप्त इक्शब्दवाच्या पदपष्टिरिति वैषम्यादित्यत आह । * जाति पक्षे इति * । ननु यदीको यणचीतिसूत्रविषयेऽन्तरतमपरिभाषया निर्वाहस्तदा स्योंजसित्यत्रानुनासिकोकारस्य यकारोऽनुनासिकः प्राप्नोतीत्यत आह । * अनुनासिकेति * । गुणाभेदकत्वपक्षे तर्हि प्राप्नोतीत्यत आह । * गुणाभेदकत्व इति * । लक्षणां कटाक्षयन्नाह । *दीर्घादीनामिति* । *अत एव* । जातिपक्षाश्रयणादेव । जातिपक्षे मानमप्याह । *त्वादिभ्य इति* । तत्फलमथाषामित्यत्र सलोपः । सूत्रस्य

सर्वविषयता बोध्यतइति वाहऊठसूत्रे कैयटे स्पष्टम् । अन्यथा 'वाह' सम्प्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे वृद्धिरेचीति वृद्धौ प्रष्ठौह इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति नायजे इन्द्रमित्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्यादुबलवान् । अकृतेति । न कृतो विशिष्ट ऊहस्तर्को निमित्तविनाशे ऽपि कार्यस्थितिरूपो यथा दण्डविनाशे ऽपि घटस्थितिः, स यैस्तइत्यर्थस्तदाह । निमित्तमित्यादि । तत्प्रयुक्त कार्यजातमपि न कुर्वन्ति नोद्धारयन्तीत्यर्थ इति कैयटादय । अन्ये तु व्यूहो ऽन्तरङ्गशास्त्र बहिरङ्गापोहनरूपत्वात् । न

---

स्तात्प्रत्यासत्तिरूपगुणसम्बन्धादङ्गशब्द प्रत्यासन्ने लाक्षणिकस्तेन वीप्सायामप्रतिशब्दस्याव्ययीभाव । * सर्वविषयवेति * । अन्तरङ्गे कर्तव्ये जात तत्काल प्रातिकश्चासिद्धमित्यर्थकल्पनेनेति भावः । एवञ्च सा परिभाषा पृथङ् न कार्येति ध्वनितम् । ननु बहिरङ्गान्तरङ्गयोरिति परिभाषा निरपवादा । असिद्धमिति परिभाषा तु नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरित्येतदपवादसहितेति सर्वविषयत्वमस्या इत्यनुपपन्नमित्यत आह । * नाजानन्तर्यपरिभाषा त्विति * । षत्वतुकोरसिद्ध इति सूत्रे तुग्ग्रहणमस्याज्ञापकम् । तदुदाहरणमधीत्य प्रेत्येति । तच्चासिद्धपरिभाषयैव सिध्यति । अन्तरङ्गे तुकि कर्तव्य पदद्वयसम्बन्धिवर्णद्वयापेक्षस्यैकादेशस्यासिद्धत्वात् । नाजानन्तर्यपरिभाषास्वीकारे तु तुक्यन्तरङ्गेऽजानन्तर्याश्रयणेनासिद्धपरिभाषानिषेधे व्युत्पत्तिपक्षे तमसाहितयाधस्थानामाथेन पूर्वमेवैकादेशे तुगर्थं तुग्ग्रहणञ्चरितार्थम् । परिभाषास्वीकारादेवाक्षद्यूरिति सिध्यति । अन्यथाऽन्तरङ्गे यणि ऊठोऽसिद्धत्वाद्यण् न स्यात् । * नास्त्येवेति * । षत्वतुकोरिति सूत्रस्थतुग्ग्रहणमसिद्धपरिभाषाया अनित्यत्व एव ज्ञापकमस्तु । एतञ्चासिद्धपरिभाषाया अप्रवृत्त्यैव सकलेष्टसिद्धौ सा नारब्धव्येति भाव । * वचनप्रामाण्यादिति * । तथापवादत्व द्विविधम् । येन नाप्राप्तिन्यायेन निरवकाशत्वेन वा । अधिकमन्यत्र स्पष्टम् । * अकृतेतीति * । कैयटादिसम्मत व्याख्यानमाह । * न कृत इति * । विशब्दद्योत्यमर्थमाह । * विशिष्ट इति * । ऊहस्तर्क इत्येतद्विवृण्वते । * निमित्तविनाशेपीति * । ऊहस्यान्यत्र ज्ञानरूपत्वेपि प्रकृते निश्चीयमानतादृशकार्यस्थितिरेव ऊहपदेन विवक्षितेति भाव । * पाणिनीया * । पाणिनिप्रोक्ताध्येतारो निमित्तविनाशसमानकालिककार्यस्थितिविषयकनिश्चयाभाववन्त इति फलितम् । एतेन निमित्तापाये नैमित्तिकस्याप्यपाय इति फलितम् । लाघवादाह । * अन्ये त्विति * । * व्यूहोऽन्तरङ्गशास्त्रमिति * । प्रकृतस्य व्यूहपदस्यावापकिवन्तप्रकृतिकाच्प्रत्ययान्तत्वात् । यथा लौकिकव्यूहस्य सैन्यरचनाविशेषस्य परबलनिवारकत्व तथाऽन्तरङ्गशास्त्रमप्यस्मिन् व्याकरणे

न्निमित्तविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ।

इति परिभाषाप्रकरणम् ॥

स्यादिति । कार्यशब्दवादे इदम् । संहितायां विषयइति । कार्यिनिमित्तयोः संहिताया विषयभूतायामित्यर्थः । स्थानत इति । इद यथासंख्यसूत्रे भाष्ये स्पष्टम् । जातिपक्षे यथासंख्येनापि निर्वाह इति स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टम् । अनुनासिकस्थाने ऽपि निरनुनासिक एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् । गुणाभेदकत्वपक्षो ऽपि न विधेयाण्विषये दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम् । अत एव सर्वतकारादीना झल्त्वादिसिद्धिः । त्वादय इत्यादिनिर्देशा-

---

परिभाषाबलाद्धल्वत् । भाविनिमित्तविनाश इत्यध्याहारः । निमित्तञ्चोपस्थितत्वादन्तरङ्गस्य गृह्यते । तथा च स्वनिमित्तविनाशसम्भावनासमानकालिकी याऽन्तरङ्गशास्त्रप्रवृत्तिस्तद्विषयकनिश्चयाभावव न्त पाणिनीया इति फलितम् । अन्ये त्वित्यनेनास्यार्थस्य लोकाप्रसिद्धत्वमेवारुचिस्सूचिता । शेषमन्यत्र द्रष्टव्यम् ।

* इति परिभाषाप्रकरणमिति * । प्राधान्येन सूत्रात्मकपरिभाषाणाम्प्रकरण समाप्तमित्यर्थ । परनित्येत्यादि तु प्रासङ्गिकत्वेनोक्तमिति दिक् ।

इति परिभाषाप्रकरणम् ॥

* इको यणचि * ननु यण् स्यादिति व्याख्यानेन यण्कर्तृकं भवनम्प्रतीयते तन्नोपपद्यते शब्दानान्नित्यत्वादत आह । * कार्यशब्देति * । संहितायामिति वैषयिकाधारे सप्तमी वाच्या । एवञ्च संहिताया विषयभूतायामिति पौनरुक्त्याद्युपपद्भ्रमत आह । * कार्यिनिमित्तयोरिति * । संहितायामिति सप्तम्यन्तपदप्रतीयमान एवार्थ स्पष्टत्वार्थं विवृत इति भाव । * इद यथासंख्यसूत्र इति * । यथासङ्ख्यमनुदेश समानाम् । किमुदाहरणम् । इको यणचि, दध्यत्र मध्वत्र । नैतदस्ति । स्थानेन्तरतमेनाप्येतत्सिद्धम् । इत्युक्तम् । ननु स्थानेऽन्तरतम इति सूत्रे यथासङ्ख्येनाप्येतत्सिद्धमित्युक्त तच्चानुपपन्नम् । यण्शब्दबोध्या सप्त इक्शब्दवाच्या षट्पष्टिरिति वैषम्यादित्यत आह । * जाति पक्षे इति * । ननु यदीको यणचीतिसूत्रविषयेऽन्तरतमपरिभाषया निर्वाहस्तदा स्यौजसित्यत्रानुनासिकौकारस्य वकारोऽनुनासिक प्राप्नोतीत्यत आह । * अनुनासिकेति * । गुणाभेदकत्वपक्षे तर्हि प्राप्नोतीत्यत आह । * गुणाभेदकत्व इति * । लक्षणा कटाक्षयन्नाह । *दीर्घादीनामिति* । *अत एव* । जातिपक्षाश्रयणादेव । जातिपक्षे मानमप्याह । *त्वादिभ्य इति* । तत्फलमवाप्यामित्यत्र सलोप । सूत्रत्व

दयत्र जात्याश्रयणे मानमिति दिक् । व्याकरणस्य साध्वनुशासनत्वन्तु न त्वनित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रस्यापर्यवस्या मृजिप्रसङ्गे मार्ष्टिः साधुर्भवतीत्यादिदृष्टिसम्प्रज्ञसूत्रस्यभाष्यप्रामाण्येन यदिह परिनिष्ठितत्वेन ज्ञाप्यन्तरमान्वितयथोपपत्तिकल्प्यन्यायेन बोध्यम् । कार्यशब्दवादे तु पूर्वमा प्योक्तीतानादितात्पर्यवशात्तत्कल्पन बोध्यम् । एतेन स्थानप्रमाणोभयान्त रतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्यादित्यपास्तम् । स्थानत, आ न्तर्यस्य सर्वतो बलवत्त्वात्स्थानेन्तरतम इति सप्तम्यन्तपाठस्य चेतद्दूषणेन भाष्ये दूषितत्वादिति भाव ।

यो विरुद्धार्थो ध्वनितश्चेदमेभोऽस्मूत्रे भाष्ये तदाह । द्वेधा स्त इति । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः । अवसाने द्वित्वसिद्धये ऽनचीति प्रसज्यप्रतिषेधस्तदाह । न त्वचीति । इद द्वित्व पाष्ठद्वित्ववद् द्वि. प्रयोग एव । पर इत्यादेरध्याहृतोच्चारणक्रियानिरूपितकर्मषष्ठीत्वस्यो

---

मित्यत्र इत्यत्र चरितार्थम् । ननु यदीत्थ विधायकसूत्रार्थस्तदाऽस्य शास्त्रस्य साध्वनुशासनत्वभङ्ग इत्यत आह । * व्याकरणस्येति * । करणल्युटा व्याकरणमत्र सूत्रम् । * परिनिष्ठितेन * । सम्प्रवृत्तनित्यार्थव्युदेश्यतावच्छेदकावामन्ते न समुदायेन । *ज्ञाप्यम्* । इणादीनामुच्चारणप्रसङ्गे यणादि । *अर्थापत्तीति* । तथा च सेनात्र प्रमाणमिति भाव । मूलोक्तपक्षेपि साध्वनुशासनत्वमुपपादयति । *कार्यशब्दवाद इत्यादिना* । *एतेनेति* । जातिपक्षाश्रयणेनेत्यर्थः । प्रथमान्त सप्तम्य तपाठे सङ्कुच्छते तदेव नेत्यभिप्रायेण दोषान्तरमाह । * स्थानेऽन्तरतम इति* । प्रथमान्तपाठे स्थान्यनुरोधेनादेशसङ्कोच । सप्तम्यन्तपाठे तु स्थानिसङ्कोचः । स चायुक्त इति भाव ।

* यो विरुद्धार्थ इति * । विधेरपि शब्दत्वसूचक इत्यर्थ । * पञ्चोद् सूत्र इति * । पञ्चोद् सूत्र यस्मिन्नाह्निकम् यपदार्थ तेन तस्मिन्नाह्निके इयपरद्सूत्र इत्यर्थ । तत्र ह्यचोगवाहानामविशेषेण पाठ कर्तव्य इत्यस्य प्रयोजनकथनावसरे संयोगोपधासञ्ज्ञाऽलोन्त्यविधिद्विर्वचनस्थानिवद्भावप्रतिषेधा इत्येतद्वदक द्विर्वचनस्य प्रयोजननिरूपणावसरे उर क उर प अनचि च अच उत्तरस्य यरो द्वे भवत इति द्विर्वचन सिद्धम्भवतीत्युक्तम् । *द्वेधा स्त इतीति* । यरोऽनुनासिक इति सूत्राद्वाग्रहणमनुवर्तत इति भाव । तत्र मानमाह । * सूत्रद्वेतेति * । निषेधविकल्पे विधिविकल्प फलतीति भाव । *अवसान इति* । वाक्क् वाक् इति भाष्योदाहृते । अन्यथा हलीत्येव वदेत् । * द्वि प्रयोग एवेति * । यथा षाष्ठ द्विर्वचन द्वि प्रयोगरूप न त्वादेशरूप तथा आष्टमिकमिदमपीत्यर्थ । ननु षाष्ठ द्विर्वचनमादेशरूपमेवास्त्विति चेन्न । स्थाने द्विर्वचने षष्ठीस्थानेयोगेति परिभाषया कल्पिते जाटिट्दातिशादित्यादौ पञ्जसावावित प्रकृतिप्रत्ययविभागस

चित्यात् । इति धस्येति । न तु द्वित्वे पूर्वधस्थाने जश्त्वनिष्पन्नदस्यापि । लक्ष्येलक्षणस्येति न्यायात् । विकारान्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम् ।

स्थान्यादेशयोर्भेदात्स्व रूपमित्युक्तेश्च तत्स्थानापन्नस्तद्धर्मं लभते । यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा ऽग्रासनादीनि लभते इति लोकन्यायेन स्थानिकार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् । न तु स्थान्यलेति। प्रत्यासत्तिन्यायलभ्यमिदम् । आदेशस्य स्थानिभूतो यो ऽल् तत्स्थानिस-

---

मोहेन परोनिटीति णिलोपानापत्ते । किञ्च जिघांसतीत्यत्र सनस्नकारेण विशिष्टस्य द्विर्वचने कुत्वन्न स्यात् । एतस्यापि द्विर्वचनस्य स्थाने द्विर्वचनत्वे स्थाली स्थाता घस्सर इत्यादौ सकारस्य नकारस्य चिकस्य सत्रयात्मकतद्वयात्मकादेशे द्वयोर्भेदस्य धस्लमाद्यविधायाप्यनुद्धौ प्रत्येक शर परत्वबुद्ध्यसम्भवेन शर्परय इति द्विर्वचनन्न स्यात् । यदि च, न च मात्रिक व्यञ्जनमस्तीति भाष्योक्तेर्नायम्मात्रिक एकवर्णात्मकादेश किं तर्हि वर्णद्वयात्मक एवेति न पूर्वोक्तदोष इति मन्यते । तथापि दधिस्यति मधुस्यतीत्यादौ क्यचि सर्वप्रातिपदिकेभ्य क्यच्लालसायामित्यनेन सुगागमे अनचि चेति द्विर्वचनादेशे आदेशप्रत्यययोरिति षत्वापत्ते । सकारोच्चारण लवणस्यति क्षीरस्यतीत्यत्र चरितार्थम् । यदि तु द्वित्वासिद्धत्वाश्रयदोष इत्युच्यते । तदा साधकान्तरमाह । *यर इत्यादेरिति* । न च स्थाने द्विर्वचनपक्षस्यापि स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थकत्व षष्ठ्या कल्पयित्वोपपत्ति कार्या । एवञ्चोभयनाप्यध्याहारोऽविशिष्ट इति वाच्यम् । द्वि प्रयोगपक्षस्योपपदविभक्तेरितिपरिभाषानुगृहीतत्वात् । * न लक्ष्यभेद इति * । यथा उदधोदामित्यत्र उदनट् स् नामिति स्थिते सिज्लोपादेरसिद्धत्वाद्धलन्तलक्षणाया वृद्धौ सहिनहोरादित्वोत्वे लक्ष्ये लक्षणस्येतिन्यायेन पुनर्वृद्धिनेति सिचि वृद्धिरिति सूत्रे भाष्ये उक्तम् ।

स्थानिवत्सूत्रारम्भस्य प्रयोजनमाह । * स्थान्यादेशयोरिति * । अत्रभेदादित्यस्य स्थानिकार्यमादेशे न स्यादित्यनेनान्वय । तत्स्थानापन्नमिति लोकन्यायेन सिद्धि स्यादत आह । * स्व रूपमित्युक्तेरिति * । * प्रत्यासत्तीति * । आदेश स्थानिवदितिवाक्यजन्यशाब्दबोधे स्थानिनो विषयत्वात्तेनैवानल्विधावित्यत्राऽपदार्थविशेषणीभूतसम्बन्ध्याकाङ्क्षानिवृत्तावनुपस्थितस्य ग्रहणम्माना भाव इति भाव । यद्यपि तथा आदेशोऽप्युपस्थितस्तथापि स नाल्विशेषण षष्ठ्या य क्रमण इति निर्देशात् । * आदेशस्य स्थानिभूत इति * । अत्राप्यादेशस्यैव स्थानी वाक्यार्थघटक इत्यत्र प्रत्यासत्तिरेव प्रयोजिका । अनल्विधावित्यत्र च प्रसज्यप्रतिषेध एव । न पर्युदास । तथा सति व्यूढोरस्केनेत्यादौ स्थान्यल्सिद्ध

वलादिलक्षणेट्सिद्धिः। न हि तत्र वलादित्वं स्थानितो लभ्यं। किं तु स्वाश्रयमेव। यन्निमित्तत्वं कल्प्यप्रयुक्तोपदेशप्रवृत्तावातिदेशो मृग्यते तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चार्द्धधातुकत्वं कल्प्यप्रयु-

---

*स्थान्यलीति*। एवञ्च यत्कालितप्रत्यासत्त्या शेषपूरणेन च तदाह। *यन्निमित्तेत्यादि*। *स्थान्यलसाधारणेति*। अत्र स्थान्यलसाधारणेत्यस्य स्थान्यलितरावृत्तित्वे सति स्थान्यल्वृत्तीत्यर्थाऽसाधारणपदनिवेशात्प्रतीयते, परन्त्वयं न युक्तं। धिन्वन्तीत्यत्र यकारस्थान्युकारवृत्त्यार्द्धधातुकत्वस्य स्थान्यलितरस्थानिवृत्तितया विशेषणाभावेन विशिष्टाभावस्य सत्त्वात्स्थानिवद्भावापत्तेः। किन्तु स्थान्यल्वृत्तित्वमात्रं विवक्षितम्। तथा चार्द्धधातुकत्वस्य स्थान्यकारवृत्तित्वेन न स्थानिवद्भावप्रसक्तिः। अत एव भोभगो अघो इति सूत्रभाष्योक्तरेफवृत्तिधर्मस्य विसर्गेऽनतिदेशस्साधु सङ्गच्छते। नन्वेवमतृणेट्, अचकात्, अचका, इत्यादौ सार्वधातुकत्वतिप्त्वसिप्त्वादिधर्मावच्छिन्ननिमित्तका इमादयो न सिध्यन्ति। तेषां स्थान्यल्वृत्तिधर्मावच्छिन्ननिमित्तकत्वादिति। प्रत्ययलक्षणसूत्रस्य विधायकत्वमेव स्यादिति भाष्योक्तनियमार्थत्वपक्षासङ्गतिरिति चेन्न। यथाऽग्रहीदित्यस्य सिद्धये विशिष्टस्यैवोऽनल्माश्रयते इटस्नामेति भाष्ये उक्तन्तेनैव न्यायेनैतेषां सिद्धिसम्भवात्। तथाहि। स्थानिस्थान्यवयवान्यतरवृत्तिधर्म आदेशविधावुपात्तत्वविशेषणं न्वेयम्। एवञ्चादेशविधौ स्थानितावच्छेदकत्वेनोपात्तो यः सः स्थानिस्थान्यवयवान्यतराल्मात्रवृत्तिधर्मस्तत्समानाधिकरणधर्मावच्छिन्ननिमित्तके विधौ स्थानिवत्त्वं न। ग्रहोऽलिटि दीर्घ इति विधावुपात्तस्थानितावच्छेदकमिदन्त्वम् तच्च नाल्मात्रवृत्तीति स्थानिवत्त्वसङ्गतिः। धिन्वन्तीत्यत्रादेशस्य यणो विधौ स्थानितावच्छेदकत्वेनोपात्तमिकत्त्वं, तच्च स्थान्यल्मात्रवृत्तीति तत्समानाधिकरणार्धधातुकत्वावच्छिन्नोद्देश्यके इणि न। स्थानितावच्छेदकत्वेनोपात्तञ्चोद्देश्यबोधकशब्दजन्योपस्थितिविषयतावच्छेदकतापर्याप्त्यधिकरणत्वम्। एवञ्च हल्ङ्यादिलोपे न केवलं हल्त्वमेवोद्देश्यतावच्छेदकतापर्याप्त्यधिकरणं किन्तु सुतिस्यभेदविशिष्टहल्त्वदन्तावृत्तित्वं चोद्देश्यतावच्छेदकतारूपविषयता नाल्मात्रवृत्तितावच्छेदकधर्मनिष्ठावच्छेदकतापर्याप्त्यवच्छेदकधर्मपर्याप्तावच्छेदकताकेति तेषु निषेधाप्रवृत्त्या स्थानिवद्भावेन तत्तत्कार्यसिद्धौ प्रत्ययलक्षणसूत्रस्य नियमार्थत्वसङ्गतिः। अत्र हल्ङ्यादिलोपे कार्ये उद्देश्यतावच्छेदकतयोपात्तं सुतिस्यभेदविशिष्टहल्त्वदन्तावृत्तित्वावच्छेदकतापर्याप्त्यवच्छेदकं विशिष्टहल्त्वदन्तत्वमात्रं न तादृशाल्मात्रवृत्तितावच्छेदकतापर्याप्त्यवच्छेदकमिति। अग्रहीदित्यत्र च स्थानितावच्छेदकतापर्याप्त्यवच्छेदकमिदन्त्वन्तच्च नाल्मात्रवृत्तितावच्छेदकतापर्याप्त्यवच्छेदकमिति स्थानिवद्भावनिर्वाहः। नचैवमपि

वैकल्यप्रयुक्ता ऽप्राप्तिरिति बोध्यम् । प्रत्यासत्त्या च शास्त्रीयकार्यएव स्थानिवत्त्वं । तेन नायकसिद्धिः । प्राधान्यात्कार्यातिदेशो ऽयम् । शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः । तस्यापि कार्यफलकत्वादिति तृज्वत्सूत्रे कैयटः । भाष्ये ऽपि तत्राङ्गशास्त्रातिदेशात्सिद्धमाह यत्कार्यं तदतिदिश्यतइत्युक्त्या तयोरभिन्नरूपत्वं सूचितम् । तत्रानपेक्षितार्थसन्निधानस्तत्तन्निमित्तरूपकार्यव्यवहार एवानेन । कार्यं तु स्वशास्त्रेणैवेति । अत एव रामायेत्यादौ स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घ इति सङ्गच्छते । परिवीरित्यादौ परत्वाद् दीर्घ इति च सङ्गच्छते । यद्वा किंचिन्निमित्तवैकल्ये ऽपि दीर्घादि कार्यमनेन क्रियते । तच्च कार्यङ्किमित्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहितस्वरूपपरत्वं तेषां बोध्यम् । एतदेवाभि-

---

प्रेत्येन स्थानित्वं योध्यते तत्र तादात्म्येन सज्ञाया एवावच्छेदकत्वन्तेन सम्बन्धेन च तस्या स्वस्वरूपेणापि सम्बन्धितया स्वस्वरूपस्य चानवत्वेन स्थानिनिष्ठविषयतायां अल्मात्रवृत्तिधर्मपर्याप्तावच्छेदकताकत्वाभावस्स्फुट एव । एवमेवाच्छब्देनोपादाने बहुवचने क्षल्येदित्यादावपि एतत्कल्पनायां ङ्मेजन्तसूत्रस्थभाष्ये चिकीर्षेत्र कुम्भकारेभ्य इति प्रयोगेऽव्याप्त्यतिव्याप्तिप्रदर्शनपरभाष्यमेव मानमिति भाष्यतत्त्वविदामाशय इति दिक् । ननु स्थानिवद्भावस्वीकारे नायक इत्यत्राकादेशस्य स्थानिवद्भावेन हलादित्यादावादेशो न स्यादत आह । * प्रत्यासत्त्येति * । आयादेशप्रतिबन्धस्तु न शास्त्रीय इति भाव । *प्राधान्यादिति * । सर्वातिदेशाना कार्यार्थत्वादिति भाव । शास्त्रातिदेशस्य कार्यातिदेशादभिन्नरूपत्वे साधकमाह । *भाष्येऽपीति * । ननु कार्यातिदेशस्वीकारे इदमेव कार्यसाधकमिति लभ्यते । एव सति यादेशस्य स्थानिवद्भावेन सुप्त्व सुपि चेति दीर्घ इति ग्रन्थानामसङ्गतिरत आह । * तत्रानपेक्षितेति * । यथा सुप्त्वव्यवहारे स्वादिपान्तसमुदायघटकत्वन्निमित्त तस्य यादेशेऽभावेऽपि अनेनातिदेशेन सुप्त्वबुद्धौ त इशव्यवहारो भवति, पश्चात्स्वनिमित्तसङ्कानुद्ध्या सुपि चेतिशास्त्र प्रवर्तते, तथा सर्वत्र ज्ञेयमिति । * परिवीरित्यादावपीति * । अत्र व्येञ क्विपि सम्प्रसारणे कृते स्थानिवद्भावेनैव तुग्दीर्घत्वयो प्राप्तौ स्थानिवत्सूत्रस्यैवोभयविधायकत्वे तुक परत्वाद्धल इति दीर्घ इति व्यवस्था न स्यादिति भाव । पक्षान्तरमाह । * यद्वेति * । *किञ्चिन्निमित्तवैकल्येपीति * । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तवैकल्येऽपीत्यर्थ । आदेश स्थानिवत्कार्यं प्रवर्तयतीति सूत्रार्थात् । तत किं कार्यमित्याकाङ्क्षा ततो विधिशास्त्रपर्यालोचनम् । ततस्तत्कार्यनिर्णय इति यद्देशस्थितकार्यस्वरूपनिश्चयस्तद्देशीयपरत्वस्य विप्रतिषेधशास्त्रप्रवृत्तिनियामकत्वमिति भाव । *एतदेव* । पूयान्क्रममेव । उत्पत्ति-

प्रेत्यातिदिश्यमानकार्याणामुपदेश एव देश इत्यभियुक्ताः । अत्राद्यपक्ष एव-
भाष्यसम्मतः । अत एव स्थान्यल्विधिप्रतिषेधे कुरुत्रधपिवां प्रतिषेधो वक्त-
व्य इत्येतदुपपादनावसरे स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघूपधत्वादि
तत्र लघूपधगुणादिः प्राप्नोतीत्यादिभाष्योक्तेरिति बोध्यम् । एवं यन्निमित्त-
वैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि ।
अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्यादिव्यवहारः । सर्वाति-
देशेष्विदं तुल्यं । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव ।
प्रत्यासत्तेः । स्थानिवदित्युक्तेः सम्बन्धिशब्दमहिम्नैवादेशलाभे आदेशग्रहणं
श्रौतस्थान्यादेशभावस्यैव ग्रहणमिति शङ्कावारणद्वारा एरुरित्यादौ शब्दा-
नित्यत्ववारणाय सर्वे सर्वपदादेशा इति न्यायेन कल्प्यमानस्य तेस्तुरित्या-
नुमानिकादेशस्य सङ्ग्रहार्थम् । तेन पचात्वित्यादेः पदत्वसिद्धिरिति भाष्ये
स्पष्टम् । ननु सोऽस्तित्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैव-
सिद्धम् । तदुक्तं प्राग्दीव्यतोऽणिति सूत्रे भाष्ये, दीव्यतिशब्दैकदेशदीव्यच्छ-
ब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देशः एतदेव ज्ञापयत्याचार्यो भ-

---

देश * । उत्पत्तिप्रसिद्ध्यविषयकार्यबोधकशब्दघटितसूत्राधिकरणदेश । क्व चि-
त्पूर्वदेशादेश इति पाठः स तु सुगम एव । * अत्र * । अनयोर्मध्ये । अत एव * ।
आद्यपक्षस्यैतत्सूत्रभाष्यसम्मतत्वादेव । * स्थान्यल्विधिप्रतिषेध इति * । तत्र
हि स्थान्यल्विधिरूपे कार्ये प्रतिषेध आहोस्विदल्मात्राश्रयकार्ये इति सन्दिह्यैव
मुक्तम् । अत्र लघूपधत्वादीत्यादिनाऽत्रुपधत्वपरिग्रह । लघूपधगुणादिरित्य-
त्रादिना वृद्धेः परिग्रह । अत्र लघूपधगुणादीत्येवोक्तम् न त्वनेनातिदेशेनेति ।
तेनाद्यपक्षस्य भाष्यसम्मतत्वं लभ्यते । पूर्वत्र किञ्चिन्निमित्तवैकल्यप्रयुक्तोपदे-
शाप्रवृत्तिस्तन्निमित्तस्यापि कस्य चिद्ग्रहणशङ्कावारणायमाह । * एवं यन्निमित्ते-
ति * । * एवम् * । पूर्वोक्तवत् । * सर्वनिमित्तकत्वमिति * । तेन सर्वस्मिन्नित्यत्र
यत्रादित्वाभावाद्दीर्घो न । अन्यथा किञ्चित्पदेन यत्रादित्वस्यापि ग्रहणे स स्या-
दिति भावः । * अत एव * । तादृशसर्वनिमित्तकत्वादेव । * इष्ठवद्भावेनेति * ।
अनेनेष्ठत्वमेवातिदिश्यते । भत्वं तु यचि भमित्यनेन । * वर्णाश्रयत्वमिति * ।
तेन स्रुच ताण्णिजिति पक्षेऽन्तर्वर्तिसुपा यत्पदत्वं तस्य णिलोपे जातेऽपि प्रत्ययल-
क्षणेन प्राप्त पदत्वं तेन बाधो नेति मनोरमोक्तं सङ्गच्छते । प्रकृतसूत्रविषयेऽप्याह ।
* सर्वातिदेश इति * । तेन रामस्येत्यादौ न दीर्घः । * शास्त्रीयमेवेति * ।
शास्त्रबोध्यमेवेत्यर्थः । तेन घयादेशो स्थानिवद्भावेन तासौ नित्यानिट्त्वं न । त-
स्य स्थानिनि शास्त्रबोध्यत्वाभावात् । श्रौतस्थान्यादेशभावस्यैव तस्य पुर-

प्रत्येषा परिभाषा एकदेशविकृतमनन्यवदिति, अत एवात्र विकारोऽशास्त्रीयो ऽपि । अत एव आयसशब्दादणन्ताद् द्विवचने आयसावित्यत्र वृद्धौ कृतायां मान्तस्योगित्त्वेनानेनन्यायेनाङ्गतया प्राप्तो नुम् पूर्वसवर्णविधित्वेनाचः परस्मिन्निितिस्थानिवत्त्वेन वारितो ऽचः परस्मिन्निति सूत्रे भाष्ये । एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम् । अन्तादिवत्सूत्रे भाष्यकैयटयोरपि शुद्धोदकमित्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्योदके केवलइति पूर्वपदान्तोदात्तत्वमुक्तम् । शब्दानित्यत्व रेखागवयन्यायेन समाधेयम् । अनन्यवदित्यस्यान्यवत्त्वेत्यर्थः । तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेन्न । अर्द्धस्यान्यथात्वे जातिव्यञ्जकभूयोवयवदर्शनाभावेन तौ तित्त्वप्रतीतेर्न्यायेनानुपपादनात् । किं च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूने ऽधिके वा शास्त्रव्यापारं विना ऽप्रवृत्तेर्येन विधिरिति सूत्रे ऽङ्गसञ्ज्ञासूत्रे च भाष्ये उक्ततया तदभावात् । न्यूनाधिकत्वञ्च वैरूप्यस्योपल-

---

स्फूर्तेरन्यत्। सर्वे सर्वपदादेशा इत्यत्र पदशब्दोऽवयवपरः । * अत एव * । एकदेशविकृतन्यायस्य लौकिकत्वादेव । * अत एव * । अशास्त्रीयस्यापि विकारस्य ग्रहणादेव । आयसावित्यत्राणन्तानिष्ठ सुम्निरूपिताङ्गत्वमेकदेशविकृतन्यायेन सान्ते आगतमिति नुम प्राप्ति । अत्र वृद्धे शास्त्रीयत्वेप्यकारनिवृत्तिर्न शास्त्रीयेति भाव । एतदेव समर्थयितु साधकान्तरमाह । * अन्तादिवदिति * । ननु शब्दैकदेशस्य विकारस्वीकारे शब्दनित्यत्वसिद्धान्तविरोध इत्यत आह । * शब्दानित्यत्वमिति * । रेखागवयवत्सर्वा विकारादिकल्पना वास्तविकन्तु नित्यत्वमेवेति भाव । * अन्यत्वाभाव इति * । आरोपितान्यत्वमित्यर्थ । ते न शक्यतावच्छेदकानुपूर्व्यभावात्ततो बोधानापत्तिरिति दूषणस्य नावकाशः । * जातिव्यञ्जकेति * । यत्र जातिव्यञ्जकावयवसंस्थानमस्ति तत्रैव लोकेऽयं स एवेत्यभेदप्रत्यय । अभेदप्रत्यय एव व्यक्त्यैक्यसाधकस्स किञ्चिद्विकार एव । यत्रस्वर्द्धन्तदधिक वा विकृतन्तत्र शुनोयमवयवो न तु स एवेति व्यवहार । शुनोयमिति प्रत्ययेन तु भेदस्येव सिद्धिरिति भाव । प्राचीनानुरोधेनाह । * किञ्चेति * । *परिच्छिन्नपरिमाणेति * । परिच्छिन्नानुपूर्वीकसमुदायनिष्ठतयेत्यर्थं । प्रकृते च परिच्छिन्नपरिमाणार्थवाचकास्तिङ्शब्द । *भाष्य इति* । तत्र हि यथा द्रोणादिशब्दानान्न्यूनाधिकयोर्न प्रवृत्तिस्तथा सर्वेत्यानुपूर्वीविशेषोपादानेन कृतसंकेतस्य सर्वनामशब्दस्यापि सर्वकादावप्रवृत्तिमाशङ्क्य तदेकदेशभूत तद्ग्रहणेन गृह्यते इति समाहितम । ननु शुनोऽधिकस्फोटादिविकारसत्त्वे द्रोणादिदृष्टान्तेनाय स्वा इति व्यवहार स्यादिति चेत् । तत्रापि तदेकदेशन्यायेनैव तथा व्यवहार

क्षणम् । न च तण्डुलानित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वे ऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम् । अतिदेशस्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । अत एव जहीत्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो हेर्लुग्न । सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु शाधीत्यादौ स्थानिप्रयुक्तधिभावसंपादनेन चरितार्थम् । न चाप्रत्यय इत्यस्य पर्युदासत्वे शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति वाच्यम् । वेः स्कन्देरनिष्ठायामिति षत्वविधायके तिङन्तेषु षत्वाभावापादकेन न्यायेन चानिष्ठायामिति पर्युदासेन वृत्त्याद्यभिसम्मतेन पर्युदासलभ्यशास्त्रीये ऽपि शास्त्रातात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । विस्कन्न इत्यादौ हि निष्ठा

---

इति भावः । स्थानिवद्भावविषय एव विशेषो वक्तुं शक्यते । * न चेति * । शङ्काया स्थानिवद्भावेनेत्युपादानमन्तादिवच्चेति सूत्रं स्थानिवद्भावेन गतार्थमिति मतेन । * प्रातिपदिकत्वापत्तिरिति * । तथा च नलोपापत्तिः । न चैतादृशे विषये यदि नलोपस्तर्हि तस्माच्छसो नः पुंसीत्येवास्तु । तस्मादित्यस्याक इत्यर्थे अचीति निवृत्तम् । अक शसि परे पूर्वसवर्णदीर्घो भवतीति सूत्रार्थः, विधानसामर्थ्येन चाप्रादेः परस्येत्यस्य बाध इति निर्विसर्गरूपे सिद्धे नकारादेशविधानं तच्छ्रवणार्थमिति नलोपो न भविष्यतीति वाच्यम् । तण्डुलानित्यादावित्यादिपदेन सर्वस्मिन्नित्यत्र तस्यापत्तिरित्याशयात् । न ह्यत्रापि नकारोच्चारणसामर्थ्यं वक्तुं शक्यम् । सर्वस्मिन्नाय इत्यत्र शयवासेत्यलुक्कि संज्ञाविधौ नलोपस्यासिद्धतया गुरुसंज्ञायां प्लुतसिद्धे फलत्वात् । * अतएव * । अतिदेशस्वभावाद्धि तादृशवचनबलादेव । ननु असिद्धवद्भावेऽपि यदि स्वाश्रयधर्मप्रयुक्तं कार्यं स्यात्तदाऽसिद्धवत्सूत्रमेव व्यर्थमत आह । * असिद्धवत्सूत्रं त्विति * । पर्युदासत्व इति * । अयम्भावः । अप्रत्यय इत्यस्य पर्युदासत्वे प्रत्ययान्तभिन्नस्य प्रातिपदिकसंज्ञाप्रयोजकत्वं तदभावप्रयुक्तः प्रातिपदिकसंज्ञाभावस्तु न शास्त्रबोध्य इत्येतत्प्रयोजकप्रत्ययान्तत्वबुद्धिसम्पादकः स्थानिवद्भावो न स्यादिति । उत्तराभिप्रायस्तु यदि प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वाभावः शास्त्रतात्पर्यविषयो न विधिनापि निषेध इति अप्रत्यय इतिविशेषणं व्यर्थमेव स्यादिति तत्सामर्थ्याच्छास्त्रतात्पर्यकल्पनया सिद्धोऽप्ययं शास्त्रीयवद्भवतीति तत्सम्पादकः स्थानिवद्भावो भवत्येव । अस्मिन्नर्थे साधकान्तरमाह । * वेस्स्कन्देरनिष्ठायामितीति * । पर्युदासत्वे निष्ठाभिन्ने कृत्त्वेन निष्ठासदृशे प्रत्यये एव षत्वम् न तु तिङन्ते इति लभ्यते । प्रसज्यप्रतिषेधेऽसमर्थसमासो वाक्यभेदश्च स्यादतो लाघवात्पर्युदासः । अत एव न्याय्यः । तिङन्ते षत्वाभावस्यैतत्त्वे सम्मतिमाह * वृत्त्यादीति * । * विस्कन्न इति * । अत्र हि सर्वं सर्वपदादेशा इति न्यायेन तशब्दस्य नशब्दादेशा-

नन्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात् । तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवोक्तार्थसिद्धिरिति बोध्यम् । केचित्तु भाष्ये तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः, स्व रूपमित्येतच्छास्त्रसत्त्वाद्धन्तेः कार्यं वधौ न स्यादितीत्युक्तम् । एवञ्च स्व रूपमिति शास्त्राविषये तेनसिद्धिरिति सूचितम् । एवं चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव। अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयो यदि प्राप्नोति। एवञ्च न कश्चिद्दोषः। न पदान्तेति सूत्रे ब्राह्मणकण्डूतिरित्युदाहरणाच्च क्वचित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिच् तत्राल्लोपे तस्य स्थानिवत्त्वादुवङि यणि चानादिष्टादचः

---

स्तस्याशास्त्रीयत्वेऽपि तस्याभावे स्थानिवद्भावो भवतीति। न चैचोयवायाव इति सूत्रेऽचीत्यनुवर्त्तनाद्व्ययवाद्यभावः शास्त्रतात्पर्य्यविषय इति नायक इत्यादिरूपप्रतिबन्धकस्स्थानिवद्भावस्स्यादिति वाच्यम् । पर्य्युदासलभ्येतिज्ञाप्यशरीरे निषेधेनैव दोषवारणात् । अत्र वृत्त्यादिसम्मतत्वेत्युपादानम्भाष्याननुग्रहरूपारुचिसूचनाय । अत एवाह । *तस्य प्रसज्यप्रतिषेधत्व इति* । *तस्य* । अनिष्ठाया मित्यस्य । वस्तुतस्तूक्तार्थो लाघवात्कल्प्यते । तत्र न ज्ञापकापेक्षेत्याशयेनाह । * केचित्तु भाष्य इति * । अस्योक्तमित्यनेनान्वय । * तेन सिद्धिरिति * । लोकन्यायेन सिद्धिरित्यर्थः । नन्वशास्त्रीयस्याप्यतिदेशे तासौ नित्यानिट्त्वस्याप्यविनिवृत्त्य घस्लादेशे अतिदेशादुपदेशेऽत्वत इत्यस्य प्राप्त्या जघसिथेत्यत्र क्रतो भारद्वाजस्येति निकल्पापत्ति । इष्यते त्वत्र क्र्यादिनियमान्नित्यमिडित्यत आह । * अतिप्रसङ्गस्त्विति * । न धातुलोप आर्द्धधातुक इतिसूत्रप्रत्याख्यानपरभाष्यध्वनितश्चायं कल्प । तथाहि । लोलुव पोपुव इत्यादौ यङयययकाराकारयो पृथग्लोपेऽच्प्रत्ययनिमित्तकगुणस्याच परस्मिन्निति सूत्रेणालोपस्य स्थानिवद्भावादादौ प्रतिबन्धेऽपि यङवयवाकारमाश्रित्यैवोवङि पुनरज्निमित्तकलघूपधगुणस्याच परस्मिन्नित्यल्लोपस्य स्थानिवद्भावान्निवृत्तिर्न स्याद्धुवङयवयचोका स्यानादिष्टादच पूर्वत्वाभावात्। अशास्त्रीयस्याप्यतिदेशे तु स्यान्युकारनिष्ठस्यानादिष्टादच पूर्वत्वस्य स्थानिवत्सूत्रेणातिदेशादच परस्मिन्निति स्थानिवद्भाव सिध्यतीति। अनादिष्टादच पूर्वत्वस्याशास्त्रीयस्यातिदेशादेव निपधादित्यत्रात उपधाया इति णौ वृद्धौ सर्वे सर्वपदादेशा इतिन्यायेन कृतेऽद्रोजग्धिरिति जग्ध्यादेशस्य घधादेशस्य च नापत्तिः । अनादिष्टादच पूर्वत्वस्य स्थानिनिष्ठस्य कृतवृद्धिकेऽतिदेशादिति बोध्यम् । यदुक्तं क्वचिल्लोकन्यायानाश्रयणेनेति तत्र साधकमाह । *ब्राह्मणकण्डूतिरिति* । * उवङि यणि चेति * । यदा कण्ड्वादयो धातव प्रकृतिरूपेणाश्रीयन्ते तदोवङ्प्राप्ति । यदा [illegible] प्रातिपदिकाद्यक्प्रत्यय

पूर्वत्वे स्थानिद्वारकं श्रूयमाण ऊट् न स्यादित्याहुः । अत एवार्थवत्सूत्रशेषे ऽप्रत्यय इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च काण्डे इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वाड्डीप् शङ्कितो न तु स्वाश्रयाप्रत्ययान्तत्वेन । स्त्रियो दीर्घादिति सूत्रे भाष्येऽपि आतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि स्त्रिय इत्यत्रेयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्यैव तर्हि आतिदेशिकाना स्वाश्रयाणि न निवर्तन्ते इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेण । अथाप्येतन्नेत्याशङ्क्य निर्देशसामर्थ्याद्विभक्तिरित्युक्तम् । असिद्धवत्सूत्रे च कैयटे स्फुटमेतत् । यत्तु गाङ्कुटादिसूत्रे भाष्ये सृजिदृशोरित्यत्राकितीति पर्युदासात्सिसृक्षतीत्यत्र हलन्ताच्चेति किद्वातिदेशेऽपि अमागममाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितम् । तत्तु वार्तिककृदुक्तमुपायान्तरं बोध्यम् । अनल्विधाविति । विधिग्रहणादलाश्रयविधावित्यर्थात् । यत्र विधौ शब्दत स्थानिस्थान्यवयवान्यतरालृत्तिधर्मवतस्तेन तस्मात्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया वा आश्रयणं तत्र निषेध. । व्यूढोरस्केन द्यौः पथिभ्यां क इष्टः प्रपठ्येत्युदाहरणानि । शब्दत इत्युक्तेरग्रहीदित्यादावनिट ईटीति सिद्ध्यति । दीर्घविधावत्र चेट इति समुदायाश्रयणात् । अन्यथा ह्रस्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्यल्विधित्व स्यात् । अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि वल्त्वः सत्त्वात् वलादित्वस्य तद्विशेषधर्मत्वात् उपस्थितधर्मस्तद्व्यापकमथ विन्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे विशेषानतिदेशेन सिद्धौ विशेषणतया ऽलाश्रयणे निषेध इत्येतत्प्रतिपादकस्यानल इत्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । इडादिविङिनिमित्तके त्वप्रतिषेधकाक्ष ल्यपीति लिङ्गाच्च अनुबन्धकार्ये त्वनल्वि-

---

स्तदा यणादेशस्य प्राप्ति । पूर्वोक्त पर्युदासत्वमर्थं द्रढयति । * अत एवेति * । तथाप्यतिदेशप्रवर्तनादेव । अत्रार्थे कैयटोक्तेर्विरोधमाशङ्क्य परिहरति । * यत्तित्यादिना * । * अनल्विधाविति विधिग्रहणादिति * । अन्यथाऽनलीत्युच्यमानेऽन्यविभक्त्यर्थस्य क्रोडीकारो न स्यात् । विधिग्रहणे त्वलाश्रयविधित्वसामान्यग्रहणासिद्धि । तेन प्राधान्येनाप्राधान्येन वा यत्रालाश्रयण तत्र सर्वत्र निषेधसिद्धि । * यत्र विधौ शब्दत इति * । फलितार्थकथनं उक्त । * अत्र सूत्रे विशेषेति * । तथा च सामान्यातिदेशे विशेषानतिदेश इत्येषा परिभाषा न प्रवर्तते इति भाव । प्रपठ्येत्यत्र विशेषणतयालाश्रयणे स्थानिवद्भावनिषेधोपि विधिग्रहणस्य प्रयोजनमिति व्याख्यानसामर्थ्यात् । न ल्यपीति सूत्रमप्यत्र ज्ञापकमित्याह । * इडादिविङिनिमित्तक इति * । सामान्योपस्थापकसामग्रीकाले

धाविति निषेधो न,अनुबन्धानामनेकान्तत्वात्। एकान्तत्वेऽपि शिद्ग्रहणेन तेषामव्यवहाराभावज्ञापनात्। नानुबन्धकृतमनेकाल्त्वमिति ज्ञापयतीति भाष्ये ऽल्व्यवहाराभावबोधनद्वारेति शेषः। ध्वनितश्चेदं ङिडति च, गाङ्कुटादि, हलः श्न ईति सूत्रेषु भाष्ये। तत्राद्ये यासुटो ङिद्वचनान्ङिदादेशाङ्कितो नेति ज्ञाप्यते इत्युक्तम् । द्वितीये गाङो ङित्त्वस्य सानुबन्धकादेश इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितं च ज्ञापकम् । अन्त्ये शानचः शित्वस्य सार्वधातुकादेशे अनुबन्धस्याऽनित्त्वज्ञापकत्वमुक्तं उक्तदूषणैरेव दूषितश्च। अन्यथा ऽनल्विधाविति निषेधेन तत्त्वाप्राप्त्या ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोध्यम् ।

अचः पर ॥ आदेशग्रहणमनुवर्त्तते । तदनुरोधादच इति स्थानषष्ठी, परस्मिन्नित्यादेशविशेषणं तदाह । परनिमित्त इत्यादि । अच एवादेश इत्यर्थः । तेन मरुतमाचष्टे मारयतीत्यादौ वृद्धिः । अत्र सूत्रे प्रयोगे यो ऽचः स्थानिक इत्यर्थः। न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थः। तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति। अत एव वह्वपरानिर्ह्रासे णयन्तात् णिचि अत्रीवददित्यादिसिद्ध्यर्थो निषेधः सार्थकः । अच इति किम् । आगत्य । मलोपस्य स्थानिवत्त्वात् ह्रस्वस्येति तुम स्यात् । परस्मिन्निति किम् । युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति । पूर्वविधाविति किम् । नैधेयः। निपूर्वाद्धाञः किप्रत्यये आतो लोपे तस्य स्थानिवद्भावाद् यच्त्व-

---

नियमेन विशेषोपस्थापकसामग्र्यभावमूलिकायास्सामान्यातिदेश इति परिभाषायास्त्यागेऽपि ■ त्यपीति सूत्रस्य न चारितार्थ्यम् । प्रदाय प्रधायेत्यादौ स्थानिवद्भावेन कित्त्वस्य विशेषणतयाऽलाश्रयणान्निषेधस्स्यादत आह। * अनुबन्धकार्ये त्विति * । *इति दोष इति*। एतेन नानुबन्धकृतमनेकाल्त्वमिति परिभाषान्तरमारब्धव्यमिति सूचयति । * ध्वनित चेदमिति * । अनुबन्धानामल्व्यवहाराभावस्वरूप धर्मस्त्वित्यर्थः । एवम्भगवतो ङिच्च पिच्च पिच्च ङिच्चेति या कल्पना साप्यनुबन्धानामल्व्यवहाराभावसूचिकेति बोध्यम् । * अच एवेति * । अच परस्मिन्निति सूत्रेऽनुवृत्तादेशपदार्थेऽच्पदार्थस्य स्वमात्रनिरूपकत्वरूपसम्बन्ध षष्ठ्यर्थः । *अत एव चाडिति* । उक्तार्थस्वीकारादेव । वह्वपरनिर्ह्रास इत्यस्य कर्तव्य इति शेषः । * निषेध इति * । किलुगुपधात्वेति निषेधस्सार्थक इत्यर्थः ।

* यलोपो न स्यादिति * । स्वाश्रयनिवृत्तेरप्येतत्सूत्रसाध्यत्वात् । ननु युवजानिरित्यत्र यलोपविधिरस्मिन् न स्थानिवदित्यनेनापि गतार्थमत आह। * धेयामपद इति * । यद्यत्र स्थानिवद्भावः स्यात्तदा पञ्चायो न स्यात् । * गा

व्यपदेशविरोधात्स्वाश्रयश्यत्त्वनिवृत्तौ ठगनापत्तेरिति दिक् । अत्र स्थानिनि सति यद्भवति तदादेशे ऽपि भवति, स्थानिनि यन्न भवति तदादेशे ऽपि नेति भावाभावयोरुभयोरप्यतिदेशः । तत्र भावोदाहरण निगाल्यते इति । अन्त्योदाहरण पटयतीत्यादि । स्थानिनिमित्तक भवति, आदेशनिमित्तक नेति च तदर्थः । लघूपधत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहु॰ । स्थानिभूतादच इति । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः । पूर्वविधावित्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थस्तेन पूर्वपरयोर्विधौ न । तेनारतुरित्यादौ ऋच्छत्यृतामिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम् । एकस्योक्तोर्थ. । द्वितीये, भावे कि: । संबन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भावः पूर्वसम्बन्धिभावे तत्स्थितौ स्थानिवदित्यर्थ । अत एव नंधेय इत्यादौ यस्येति चेति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थिति॰ । अत एव नपादात्सूत्रे पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इति लुकि न स्थानिवदित्यस्योदाहरण उक्त भाष्ये । अन्यथा तत्र पूर्वत्वेन इष्टस्य सन्निन कस्य चिद्विधेयस्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गति॰ स्पष्टैव । प्रकृतसूत्रे ऽपि भाष्ये कर्मसाधनस्य विधिशब्दस्योपादानेन सर्वमिष्ट सगृहीतमिति भावसाधनो विशास्यते पूर्वस्य विधान प्रति पूर्वस्य भाव प्रति स्था-

---

दीप्य इति *। अत्र स्थानिवद्भावे यीवर्णयोरिति लोपस्याप्राप्ति । * स्वाश्रयश्च ष्त्वनिवृत्तेरिति *। गौणी मुख्या वा सङ्ख्या पूर्वा सङ्ख्या बाधत इति न्यायात् । * निगाल्यत इति * । अनाधे निभापेति लत्वम् । * पटयतीति * । टिलोपस्य स्थानिवद्भावादुपधावृद्धिर्न भवति । * लघू रधस्येति * । अदुपधत्व इत्यर्थ । * व्याख्यानाच्चेति * । परस्मिन्नित्यस्य श्रवणाद्यदि परस्यावधित्व तदा स्वन इत्यत्र गुणनिमित्त युनिमित्तकस्य स्थानिवद्भावोऽवादेशो न स्यात् । इत्थ च चिरतौ स्वन इति निर्देशासगतिरितिभावमूलकादित्यर्थ । *तस्येव*। अच एव । * पूर्वसम्बन्धिन्येव शास्त्रविधेय इति *। अत्र मानमजादेरित्यादि निर्देश । अन्यथा घेङितीति गुणस्य स्थानिवद्भावे सति ङसिङसोरिति पूर्वरूपानापत्ति । सूत्रन्तु सेगोदाब्दान्ङसिङसोश्चरिताथम् । अधिकार्थसङ्ग्रहार्थमाह । *वस्तुतोऽत्रेति*।*तन्त्रमिति*। विवक्षितो यावानर्थस्स पर्यायशब्दान्तरेण बोध्य, ते इति बोद्धु श्रोतुश्च शब्दत अर्थवानेकार्थप्रतीतिरिति भाव । माव इत्यन्तार्थ माह । * तत्स्थितावित्यर्थ इति * । तन्त्रनिर्देशे मानमाह । * अत एवेति * द्वितीयायाश्चीकारादेर्येत्यर्थ । भाष्यसम्मतिरप्यत्रार्थ इत्याह । * प्रकृतसूत्रे ऽपीति * । भावसाधनविधिशब्दपक्षे इष्टयमेवार्थस्तदा निगाल्यते पचमादिपूर्वो

निवदिति उक्तम् । तत्र भावसाधन इत्यस्य सो ऽपीत्यर्थः । पूर्वत्वञ्च व्यवहिताव्यवहितसाधारणम् । अव्यवहितग्रहणे मानाभावात्स्वरे निषेधाच्च । तेन पट्यतीति सिद्धम् । प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वमिति ।

न पदान्त ॥ अत्र द्विर्वचनसवर्णादिग्रहणं वतिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थं । तेन राम इत्यादौ विसर्गादिसिद्धिः । अत्र विधिशब्दो भावसाधनः । पदान्तेत्यत्रान्तशब्दश्चरमावयववाची कर्मषष्ठ्या समासः । तेनैषो यन्हमतीत्यादावेतत्तदोरिति सुलोपो न । इणः शतरि यन्निति रूपम् । तत्र यणः स्थानिवत्त्वाद् उत्वे च न स्थानिवत् । अनेन निषेधात् । स्पष्टञ्चेदं भाष्ये इति भाष्यप्रदीपोद्योते निरूपितम् । अत्र पदे ऽन्त इति

---

कार्यप्रयोजनासङ्गतिरत आह । * सोऽपीत्यर्थ इति * । * साधारणमिति * । तत्र कार्यशब्दवादे स्वोत्पत्त्यधिकरणक्षणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्वरूपम् । नित्यत्वपक्षे तु तज्ज्ञानघटितम्बोध्यम् । * प्रकृत इति * । सुध्युपास्य इति प्रयोगे ।

नन्वत्र द्विर्वचनादिग्रहणं व्यर्थम् । तेषां त्रैपादिकत्वेनासिद्धत्वात्तेषु कर्तव्येषु स्थानिवद्भावस्याप्रसक्तेरत आह । * अत्र द्विर्वचनेति * । अत्रान्येति न ज्ञाप्याशमविष्ट किन्तु फलमन्यत्र । एतत्सूत्रविषये तु पूर्वत्रासिद्धे न स्थानिवदित्यग्रहस्य द्विर्वचनादिग्रहणस्याकरणमेव भाष्यकृत्सम्मतमेवञ्च द्विर्वचनग्रहणस्य ज्ञापकत्ववर्णनावसरे भाष्ये वचनं वतिघटितातिदेशानां त्रिपाद्यामपि प्रवृत्तिरित्येव । एवञ्च स्थानिवदादेश इत्यस्यान्तादिवच्चेत्यस्य व्यपदेशिवदेकस्मिन्नित्यस्य त्रिपाद्यामपि प्रवृत्तिः । प्रथमे प्रयोजनमाह । * तेन राम इत्यादाविति * । द्वितीयस्य प्रयोजनममी क्षीरपेण । अत्रैकादेशे अदस्शब्दसम्बन्धित्वम् । तथैकादेशे एकाज्जुत्तर दत्वमन्तादिवच्चेत्यनेन । तृतीयस्य प्रयोजनमचैषीदित्यत्र सदेघान्यक्षदित्यत्र च सिच सिपश्च सकारस्य प्रत्ययावयवत्वात्पत्वं व्यपदेशिवद्भावेन । वस्तुतस्तु वतिघटितानामतिदेशानां त्रिपाद्यामन्यथाप्यस्तु प्रवृत्तिरेव । असिद्धं परस्मिन्नित्यस्य तु सर्वथा प्रवृत्तिरेव न । किन्तु क्व चित्प्रवृत्तिः क्व चिदप्रवृत्तिः । एवञ्च तस्य दोष इत्यपि नापूर्वमिति विशेषसूचकं द्विर्वचनादिग्रहणम् । * तेनैष इति * । भावसाधनत्वेन । पदचरमावयवकर्मके विधाने न स्थानिवदिति वाक्यार्थनिष्पत्तौ एषो यनित्यत्र विधेयस्य लोपस्याभावरूपस्य पदावयवतया तस्मिन् कर्तव्ये निषेधाप्रवृत्त्या स्थानिवद्भावेन हल्परत्वाभावेन लोपो न । अनेन सूत्रेण पदचरमावयवस्य प्रापकं प्रतिबन्धकञ्च स्थानिवद्भावो निषिध्यते विनिगमनाविरहात् । कानि सन्ति कौ स्त इत्यत्र प्रापकं एषो यन्नित्यत्र प्रतिबन्धकस्थानिवद्भावो निषिध्यते । * अत्र पदे ऽन्त इतीति * । अन्तशब्दस्य च॰

सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति वेतस्वानित्यादौ न दोषः । न चैवमपि पूर्वत्रासिद्धीये न स्थानिवदिति निषेधोऽत्र दुर्वार. । पदेऽन्त इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात् । अत एव महिष्मानित्यत्र जश्त्वं न । सूत्रे जश्पदेन झलाञ्जशीत्यस्यैव ग्रहण

---

वयाचकतया पदे परतश्चरमावयव पूर्वपदस्यैव सम्भवतीति तत्प्रापक प्रतिबन्धको वा स्थानिवद्भाव परपदस्थाजादेशस्यैवेति तदेकवाक्यतया षष्ठीसमासपक्षेऽपि तादृश एवाजादेशो गृह्यते । वेतस्वानित्यत्र तु न तथा । पदचरमावयवसत्त्वात्स्थानिवत्त्वस्य प्रतिबन्धकस्थानिवद्भावो भवत्येव । परपदस्थाजादेशस्य स्थानिवत्त्वाप्रसक्ते । * न चैवमिति * । अस्यापूर्वत्वपक्षेऽनेन उपपादित रीत्या क्वाचित्करत्वकल्पने तु तस्यैव । * अत एव * । पदचरमावयवातिरिक्तस्य त्रैपादिकस्य ग्रहणादेव । इदमत्र बोध्यम् । यद्यपि वेतस्वानित्यत्र पदान्तविधिशब्दे षष्ठीसमासपक्षे स्थानिवद्भावनिषेध प्राप्नोतीत्याशङ्क्य पदेऽन्त इति सप्तमीसमासेन निषेधाप्राप्त्युपपादन यदि तदा लोप, शाकल्यस्येति सूत्रव्याख्यावसरे पृक्षश् करोतीत्यत्रादग्रहणाभावेऽपि स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञाने तन्निर्णये च स्थानिवत्त्वाभावज्ञानमित्यन्योन्याश्रय इति निषेधाप्रवृत्तिरिति वक्ष्यमाणरीत्या निषेधो न प्राप्नोतीति सप्तमीसमासप्रदर्शनवैयर्थ्यशङ्का भवति । तथापि न पदान्तसूत्रस्थभाष्ये पदान्तविधिशब्दस्य कानि सन्ति कौ स्त इति प्रयोगे निषेधप्रवृत्ति प्रयोजनमित्युक्त । तत्प्रामाण्येन यत्र पदान्तत्व सिद्ध, तत्र निषेध इति कल्प्यते । वेतस्वानित्यत्र तु पदान्तत्वमत्र सिद्धमिति निषेधो न प्रवर्तेत परन्तु सूत्रस्थपदान्तशब्दस्य पदान्तत्वपरतया स्वादौ पूर्वरूपदमिति पदत्वकर्तव्ये निषेधप्रवृत्ति तसौ मत्वर्थे इति भत्वे तु निषेधप्रवृत्त्यभावात्स्थानिवत्त्वेनैतदकारान्तमिति न भत्वेन पदत्वबाध । यदि तु सप्तमीसमासेन परपदस्थाजादेशस्यैव स्थानिवद्भावनिषेधस्तदात्र न निषेधप्रवृत्तिरिति पदत्वबाध एव इत्युपाध्यायानुयायिन । वस्तुतस्तु द्विर्वचनशब्दस्य शास्त्रीयार्थबोधकतया पदान्तशब्दोऽपि शास्त्रीयार्थस्यैव बोधकस्तत्साहचर्य्यादिति युक्तम् । वेतस्वानित्यत्र रुत्वस्य पदचरमावयवत्वेन तस्मिन्कर्त्तव्ये निषेध प्रवर्त्तते । न च पदसञ्ज्ञा न पदचरमावयव इति वाच्यम् । तस्या कार्य्यार्थत्वाद्रुत्वस्य पदचरमावयव इति वाच्यम् । तस्या कार्य्यार्थत्वाद्रुत्वस्य पदचरमावयवत्वेन तत्सम्पादकपदसञ्ज्ञाया अपि पदचरमावयवत्वेन ग्रहणमिति पूर्वपक्ष्याशय । सिद्धान्त्येकदेशिना तु समाहितम्प्रसङ्गा बाधिका भविष्यति । तस्यायम्भाव । यदि पदचरमावयवसम्पादकस्यापि पदचरमावयवत्वेन ग्रहणन्तदा सान्तनिष्ठपदत्वाप्रतिबन्ध-

चरसन्निहितस्यैव ग्रहणौचित्यात् । कार्यकालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्त्ततइति वक्ष्यते इति न तयास्य सिद्धिः । गोचेत्यादौ गतिकारकोपपदानामित्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः । उत्तरपदत्वे

---

सम्पादकत्वादुत्वप्रापक भत्व पदचरमावयवाप्रापकत्वात्पदान्तशब्देन गृह्येत।न च भत्वस्पदत्वप्रतिबन्धक न तु पदत्वाप्रतिबन्धसम्पादकमिति शङ्क्यम्। भत्वे कर्त्तव्ये टिलोपस्य स्थानिवद्भावा न क्रियते । ततश्च पदत्व भवतीति भत्वप्रतिबन्धकस्थानिवद्भावप्रयोजकज्ञानविषयत्वाद्भत्वमपरम्परया त्वत्तसम्पादकत्वात्पदत्वात्प्रतिबन्धकमिति व्यपदिश्यत इत्याशयात्।पदचरमावयवे भत्वे कर्त्तव्ये टिलोपस्य स्थानिवद्भावानिषेधाद्भसंज्ञया पदत्वबाधाद्धुत्वमेति भाव ।परत्वेव रीत्या समाधाने महान् क्लेश इत्यत आह । *अत्र पदेऽन्तइतीति* । पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्येत्यर्थस्यावश्यकत्वमाह। *अत एवेति*। तादृशार्थकल्पनादेव । *मद्दिष्मानित्यत्रेति* । अत्र भत्वनिषयता नेति भाव । एव चात्र टिलोपस्य स्थानिवद्भावो भवत्येव।ननु जश्विधिप्रति न स्थानिवदिति निषेधस्स्यादत आह । * सूत्रे जश्पदेनेति * । * चरसन्निहितेति * । प्रकृतसूत्रे चरसन्निहितपाठेन यस्य जशश्चरन्मान्निधान तस्यैव ग्रहणमिति भाव । नन्वन्तरङ्गे जश्त्वे बहिरङ्गस्य टिलोपस्यासिद्धत्वाज्जश्त्वन्न भविष्यतीत्यत आह । *कार्यकालपक्ष इति * । * यत्तु जश्त्वमत्रेति * । वस्तुतो झला जशोऽन्त इत्यत्र झल्पदविशेषणाज्झलन्तपदस्यालोऽन्त्यस्य जशित्यर्थेन सिद्धेऽन्तग्रहणात्पदान्तस्य झलो जश् भवति न तु लोपकृतपदान्तस्यापीत्यर्थस्य क्रोडीकाराज्जश्त्वप्राप्ति , नेति तन्न । भ्रस्जेर्णिचि क्विपि भृड्भ्राडित्यसिद्ध्यापत्ते । अत्र हि सयोगस्य प्रकृतमेव पदान्तत्वम् । किञ्च बुधमाचष्टे बुधयति । बुधयतीति भुदित्यस्य सिद्धिर्न स्यात् । किञ्चैतत्सूत्रभाष्ये भावसाधनविधिपक्षे प्रह्वबन्ध्वा प्रह्वबन्ध्वे इहि जश्त्वम्प्राप्नोतीतिशङ्कितम् ।तत्र कैयट ऊडनूडोरेवादेश ऊड्ग्रहणेन गृह्येत, ऊन्स्वादिष्विति पदसंज्ञाया वकारस्य जश्त्व स्यात् इति । तदेतद्विरुध्येत । वकारो न हि पदान्त एव । न चैव गतिकारकोपपदानामिति सुबुत्पत्ते प्राक् समासे उत्तरपदस्य पदत्वाभावेन पदेऽन्त इति समासे गोचेत्यत्राच इत्यल्लोपस्य स्थानिवद्भावादवडादेशापत्तिरत आह । * गोचेत्यादावितिवि * । सा हि तस्य भवतीतेत्यत्र यथा । नन्वेवमपीदमनुपपन्नमुत्तरपदत्वेचेति निषेधेनोत्तरपदस्य पदत्वाभावादत आह । *उत्तरपदत्व इति* । उत्तरपदत्वे चापदादिविधौ प्रतिषेध इति हि वार्त्तिकम् । उत्तरस्य पदत्वे । उत्तरपदत्वे उत्तरपदशब्दपरोऽत्रोत्तरशब्द पदैकदेशलोपात् । एवञ्चोत्तरपदस्य पदत्वव्यपदेशे कर्त्तव्ये प्रत्ययलक्षणन्नेत्यस्यार्थ । परमवाचा । परमवाचे । गोदुहा मधुलिहा अत्रोत्तरपदस्य पदत्वे प्रत्ययलक्षणात्कुत्वघत्वढत्वादीनि न । अपदादिविधाविति किम्। दधिसेचौ दधिसेच । अत्रोत्तरपदस्य पदत्वे सात्पदाद्योरितिनिषेधस्सिद्धो भवति ।

चेति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न

---

न च माषकुम्भवापेनेत्यत्र कुम्भशब्दव्यवायेन च पदव्यवायेऽपीति निषेधस्य न स्यात्। कुम्भशब्दस्य उत्तरपदत्वे नेति पदत्वनिषेधादिति वाच्यम्। अपदादिविधाविति पर्युदासादुत्तरपदस्य कार्यित्वे एव प्रवृत्तिरित्यङ्गीकारात्। न च पूर्वं दण्डिप्रिय इत्यत्र त्रिपदे बहुव्रीहौ प्रियशब्दे तद्धितार्थेतिसमासे दण्डिप्रियस्य नलोपात्मककार्याधिकरणतया प्रत्ययलक्षणनिषेधे सति नलोपो न स्यादिति वाच्यम्। उत्तरपदशब्देन मध्यमपदस्यानामन्तस्यैवोत्तरपदस्य ग्रहणात्। न चैवं सति माषकुम्भवाप इत्यत्र कुम्भपदस्य मध्यमपदस्यानामन्ततया निषेधाविषयत्वेन पदव्यवायेऽपीति निषेधसिद्धौ कार्यित्वनिवेशो व्यर्थ इति वाच्यम्। प्रत्यासत्त्या तत्समासीयमध्यमपदस्यानामन्तस्य ग्रहणात्। एवञ्च माषस्य कुम्भो माषकुम्भः। माषकुम्भस्य वाप इति षष्ठीतत्पुरुषपूर्वपदक षष्ठीतत्पुरुषे कुम्भशब्दस्य तत्समासीयमध्यमपदस्यानामन्ततया तस्य प्रत्ययलक्षणेन पदत्वनिवृत्त्यर्थं कार्यित्वनिवेशस्यावश्यकत्वात्। न चैवमपि पूर्वं दण्डिप्रिय इत्यत्र त्रिपदे बहुव्रीहौ अथवा तत्पुरुषे तत्समासोत्तरपदस्य दण्डिप्रियस्य तत्समासीयमध्यमपदस्यानामन्ततया निषेधापत्तिरिति वाच्यम्। तत्समासप्रयोजकैकार्थीभाववद्योग्यसमासीयमध्यमपदस्यानामन्ततया तात्पर्यस्वीकारात्। प्रकृते चोभयसमासप्रयोजकैकार्थीभावस्यैकत्वेन दण्डिप्रियस्य विवक्षितमध्यमपदत्वमस्त्येव। न चैवं रूपरमयाचेत्यादौ वागादिशब्दस्यैतत्समासीयमध्यमपदत्वाप्रसिद्ध्या विशिष्टार्थाप्रसिद्धिरिति प्रकृतप्रयोजनस्यैवासिद्धिरिति वाच्यम्। तत्समासीयमध्यमपदानामन्ततेत्यस्य तत्समासीयचरमपदाव्यवहितपूर्ववर्तित्वविशिष्टपदस्यानामन्तत्वमित्यर्थात्। अतद्धित इत्यस्य प्रत्याख्यानाय पदे व्यवाय इत्यर्थस्यावश्यकत्वेन च कार्यित्वनिवेशावश्यकत्वात्। अन्यथा वापशब्दस्य पदत्वाभावेन माषकुम्भवापेन इत्यत्र निषेधो न स्यात्। न चैवं सति परमदण्डिनावित्यादौ ङमुट् स्यादिति वाच्यम्। अजादेः पदस्येति व्याख्यानात्। न च सुगण्णीशावित्यत्र ङमुडागमो न प्राप्नोति। ईशशब्दस्य मध्यमपदत्वानामन्तत्वात्कार्यित्वाच्चेति वाच्यम्। पूर्वोत्तरपदान्तत्वनिमित्तकविधावित्युपादानेनैतत्सम्प्रहाणात् न चैवं मध्यमपदत्वे तत्समासीयत्वविशेषणं व्यर्थम्। कुम्भशब्दस्य वापशब्दस्य वा पदत्वमनायासेन सिध्यति। पदव्यवायेऽपीति निषेधस्य पदान्तत्वनिमित्तकविधित्वाभावादिति वाच्यम्। दधिसेचिनाय, दधिसेचिवास इत्यादौ शयवासवासीति सप्तम्या अलुकि सेकशब्दस्य पदान्तत्वनिमित्तककुत्वाभावार्थं प्रत्यासत्तिलभ्यस्य तत्समासीयत्वनिवेशस्यावश्यकत्वात्। अत एव गोधुग्धा सेत्यस्य च सिद्धिः। न च पदे व्यवाय इत्यर्थे वापशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेश इति यदुक्तं तत्पद इत्यत्र पदशब्दस्य पदाययोग्यपरत्वेनाप्ययथासिद्धमिति वाच्यम्। शास्त्रान्तरसङ्केतितोत्तरपदशब्दस्य तादृशेऽर्थे लक्षणापेक्षया स्वशास्त्रसङ्केतितपदशब्दस्य लक्षणामौचित्यादिति दिक्। नपदान्तसूत्रे पदेऽन्त इत्यत्र पदशब्दस्य लक्षणयापि गोचे

दोषः । पदे इति पदत्वयोग्योपलक्षणं वा । अत्रेदं भाष्यमपि मानम् । अत्र पदचरमावयवादिसाधकः प्रतिबन्धकस्य स्थानिवद्भावो निषिध्यते । विनिगमनाविरहात् । एतत्सूत्रभाष्यकमेर्णिङित्यादिसूत्रभाष्यैः पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य परेयल्लोपस्वरदीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति

---

त्यस्य सिद्धिरित्यभिप्रायेणाह । * पदे इतीति * । * एतत्सूत्रभाष्येति * । पूर्वत्रासिद्धे च । पूर्वत्रासिद्धे न स्थानिवदिति वक्तव्यम् । परेयल्लोपस्वरवर्जमेतावदेव यद्यपि तत्रोक्तम् । तथापि दीर्घस्याप्युपलक्षणमेतदित्याशयेनाह । * परेयल्लोपस्वरदीर्घग्रहणवर्जमिति * । अयम्भावः । यद्यपि दीर्घग्रहणस्य प्रतिदीव्न इति प्रयोजनं पूर्वत्रासिद्धत्वेन सिध्यति । तथापि कमेर्णिङिति सूत्रस्थभाष्यप्रामाण्येन सपादसप्ताध्यायीस्थस्यापि दीर्घस्य ग्रहणमिति दीर्घग्रहणमावश्यकमित्यनन्तरभाष्यमुपलक्षणम् । तत्र हि कमेर्णिङो ङकारस्य णेरनिटीत्यत्र णिसामान्यग्रहणार्थत्वमुक्त्वा ङकारस्यात्मनेपदार्थत्वमप्युक्त्वा प्रतिषेधस्य चल्यत्वेन कामयत इत्यत्र क्ङिति चेति प्रतिषेधः प्राप्नोतीति शङ्कितम् । इक्प्रकरणादिग्लक्षणयोरेव गुणवृद्ध्योर्निषेध इत्यज्ञानेन शङ्केयम् । एवमेव चान्ते समाहितं सिद्धान्तिना । मध्ये सिद्धान्त्येकदेश्याह । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न कमेर्वृद्धिप्रतिषेधो भवतीति । यदयं कम्यमिचमामिति मित्त्वप्रतिषेधं शास्ति । पूर्वपक्ष्याह । अर्थवान् मित्त्वप्रतिषेधः कामयमानमचकमतेत्यर्थं णिङ् तस्माण्णिचि या वृद्धिस्तस्या ह्रस्वत्वं माभूदिति, नैव वा णिचि वृद्धिः प्राप्नोति क्ङिति चेति प्रतिषेधात् । सिद्धान्त्येकदेश्याह । क्ङिति चेत्यत्र तन्निमित्तग्रहणात् तस्य या वृद्धिस्तस्याः प्रतिषेधः । न च णिङन्तस्य णिचि वृद्धिं प्राप्नोति । णिङा व्यवहितत्वात् । लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । इदं तर्हि प्रयोजनं यत्तच्चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति दीर्घत्वं शास्ति । तत्कमेर्णिङि माभूत् । किम्पुनः कारणन्तत्र दीर्घोऽन्यतरस्यामित्युच्यते । न । ह्रस्वोऽन्यतरस्यामित्येवोच्येत यथाप्राप्तं कमेर्ह्रस्वत्वम् । तत्रायमर्थः । ह्रस्वग्रहणं न कर्त्तव्यम्भवति, प्रकृतमनुवर्त्तते मितां ह्रस्व इति । अशमि । अशामि । शमंशमम् । शामं शामम् । वृद्धा मित्त्वं । न सिध्यति । नोदात्तोपदेशस्येति प्रतिषेधः प्राप्नोति । चिण्कृतोः स प्रतिषेधः णिच्यनदितेषु तर्हि यङ्लोपे चोपसङ्ख्यानं कर्त्तव्यं स्यात् । शमयतं प्रयोजितवान् । अशमि । अशामि । शाशमयते अशाशमि । अशाशामि । किम्पुनः कारणं, न सिध्यति चिण्णमुल्परे णौ मितामङ्गानां ह्रस्वो भवतीत्युच्यते । यश्चात्र णिश्चिण्णमुल्परो न तस्मिन् मिदङ्गम् । यस्मिन् मिदङ्गं नासौ चिण्णमुल्परः । णिलोपे च कृते चिण्णमुल्परः । स्थानिवद्भावाच्च चिण्णमुल्परः, अथ दीर्घोऽन्यतरस्यामित्युच्यमाने यावता स्थानिवद्भावं कथं

चेति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न

---

न च माषकुम्भवापेनेत्यत्र कुम्भशब्दव्यवायेन च पदव्यवायेनेति निषेधस्य न स्यात् । कुम्भशब्दस्य उत्तरपदत्वे सति पदत्वनिषेधादिति वाच्यम् । अपदादिविधाविति पर्युदासादुत्तरपदस्य कार्यित्वे एव प्रवृत्तिस्वीकारात् । न च पूर्वं दण्डिप्रिय इत्यत्र त्रिपदे बहुव्रीहौ प्रियशब्दे तद्धितार्थेतिसमासे दण्डिन्शब्दस्य नलोपात्मककार्याधिकरणतया प्रत्ययलक्षणनिषेधे सति नलोपो न स्यादिति वाच्यम् । उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तस्यैवोत्तरपदस्य ग्रहणात् । न चैवं सति माषकुम्भवापेनेत्यत्र कुम्भपदस्य मध्यमपदत्वात् ततया निषेधाविषयत्वेन पदव्यवायेपीति निषेधासिद्धौ कार्यित्वनिवेशो व्यर्थ इति वाच्यम् । प्रत्यासत्त्या तत्समासीयमध्यमपदत्वानाक्रान्तस्य ग्रहणात् । एवञ्च माषस्य कुम्भो माषकुम्भः । माषकुम्भस्य वाप इति षष्ठीतत्पुरुषपूर्वपदकषष्ठीतत्पुरुषे कुम्भशब्दस्य तत्समासीयमध्यमपदत्वानाक्रान्ततया तस्य प्रत्ययलक्षणेन पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वात् । न चैवमपि पूर्वं दण्डिप्रिय इत्यत्र त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषे तत्समासोत्तरपदस्य दण्डिन्शब्दस्य तत्समासीयमध्यमपदत्वानाक्रान्ततया निषेधापत्तिरिति वाच्यम् । तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासीयमध्यमपदत्वानाक्रान्तेत्यर्थस्वीकारात् । प्रकृते चोभयसमासप्रयोजकैकार्थीभावस्यैकत्वेन दण्डिन्शब्दस्य विवक्षितमध्यमपदत्वमस्त्येव । न चैवं परमवाचेत्यादौ वागादिशब्दस्यैतत्समासीयमध्यमपदत्वाभावसिद्ध्या विशिष्टार्थाप्रसिद्धिरिति प्रक्रान्तप्रयोजनस्यैवासिद्धिरिति वाच्यम् । तत्समासीयमध्यमपदानाक्रान्तत्वस्य तत्समासीयमध्यमपदाव्यवहितपूर्वपदत्त्वविशिष्टपदत्वानाक्रान्तत्वे तात्पर्यात् । अतद्धित इत्यस्य प्रत्याख्यानाय पदे व्यवाय इत्यर्थस्यावश्यकत्वेन च कार्यित्वनिवेशावश्यकत्वात् । अन्यथा वापशब्दस्य पदत्वाभावेन माषकुम्भवापेन इत्यत्र निषेधो न स्यात् । न चैवं सति परमदण्डिनावित्यादौ ङमुट् स्यादिति वाच्यम् । अजादेः पदस्येति व्याख्यानात् । न च सुगण्णीशावित्यत्र ङमुडागमो न प्राप्नोति । ईशशब्दस्य मध्यमपदत्वानाक्रान्तत्वात्तस्य कार्यित्वाभावादिति वाच्यम् । पूर्वोक्तोत्तरपदान्तत्वनिमित्तकविधावित्युपादानेनैतत्प्रग्रहात् । न चैवं मध्यमपदत्वे तत्समासीयत्व विशेषणं व्यर्थम् । कुम्भशब्दस्य वापशब्दस्य वा पदत्वमनायासेन सिध्यति । पदव्यवायेपीति निषेधस्य पदान्तत्वनिमित्तकविधित्वाभावादिति वाच्यम् । दधिसेचिनाय, दधिसेचिवास इत्यादौ शायवासवासीति सप्तम्या अलुकि सेचशब्दस्य पदान्तत्वनिमित्तककुत्वाभावाय प्रत्यासत्तिलभ्यस्य तत्समासीयत्वनिवेशस्यावश्यकत्वात् । अत एव गोधुग्धा सेत्यस्य च सिद्धिः । न च पदे व्यवाय इत्यर्थे वापशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेश इति यदुक्तं तत्पद इत्यत्र पदशब्दस्य पदत्वयोग्यपरत्वेनाप्यन्यथासिद्धमिति वाच्यम् । शास्त्रान्तरसङ्केतितोत्तरपदशब्दस्य तादृशेऽर्थे लक्षणापेक्षया स्वशास्त्रसङ्केतितपदशब्दस्य लक्षणौचित्यादिति दिक् । अपदान्तसूत्रे पदेऽन्त इत्यत्र पदशब्दस्य लक्षणयापि गोचे

घमेव । ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनाच्च । आक्रोशो निन्दा तदाह । पुत्रादिनीति । तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह । पुत्रहतीति । अनचि चेति सिद्धे पुत्रस्य त्कान्ते चेद्धतजग्धयोरेवाक्रोशएवेति नियमार्थमिदम् ।

संयुक्तेष्विति । त्रिप्रभृतिष्विति सूत्रे वर्णानां सजातीयानामेव ग्रहणं परस्परसाहचर्यात् । न च तयाचः सम्भवति । अत एवाचो रहाभ्यामिति सार्थकम् । निर्धारणे सप्तमी, अच इत्यनुवर्त्तते, त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इत्यर्थः । तेनेन्द्रः राष्ट्रमित्यत्र नकारषकारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः । अचचि च, सर्वत्रशाकल्यस्येत्येव सिद्धे इदं सूत्रद्वय विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोध्यम् । यरो ऽनुनासिकइत्यतो वेत्यनुवृत्त्या ऽनचीत्येव सिद्धे सूत्रत्रयमपि तथेति बोद्धव्यम् ।

अचो र ॥ अच इति श्रुतत्वाद्व्याख्यानाच्च रहाभ्यां सम्बध्येत । तस्मादित्युत्तरस्येत्येतल्लभ्यमाह । अचः पराभ्यामिति ।

वा यमीति । झयो ह इत्यतोऽन्यतरस्यामित्यनुवृत्तेरिति भावः । दीर्घादाचार्याणामित्युत्तरमनुस्वारस्य ययि, वा पदान्तस्य, तोर्लि, उदःस्था, झयोहो, शश्छोटीति पञ्चसूत्रीपाठोत्तर झलां जश् झशि, अभ्यासे चर्च, खरि च, वावसाने, अणोऽप्रगृह्यस्येति पञ्चसूत्र्याः पाठ इति भाष्यसमताष्टाध्यायीपाठे तु वावसाने इत्यतोऽनुवृत्तिर्बोध्या । स्पष्टञ्चास्य वैकल्पिकत्व ल-

---

क्षसम्पन्नत्वादेव ।

त्रिप्रभृतिष्वित्यस्य व्याख्याने संयुक्तेष्वित्युक्तन्तत्रोपायमाह । * त्रिप्रभृतीत्यादि * । अत्र सूत्रशब्दप्रयोगस्साहचर्यात् । * अत एव * । ऽयादिहलामेव ग्रहणादेव ।

* श्रुतत्वादिति * । श्रुतानुमितयोरिति न्यायात् । ननूत्तरसूत्रानुरोधेन यर एव विशेषणमुचितमत आह । * व्याख्यानादिति * । प्रत्यासत्त्या श्रुतविशेषणत्वस्य व्याख्यत्वरूपादित्यर्थः । *इत्यनुवृत्तेरिति* । इत्यतोन्यतरस्या ग्रहणानुवृत्तेरित्यर्थः ।

* भाष्यसम्मताष्टाध्यायीपाठे त्विति * । उद्‍ स्थास्तम्भोरिति सूत्रभाष्ये उत्पूर्वस्य देश्छन्दस्युपसङ्ख्यानमिति वार्त्तिकस्य भाष्ये दूरमुत्कन्देत्युदाहरणे तथा वोगे वेति वक्तव्यमिति वार्त्तिकस्य उत्कन्दको रोगे इत्युदाहरणं चोदस्थेति सूत्रस्थवार्तिकनिष्पन्नसकारस्थानिकथकारस्य चर्त्वेन तकार एव । व्यत्यासाभावे

सूत्रे भाष्ये । आदित्य इति । आदित्यशब्दाच्छेपार्थण्यान्ताद्देवतार्थे ण्यःाय-स्येति चेत्यल्लोपेऽनेन यलोपः । आपत्यस्येति तु न । अपत्यत्वाभावात् । हल इति किम् । शय्या । यमामिति किम् । आध्नोंत् । यमीति किम् । रामाभ्याम् ॥

एचोऽय । इचोऽचि यणयवायावः अवावौ यि प्रत्यये सूत्रयितुमुचित-मित्याहुः । यथासंख्यमूत्रलभ्यमर्थमाह । क्रमादिति । उदात्तादिगुणयुक्ता-नामन्यगुणकल्याद्यत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोध्या । एतदेवाभि-प्रेत्य यथासंख्यसूत्रे भाष्ये प्रकृतसूत्रे स्थानेऽन्तरमसूत्रेण व्यवस्थोक्ता संवृ-तावर्णस्य संवृतावर्णौ विवृतावर्णस्य विवृतावर्णं इति । एतद्भाष्यप्रामाण्येन एओइत्यनयोरकारांशे संवृतत्वम् । इतरांशे विवृततरत्वम् । तदुपरागाच्च न संवृतत्वस्य पृथग् ग्रहणम् । ऐऔ इत्यनयोस्त्वकारांशेऽपि विवृतत्वमेवेति बोध्यम् ।

तस्य लो ॥ उपदेशोऽजित्यत इदित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धौ तस्य ग्रहणं सर्वलोपार्थं । तेन शिड्डुनामन्त्यस्य लोपो न । नानर्थक इति परिभाषा तु भाष्ये प्रत्याख्यातैवेति दिक् । न भवतीति । फलाभावा-दिति भावः ।

वान्तो ॥ येन विधिरित्यस्यापवादभूतया तस्मान्नुडचीत्याद्यर्थमाव-श्यिकया वाचनिकया यस्मिन्विधिस्तदादावल्ग्रहणइति वार्त्तिककृदुक्तपरिभा-षया लभ्यमर्थमाह । यकारादाविति । ओदौतोरिति । ओदौतोरिति वक्त-

---

तु चर्यंश्रुत्या थकाराभावेन तकारघटितरूपासिद्धिस्स्यात् । * शेषार्थेति * । इत्यमाद्यर्थं ।

लाघवादाह । * एचोऽचीति * । न्वायावी यिप्रत्यय इति न्यासे नोच्चूयत इत्यादावतिप्रसङ्ग इति चेदेतन्न्यासेऽपि यथासंख्यसूत्रेण सम्बन्धो बोध्य । अभ्रा-द्धुरित्यनेनापाणिनीयत्वरूपाकाचिस्सूचिता । नन्वकारस्य विवृतोपदेशस्यैव कार-णात्संवृतावर्णस्येत्ययुक्तमत आह । * एतद्भाष्येति * ।

* भाष्ये प्रत्याख्यातेति * । अलोऽन्त्यात्सूत्रस्थभाष्ये प्रत्याख्यातेत्यर्थं । फलानामन्यथासिध्या ।

* तस्मान्नुडचीत्यादीति * । आदिना मेद्द्यशीत्यादे परिग्रह । परिभाषा-र्थस्तु अल्गृह्यते येन शब्देन तस्मिन् सप्तम्यन्ते यो विधिस्स तदादौ बोध्य इति न युक्त । इको यणचीत्यादावपि तदादिविध्यापत्तेः, किन्तु गृह्यते [illegible] ज्ञापते येन तद् ग्रहणम् । अल् च तद्ग्रहणञ्चेति समासः । [illegible] निपातप्रकरणस्यानित्यत्वात्परनिपातः । यस्मिन्निति [illegible] । [illegible]

ऽयमिति वार्तिकमूलाख्यानादिति भावः। पूर्वसूत्रे वान्तो यीति तयोरेव स्थानित्वनिर्णयादिति स्थानेऽन्तरतमसूत्रस्थकैयटोक्तं तु न युक्तम्। वान्तज्ञानाय सूत्रे पर्यालोचनस्यावश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात्। यथासंख्यसूत्रसहकारेण बोधोत्तरं तयोस्तत्त्वनिर्णयात्। अन्तरतमपरिभाषया निर्वाहे तु लक्ष्यपर्यालोचनकाले तन्निर्णयः। अत एव पूर्वसूत्रे स्थानिविशेषलाभो यथासंख्यसम्बन्धादिह तु निमित्ताभावात्तल्लाभाभाव इति षष्ठे प्रकृतसूत्रे कैयटे। गव्यामिति। भत्वाद्धलोपो न। यीति किम्। गोभ्याम्। प्रत्यये किम्। गोयानम्। ननु गव्यूतिरित्यत्र वस्य हलि सर्वेषामिति लोपः शाकल्यस्येति वा लोपः स्यादत आह। वान्त इत्यनेनेति। न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यम्। निमित्तत्वानाक्रान्ते विषये कार्यित्वस्य चारितार्थ्यात्। तक्रकौण्डिन्यन्यायश्चानवकाशविषयो विधेयविषयश्चेति स्पष्टं तद्धितेष्वचामिति सूत्रे वृत्ति-

---

च सप्तम्य तद्रूप विशेषणे याव धस्स तदादौ बोध्य। प्राचीनसम्मतप्रकारं दूषयति। *पूर्वसूत्र इत्यादि*। तथा च यदि वाक्यार्थपर्यालोचनं स्यात्तदा ओकारौकारयोरपि तादृशस्थानित्वनिर्णयस्तत्र न सम्भवतीति भाव। कैयटस्यापि पूर्वापरविरोध इत्याह। * अत एवेति *। ओदौतोरिति वकारयामिति वार्तिके पपाठकोऽयं ग्रन्थ। * गोयानमिति *। ननु वान्त इति सूत्र प्रत्ययग्रहणाभावे गव्यूतिरित्यन्यानायासेन सिद्धे गोर्यूताविति वचनं नियमार्थम्। अप्रत्ययपरौ चेद्यूतावेवेति। एवं च गोयानमित्यस्य व्यावृत्तिः सिध्येति वान्त इति सूत्रे प्रत्ययग्रहणं व्यर्थमिति चेन्न। यूतौ चेद् गोशब्दस्यैव गोशब्दस्य चेद् यूतावेवेति वा नियमोऽपि सम्भाव्येत। एवं च गोयानमित्यत्र तद्व्यावृत्त्यर्थं प्रत्ययग्रहणस्यावश्यकत्वात्। * हलि सर्वेषामिति लोपः स्यादिति *। एवं चैतदर्थं तत्र वकारोऽप्यनुवर्तते इति भाव। * निमित्तत्वबाध इति *। एवञ्च वान्ता इत्यत्र यकारात्पूर्वं वकारश्रवणे वकारलोपो न स्यादिति भाव। तदप्राप्तियोग्ये विषयेऽचारितार्थ्यं बाधकत्वे बीजं तच्च नास्तीत्याह। * निमित्तत्वानाक्रान्त इति *। ननु मा भूद्येन नाप्राप्तिन्यायेन बाधस्तक्रकौण्डिन्यन्यायेन तु स्यादत आह। *तक्रेत्यादि*। तथा च येन नाप्राप्तिन्याय एवास्यान्तर्भाव। * विधेयविषयश्चेति*। विधीयमानदधिदानस्यैव बाधकत्वदर्शनात्। अत्रार्थे मानं दर्शयितुमाह। * तद्धितेष्वचेति *। तत्र हि तद्धितेष्वचामादेर्वृद्धौ अन्त्योपधलक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः कौष्ट्रो जागत इति। ननु चाचामादिवृद्धिरन्त्योपधलक्षणा वृद्धिर्बाधिष्यते कथम् यस्योच्यमानाऽन्यस्य बाधिका स्यात्। असति खल्वपि सम्भवे बाधनम्भवति। अस्ति च सम्भवो यदुभयं स्यात्, लोकविज्ञानात्सिद्धम् सत्यपि सम्भवे बाधनम्भवति। तद्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्या

धायके च भाष्ये अन्त्ये उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यं क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यमिति भाष्यं चेन विशेषासम्प्रत्ययादित्यनुकृष्यते। अन्यथा तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासंप्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः। निरूपयिष्यते चेदं यङन्ते। तस्य च वार्तिके ऽनुवृत्त्या यूतौ श्रूयमाणवकारान्त आदेश इत्यर्थः। सूत्रे तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावाल्लोप्ये स्वत एव तदभावाल्लोपाप्राप्तेः। गोशब्दादिभ्यः क्यजादावपि नःक्ये इति नियमेन पूर्वस्य पद-

---

येति, सत्यपि सम्भवे दधिदानस्य तक्रदानाभिवर्तकम्भवति। एवमिहापि सत्यपि सम्भवेऽचामादिवृद्धिरन्त्योपधलक्षणा बाधिष्यते, विषम उपन्यास, नाप्राप्ते दधिदाने तक्रदानमारभ्यते तस्मात् आरभ्यमाणस्याधकम्भवति। इह तु नाप्राप्तायामन्त्योपधलक्षणाया वृद्धौ अचामादिवृद्धिरारभ्यते सुश्रुत् सौश्रुत, एतेन च वनेनैवादिवृद्धिर्यत्र तत्रान्त्योपधालक्षणा वृद्धिर्निवर्तनीयेति सूचितम्। पुष्कर सच्छब्दपाठाच्चेत्युक्तम्। * अन्त्ये इति *। धातोरेकाचो हलादेरिति सूत्र इत्यर्थः। * उत्तरयोरिति *। नित्यं कौटिल्ये गतौ, लुपसदचरेतिसूत्रयोरित्यर्थः। नित्यग्रहणस्य लुपसदेत्यत्राप्यनुवृत्ते सम्भावनायामिदम्। वस्तुतस्तु उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यमिति वार्तिकं यद्यपि सम्प्रत्युपलभ्यमानभाष्यपुस्तके नित्यं कौटिल्ये लुपसदेति सूत्रद्वयपाठानन्तरमुपलभ्यते, तथापि पूर्वसूत्रस्थमत्र पतितम्। तत्र प्रथमसूत्रविषये भाष्ये उक्तम्, न हि कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यते। अत्र कैयट चङ्क्रम्यत इत्यस्माद्योऽर्थः प्रतीयते, तासौ कुटिलं क्रामतीति वाक्येन शक्य प्रत्याययितुमिति तदर्थाभिधानादेव वाक्यं न भविष्यति कुटिलं पन्थानं क्रामतीति सम्प्रतीयत इति भाव। द्वितीयसूत्रविषये आह। अथैतेभ्य क्रियासमभिहारे यङा भवितव्यम्। क्रियासमभिहारे च नैतेभ्यो भवितव्यम्। भृशं जपति ब्राह्मणो भृशं समिधो दहतीत्येव। अत्र भाष्ये क्रियासमभिहारे चेत्यत्र चकारस्तेन विशेषासम्प्रत्ययादित्यस्य सम्बन्धात् भृशं जपतीत्याद्यर्थः। विशेषस्य यङन्तादप्रत्ययादित्यर्थः। यत्तु कैयट। तत्र कौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङ क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादिति भाव इति। तन्न। विशेषविहितेन सामान्यविहितं बाध्यत इति हि न्यायो लोके शास्त्रे च प्रसिद्ध। तत्र विहितपदोपादानसामर्थ्यान विधीयमानयोरेव बाध्यबाधकभाव प्रतीयते न त्वनूद्यमानयो। यदि त्वत्रापि न्यायेन स स्यात्तर्हि विशेषासम्प्रत्ययादित्यनुकर्षकचकारवैयर्थ्यमेव स्यादिति भाव। * तस्य चेति *। प्रत्ययस्य चेत्यर्थः। ननु लोपो व्योरिति सूत्रे स्थितस्य वकारस्य भाष्यकृता प्रत्याख्यानात्तत्कारप्रश्लेषे तन्निवृत्तिर्न स्यादत आह।

स्वाभावात् । एवन्तर्हि वार्तिकएव प्रश्लेष उचित इत्याशयेनाह । छकाराद्वेति । लोपो व्योरिति सूत्रे वकारप्रत्याख्यान तु लौकिकोदाहरणाभावेन तदर्थतया बोध्यम् । अत एवेको गुणेति सूत्रे ऽतोल्लान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्त भाष्ये । शास्त्रीयसौत्रप्रयोगार्थं तदिति तदाशय* । न चैष विष्णवे इत्यादौ तस्य लोप इति दुर्वार गव्यूतावुच्चारणस्य चारिताथ्यादिति वाच्यम् । गवि च युक्ते इत्यादिनिर्देशैर्वारणात् । परे तु सा पूर्वपस्युक्तिरिति न यकारप्रश्लेषो लोपेनोचित* । किञ्च छन्दसि सर्वविधीनां व्यवस्थितत्वाच्च वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ अध्वपरिमाणे ऽपि । सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याभावः । सर्वनामशब्दे णत्वाशङ्का तु तस्य सञ्ज्ञाविशेष आधुनिकविनियोगात् शास्त्रानुसारिशब्दस्यैव विनियोग उचित इत्यभिप्रायेण । निरूपितश्चैतत्सर्वादिसूत्रे भाष्यप्रदीपोद्योते इत्याहुः । निरूपयिष्यते चेद पूर्वपदात्सञ्ज्ञायामितिसूत्रे ॥

धातोस्त ॥ धातोरित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्तथा च गव्यमित्यत्र न स्यात् । ओयतइत्यत्र च स्यात् । तदभावे सामान्यतो नियमापादनन्तु योगविभागैर्वकारवैयर्थ्यापत्तेरयुक्तम् । तन्निमित्तस्य चेद्धातोरेवेति नियमे वाभ्रव्यासिद्धेस्तद्वारणायैवकार । लव्यमित्यादि ।

---

* लोपो व्योरिति * । मूल खण्डयति । * परे त्विति * । *सा* पूर्वप्रदर्शिता- ऽतोल्लान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इति भाष्योक्ति । * पूर्वपस्युक्तिरिति * । तथाहि । उत्तरार्धं मिजर्थं वृद्धिग्रहण कर्तव्यमिति वृद्धिग्रहणस्य प्रयोजने कथिते न्यनुवीत् न्यधुवीदित्यत्र ङ्किति मा भूदितिप्रयोजने च प्रतिपादिते, नैतदस्ति प्रयोजनम्, अन्तरङ्गत्वादत्रोवङादेशे कृतेऽनन्त्यत्वाद् वृद्धिर्न भविष्यति । यदि तर्हि सिच्यन्तरङ्गम्भवति । अकार्षीत् । अहार्षीत् । गुणे रपरत्वे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति । मा भूदेवम् । हल न्तस्येत्येवम्भविष्यति । इह तर्हि न्यस्तारीत न्यदारीत् । गुणे रपरत्वे चानन्त्यत्वाद् वृद्धिन प्राप्नोति । माभूदेवम् । ल्रा तस्येत्येवम्भविष्यति । इह तर्हि अलावीत् । अपावीत् । गुणऽवादेशे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति । माभूदेवम् । ल्रान्तस्येत्येव भविष्यति । ल्रान्तस्येत्युच्यते । न चेद ल्रा तम् । ल्रान्तस्येत्यत्र वकारोऽपि निर्दिश्यते । किं वकारो न श्रूयते । लुप्तनिर्दिष्टो वकार । इत्येव पूर्वपक्षिणोक्ते ह्म्यन्तेतिसूत्रे णिश्विग्रहणेन ज्ञापकेन सिच्यन्तरङ्गं नास्तीति प्रतिपादिते वकारप्रश्लेषस्य न फलमिति स्पष्टमेव । मूलोक्तप्रयोजनमप्यन्यथासिद्धमित्याह । * किञ्चेत्यादि * ।

धातोस्तन्निमित्तस्येतिसूत्रे धातुग्रहणाभावे प्रातिपदिकविषयो वा सामान्यतो

अत्र गुणवृद्ध्योर्यदूण्यन्निमित्तकत्वेनैचो यादिप्रत्ययनिमित्तकता । तन्निमित्तस्येति किमिति । सूत्रमेव किमर्थमिति प्रश्नः । ओयतइति । वेञः कर्मणि लटि यकि यजादित्वात्संप्रसारणे ऽकृत्सार्वेति दीर्घे आद्गुणः। नधातुलोपसूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे

---

वा नियमः स्यात् । तत्र क्रमेण दूषणमाह । * धातोरित्यस्याभाव इति * । न चास्मिन् सूत्रे धातुग्रहणसत्त्वे क्विबन्तभूशब्दादुगवादिभ्यो यदिति यति गुणे धातो कार्यमिति परिभाषयाऽवादेशो न स्यादिति वाच्यम् । यत्र कार्यविधौ धातुत्वाश्रयस्य समुदायस्योद्देश्यत्वेनोपादानन्तत्र तत्परिभाषाप्रवृत्ते । * न धातुलोपसूत्रभाष्यरीत्येति * । यथा तत्र धातुग्रहणाभावे उपेद्ध प्रेद्ध इत्यत्र जायमान आद्गुणोऽपि निषिध्येतेति प्रयोजनस्यान्तरङ्गनिषेधदृष्ट्या बहिरङ्गगुणस्यासिद्धत्वात्खण्डनङ्कृतम् । न चात्र सूत्रे एवकाराभावेपि सिद्धे सतीतिन्यायेन नियमो भविष्यतीति वाच्यम् । एवकारस्येष्टतोऽवधारणार्थत्वात् । अन्यथा तन्निमित्तस्यैवेत्यवधारणाद्वान्तादेशस्तदा धातोरेवेत्यपि सम्भाव्येत । अनेष्टापत्तिस्तु न सम्भवति । तथा सति वसुशब्दादपत्येऽर्थे मधुबभ्वोर्ब्राह्मणकौशिकयोरिति सूत्रेण यञि कृते वाभ्रव्य इत्यत्र वान्तादेशो न स्यात् । ननु तन्निमित्तस्येत्यस्य ओयते ओयतेत्येव यदि प्रत्युदाहरणं तदा न यकीत्येव सूत्रं लाघवात्कर्तव्यम् । पूर्वसूत्रप्राप्तस्य वान्तादेशस्य प्रतिषेधेन लक्ष्यसिद्धिर्निर्बाधेति च । अत्र केचित् । गोशब्दादाचारक्विबन्तात्कर्तरि क्विपि गोषु साधुरित्यर्थे तत्रसाधुरिति यति वान्तादेशस्यापत्तेरिति । तन्न । धप्रञ्जेतिसूत्रेण श्यनीतिसूत्रस्थभाष्यविरोधात् । प्रथमे हल्ग्रहणं किमर्थम् । समुच्चयो यथा विज्ञायेत । अज्ग्रहणादेव समुच्चयो भविष्यति धप्रिमज्योरचश्चेति । अस्त्यन्यदज्ग्रहणे प्रयोजनम् । धाप्रिमजिविदो पण यथा विज्ञायेत धप्रिमज्योरच इति । अथ वा एतदपि न ब्रूयात् । अत इति वर्तते । इदन्तर्हि प्रयोजनम् । हलन्तस्य यथा स्यादजन्तस्य मा भूत् । कस्य पुनरजन्तस्य प्राप्नोति । अकारस्य । अचिकीर्षीत् । अजिहीर्षीत् । लोपोत्र बाधको भविष्यति । अकारस्य तर्हि प्राप्नोति । अयासीदवासीत् । नास्त्यत्र विशेषः । सन्ध्यक्षरस्य तर्हि प्राप्नोति । न वै सन्ध्यक्षरमन्त्यमस्ति इत्युक्तम् । गोशब्दादाचारे क्विप्सत्त्वे एतद्विरोध स्पष्ट एव । अन्त्ये ओत शितीति वक्तव्यम् । किम्प्रयोजनम् । ष्ठिवुक्लम्वितिसूत्रे शितीति न वक्तव्यम् । ननु च श्यन्ग्रहणेपि शमामष्टानामित्यत्र श्यन्ग्रहणं न कर्तव्यम् । तथापि शितीत्येव सिद्धमिति युक्तम् । ओकारान्तेभ्य आचारे क्विप्सत्त्वे शितीत्युच्यमाने लोपः प्राप्नोति श्यनीति न्यासे न नेति फलभेदः स्पष्ट एव । अत्राहुः, न यकीति न्यासे लाघयतेर्लौ, पाययतेर्पौ, जनावतीति जनौ । एभ्यः सप्तम्यन्तेभ्यस्तत्रसाधुरितिसूत्रेण यति धातोस्तन्निमित्तेतिन्यासे वान्तादेशो न भवति स प्राप्नोति । न चात्र परस्मिन्निति

गुणोऽसिद्ध इत्यरुचेराह । ओयतेति । तस्मादेव कर्मणि लट् आडागमे वृद्धिः । शेषं पूर्ववत् ।

क्षय्यज ॥ क्षियये जिजये, इत्यनयोरेव ग्रहणं । न तु क्षीष् हिंसायाम् क्षै जै क्षयइत्यनयोर्व्याख्यानात् । अत एवक्षिज्योरेवैच इति भाष्ये उक्तम् ।

तस्मै मेति । क्रयार्थे वस्तुनि क्रय्य इति निपात्यतइत्यर्थो व्याख्यानात् । गुणभूतस्यापि तदा परामर्शः । क्रयार्थत्वञ्च फलोपधानरूपं तदर्थ इति विशेषणाचदाह । क्रेतार इति । योग्यतामात्रग्रहणे त्वव्यावर्त्तकं तत्स्यादिति भावः । के चित्तु स्वीयन्धान्यादि दत्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम् । यत्र तु स्वयं द्रव्यं दत्वा परकीयधान्यादिग्रहणं तत्र धान्यं क्रेयम् । द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं किं तु धान्यादेरेव शक्तिस्वभावात् । भाष्यस्वरसो ऽप्येवमेवेत्याहु ॥

लोपः शा ॥ भोभगोऽघोऽपूर्वस्येत्यशीति चानुवर्त्तते तत्रौकारान्तेप्वोतो गार्ग्यस्येति बाधकमित्याशयेनाह । अवर्णपूर्वयोरिति । व्योरित्यनुवृत्ताव

---

षुढे स्थानिवत्त्वम् । अपूर्वविधित्वात् । णिलोपस्यापि न । आदिष्टादच पूर्वत्वात् । क्वौ लुप्तमिति निषेधाच्चेति दिक् ।

क्षिज्योरेव ग्रहणं व्याख्यानादित्युक्तन्तदेव व्याख्यानं स्पष्टयति । * अत एवेति * ।

क्रय्यस्तदर्थ इत्यत्र प्रधानक्रयणकर्मणो न तच्छब्देन परामर्शस्तदर्थशब्दोपादानसामर्थ्याद् । अतो गुणभूतक्रयणक्रियाया एव परामर्श इत्याशयेनाह । * व्याख्यानाद्गुणभूतस्यापीति * । सर्वनाम्ना प्रधानपरामर्शकत्वमित्युत्सर्गः । दर्शितेराजमातङ्गास्तस्यैनामी तुरङ्गमा इत्यत्र यथा । तदर्थत्वञ्च तन्निरूपितफलोपधानात्मकफलजनकत्वम् । न तु स्वरूपयोग्यत्वं विशेषणोपादानसामर्थ्यात् तत्राह । * कायार्थत्वञ्चेति * । * केचित्त्विति * । अयम्भावः । क्रय्यशब्दे विक्रये क्रीणातिर्वर्त्तते । एवञ्च यद्धान्यं विक्रीतं तत्क्रय्यम् । तत्र विक्रेत्रा मदीयमिदं क्रय्यमिति व्यवहर्त्तव्यम् । येन तु धान्यं क्रीतन्तेनेदं धान्यं क्रेयमित्येव वक्तव्यम् । शब्दशक्तिस्वभावात् । तत्सूत्रस्थभाष्याच्च । एवं हि तत्र भाष्यम् । तदित्यनेन किम्प्रतिनिर्दिश्यते।म्प एव क्रीणातीत्यर्थ । इह मा भूत् । क्रेयन्नोधान्यम्। क्रेतव्यमिति तदर्थ । न चास्ति क्रय्यमिति । अयमभिप्रायः । अत्र क्रीणातिर्विक्रये वर्त्तते । तथा च यत्र मया विक्रीतमितिव्यवहारस्तत्र क्रय्यमिति भवति । तथा व्यवहारयोग्यता च धान्यस्यैव न द्रव्यस्य। येन तु स्वीयं द्रव्यं दत्वा धान्यं क्रीतन्तम्प्रति येन विक्रेत्रा पणोत्तमिदन्धान्यमस्मभ्यन्देयमिति, तदा स क्रेता एवमुत्तरं ब्रूयात् क्रेयन्नो धान्यमिति । अयमेव भाष्यस्वरसः ।

पि वर्णसमाम्नाये यकारस्य भावपाठापत्कर्मेणाह । यवयोरिति । स त-स्मा आचष्टइत्यादिभाष्यप्रयोगादत्र रोरित्यस्यासबन्धः । इदं सूत्र लघुप्रय-त्ने न । शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् । अवर्णेति किम् । गौर्यत्र । पदान्तयोः किम् । हरये । अशि किम् । वृक्ष वेतीति वृ-क्षवीः, क्विप् तमाचष्टे इति ण्यन्ताविच् । वृक्षव् करोति । क्विपि तूठ् स्या-त् । विज्निमित्तको लोपो व्योरिति लोपस्तु न । णिलोपटिलोपयोः स्था-निवत्त्वात् प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाभावेन परपदस्थाजादेशाभावेन च लोपस्य पदचरमावयवत्वाभावेन च नपदान्तेति निषेधाप्रवृत्तेः । एतेन-विज्निमित्तकोवलोपोऽत्र दुर्वार इत्यपास्तम् । किं च स्थानिवत्त्वनिषेध वि-नास्यपदान्तत्वासिद्ध्यात्र निषेधाप्रवृत्तिः । स्थानिवत्त्वनिषेधज्ञाने पदान्तत्व-ज्ञान तन्निर्णये च स्थानिवत्त्वाभावज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम्। इदञ्च नपदान्तसूत्रे भाष्ये स्पष्टम् । न च पदसञ्ज्ञाया टिलोपस्य स्थानि-वत्त्वादस्य पदान्तत्वमेव नास्तीत्यशीति व्यर्थमिति वाच्यम् । पूर्वत्रासिद्धी यइति निषेधात्साक्षात्पदत्वादिद्वारकपरम्परया वा पूर्वत्रासिद्धीयप्रापकस्य प्रतिबन्धकस्य वा ऽतिदेशस्य तेन निषधादिति के चित् । परे तु न पदा-न्ता हलो ऽणः सन्तीति लण्सूत्रस्थभाष्याद् वृक्षवादेरनभिधानमेव । भो-

---

* प्रातिपदिकाण्णिजुत्पत्त्येति * । प्रातिपदिकाद्धात्वर्थे इत्यनेन । न च तत्क-रोति, तदाचष्टे, तेनातिक्रामतीति विभिन्नविभक्तिनिर्देशात्सुबन्ताण्णिजिति लभ्यते तत्कथमुक्तम्प्रातिपदिकादिति वाच्यम् । तत्तेनेत्यनेन कर्मत्वाद्यर्था-न्तर्भावेन वृत्तिप्रदर्शनमात्रं क्रियते, णिच् तु प्रातिपदिकादेवेत्याशयात् ।* पूर्वत्रा सिद्धीय इति * । न च पदसञ्ज्ञाया यथोद्देशत्वस्यैव सिद्धान्तिततया पदसञ्ज्ञाया अत्रैपादिकत्वेन कथम्पूर्वत्रासिद्धे न स्थानिवदितिनिषेध इति वाच्यम् । साक्षा-त्पदत्वस्यात्रैपादिकत्वेपि पदत्वद्वारकपरम्परया पूर्वत्रासिद्धीयलोपप्रतिबन्धक-स्थानिवत्त्वस्यानेन निषेधात् । * न पदान्ता हलोऽणइति * यद्यपि लण्सूत्रे भाष्ये नहि पदान्ता परेण सन्तीत्येव पाठ उपलभ्यते । तथा-पि तदग्रे तत्रैव, ननु चायमस्ति कत्र् हत्र् इति प्रदर्शितम् । तेनाज्रूपस्याण सम्भवाद्धलोप्रदर्शनाय पदान्ता हलो न सन्तीति गम्यत इत्यभिप्रायेणेह हलो-ऽण इत्युक्तम् । न च सुप्युपास्य इत्यादौ पदान्तस्य हलोऽणो दर्शनादिदमसङ्ग समिति वाच्यम् । प्रकृतिकार्यभाजो न सन्तीति तदर्थात् । अणोऽप्रगृह्यस्येति सूत्रेऽण्प्रत्याहार पूर्वेण न परेण, कुत एतत् परामावात्, न हि पदान्ता परेण सन्ति । ननु चायमस्ति कत्र् हत्र् । यद्यप्यनुनासिकविधौ पदान्ताधिकारो नास्ति तथापि पदान्तानामेवावसानेऽनुनासिको विधीयत इत्यभिप्रायेणेहपदान्ता इत्यु-क्तम् । वृक्षवादे प्रामाणिकत्वेऽनुनासिकयोग्यस्य परस्याप्यण सम्भवा दित्यल

भगो इति सूत्रे ऽग्ग्रहणमनर्थकमन्यत्राभावादिति वार्तिकाम । अशो ऽन्यत्र तन्निमित्तकार्यकार्यिणो ऽभावादिति तदर्थः । न ह्यन्यत्र हरस्तीति तद्व्याख्यानभाष्ये ऽग्ग्रहणमुपलक्षणम् । एतदाशयमजानानैकदेशिनोत्तरार्थं हलि सर्वेषामिति सूत्रं करोतीत्यत्र मा भूदित्युक्तम् । अस्य चैकदेश्युक्तित्वं लघुसूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम् । अत एव भाष्ये उत्तरार्थमित्युक्त्वा हलि सर्वेषामित्यत्रैव प्रयोजनमुक्तम् । हलि सर्वेषामित्यत्र चकारनिवृत्त्यर्थत्वात्र तद्वारणसम्भवाच्च तत्राप्यश्ग्रहणस्य प्रयोजनमिति तत्राप्येकदेश्युक्तिरेवेत्याहुः । कानि सन्तीति । वाक्यसंस्कारपक्षे ऽपि पूर्वोपस्थितनिमित्तकस्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेः स्थानिभूतादचः पूर्वत्वं बोध्यम् ॥

एकः पूर्व ॥ गुण इत्यादेर्विधेयसमर्पकत्वेन तदेकत्वसंख्याया निरूपणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूलयोः फट्छुरित्यादित इवोभयसंबन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् ॥

उरण् ॥ उः स्थाने इति षष्ठीस्थानेयोगेतिपरिभाषया लब्धम्, उदात्तस्वरितयोर्यण इतिवत् । स्थाने ऽन्तरतम इत्यतः स्थानेग्रहणमनुवर्तते, तस्य लक्षणया प्रसङ्गावस्थायामित्यर्थस्तदाह । रपरः सन्नेवेति । रपर इत्यवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिस्तेनास्यावयवत्वात् यदागमाइतिन्यायेन विशिष्टस्य गुणवृद्धित्वेन ऋकारस्य गुणवृद्धी अरारावेवेति नियमोपपत्तिः । अत एव रदाभ्यामितिसूत्रे पलिचसेटीतिसूत्रे च भाष्ये गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसञ्ज्ञको ऽभिनिर्वर्ततइत्युक्तम् । उः स्थाने ऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इत्यय गुण इति कथ-

---

तमेव स्यात् । सुध्युपास्य इत्यादौ तु यणोऽनुनासिकवृत्तियोग्यत्वाभावेन तत्सत्त्वे बाधकाभावात् । अत्रैव मतान्तरमाह । * भोभगो इतीति * । तत्रत्यवार्तिकेन कथमेतावल्लब्धमत आह । * अशोऽन्यत्रेति * । तन्निमित्तकार्यस्य कार्यिणोऽभावादित्यर्थः । अस्मिंश्च तदभिमव्याख्याया भाष्यविरोध इत्यत आह । * न ह्यन्यत्रेत्यादि * । * अत एव * । प्रकृतसूत्रेऽश्ग्रहणस्य प्रयोजनाभावादेव । * वाक्यसंस्कारपक्ष इति * । यद्यप्यस्मिन्पक्षे सर्वकार्याणां युगपत्प्राप्तिस्तथापि येन क्रमेण वर्णश्रवणं तेनैव क्रमेणान्तरङ्गत्वाच्छब्दसंस्कारः कार्य इत्यत्र न पदान्तसूत्रस्थकानि सन्ति कौ स्त इत्यत्र यद्ग्रहणप्रयोजनप्रतिपादनपरभाष्यमेव मानम् ।

*परिभाषालब्धमिति* । अनुवादेऽपि परिभाषाप्रवृत्तेः । पूर्वोक्ताश्च भाष्यसम्म

टः। अवयवत्वं वाचनिकमेव तत्सादृश्यबोधनपर्यवसायि। अन्यथा वर्णस्य वर्णान्तरावयवत्वं हलन्त्याचेति सूत्रभाष्योक्तरीत्याऽसङ्गतं स्यात्। पञ्चम्यर्थे बहुव्रीहिणाऽनवयवत्वे तु गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात्। गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यादित्युक्तनियमानुपपत्तिः। अत एव वव्रे इत्यादौ हलादिः शेषासिद्धिरभ्यासावयवस्यैवानादेस्तेन निवृत्तेः। एतेनाणमनूद्य रपरत्वं विधीयत इति परास्तम्। उक्तनियमानुपपत्तेः। अत्र पक्षे क्व रपरत्वं क्व लपरत्वमिति व्यवस्थानुपपत्तिस्तु न। रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासंभवात्। तत्रान्तरतम्यादिति। स्थानत इति भावः। रेफादिद्वाराऽऽदेशस्यापि मूर्द्धादिस्थानत्वात्। तत्र तत्रादेशानेव रलपरांश्चोच्चार्येद सूत्रं न कार्यमिति तु न वाच्यम्। आपृथामीत्, भृञामिदित्यादौ दोषापत्तेः। अनाण् पूर्वेणैव मशास्तॄणामिति निर्देशात्। वस्तुतो रप्रत्याहाराभावे न रपर इत्यस्य स्थाने लपर इति पठनीयमिति लपरत्वं वक्ष्यामीति तुल्यास्यसूत्रभाष्याल्लभ्यते॥

क्षरी स्त॥ इ इत्यतो वा विकल्पोऽनुवर्त्तते। हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम्। लोपे इति। ऋधधातोर्क्षर इति भावः। असतीति। द्वित्वाभा

तिमाह। * अत एवेति *। रेफस्यावयवत्वस्यौकारादेव। * तत्सादृश्येति *। अवयवसादृश्येत्यर्थः। यथा वृष्यवयवस्यावयवनिबोधकशब्दजन्यप्रतिपत्तिविषयत्वम्। तथा अस्य वृद्धिगुणादिशब्दवाच्यत्वम्। *अन्यथा*। सादृश्यापर्यवसाने। * हलन्त्याचेति *। तत्र हायुक्तोऽयं निर्देशः। कथं हि नामैको हलन्त्यं स्यात्। अन्यस्यान्त्य इत्युक्तम्। अत्र कैयटः। अन्यस्यान्त्य इति। अत्यन्तभेदमनयोर्दर्शयति। *एतदेक्यवाक्यतया *। वाक्यैकवाक्यतया। * अत एव *। अवयवत्वस्यौकारादेव। एतेनेति यदुक्तन्तदर्थमाह। * उक्तनियमेति *। जातस्याणो रपरत्वमितिपक्षेऽन्येनोहितन्दूषणाद्दूषयति। * अत्रपक्षेइति *। कस्यापि कल्पनान्दूषयति। * तत्रतत्रेति *। ऋत इत्, उदोष्ठ्येत्यत्र तकारस्य स्थाने रेफ एवोच्चारणीयः। वृद्धिरादालादैच्। अरलदद्ण। एवं रीत्या पाठे बहूनां रेफलकाराणामुच्चारणेन यद्यपि गौरवरूपन्दूषणं स्फुटम्भवति। तथापि दूषणान्तरमाह। * आवित्यादि *। अत्र यथाश्रुतन्यासे ईर्त्संतीति न सिध्येत्। एतद्र्थमत्र ईरिति करणे ईप्सति ईप्सतीति न सिध्येत्। * भृञामिदिति *। अत्र तपरातपरपाठयोर्यद्यपि न दोषः। हलादि शेषेण रेफनिवृत्तेः। तथापि माङ्मोहाङ् विषये हलादि शेषहत्येतस्य स्मरणमत्र पक्षे कर्त्तव्यमिति गौरवमेव दोषः। * रप्रत्याहाराभावेनेति *। निरूपितमेतत्प्राक्।

* हयो ह इति * यथास्थितपाठे। भाष्यसम्मताष्टाध्यायीपाठे आह। *वा-

च इत्यनुकृष्यते । त्रिधमिति । त्रिधकारत्वं प्रक्रियाभिप्रायेण न च द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमासिद्धमित्यर्थकेन पूर्वत्रासिद्धमद्वित्वे इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्वमितीदमयुक्तमिति वाच्यम् । फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वेरूपे विशेषोऽस्ति। तदनन्तरञ्जश्त्वप्रवृत्तेस्तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । पञ्चमीति । विनिगमकाभावादिति भावः । अत एवास्य वैकल्पिकत्वम् ॥

कृष्णर्द्धिरिति । कृष्णेति सम्बुद्ध्यन्तं पृथक्पदमिति काश्चित्।

एत्येध ॥ ऊठ् अत्रादेश एव व्याख्यानात्। एषीति नोठो विशेषणभूतस्तत्त्वासम्भवात् । एत्येधत्योरिति योग विभज्य तयोरेवैचीति विशेषणस्य भाष्ये कृतत्वाच तदाह, एजाद्योरिति । एतिरत्रेणैव प्रसिद्धत्वात्।उपैतीत्यादौ वृद्धिरेचीत्यनेन गतार्थत्वमाशङ्क्याह । पररूपगुणेति । एत्येधत्योरेङि पररूपस्योठि वाद्गुणस्येति विवेक । उपैधत इति । अत्र न सर्वादेशः । एत्येधत्याद्यवयवेचींत्येवङ्क्रमेण सूत्राणामर्थात् । अयमेवार्थ इति भत्यपलक्षणसूत्रस्थभाष्यस्वरसः । वृत्ते शाखेतिवदेत्येधत्यूठ्स्वित्विति सप्तमी बोध्या । प्रष्ठौह इति । प्रष्ठ वहतीत्यर्थे वहेर्ण्वी ततः शस्यूठि सम्प्रसारणे पूर्वरूपे ऽनेन वृद्धिः । भेदिधदिति । परे त्विणीकारादौ प्रतिषेध इति वार्त्तिके पृथत्यनु-

---

घसान इति* । *फलविशेष एव प्रवृत्तेरिति* । ननु सद्धन्ते इत्संतीति प्रतीकमुपादाय पूर्वत्रासिद्धीयमद्वित्वे इति चर्त्वे कृते त्सशब्दस्य द्वित्वमित्युक्तम् । तत्र चर्त्वात्प्राग् द्वित्वेऽपि रूपसिद्धौ निर्बाधाया रूपे विशेषाभावेन परिभाषाप्रवृत्तिर्न स्यात् । सा च स्वीकृतेति तेन ग्रन्थेनास्य विरोध इति चेन्न । अकृतकारि शास्त्रमग्निवत्, यथा अग्निर्यद्दग्ध तद्दहति इति न्यायानुसारित्वादस्य ग्रन्थस्य। तस्य तु ग्रन्थस्य कृतकारि खल्वपि शास्त्रम्पर्जन्यवदित्येतन्न्यायानुसारित्वात् ।

* पृथक्पदमिति * । नात्र षष्ठीसमासस्य प्राप्तिः पूरणगुणेति निषेधादिति भाव । * कश्चिदिति * । सन्नाप्रमाणत्वादित्यादिनिर्देशैस्तन्निषेधस्यानित्यत्वात्समासेऽपि न क्षतिरित्यस्वरस ।

* आदेश एवेति * । एतेनोठ उपधात इति धातुव्याप्तिः । * व्याख्यानादिति * । अभिसम्यहिरङ्गमन्तरङ्गइतिपरिभाषाज्ञापकपरत्वाद्ऊठ्सूत्रस्थभाष्यमूलकाद्व्याख्यानादित्यर्थ । * प्रसिद्धत्वादिति * । एतेन योगतीत्यत्र प्रश्लिष्टस्य व्यावृत्तिः । * भाष्यस्वरस इति * । तत्र हि औतोम्शसोरित्यत्राचीत्यनुवर्त्य नैव धिज्ञायते अच्यमीति, कथन्तर्हि, अम्यचीति। एतेनास्मिन् प्रकरणे यत्र यत्राचीति सम्बध्यते, तत्र सप्तम्यन्तपदार्थस्य विशेष्यत्वमित्यैकादेशस्य वर्णाश्रयत्वमित्युक्तम्।

पादानात् न त्वेयतेरव्यभिचारादिति वृत्तेश्चास्यानभिधानमेव। एत्येधत्यो-रचीति विशेषणमिति भाष्यस्यैधत्यंशे संभवमात्रेणोपरञ्जकतया विशेषण-मित्याशय इत्याहुः। उपैधत इत्यादावपि वृद्धिर्भवत्येव। प्रकृतिभागस्यै-धरूपत्वात्। किं च एत्येधत्यवयवे ऽचीत्यर्थः प्रत्ययलक्षणसूत्रभाष्यसंमत इति अत्र न दोषः। पुरस्तादिति। पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नो-त्तरानिति न्यायः। अवश्यं स्वपरास्मिन्बाधनीये भेदेनापेक्षायां प्रथमो-पस्थितबाधेनाकाङ्क्षानिवृत्तिर्हि तद्बीजम्। असाधुरेवेति। आङिणोरे-कादेशस्य पूर्वान्ततयाऽऽङि, पररूपेण बाधादिति भावः। अर्थवद्ग्रहण इति। अस्या बीजं स्वरूपमिति सूत्रे उक्तम्। पररूपे प्राप्त इति। पूर्वं धातुः

---

एवञ्चाप्यमेवार्थ इत्यस्य शाब्दोऽयं इत्यर्थे तात्पर्यम्। * वृद्धिर्भवत्येवेति *। स घञ् ण्यन्तस्य शब्दान्तरत्वेऽपि प्रकृतिभागस्यानन्यत्वानुपपत्तिरिति भाव। अनेहोतिवृद्धिरसाधुरेवेत्युक्तम्। तच्चायुक्तमाङोऽभावेनैमाङोरित्यस्याप्राप्तेरत आह। * आङिणोरेकादेशेति *। * स्वरूपमितिसूत्र उक्तमिति *। तस्मिन् सूत्रे स्व रूपमित्युभयोरुपादानादात्मीयार्थविशिष्टशब्दरूपस्य संज्ञित्वादेतल्लाभ। अत्र मनोरमायामुक्तम्। सीरदेवस्त्वाह। भ्रक्षेति सूत्रे पाठे पृथग् भ्राजिग्रहणमिह ज्ञापकम्। नन्वेतदयुक्तम्, फणादिना राजिना साहचर्यात्तथाभूतस्यैव प्राप्यार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्। विभ्राड् विभ्राट् इति रूपद्वय साध्यम्। तत्र भ्रक्षादिसूत्रे राजृ इति पठित्वापि सुसाधम्। एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातु शक्यत्वात्। भ्राजभासेति विकल्पस्य वाचनिकतया ऋकारस्यात्मनेपदमात्रफलकतायां वक्ष्यमाणत्वेन तत्स्थानेऽकारस्यापि दातु शक्यत्वात्। एवञ्च ऋकारानुबन्धकस्य भ्रक्षेतिसूत्रे ग्रहणात्तस्य विभ्राडिति रूपमन्यस्याकारानुबन्धकस्य विभ्रागिति भविष्यतीति भाव। तस्मात्सीरदेवोक्त ज्ञापक सम्यगेवेति। शब्दरत्ने, सीरदेवोक्तमिति, अत्रारुचिबीजन्तु भ्रक्षादिसाहचर्येण धातुसञ्ज्ञकराजेर्ग्रहण स्यादेवञ्च भ्राजन्तर्गतस्य राजेरधातुत्वान्न तेन तत्र षत्व सिद्धिरिति भ्राजिग्रहणस्यावश्यकत्वम्। किञ्च भ्राजन्तर्गतराजेर्न ऋकारानुबन्धत्वन्तस्य समुदायानुबन्धत्वादिति। समुदायानुबन्धो हि नावयवानुबन्ध। तरुधस्थामिपामिति सूत्रे चतुर्णाम्भेदेनोपादानात्। अन्यथा तरुथमिपामित्येव वदेत्। तेन महिङो ङकारस्य तिङादिप्रत्याहारार्थत्वेन समुदायानुबन्धतया महिप्रत्ययस्य न ङित्त्वमिति सम्पप्रच्छिमह इत्यत्र सम्प्रसारणाभाव इति। यत्तु असत्यामर्थवत्परिभाषायामृकारस्य समुदायावयवोभयोरुपकारकत्वसम्भवेन रा ऋग्रहणेन भ्राजृग्रहण स्यादेवेति। तन्न। तत्रत्यऋकारस्य समुदायोपदेशप्रयुक्तैवेत्सञ्ज्ञा वाच्या व्यवसितानुनासिकस्यैवेत्सञ्ज्ञाविधानात्। एवञ्च यदुपदेशप्रयुक्ता

साधनेन युज्यतइति सिद्धान्तादिति भावः ।

उपसर्गादृति ॥ तपरकरणादुपऋकारीयतीत्यादौ वा सुपीति न वृद्धिः । सौत्रऋतिस्तु न गृह्यते व्याख्यानात् । आदित्यनुवृत्तेन तदन्तविधिरित्याह वर्णान्तादिति । यस्मिन्विधिरिति परिभाषयाह ऋकारादाविति । पूर्वपरयोस्तयोः समुदाययोरन्त्याद्योर्वर्णयोरेकादेश इत्यर्थः । उपसर्गावयवाकाराद्धात्वयवे ऋकारे तयोः पूर्वपरयोर्वृद्धिरित्युचितम् । गतेरिति तु नोक्तम् । अच्छर्छतीत्यादौ दोषात् ॥

अन्तादिवच्च ॥ इह पूर्वपरयोरिति वर्तते यथासङ्ख्यञ्च अन्तादिशब्दावुपस्थितैकादेशस्थानिपरौ । पूर्वपरशब्दौ च तद्घटितसमुदायपरौ । एवञ्च पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयस्ते कृतैकादेशस्य भवन्ति न तु तद्वर्ण

---

यस्येत्संज्ञा तस्य तदुपकारकत्वमित्युभयोपकारकत्वासम्भवात् । न चैव सति धातोरकारस्य समुदायानुपकारकत्वेन रमायै इत्यत्राटश्चेति वृद्धिरिति प्राचीनलेखमानक्षतिरिति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वेन शरीरावयवहस्तपादाद्यवयवाङ्गुल्यादेः शरीरावयवत्वस्य लोकप्रसिद्धव्यवहारेण च प्राङ्भिस्तथाभिधानात् । यत्तु भ्वादिसाहचर्येण धातुसंज्ञकानामेव ग्रहणे छशाविषयेऽपि साहचर्याच्छशान्तधातोरेव ग्रहणं स्यात् । एवञ्च निड्भ्यां निड्भिरिति रूपासिद्धिरिति । तन्न । तत्रापि निड्भ्यां निड्भिरिति रूपाभ्युपगमात् । यदि तु निड्भ्यामित्यादीष्टम् । तर्हि साहचर्यानित्यत्वेन साधनीयम् । यदपि फणादिभिन्ने राजादावतिप्रसङ्गनिवारणाय एतस्य राजृ इत्यत्र ऋकारस्य यदि न राजुपकारकत्वं तदा ऋकारपाठवैयर्थ्यमिति । तदपि न । समुदायोपकारकत्वेन तस्य चारितार्थ्यात् ।

* तपरकरणादिति * । प्रकृतसूत्रे तु न फलम् । ॠकारादेर्धातोरप्रसिद्धत्वात् । * ऋकारीयतीत्यादाविति * । आदिना ॠकार इवाचरति ॠकारतीत्यस्य सङ्ग्रहः । * न गृह्यते व्याख्यानादिति * । एतत्सूत्रभाष्ये यत्क्रिया इति वचनेनोपसर्गग्रहणेन धातुग्रहणे सिद्धे पुनर्धातुग्रहणस्योपसर्गादृति धातौ वृद्धिरेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूत् । किञ्चान्यत्प्राप्नोति ह्रस्वश्च ऋत्यक इति प्रतिपादितम् । यद्यस्मिन्सूत्रे ऋति सौत्रो विवक्षित स्यात्तदा धातुग्रहणसत्त्वे सौत्रस्य शीघ्रोपस्थितिकतया तद्ग्रहणं सिध्यति । अन्यथा ऋतीत्यनेन वर्णग्रहणमेव ऋत्यक इतिवत्सम्भाव्येत, ततश्च पुनर्विधानार्थत्ववर्णनमसङ्गतं स्यात्तेन सौत्र एव गृह्यते इति नेति व्याख्यानादित्यर्थः । अत एव । धाताविति किमर्थम् । इह माभूत् प्रर्षभवनम् । एतत्प्रत्युदाहरणम्भाष्योक्तं सङ्गच्छते ।

यदुक्तम्पूर्वस्य परस्य समुदायस्येति तत्फलमाह । * तद्वर्णमात्रवृत्तीत्यादिना * । एवञ्च विशिष्टनिष्ठधर्मातिदेशो न तु वर्णवृत्तिधर्मस्येति सिद्धम् । अ

मात्रवृत्तयो ऽत्वदन्तत्वादय इत्यर्थस्तत्फलितमाह। यो ऽयमित्यादि। तेन-रामानित्यादौ परादिवत्त्वेनाँ इत्यस्य सुप्त्वे पूर्वमान्तस्यैकदेशविकृतन्यायेन प्रकृतित्वे यस्माद्विहितस्तदादितदन्तत्वमार्थे समाजग्रस्तामिति पदत्वसिद्धिः। तद्वर्णमात्रवृत्तिधर्मानतिदेशात्। खट्वाभिरित्यत्रात्वानेनन्धन ऐस्न, अयजे इन्द्रमित्यादौ सवर्णदीर्घश्च न। अत एव तुक्यासिद्धिवचनचरितार्थम्। अन्यथा ऽधीत्येत्यादावादिवत्त्वेन ह्रस्वत्वमयुक्ततुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। तदुक्त वर्णाश्रये चान्तादिवत्त्वप्रतिषेधो वक्तव्यो न वा ऽतद्रूप्यातिदेशादिति। अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादिति तदर्थः। क्षीरपेणेत्यादावेकारविशिष्टे एकाज्उत्तरपदत्वं भवत्येव। स्थानिवद्भावेन तु नैतल्लभ्यम्। अप्राधान्येनानाश्रयणात्। किं च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति भी ई भिय इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः। धातुत्वस्यैकादेशस्थानिधर्मत्वाभावात्। आनुमानिकादेशकल्पकत्वान्यमन्तादिघटितसमुदायस्यैकादेशघटित आदेश इत्येव न तु प्रत्येक तयोः स्थानित्वबोधकं, तथा सति स्वा श्वशब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरिन्शब्दे वृद्ध्यापत्तेः। किं च भवत्समतस्योभयत आश्रयणेनान्तादिवदित्यस्यासङ्गतौ भवत्संमताभीयादि-

स्मिन्नर्थे ज्ञापकमप्याह। * अत एवेति *। उक्तार्थस्वीकारादेवेत्यर्थ। * तुक्यसिद्धेति *। तुकि कर्तव्येऽसिद्धवचनमिति योजना। असिद्धवचनम्। असिद्धत्वबोधक वचनमित्यर्थ। उक्तार्थे वार्तिकसम्मतिमप्याह। * तदुक्तमिति *। वार्तिककृतेति शेष। अत्र प्राञ्च। स्थानिवत्सूत्रेण गतार्थमेतत्सूत्रमिति। तन्न युक्तमित्याशयेनाह। * क्षीरप इत्यादि *। न चाचोत्तरपदत्वमाश्रप्ये इत्यत्रा तिदिश्यते एकाच्त्वन्तु तस्य स्वत सिद्धमिति समासे एकाज्उत्तरपदत्वमर्थे समाजग्रस्तामिति स्थानिवत्त्वेनैव निर्वाह इति वाच्यम्। एकाज्उत्तरपद इति सूत्रे समासनिर्देशेनैकाजवयवकत्वविशिष्टोत्तरपदकसमासावयवपूर्वपदस्थत्वस्य निमित्ततावच्छेदकत्वेनाश्रयणम्। तच्च विशेषणीभूताज्घटितमेव। किं चात्र श्रौतस्थान्यादेशभावो वा, आनुमानिको वा। उभयथोत्तरपदत्वमप्ये इत्यत्रातिदेष्टुमशक्यम्। श्रौतस्थानिनि पूर्वाकारपरेकारघटितसमुदाये तस्याभावात्। आनुमानिकादेशस्तु क्षीरपेणेति तस्य स्थानी क्षीरप इनेति। तस्मिन्समुदायेऽपि नोत्तरपदत्वमिति तस्यातिदेष्टुमशक्यत्वादिति भाव.। * भीईभिय इति *। आत्वपक्षे भियोहेतुभयेपुगिति सूत्रेण पुगागमवारणाय भिय इति सूत्रे ईकारप्रश्लेष कृतस्तन्निर्देशोऽयम्। ये त्वकृदित्तामित्येतदृष्टान्तेन स्थानिवद्भावमुपपादयन्ति ते भान्ता। तत्र तसस्तामादेशे तस्य स्थानिवद्भावेन सार्वधातुकत्व सम्पादनसम्भवेन कथमप्यलोऽश्रयणामिति वैषम्य स्पष्टमेव। तथा प्राचाम्पूर्वापर विरोध इत्याह। * किञ्चेति *। * अभीयादित्याद्यसिद्धिरिति *। दूषणेण उपस-

त्याद्यसिद्धिः । स्थानिवत्त्वं तूभयत आश्रयणे इष्यतएव । अन्यथा ऽचः परस्मिन्नित्यस्याप्युभयत आश्रयणे ऽप्रवृत्त्यापत्तौ प्लायतइत्याद्यसिद्धिरिति दिक् । निर्देशादिति । न च कर्त्तरिचर्षीत्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावेन न विसर्ग इति वाच्यम् । गुणस्येव पदद्वयसम्बन्धिरेफस्वरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्त्वात् । परनिमित्तकत्वमप्युभयोः समम् । किं च कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्यासिद्धत्वप्रतिपादनम् । न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम् । एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः । एवञ्च विरोधात्कार्यकालपक्षे ऽपि तदनुपस्थितिरेव त्रिपादीस्थे ऽन्तरङ्गे उचिता । अत एव विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा अयुक्तो ऽयं परिहारो न वा बहिरङ्गलक्षणत्वादित्युक्तम् । एवञ्च तत्र तत्र वचनान्येव कार्याणि ज्ञापकानुसरणं वा

---

गोरपरत्वस्यातिदेशेन लाभसम्भवात् । * अचः परस्मिन्नित्यस्येति * । पूर्वसूत्रापेक्षयाऽचः परस्मिन्नित्यनेनाभावोऽप्यतिदिश्यते इत्येव विशेषो दर्शितो न त्वयमित्युभयत आश्रयणेऽप्युभयोः प्रवृत्तिः । विनिगमनाविरहाच्च । यद्युभयत आश्रयणेऽप्रवृत्तिस्तदोभयोरप्रवृत्तिः स्यात् ग्लायत इत्यस्यासिद्धिः । अत्रायतिपरत्वस्य कार्यरेफविशेषणत्वे लयते दुल्यत इत्यादौ चरितार्थस्य तस्य पल्ययत इत्यादौ व्यवहिते प्रवृत्तिर्न स्यादत उपसर्गविशेषणम् । एवञ्च ग्लायत इत्यत्र लत्वस्थानिवत्त्वेनैव साधनीयमिति भावः । पदद्वयसम्बन्धित्वेन वर्णद्वयस्य निमित्तत्वेनाश्रयणञ्च शास्त्रबोध्यङ्किन्तु वस्तुगत्या गुणस्य पदद्वयसम्बन्धिवर्णनिमित्तकत्व वाच्यम् । तच्च विसर्गस्यापीत्याह । * गुणस्येवेति * । कार्यकालपक्षे त्रिपाद्यामसिद्धपरिभाषाप्रवृत्तिरिति प्राचीनसम्मतोऽर्थो नोचित इत्याह । * किं चेति । * अनया * । असिद्धपरिभाषया । * विनिगमनाविरहादिति * । प्रत्यक्षानुमानयोः समत्वमभ्युपगम्येदम् । उक्तार्थे भाष्यसम्मतिमप्याह । * अत एवेति * । कार्यकालपक्षेऽप्यप्रवृत्तेरेवेत्यर्थः । * इमामिति * । पर हीत्याद्युक्ताम् । तत्र हि नाकुटो नार्पत्य इत्यत्र विसर्गनिवारणायारब्धस्य विसर्जनीयोऽनुत्तरपद इति वचनस्य प्रत्याख्यानाय प्रवृत्तम्बहिरङ्गपरिभाषया समाधानमयुक्तं किन्तु वचनेन समाधानं कार्यम् । * तत्रतत्र * । संयोगान्तस्य रदाभ्यान्निष्ठात, क्षियो दीर्घात् स्वरवसानयोरित्येतेषु सूत्रेषु । * वचनानीति * । संयोगान्तलोपे यणः प्रतिषेधः । तथा कार्त्तिरित्यत्र नत्वव्यावर्त्तक रेफादपरनिमित्तात् । तथा क्षैतिरित्यत्र नत्वधारक निष्ठानत्वमवृद्धेरिति । एवञ्चेद व्यापकत्वादादर्त्तव्यमनेनैव

कर्त्तव्यम् । अत एव निगाल्यतइत्यादौ लत्वाद्यर्थं तस्य दोष इति वचनमेवारब्धम् । अन्यथान्तरङ्गत्वाण्णिल्लोपात्पूर्वं वैकल्पिकलत्वे च अत्र मापवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । यत्तु लक्ष्यानुरोधात्कार्यकालपक्षे उपस्थितयान्तरङ्गपरिभाषयानुमानिक्या प्रत्यक्षसिद्धस्यापि पूर्वत्रेत्यस्य बाध इति । तन्न लक्षणैकचक्षुषामादरणीयम् । अत एवोरण्णिति सूत्रे रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो नार्कुटाद्यर्थमित्युक्तं भाष्ये इति दिक् । उपसर्गेणैवेति । तत्सञ्ज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । यदर्थे क्रियारूपे प्रादीनामन्वयस्त प्रत्येवोपसर्गत्वमिति भावः । प्रकृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः प्रर्द्धइत्यत्र न । पुनरिति । प्रकृतसूत्रे भाष्येस्फुटमेतत् ।

सुब्धाताविति । सुबन्तप्रकृतिके धातावित्यर्थः । तुल्यास्यसूत्रे उपाकारीयतीत्यादेरेतदुदाहरणत्वस्य भाष्ये उक्तत्वात् । शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्ततया तत्प्रकृतिके इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयतीत्यत्र तु न वृद्धि । उपेत्यस्यानुपसर्गत्वात् । अत्रापि धातावित्यनुवर्त्य वाक्यभेदेन व्याख्येयं । तेन सुब्धाता-

---

सिद्धे पूर्वोक्तम्न कार्यम् । नार्कुटे विसर्गनिवारक विसर्जनीयोऽनुत्तरपद इत्येव वचनञ्च कार्यमित्यथ । उत्तरपदे सति यो रेफ उत्तरपदनिमित्तक इति यावत् तस्य नेत्यर्थं । न च नार्कुट इत्यादावुत्तरपदस्य न रेफनिमित्तत्वाद्किन्तु तद्धितस्येति वाच्यम् । उत्तरपदे सत्यृकारे आदित्वव्यपदेशेन वृद्धिप्राप्त्या परम्परया रेफस्योत्तरपदनिमित्तकत्वात् । न चैवमपि नार्कल्पिरित्यत्र रेफस्योत्तरपदनिमित्तकत्वाभावाद्विसर्गो दुर्वार इति वाच्यम् । उत्तरपदशब्दस्योत्तर यत्पदमर्थवत्तत्परत्वात् । कल्पप्रत्ययस्यापि द्योत्येनार्थेनार्थवत्त्वात् । ननु तत्र तत्र वचनारम्भे गौरवमत आह । * ज्ञापकानुसरणमिति * । संयोगान्तस्य लोप इत्यत्र झल्ग्रहणापकर्षस्याप्युपलक्षकमेतत् । एवञ्च विसर्गविधौ उभयथर्क्षुकर्तैरिचर्पीत्यादि संयोगान्तलोपविषये झल्ग्रहणापकर्षो वा तस्मादित्युत्तरस्येत्यादिनिर्देशस्य वा ज्ञापकत्वात् । नत्वविषये निष्ठानत्वप्रवृद्धे वृद्धे परस्य प्रतिषेध इत्यर्थक वचनमेव कर्तव्यम् । एवञ्च ज्ञापकानुसरण वेत्यत्र वाकारोऽनास्थायान्द्रष्टव्य । *यदर्थे क्रियारूप इति * । उपसर्गाः क्रियायोगमित्येव सिद्धे योगग्रहणाद्यत्क्रियायोग इत्यस्योपस्थित्या विवक्षितार्थलाभ ।

* सुबन्तप्रकृतिके धाताविति * । सुबन्तप्रकृतिर्यस्यैतादृशो य प्रत्ययः क्यजादिस्तदन्ते धातावित्यर्थ । न तु सुबन्ते धाताविति शेष । * अनुपसर्गत्वादिति * । क्रियायोगाभावादिति भाव । *अत्रापीति* । पूर्ववत् । *व्यञ्जना-

ष्वपि न प्रकृतिभावः । मार्षभीयमीति । अत्र दारोचीत्यस्यानुपन्यासेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेनाचो रहाभ्यामित्यस्य व्रिपेधस्य चानावश्यकता सूचिता । वाक्यभेदेनेति । इदं सूर्चा स्पष्टं, भाष्ये तु न दृश्यते । एवे चेति वार्त्तिकं सूत्रे धाताविन्यनुवर्त्तेरारम्भम् ॥

अवधारण नियमः । एवशब्दस्य द्योत्यमर्थद्वयमवधारणमसंभवरूपानवक्लृप्त्यादि च तयोरन्त्योरेवशब्दार्थं इत्यभिप्रेत्याह, अनवक्लृप्तावेवेति । क्वेव भोक्ष्यसे इत्युक्ते स्थलसङ्कीर्णत्वादिना नास्ति सम्भवस्तव भोजनस्येति गम्यते ॥

अचो ऽन्त्यादि । अच इति निर्धारणे षष्ठी । अन्ते भवो अन्त्यः ऽन्त्यादीति गमकत्वाद् बहुव्रीहिः । मार्त्तण्ड इति । मृताण्डादागतो मार्त्तण्डः । अणविषय एव पररूपम् । ननु मार्त्तशब्दान्त्यात् तकाराकारः स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न । एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः । एतन्मूलकमेव व्यपदेशिवदेकस्मिन्निति पठ्यते इत्यलम् । वस्तुत आरोपस्य नात्रोपयोगः । " शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति पतञ्जल्युक्ते अर्थाभावे ऽपि विकल्पात्मकं ज्ञानमत्र, तदपि ल-

---

त्परस्यैकेति* । न हि व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषो ऽस्तीत्यत्र व्यञ्जनात्परस्य व्यञ्जनं परं यस्मादिति वा समासद्वयं विवक्षितम् ।

* अनवक्लृप्त्यादि चेति * । आदिना ऽमर्षपरिग्रहः । यथा ऽनवक्लृप्तिः प्रतीयते तथा स्पष्टयति । * क्वेत्यादि * ।

* निर्धारणे षष्ठीति * । सौत्रत्वादेकवचनम् । अत्रान्त्यशब्दस्य सापेक्षत्वे ऽपि समासोपपत्तिर्गमकत्वादिति । * गमकत्वादिति * । गणे सीमन्तशब्दो ना तद्भाषन्तयोरपि तन्त्रेण निर्दिष्टः । केशवेश इत्यस्य रचनाविशेषविशिष्टकेशेष्वित्यर्थः । *मृताण्डादागत इति* । एतेनाण्प्रत्ययसत्तायां पररूपमिति सूचयति । अत्राधिकरणस्य हेतुत्वविवक्षया पञ्चमी । आगत इत्यस्य भव इत्यर्थः । बुधशापवशाददितेरुदरे स्थित एव गर्भोऽचेतनः सम्पन्नः पश्चात्ततो निःसरणे सचेतनो भूदिति भारते प्रसिद्धम् । * शब्दज्ञानानुपातीति * । शब्दश्च ज्ञानञ्च शब्दज्ञाने ते अनुपातिनी जनके यस्य स शब्दज्ञानानुपाती वस्तुशून्यो बाह्यवस्तुशून्यस्तद्विषयित्वाभाववानिति यावत् । एतादृशो यः प्रत्ययस्स विकल्प इत्युच्यते । शशशृङ्गादिशब्दे केनचित्पुरुषेणाय शशशृङ्गवानित्यादिरीत्योच्चारिते इदंशब्दबोधोऽस्य दुःख जायते । तदुत्पत्तौ च तदर्थविषयकशाब्दबोधो हेतुः । स च शाब्दबोधः पदार्थोपस्थितिसाध्यः । सा चोपस्थितिरस्मादेव शब्दाज्जायतेति यः शाब्दबोधो भवति स उच्चारितशब्दजन्यज्ञानञ्च प्रयोक्तुः परम्परया शाब्दबोधस्य प्रयोजकं वाक्यप्रयोगे वाक्यार्थबोधस्य कारणत्वात् । बौद्धपदार्थस्वीकाराच्च ।

स्यानुरोधाच्छास्त्रमत्रत्युपयोगीति बोध्यम्। पतञ्जलिरिति तु अञ्जलेः पतित इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपातनादितशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु। गोनर्ददेशे कस्य चिदृषेरञ्जलेः सन्ध्याकरणसमये पतित इत्यैतिह्यात्।

ओत्वोष्ठयोः। अत्र समर्थपरिभाषा नोपतिष्ठते समासे ऽङ्गुलेः सङ्ग इत्यादौ समासग्रहणेन पदविधिरिति सूत्रस्वरसेन भाष्यादिस्वारस्येन च

---

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः॥

इत्यस्योपपत्तिः॥ शकन्ध्वादिष्विति वचनस्य शकन्ध्वादिषु शब्देषु यथा शब्दा उच्चारितास्तथा येन प्रकारेण सिध्येयुस्तथा पररूपम्भवतीत्यर्थोऽभियुक्तैरुक्तः। तेन टेरिति लब्धम्। पतच्छब्दस्याञ्जलिशब्देन समासे यद्यपि पतञ्जलिशब्दसिद्धिर्भवति शकन्ध्वादौ पतञ्जलिशब्दपाठश्च चरितार्थो भवति। तथापि कस्य चिदृषेरञ्जलेः पतित इत्यर्थे यः पतञ्जलिशब्दस्तस्यानेन सिद्धिर्न भवतीति सिंहावलोकनन्यायेनाह। * पतञ्जलिरिति त्विति *। अत एव भगवान् भाष्यकार एव तत्र तत्राह गोनर्दीयस्त्वाहेति। तथा चेयमेव व्युत्पत्तिर्युक्तेति सूचितम्॥

नन्ववर्णान्तेत्यादिशब्दावयवेऽचि वा पररूपमित्यर्थे ओत्वोष्ठादिशब्दस्य विशेषणतयाऽस्यापि पदसम्बन्धिविधित्वेन समर्थपरिभाषोपस्थित्या समास एव प्रवृत्तिर्भविष्यतीति समासग्रहणं व्यर्थमत आह। * अत्र समर्थेति *। यथा कथञ्चित्पदविधौ परिभाषोपस्थितौ समासेऽङ्गुलेरित्यस्यापि समासे प्रवृत्तिसिद्धैवेति तत्रापि समासग्रहणं व्यर्थमेव स्यात्। ननु तस्याप्यकरणे लाघवमेवेत्यत आह। * पदविधिरितिसूत्रस्वरसेन चेति *। न चैतावता सुबन्तत्वेनेतरस्य लाभ इत्यत आह। * भाष्यादिस्वारस्येन चेति *। अत्र साक्षादुद्देश्यतेरस्य पदस्येत्यादि। तेन पदसञ्ज्ञकसमुदायस्योद्देश्यतायामेव समर्थपरिभाषा प्रवर्तते। समासेऽङ्गुलेरित्यत्रौत्वोष्ठयोरित्यत्र च न पदस्योद्देश्यत्वमपि तु उद्देश्यविशेषणत्वमिति भावः। तत्र सुबन्तत्वेनोद्देश्यता समासादिविधौ स्फुटैव। पदत्वेनोद्देश्यतायाम्प्रवृत्तिश्च गतिर्गतावितिसूत्रे भाष्ये कैयटेन दर्शिता। न च समासादिविधौ समर्थपरिभाषया एकार्थीभावो बोध्यते। स चैकार्थीभावः साक्षाद्विध्युद्देश्ययोर्विधेयोद्देश्ययोर्वा कल्प्यते। समासविषये विध्युद्देश्ययोरिति ग्राह्यम्। अत्र द्वित्वस्याविवक्षितत्वाद् बहूनामपि सङ्ग्रहः। कर्मण्यणित्यादौ विधेयोद्देश्ययोरिति ग्राह्यम्। तथा सति महान्तं कुम्भं करोतीत्यत्र नाणिति ग्रन्थास-

समासे ऽग्न्यर्पम इत्यत्र पररूपे ऽग्न्यर्पमसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः । प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकमिदञ्च मध्येपवादन्यायेनावेङीत्यादौ वृद्धेरेव बाधकं स्यादिति वाच्यम् । लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ताश्रयणात् । अन्यत्र प्रतिपदविधित्वस्य बलवत्त्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपमदृसेश्च ।

अव्यक्तशब्दार्थो ध्वनेरिति । अविद्यमानकत्वादिशब्दस्येत्यर्थः । तस्य चाच्छब्दो ऽनुकरणे एव सम्भवतीत्याह । अनुकरणस्येति । अत्रालोन्त्यस्येति न प्रवर्तते नानर्थं इति निषेधात् । आम्रेडितस्य चेति वक्तव्ये नाम्रेडितस्येत्यारम्भाद्वा । अत इति किम् । घटगिति ॥

नाम्रेडित ॥ अव्यक्तानुकरणस्येत्यत इति च वर्तते । अव्यक्तानुकरणावयवीभूताम्रेडितावयवाच्छब्दस्येत्यर्थः । नाम्रेडितस्य तस्तु चेति न सूत्रित वैचित्र्यार्थ फलकल्पनाभिनिवेशस्तु न युक्तो भाष्यानुक्तेः । अत एव तदधीते तद्वेदेति सूत्रे द्विस्तद्ग्रहण प्रमादकृतमाचार्यस्येति भाष्ये उक्तम् । लाघवानवधानलक्षणो ऽत्र प्रमाद इति कैयटः । क्व तदवधान क्व तदनवधानमिति तु भाष्यकृदुक्तप्रयोजने तदवधानमन्यत्रान्यदिति निर्णेयम् । ननु अचो ऽभावादेतदप्राप्तिरत आह । बहुलवचनादिति ।

तस्य परम् ॥ अवयववाचिपरशब्दयोगे ऽत एव ज्ञापकात् षष्ठी । तस्य ग्रहण स्पष्टार्थं द्वेरित्यनुवर्त्य षष्ठ्या विपरिणामेन सिद्धेः । अन्यद्विरुक्तपरस्य तु न सञ्ज्ञा अष्टमे सर्वस्येत्येतत्प्रकरणे संज्ञाकरणात् ।

अज्झलोः सावर्ण्यनिषेधादाह । आचि किमिति । अनिष्पत्तेरिति ।

---

* इति निषेधादिति । * अनुकरणावयवाच्छब्दस्यानर्थकत्व स्फुटमेव । नानर्थक इति परिभाषां विनापि लक्ष्यसिद्धिमाह । *आम्रेडितस्येति* । *घटगितीति* । इदङ्कपोतोच्चारितध्वनेरनुकरणम् ।

* वैचित्र्यार्थमिति * । मात्रादिलाघवाभावेपि प्रतिपत्तिलाघव यथा भवति तथैव वक्तव्यमिति नियमाभावसूचनार्थमित्यर्थः । * फलकल्पनाभिनिवेशस्त्विति * । नाम्रेडितस्येत्यशास्त्रन्वाचयशिष्टत्वात्पट पटपटागेतीत्यादावन्त्यस्य प ररूपम्भवतीत्येव रूप इति भाव । *प्रमादकृतमिति* । न तु तत्र द्विस्तद्ग्रहणेनाधीयानविदुषो पृथग्ग्रहण सिध्यति । अन्यथा योऽधीते वेद च तत्रैव स्यान्निति फलकल्पना कार्या । तेन दीव्यति खनति जयतीत्यादौ यथा पृथगेव निमित्तत्वन्तथा पृथगेव भविष्यतीति भाव ।

* ग्रहणकशास्त्रस्य साधर्म्यविधिनिषेधाभ्यामप्राप्तिनिष्पत्तेरित्यनुपपन्न

नाज्झलाविति सूत्रविषयनिर्णये ऽपवादविषयपरिहारेण तत्तद्वर्णीयसवर्णप-
दवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रेणोक्ततयैतद्बोधकाले ग्रह-
णकशास्त्रस्य तावद्ग्रहणबोधकत्वानिष्पत्तेरित्यर्थः । सूत्रस्थसवर्णपदानुवृत्ति
मभिप्रेत्याह । ऋति सवर्णइति । तत्फलं द्यृकारादावेतदप्रवृत्तिः ।
एतद्विधेययोरइउण् सूत्रानन्तरं पाठादच्त्वं । तेन तयोः स्थाने प्लुतसिद्धिस्त-
योश्च न रपरत्वम् । द्विमात्रमिति । अत एवाकः सवर्णइत्यनेनैव ऋकारद्व-
यस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदा चिद्रेफद्वयगर्भस्य विवृत-
त्वान्तर्येण कदा चिद्विवृतस्य लृकारे लकारवत्तान्तर्येण कदा चिद्द्विलका-
रस्य कदा चिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ऋकारस्य
सिद्धया विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयन्तुल्यास्येतिसूत्रे भाष्ये प्रत्या
ख्यातम् । द्वौ रेफाविति । अत्रापि तदेव भाष्यं मानं । द्विरेफत्वे हि रेफद्वय-
वति स्थानिन्यपि लकारवत्यपर इति व्यवस्था सिद्ध्यति । अभित इति ।
द्वौ रेफावित्यनुषज्यते । तच्च द्वितीयान्तम् । अभित पदयोगात् । एओङ्
सूत्रे भाष्ये मातॄणामित्यादौ णत्वादिसिद्ध्यर्थमवश्यमङ्गीकर्त्तव्ये वर्णै-
कदेशा वर्णग्रहणेन गृह्यन्तइति पक्षे मद्रूप स्वस्राभिर्वाचा तरतीत्यादौ तुगे-
स्व्यञ्जलक्षणठानां शङ्कायां दीर्घादिति तुग्विधानसामर्थ्यैतत्परकरणसामर्थ्य-
नाम्यच इति सूत्रस्थनाग्रहणसामर्थ्यैर्भेदनामतिभासमानेषु वर्णावयवेषु अव-

---

म् । सूत्रनिष्पत्तेर्नाज्झलाविति शास्त्रजन्यशाब्दबोधहेतुत्वे मानाभावात्ततोऽनिष्प-
त्तेरित्यस्य तावद्ग्रहणबोधकत्वेत्यादिपूरणेन व्याख्या युक्तेत्याशयेनाह । * नाज्झ-
लाविति * । यद्यप्यृति ऋ इत्येव वचनं तथाप्यनुवृत्त्यैतादृशार्थलाभ इत्याह ।
* सूत्रस्येति * । वार्तिकद्वयविधेययो प्रसिद्धाद्विलक्षणत्वं वार्तिकारमेणैव ज्ञाय
ते । एवञ्चाच्कार्यसिद्धिं कथमत आह । * एतद्विधेययोरिति * । न रपर-
त्वमिति * । प्रथमणकारेणाण्ग्रहणस्यैव तस्मिन् सूत्रे निर्णीतत्वात् । * अत
एव * । द्विमात्रत्वादेव । * रेफद्वयवत्तारूपेति * । स्थानार्थगुणप्रमाणेति चतु-
र्विधमेवा न्तरतम्यमिति नियमस्योरणिति सूत्रेऽना तर्यमेवान्तर्यमिति भाष्यप्र
तीतत्वेन त्यागादिति भावः । * कदाचिद्विवृतस्येति * । प्रसिद्धस्य दीर्घऋकार
स्येत्यर्थः । * द्विलकारस्येति * । वार्तिकविधेयस्यैतत्स्पृष्टस्य । दीर्घलृकार-
स्याप्रसिद्धत्वादिति भावः । * रेफवत्तासाम्येन चेति * । यो हि द्वयो षष्ठी-
निर्दिष्टयोः स्थाने भवति स लभतेऽसावन्यतरतो व्यपदेशमिति भाष्यप्रतीयोक्त-
त्वेन पूर्ववृत्तिधर्मवत्त्वेनोत्तरवृत्तिधर्मवत्त्वेन वा साम्यस्य ग्रहीतुमुचितत्वादिति
भावः । * तदेव भाष्यमिति * । प्रत्याख्यानपरभाष्यमेवेत्यर्थः । तदेवोपपादयति ।
* द्विरेफत्व हीति * । * अवश्यमङ्गीकर्तव्य इति * । आपर्णाभस्येति तु पक्षान्तरे

यत्रसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत् प्रातर्ऋतमित्यत्र रोरीत्यस्य तदुच्चारणकार इत्यादौ तोर्लीत्यस्य च शङ्कासमाधानाकरणेन यत्तद्रेफात्पर भक्तेरिति इयत्ररदसूत्रस्थभाष्येण च ऋलृस्सूत्रस्थयोर्धमात्राज्भागस्याभितः क्लृप्तत्वेन तथैवोचितत्वादिति भावः। द्वौ लकाराविति। हल्द्वयवत्पूर्वसाहचर्यादिति भावः। अत्र ह्रस्वऋकारद्वयस्थानिकैकादेशे एव पूर्वस्य साधुत्व ह्रस्वऋकारलृकारस्थानिकैकादेश एवोत्तरस्य साधुत्वम्। अत एव लृति न ऋकारो नाप्यृति लृकारः। अत एव वार्त्तिके ऋतीति तपरकरणमुत्तरवार्त्तिके लृतीति च चरितार्थम्। तुल्यास्यसूत्रे भाष्ये यदेवदृतीति एतद्दत इति वक्ष्यामीत्येतद्वचनाश्रयणेन ऋलृवर्णयोः सावर्ण्यं न कार्यमिति च सङ्गच्छते। उपस्थितरेफीयप्रयत्नत्यागे मानाभावादीषत्स्पृष्टाविमौ विवृतत्वे हि विवृतऋकारलृकाराभ्यामनयोरपि ग्रहणेऽकः सवर्णइत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः।

एङः प ॥ पदान्तात् किम्। भवति।

सर्वत्र वि ॥ प्रकृत्यान्त इति सूत्रात्प्रकृत्येत्यनुवर्त्तते। प्रकृतिशब्दोत्र

---

स्ति। *भेदेनाप्रतिभासमानेष्विति*। ऊकाराद्यवयवेष्वित्यर्थ। *प्रातर्ऋतमित्यत्रेति*। एतेन मूले वार्तिकव्याख्यानावसरेऽभितोऽज्भक्तेरिति यदुक्तं तद्वार्तिकविधेययोरेवेति शङ्काव्युदास। * रेफात्परभक्तेरिति *। रेफाद्भक्ते परमिति योजना। *तथैवोचितत्वादिति*। अभितोऽच्भागस्योचितत्वादिति भाव। वार्तिकविधेययोर्यत्र साधुत्वन्तद्विषयन्दर्शयति। *अत्र ह्रस्व इत्यादि*। ऋतीति तपरकरणेन ह्रस्वस्यैव स्थानित्वलाभात्। *पूर्वस्य*। पूर्ववार्तिकविधेयस्य। *ह्रस्वऋकारेति*। यदेतदृतीति एतद्दत इति वक्ष्यामीति भाष्यात्। *लृकारेति*। तस्यैव द्वितीयवार्तिक उपादानात्। *अत एवेति*। उक्तव्यवस्थाश्रयणादेवेत्यर्थ। *सावर्ण्यंच कार्यमिति*। सावर्ण्यस्य होतृलृकार इति स्थिते सवर्णदीर्घरूप यत् फलन्तस्यानेन वार्तिकेनैव सिद्धिर्भविष्यति वार्तिकस्थयथाशब्दस्य चार्थत्वात्। एवञ्च वार्तिके ऋत इति करणे होतृलृकार इत्यत्रैव द्वितीयवार्तिकाविधेयौ भविष्यत इति तत्र सवर्णग्रहणानुवृत्तिर्न कार्येति भाव। वार्तिकविधेययोरीषत्स्पृष्टत्वे प्रमाणमाह। * उपस्थितेति * । एतेनान्यप्रयत्नकत्वशङ्का निरस्ता। ननु प्रसिद्धऋकारीयप्रयत्न एवास्त्वित्यत आह। * विवृतत्वे हीति *। अनयोरपि ऊकालत्वस्योपपादितत्वादिति भाव ॥

*भवतीति*। न चात्र शपि गुणे सन्निपातपरिभाषया परपरूपमिति वाच्यम्। अस्य भवतीत्याद्युपलक्षकत्वात्। न चापदान्ताच्चेन्ङसिङसोरेवेति नियमार्थकङसिङसोश्चेति सूत्रारम्भात्तत्र दोष इति वाच्यम्। विभक्तौ चेन्ङसिङसोरेवेतिनियमपरतयापि सूत्रसार्थक्यसम्भवात्। हरय अमुनयमित्यादिव्यावर्त्यं स्यात्।

स्वभाववाची दुस्त्यजा प्रकृतिरित्यादौ तथा दर्शनात् । प्रकृत्या स्वभावेना-विस्थानमित्यर्थः। अत एव प्रकृतिभावे न पूर्वरूपं नाप्ययवादय इति भावः । नान्तः पादमिति पाठे त्वनेन सूत्रेण गोशब्दस्य यत्प्राप्तं तन्नेति व्याख्यानेन नान्तः पादमित्यनेनैव पूर्वरूपत्वादिकं विकल्पेन निषिध्यतइति बोद्ध्यम् ।

अवङ् ॥ स्फोटोऽयनं यस्य स स्फोटप्रतिपादक इत्यर्थः । स्फोटायन-स्येतिपाठे नाद्यादिरत्र कल्प्यम् । स्फोटायनोऽस्त्वङः स्मर्त्ताऽन्यस्तु तदभाव-स्येति स्मृत्यन्तरानुसन्धानद्वारेणायं विकल्पो बोद्ध्यः । नित्यमिति । अत एवेन्द्रे इति सामर्थ्यान्नित्यमिति भाष्यादावुक्तम् । गवाग्रमिति । सन्निपात-परिभाषाया अनित्यत्वाद्दीर्घ इति बोद्ध्यम्। व्यवस्थितेति । "देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः" । तेन भाष्यवचनेनेति शाश्छोरिति सूत्रे भाष्ये स्पष्टम् । अग्नीत्प्रेषण इति सूत्रे अग्नीदग्नीन्विहरेत्यत्र एतत्प्राप्त्यर्थं वार्त्तिककृद्बहुलग्रहणमिति न्यास कृतवान् । तन्मत्याख्यानाय भाष्ये कृतेन विभाषेति योगविभागेन विभाष-त्वस्य व्यवस्थितविभाषात्वं ध्वनितं । तथा अजेर्व्यघञपोरिति च व्यवस्थि-तविभाषेति । अजेर्वीतिसूत्रे भाष्ये स्पष्टम् । न च व्यवस्थितविभाषयैवेन्द्रे नित्येऽवङि सिद्धे इन्द्रे चेति व्यर्थमिति वाच्यम् । भाष्योक्तातिरिक्तव्यव-स्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः ।

इन्द्रे च ॥ क्वचिद्भाष्यपुस्तके चशब्दरहितः पाठः । इन्द्रावयवेऽची-

---

*स्फोटायनेति* । स्फोटस्य ऋषेरपत्यमित्यर्थः । *अत एव* । तन्निवृत्तिस्वी-कारादेव । ननु सन्निपातपरिभाषयाऽवङादेशे कृते दीर्घो न स्यादत आह । *सन्निपातेति* । *देवत्रात इति* । विभक्तौ चेतिप्रशाखायां से तुदादिरिति नित्यम न । *गल इति* । अचि विभाषेति लत्वप्राप्यत्रात्र नित्यम् । *ग्राह इति* । जलचरे विभाषा ग्रह इतिणप्रत्यय एव । * इतियोग इति * । इन्तीति पलाय-त इत्यादौ लक्षणहेत्वोरिति शत्रादिनं । वातायनेऽवङ् नित्य । व्रतविषये शा-च्छोरिति नित्यमेवेत्यम् । ते नत्वादयो मिथो न विभाष्यन्ते एकस्मिन् विषये प-र्यायेण न भवन्ति । अन्या अपि व्यवस्थितविभाषा भाष्यप्रमाण्यादत्र तत्र स्वीकार्या न तु स्वेच्छया । तदाशयेनाह । * अग्नीत्प्रेषण इतीति * । अग्नीध प्रेषणे यद्वाक्य-न्तस्यादेस्तस्मात्परस्य च प्लुतो भवति । स यथा ओ३श्रावयेत्यत्र भवति तथा अग्नी-दग्नीन्विहरेत्यत्रापि स्यादित्यर्थः । ननु अन्यत्रापि व्यवस्थितविभाषात्वस्वीकारे इन्द्रे चेति सूत्रं व्यर्थमित्याशङ्क्य निराचष्टे । * न चेति * । एतच्च भाष्यतात्पर्यविषय एव व्यवस्थितविभाषात्वमिति सिद्धम् ।

* इन्द्रावयवेऽचीति * । अवयविन आधारत्वविवक्षायां सप्तमी । अत्राप्य-

त्यर्थस्तेन षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे गवेन्द्रयज्ञ इत्यादावग्रहसिद्धिः। अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वासंभवेन समासाक्षेपादिन्द्रशब्दस्योत्तरपदत्वएव प्रवृत्तिः स्यात्।

प्लुतप्रगृह्या इत्यस्य प्रकृत्येति पाठएव सामञ्जस्यं मत्वाह। अथ प्रकृतीति। न चैतद्घटकपदार्थज्ञानाय प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम्। इन्द्रे चेत्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामाणिकत्वं बोधयितुं तदव्यवहितमेतत्सूत्रलेखनात् तत्र नित्यग्रहणे तदव्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह। प्लुताः प्रगृह्याश्च वक्ष्यन्ते इति। अचीत्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राचि अनयोः प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थलाभार्थं तेन जानु उ अस्य रुजति जानू अस्येत्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव। एहि कृष्णेति। दूराद्धूते चेति प्लुतः। अत्र प्लुतस्याश्रयात्सिद्धत्वं बोध्यम्। नित्यमिति किमिति। वा ग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः। मा भूदिति। नित्यग्रहणसामर्थ्येन पुनर्विधानाद्बाधकविषये ऽप्ययमेवेति भावः।

इको ऽसवर्णे। एङ इत्यतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यत इत्याह। पदान्ता इति। वेति ह्रस्वयणोर्विधानसामर्थ्यात्तु विकल्पसिद्धिः। अपदान्तादौ यणश्चरितार्थत्वात्। सामर्थ्यादेवेति चेन्न। प्रकृतिभावाकर्षणे ऽपि ऋत्यक इत्यत्र चानुकृष्टत्वेन तदसंबन्ध इति तदर्थं ह्रस्वविधानसाम-

---

चीत्यनुवर्त्तमानं विशेष्यसमर्पकमेव। तदुक्तं भाष्ये। नैव विज्ञायते इन्द्रेऽचीति। किन्तर्हि अचीन्द्रे इति। न चेदानीमप्याक्षेपादुत्तरपदभूतेन्द्रशब्दावयवेऽचीति व्याख्यानेनानुपपत्तिः समानैवेति वाच्यम्। अचीत्यनुवृत्तिसामर्थ्यात्तथार्थाकल्पनात्।

* सामञ्जस्यमिति *। प्लुतप्रगृह्या इत्यस्य प्रथमान्तत्वात्। * अचीत्यनुवर्त्तमान इति *। न चाज्ग्रहणानुवृत्त्यभावेपि प्लुता प्रगृह्या प्रकृत्या इत्यनेनैव सामञ्जस्येऽज्ग्रहणानुवृत्तिसामर्थ्यादुक्तार्थो भविष्यतीति वाच्यम्। अनुवृत्तिसामर्थ्याच्चास्मिन्निति परिभाषाया षष्ठ्यन्तपदरहिताया अप्युपस्थितिः सम्भाव्येतेत्याशयात्। * आश्रयादिति *। अनुवादसामर्थ्यादित्यर्थः। * वाग्रहणनिवृत्त्यैवेति *। सर्वत्र विभाषेतिसूत्रादनुवर्त्तमानस्य विभाषाग्रहणस्य इन्द्रे चेतिसूत्रे सामर्थ्यान्निवृत्तेरुक्तत्वात्। * अयमेवेति *। एतच्च मूलएवोक्तम्।

* प्रथमया विपरिणम्यत इति *। इक इत्यस्य जसन्तस्य विशेष्यस्यानुरोधात्। पञ्चम्या पूर्वत्र कृतार्थत्वात्। * विकल्पसिद्धिरिति *। शाकल्यग्रहणसिद्धस्य विकल्पस्य सिद्धिरित्यर्थः। * तदसम्बन्ध इति *। प्रकृतेत्यस्यास

र्थस्यात्रयकत्वेन चकारो व्यर्थ इति भावः । भाष्ये स्थितमिति । प्रकृतसूत्रे इति शेषः । एतेन ह्रस्वाभावे प्रकृतिभावार्थं चकार इति न्यासाद्युक्तमपास्तम् । चक्री अत्रेति तु संहिताया अविवक्षाया बोद्ध्यम् । न समासे, सिति चेति वार्त्तिकम् । पार्श्वमिति । पर्शूणस्वक्कव्य इति णासिसाते चेति पदत्वम् ।

ऋत्यकः ॥ सवर्णार्थमनिगर्थञ्चेदम् । होतृऋकारः । ब्रह्मऋपिः । आछेदिति । आटो धात्ववयवत्वेनापदान्तत्वादिति भावः । एतेनाटश्चेति पुनर्वृद्धिविधानार्थेन चेनोस्योमाङ्क्षु पररूपबाधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम् । समासे ऽपीति । व्याख्यानादिति भाव. । सप्तऋपीणामिति । द्विवसव्ये इति समास ।

प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य प्लुतप्रगृह्या इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तत्वात् प्लुतप्रकरणमारभते ।

वाक्यस्य टेः ॥ वाक्यस्येत्यभावे पदस्य टेरित्यर्थे ऽनन्त्यस्यापि पदस्य टे. प्लुत स्यात् । तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव संभवतीति न दोष' । टिग्रहणाभावे प्लुतश्रुत्योपस्थिताच्परिभाषया ऽजन्तस्यैव स्यात् । टिग्रहणे तु सामर्थ्याट्टिनाचो विशेषणाद्व्यञ्जनान्तस्यापि भवति ।

प्रत्यभिवादे॥ प्रणामादिभिराशिष वाच्यमानो गुर्वादिर्यत्प्रतिसंभाषते त-

---

न्यन्ध इत्यथ । * आवश्यकत्वेनेति * । उत्तरसूत्रेऽपेक्ष्यन्तथा वक्तव्ये पूर्वसूत्र एव तथास्त्विति भाव । न च ह्रस्वाभावे प्रकृतिभावार्थश्चकारोऽस्त्विति वाच्यम् । भाष्यप्रामाण्येन ह्रस्वप्रकृतिभावयोरेकत्रैव प्रवृत्ते स्वीकारात् । यश्चैकस्याभावस्तत्रापरस्याप्यभावाङ्गीकारात् । तथा सति चक्री अत्रेत्यस्यासिद्धिरत आह । * चक्री अत्रेति * । * इति वार्त्तिकमिति * । सिन्नित्यसमासयो शाकलप्रतिषेधो वक्तव्य इतिवार्त्तिकखण्डनिर्देश । * इति णासिति * । पर्शूना समूह इत्यथ इत्यादि । * पदत्वमिति * । तेन गुणाभाव इति भाव । * यहृच्छक इति * । अत्र बहुजवयवोकारस्यापदान्तत्व सुलभमेव । * एतेन * । यहृच्छक इत्यस्य व्यावर्त्यस्य लाभेन ।

* व्याख्यानादिति * । पूर्वसूत्रप्राप्तियोग्यस्यैवोदाहरणस्य भाष्ये उपन्यासमूलकात् सित्साहचर्यमूलकाद्वा व्याख्यानादित्यर्थ ।

* प्रथमोपात्तेति * । श्लोके प्रथमोपात्ते पद्य प्रथमजिज्ञासोदयस्यानुभवसिद्धत्वात् ।

* यत्प्रतिसम्भाषत इति * । एवञ्चाशीर्वचनप्रत्यभिवाद इत्येव न किन्तु यद् गुर्वादिर्यत्कि स्वीयानुग्रहसूचकवाक्यमत्राशीर्वचनरूपङ्कुशलप्रश्नरूपं वा

प्रत्यभिवादः । न त्वाशीर्वचन शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाशूद्र इत्यस्य वैयर्थ्यापत्तेः। अत एव भाष्ये शूद्रे इति किं कुशल्यसि तुषजकेत्युक्तम् । अभिवादये इति । नमस्कारपूर्वमाशीरादि वाचयामीत्यर्थः । आयुष्मानित्या युष्मत्त्वस्य विधेयत्वात्संबोधनाविभक्त्यभावः । एधीति भवेत्यस्याप्युपलक्षण, प्रत्यभिवादे शर्मादिप्रयोगो न नियतः । एचोऽप्रगृह्यस्येति सूत्रे प्रत्यभिवादे ऽन्तस्यैच, प्लुतविधानात् । आयुष्मानेधि अग्निभूता इति भाष्ये तदुदाहरणाच्च । शर्मादिप्रयोगे तु तट्टेरेव प्लुतः । शर्मान्त नाम ब्राह्मणस्येत्यादि स्मृत्या तस्य नामावयवत्वबोधनात् । स्त्रिया नेति । स्त्रिया अपि नाम्नाभिवादप्रत्यभिवादे इत्यर्थस्य भाष्यसंमतत्वादिति भावः । नामगोत्रं वेति । अभिवादप्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धेः । तत्राधिकृतस्य प्रत्यभिवादे इत्यनेन विशेषणात्प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः । तत्र नामशब्देन द्वादशे ऽह्नि पित्रादिकृत गृह्यते । अत एवायुष्मान् भव दण्डिन्नित्यादौ प्लुतो नेति स्पष्ट भाष्ये । भोराजन्येति । भोशब्दस्य राजन्यवैश्यवाचकनाम्नश्च टेः प्लुत इत्यर्थः । भोशब्दस्यामाप्ते इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम् ।

दूराद्धूते ॥ यावति देशे प्राकृतप्रयत्नोच्चारितं संबोध्यमानो न शृणोति-किं त्वधिक प्रयत्नमपेक्षते तावद् दूरम् । दूरादाह्वानञ्च दूराद्बोधनस्योपलक्षण, न तु संबोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य संबोधनस्योपलक्षणम् । आगच्छतु भवान्देवदत्त इत्येवमाह्वानस्यापि संभवात् ।

---

तत्तत्प्रत्यभिवादशब्दबोध्यमिति भाव । * विधेयत्वादिति * । सम्बोध्यतावच्छेदकत्वेनाभिमतो यो धर्मस्तदवच्छिन्नस्य यत्र सिद्धत्वन्तत्रैव सम्बोधनाविभक्त्यङ्गीकारात् । * भवेत्यस्याप्युपलक्षणमिति * । आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादनइति मनुसम्वादात् । नन्वेधीतिप्रयोगस्तर्हि निर्मूल एवेति चेत् । मनूक्तौ भवेतियत्तदर्थपरमित्यभिप्रायात् । अत्रैव किम्मानमिति चेत् । आयुष्मानेधि अग्निभूता ३इ इत्यनुपदमुदाहरिष्यमाणभाष्यप्रयोग एवेति गृहाण । * शर्मान्तन्नामेति * । यत्र शर्मादिप्रयोगस्तत्र तस्य तदवयवत्वन्न तु तदन्तमेव नाम । उक्तभाष्यप्रयोगस्यैवात्रापि मानत्वादिति भाव । * स्त्रिया अपीति * । तद्विषये तथैवोदाहृतत्वात् । * नामगोत्राभ्यामेवेति * । असौ नामाहमस्मीति स्वन्नामपरिकीर्त्तयेदिति मनुवचने नामपदङ्गोत्रस्याप्युपलक्षणम् । * प्रत्यासत्त्येति * । वाक्यसम्बन्धिघटित्वासिध्यर्थमेतस्य वाक्यान्तत्वम । * भोशब्दस्याप्राप्त इति * । अस्य नामगोत्रभिन्नत्वात् ।

दूरत्वस्यानियतत्वादाह । * यावति देश इति प्राकृतेति * । स्वाभाविकेत्यर्थः ।*उपलक्षणमिति*।एवञ्चाह्वानाभावेऽपि न क्षतिरिति भाव । तत्र मानमाह ।

अत एवाकडारसूत्रे नदीगुरुसंज्ञयोः समावेशो वातीवन्धुरित्यत्र गुरोरिति प्लुतो नदीवन्धुनीति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं भाष्ये । अन्यथात्र सं- बोधनाभावेन गुरोरित्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव । उपलक्षणत्वादस- त्यप्याह्वाने भवति तदाह सक्तूनित्यादि । अत्रापि दूराद्धूतइत्येतदनुवृत्तस्य पदस्येत्यस्य विशेषणं । तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः । त- च्च रूढं यौगिकं वेत्यन्यत् ।

हैहेप्र॥ हैहयोः सम्बोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां सम्बोधनदर्श- नेन च तयोरपि हूयमानार्थपरत्वाद् गुरोरनृत इत्येव सिद्धे नियमार्थमिदमि- त्याह । हैहयोरेवेति । हैहेन्त इत्येव सिद्धे प्रयोगग्रहणादनन्त्ययोरपि तदाह हे ३ रामेति । के चित्तु एवं हैहेग्रहणमनन्त्यार्थम् । अन्यथा वाक्यस्य टेरित्यधिकारादन्त्ययोरेव तयोः स्यात्तदाह । हे ३ रामेति। प्रयोगइति तु य- त्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्या-

---

* अत एवेति * । उकार्थाङ्गीकारादेवेत्यर्थः । * समावेश इति * । लघुगुरुसंज्ञे वर्णस्य नदीतिसंज्ञे तु तदन्तस्येति समावेशसिद्धिः । अत्राकडारसूत्र इति पाठे रेफा तानुच्चरणादागन्तुनाऽकारेण निर्देशो बोध्यः ।

* केवलाभ्यामपीति * । यत्र नामग्रहणस्यात्मनामेत्यादिना निषेधस्तत्रागच्छ हे इति प्रयोगदर्शनादित्यर्थः । न चैवमपि हेशब्दस्य समभिव्याहृतपदगतवाक्यबु द्धोधकत्वरूपद्योतकत्वस्यानुपपत्तिः । समभिव्याहृतस्य तादृशस्य पदस्याभावा दिति वाच्यम् । प्रादेशं विमाय परिलिखतीत्यर्थे विद्यमानस्य वाक्यैकदेशन्यायेन प्रादेशं निपरिलिखतीत्यस्य शाब्दार्थबोधकत्वेन तद्घटकस्य विशब्दस्य यथा वि- मानक्रियाक्षेपकत्वव्यवहारस्तथाऽत्रापि स्वघटितग्रहणयोग्यनामघटितवाक्यार्थ मागच्छ हे इत्यस्य वस्तमानत्वेन द्योतकत्वोपपत्ते । एवञ्चेद सूत्र नियमार्थमिति सि- द्धम् । * हैहेऽन्तेइत्येवमिति * । वाक्यस्य टेरित्यधिकारादन्त्यग्रहणमनर्थकमिति न शङ्क्यम् । अन्त्यग्रहणाभावेऽधिकारबलादनन्त्ययोस्तयो प्लुतस्याप्राप्तौ विध्यर्थमेत त्सूत्रं स्यादित्याशयात् । हैहयोरिति तु यत्र हैहयो प्रयोगस्तत्र हैहेसम्बन्धिनो ऽनन्त्यस्यापि प्लुतो भवतीति प्लुतयोरेकत्र समावेशस्स्यादित्येवमर्थम् । प्रयो- गग्रहणसत्त्वे [illegible] हैहेप्रयोगे इत्यशस्यानुवादसमर्पकत्व हैहयोरित्यस्य च विधेयबो- धकत्वमिति निश्चयो भवतीतीष्टसिद्धिः । स्वसिद्धान्तमाह । * के चिदिति * । * एवमिति * । आद्यमित्यर्थः । प्रयोगे हैहयोरिति निर्देशोऽपि प्रत्यासत्त्या हैहेप्रयोग इति लभ्यते एवं च नैवमपि हैहे हैहयोरित्येवास्तु । प्रयुज्यमाने सतीत्यध्याहारेण वाक्यार्थपर्यवसानम्भविष्यतीत्यत आह । * प्रयोग इतीति * । प्रयोगग्रहणा भावे दूराद्धूत इत्यस्यानुवृत्त्या हूयमानार्थस्य यत्र तत्रैवेति कल्पनया हे ३ रामे

भावादनर्थकयोरपि तयोः प्लुतार्थं तदाह । राम हे ३ इति । अन्यथा प्रयुक्तयोः प्लुतासम्भवात्तद्वैयर्थ्यं स्पष्टमेव । हैहयोरिति तु तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थं । नियमे तु न मानं, तेनात्र प्लुतसमावेश, एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः । यत्तु अय हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति । तन्न । शिव हे इत्यादौ तस्याप्राप्तेस्तन्न्यायाविषयाभावात् ।

गुरोर ॥ दूराद्धूतइत्यनुवर्तते । तेन दूराद् बोधनएव प्रवृत्तिस्तदाह । दूराद्धूतइति । दूरत्वञ्चात्राविवक्षित तेन प्रत्याभिवादे भोराजन्येत्यस्य विषये ऽप्यस्य प्रवृत्तिः । तद्विषये ऽप्युपलक्ष्य बोधनसत्वात् । सर्वप्लुतप्रकर-

---

स्याद्यावेव स्यादिति भाव । * अन्यथा * । प्रयोगग्रहणस्यानर्थकहैहयो प्लुतार्थस्याभावे तद्वैयर्थ्यं स्पष्टमेवेति । सति तु प्रयोगशब्दे तत्सामर्थ्यादानर्थक्ये ऽपि यत्र प्रयोगस्तत्र तयो प्लुतसिद्धि । * अप्राप्ते विध्यर्थमिति * । राम हे ३ इत्यादौ सामर्थ्यादन्त्यस्य हूयमानार्थभिन्नस्य स्यादिति भाव । अत्र के चिदीदितिदर्शनेनारुचिं कल्पयन्ति । यद्यपि सर्वम्भाष्यकैयटारूढम् तथापि हैहयो प्रयोगे इत्यनेन प्रत्यासत्तिन्यायेन षष्ठ्युच्चारणसामर्थ्येन च तयोरेव प्लुतसिद्ध्या तत्प्रयोगेति । अत्रेदञ्चिन्तनायम् । हैहेप्रयोगे हेहेग्रहणङ्क्रियते । हैहयो प्लुतिर्यथा स्यात् । देवदत्त हे ३ । देवदत्त हे ३। अक्रियमाणे हि हैहेग्रहणे तयो प्रयोगेऽन्त्यस्य स्यादिति भाष्ये उक्तम् । एतेन हैयोरित्यस्य प्रयोजनमुक्तम् भाष्ये हैहेप्रयोगे इत्यत्र प्रयोगपदोपादानात् । अत्र कैयट अन्यथारम्भसामर्थ्यादनन्त्यस्यापि हयमानवाचिन एव प्लुत स्यात् । देवदत्त हे इत्यादौ हूयमानवाचिन देवदत्तशब्दस्य हे देवदत्तेत्यादौ पूर्वेणैव सिद्धिरिति भावः । तदनन्तरम्भाष्ये अथ प्रयोगग्रहणङ्किमर्थम् । प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् । प्रयोगग्रहणेऽनर्थकयोरपि यथा स्यात् । देवदत्त हे ३ । देवदत्त हे ३ । पुनर्हैग्रहणङ्किमर्थम् । अयमाद्यविषये प्रश्न । अनन्त्ययोरपि यथा स्यात् । हे३देवदत्त इति । भाष्येऽनर्थकयोरिति यत्तस्यानर्थकत्वमुक्तरीत्या कैयटेनोपपादितम् । अस्मिन्प्रघट्टके सामर्थ्यादितिकथनेन प्रत्यासत्तिन्यायापेक्षया सामर्थ्यस्य बलवत्त्व सूचितम् । षष्ठ्युच्चारणसामर्थ्यादित्यपि न युक्तम् । हैहयोरित्यस्याभावे स्थानषष्ठ्यनिर्देशात् । प्रथमोपात्तस्य हैहयोरित्यस्य तु प्रयोगापेक्षया कर्मषष्ठीत्वात्तस्याश्च प्रयोगविशेषणभूतार्थप्रतिपादकत्वेन चरितार्थत्वादिति । * शिव हे इत्यादावि‍ति * । अत्र हेशब्दस्य पूर्वोक्तरीत्या हूयमानार्थत्वाभाव स्पष्ट एव ।

नतु सर्वप्लुतप्रकरणस्याय शेषोऽस्त्वित्यत आह । * सर्वप्लुतेति । * एत

णस्य तु न दोषः । तथा हि सति वाक्यस्य टेरित्यनेन सहैवास्याप्यभिक्रान्तत्वमेव कुर्यात् । एतत्त्रयविषयमेवेदमिति प्रकृतसूत्रे ऽनुदात्तं प्रश्नान्तेति सूत्रे च वृत्तौ स्पष्टम् । अपिशब्दो यथाप्राप्तसमुच्चयार्थः । यदि तु गुरोः सन्निधानादन्त्यो गुरुरेव समुच्चीयते तदान्त्यलघुमति अनन्त्यगुरावेतस्यान्त्यलघौ दूराद्धूते चेत्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः । एकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात् । तेन यत्रान्त्यो ऽपि गुरुरनन्त्यगुरुरनन्त्यगुरुद्वयं वा तत्र पर्यायः स्याद्व्याख्यानादेतदर्थलाभः । अनन्त्यस्यापीति । अपिनान्त्यस्य गुरोरगुरोश्चेत्यर्थः । पर्यायार्थमिति । अन्यथा समावेशः स्यादिति भावः । अनुदात्तं पदमिति तु विभाषा न प्रवर्त्तत इति तत्रैव वक्ष्यते । प्राचामिति तु पक्षे सर्वेषां प्लुताभावार्थम् । विकल्पनादिति । सा च व्यवस्थितविभाषा । तेनाग्नीदग्नीन्विहरेत्यादावप्रीतिप्रेषणादिति न । भाष्ये तु विभाषा पृष्टेति सूत्रे विभाषेति योगविभागो दर्शितः । सा व्यवस्थितविभाषेति कैयटः । अत एव ओश्रावयेत्यस्येति वक्तव्यमिति वचनस्याग्नीदग्नीन् इत्यादौ प्लुतनिषेधाय कृतस्य विभाषेति योगविभागेन प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । एवञ्च भाष्यमते सा व्यवस्थितविभाषेत्याहुः ।

अप्लुतवदित्युक्त्या प्लुत इत्यध्याहारस्तदाह । प्लुतो ऽप्लुतवदिति । प्लुत एव निषिध्यतेति । तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्तत इत्य-

---

प्रयेति * । प्रत्यभिवादेऽशूद्रे, दूराद्धूते च, हैहेप्रयोग इत्येतत्त्रितयेत्यर्थः । * वृत्तौ स्पष्टमिति * । भाष्ये चोदाहरणम् । * तद्विहितानामिति * । प्रकृतसूत्रोपात्तत्वात् । * व्याख्यानादिति * । अपिशब्दस्यानन्त्यसमभिव्याहारेणान्त्यसमुच्चयकतया टेरित्यस्य प्रकृतस्य समुच्चयपक्षे न लाघवमित्येतन्मूलकत्वादित्यर्थः । ननु वाक्यस्य टेः प्लुत उदात्त इत्यधिकारात्तद्विधेयप्लुतापेक्षया दोषस्यानुदात्तत्वापत्तिरत आह । * अनुदात्तम्पदमितीति * । तत्सूत्रस्थैकग्रहणेन वैपादिकोदात्तस्वरितयोर्ग्रहणादिति भावः । * व्यवस्थितविभाषेति * । अत्र मूलं मृग्यम् । भाष्ये तु प्राचामिति योगविभागो नोक्तः किन्तु विभाषेति कृत । तेन प्राचामिति योगविभागेन सर्वस्य प्लुतस्य वैकल्पिकत्वलाभेऽपि प्राचामुदीचाञ्च स्वस्वमतप्रच्युतिरूपो दोषो न सम्भाव्यत इत्याशयेनाह । * भाष्येत्विति * । * कैयट इति * । न चास्या व्यवस्थितविभाषात्वद्योतकता भाष्यकृता नोक्तमिति वाच्यम् । प्रत्याख्यानेन भाष्यकृता तथा सूचनादित्याह । * अत एवेति * । व्यवस्थितविभाषात्वादेवेत्यर्थः ।

* प्लुत इत्यध्याहार इति * । अन्यथोद्देश्याकाङ्क्षाशान्त्यभावेन वाक्यार्थपर्यवसानं न स्यात् । * सन्निवर्त्तत इति * । न च पर्युदासपक्षतया व्याख्याने प्लुतस

र्थः । प्रसज्यप्रतिषेधेन व्याख्यानं तु न युक्तम्, गौरवात् । किं च तथा सति प्लुतप्रकरणे एव नोपस्थितइति वदेत् । न च पर्युदासे ऽग्नी इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम् । शब्दत इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात् । अप्लुतवदित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः । प्लुते ऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात् । भाष्ये प्लुतकार्यप्रतिषेधार्थमित्युक्तिस्तु फलितार्थाभिप्रायेणैवेति बोध्यम् । प्रगृह्याश्रये इति । प्लुते कृते ऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत् तद्वत प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु प्रकृतिवदनुकरणमित्यतिदेशाच्चरममिति भावः ।

किं मया कर्त्तव्यमिति पृष्ट आह । चिनुही ३ इदमिति । विभाषा पृष्टप्रतिवचने हेरिति प्लुतः । इदशब्दो ऽत्र वाक्यान्तरस्थ इति हेरिकारस्य वाक्यादित्वम् । उभयत्र विभाषेयमिति उपस्थिते प्राप्ते ऽनुपस्थिते चाप्राप्ते इत्यर्थः । विभाष्यते विकल्प्यतइति विभाषा गुरोश्च हल इत्यप्रत्यये टाप् । न वेति विभाषायामिति भाष्यप्रयोगात् । भाष्ये तु किमर्थमिदमुच्यते ऽनुपस्थितार्थं तत्र ईग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येवेदमपि सिद्धं यथा इयं वक्ष्यामित्युक्तं । तद्बलेनोपस्थिते पूर्वेनिमित्तप्रतिषेधेन ईग्रहणे

---

ह्रस्वो दीर्घः स्यात् । अच्छलेन साहश्याश्रयणे प्रथमोपस्थितत्वाद् ह्रस्वो वा स्यादिति वाच्यम् । प्लुतश्रवणाभावे तात्पर्यात् । आयमानो दीर्घो वा उभयथा सन्धिकार्येण तस्य निवृत्तिः स्यादिति फलतो न विशेष इत्याशयः । कस्य चिद्याख्यानं दूषयति । * प्रसज्यप्रतिषेधेति । * अग्नी इतीति * । अत्र गुरोरनृत इति प्लुतः । अत्र तत्करणाभावेऽप्लुतादेशे सवर्णदीर्घापत्तेः । तत्करणसत्त्वेऽपि यत्नेनानिराकृतं व्याख्यानं तद्दूषयति । * अप्लुतवदित्यस्येति * । ननु प्लुतस्य प्रगृह्यत्वं दुर्लभम् ईदूदेदिति सूत्रे दीर्घाणामेव समाश्रयणात्सेपाश्रयणमात्रत्वात् । न हि पूर्वप्रवृत्तम्प्रगृह्यत्वं स्थानिवद्भावलभ्यमविधित्वादत आह । * प्लुते कृतेऽपीति * । न ह्यत्र लक्ष्ये लक्षणं सकृदेव प्रवृत्तम्भवतीति पुनः प्रगृह्यमस्यादिति शङ्क्यम् । सञ्ज्ञायाः कार्यार्थितया कार्यस्य प्रवृत्ते प्लुतोत्तरम्प्राप्त्या पुनः प्रवृत्तिस्वीकारात् । * तस्यासिद्धत्वादिति * । प्लुतस्यासिद्धत्वादित्यर्थः ।

विभाषाशब्दस्याव्ययत्ववादिमतनिरासायाह । * विभाष्यत इति * । नवेति विभाषायामर्थस्य सञ्ज्ञाकरणमिति भाष्यप्रयोगोऽप्यानुकूल्यः । ईचाक्रवर्मणस्येति सूत्रस्योभयत्र विभाषात्ववादिमतं दूषयति । * भाष्ये त्विति * । अप्राप्तविभाषात्वादिति । न च सूत्रबाधकत्वादिति वक्तव्ये इदमनुपपन्नमिति वाच्यम् । भाषाद्वयविधाने पूर्वापरयोरुभयोरपि समत्वेनाप्राप्ताबाधे सूत्रबाधस्यैव पर्यवसन्नत्वादिति भावः । एवञ्चानुपस्थितार्थमेवेदं सूत्रमुभयत्र विभाषेयमिति निर्मूलस्य

तार्थवत्त्वात् । एकाजिति कर्मधारयो, वार्त्तिपदार्थप्रधानत्वेनान्तरङ्गत्वाद्व्याहरति मृग इत्यादिनिर्देशाच्च । तेन मेदमित्यादौ न दोषः । तदाहैको ऽजिति । आङ्वर्ज इति पर्युदासस्यौचित्यात् । अत एवैकाज्नाङिति नास्त्रि । वासुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे आ आत् अमित्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन पूर्वान्तवत्त्वेन निपातत्वे ऽपि प्रगृह्यत्वन्न । पूर्वान्तवत्त्वेनाङ्त्वातिदेशो ऽतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्वभावासिद्धत्वात् । ओदिति सूत्रे आ उ, ओ, इत्यत्रानाङिति प्रतिषिद्धार्थो ऽयमारम्भ इति भाष्ये तु पर्युदासे ऽपि गम्यस्य प्रतिषेधस्य सत्त्वान्नानुपपन्नम् । अनाङिति पर्युदासादेव निपातैकाज्रूपत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम् । स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदाये ऽच्त्वाभावादजित्येवाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जाति-

---

ग्रहणे ऽर्धवद्ग्रहणविचारासङ्गतिरित्यपास्तम् । * अन्तरङ्गत्वादिति * । यद्यपि कर्मधारयबहुव्रीह्योरकार्थीभावः समानः । तथाप्यजहत्स्वार्था वृत्तिरिति पक्षे ऽवयववृत्तिप्रहसहकारेणैव समुदायशक्त्या बोधात्कर्मधारयजन्यशाब्दबोधसामग्र्यपेक्षया बहुव्रीहिजन्यशाब्दसामग्र्या अन्यपदार्थोपस्थितिघटिततया गुरुत्वेन सामग्र्योर्लाघवगौरवमादाय कार्ययोरन्तरङ्गत्वबहिरङ्गत्वम्बोध्यम् । नन्वेवमेकशब्देन क्वापि बहुव्रीहिर्न स्याद् । एवञ्चैकाचो द्वे प्रथमस्येत्यादावप्यनुपपत्तिरत आह । * व्याहरतीति * । एतञ्च व्याहरतीतिनिर्देशात्कर्मधारयस्य हलादिः शेष इति सूत्रारम्भाद्बहुव्रीहेः प्रामाणिकत्वेऽपि प्रकृतेऽनेन निर्देशेन कर्मधारय एवेति भावः । *पर्युदासस्यौचित्यात्* । असमर्थसमासकल्पनादेकवाक्यतया शाब्दबोधजननाच्च । ओदिति सूत्रे प्रतिषिद्धार्थोयमारम्भ इति भाष्यन्तु गम्यमानप्रतिषेधमादायोपपादनीयम् । न्यायसिद्धे लिङ्गमप्याह । * अत एवेति * । पर्युदासस्याभिमतत्वादेवेत्यर्थः । एतत्पक्षे शङ्कते । * वासुदेवेत्यादि * । सति प्रगृह्यत्वे ऽव्ययीभावसञ्ज्ञकस्याशब्दस्याम्शब्दावयवाकारे प्रकृतिभावापत्तिः । न च पर्युदासपक्षे आङि न सूत्रव्यापार इति पूर्वान्तवत्त्वेन निपातत्वेऽपि आङ्गातिदेशो न भविष्यतीति वाच्यम् । आङ्भिन्नत्वरूपोद्देश्यतावच्छेदकधर्मज्ञानप्रतिबन्धार्थमेवाङ्त्वातिदेशः स्यात् । अत एव ओदिति सूत्रस्य ओपु यातमित्यत्र प्रयोजनङ्कथितम् । अन्यथा तत्राप्याङ्त्वातिदेशाभावेनानाङितिनिषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैव । पर्युदासलभ्यस्याशास्त्रीयेपि शास्त्रीयपरकार्यस्योपपादितत्वाच्च । न च आ उ ओ इत्यत्रैकादेशे कृते आङ्भिन्नत्वस्योकारनिष्ठस्यातिदेशो न निपात एकाजित्येव सिद्धे प्रतिषिद्धार्थोयमारम्भ इति भाष्यमेवमप्यनुपपन्नमिति वाच्यम् । आङ्भिन्नत्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वात् । शास्त्रीयत्व

ग्रहणार्थं तेन धिप्सतीत्यादिसिद्धिरिति भाष्ये स्पष्टम् । जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थः । तेन तितउशब्दैकदेशस्याऽउइत्यस्यानुकरणे अउ अकरोदित्यत्रानुकरणं चानितीति निपातत्वे ऽपि प्रगृह्यत्वाभाव एकग्रहणफलं बोद्ध्यम् । ननु ङकारस्य क्वाप्यश्रवणेन ङिद्ङिद्विवेको दुर्ज्ञेयइत्यत आह । वाक्यस्मरणयोरिति । वाक्यशब्देन स्वार्थगतमनभिमतत्वम् । स्मरण विस्मृतस्य स्मृतिविषयता । एव किल तदिति स्मृतार्थनिर्देशः ।

निपात इत्यनुवृत्तमोदित्यनेन विशेष्यतइत्याह । ओदन्त इति । निपातसञ्ज्ञा चादिपदोपस्थितचादीनां सति सम्भवे ऽर्थवतामेवेति सार्थकनिपातानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति गौणमुख्यन्यायेन भक्तसूत्रस्थनिपातपदेन गौणार्थाना न ग्रहणमिति गोभवदित्यादौ च्व्यन्ते नास्य प्रवृत्तिः । एवञ्च कार्यकालपक्षे ऽपि च्व्यन्ता निपाता इत्यस्यानुपस्थितिरेतत्परिभाषावशात् । अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वाद् । अत एवानर्थके ऽपि निपाते सा सञ्ज्ञा सिद्ध्यति ।

---

श्च न शास्त्राश्रितत्वम् । किन्तु शास्त्रबोध्यत्वमेवेति । * स्पष्टार्थमिति * । निपातस्यैकाच सर्वस्य सङ्ग्रहो यथा स्यात् । आङ्सदृशस्यैकाचोऽर्थवतो निपातस्यैव पर्युदासत्वाद्ग्रहणम्मा भूत् । अनेन रूपेण सादृश्यग्रहणे हि पादपूरणार्थकस्य कमोमिदु इत्यस्य व्यावृत्ति स्यात् । * समुदायेऽच्त्वाभावादिति * । अच्त्वस्य प्रत्येकपर्याप्तत्वात् । * अनभिमतत्वमिति * । लक्ष्यते इति शेष ।

ननु गोभवदित्यादौ च्व्यन्ते ओदिति सूत्रेण प्रगृह्यत्वम्प्राप्नोतीत्याशङ्क्य गौणमुख्यन्यायेन समाहितं भाष्ये, तच्च तदा सङ्गच्छते यदि गौणमुख्यन्यायमूलभूताया अर्थवद्ग्रहणपरिभाषाया विशिष्टरूपोपादानविषयायाः प्रवृत्ति स्याद् । अतस्तस्याः प्रवृत्तिमुपपादयति । * निपातसञ्ज्ञेत्यादि * । * अर्थवतामेवेति * । अर्थविशिष्टानाञ्चादीनामुद्देश्यतयोपस्थितत्वात् । * एतत्परिभाषेति * । गौणमुख्यपरिभाषेत्यर्थ । * अनित्यत्वादिति * । इण पीड्वामिति सूत्रेऽङ्गादित्युपादानेनार्थवत्परिभाषाया अनित्यत्वस्य ज्ञापितत्वात्तन्मूलिकाया गौणमुख्यपरिभाषाया अप्यनित्यत्वमिति । अव्ययसञ्ज्ञादावित्यादिना प्रातिपदिकसञ्ज्ञापरिग्रह ।

ननु सम्बुद्धौ शाकल्यस्येत्यस्मिन् सूत्रे सम्बुद्धाविति सप्तमीश्रवणेन तस्मिन्निति परिभाषाबलात्सम्बुद्धिपरो य ओकार इत्येव व्याख्यान युक्तमत आह । * सम्बुद्धिपर इति * । न च लक्षणप्रतिपदोक्तपरिभाषानुग्रहाय तस्मिन्निति परिभाषानुग्रहाय च तथैव व्याख्यान युक्तमिति वाच्यम् । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात् । निर्दिष्टपरिभाषापि लक्ष्यानुसारात् क्वचित्त्यज्यते । न च पुनातीति प्वीः । पुनातीति पौः । अत्र हि गोतो णिदिति सूत्रे गोत इति यथा

अपो इतीत्यादौ प्रगृह्यत्वायाह । सम्बुद्धिनिमित्तक इति । सम्बुद्धिपर इति व्याख्याने [redacted] सोर्लुकालुप्तत्वेन तत्परत्वाभावान्न स्यात् । न लुमतेति निषेधानित्यत्वं त्वगतिकगतिः । इताविति किम् । पटो ऽत्र । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत् । संहितायां विवक्षायामप्यवादिराहितप्रयोगार्थमिदं, तद्विवक्षा च वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा । तदधिकार्द्धमात्राकालव्यवायेनोच्चारणेच्छा च तदविवक्षेति बोध्यम् ।

---

श्रुतमिति मते सम्बुद्धौ लो पो इति रूपम् । गकारस्याविवक्षितत्वे तु लौ पौरिति तदा हे गौरित्यत्रेव स्थानिवद्भावात्प्राप्ति लो पो इति विजन्तस्य रूप सम्बुद्धिपर सम्भवति । सम्बुद्धिनिमित्तक इति व्याख्याने त्वेतदवयवोकारस्य सम्बुद्धिनिमित्तकत्वाभावाल्लो इति पो इतीत्यत्र प्रगृह्यत्वप्रयुक्त प्रकृतिभावो न स्यादिति वाच्यम् । अचः परस्मिन्निति सूत्रस्थभाष्यप्रामाण्येन ने, लो, पो, इत्यादीनां विजन्तानामनभिधानात् । तत्र हि पूर्वविधाविति किमर्थम् । हे गौ । वाभ्रवीय । नैधेयः । हे गौरित्यौकार परनिमित्तकस्तस्य स्थानिवद्भावादेङ्ह्रस्वादिति लोप प्राप्नोति । पूर्वविधाविति वचनान्न भवति । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न सम्बुद्धिलोपे स्थानिवद्भावो भवतीति । यदयमेङ्ह्रस्वात्सम्बुद्धेरित्येङ्ग्रहणङ्करोति । नैतदस्तिज्ञापकम् । गोर्थमेतत् स्यात् । यत्तर्हि प्रत्याहारग्रहणङ्करोति । इतरथा हि ओह्रस्वादित्येव ब्रूयादित्युक्तम् । अत्र कैयट । नयस्यादीना विजन्ताना गुणे ने, लो, पो, इति कथ सम्बुद्धिलोप इति चेन्नैतभ्यो विज् दृश्यते इत्याह । * ओह्रस्वादित्येवेति * । सेस्मृतोशब्दादावप्येवम् । * नैतेभ्य इति * । पवन्दीर्घकारान्तप्रकृतिकसेइत्यादीनामेकाक्षरकोशबोधितस्य प इत्यस्य च सम्बुद्धावनभिधानाभावो बोध्य । अत्रेदमवधेयम् । ओग्रहणस्य भाष्यकृतत्वेन दीर्घौकारान्तप्रकृतिक ओकारान्तानामभिधाने मानाभाव । किञ्च घोशब्दस्य सर्वसम्मतत्वेन गोर्थमेतदिति भाष्यमोकारान्तोपलक्षणतया व्याख्येयम् । किञ्च सम्बुद्धावनभिधानेन भाष्यस्योपपत्तौ सर्वथा विजभावकल्पना नोचिता । एव रति सम्बुद्धौ शाकल्यस्येति सूत्रस्य सम्बुद्धिनिमित्तक ओकार इति व्याख्यानमपि न विरुध्यत इति । केचित्तु सम्बुद्धिग्रहणमत्र सूत्रेऽनर्थकम । न चाहो इतीत्यादौ परत्वाद्विकल्पाभावार्थमिति वाच्यम् । ओदिति पूर्वसूत्रविहितनित्यसंज्ञाया अपरनिमित्तकत्वेनान्तरङ्गत्वात् । इतिशब्दसापेक्षत्वेन परभूतविकल्पस्यैव बहिरङ्गत्वात् । न च पूर्वसूत्रस्थमोत्पदान्निपातपदसम्बन्धमभूदिति प्रकृतसूत्रे निपातपदासम्बन्धबोधक सम्बुद्धिपदमिति वाच्यम । यद्येतावन्मात्रप्रयोजनकं सम्बुद्धिग्रहणन्तदा प्रकृतसूत्रेप्योग्रहणङ्कर्तव्यन्तेन निपातपदाननुवृत्तिर्भविष्यति । अन्यथौत्पदानुवृत्त्यैव सिद्धे प्रकृतसूत्रे ओदित्येतत्पद व्यर्थमेव स्यादितिकल्पनसम्भवादित्याहु । अत्रेदन्तत्त्वम् । स्वरादिषु पठिते मिथो इत्यव्यये प्रगृह्यत्वाभावो यथा स्यादित्येवमर्थं सम्बुद्धिग्रहणमिति ।

उञः ॥ अनोऽञ्निपात एव। उञ ऊँ इत्येकसूत्रत्वे तु शाकल्यग्रहणाननुवृत्तौ ऊँ इतीत्येकमेव स्यात्। प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात्। उ इति वितीति च न स्यात्। आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोध्यम्। प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततयात्र विधेयविशेषणत्वे मानाभावात्। शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँ-आदेशस्य विकल्पे ऊँ इति वितीति सिद्ध्यति, न तु उ इतीति। प्रगृह्यत्वविकल्पेन पक्षे तदभावे ऽपि अस्य तात्पर्यात्। एतदभावे निपात एकाजित्यस्याप्रवृत्तेः। तदुक्तं भाष्ये, योगविभागं प्रदर्श्य किमर्थो योगविभागः शाकल्यमते ऊँ विभाषा यथा स्यात्। ऊँ इति उ इति। अन्येषामाचार्याणां मतेन वितीति। अनेन हि योगविभागस्य उ इति, इति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते। अतो योगविभागेन व्याचष्टे। उञ इति। उञो वाचकं प्रगृह्यपदमित्यर्थः। शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते तदाह। उञ इतौ वेत्यादि। विकल्पाननुवृत्तौ हि निपात एकेत्येव सिद्धे इदं व्यर्थमेव स्यात्। एवञ्च भाष्यविभाषेयम्।

---

उञ ऊँमित्येकमेव सूत्रन्तद्योगाम् *उविभागेन व्याख्यातम् इति। *निपात एवेति *। प्रतिपदोक्तत्वात्। योगविभागफलन्दर्शयति। * उञ ऊँमित्येकसूत्र इति*। * सह विधानादिति *। यद्यपि विधेयभेदाद्वाक्यभेदो न्याय्य एव तथापि द्वयोर्वाक्ययोः सहप्रवृत्ति स्यादित्याशय। एव सत्यादेशे प्रगृह्यत्वाय कृपमत आह। * आदेशे प्रगृह्यत्वकार्यन्त्विति*। * नतु उ ती इतीति *। विधेयतया प्रक्रान्तयोर्द्वयोरप्येकस्मिन् प्रयोगे विकल्पः स्यादिति। * तदभावेऽपि तात्पर्यादिति *। शाकल्यातिरिक्तमते प्रगृह्यत्वमुभो नेत्यर्थात् योगविभागे सति उञ इति सूत्रे षष्ठ्यन्तार्थान्वयायाह। * उञो वाचकमिति *। उञ इति सूत्रे निष्फलं दर्शयति। * विकल्पाननुवृत्ताविति *। न च योगविभागाभावेऽपि निरनुबन्धकोकारमादाय उ इति रूपं सिध्यत्येवेति वाच्यम्। किमपरत्व यत्र तत्र किम्वितिं किमु इतीति रूपद्वयञ्च स्यादित्यत्र तात्पर्यात्।

* वैयर्थ्यापत्तिश्चेति *। अनुनासिकाननुनासिकयोर्द्वयोरप्यादेशे रूपं विशेषाभावादिति भावः। * विकल्पमात्रेति *। शाकल्यशब्दमात्रस्येत्यर्थः। * प्रगृह्यत्वमादेशश्चेति *। उञ इति पूर्वसूत्रेण प्रगृह्यत्वम् इत्यनेन चादेशस्येत्यर्थः। ननु प्रगृह्यपदस्योद्देश्यसम्बन्धस्य क्लृप्ततयेति पूर्वोपपादितरीत्या विशिष्टस्य विधिरिति न युक्तमिति चेन् मूलानुसारेण तथाभिधानादित्याशयेनाह। * वस्तुत इति *। न चैवम्प्रगृह्यसञ्ज्ञकश्चेति भाष्यविरोध इत्यत आह। * भाष्ये प्रगृह्यसंज्ञकश्चेति। * न्यायविद् इति *। असति साधके क्लृप्तसम्बन्धि

ॐ इत्यत्र शाकल्यप्रगृह्यपदयोरसम्बन्धे उञ इत्यर्थाधिकारादप्रगृह्यस्यै-वादेशे तस्यैकोयणिति यणि ॐ इतीत्यस्यासिद्धिः । दीर्घोच्चारणवैयर्थ्यापत्तिश्च । विकल्पमात्रसम्बन्धे ऽपि ॐ इतीत्यस्यासिद्धिरिति विधानसामर्थ्यात्प्रगृह्यपदसम्बन्धः । प्रगृह्यपदमात्रसम्बन्धे ऽर्थाधिकारादप्रगृह्यस्य नित्ये ऊ आदेशे ऊ इतीति प्रगृह्यस्य उइतीति सिद्धे ऽपि वितीति न सिद्धयेत् तदाह । उञ इतौ दीर्घो ऽनुनासिक इत्यादि । अत्र विशिष्टस्य विधिरिति न वाक्यभेदः । न च प्रगृह्यत्वमादेशश्चे शाकल्यमते इति तयोरेकप्रयोग एव प्रवृत्तिः स्यादिति वाच्यम् । योगविभागसामर्थ्येन शाकल्यमते एव भावाभावकल्पनात् । वस्तुत उञनुवादेन सञ्ज्ञादेशयोः सहविधानमेव न्याय्यम् आदेशे । स्थानिवद्भावात्प्रगृह्यकार्यम् । भाष्ये प्रगृह्यसञ्ज्ञकश्चेत्यपि स्थानिवद्भावलभ्यार्थस्वरूपकथनमिति न्यायविदो विचारयन्तु ।

मय उञो ॥ व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वान्न प्लुतप्रगृह्या इत्यनेन बाधः । नानुस्वार इति । किम्वितीत्यादौ प्रगृह्यसञ्ज्ञाभावे ऽस्यासिद्धत्वादिकोयणिति यणि अनुस्वारो भवत्येव ।

---

त्यागे मानाभाव इति न्यायेनेत्यर्थः । न च प्रगृह्यपदस्य प्रथमान्तत्वेन प्रथमान्तेन सामानाधिकरण्यमेवात्र साधकमिति वाच्यम् । प्रथमान्तसामानाधिकरण्यस्य पूर्वसूत्र एव त्यक्तत्वात् ।

ननु मय उञ इति सूत्रे मय्पदेन मय्धातोरेव ग्रहणं कुतो नेत्यत आह । * व्याख्यानादिति * । बहुलक्ष्यसंस्कारानुरोधमूलकादित्यर्थः । ननु प्रगृह्यस्यो प्लुतप्रगृह्या इत्यनेन कार्यान्तरप्रवृत्तिप्रतिबन्धकेन मय उञ इत्यस्यापि प्रवृत्तिप्रतिबन्धः कुतो नेत्यत आह । * अस्य त्रैपादिकत्वेनेति * । * अनुस्वारो भवत्येवेति * । एतेन त्रिपाद्यां षत्वविधानस्यानुस्वाराभावः फलमिति सूचितम् । तदुक्तम्मनोरमायाम् । प्रकृतिभावमात्रबाधनार्थत्वे हि इको यणित्यनन्तरं मय उञ इत्येवावक्ष्यत् यणश्चान्वर्थयिष्यादिति । न च त्रिपाद्याम्मय परस्य उञो षत्वविधाने ऽपि मय परत्वमुपजीव्य कृत षत्व सन्निपातपरिभाषयाऽनुस्वारनिमित्तं भविष्यतीति त्रिपाद्यां षत्वविधानस्यानुस्वाराभावरूपप्रयोजनकथनासङ्गतिरिति वाच्यम् । त्रिपाद्यान्तथा पाठेन सन्निपातपरिभाषाया * अनित्यत्वस्यापि ज्ञापनात् । न च त्रिपाद्यान्तथा पाठे षत्वस्यासिद्धत्वात्प्रत्यङ् उ उदकमिति स्थिते ङमुटि कृते ङमुड्विशिष्टस्य उञ्ग्रहणेन ग्रहणेऽपि निर्दिश्यमान

ननु यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन गौरीशब्दस्य सप्तम्यर्थवृत्तित्वे ऽपीकारस्य तत्त्वाभावो ऽत आह । ईदूदन्तमिति । शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिरिति भावः । मामकी तनू इति । मध्येऽप्वितिशब्दप्रयोगस्य पदकारैर्नियमितत्वात्पदपाठे मध्यसत्वफलमत्र बोद्ध्यम् । ईदूतौ किम् । अत्रा भवाति । सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् । धीती, मती । इस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णदीर्घः । अर्थग्रहणं किमिति । न च तदभावे ईदूदेदितिवदीदूदन्तौ या सप्तमीत्यर्थापत्तिः । तथा च यथीत्यादावेव स्यात् । एकादेशस्य परादिवद्भावेन सप्तमीत्वान्न तु गौरीत्यादाविति तन्निवृत्त्यर्थं तदावश्यकमिति वाच्यम् । ईदूतौ सप्तमी मध्यम्, अदसः, एचद्विवचनमित्येव सिद्धे गुरुभूतन्यासकरणेन तत्करणापेक्षया वैजात्यबोधनादूकारांशे ऽसम्भवाच्च सञ्ज्ञाविधाविति तदन्तग्रहणनिषेधाप्रवृत्त्या ईदूदन्तं सप्तम्यन्तमित्यर्थेनेष्टसिद्धेरिति मतम् । यथीत्यादेरनभिधानमेवेति परे । इत्यादिति । अर्थग्रहणसामर्थ्यात्सप्तम्यर्थ-

---

स्य डमुटा व्यवधानात्प्रत्ययस्याप्राप्तिः । इको यणचीति सूत्रात् तत्पाठे तु डमुटो ऽसिद्धत्वाद्यत्वे कृते ऽजादित्वाभावात् डमुटोऽप्राप्तिरिति फलभेदस्य स्पष्टतया कथं सन्निपातपरिभाषाया अनित्यत्वज्ञापनमिति वाच्यम् । त्रिपाद्यामपि बहिरङ्गपरिभाषाप्रवृत्तिरित्यादिप्राचीननये ऽन्तरङ्गे डमुटि कर्तव्ये बहिरङ्गस्य यणादेशस्यासिद्धतया पूर्वं डमुटि फलभेदाभावात् । न चोभयोरपि पदद्वयसापेक्षत्वेन नान्तरङ्गबहिरङ्गभाव इति वाच्यम् । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य डमुटि सत्त्वात् । न चान्तरङ्गपरिभाषाप्रवृत्तिस्वीकारे किम्वुक्तमित्यत्रान्तरङ्गे ऽनुस्वारे बहिरङ्गस्य यणादेशस्यासिद्धतया ऽनुस्वाराप्राप्तिरिति कौमुदीमनोरमाग्रन्थयोर्विरोध इति वाच्यम् । मान्तपदसमुदायसापेक्षत्वेन पदसञ्ज्ञासापेक्षत्वेन चानुस्वारस्यापि बहिरङ्गत्वात् । प्राचीननये बह्वपेक्षस्य बहिरङ्गत्वं च स्पष्टमेव । वस्तुतः सन्निपातपरिभाषाया अनित्यत्वज्ञापनमयासमेोरिति निर्देशात् फलसमेव । बहिरङ्गपरिभाषापि त्रिपाद्यां प्रवर्तते इति त्वसकृदावेदितमेव ।

* तपरत्वमसन्देहायेति * । न च गुणाभेदकत्वपक्षे तथात्वेऽपि भेदकत्वपक्षे गुणान्तरयुक्तसङ्ग्रहार्थं तपरत्वमावश्यकमिति वाच्यम् । अस्य ग्रन्थस्याभेदकत्वपक्षाभिप्रायकत्वात् । * इस्वान्ताभ्यामिति * । 'अस्य परस्येति शेषः' । * तदावश्यकमिति * । अर्थग्रहणमावश्यकमित्यर्थः । वैजात्येत्यस्य प्रकृतसूत्रे इत्यादि । * असम्भवादिति * । ऊकारान्तसप्तम्या असम्भवादित्यर्थः । * अनभिधानमेवेनीति * । प्रकृतसूत्रस्थभाष्यप्रामाण्यात्तथा कल्प्यत इति भावः ।

मात्रे पर्यवसन्नमित्यर्थेनात्र तत्ससृष्टाधेयार्थे ऽपि वृत्ते न दोषः । सञ्ज्ञायामिति समासे जहत्स्वार्थाया वृत्तौ पूर्वपदस्यानर्थक्ये ऽपि सुप्सुपेति समासे अजहत्स्वार्थायां प्रसक्तदोषस्योक्तरीत्यैव वारणमिति भावः । गौरी अधिश्रित इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणत्वान्वय इति गौर्यधिकरणके लक्षणायां मानाभाव इति न तत्र दोषः । वाप्यामश्व इति । सुप्सुपेति समासः । सञ्ज्ञायामिति वा । ननु सञ्ज्ञायामिति समासे वाक्येन सञ्ज्ञानवगमान्नित्यसमासत्वेन विग्रहो ऽनुचित इति चेन्न । तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वे ऽपि नित्यसमासत्वाभावात् । विभाषाधिकारबाधे मानाभावात् । नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाभाव एव । अत्र तु पृथक्प्रयोगे ऽपि तद्बोध्यविशिष्टार्थाप्रतीतिमात्रमित्याहुः ।

---

* तत्ससृष्टार्थेति * । पूर्वपदार्थससृष्टाऽऽधेयार्थवृत्तेरित्यर्थ । एतदुपपादयति । * सञ्ज्ञायामिति समास इति * । * जहत्स्वार्थाया वृत्ताविति * । जहत्स्वं य स जहत्स्वस्तादृशोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहि । अत्र स्वशब्द आत्मीयवाची । अर्थस्य चात्मीय शब्द एव । एवञ्च वृत्ते पूर्वं यदर्थसम्बन्धी य शब्दस्तस्माद्यत्र वृत्तौ सोऽर्थो न प्रतीयते किन्तु समुदायशक्त्या अर्थान्तरस्यैव प्रतीतिस्तत्र जहत्स्वार्था वृत्तिरित्युच्यते । वस्तुतस्तु साऽत्र न युक्ता ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

इत्यभियुक्तोक्ते । यथा कुशलप्रवीणादिशब्दे । वाप्यश्व इत्यत्र तु रूढेरभावान्न जहत्स्वार्थता युक्ता । किन्तूपसर्जनपद स्वार्थमजहत्परार्थमप्यभिधत्ते । भिक्षुको द्वितीयाम्भिक्षामासाद्य न पूर्वां जहाति सञ्चयायैव प्रवर्त्तते इति भाष्यात् । एवञ्च वाप्यश्व इत्यत्र वापीपद वाप्याधिकरणकाश्वपरमिति सप्तम्यर्थमात्रे पर्यवसन्नत्वाभावान्न प्रगृह्यसञ्ज्ञा । अर्थग्रहणसामर्थ्याच्छ्रूयमाणाया सप्तम्या यथा आधेयासंसृष्टाधिकरणप्रतीतिर्भवति तथा लुप्तायामपि तस्यामाधेयासंसृष्टाधिकरणप्रतीतिर्यत्र तत्रैव प्रगृह्यत्वस्वीकारादिति । ननु सोमो गौरी अधिश्रित इत्यत्र गौरीपदस्य विरुद्धविभक्तिरहितनामार्थयोरभेदान्वयस्यौत्सर्गिकतया गौर्यधिकरणके लक्षणास्वीकारान्नाधेयासंसृष्टाधिकरणप्रतीतिरत आह । * गौरी अधिश्रित इत्यत्रेति * । एतञ्चोभयोर्विरुद्धविभक्तिराहित्येऽपि कारकस्य क्रियायामन्वयस्यावश्यकत्वेन गुणीभूतक्रियायान्तदन्वयेन वाक्यार्थस्योपपत्तौ लक्षणायाम्मानाभाव इति भाव । * नित्याधिकारबाधे मानाभावादिति * । यस्य नित्याधिकारे पाठस्तत्र विभाषाधिकारबाधो न चात्र तथेति ।

अणो ऽम ॥ अण इति किम् । कर्त्तृ हर्त्तृ । अत्राणपूर्वेणैव, व्याख्यानात् । आगच्छतममी इत्यादौ प्लुतस्यासिद्धत्वात्तत प्रागेव यथोद्देशत्वात् जाते प्रगृह्यत्वे पश्चात्प्लुते तस्यापि अनुनासिकप्रतिबन्धार्थं पुन' प्रगृह्येति नानुनासिकः । सञ्ज्ञायाः कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम् । स्थानित्वन्तु न, प्लुतस्थान्यल्विधिधर्मत्वेनाल्विधित्वात् । पूर्वसवर्णे कृते द्विवचनत्वन्तु परादिवद्भावेन । तेन ताद्रूप्यानतिदेशे ऽप्येतद्धर्मातिदेशाद्धीकारात् । अत एव रामावित्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितमन्तादिवदित्यत्र भाष्ये इति स्पष्टमाकरे ।

अच्सन्धिरिति । सिद्धमनच्त्वादिति वार्त्तिकप्रयोगेण अल्पाच्तरमिति सौत्रप्रयोगेण कथमनच्त्वमिति भाष्यप्रयोगेण च वृत्तिघटकाच्पदे पदान्तकार्यस्य तत्सन्निधानेन श्चुत्वस्य चाभावो बोध्यते इति केचित् ॥

इति स्वरसन्धिः ॥

---

* व्याख्यानादिति * । अप्रगृह्यस्येदु यण दासयत्वाभानुनासिकादेशायोग्यस्य परादूसङ्ग्रहार्थत्वे त्वजग्रहणमेव * सुदोः त्यणग्रहणसामर्थ्यमूलकादित्यर्थः । आगच्छतममी इत्यत्र प्रगृह्यस्याप्राप्तिर्माभूदिव पूर्वं प्रगृह्यसञ्ज्ञायामपि समाधत्ते । * आगच्छतेति * । * कार्यमेव बीजमिति * । न च लक्ष्ये लक्षणस्येतिन्यायविरोध इति वाच्यम् । सम सुटीति सविधानज्ञापितस्य ज्ञापकसाजात्येन तस्य सन्नातिरिक्तविधेयपरत्वस्वीकारात् । ननु प्रगृह्यसञ्ज्ञोद्देश्ये ईकारे तर्हि द्विवचनत्वमपि न स्यादत आह । * द्विवचनत्वन्त्विति * । ननु परादिवद्भावेनापि ताद्रूप्यातिदेशो नेत्यत आह । * ताद्रूप्येति * । ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मस्यानतिदेशेऽपि तद्धर्मस्य यणवृत्तिधर्मस्यातिदेशस्वीकारात् । द्विवचनत्वञ्च न वर्णमात्रवृत्तीति भाव । एतदेव द्रढयति । * अत एवेति * । सुप्त्वस्यात्र वर्णवृत्तित्वेऽपि तस्य वर्णमात्रवृत्तित्वाभावेनान्तादिवच्चेत्यनेनातिदेशो भवत्येव ।

अच्सन्धिरित्यत्राच्पदे कुत्वस्य चयोगे श्चुत्वस्याप्राप्त्यर्थमाह । *सिद्धमनच्त्वादितीति * । यत्तु सञ्ज्ञात्वभङ्गापत्तेर्नेह कुत्वश्चुत्वे इतीति । तन्न । प्रत्याहारेऽनुबन्धानाङ्ग्रहणमजग्रहणेषु नेत्यत्र वार्त्तिके जश्त्वस्य यथा ह्याचार्यशैली लक्ष्यते यत्तुल्यजातीयास्तुल्यजातीयेषूपदिशति अचोऽच्षु हलो हल्ष्विति भाष्यप्रयोगेऽप्यिति दर्शनेन सञ्ज्ञात्वभङ्गस्याकिञ्चित्करत्वात् ॥

॥ इति स्वरसन्धि. ॥

स्तोश्चु ॥ सिति शिति च लुप्तविभक्तिके भिन्ने पदे । योगइति । संयोगइति तदर्थः । तेन चितमित्यादौ न दोषः । अत्र पदस्येत्यधिकृतमपि न संबद्ध्यते । शादिति ज्ञापकात् । तेन याच्ञा सिद्धा । शात्परस्य स्तोः श्चुत्वनिषेधकात् शादिति लिङ्गादेव निमित्तकार्यिणोर्यथासंख्यं न । एवमुत्तरसूत्रेऽपि तोः षीति ज्ञापकान्न तत् । शरीति विसर्गाभावे श । साचिदिति चुत्वस्यासिद्धत्वाज्जश्त्वेन दत्वे तस्य चुत्वेन जकारे चर्त्वमिति बोद्धयम् । तयोरत्रालेखस्तु वैचित्र्यार्थः । विश्न इति । यजयाचयतविच्छप्रच्छरक्षो नङिति नङि छ्वोरिति शादेशे ङित्वाद् गुणाभावः।प्रश्ने चासन्नकालइति निर्देशात्सम्प्रसारणाभावः।

---

* स्तोश्चुना * । अत्र समाहारद्वन्द्वे नपुंसकत्वापत्तिः । इतरेतरयोगे द्विवचनापत्तिरत आह । * सिसीति * । न च समाहारद्वन्द्व एवास्तु सौत्रश्च पुंस्त्वमस्तु, न ह्यत्र गौरवम्, भिन्नविभक्तिकत्वेऽपि सौत्रत्वेनैव विभक्तिलुक् कल्पनादिति वाच्यम् । समाहारद्वन्द्वे सौत्रत्वेन पुंस्त्वस्य कल्पनायां सनपुंसकमिति शास्त्रस्य बाधकल्पनापेक्षया विभक्तिलुक्कल्पनायां सुपां सुलुगिति शास्त्रप्रवृत्तिकल्पनाया लाघवादित्याशयात् । स्तो श्चुना श्चुरितिसूत्रे ष्टुना ष्टुरितिवद्विनापि तद्योगन्तृतीया । श्चुना योग सम्बन्ध । स चान्यप्रधानरूप एव ग्राह्य । बहुषु बहुवचनमितिनिर्देशात् । ष्टुनेत्यत्रापि तथा । पूरणगुणसुहितेति निर्देशात् । तथा च संयोग एव पर्यवसानमित्याशयेनाह । * संयोग इति तदर्थ इति * ननु पदस्येत्यस्याधिकृतस्य स्तोरितिविशेषणमिति पदान्तयो सकारतवर्गयोरित्यर्थोऽत्र उचित इत्यत आह । * अत्र पदस्येत्यधिकृतमपीति * । * शादिति ज्ञापकादिति * । तादृशार्थस्याभिप्रेतत्वे विश्न प्रश्न इत्यत्र श्चुत्वाप्राप्त्या तदर्थमेव स्यादिति भाव । * शादितिलिङ्गादेवेति * । न ह्येकेनैकमेव ज्ञाप्यते किन्तु यावता विनानुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वात् । * यथासङ्ख्यमिति शेष इति * । अत्र यथासङ्ख्यशास्त्रबाधे साधकाभावात् । * वैचित्र्यार्थ इति * । यद्यप्येतल्लक्ष्यतावच्छेदकाक्रान्तन्तथापि तयोरत्राप्रवृत्तावपि साचिदित्यस्य सिद्धिरिति सूचनमेव वैचित्र्यम् । लक्ष्यतावच्छेदकाक्रान्ते लक्षणप्रवृत्तेरन्यथाख्यत्वानुसरणेन तु चुत्वस्यासिद्धत्वादित्याद्युक्तिः । * सम्प्रसारणाभाव इति * । न चानेन निर्देशेनैव श्चुत्वाभावस्यापि सिद्धौ शादिति सूत्रवैयर्थ्यमिति शङ्क्यम् । तस्य विश्न इतिप्रयोगार्थत्वात् । न ह्येकमुदाहरणमिति न्यायस्यात्र न विषयता । पूर्वोक्तज्ञापनस्यापि तत्फलत्वात् स्पष्टार्थमिति । न चान्तग्रहणाभावे पदत्वेन ग्रहणात्समर्थपरिभाषोपस्थितिः स्यादिति वाच्यम् । अत्रैव सूत्रेऽनामित्यस्योपादानेन समर्थपरिभाषानुपस्थानात् । पदत्वेनोद्देश्यत्वाभावाच्च ।

न पदान्ता । पदाट्टोरित्येवसिद्धेऽन्तग्रहणं स्पष्टार्थम् । टोः किमिति । ज-कारस्यापि पदान्ते जश्त्वविधानात्प्रश्नः । इस्वाचादानितिषत्वस्यासिद्धत्वा-ज्जश्त्वाभाव इत्युत्तरम् । षण्णवतिरिति । षडधिका नवतिरिति विग्रहः । षण्णगर्य इति पृथक् पदे ।

यरोनु । पदान्तस्य किम् । वेद्मि । बध्नाति । स्पर्शे चारितार्थ इति । उपलक्षणमिदम् । वलयोरपि प्रवृत्तः । एतच्च जातिपक्षे स्पष्टमेव । व्यक्ति पक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति बो-ध्यम् । स्पष्टं चेद मिकोयणचीयत्र कैयटे । परे तु स्थानेन्तरतमसूत्रे सप्तम्य-न्तपाठस्य भाष्यकृता दूषितत्वेनैतदुक्तेरुक्तिसम्भव एव न । तस्मादनुस्वार-स्येति सूत्रात्सवर्णग्रहणमपकृष्य यरः सवर्णोऽनुनासिको भवतीत्यर्थान्न दोषः । तदुक्तं भाष्ये । रेफेऽनुनासिकपरसवर्णस्वयोः प्रतिषेधो वक्तव्यः । न वक्त व्यः । रेफोष्मणां सवर्णा न सन्तीति । चिन्मयइति स्वार्थिकस्तत्प्रकृतवचन इति मयट् । तत्र तदिति वाक्यभेदेन क्वचित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम् । अत एव चिन्मयं ब्रह्मेति सामानाधिकरण्यम् । चिन्मात्रमिति क्वाचित्को ऽपपाठः । मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात् । मयूरव्यंसकादि-ष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । निपातनादिति । यवादि-गणे ककुद्मानिति प्रकृतिप्रत्ययसमुदायः पठ्यतइति मतेनेदम् ।

---

* पृथक्पदे इति * । दिक्सङ्ख्ये सञ्ज्ञायामितिनियमेन समासाप्राप्तेः ।

न्यूनतां परिहर्तुमाह । *उपलक्षणमिदमिति* । *वल्योरिति* । कमल् वृक्षव् एतयोरभिधाने कमर् मनोरथ । वृक्षव् आश्विनोतीत्यादावपीति शेषः । *जातिपक्षे इति* । स्थानप्रयत्नाभ्याम् तरतमे चारितार्थ्यनैव वचनं सफलमिति भावः । व्यक्ति पक्षे तर्हि दोष एवेत्यत आह । *व्यक्तिपक्षेऽपीति* । सिद्धान्तमाह । *परे त्वि ति* । *न दोष इति* । प्रथमान्तपाठे आदेशसङ्कोचेऽपि न दोष इत्यर्थः । सवर्णा न सन्तीति * । एतेन सवर्णग्रहणापकर्षः सूचितः । * उपपत्त्यभावादिति * । प्रमाणे द्वयसजितिसूत्रे प्रमाणशब्दस्य परिच्छेदकपरत्वाश्रित परिच्छेदकत्वा सम्भवात् । ननु चिन्मात्रं ब्रह्मेति प्रयोगस्य का गतिरत आह । * मयूरेति * । ननु यवादिगणे दकारनिपातनादित्यनुपपन्नम् । तत्र प्रकृतिमात्रपाठस्य तत्स्व रूपप्रतिपत्तौ तात्पर्यादित्यत आह । * यवादिगण इति * । न च धाऽवसान इति यत्नेन निर्देशे कर्त्तव्ये दकारान्तपाठो मतुपि विकाराभावार्थ इति कल्पनयै व सामञ्जस्ये समुदायपाठस्वीकारेण मूल्योजनान्निष्फलमिति वाच्यम् । प्रायो

उदः स्था ॥ तस्मादित्युत्तरस्येति परिभाषालभ्यमर्थमाह । उदः परयोरिति । अत्राघोषस्येति । समनियतत्वेनान्यतमाग्रहणे बाधकाभावेन श्वासविवारयोस्त्यागे ऽपि न न्यूनतेति बोध्यम् । थस्यासिद्धत्वादिति । त्रिपाद्यां परत्वादिति भावः । हलो यमामिति सूत्रोक्तभाष्यसंमताष्टाध्यायीपाठे तु थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव, अत एवोत्पूर्वस्कन्दे रोगे उपसङ्ख्यानम् उत्कन्दो रोगे इति भाष्य सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति परे । न चेदं सूत्र व्यर्थं झलो झलीत्यनेन थस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम् । झलादौ प्रत्यये तेन लोपे इत्यर्थस्यानेन ज्ञापनात् । उदस्थादित्यत्र तु निर्दिश्यमानपरिभाषया निर्दिश्यमानादेरेव स्थानित्वान्न लोपः । झय इति पञ्चमीत्याह । झयः परस्येति । पूर्वस्येत्यनुवर्त्तते । घोषवत इति । समनियतत्वे ऽपि विनिगमनाविरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम् ।

झय इति । पदान्तादित्यपि बोध्यम् । तेन विरप्शमित्यादौ छत्व न ।

---

गणेषु प्रातिपदिकानुकरणस्यैव सत्त्वेन चर्त्वस्याप्राप्तेरित्याद्याशयात् ।

* समनियतत्वेनेति * । त्रयाणामपरस्परमव्यभिचारितत्वेन । * अन्यतमेति * । त्रयाणा यस्य कस्य चिदित्यर्थ । एतेनात्र द्वयोरग्रहणादन्यतमप्रयोगासङ्गतिरित्यपास्तम् । * त्रिपाद्यामपरत्वादिति * । पूर्वसवर्णस्येत्यादि । नन्वेव परेश्चघति सूत्रे कैयटेनोक्त यद्यप्येतत्सूत्राभावेऽपि झलो झलीत्यनेन सलोपे उत्थानस्य सिद्धिस्तथापि झलादौ प्रत्यये तेन लोप इत्यर्थज्ञापनार्थमेतदिति यत्तर्हि तदिदानीं विरुध्यते लोपपक्षे द्वितकाराघटितस्य रूपस्यैव सिद्धि पूर्वसवर्णे तु झरो झरीति लोपाभावे द्वितकारकस्य प्राप्तेरिति चेन्न । तत्रत्यकैयटस्य भाष्यसम्मताष्टाध्यायीपाठाभिप्रायकत्वात्तदेवेतत्सूचयति ।*हलो यमामितीति*। पाठव्यत्यासे प्रमाणमाह।*अत एवेति*। अन्यथात्रापि थस्यासिद्धत्वाच्चर्त्वाभावे थकारस्य श्रवणप्रसङ्ग इति भाव ।*उत्थानस्य सिद्धेरिति*।न च लोपपक्षे उदो दकारस्य चत्व तस्य द्वित्वे द्वितकारक रूपम् । सकारस्य श्रवणमिति भेदात्कथमियमाशङ्केति वाच्यम् । एवंविधे विशेषेऽपि न हि व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेष इति न्यायमाश्रित्य शङ्कनात् । विशेषो नेत्यस्य दुर्लक्षो विशेष इत्यर्थ ।

झयो ह इति सूत्रे झय इत्यस्य षष्ठ्यन्तत्वाज्झय स्थाने ह इत्युचितमिति विपर्यासनिरासायाह । * पदान्तादित्यपीति * । तेनैतत्सामानाधिकरण्ये झय इति पञ्चम्यन्तमुत्तरसूत्रे । एतच्च पूर्वसूत्रेऽपि झय इति पञ्चम्यन्तमर्थाधिकारानुरोधात् । अत एव नाज्झलाविति निर्देशासङ्गति । उत्तरसूत्रे झय इत्यस्य पञ्च

जकारे कृते इति । छत्वमिति शेषः । पूर्वोक्तभाष्यसंमताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात् ।

मोऽनु ॥ पदस्येत्यधिकृतं म इत्यनेन विशेष्यतइत्याह मान्तस्येति । हलि सर्वेषामित्यतो हलीत्यनुवर्त्तते । हलि किम् । राममाश्रय ।

नश्च । चेन मो ऽनुकृष्यते । अपदान्तस्य किम् । राजन्याहि । यशांसीति । यशस्शब्दे जसः शौ नपुंसकस्येति नुमि सान्तेति दीर्घः । आक्रंस्यतइति । क्रमेर्लृट् आङ उद्गमनइति तङ् स्यः ।

अनुस्वारस्य । परेति लुप्तषष्ठीकं पृथक्पदम् । अत एवोदःस्थेत्यादौ सवर्णग्रहणानुवृत्तिर्यरो ऽनुनासिक इत्यत्र तदपकर्षश्च सिद्धः । ययीति स्पष्टार्थम् । दशानमित्यादौ तु न दोषः शकारसवर्णाप्रसिद्धेः । प्रयत्नभेदेनाऽज्झलो॰ सावर्ण्याभावात् । आचि अनुस्वाराभावात् ।

मो राजि ॥ नेति सिद्धे म इत्युक्तिर्हेमपरइत्येतद्विषये प्रशाम् हल्मयतीत्यादौ मो नो धातोरिति नत्वबाधनार्था । निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात् । ध्वनितश्चेदमेतदोऽन्, अमोमशिति सूत्रयोर्भाष्ये ।

हे मपरे ॥ मपरे इति बहुव्रीहिः । न तु तत्पुरुषो ऽसम्भवात् । मोनुस्वार इत्यतो म इत्यनुवर्त्तते ।

---

स्यन्तरये फलमाह । *विरप्शमित्यादाविति* । अत्र विपूर्वाद्रपेरौणादिकः शम प्रत्ययः ।

*अत एव* । पृथक्पदत्वादेव । परसवर्णपदस्य समासत्वे एकदेशासम्बन्धे ज्ञेया ।*दशानमित्यादाविति*। आदिना कसेत्यस्य सङ्ग्रहः ।*शकारसवर्णाप्रसिद्धेरिति*। इदमाज्झलाविति सूत्रप्रत्याख्यानस्य पक्षे वा प्रयत्नाङ्गीकर्तुर्मतेन । तेन दीर्घकारस्य तादृशस्य प्रसिद्धावपि न क्षतिः । शकारसवर्णः शकारो यद्यपि प्रसिद्धस्तथापि स नानुनासिकोऽस्मिन्सूत्रे यरोऽनुनासिक इत्यतोऽनुनासिकपदानुवृत्तेः । अन्यथा कुण्ड रथेनेत्यत्र परसवर्णस्य रेफस्यैवानुस्वारस्य स्थाने आपत्तिः स्यात् ।

* अनुस्वारस्यैव स्यादिति *। न च स न्यायो यथा नपाडित्यत्र त्यज्यते तथात्रापि तत्त्यागोऽस्त्विति वाच्यम् । तत्र तथा व्याख्यानस्याकरे कृतत्वेन त्यागेऽपि तत्त्यागस्यात्र स्वीकारे मानाभावात् । तदाह । *ध्वनितमिति* । तत्र हि मो राजीत्यनुस्वारादिबाधनार्थमित्युक्तम् । अत्रादिपदोपादानं हेमपरइत्येतद्विषये णत्वसङ्ग्रहार्थम् ।

यथासंख्य ॥ सम्यक् ख्यान सख्या क्रमवैशिष्टयेन ज्ञानम् । यत्सांख्यैः प्राप्यते स्थानमित्यत्र सख्याशब्दस्य ज्ञानार्थतया दृष्टत्वात् । तामनतिक्रम्य यथासंख्यम् । अनुदेशः पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः । साम्य सख्यया योग्यत्वाद्व्याख्यानाच्च । एवञ्च समसंख्यानं सम्बन्धो येन क्रमेण पदज्ञान पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः सम्बन्धस्तेषामित्यर्थः । फलितमाह । समसम्बन्धीति । यद्यपि स्थानाख्यलौकिकप्रमाणाद्देव सिद्ध तथापि परस्मैपदानामेचो ऽयवायाव इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थमाद्यन्तौटकितावित्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानाद्यथाक्रमान्वयबोधनार्थञ्चेदम् । एवञ्च तत्र यथासंख्येनान्वयबोधकवाक्यकल्पने तत्प्रामाण्यात्ततश्च बोध इति बोध्यम् । अत्र स्वरितेनेत्यपकृष्यतइति रुयस्यादित्यादौ नातिप्रसङ्गः, तत्र प्रतिपत्तिकालिकमेव सख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति अमङणनमिति सूत्रे भाष्ये स्पष्ट

---

* येन क्रमेण पदज्ञानम्पदादुपस्थितिर्वेति *। आद्योदाहरणन्तुदीशालातुरेत्यादि । अत एव स्यतासीलृलुटोरित्यत्र यथासङ्ख्यनिर्वाह । अन्त्योदाहरणम्परस्मैपदाना णल्तुसेत्यादि, जातिपक्षे इकोयणचीत्यादि च । * स्थानाख्येति * । स्थानञ्चात्र क्रम । शत्रुम्मित्र निपत्तिञ्च जय रञ्जय भञ्जयेत्यत्र यथा । क्रमेणसम्बन्धोयत्र क्रमेणोच्चारणतत्र यत्र तु न तथा तत्र न लौकिकप्रमाणावसर इत्याशयेन समाधत्ते । * तथापीति * । नन्वेव विलम्बेऽपि लौकिकप्रमाणादेव सिद्धिरत आह । * आद्यन्ताविति * । * साहित्ये द्वन्द्वविधानादिति * । इतरेतरयोगेऽपि साहित्यस्यैव प्राधान्यादितिभाव । लोके तु यत्रासमासेनोच्चारणस्तत्रैव क्रमेण सम्बन्धोऽनुभवसिद्ध । अत एवाजाधिपनौ देवदत्तयज्ञदत्ताविरयुक्ते न ज्ञायते कस्याजा धनङ्कस्यात्रय इति भाष्ये उक्तम् । अयमाशय । यद्येव विधे विषये क्रमेणान्वय स्यात्तर्हि द्वन्द्वघटकानामेकधर्मावच्छिन्नान्वयित्वाभावेन साहित्यस्यैवानुपपत्तिरिति । *वाक्यकल्पनेति * । प्राथमिकबोधस्तु साहित्यावच्छिन्ने साहित्यावच्छिन्नस्यैव । यथा राजपुरोहितौ स्वाराज्यकामौ यजेयातामित्यत्र । उत्तरकालिकस्तु राजा स्वर्गकामो यजेत पुरोहितश्च राज्यकाम इति प्रकरणादिवशाद्बोध । *प्रतिपत्तिकालिकम् * । प्राथमिकवाक्यार्थबोधकालिकम् । *प्रवृत्त्युपयोगीति * । तेन स्यतासी लृलुटोरित्यत्र लृशब्देन लृङ्लृटोर्द्वयो पश्चादुपस्थितावपि नानुपपत्ति । *अमङणनमित्यत्र भाष्य इति * । तत्र हि मकारप्रत्याख्याने ये मकारेण प्रत्याहारास्ते ञकारेणैव सन्तु ङमो ह्रस्वादचि ङमुण्नित्यमिति यथा तर्हि पदान्तयोर्ङकारमकारयोरभावात्पञ्चागमास्त्रय आगमिन इति वैषम्यात्सङ्ख्यातानुदेशो, न प्राप्नोतीत्याशङ्क्य येषामागमानामागमिन सन्ति त

स्येत्यनुवर्त्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य मस्येत्यर्थः । पद्रसन्त इति । धुटि धस्य चर्त्वे लक्ष्यभेदात्पुनर्डस्य चर्त्वम् ।

नश्च ॥ नकारान्तादिति । पदस्येत्यनुवृत्त पञ्चम्या विपरिणम्यत इति भावः । वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थभाष्यस्वरसः । नस्य पदान्तस्येति । अपदान्तनकारे ऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् । नान्तस्य पदस्येत्युचितम् । चतुष्टयमिति । वक्ष्यमाणविकल्पैरिति भाव' । तेन सुकश्चु ने ऽत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारे छकारशकारघटितरूपद्वयाधिक्ये ञत्वानुस्वारनिसर्गाणा द्विन्वविकल्पेनाधिक्ये ऽपि न क्षतिः ॥

ङमो ॥ पदस्येत्यनुवृत्ते सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यते इत्याह । तदन्त यत्पद तस्मादिति । तत्र ङमस्तत्रयं ह्रस्वादिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वेन तदन्तपर इति भावः । ङम इति पञ्चमीजलादचीति सप्तमी षष्ठ्यर्थे तदाह । अच इति । सप्तमीनिर्देशस्तु लाघवार्थः । ङम उत्तरस्याच इति तस्मिन्निति सूत्रस्थभाष्यात् । ङमन्त यत्पदमिति किम् । अनितीत्यादौ ङमुण्णा भूदिति । भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येति वैयधिकरण्यमेवो-

---

भाषयो प्रवृत्तावुभयोरागमित्वे विरोधस्य सत्त्वात्तस्मादिति परिभाषाया परत्वाद्यस्येति । तदादिविधौ विशेषणविशेष्ययोरुभयो सप्तम्यन्तत्वनियाम कमित्यत्र विशेष्यस्य पदस्यासप्तम्यन्तत्वाच्च तदादिविधि । तेन पद्रसु इत्यत्र धुट्सिद्धि ।

* पञ्चम्या विपरिणम्यत इति * । एवञ्च नकारान्तात्पदादिति फलितम् । * ङमुट्सूत्रस्थभाष्यस्वरस इति * । तत्र हि पदावयवङम परस्येति व्याख्यात म् । एवञ्चोत्तरसूत्रे पदस्येत्यस्य वैयधिकरण्येन सम्बन्धे पूर्वसूत्रेऽपि तथैवास्त्विति भाव । शि तुगिति सूत्रे शीनिमित्तस्या अचरितार्थत्वश्च इति पञ्चमी तु पूर्वसूत्रे चरितार्थात पञ्चम्यन्तस्यैव षष्ठ्यन्तत्वकल्पनमिति भाव । * इत्युचितमिति * । वर्णग्रहणे च सवत्रेति तदन्तविधिसम्भवादिति भाव । रूपाणामाधिक्यस्यापि सम्भवाच्चतुष्टयमित्यस्योपपत्तये आह । * वक्ष्यमाणेति * ।

* विशेषणसम्बन्धमनुभूयेति * । गुण कृतात्मसंस्कार इति न्यायादिति भाव । * लाघवार्थ इति * । वक्ष्यमाणरीत्या तदादिविध्यर्थमपीति बोध्यम् । एतेन सप्तमीनिर्देशस्य कृतार्थत्वाद्बाधकत्वशङ्काऽपि निरस्ता । सिद्धान्तमाह । * भाष्येत्विति * । *एतदर्थमेवेति * । न तु लाघवार्थ इत्येतत्काख्यवच्छेद्यम् ।

क्तम् । दण्डिनेत्यत्र ङमुडभावो मण्डूकप्लुत्या ङमि च पदे इत्यतः पदे इत्यनुवर्त्यो जादेः पदस्य ङमुडित्यर्थेन बोध्यः । पदस्येत्यस्यावृत्त्या सप्तम्यन्ते ऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वएव तदादिविधिप्रवृत्त्या तदलाभः स्यात् । एतदर्थमेवाचीति सप्तमीनिर्देशः । ङमन्तं यत्पदमित्यर्थे ऽपि परमदण्डिनेत्यादावेतद्वारणाय पदे इत्यनुवृत्तिरावश्यकयैवान्तर्वर्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात् । उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधस्तु न । माषकुम्भवापेनेत्यादौ पदव्यवाये ऽपीति निषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । तेन निषेधेन सिद्धमित्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन इति दिक् । इको यणचीति सौत्रो निर्देशः ।

रुप्रकरणइति । अत एव समः सुटीत्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम् । रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य । एवमुत्तरत्र रोः पूर्वस्मादित्यपि । अयमधिकारः । तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिः । न तु मतुवसोरित्यत्र तत्सूत्रस्थवार्त्तिकयोश्च । अत्रेति तु रुप्रकरणएवास्य सम्बन्धो न त्वग्रे ढो ढे लोप इत्यादावित्यर्थसूचनार्थं स्पष्टार्थमेव । तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वानुनासिक इति विशेषद्योतनार्थः । रोः पूर्वस्येत्यस्य च रुस्थानिनः पूर्वस्येत्यर्थो बोध्यः ।

अनुनासिकात्पर इत्यत्रानुनासिकादिति ल्यब्लोपे पञ्चमी व्याख्या-

---

उच्चारणकृतलाघवेऽपि मनोव्यापाराधिक्येऽधिकगौरवात् । अत एव वक्ष्यते ह्रस्वः नपुंसके उत्तरपदत्वे चेति वचनस्य भाष्ये प्रयोजनान्यथासिद्धिप्रदर्शनेन प्रत्याख्यानेऽपि ज्ञानगौरवेण प्रत्याख्यानस्यायुक्तत्वात्तत्स्थापनमेव कृतमिति । पदे इत्यनुवृत्तेरावश्यकत्वमपि दर्शयति ।*ङमन्तं यत्पदमित्यर्थेऽपीति*।*उत्तरपदस्य यत्र कार्यित्वमिति* । अत्र यद्वक्तव्यं तच्चपदान्तसूत्रे उक्तम् । ङमुडागमस्य नित्यत्वादिको यणचीति प्रयोगानुपपत्तिरत आह ।*सौत्रो निर्देश इति*।एवमादिप्रयोगाः संहिताया अविवक्षयापि साधयितुं शक्याः । वस्तुतः सनाद्यन्ता धातवः सुप्तिङन्तमित्यादिषु बहुषु सौत्रत्वकल्पनापेक्षया क्वचित्पदकृत्यम् तत्पदस्थले ङमुट् क्वाचित्कत्वमित्यत्र युक्तम् । तेनाणादिसूत्रार्था गीत्यादिप्रयोगसङ्गतिः ।

*रुप्रकरणविधेय इति* । तेन सविधानपक्षे सकारस्य लोपपक्षेऽभावस्योपलब्धस्य सङ्ग्रहः ।

*ल्यब्लोप इति*। ल्यपो ल्यप तस्य विहायेत्यस्य लोपे गम्यमानार्थत्वादप्रयोगे लब्धन्त। यत्क्रियाकर्मणि पञ्चमीत्यर्थः ।*व्याख्यानादिति*। यद्यत्र दिग्योगलक्षणा पञ्चमी स्यात्तदाऽनुस्वारपरानुनासिक पूर्वस्य तु वेत्यत्र प्रदेशे तथा तु न

नात् । अयमागमोऽननयत्र एवावयवत्वे मानाभावात् । खरीति । विसर्गाक्षिप्तस्याप्यवसानस्य न संबन्धो व्याख्यानात् । सो वक्तव्य इति । समः सुटीत्यादिसूत्रत्रये स इत्युपसंख्याय समः सुटीत्यत्र सकारं प्रश्लिष्य वैतैः सकार एव विधेय इत्यर्थः । एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः । स्पष्टं चेदं भाष्ये । विसर्गस्थानेन सत्वविधाने तु गौरवं स्फुटम् । लोपस्यापीति । यत्तु ।

"उपधारञ्जनङ्कुर्यान्नमो रुकरणे सति ।
लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्" ।

उपधारञ्जनमनुनासिकानुस्वारागमरूपम् । नमोर्नकारमकारयोः । प्रकृतिभावोदाहरणं, नॄन्पाहीति । तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषयमिति भावः । अत एव भाष्ये समादिषु सत्वं वक्तव्यमित्युक्तम् । रुत्वपक्षे चानुनासिकाद्यापत्तिर्दोषत्वेन नोक्ता । ननु लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात्समः सुटीति व्यर्थमित्यत आह त्रिसकारकमपीति । स्कोरिति लोपस्तु न, अस्यासिद्धत्वात् । पुनर्द्वित्वेन त्रिसकारस्य सिद्धिरिति तु न युक्तं, लक्ष्ये

---

कृतमित्येवरूपादित्यर्थः ।*अयमिति* । अनुस्वार इत्यर्थः । अत्र परपदोपादानेन परश्चेति सूत्रैकवाक्यतापन्नसूत्रविधेयलाभस्यास्य लाभादनवयवत्वासिद्धिः । खरीत्यस्य मण्डूकप्लुत्यानुवृत्तौ गौरवादाह ।*विसर्गेति* । इदमन्यरीत्या । वस्तुतस्तु मण्डूकप्लुतिरेव युक्ता । न त्वाक्षेपः । आक्षिप्तस्य शाब्दबोधविषयत्वाभावस्यान्यत्रोक्ते ।*व्याख्यानादिति*।लक्ष्यानुरोधमूलकादत एव प्रत्यय इत्यादिनिर्देशासङ्गति ।*एवञ्चेति*। एतैः सकारविधाने चेत्यर्थः ।*भाष्य इति*। समः सुटीति सूत्रभाष्य इत्यर्थः । ननु वार्त्तिकेन विसर्गस्य स्थाने सकारविधानत्यागे बीजं किमित्यत आह ।*विसर्गस्थानेनेति* प्रातिशाख्यविरोधम्परिहरति । *प्रकृतिभाव इति*।अत्र प्रकृतिभावशब्दः शास्त्रविधेयतत्तत्कार्यप्राक्कालिकस्वरूपावस्थानपरः । तच्च नॄन्पाहीत्यत्रास्त्येव।नॄन् इत्यस्य वैकल्पिकत्वात् ।*नोपधेति*।रो पूर्वस्यैवानुनासिका न तु रुप्रकरणविधेयात् । एवञ्च लोपपक्षे नोपधारञ्जनप्राप्तिरिति भावः ।*प्रातीति*। प्रातिशाख्यमयमिति प्रातिशाख्यसमाख्याबलादेकस्सम्बन्धितच्छाखापरमिदं शास्त्रन्तु सर्वसाधारणमिति भावः । पूर्वोक्तमेव द्रढयति । *अत एवेति*। तस्य तच्छाखामात्रविषयत्वादेव । यदि सर्वसाधारण्यं स्यात्तर्हि रुत्वपक्षे उपधारञ्जनस्य प्राप्तिस्सत्वपक्षे च तस्याभाव इति फलभेदस्य स्पष्टतया रुत्वपक्षेऽनुनासिकाद्यापत्तिरप्युक्ता स्यात्स्वमते तु रुप्रकरणविधेयात्पूर्वस्यानुनासिकादेशस्येष्टतया रुत्वपक्ष इव सत्वपक्षेऽप्यनुनासिकादेशस्य सम्भव इति रुत्वेऽनुनासिकापत्त्यकथनं युक्तमेव । एवञ्च लोपेऽप्युपधारञ्जनस्सम्भवत्येवेति भावः ।

लक्षणस्येति न्यायात्। एतेन मम* सुद्दीत्यत्र वेतिपाठेनैव पक्षे मोऽनुस्वारेण सिद्धेऽनुनासिकात्पर इति व्यर्थमित्यपास्तम् । ननु व्यञ्जनात्परस्यैकस्या नेकस्य वोच्चारणे विशेषाभावोऽत आह । अनुनासिकवतामिति । तन्नो च्चारणे विशेषाभावकल्पने इद वचन व्यर्थमेव स्यादिति भावः । इयवद् सूत्रभाष्योक्ते शर्षूपसख्याने फलमाह । अनुस्वारवतामिति । अपिना कस्य सङ्ग्रहः । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह । वचनान्तरेणेति । यणो मय इत्यनेन । एकस्यैव शास्त्रस्य पुन* प्रवृत्तौ हि स न्याय इति भावः । पूर्व त्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्व प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तद नन्तर परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वे बोधितइति त्रितयस्य निर्वाहो बोध्यः । अनचि चेत्यत्र यणोमयइत्यस्योपसख्यानाद्वचोरहा भ्यामित्यतस्तस्य परत्व बोध्यम् ।

पुम० ख ॥ अम्परइति बहुव्रीहिः । ×क×पयोरिति । कुप्वोरिति सूत्र विधेययोरित्यर्थः । इदुदुपधस्येति सूत्रेऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्ये त्यर्थादिति भावः । अव्युत्पत्तीति । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । पत्वेति । इदमनुनासिकपक्षे । अनुस्वारपक्ष तु कुप्वोरित्यस्यैव प्राप्ति । अनुस्वारव्यवधानेनोदुपधत्वाभावात् । सुसीरमिति । क्षरधातो रुपधाया ईत्वे ऽप्रत्यये क्षीरमिति भावः ।

नश्छवि ॥ अप्रशानिति पष्ठ्यर्थे प्रथमा ।

नॄन्पे ॥ नॄनिति द्वितीयान्तानुकरणम् । पष्ठ्या* सौत्रो लुक् । नलो पस्तु सौत्रत्वान्न । एव कानित्यत्रापि ।

चाद्विसर्ग इति । शर्परे इति सूत्रात्तदनुकर्षश्च नेति भावः । येन नेति । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक इति न्यायेनेत्यर्थः । येन

*एतेन*। त्रिसकारकरूपासाधनेन । *इद वचन व्यर्थमेवेति*। न हीति भाष्यो क्तवचनन्तु दुर्लक्षत्वाभिप्रायञ्च तु सर्वथा विशेषाभावपरमिति भाव ।*इदमिति*। द्वार सय इत्येतत् । ननु द्वे इत्यनेनोच्चारणद्वयस्यैव विधेयत्वाद् द्वयोर्वचनयोर्यु गपत्प्रवृत्तौ द्विरुच्चारणस्यैकस्यैवोभाभ्या लाभेन त्रितयस्यानिर्वाह इत्यत आह । *पूर्वत्रेत्यादि* । वार्त्तिकेऽपि पूर्वापरीभाव व्युत्पादयति । *अनचि चेत्यत्रेति*।

पचिभि कृतमित्यादिव्यावृत्तये इदुदुपधेति सूत्रे प्रत्ययशब्दस्य प्रत्ययाव यवेलाक्षणिकत्वादाह । *इदुदुपधस्येतीति*। ननु घसे किच्चेत्यौणादिकसूत्रोणे रविधानेन क्षीरशब्दस्य व्युत्पादनात्तस्यासिद्धत्वात्प्रत्ययपरत्वाभावेन नैतत्प्रा सिद्ध आह । * क्षरधातोरिति * ।

नेत्यादेर्यत्कर्तृकावश्यप्राप्ताविर्त्यर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । प्राप्त इति भावे क्तस्तत्प्राप्तियोग्ये विषये ऽचारितार्थ्ये हि बाधकत्वे बीजम् । तदुक्तं शर्पूर्वा इति सूत्रे भाष्ये शर्पूर्वा इत्येतद्धलादिःशेषस्य बाधकम् । इदन्तावदयं प्रष्टव्यः, यदि तत्रोच्येत किमिह स्यात् हलादिः शेषश्चेन्नाप्राप्ते तस्मिन्नारम्भादिदन्तद्बाधकं भविष्यतीति अजादेर्द्वितीयस्येति सूत्रे भाष्ये ऽपि स्फुटमेतत् । न तु शर्परइति । न चास्य विसर्गस्य ≍क≍पौ दुर्वारौ । किं चास्यैव तौ स्यातां, खरवसानयोरिति विहितस्य तु एतयोरासिद्धत्वात्सत्त्वमेव स्यादिति वाच्यम् । शर्परे इति सूत्र कुप्वोरित्यत्रानुवर्त्य शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात्स्पष्टञ्चेद भाष्ये । वार्त्तिके कान्ग्रहण शक्यमकर्तुमित्याह । यद्वेति । एव सम्ग्रहणमपि त्यक्तु शक्यम् । पुम्ग्रहण त्वावश्यकमेव । अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः ।

एष्विण इति । गणे कृतसत्वषत्वानामेव पाठादिति भावः । ≍क≍प-

---

* प्रकृतार्थदार्ढ्येति * । यद्यप्यभावाभावस्य प्रतियोगिरूपतया यत्कर्तृकप्राप्तावित्येव लभ्यते । तथापि नञ्द्वयोपादानसामर्थ्याद्दार्ढ्यलाभकल्पना । दार्ढ्यञ्चापवादत्वाभिप्रेतशास्त्रोद्देश्यतावच्छेदकस्योत्सर्गशास्त्रोद्देश्यतावच्छेदक-व्याप्यत्वमेवेति बोध्यम् । तत्प्राप्तावित्यर्थ । अत्रैव सम्मतिमाह । * तदुक्तमिति * । ननु बाध्यबाधकभावे द्वैविध्यम्प्रसिद्धम् । समानफलकत्व विरोधश्च । यथा दध्न स्तक्रस्य चौदनोपसेकात्मकसमानफलकत्वम । अष्टाश्रिर्यूपो भवति वाजपेयस्य चतुरश्र इत्यत्र सहभावकृतविरोधाच्चतुरश्रत्वेनाष्टाश्रित्वस्य बाध । द्विविधापि विधा प्रकृते न सम्भवति । हलादि शेषेण पस्पर्धे इत्यत्र सकारस्य शर्पूर्वेत्यनेन पकारस्य शेषसम्भवादिति चेन्न । शेषपदार्थस्येतरनिवृत्तिपूर्वकावस्थानरूपतया द्वयोरपि सकारयोर्निवृत्तिस्थित्योर्विरोधाद्भवतीह बाध्यबाधकभाव इति भाव ।

*न चास्य विसर्गस्येति* । एतत्सूत्रविहितस्येत्यर्थ । तथा च वास क्षौममित्यादिरूपमेव कुप्वोरित्यस्योदाहरणम्भविष्यति । शर्पर इति सूत्रविहितविसर्गस्य श्रवणन्तु क त्सरु । क त्सरिनेत्यादिषु भविष्यति । *एतयो * क≍प≍यो । शर्पर इति सूत्रविहितविसर्जनीयस्य तु न सत्वप्राप्तिस्तद्दृष्ट्याऽसिद्धत्वादिति भाव ।

*वाक्यभेदेनेति* । कुप्वोरितिपदस्यावृत्तिङ्कृत्वा भिन्नवाक्य सम्पादनीयमिति भाव । ननु विसर्जनीयो र इति सञ्ज्ञासूत्रङ्कृत्वा खरवसानयोरित्यादिसूत्रे विसर्जनीयपदस्थाने लाघवाद्र इत्येव पठनीयमिति चेन्न । पर्यायशब्देषु लाघवगौरवचर्चा नाद्रियते इत्यस्य ज्ञापनार्थन्तदुपादानात् ।

कस्कादिषु चेतिसूत्रव्याख्यावसरे एषु इण उत्तरस्य षत्वमन्यस्य सत्वमिति विधिन्योक्तन्तल्लाभप्रकारमाह*गण इति* । तथा च कस्कादिषु यथा पठितन्तथैव

योरपवाद इति । तद्विहितविसर्गस्यापीत्यपि बोद्धव्यम् । काँस्कानिति वी- प्साया द्वित्वम् ।

संहितायाम् ॥ संहिता च स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम् । ततोऽधिकार्धमात्राकालेनोच्चारणे अवग्रहे एतदधिकारोक्तकार्यव्यावृत्त ये तदधिककालव्यवाये तु न साधुत्वं नापि बोध इष्यते इति वृद्धा इति तेषां शास्त्रविषयतैव नेति भावः ।

छे च ॥ ऊ इत्याकार उच्चारणार्थस्तेनाच्छिन्नमित्यत्र तुक् ह्रस्वस्य पि तीत्यतो ह्रस्वस्येतितुगिति च वर्त्तते । जक्तेनेति । स्वशब्दे उपपदे छ्यते· के स्वच्छशब्दो निर्मले रूढ· । एव नञ्पूर्वाच्छादयतेर्डे अच्छशब्द इति प· दान्तत्व बोद्धव्यम् । स्पष्टञ्चेदममरटिप्पणे ।

आङ्माङोः ॥ आङ्साहचर्यान्माङव्ययमेव । दीर्घस्यागमिति वक्ष्यमाण ज्ञापकाद्व्याख्यानाद्वा दीर्घादिति पष्ठ्यर्थे पञ्चमीति भावः । एओङ्सूत्रभाष्ये ध्वनितमेतत् । चेच्छिद्यते इति । तुको हलादिः शेपस्तु न,अभ्याससञ्ज्ञाप्रवृ त्तिकाले स्थानिद्वारा साक्षाद्वा संहितानां हलामेव तेन निवृत्तेः । अत एव

---

साधु भवतीति सूत्रार्थः ।

*संहितायाम्* । यद्यपीश्मिको यणित्यादिसूत्रेष्वप्युपयुज्यत इति तत्रैव व्या ख्यातुमुचित तथाप्यष्टाध्यायीस्थसौत्रक्रमानुरोधादेवङ्कृतम् ।

ननु निर्मले रूढे स्वच्छशब्दे तस्यापदान्तत्वात्कथ छत्वमत आह ।*स्वश ब्द इत्यादि* । * अव्ययमेवेति * । तेन कियन्तमाङ्मान इतिधातोर्ग्रहणशङ्का धाम्माछेद इतिलक्ष्यसम्भवेऽपि सा व्युदस्ता ।

वक्ष्यमाणज्ञापकादिति । सुराच्छायेतिज्ञापकादित्यर्थः ।

ननु दीर्घादितिसूत्रमपदान्तविषयकम् । सेनासुराच्छायेत्युदाहरणं तु पदान्ता द्वेति सूत्रस्य विषय इत्यत आह ।*व्याख्यानादिति* । वर्णैकदेशाना वर्णग्रहणेन ग्रह णमिति पक्षे अग्ने इन्द्र इत्यादौ सवर्णदीर्घत्व दीर्घे ह्रस्वाक्षराश्रयमाह्लूयेत्यादौ ह्रस्व स्य पिति कृतीति तुकश्चाशङ्क्य दीर्घह्रस्वाक्षराश्रयो विधिर्न भवतीत्यर्थं यद्य दीर्घा च्छे तुग् नास्तीत्युक्तम्भाष्ये । यदि छस्याप्यन्तुक्स्यात्तदा ह्रस्वस्य पूर्वेण छस्य त्वेनेनेति निशेपस्य स्पष्टत्वात्तस्य ज्ञापकत्वाभिधानासङ्गतिरिति भाष्यपर्यालो चनामूलकादित्यर्थः । *ध्वनितमिति* । ध्वनितञ्च तथा ज्ञापकोपपादनेनैव । *स्था निद्वारेति* । यथा उरदितिसूत्रनिष्पन्नस्यारित्यस्यावयवो रेफश्चकार जहारेत्यादौ निवर्त्तते । साक्षात्सन्निहितानिवृत्तिस्तु पपाचेत्यादौ स्पष्टैव । *चरितार्थमिति* । मङ्गुस्तरफाल्माक्षिकपदत्वेनोद्देश्यत्वामायेन च स्थानिद्वारकप्रासिकर्तृभिन्नस्यापि

नुगत इत्यादि चरितार्थम् ।

दीर्घात्पदान्तादिति । पदान्तस्य दीर्घस्येत्यर्थः । योगविभागो ऽनयो-रेओङिति सूत्रे भाष्ये स्पष्टः । दीर्घान्तस्य पदस्येत्यर्थेन सिद्धे ऽन्तग्रहण प-दान्तविधित्वमस्य न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थि-त्यर्थम् । तेनासामर्थ्येऽप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः ।

॥ इति हल्सन्धिः ॥

विसर्जनीयस्य सः । प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्श-नाय स्मारितम् ।

शर्परे इति बहुव्रीहिः । विशेष्य चावध्यवधिमतोः साजात्याद्विसर्जनी-

---

तेन निवृत्ति स्यात्तदा नुकोऽपि निवृत्त्यापत्तौ यर्य्यँस्यत इत्यादौ नुक्श्रवणाभावेन तद्वैयर्थ्यं स्पष्टमेव । दीर्घस्य पदान्तस्येति षष्ठ्यर्थं पञ्चमीत्युक्तत्वादिति भाव ।

*समर्थपरिभाषानुपस्थित्यर्थमिति* । यत्र सुबन्तत्वेन पदत्वेन वोद्देश्यता तत्र समर्थपरिभाषोपस्थितेरुक्तत्वात् । पदान्तस्य दीर्घस्येत्यर्थे तु दीर्घस्यैवोद्देश्य-त्वन्न तु पदत्वावच्छिन्नस्य । यद्यत्र समर्थपरिभाषोपस्थिति स्यात्तदा लक्ष्मी-च्छाया इत्यादावेवास्य प्रवृत्ति स्यान्न तु तिष्ठतु लक्ष्मी च्छाया देवदत्तस्ये-त्यादाविति भाव । यत्त्वेवमेव नपदान्ताट्टोरनामिति सूत्रेऽप्यन्तग्रहणस्याव-श्यकत्वेनान्तग्रहण स्पष्टार्थमिति तत्रत्यग्रन्थविरोध इति । तन्न । षण्णामित्यत्र निषेधाभावफलकेनानामित्यस्योपादानेन पदत्वेनोद्देश्यत्वाभावेन च तत्र समर्थ-परिभाषोपस्थित्यभावस्य पूर्वमुपपादितत्वात् । किञ्च समासेऽङ्गुले सङ्ग इति सुषस्यसमासग्रहणेन ज्ञापकेन सजातीयापेक्षत्वाद्यत्र भावकार्यस्य विधेयत्वन्तत्र समर्थपरिभाषाप्रवृत्तिरतोऽन्तग्रहणन्तत्र स्पष्टार्थमेवेति ॥

इति हल्सन्धि ।

पौनरुक्त्यशङ्कापरिहारायाह । * प्राग्व्याख्यातमपीति * ।

* बहुव्रीहिरिति * । कर्मधारयस्याभिमतत्वे शरीत्येव वदे-त् । * विसर्जनीयाक्षिप्त इति * । स्थानिनो विसर्जनीयस्य निमि-त्तमेतत्सूत्रविषये खरेवेति शर्परे खरीति पदसमुदायार्थे तदेकदेशस्य शर्परे इति पदस्य शक्तिस्वीकाराद्नेनोपस्थित खरेवेति भाव । एतेनाक्षिप्तस्य

याक्षिप्तः सरेत । विसर्गस्य विसर्गविधौ फलमाह । न त्वन्यदिति । अन्यदे-व विवृणोति । इहेति । त्रैरूप्यमिति । विकल्पद्वयसामर्थ्यादिति भावः ।

सोऽपदादौ ॥ अपदाद्योरिति सूत्रे सौत्रत्वादेकवचनम् । अनव्ययस्येति । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं व्याख्यानात् तेनोपपयस्काम्यती-त्यादौ सत्वासिद्धिरिति स्पष्टमव्ययीभावश्चेत्यत्र भाष्ये । गीः काम्यतीति । वाः काम्यतीत्यस्याप्युपलक्षणमिदम् ।

इणः षः ॥ इदुदुपधस्येत्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादौ सत्वनिवृत्त्य-र्थमीष्पाश, दोष्कल्पमित्याद्यर्थञ्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च सम्बध्यते । तेनोच्चैः कल्पं दोः पश्य, गीः काम्यतीत्यादौ षत्वं न । अत एवास्मिन् प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिक-सस्थानेन षत्वमिति भाष्योक्तपक्षान्तरं सङ्गच्छते । विसर्जनीयस्थानिकेत्यु-क्त्या पुस्सुत्र इत्यादौ न दोषः । तत्र हि मस्थानिकः सः । अत्र विसर्जनीय

शादयोऽथे मानानक्षीकारादिदमसङ्गतमित्यपास्तम् । *व्याख्यानादिति* । अव्ययी-भावश्चेतिसूत्रभाष्येऽव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचारा इति परिगणनं न प्रयोजनमिति प्रदर्श्य तस्मिन् सूत्रेऽनुत्तरपदस्थस्येत्यनुवृत्त्योपपयस्कार इत्यादौ विसर्गस्योत्तरपदस्थत्वात्सत्वाभावसिद्धौ तदव्ययत्वस्य न प्रयोजनमिति द-र्शितम्परिगणनञ्च प्रत्याख्यातम् । यदि सोपदादाविति सूत्रशेषभूतेऽनव्ययस्येति वार्तिके यदव्ययपदं तेनोपपयस्काम्यतीत्यत्र प्रतिषेध इष्टः स्यात्तदोपचारस्ये-दम्प्रयोजनं सम्भवत्येवेति प्रत्याख्यानपरम्भाष्यं विरुध्येत । तस्मादुपचारपदेन परिगणनरचनात् कमीतिसूत्रनिष्पन्नसत्वस्यैव ग्रहणमिष्यते । तथाऽव्ययत्वप्र-योजनमन्यथासिद्धमित्यव्ययीभावस्याव्ययत्वप्रयोजननिराकरणमूलकाद्व्याख्या-नादित्यर्थः । *उपलक्षणमिति* । एवञ्चेण षः इति सूत्रस्यायमविषय इति भावः । *सर्पिष्पाशमिति* । उणादीनामव्युत्पन्नत्वमिति पक्षेऽपीदुदुपधस्येत्यस्य प्राप्ते । *गीष्पाशमिति* । अत्रेदुदुपधस्येति तपरकरणात्तत्त्वप्राप्तिरेव न । *अत एव* । उक्तत्रितयस्येण षः इति सूत्रस्यापि शेषत्वादेव । यद्युक्तत्रितयस्यैतत्सूत्रशेषत्वं न स्यात्तदा स्थानित्वेन षत्वविधायकत्वपक्षे उच्चैः कल्पमित्यादौ षत्वप्राप्त्या सका-रस्य षत्वमिति पक्षे चैषु सकाराभावेन षत्वाप्राप्त्या फलभेदः स्पष्ट एव । ननु साधस्य फलत्वेऽपि लाभः कथमत आह । *अत्रेति* । एतत्सूत्रे भाष्ये ह्येवमु-क्तम् । विसर्गनिर्देशेन सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते आहो स्वि-द्विसर्गेण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते इति । अत्र यदा सकारस्य

स्येत्यनुवृत्त्यैव तदर्थलाभः । अनव्ययस्येत्यादि त्वत्र पक्षे ऽत्र न संबध्यते तेन द्विष्कृत दुष्काम्यतीत्यादौ षत्वसिद्धिः । गीः काम्यतीत्यादौ सकाराभावादेव न दोषः । । अपादादाविति च न संबध्यते तेन दुष्करोतीति षत्वसिद्धिः । परन्त्वयं पक्षो ऽसङ्गतः । उत्तरसत्वस्यासिद्धत्वेन निष्कृतमित्यादौ षत्वासिद्धेः । प्रकरणे प्रकरणमसिद्धं न योगे इति पक्षस्तु नास्त्येव ज्ञापकासम्भवादित्युपसर्गादसमासेपीत्यत्र निरूपयिष्यामः । विसर्जनीयस्यैव षत्वमिति । मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वे ऽपि ष-

---

षत्वविधानमिति पक्षस्तदा सोपदादावित्यतोऽनुवृत्तस्य प्रथमान्तस्य षष्ठ्या विपरिणामः कार्यं किञ्चात । यद्यविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते तदा निष्टप्तविष्पीतमित्यत्र सत्वस्यासिद्धत्वात् षत्वं न प्राप्नोति । * सत्वस्यासिद्धत्वादिति * । निष्टनमित्यादौ इदुदुपधस्येति सूत्रेणैव सत्वमस्मिन् पक्षे वाच्यं तस्य च इण ष इत्येतद्दृष्ट्याऽसिद्धत्वात्षत्वं न प्राप्नोतीत्यर्थः । इत प्रभृति सर्वत्र विपरिणतस्य स इत्यस्य ष इत्यस्य विसर्जनीयस्येत्यस्य च सम्बन्धः । किञ्च विसर्जनीयस्थानिकस्य सस्य षत्वमिति पुम्पुन इत्यत्र दोषवारणाय स्वीकार्यम् । एवञ्चोत्तरत्र विसर्जनीयस्येत्यस्य मण्डूकानुवृत्तिक्लेशोऽपि नेति । अत्र पक्षद्वयसम्भावनाकाले सोऽपदादाविति सूत्रविहितस्सस्य स्थानेऽनेन षत्वमिति स्वीकार्यम् । सोऽपदादावित्यस्य तु पूर्वोक्तदिशा शेष इति इण ष इत्यस्यापि तत्रितय शेष इत्युक्तम्प्राक् । यदा तु द्वितीयपक्ष एव परिगृह्यते तदाह । * अनव्ययस्येत्यादीति * । भाष्योक्तदूषणेनैवमस्पक्ष दण्डयति । * परस्त्वयमिति * । ननु न योगे योगोऽसिद्ध किन्तु प्रकरणे प्रकरणमिति पक्ष आश्रीयत इति सत्वषत्वप्रकरणस्यैकत्वान्नायं दोष इत्यत आह । * प्रकरणे प्रकरणमसिद्धमिति * । * उपपादयिष्याम इति * । तत्र हि पूर्वपदात्संज्ञायामग इति सूत्रात्पूर्वपदादित्यनुवृत्तौ तदाक्षिप्तसमास एव स्यादित्यसमासेऽपीति । ननु व्याख्यानतः पूर्वपदादित्यस्य निवृत्त्याऽसमासेपीति व्यर्थम् । न च पूर्वपदात्संज्ञायामिति नियमं यावत्तितणत्वप्रतिप्रसवार्थेऽमावश्यकमिति वाच्यम् । पूर्वपदादित्येतद्दृष्ट्योपसर्गादसमास इत्यस्यासिद्ध्या नियमे ऽप्याप्त्वे । न चासमासेऽपीति पदमेव न योगे योगोऽसिद्ध किन्तु प्रकरणे प्रकरणमसिद्धमित्यर्थे ज्ञापकमस्त्विति वाच्यम् । समानपद इत्यस्याखण्डपद इत्यर्थकत्वावश्यकत्वेन पूर्वपदादिति सूत्रस्य विधायकतयाऽसमासेपीत्यस्योक्तरीत्या प्रतिप्रसवार्थकत्वासम्भवादिति चेन्न । स्पष्टार्थत्वादित्येवं निरूपयिष्यत इत्यर्थे । ननु मूलोक्तपक्षे सत्वषत्वयो सर्वत्र सम्बन्धेन नमस्पुरसोरिति सूत्रेणापि षत्वापत्तिरत आह । * विसर्जनीयस्यैवेति * । मण्डूकप्लुत्येति * । इयञ्च भाष्य एव

धायोग सबन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः ।

नमस्तु ॥ इत उत्तरमपदादाविति न संबध्यते व्याख्यानात् । साक्षात्प्रभृतित्वादिति । ऊर्यादित्वाद्गतित्वे स्वरादिपठितस्य तु गतित्वाभावस्तेन साक्षात्प्रभृतिषु च्व्यर्थवचनेऽपि न क्षतिरित्यन्ये ।

इदुदु ॥ अप्रत्ययस्येति पर्युदासो लाघवात् । तत्र प्रत्ययपदं तत्सम्बन्धिपरं तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः, अत एव कविभिः कृतमित्यादौ न षत्वं, स्पष्टञ्चेदं भाष्ये इत्यन्यत्र विस्तरः । एकादेशशास्त्रेति । एकादेशशास्त्रस्य पररेफस्या-

---

स्पष्टा । *इत उत्तरमिति* । इत प्रभृतीत्यर्थः । *व्याख्यानादिति* । नारायणश्च मस्कृत्येत्यादि न्यस्यदृढा मूलकादिरयम् । ननु नमस्करोतीत्यादौ नमःशब्दस्य च्व्यर्थवृत्तित्वाभावात्साक्षात्प्रभृतित्वादित्यसङ्गतमत आह । *ऊर्यादित्वादिति* ।

* लाघवादिति * । वाक्यभेदाभावेनेत्यादि । प्रत्ययभिन्नस्येति व्याख्यानञ्च युक्तमित्याह । * तत्र प्रत्ययपदमित्यादि * । ननु विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वमित्यत आह । * एकादेशशास्त्रेति * । न च कस्कादिगणे भ्रातुष्पुत्रशब्दपाठस्य ज्ञापकत्वमसङ्गतम् । इदुदुपधेति षत्वे कर्तव्ये एकादेशस्य षत्वतुकोरित्यसिद्धतया उदुपधत्वाभावेन षत्वाप्राप्तौ तत्पाठेन षत्वस्य साध्यत्वादिति वाच्यम् । षत्वतुक इति सूत्रे पदान्तपदाद्योरेकादेशोऽसिद्ध इति वार्तिकात्तादृशविषय एवासिद्धत्वविधानात् । इदञ्च वार्तिकमावश्यकम् । अन्यथा शचहुषु परिवीषु सुक्षेच्छत्रम् । सुक्षेच्छत्रमित्यादौ षत्वतुकोरसिद्धत्वापत्तेः । यत्तु श्व साच्यण सम्प्रसारणमिति सूत्रं कार्यम् । सम्प्रसारणाच्चेति सूत्रञ्च न कार्यम् । एवञ्च शवह्वयित्यादावेकादेशस्यैवाभावेनासिद्धत्वशङ्कैव नेति षत्वविषये पदान्तपदाद्योरिति नियमो न स्वीकार्यः । एवञ्च भ्रातुष्पुत्र इत्यादावेकादेशस्यासिद्धत्वात् उदुपधत्वाभावेन षत्वाप्राप्तौ षत्वसिद्ध्यर्थं कस्कादिषु भ्रातुष्पुत्रशब्दपाठश्चरितार्थ इति ज्ञापकत्वोपपादनमसङ्गतमिति । तन्न । श्वानमाचष्टे शावयतीति रूपानादिमते नस्तद्धित इति टिलोपे सम्प्रसारणानापत्तेः । न च श्वादीनां सम्प्रसारणे नकारान्तग्रहणमिति वार्तिकविरोधात्कथमत्र सम्प्रसारणमिति वाच्यम् । टिलोपस्याभीयासिद्धत्वेन सम्प्रसारणप्राप्तेः । वस्तुतस्तु शुनयतीत्येव युक्तम् । षपूर्वेतिसूत्रभाष्ये प्रकृतिभावस्याल्लोपोऽन इत्येतद्बाधकतया अभ्युक्तत्वेन नैकाजित्येव सिद्धे प्रकृतिग्रहणेन प्रकृतिभावे कर्तव्ये न्यायाप्रवृत्तिबोधनेन वा येन नाप्राप्तिन्यायस्यात्राप्राप्त्या नस्तद्धित इति प्रकृतिभावेन टिलोपस्य दुर्लभत्वात् । तर्हि साच्यण इति न्यासे दोषाभाव इति चेत् । अच्साहित्य स्वाव्यवहितपूर्वत्वघटितत्वसम्बन्धेनेव स्वाव्यवहितोत्तरत्वसम्बन्धेनापि स्यादिति मघोन इत्यसिद्ध्यापत्तेः ।

निकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोध्यम् । स्पष्टश्चेदमत्र सूत्रे उरण् रपर इति सूत्रे च भाष्यइत्यन्यत्र विस्तरः । प्रत्ययभिन्नसवन्धिन इति तु नार्थः । अग्निः करोतीत्यादावपि प्रत्ययभिन्नसमुदायसवन्धित्वेन पत्वापत्तेः । तपरकरण किम् । गीः करोति । उपधाग्रहण व्यर्थम् । उपधाग्रहणं न करिष्यते इदुद्भ्यां तु पर विसर्जनीय विशेषयिष्याम इति हयवरट्सूत्रभाष्योक्तेः ॥

तिरसो ऽन्य ॥ अत्र गतिग्रहण नानुवर्तते पराभवे तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात् ।

द्विस्त्रि ॥ कृत्वो ऽर्थेइति न विसर्गविशेषण चतुःशब्दे ऽसंभवात् । किं तु द्विरादीनामित्याह । वर्त्तमानानामेषामिति । इसुसोरिति सूत्रवक्ष्यमाण-

---

शूनस्तिरिति निर्देशस्य स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धस्यैव निषेधे तात्पर्यग्राहकत्वाश्रयणे प्रतिपत्तिगौरवम् । किञ्च शुन इत्यत्र श्वन्शब्दस्यान्तोदात्तस्य स म्प्रसारणे वकारस्य ससनधर्मणोऽनुदात्तोकारे पूर्वरूपे एकादेश उदात्तेनोदात्त इत्युदात्तस्योकारस्य श्रवण भवति । यदि तु साच्कस्य समुदायस्य सम्प्रसारणस्थानित्वमिष्यते । तदा समुदायस्योदात्तत्वाभावेन तदादेशस्योदात्तत्वन्न स्यात्किं तु समुदायस्योदात्तत्वाभाववत्त्वरूपानुदात्तत्वेन तत्स्थानिकसम्प्रसारणस्याप्यनुदात्तत्वापत्ति । साच्यण इतिश्रवणेनानुदात्तत्वोदात्तत्वयुक्तयोर्यकाराकारयोर्यान्तरतम स एव भविष्यतीति चेत्स्वरितत्वापत्तिरिति शुनो दन्तेत्यस्याते शुन इति निर्देशस्य वा आद्युदात्तत्वार्थे ज्ञापकत्वाश्रयणे तु सुतराङ्गौरवम् । किञ्च मघवन्शब्दान्मघवानमाचष्ट इत्यर्थे णिचि टिलोपे पूर्ववट्टिलोपस्यासिद्धत्वात् सम्प्रसारणेन वकारस्य उकारे घकाराकारेणादुगुणे क्विप्यमृगसो औतोमृशसोरित्यात्वे मघाम् मघा इति भवति सम्प्रति तु वकारस्य स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धेनाच्साहित्याभावात्सम्प्रसारणाभावापत्तौ मघवम् मघव इति स्यादित्यपि बोध्यम् । अभिव्यक्तेतिन्यायस्तु पदकार्य एवेति दिक् ।
* पत्वापत्तेरिति * । तथा च वैयधिकरण्येन सम्बन्धो न युक्त इति भाव ।
* हयवरट्सूत्रभाष्योक्तेरिति * । अयोगवाहानामविशेषेण पाठ इति पक्षे उपधासंज्ञारूपस्य प्रयोजनस्य खण्डनाय तत्रैवमुक्तम् ।

* तिरस्कारशब्दस्येति * । अनादर परिभव परिभावस्तिरस्क्रियेति कोशात् ।

* विसर्गविशेषणमिति * । तस्य प्रधान्यात्तथा प्रसज्यते परन्तु लक्ष्यानुरोधाच्छ्रुतत्वाच्च द्विरादीनामेव विशेषणमिति भावः । लाघवसम्भावनयाह ।

रीत्या सुच इति सूत्रयितुमुचितम् । सुजन्तान्तस्य पदस्येत्यर्थात् । चतुष्कपाल इति । इदुदुपधस्येति नित्यं षः । चतुःशब्दो ऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासो न । अत एव चतुष्पाद्गर्भ्यो दज्जित्यादिनिर्देशाः सङ्गच्छन्ते । चतुष्पञ्चाशदित्यत्रापि षत्वं भवत्येव । न चेदुदुपधस्य सस्य यो विसर्ग इति इयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम् । विसर्गस्य पाठाभावेनोपधात्वासम्भवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात् । अत एव समः सुटीति सूत्रभाष्ये सपुस्कानामित्यनेन रुविधिरेवास्त्विस्याशङ्क्य पुंस्कामेत्यत्र षत्वापादनं सङ्गच्छते । न च कृत्वोर्थे इत्येव कृत्वोर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थात्र पञ्चकृत्वः करोतीत्यादौ दोषो, नापि चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति व्यर्थमिति वाच्यम् । कृत्वो ऽर्थे इत्यस्यासिद्धत्वेन चतुःशब्दे इदुदुपधस्येति नित्यष-

---

* ह्रस्वात्तादौ तद्धिते इति सूत्रवक्ष्यमाणेति * । सुच प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया सुजन्तस्य पदस्येत्यर्थे परमद्विष्करोतीत्यादौ न स्यादतो वक्ष्यमाणरीत्या विशेष्यसत्वे ऽपि शब्दस्वरूप विशेष्यमादाय तदन्तविधौ पुनस्तदन्तस्य पदविशेषणतया सुजन्तान्तस्य पदस्येत्यर्थः स्वीकार्य इति भाव । * अव्युत्पन्न इति * । एवञ्चोणादिषु चतेरुरन्निति पाठोऽयुक्त इति भाव । अत्र मानमाह । * अत एवेति * । अव्युत्पन्नत्वादेवेत्यर्थः । आदिना चतुष्पादो गर्भिण्येत्यस्य सङ्ग्रह । * भाष्यतात्पर्यादिति * । एवञ्च तत्रत्य सग्रहणं विसर्गस्थान्युपलक्षणमिति भाव । उपलक्षणत्वे भाष्यान्तर साधकमित्याह । * अत एवेति * । उपलक्षणत्वादेवेत्यर्थः । * षत्वापादनम् * । इदुदुपधेति सूत्रेण । अन्यथा तस्य सस्य निरुक्त्याभावाद्भाष्यमनुपपन्नं स्यादिति भाव । अत्र लाघवाभिप्रायेणैव शङ्कते । *न चेति*। पूर्वोक्तसुच इतिन्यासे तदन्तविधिद्वयमस्मिन्न्यासे तु तथा नेति भाव। चतुःशब्द इति * । एवञ्चतुष्करोति चतुः करोतीति रूपद्वयमिष्यते तन्न सिध्येत् । यदा तु द्विस्त्रिश्चतुरिति पाठस्तदा चतुःशब्दोपादानसामर्थ्यान्नासिद्धत्वमिति भाव । नन्वेव सुच इति सूत्रयितुमुचितमिति पूर्वग्रन्थविरोधस्तादृशन्यायस्य द्विष्करोति त्रिष्करोतीत्यत्र चरितार्थतया चतुष्करोतीत्यत्रास्यासिद्धत्वान्नित्यषत्वापत्ते । न च द्विष्करोति त्रिष्करोतीत्यत्र विकल्पस्य ह्रस्वात्तादावित्यनेनैव सिद्धौ सुच्सूत्र चतुष्करोतीत्यत्रैव विकल्पार्थमित्यारम्भसामर्थ्यादसिद्धत्वन्न भविष्यतीति वाच्यम् । देवदत्त पचतु द्विः करोति यज्ञदत्त पाकमित्याद्यर्थमस्यावश्यकत्वात् । न च सुच इति सूत्रानन्तरं र इति पठनीयम् । सुच इत्यस्य तत्रानुवृत्ति कार्या । वर्णग्रहणे तदन्तग्रहणमिति पूर्वोक्तरीत्या सुजन्त सुजन्तान्त च यत्पद रेफान्तञ्च तदवयवस्य विसर्गस्य वा षत्वमित्यर्थान्न पूर्वोक्तस्थले नित्यषत्वापत्तेरिति वाच्यम् । सूत्रान्तरकरणे पदलाघवसम्भवे ऽपि सुच्पदे स्वरितत्व

स्वापत्तेः । प्रकरणे प्रकरणमसिद्धमिति पक्षस्तूपसर्गादसमासे ऽपीति सूत्रे कै-
यटे पूर्वदादिति सूत्रे भाष्ये च दूषित एव । उपसर्गादिति सूत्रे चोपपाद-
यिष्यते । किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणे ऽभ्यग्राहितकरणे एव त्रि-
पाद्यासिद्धत्वं स्यान्न सपूर्णसप्ताध्याय्याम् । किं चास्याधिकारत्वात्प्रतिसूत्र-
मुपस्थित्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः ।

इसुसोः ॥ अत्रेसुसोः प्रातिपदिकावयवयोर्ग्रहणमिति पाठः । तेन पेचुः
काष्ठैः, सख्युः पाक, इत्यादौ षत्वं न । नित्यं समासइति सूत्रोदाहरणवि-
षये तयोरेव संभवेनार्थाधिकारानुरोधात्साहचर्याच्च इसुसन्तपदावयवविस-
र्गस्येत्यर्थः । पदस्येत्यधिकारात् । न च प्रत्ययग्रहणपरिभाषया परमसर्पि-
ष्करोतीत्यादौ षत्वानापत्तिरवयवस्येसुसन्तत्वे ऽपि उत्तरपदत्वे चेति निषे-
धेनापदत्वादिति वाच्यम् । अनुत्तरपदस्थस्येति निषेधेन क्वचिदुपात्तवि-
शेष्यसत्त्वे ऽपि शब्दरूपविशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपविशेष्य-
मादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतयेसुसन्ता-
न्तस्येत्यर्थेनादोषात् । अत एव वनोरचेत्यादौ न दोषः । ब्राह्मणस्य सर्पि-

---

कल्पनेन पृथग्वाक्यार्थकल्पनेन च ज्ञानगौरवस्य स्पष्टत्वादिति चेन्न । इण षः
इतिसूत्रानन्तरं सुच इति पठनीयमित्यभिप्रायात् । ष इति धा शरीत्यसौ चेति
चानुवर्तते । सुजन्ते इकारोकारोपधत्वस्यैव सम्भवादिण इति नापेक्ष्यते । यदि
धाशब्दस्य मण्डूकप्लुत्याऽनुवृत्तौ क्लेश इत्युच्यते । तदा स्वस्थान एव सुच इति
सूत्रानन्तरं र इत्येव पठनीयम् । अथ वा त्रयाणामेकशेषेण सुचामिति पठनीयमित्य-
पयादस्यादसिद्धत्वम प्रसञ्जनीयमित्यभिप्रायाद्विति दिक् । * अन्यत्र विस्तर * ।
भाष्यादौ विस्तर । तदुक्तम्भाष्ये । अधिकार प्रतियोगन्तस्यानिर्देशार्थ इति
योगेयोगे उपतिष्ठते इति । तथा सुच इत्येव सूत्रमस्तु । चतु शब्द नित्यषत्वा-
पत्तिस्तु न । अस्मिन् सूत्रे इदुदुपधेत्यतो योमयोरनुवृत्तिस्तत्रेदुपधेत्यस्य चारि-
तार्थ्यम्युदुपधांशे चारितार्थ्याभावादसिद्धत्वापत्तिर्नेति । एतेन यत्सुच इति न्यासे
प्रत्ययग्रहणपरिभाषया यस्तदन्तांशस्सोऽपि येन विधिरिति सूत्रबोधित एवेति
निर्दिश्यमानपरिभाषया निर्दिश्यमानसुच एव षत्वं स्यान्न [illegible] तदन्तस्येति चतु
ष्करोतीत्यस्यासिद्धिदूषणन्तदपि निरस्तम् । उदुपधत्वांशे विधानसामर्थ्येन
निर्दिश्यमानपरिभाषाया अप्रवृत्तेरिति । अपि च कृत्वोर्थे इति न्यासपक्षेऽपि
उदुपधेत्यस्यांशस्य चारितार्थ्यविरहेणासिद्धत्वस्य परिहार कर्तुं शक्य इति
द्रष्टव्यम् ॥

यदुक्तम्प्रातिपदिकावयव इति तत्र मानमाह । * नित्यं समास इतीति * ।
* अत एवेति * । तदन्तविधिज्ञर्थसिद्ध्यर्थमुपात्तविशेष्यसत्त्वेऽपि शब्दस्वरूप

ष्करोतीत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं । तस्यैकार्थीभावसामर्थ्यविषयत्वात् । अधात्वभिहित समानाधिकरणसमर्थत्वदित्युक्तेः सर्पिष्कालकमित्यादौ न षत्वम् । अधात्वभिहितमित्युक्तेः सर्पिष्पीयतइत्यत्र षत्वसिद्धिः । धातुसहचरितप्रयोगाभिहितार्थेन समाधिकरणमसमर्थत्वन्नेति तदर्थः । यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति आयनेयीनीति सूत्रे भाष्ये स्पष्टमुक्तं । तत्र हि शङ्ख इत्यादावादेशानाशङ्क्योणादीनां प्रतिषेधो वक्तव्य । प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमित्युक्तम्, अपामन्तात्प्राप्येत्विष्णुभ्विति सूत्र पाणिनेर्व्युत्पत्तिपक्षस्यापि स्वीकारइत्यस्य गमकम् । व्याकरणान्तररीत्यैव वा तत्सूत्र, सर्वनामस्थानमिति महासञ्ज्ञावत् । अत एव भाष्ये व्युत्पन्नानीत्येवोक्तम् । न त्वनेकार्था अपि धातव इतिवदव्युत्पन्नानीत्यप्युक्त, तदा इदुदुपधस्येति नित्ये षत्वे प्राप्ते ऽनेन विकल्पे इति प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः परमसर्पिष्करोतीत्यादौ षत्वविकल्प. सिद्धः । नित्य समास इति सूत्रमनुत्तरपदस्थस्येति प्रतिषेधार्थम् । नित्यग्रहण तु न कर्तव्यमेव । समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः । सर्पिष्टेत्यादौ षत्व त्वत्र पक्षे क चिदन्यदेवेत्यर्थकाद् बहुलग्रहणादितिस्पष्ट भाष्ये । व्यपेक्षेति । व्याख्यानात् । एकार्थीभावसामर्थ्यग्रहणे परमसर्पि कुण्डिकेत्यादौ समासे विकल्पापत्ति । अनुत्तरपदस्थस्येनिषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भाव. । नन्वनेनैव सिद्धे कस्कादिषु

---

विशेष्यमादायाप्री तदन्तविधिस्वीकारादेवेत्यर्थ । अत्र द्विसर्पि प्रिय इत्येतद्व्यावर्तकतयाऽनुत्तरपदस्थस्येत्यस्य चारितार्थ्यं सम्भवतीति शङ्का यद्यपि भवति । तथापि भाष्योक्तस्य परमसर्पि कुण्डिका इत्यस्योपपत्तिस्तदन्तविधिद्वय विना न भवतीत्यभिप्राय । * तस्यैकार्थीभावसामर्थ्येति * । स्पष्टञ्चेदम्भाष्ये । * अधात्वभिहितमिति * । समर्थसूत्रभाष्य एव स्पष्टम् । ननु सर्पिष्पीयत इत्यत्र कर्मणो न धात्वभिहितत्वमत आह । * धातुसहचरितेति * । तथा च धातुपदस्य धातुसहचरिते लक्षणेति भावः । * अनेन * । इसुसोरित्यनेन । नन्वेव समास इदुदुपधेत्येव सिद्धे नित्य समास इति व्यर्थमत आह । * नित्य समास इतीति * । * प्रतिषेधार्थमिति * । तथा च परमसर्पि कुण्डिकेत्येव भवति । न न्वस्मिन् पक्षे सर्पिष्टेत्यत्र सकारस्य षत्वन्न स्यात् सकारस्यादेशप्रत्ययावयवभिन्नत्वादत आह । * व्याख्यानादिति * । उत्तरसूत्रे समासग्रहणस्य सत्त्वेन तस्यैकार्थीभावविषयकतया इसुसोरिति सूत्रे सामर्थ्यस्य व्यपेक्षाविषयकत्व

सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह । कस्कादिष्विति । एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमित्यपास्तम् । व्यपेक्षाविरहे ऽपीति । आनय सर्पिः कुण्डिका तिष्ठतीत्यादौ । व्यपेक्षायामिति । इदं सर्पिष्कुण्डिकाया इत्यत्र प्रत्ययभिन्नविसर्गस्येत्यर्थमिदुदुपधस्येत्यत्र व्याचक्षाणानां व्याख्यादर्शकृतां मते ऽव्यपेक्षयां तेन सिद्धेरिति भावः । एतेन कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित इत्यपास्तम् । प्रत्ययसंबन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेक्षायां विकल्प एवेति बोध्यम् ।

अतः कृ ॥ कृशब्देन तदादिग्रहणं समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । विभ्वदेवयोरिति सूत्रे वप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात् । अयस्कुम्भीत्यादौ लिङ्गविशिष्टपरिभाषया सत्त्वं बोध्यम् । भास्कर इति । तपरकरणादतः कृइत्यस्याप्राप्तिः ॥

इति विसर्गसन्धिः ॥

यत्तु स्वौजसिस्यत्र रुरेव पाठ्यः । सर्वत्र सुग्रहणे रुग्रहणे रुग्रहणमेवास्त्विति तन्न । यशोभिरित्यादौ रोरसिद्धत्वादुत्वानापत्तेः । अतो रोरित्यस्य प्रथमैकवचने चारितार्थ्यात्, तद्ध्वनयन्नाह । स्वौजसेति । पदस्येत्यन्त्यस्य तरफ-

---

मित्येव रूपादित्यर्थ । * एतेन * । तत्र चारितार्थ्येन । * तेन * । इदुदुपधेत्यनेन । * एतेन * । व्यपेक्षायामित्यार्थश्चेतिकथनेन । * तस्य * । कस्कादिषु चेत्यस्य ॥

* समासाक्षिप्तेति * । नित्यं समास इति सूत्रात्समासग्रहणानुवृत्ते । ननु समासाक्षिप्तोत्तरपदस्योपस्थितत्वात्कुम्भादिरूपस्यैव ग्रहणं स्यादित्ययस्कुम्भीत्यत्र न स्यादत आह । * लिङ्गविशिष्टेति * ॥

इति विसर्गसन्धि ॥

लाघवमूलकम्प्राचां व्याख्यानन्दूषयति । * यत्त्विति * । न च ससजुष इति सूत्रस्यान्यार्थमावश्यकतया प्रकृते सकारस्य रेफस्य वोच्चारणे को विशेष इति वाच्यम् । प्रक्रियालाघवसत्त्वात् । *प्रथमैकवचन इति* । न चैवं सति ससजुष इतिसूत्रविधेयरुशब्दे उकारोच्चारणं व्यर्थमिति वाच्यम् । भोभगो इति सूत्रे उभयोर्ग्रहणसम्पादनेन चारितार्थ्यात् । न च यदि रोरसिद्धत्वन्तदा यदि सुस्रोतः इत्यादौ रुत्वस्यासिद्धत्वादुत्वमेव प्राप्नोतीत्यप्यनभ्रहणसामर्थ्यादसिद्धत्वाभाव

लितमाह । पदान्तस्येत्यादिना । सजूरित्यत्र व्यपदेशिवद्भावेन सिद्धि' । व्यपदेशिवद्भावो ऽप्रातिपदिकेन ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति परिभाषाद्वय प्रत्ययविधिविषयमित्यसमासे निष्कादिभ्य इत्यत्र भाष्ये स्पष्टम् । इदञ्चाश्त्वापवादः । श्रेयानित्यादौ त्वस्यासिद्धत्वात्संयोगान्तलोप एवेति दिक् ॥

यत्वस्यापवाद इति । यदीद न स्यात्तर्हि यत्व प्राप्नोतीत्येतावता' । कृते त्वस्मिन्यत्वस्यासिद्धत्वादुत्वगुणयोर्यत्वाप्राप्तिरेवेति भावः ।

प्रथमयोः ॥ व्याख्यानात्प्रथमयोरित्यनेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहण तदाह । प्रथमाद्वितीययोरिति । पूर्वग्रहण किम् । अग्नीइत्यत्र पक्षे परसवर्णो मा भूदिति । दीर्घग्रहण तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहण तु स्पष्टार्थम् । पूर्वस्याद्दीर्घत्वात्पूर्वजातीय इत्यर्थेनेष्टसिद्धे-

---

इति वाच्यम् । देवदत्ता ३ गतो ग्रामान् ३ किमित्यादावनन्त्यस्यापीति प्लुतविषये तस्य चारितार्थ्यात् । * प्रत्ययविधिविषयमिति * । ज्ञापकस्य सजातीयापेक्षत्वात् ।*उत्वापवाद इति*। तस्य स्थाने प्राप्तस्य उत्वस्य निरवकाशत्वेन रुत्वप्रसङ्गविषये येन नाप्राप्तिन्यायेन च प्राप्तस्य उत्वस्य च बाधक इत्यर्थ ।

ननु उत्वदृष्ट्या यत्वस्यासिद्धत्वात्तेन येननाप्राप्तिन्यायाभावाद्यत्वापवादत्वोक्तिरसङ्गतेत्यत आह । * यदीदमिति * । * इदम् * । उत्वशास्त्रम् । * कृते त्वस्मिन् * । अस्मिन् सूत्रे । एतेन शास्त्रासिद्धत्वस्यैव सिद्धान्तितत्वादिदमित्याद्यसङ्गतमित्यपास्तम् ।

*व्याख्यानादिति* । अत्र प्रथमयोरित्यनेन न यस्य कस्य चिद् ग्रहणकिं तु घा सुपीत्यत सुब्ग्रहणानुवृत्तेस्सुब्विभक्त्योरेव। तयोरपि प्रथमवचनयो । अचीत्यधिकारात् तस्माच्छस इत्यत्र छतस्य पूर्वसवर्णदीर्घबोधकत्वच्छन्दस्य दीर्घाज्जसीति निषेधसूत्रस्य च दर्शनमूलकादित्यर्थ । *पक्ष इति* । पूर्वपरयोरित्यनेन पूर्वपरयोरुपस्थितत्वात्पर्यायेण कदाचित्परसवर्णस्यापि प्राप्तिरिति भाव । * त्रिमात्रो माभूदिति * । आन्तरतम्यात्प्राप्त इति भाव । * पूर्वजातीय इति*। तथा च पूर्वस्याद्दीर्घत्वात्पूर्वशब्दस्य लक्षणया पूर्वजातीयबोधकतया भविष्यतीति भाव । न च यत्र पूर्वो दीर्घस्तत्रास्य चारितार्थ्यात्कथ लक्षणेति वाच्यम् । दीर्घाज्जसि इचि च निषेधादप्रवृत्तेरिष्टतया यत्र पूर्व आकार परश्शस् तत्र सवर्णदीर्घस्यैव प्राप्त्येष्टस्य सिद्धे दीर्घकारादेशशासि प्रवृत्तिरस्य वाच्या, तथा चास्यालब्धविषयत्वापत्तिरतो लक्षणाया आवश्यकत्वात् । ऋकारलृकारयो सवर्ण

रिति स्पष्ट भाष्ये । आद्गुण इति । तौ सदिति निर्देशेन, भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भाव. । देवदत्तहन्तृहतन्यायस्य तु नात्र मवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवन देवदत्तहननमसक्तहनने त्वस्त्येव देवदत्तजीवनं, मकृते तु न हननस्थानीया वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये मवृत्तिः, किं तु हननोद्यमसजातीय मसक्तिमात्र मसक्तस्य निषेधे बाध्योज्जीवनं न बाधकामिति स्पष्ट चेद स्वादिष्वितिसूत्रे कैयटे । सुस्रोत इति । सुस्रोतस्शब्दः कस्य चित्सञ्ज्ञा, सम्बुद्धौ दूराद्धूते चेति प्लुतः । तत्सामर्थ्यादिति । मतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थ. । आश्रयात्सिद्धे इति भाष्योक्तेः पयस्यटति पयो ददातीत्यर्थे आगच्छ हे पयो३द् आगच्छ पयो३देत्यादावेकपदस्थवर्णद्वयसापेक्षमन्तरङ्गमुत्वं मति वाक्यसम्पादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादुत्वे प्लुतसिद्धिः, अन्यथा प्लुतस्योत्वदृष्ट्या सिद्धत्वात्प्लुते आद्ये ऽप्लुतपरत्वाभावादन्त्ये ऽप्लुतात्परत्वाभावादुत्व न स्यात्, परिभाषादृष्ट्या बहिरङ्गासिद्धत्वे ऽपि न क्षति', स्वदृष्ट्या ऽसिद्धस्यापि परं मत्यसिद्धत्वमतिपादनसभवात् । स्वदृष्ट्या ऽविद्यमानस्य पर मत्यविद्यमानत्वमतिपादनवत् । अन्तरङ्गस्यासिद्धत्वे तु मतिपाद्याभावे इव क मत्यसिद्धत्व मतिपाद्येत । तत्राद्ये देरित्यद्शब्दाकारः प्लुतो ऽन्त्ये रेफदकारसयोगपरत्वेनाकारस्य गुरुत्वात्

---

निधिरित्यनेन समानजातीयत्वमेवातिदिश्यत इति गमृनित्यादौ नानुपपत्ति । नु वृद्धिमाप्तिकालोत्तरकालिकमाभिकर्तृपूर्वसवर्णदीर्घस्य नादिचीत्यनेन निषेधे भ्रष्टावसरन्यायेन वृद्धिरचीति वृद्धिर्न स्यादत आह । * भ्रष्टावसरेति * । *सुस्रोतस्शब्द इति * । एतेनैतदकारान्तस्य रूपमिति कस्य चित्प्रलपितमपास्तम् । न वतो रोरेतिसूत्रेऽप्लुतस्य निमित्तत्वेनाश्रयणञ्च तु प्लुतस्येति तत्सामर्थ्यादित्यसङ्गतमत आह । * मतियोगित्वेनेति * । ननु यदि सामर्थ्यादुत्वदृष्ट्या प्लुतस्य सिद्धत्वन्तदा वक्ष्यमाणरीत्या उत्वम् स्यादित्यत आह । * पयस्यटतीति * । अटते क्विवाचे । * पयो ददातीति * । दाधातोरातोऽनुपसर्ग इति क । मतियोगित्वेन प्लुतस्याश्रयणात्पूर्वत्रासिद्धत्वमेव बाध्यते न त्वन्तरङ्गपरिभाषया बोध्यस्यासिद्धत्वस्य बाधो मानाभावात् । ननु परिभाषाया षाष्ठीत्वादेतद्दृष्ट्या प्लुतस्यासिद्धत्वात्कथम्बहिरङ्गपरिभाषाप्राप्तिरत आह । * परिभाषेति * । * स्वदृष्ट्याऽविद्यमानस्येति * । अयञ्च न्यायो लोके प्रसिद्ध' । न ये-

गुरोरिति प्लुतः । आश्रयेण तु येन नाप्राप्तिन्यायेन प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम् । सुस्रोता इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात् । प्लुतो ऽन्तरङ्गो भिन्नवाक्यस्थाकारसापेक्षत्वादुत्त्वं बहिरङ्गमिति स्पष्टं भाष्ये ।

उकारानुबन्धेति । उकारेत्सञ्ज्ञकरेफस्येत्यर्थः इति भावः, तेन देव रुहीत्यादौ न दोषः ।

भोभगो ॥ रो' सुपीत्यतो रोरिति वर्त्तते न तु रोरीत्यतो र इति मातरश्चेत्यादावतिप्रसङ्गात् । अशब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमाभिमेत्याह ।

---

* आश्रयेण त्विति * । * प्रत्यक्षत्वेन चेति * । एतेन पूर्वत्रासिद्धत्वस्य शीघ्रोपस्थितिकत्वात्तद्बाधेनोपपत्तौ विलम्बोपस्थितिकस्यानुमानिकासिद्धत्वस्य बाधे मानाभाव इति भाव । * स्पष्टम्भाष्य इति * । अतो रोरप्लुतादप्लुत इति सूत्र इत्यर्थः । के चित्तु एतेन प्लुतप्रगृह्या इति सूत्रे प्लुतस्य सिद्धत्वज्ञापनद्वारा एकादेशात् प्लुते विप्रतिषेधात्प्रकृतिभाव । देवदत्ता ३ अत्र न्वमसि इति भाष्योक्ते' प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वादेकादेशस्य तु पदद्वयापेक्षत्वाद्बहिरङ्गत्वाच्चिन्त्यतोक्तौ प्लुतस्यापि वाक्यत्वसम्पादकपदान्तरसापेक्षतया एकादेशसमत्वाच्चिन्त्यमेव चिन्त्यमिति विवरणोक्ति प्रत्युक्ता । वाक्यस्य टे' प्लुतार्थं देवदत्त ३ इत्यत्रावेहीतिशेषपूरणस्यावश्यकत्वाद्वाक्यद्वयसापेक्षैकादेशस्यैवमपि बहिरङ्गत्वादित्याहु । तन्न । शेषपूरण इत्यसङ्गतम् । अन्ते पूर्वे एव शेषपूरणव्यवहारात् । वाक्यसापेक्षैकादेशस्येत्यपि चिन्त्यम् । वस्तुतो वाक्यद्वयसापेक्षत्वन्तदवयववर्णद्वयसापेक्षतया यद्यप्यस्ति तथापि वाक्यत्वेन वाक्यद्वयापेक्षायाम्मानाभाव । प्लुतस्य यादृशसमुदायसापेक्षत्व तादृशसमुदायस्य शब्दतोऽपेक्षाया एकादेशस्य विरहादेकादेशस्यैवान्तरङ्गत्वात् । यद्येवन्देवदत्ता३ अत्र न्वमसीतिवाक्यस्य का गतिरिति चेत् । अत्र के चित् । एतादृशे विषये द्वयोर्वाक्ययो सत्कृतयोरयम्प्रयोग एवञ्च प्लुतस्य प्रकृतिभाव इति । अपरे तु वस्तुतो वाक्यद्वयावयवसापेक्षैकादेशस्यापि प्लुतसमत्वादत्र बहिरङ्गपरिभाषाया विषयत्वमिति सङ्गिरन्ते । यदि त्वेकादेशस्य वर्णमात्रापेक्षयान्तरङ्गत्वन्तदा सपादसप्ताध्यायीस्थेऽप्यन्तरङ्गे लक्ष्यानुरोधादनित्यत्वेन बहिरङ्गपरिभाषाया अप्रवृत्तिरिति दिक् । उकारानुबन्धग्रहणादित्यस्योकारस्यानुबन्धस्य स्थानित्वेन ग्रहणमित्यर्थस्य प्रकृते न सम्भवः । उकारस्येत्सञ्ज्ञालोपाभ्यामपहारात्किन्तु बहुव्रीहिमभिमेत्याह ।

* उकारेत्सञ्ज्ञकेति * । आदिना तन्मूलमित्यस्य सङ्ग्रहः ।

* अकारान्तद्वन्द्वेनेति * । [illegible] चैवमकारस्य पूर्वनिपातापत्तिरिति वाच्यम् ।

एतत्पूर्वस्येति । नन्वेवं पूर्वरूपापत्तिरत आह । असन्धिरिति । भगोअघोशब्दौकारयोरकाराभ्यां मामपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः । इद मार्चामनुरोधेन । वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिन्यार्य्य एवेति बोद्धयम् । न ह्ययमिति । इदमर्वाचामनुसारेण । भाष्ये तु रेफस्य विसर्गस्थानित्वेन तद्वृत्तिरुत्वाश्रयमपीदमल्विधिरेव । स्थान्यल्वृत्तिधर्माश्रयत्वात् । अग्रहीदित्यत्र च दीर्घे लोपे चेट्त्वेनैव निवेश इति विशेषो ऽतः पयःस्वित्यादौ दोषः । तत्र हि रोः सुपीति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाक्यवृत्त्यार्थिकार्थमादाय तु निषेधकानीति तत्रापि रो रेफस्य विसर्ग इत्यर्थे रुग्रहणं व्यर्थमित्युक्तम् । नन्वेवं हे रामेत्यादौ संबुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्याल्धर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न । आनुमानिकादेशस्य रामेत्यस्य स्थानिवद्भावेन सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः । लक्षणपदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वातिदेशात् । एवं दीर्घाहो निदाघेत्यादौ हल्ङ्याब्भ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्यासुपीति रुत्वनिषेधस्यादेशे दीर्घाहन्शब्दे ऽतिदेशेन प्रवृत्त्या न रेफ इति दिक् । तेषां रोरिति । इदञ्च निपातानाख्याय विभाषा

पूर्वनिपातप्रकरणस्यानित्यत्वात् । * भाष्येत्विति * । स्थानिवत्सूत्रव्याख्यावसरे यदत्र वक्तव्यन्तदुक्तम् । * वाक्यवृत्त्येति * । वाक्यनिष्ठा या वृत्तिः शक्तिस्तया नियमशास्त्रघटकशब्दोऽर्थबोधक इत्यर्थः । ननु यदि प्राचोक्तरीत्याऽसाधारण्यनिवेशस्तदाहे रामेत्यादौ पदत्वासिद्धिरित्याशङ्कते । * नन्वेवमिति * । पदत्वाभावे सति हे राम पाहि मामित्यादौ निघातो न स्यादिति भावः । *लक्षणपदोपादानेनेति * । प्रत्ययलोपे प्रत्ययवदिति न्यासेन सिद्धे लक्षणपदोपादानेनैतादृशार्थलाभः । * प्रत्ययनिमित्तककार्यस्येति * । अस्य प्रकृतिसम्बन्धिन इत्यादि० । अत एव नक्तभिक्ष इत्यादौ नैसादि । न चैवमपि स्थानिवन्न्यायेनैसादेशः कस्मान्न भवतीति वाच्यम् । अच परस्मिन् पूर्वविधाविति सूत्रे पूर्वविधिशब्दे पूर्वशब्दोत्तर स्वशब्दाश्रयणेन आयरूपस्य कार्यस्य चिकीर्षायामभावात्मकादेशस्थानिनः स्थानिवत्पदघटकस्थानिपदेनाग्रहणबोधनात् । * तन्निमित्तकव्यवहारस्येति * । प्रकृतिनिष्ठप्रत्ययपरत्वव्यवहारस्येत्यर्थः । एतेन श्रूयमाणप्रत्ययान्ते यो व्यवहारस्तस्य सर्वत्र स्थानिवत्सूत्रेणैव सिद्धिरिति सूचितम् । कार्यातिदेशस्य फलमाह । * एवमिति * । प्रथमप्रकारेणेत्यर्थः । तथा न केवलं सम्बुद्ध्यन्ते एव स्थानिवत्त्वेन प्रत्ययान्तत्वबुद्धिः किन्तु राजपुरुष इत्यादावपि स्थानिवत्त्वेनेति बोध्यम् । * न रेफ इति * यद्यपि प्रत्ययलक्षणेन

गुरोरिति प्लुतः । आश्रयेण तु येन नामाप्तिन्यायेन प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम् । सुस्रोता इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात् । प्लुतो ऽन्तरङ्गो भिन्नवाक्यस्थाकारसापेक्षत्वाद्गुत्वं बहिरङ्गमिति स्पष्टं भाष्ये ।

उकारानुबन्धेति । उकारेत्सञ्ज्ञकरेफस्येत्यर्थः इति भावः, तेन देव गृहीत्यादौ न दोषः ।

भोभगो ॥ रोः सुपीत्यतो रोरिति वर्त्तते न तु रोरीत्यतो र इति भास्वत्रेत्यादावतिप्रसङ्गात् । अशब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह ।

---

* आश्रयेण त्विति * । * प्रत्यक्षत्वेन चेति * । एतेन पूर्वत्रासिद्धत्वस्य शीघ्रोपस्थितिकत्वात्सबाधेनोपपत्तौ विलम्बोपस्थितिकस्यानुमानिकासिद्धत्वस्य बाधे मानाभाव इति भावः । * स्पष्टम्भाष्य इति * । अतो रोरप्लुतादप्लुत इति सूत्र इत्यर्थः । केचित्तु एतेन प्लुतप्रगृह्या इति सूत्रे प्लुतस्य सिद्धत्वज्ञापनद्वारा एकादेशात् प्लुते विप्रतिषेधात्कृते प्रकृतिभाव । देवदत्ता ३ अत्र न्वमसि इति भाष्योक्ते प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वादेकादेशस्य तु पदद्वयापेक्षत्वाद्बहिरङ्गत्वाच्चिन्त्यमेतोक्तौ प्लुतस्यापि वाक्यत्वसरूपादन्यपदान्तरसापेक्षतया एकादेशसमत्वाच्चिन्त्यमेव चिन्त्यमिति विवरणोक्तिं प्रत्युक्ता । वाक्यस्य टे प्लुतार्थ देवदत्त ३ इत्यादावेहीतिशेषपूरणस्यावश्यकत्वाद्वाक्यद्वयसापेक्षैकादेशस्यैवमपि बहिरङ्गत्वादित्याहु । तन्न । शेषपूरण इत्यसङ्गतम् । अन्ते पुरुषे एव शेषपूरणव्यवहारात् । वाक्यसापेक्षैकादेशस्येत्यपि चिन्त्यम् । वस्तुतो वाक्यद्वयसापेक्षत्वन्तावयवयवर्णद्वयसापेक्षतया यद्यप्यस्ति तथापि वाक्यत्वेन वाक्यद्वयापेक्षायाम्मानाभाव । प्लुतस्य यादृशसमुदायसापेक्षत्वन्तादृशसमुदायस्य शब्दतोऽपेक्षाया एकादेशस्य विरहादेकादेशस्यैवान्तरङ्गत्वात् । यद्येव देवदत्ता ३ अत्र न्वमसीतिवाक्यस्य का गतिरिति चेत् । अत्र केचित् । एतादृशे विषये द्वयोर्वाक्ययो सस्कृतयोरयम्प्रयोग एवञ्च प्लुतस्य प्रकृतिभाव इति । अपरे तु वस्तुतो वाक्यद्वयावयवसापेक्षैकादेशस्यापि प्लुतसमत्वादत्र बहिरङ्गपरिभाषाया विषयत्वमिति सङ्गिरन्ते । यदि त्वेकादेशस्य वर्णमात्रापेक्षयान्तरङ्गत्वन्तदा सपादसप्ताध्यायीस्थेऽप्यन्तरङ्गे लक्ष्यानुरोधादनित्यत्वेन बहिरङ्गपरिभाषाया अप्रवृत्तिरिति दिक् । उकारानुबन्धग्रहणादित्यस्योकारस्यानुबन्धस्य स्थानित्वे न ग्रहणमित्यर्थस्य प्रकृते न सम्भवः । उकारस्येत्सञ्ज्ञालोपाभ्यामपहारात्किन्तु बहुव्रीहिमभिप्रेत्याह ।

* उकारेत्सञ्ज्ञकेति * । आदिना तन्मूलमित्यस्य सङ्ग्रहः ।

* अकारान्तद्वन्द्वेति * । न चैवमकारस्य पूर्वनिपातापत्तिरिति वाच्यम् ।

एतत्पूर्वस्येति । नन्वेव पूर्वरूपापत्तिरत आह । असन्धिरिति । भगोअघो-शब्दौकारयोरकाराभ्यां मात्रपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः । इद प्राचामनुरोधेन । वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिन्याय्य एवेति बोद्ध्यम् । न ह्ययमिति । इदमर्वाचामनुसारेण । भाष्ये तु रेफस्य विसर्गस्थानित्वेन तद्वृत्तिरुत्वाश्रयमपीदमल्विधिरेव । स्थान्यल्वृत्तिधर्माश्रयत्वात् । अग्रहीदित्यत्र च दीर्घे लोपे चेद्रुत्वेनैव निवेश इति विशेषो ऽतः पयःस्वित्यादौ दोषः । तत्र हि रोः सुपीति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाक्यघटकस्यार्थिकार्थमादाय तु निषेधकानीति तत्रापि रो रेफस्य विसर्ग इत्यर्थे रुत्वग्रहणं व्यर्थमित्युक्तम् । नन्वेव हे रामेत्यादौ संबुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्यालुधर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरितिचेन्न । आनुमानिकादेशस्य रामेत्यस्य स्थानिवद्भावेन सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः । लक्षणापदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वातिदेशात् । एवं दीर्घाहो निदाघेत्यादौ हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्यासुपीति रुत्वनिषेधस्यादेशे दीर्घाहन्शब्दे ऽतिदेशेन प्रवृत्त्या न रेफ इति दिक् । तेषां रोरिति । इदञ्च निपातानाख्याय विभाषा

---

पूर्वनिपातप्रकरणस्यानित्यत्वात् । * भाष्येत्विति * । स्थानिवत्सूत्रव्याख्यावसरे यदत्र वक्तव्यन्तदुक्तम् । * वाच्यवृत्त्येति * । वाच्यनिष्ठा या वृत्तिः शक्तिस्तया नियमशास्त्रघटकशब्दोऽर्थबोधक इत्यर्थः । ननु यदि प्राचोक्तरीत्याऽसाधारण्यनिवेशस्तदा हे रामेत्यादौ पदत्वासिद्धिरित्याशङ्कते । * नन्वेवमिति * । पदत्वाभावे सति हे राम पाहि मामित्यादौ निघातो न स्यादिति भावः । *लक्षणपदोपादानेनेति * । प्रत्ययलोपे प्रत्ययवदिति न्यासेन सिद्धे लक्षणपदोपादानेनैतादृशार्थलाभः । * प्रत्ययनिमित्तककार्यस्येति * । अस्य प्रकृतिसम्बन्धिन इत्यादिः । अत एव नञ्भिन्न इत्यादौ नैसादि । न चैवमपि स्थानिवद्भावेनैसादेशः कस्मान्न भवतीति वाच्यम् । अच परस्मिन् पूर्वविधाविति सूत्रे पूर्वविधिशब्दे पूर्वशब्दोत्तरस्वशब्दाश्रयणेन भावरूपस्य कार्यस्य चिकीर्षायामभावात्मकादेशस्थानिनः स्थानिवत्पदघटकस्थानिपदेनाग्रहणबोधनात् । * तन्निमित्तकव्यवहारस्येति * । प्रकृतिनिष्ठप्रत्ययपरत्वव्यवहारस्येत्यर्थः । एतेन श्रूयमाणप्रत्ययान्ते यो व्यवहारस्तस्य सर्वत्र स्थानिवत्सूत्रेणैव सिद्धिरिति सूचितम् । कार्यातिदेशस्य फलमाह । * एवमिति * । प्रथमप्रकारेणेत्यर्थः । तथा न केवलं सम्बुद्ध्यन्ते एव स्थानिवत्त्वेन प्रत्ययान्तरत्वबुद्धिः किन्तु राजपुरुष इत्यादावपि स्थानिवत्त्वेनेति बोध्यम् । * न रेफ इति * यद्यपि प्रत्ययलक्षणेन

भवदिति वार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेन, परे [illegible] तेषामपि रोरि-त्यर्थः। अपिना विभाषा भगवद्भगवदघवतामोच्चावस्येति वार्त्तिकानिष्पन्नस-ङ्ग्रहः। एषामन्त्यस्य रुः स्यादवस्य चौकारः। सम्बुद्धाविति तदर्थः। अ-वग्रहणसामर्थ्यादलोऽन्त्यस्येति नेति बोद्ध्यम्। वार्त्तिकानिष्पन्नानान्त्रयाणां भोशब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमित्याहुः।

व्योर्लघु॥ यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् य्वोरित्युचितं तथापि लोपो व्योरिति लोपवारणाय सौत्रत्वमाश्रयणीय स्यादतो व्योरि-त्युक्तम्। लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः। अन्यपदार्थसंबन्धो-त्तरं वर्त्तिपदार्थप्रकर्षविवक्षा साधुः। प्रयत्ने लघुतरत्वं चैषां शैथिल्यजनक-त्वमेव। लघूच्चारणाविति। लघुतरोच्चारणावित्यर्थः। सूत्रे सौत्रत्वादेकव-चनम्। वकारोदाहरणमसावादित्य इति वृत्तिः।

---

सुप्परत्वव्यवहारस्यापि लाभेन तेन सूत्रेण सिद्धिः। तथापि स्थानि-वत्सूत्रेण सिद्धिकथनान्नियमार्थत्वाभिप्रायेण। हे रामेत्यादौ तु स्थानिव-त्सूत्रेणैव। यत्तु वस्तुतस्त्वनपेक्षितार्थसन्निधानस्य तन्निमित्तरूपकार्यव्यवहा-रस्यैव स्थानिवत्सूत्रेणातिदेशात्तथाभूतस्य चात्र सुप्परत्वस्याशास्त्रीयत्वादति-देशाभावाच्चिन्त्यमेतदिति। तन्न। रोऽसुपीति सूत्रस्य वाक्यभेदेन मूल एव व्याख्यातत्वादसुपीति पदेन तस्मिन्निति परिभाषैकवाक्यतया सुबव्यवहितपू-र्वात्मकशास्त्रीयधर्मावच्छिन्न एवोद्देश्यतावच्छेदकावच्छिन्ने निषेधविधानेन सु-ब्व्यवहितपूर्वत्वस्य स्थानिवद्भावेनातिदेशसम्भवात्। * वृत्तिकृतो मतेनेति *। निपाताना निर्दिशोत्तरन्तेषामित्यनेन निपातानामेव बोधनात्। सिद्धान्तमाह। *परेऽपीति*। *एषामिति* मतुवसोरिति सूत्रेऽस्य पाठात्तस्मिन्नलोऽन्त्यपरिभा-षाप्रवृत्तिवदत्रापि तस्या प्रवृत्तिः। नन्वेवमघाशोऽप्यलोऽन्त्यपरिभाषाप्रवृत्तिः स्या-दत आह। * अवग्रहणेति *। नानर्थकपरिभाषा तु प्रत्याख्यातैवेति भावः। * अन्यत्रेति *। मनोरमादावित्यर्थः।

ननु लघुप्रयत्नतर इत्यनुपपन्नम्। वर्त्तिपदार्थस्यान्यपदार्थेन प्रकर्षेण च युगपद्विवक्षायामपरत्वात्तरप्स्यात् ततो बहुव्रीहौ लघुतरप्रयत्न इति स्या-दत आह। * अन्यपदार्थेति *। न च वर्त्तिपदार्थस्यान्यपदार्थविशेषणत्वात्क-थम्प्रकर्षयोग इति शङ्क्यम्। शुक्लतरं पट इत्यादौ विशेषणप्रकर्षबोधकस्य तरपो बहुषु दृष्टत्वात्। वार्त्तिककृतापि सूचितमिदम्। पूर्वपदार्थातिशये आतिशायनि-कात्प्रबहुव्रीहिस्सूक्ष्मवस्त्रतरार्थं इति। अत्र बहुव्रीहिरित्यस्य पूर्वविप्रतिषेधेनेति शेषः। लघुप्रयत्नतर इति निर्देश एवात्र गमक इति बोध्यम्। * वृत्तिरिति *। भाष्यानुक्तत्वमस्वारस्ये बीजम्।

ओतौ॥व्योरित्यत्र यकारसाहचर्याद्वकारोपि धात्वनवयव एवमत्राप्यर्थाधिकारात्तथैव तेन स्मृतो वच्युतेत्यादौ न दोषस्तदाह । यस्येति । तादृशवस्यासम्भवादिति भावः । भोभगो इति तु नानुवर्त्तते विच्छेदात् । तद् ध्वनयन्वक्ष्यति । पदान्तस्य किं तोयमिति । इद लघुप्रयत्नयोर्न गार्ग्यश्रुतेस्तदाह । अलघुप्रयत्नस्येति । पूजार्थमिति । व्याख्यानादिति भावः । तादृशश्च भोसादिपूर्वक एवेत्याशयेनाह । भो अच्युतेति । भाष्यानुसारिणस्तु भो इत्याद्यनुवृत्तेः स्मृतोवित्यादौ न दोषः । तस्याऽनभिधानाच्च । अपूर्वस्येति त्वेति इत्यनेन विरोधाश्च सम्बध्यते । लोपः शाकल्यस्येत्येव भो भगो इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः ।

---

* यकारसाहचर्यादिति *। ओकारात्परस्य पदान्तस्य धात्ववयवस्य यस्यासम्भवादिति भाव । * स्मृतोवच्युत इति * । स्मृत उ शम्भुर्येन स स्मृतो स्मृता याति गच्छतीति स्मृतोवा । तमाचक्षाण स्मृतोव् इति । *तदाहेति *। तदभिप्रेत्याहेत्यर्थ । एवञ्च यकाराश एव स्वरितत्वमथ वा व्योरित्यनुपसमानमत्र यकारमात्रतात्पर्यकामिति भाव । * विच्छेदादिति * । लोप शाकल्यस्येत्यशस्यानुवृत्ते । * व्याख्यानादिति *। अत्र भाष्ये किमर्थमिदमुच्यते ? न, लोप शाकल्यस्येत्येव सिद्धम्। लोप शाकल्यस्येत्यनेन पाक्षिक सिद्ध एव लोपोऽनेनापि गार्ग्यस्य मतेन लोपो नान्येषामिति विकल्पेनैव विधेय इति प्रश्न इति कैयट । ओकाराल्लोपवचनान्नित्यार्थम् । ओकाराल्लोपवचन क्रियते नित्यार्थोऽयमारम्भ इत्युक्तम् । तद्दर्शनमूलकादित्यर्थ । कैयटोऽपि । गार्ग्यस्यस्यां स्मृतावोतो नित्यमेव लोप स्मरतीति पाणिनिरपि तथैवेच्छति । एवञ्च भो अत्रेति नित्यम्भवति । * न तु मोयत्रेति इति * । न च स्वस्यमतमच्युत्य भावायेदमस्त्विति वाच्यम् । गार्ग्यशाकल्याभ्या लोपस्यैव स्मृत्या तद्वाक्येऽन्य ग्रहणेन तयोरग्रहणात् । * भाष्यानुसारिण इति * । नित्यार्थोऽयमारम्भभाष्यतात्पर्यविद इत्यर्थ । अयम्भाव । लोप शाकल्यस्येति सूत्रे अवर्णपूर्वस्येति यद्व्याख्यानन्तस्य न भोभगो इति सूत्रादवर्णमात्रानुवृत्त्या सम्भव । अशब्दस्य द्वन्द्वघटकतया तन्मात्रस्य पूर्वशब्देन समासासम्भवात् । तस्मिन्सूत्रे भोभगोअघोअपूर्वस्येत्यनुवर्त्तते । तत्र भोभगोअघोअपूर्वत्वे ओतो गार्ग्यस्येत्यनेन नित्येन भवितव्यम् । तस्मादपूर्वस्येति परिशेषसिद्धार्थकथनम् । तादृशस्यैव समुदायस्य ओत इति सूत्रेऽप्यनुवृत्तिरत एव नित्यार्थत्वकथनमप्यारम्भसामर्थ्यात् साधु सङ्गच्छते । एवञ्च विच्छेदादित्यसङ्गतम् । स्मृतोवित्यादौ च प्राप्तिरेव नेति फलितम् । * तस्यानभिधानादिति * । वृक्षवृशन्द इत्यादि ॥

उञि च ॥ भोइत्यादिपूर्वस्य पूर्वेण सिद्धेराह । अवर्णपूर्वयोरिति । एतदपि नित्यमेव । अत्रापि गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैव लोपः । एतेन भो इत्यादि पूर्वे लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणन्त्वसाउ एकाग्निरिति वृत्तिः । उत्तरार्थमिति । ङमो ह्रस्वादचीत्यर्थमित्यर्थः । एतत्तत्रैव निरूपितम् । हलि सर्वेषामित्यादौ तु न सम्बध्यते । व्यवहिते ङम इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्यात् । अत एव लिढत्सु इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थात्स्युः । अत एव भाष्यामित्यादौ हलि सर्वेषामिति लोपसिद्धिरिति दिक् ।

हलि स ॥ भो भगो इत्याद्यनुवर्त्तते तत्रोकारात्परस्य लघूच्चारणस्यैवानेन लोपः । अलघूच्चारणस्य व्योत इत्येव सिद्धम् । अपूर्वे तूभयोरपि । न चापूर्वालघुप्रयत्ने अस्यासिद्धत्वाल्लोपः शाकल्यस्येति प्राप्नोतीति वाच्यम् । लघुप्रयत्नस्यैवानेन लोपो व्योरिति सूत्रेऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चालघुप्रयत्नयोरेव लोपः स्यात् । व्योरित्यर्थाधिकारादिति वाच्यम् । ज्ञापिमात्रग्रहणार्थस्य सर्वेषामित्यस्य वैयर्थ्यापत्तेः । विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः । अत्र च यकार एवानुवर्त्तते न वकारो वृत्तौ तथैवोक्तेः फलाभावाद् व्यपरे इत्यादिनिर्देशाच्च । अन्यथा तत्र सौत्रत्वाद्याश्रयणीयं स्यात्तदाह । लघ्वलघूच्चारणस्येति ।

न तु सुपीति । पर्युदासे हि सुप्सदृशेन प्रत्ययएव स्यादेवञ्चाहभोती-

---

* वृत्तिरिति * । अत्रापि भाग्यदेवारुचि । * अत एवेति * । मण्डूकप्लुतिस्वीकारादेव । अन्यथा हलि सर्वेषामित्यादौ लोपाभावस्तितदाह । * अत एवेति * । मध्येऽसम्बन्धादेवेत्यर्थः । * उभयोरपीति * । लघ्वलघूच्चारणयोरपीत्यर्थः ।

* न चेति * । एवमित्यस्य शेषः । समाधत्ते । * लघुप्रयत्नस्यैवेति * । परिशेषादेतत्सिद्धम् । * हलि विधानाभावेन * । लघुप्रयत्नस्य विधानाभावेनेत्यर्थः । ननु हलीतिसूत्रस्य ज्ञापिमात्रतात्पर्यकमपि तु नित्यार्थमत आह । * विकल्पस्येति * । अत्र चेति * । हलीति सूत्रे चेत्यर्थः । * फलाभावादिति * । वकारानुवृत्ते फलाभावादित्यर्थः । अस्मिन्नर्थे सौत्रनिर्देशस्य साधकत्वमाह । * व्यपर इति * । सौत्रत्वादीति * । आदिना निपातनादिपरिग्रह । * तदाहेति * । तदेतत्सर्वं हृदि निधायाह । * लघ्वलघूच्चारणस्येति * । अत्र लघ्व लघूच्चारणेति सर्वेषामित्यनेन लभ्यते ॥

योऽसुपीत्यत्र प्रसज्यप्रतिषेधपरत्वेन व्याख्यानवत्तत्फलमाह । * पर्युदा

स्यत्र न स्यात् । यदि तु सुब्भिन्ने शब्दे स्यात् । दीर्घाहो निदाघेत्यत्रापि स्यात् । सुबन्तइति अर्थस्तु न । उत्तमैकाभ्यामित्यादिनिर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभावज्ञापनात् । लक्ष्यानुरोधेन क्व चित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणताया एवाश्रयणाच्च । अत एव रदाभ्या निष्ठेत्यादौ न दोष. । अहरहरिति । नित्यवीप्सयोरिति द्वित्वम् । न लुमतेति निषेधात्सुप्परत्वाभावः । गतमहो रात्रिरिति । के चित्तु भाष्ये आतिदेशिकस्याहोरात्रस्यैवोदाहरणात् नलोपः । प्रातिपदिकान्तस्येति सूत्रे न हि रूपरात्ररथन्तरेषु रौ रे वा विशेषो ऽस्तीत्यत्र प्रायेण रात्रेति पाठाद्वेद्दशानामनभिधानमेवेत्याहुः । अनन्यत्वादिति । रात्रिशब्दान्तात् समासादाचि समासान्ते यस्येति चेति लोपे ऽपि रात्रिशब्दत्वाक्षतेरिति भावः । अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह । विसर्गापवाद इति ।

ढ्रलोपे ॥ नायन्तत्पुरुषो-ऽनीयरि प्रचारेत्यादौ च दोषापत्तेः । नापि

---

सेहीति * । एवञ्च लक्ष्यानुरोधाद् गौरवं युक्तमेव । ननु सुबन्तातिरिक्ते शब्दे परे न पूर्वोक्ताव्याप्त्यतिव्याप्ती इति पर्युदास एव लाघवादुचित इत्यत आह । * उत्तमैकेति * । यदि सप्तमीनिर्दिष्टेऽपि तदन्तविधि स्यात्तदा सुपि चेत्यत्रापि तदापत्तौ दीर्घानापत्तिरिति भाव । प्रत्ययग्रहणपरिभाषाया प्राप्तिरपि नेत्याह । * लक्ष्यानुरोधेनेति । * अत एव * । लक्ष्यानुरोधस्वीकारादेव । अन्यथा रदाभ्या परं यन्निष्ठा तमित्यर्थापत्त्या हपत्तीर्णं इत्यत्र धातुतकारस्यापि नत्वापत्ति । न चात्र प्रत्ययग्रहणे चापञ्चम्या इत्यनेन प्रत्ययग्रहणपरिभाषाया निषेधान्निष्ठान्तमित्यर्थसम्भव इति वाच्यम् । अस्यापि वचनस्येष्टविशेषणविशेष्यभाव तात्पर्यग्राहकत्वात् । * आतिदेशिकस्येति * । अत्र अह सर्वैकदेशेति सूत्रेण रात्रिशब्दान्तद्वन्द्वादच्प्रत्यय । एकदेशविकृतन्यायेन च रात्रिशब्दत्वम् । ननु नञ्चोदाहरणमादरणीयमिति अभियुक्तोक्तेरिदमयुक्तमत आह । * नलोप प्रातिपदिकान्तेतिसूत्र इति * । तत्र हि । जह अहोभ्यामित्यत्र रुत्वरत्वयोरसिद्धत्वेन नलोपमाशङ्क्याहभि यस्यावृत्त्याऽसिद्धत्वस्य वारणे प्रमाणम्भाष्ये उपन्यस्तम् । न हि रूपरात्ररथन्तरेषु रौ रे वा विशेषोऽस्तीति । ननु समासान्तस्य रात्रिशब्दविकारत्वाभावादेकदेशविकृतस्येत्यनुपपन्नमत आह । * रात्रिशब्दान्तसमासाविति * । द्वन्द्वादित्यर्थ ।

* तत्पुरुष इति * । ढयोर्लोप इति तत्पुरुष इत्यर्थ । * अनीयरीति * । एव सति करणीयमित्यत्र दीर्घापत्ति । ननु नात्र रेफस्य तन्मात्रलोपविधायक

बहुव्रीहिर्व्यधिकरणत्वादतो णिजन्तात्कर्मण्युपपदसमास इत्याह । दरेफादि-त्यादि । भाष्ये तु व्यधिकरणबहुव्रीहिरेव दर्शित । न चाजर्घा इत्यादौ सिपि धातोरिति रुत्वस्य लीढ इत्यादौ ढ्रलोपादीनां पितृराज्यमित्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वाच्यम् । ढग्रहणेन लण्सूत्रे ऽजर्घा इति भाष्योदाहरणेन च तत्तच्छास्त्रकार्यतापन्नपूर्वत्रासिद्धमिति सूत्रस्थपूर्वग्रहणेनैतत्सूत्राग्रहणबोधनात् । अण किमिति । अच इत्येव सिद्धमिति प्रश्न । तृहू इति पाठे नकारजावनुस्वारपञ्चमाविति वृद्धोक्तेरनिदितामिति नलोपे तृढ इति रूपम् । अत्राणपूर्वेणैव व्याख्यानात् ।

विप्रतिषेध॥विप्रतिपूर्वात्कर्मव्यतिहारे वर्त्तमानात्सेधतेर्घञि परस्परविरो-

---

शब्देन लोप इत्यत आह । * अचारेत्यादाविति * । न चात्रापि कथन्तस्यामिति वाच्यम् । अभ्यासपदात् तत्तद्धातुसम्बन्धिनो विभिन्नस्याभ्यासस्य प्रतिलक्ष्य लक्षणोपप्लवन्यायेन बोधात्तथमस्तीत्याशयात् । न चात्र सत्यपि दीर्घे ह्रस्व इति सूत्रेण ह्रस्वादेशे रूपासिद्धिरक्षतैवेति वाच्यम् । आकृत्यात्पर्वन्यपक्षलक्षणन्यायेन ह्रस्वे सतो दीर्घे लक्ष्ये लक्षणस्येति न्यायेन पुनर्ह्रस्वानापत्तेरिति भाव । मूलोक्तरीत्या व्याख्याने णिजन्तात्कर्मण्यणुपपदसमासे वृत्तिद्वयप्रसङ्गाल्लाघवाभिप्रायेणाह । *भाष्ये त्विति* । न च समानाधिकरणानामेव बहुव्रीहिविधानाद्व्यधिकरणबहुव्रीहिरनुपपन्न इति वाच्यम् । सप्तमीविशेषणे इति सूत्रेण सप्तम्यन्तस्य पूर्वनिपातविधानाल्लिङ्गाद्व्यधिकरणबहुव्रीहेरपि साधुत्वज्ञापनात् । * ढग्रहणेनेति * । ढग्रह णन्तु न ज्ञापकम् । पुनारमत इत्यत्र चारितार्थ्यात् । * तत्तच्छास्त्रेति * । सिपि धातोरितिशास्त्रढोढ इतिशास्त्राभ्यामित्यर्थ । न चैवमपि संयोगान्तस्येति सूत्रस्यासिद्धत्वमपरिहृतमिति वाच्यम् । नैर्ऋतोरस्यभासन्त साधितू रक्षसो यथेति रामायणप्रयोगदर्शनेन तत्राप्येवमेव कल्पनात् । यत्तु हल्ङ्याबिति सूत्रे मनोरमाया हल्ङ्याप सोरिति सूत्रयितुमुचितमित्युक्त तत्र शब्दरत्ने सुपदिति स्योरप्युपलक्षणम् यथाऽविभा राज्यमित्यत्र संयोगान्तलोपस्यासिद्धत्वाद्दीर्घं स्वप्न स्यादित्युक्तमिह च दीर्घम्प्रति सिद्धत्वमुच्यते तेन विरोध इति । तन्न । उक्तरामायणप्रयोगेण विभक्त्यवयवमात्रसम्बन्धिसंयोगान्तलोपस्य सिद्धत्वकल्पनात् । * अच इत्येवेति * । अचश्चेति परिभाषया लब्धमित्यादि । * व्याख्यानादिति * । यदि परेण णकारेणाण्ग्रहणं स्यात्तदा हल्रूपाणि फलाभावा दच्तात्पर्यकमेवाण्ग्रहणम्भविष्यतीति तदभावेऽप्यचश्चेति परिभाषयैव तत्सिद्धिर्भविष्यतीत्येवरूपादित्यर्थ ।

*परस्परविरोधेति* । विविध यद्गमनन्तदत्र विवक्षितमेवञ्च विरोधलाभ इति भाव । तुल्यबलविरोध इत्येतत्परिशेषसिद्धमित्येतदुपपादयति । * तत्र

धार्यो विप्रतिषेधशब्दस्तत्र नित्यस्यावश्यकतयान्तरङ्गस्य ज्ञापकादिना ऽप-वादस्य वचनप्रामाण्याद्बाधकत्वे स्थिते तद्भिन्नो ऽस्य विषय इत्याह । तुल्यबलेति । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदस-म्भविस्वकार्यसमर्पणश्च सः । तत्र प्रायेणैकस्य कार्यद्वययोगकृते ऽसम्भव-एतस्य प्रवृत्तिः । यथा वृक्षेभ्य इति । तत्र हि दीर्घत्वयोर्युगपत्प्रवृत्तौ स्वस्व-निमित्तानन्तर्यासम्भव । क्वचित्केवलासम्भवे ऽपि यथा शिष्टादित्यादौ । तत्र हि तातङ्ङाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत् । तथापि अतिदेश आदेशप्रवृत्त्युत्तरमेव न तु तत्प्रवृत्तिकाले इति युगपदसम्भवो ऽस्त्येवेति परत्वात्तातङि सकृद्ग-तिन्यायेन न आदेश । स्पष्टश्चेद सर्वं भकृतसूत्रे इको गुणवृद्धी अदसोमा-दित्यादावाकरे । तत्र युगपदुभयोः कार्ययोरसम्भवात्पर्यायेण तृजादिव-च्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम् । परमेवेति । तेन तिसृणामित्यत्र यौगप-द्यासम्भवेन परत्वात्तिस्रादेशे पुन स्थानिवत्त्वेन त्रयादेशे पुनः स्थानिव-त्त्वेन त्रयादेशो न । तत्पठ्यते सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधि-तमेवेति । यद्वा यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयो पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदोभयोन करोति यौगपद्यासभवात्तथा शास्त्रयोर्लक्ष्ये प्रेष्ययोः क्वचिल्लक्ष्ये यौगपद्या-सम्भवादप्रतिपत्तौ माशायामिदं पर भवतीति विध्यर्थः तत्र कृते यदि पूर्व-स्यापि निमित्तमस्ति तदा तदपि भवत्येव तत्पठ्यते पुनः प्रसङ्गविज्ञानात्सि-द्धमिति । यथा भिन्धीत्यत्र परत्वात्तातङि पुनर्धिर्भवति । अत्र तातङ्धि-

---

नित्यस्येति * । * समर्पणश्च स इति * । अत्र चो वाक्यालङ्कारे । यदुक्तम्प्राये-णेति तत्फलमाह । * क्वचित्केवलेति * । न्यायद्वयोपपत्तिमाह । * तत्र युगप-दिति * । *तृजादिवदिति* । यथा एवुल्तृचौ पर्यायेण भवतस्तथा पूर्वपरावपि पर्यायेण भवेताम् । एवञ्च यदा पूर्वशास्त्रप्रवृत्तिस्तदा योऽप्रासाशान्तत्पूरणस्परे भ्रियते इति नियम फलितो भवति । पूर्वशास्त्रस्य चैतद्विषयाविषयकत्व क-ल्पनीयम् । लौकिकदृष्टान्तेन पुन प्रसङ्गन्यायमुपपादयति । * यद्वेति * । लक्ष्य प्रेष्ययो लक्ष्योपकारकत्वादेव व्यवहार । * अप्रतिपत्ताविति * । अप्रवृत्तावि त्यर्थ । * तत्र कृते * । परस्मिन्कृते । * तातङि इति * । कृत इति शेष । * पुनर्धिरिति * । स्थानिवद्भावेन हित्वात् । अत्र के चित् । एत सत्यचश्चेतिसू त्रस्थभाष्यकैयटविरोध । तथाहि । यद्यचश्चेति सूत्रमिको गुणवृद्धी इतिसूत्रव-

मतदवतरफलाभावात् । अहन् काण्डे इत्यादावेतत्साद्ध्यविभत्यनपेक्षत्वेऽपि तद्वितरानपेक्षत्वमस्त्येवेति तत्पर्युदासः सार्थकः । न च तत्केवलप्रत्ययस्य, तदुक्तं सङ्ख्याया अतिशदन्ताया इति सूत्रे भाष्ये न हि लोके केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेनेति । हरिरप्याह ।

"धात्वादीनां विशुद्धानां लौकिको ऽर्थो न विद्यते ।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ।
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते" इति ।

अत एव प्रसङ्ज्ञासूत्रे ऽन्तग्रणस्य सञ्ज्ञाविधौ तदन्तविद्ध्यभावज्ञापकत्वे "कृत्तद्धितेति सूत्रे ऽन्तग्रहणं कर्त्तव्य न कर्त्तव्यमर्थवादिति वर्त्तते कृत्त

---

द्धासत्ये तस्य सूत्रस्य सुभिन्नविभक्तायेव प्रवृत्तिः स्याद् । न चेष्टापत्तिः । अर्थवत्पदमित्यत्र समासेऽप्रवृत्त्यापत्ते । न चात्र आदेशाप्रवृत्तौ साधकाभाव इति वाच्यम् । अर्वण इति सूत्रस्य ऋधातोर्विजन्तात् मतुपि कृते तात् तेनार्वच्छन्देन साध्यप्रयोगस्य साधनेन प्रत्याख्यानेकवाक्यतया तत्र प्रवृत्त्यनुमानादित्यत आह । * इद तरेति * । अर्वणस्त्रमघोनश्च न शिष्यम्छान्दस हि तदित्यनेनार्वन्शब्दस्य छान्दसत्वादुक्तप्रयोगस्य छान्दसत्वेन लुमतोतिनिषेधादित्यत्थेन तदुपपत्तिसम्भव छान्दसा अपि क्वचिद्भाषायाम्भवन्तीत्यस्याश्रयणे तु वाहेर् जुम्यत् सहस्रगर्वं गर्वं इत्यथेष आदेशाभाव एव । यदि त्वर्वेण इति सूत्रे साचित्यत्र प्रसज्यप्रतिषेध एव तदा तु नानुपपत्तिरिति बोध्यम् । पारिभाषिकार्थवत्त्वस्वीकारेपि धातुपर्युदाससाधर्म्यमुपपादयति । * अहन्काण्ड इति * । * न च तत्केवलस्येति * पारिभाषिकार्थवत्त्व केवलप्रत्ययस्य नास्तीत्यर्थ । तदेतदुपपादयति । * तदुक्तमित्यादि * । * विशुद्धानामिति * । प्रत्ययरहितानामित्यर्थ । * लौकिक इति * । लोके विदित इत्यर्थ । स च कारकादिविशिष्ट । एतेन केवलस्य धातुसञ्ज्ञाप्रयोजकार्थसद्भावेऽपि न क्षतिः । * कृत्तद्धितानामर्थश्च केवलानामिति * । अत्र लौकिकोर्थो विद्यत इति सम्बन्ध । अत्र प्रसज्यप्रतिषेधार्थकेन नञा समास । प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यताशून्य इत्यस्यार्थ । * प्राग्विभक्तेरिति * । विभक्त्युत्पत्ते प्रागित्यर्थ । * तदन्तस्य * । कृत्तद्धितान्तस्य । * तथैवार्थो न विद्यत इति * । अत्रैवकारस्य नञुत्तर सम्बन्ध । एवञ्चानुत्पन्नविभक्तिकानां कल्पितार्थसद्भावेऽपि न लौकिकस्यार्थस्य सद्भाव इति । एतेन सूत्रद्वये निरुक्तार्थवत्त्वमेव प्रातिपदिकसञ्ज्ञाप्रयोजकमिति स्पष्टमेव लभ्यते । अत्र प्रमाणमाह । * अत एवेति * । सूत्रद्वयेऽपि निरुक्तार्थवत्त्वस्य विवक्षितत्वादेवेत्यर्थ । * ज्ञापकत्व इति * । सतीति शेष । शास्त्रीयार्थग्रहण इति

द्धितान्तस्यैवार्थवत् न केवलाः कृतस्तद्धिता वेति" भाष्यमुपादाय शास्त्रीयार्थग्रहणे ऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नो ऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयत इति कैयटेनोक्तं। लौकिक यत्पदन्तदर्थस्य प्रत्यासन्नः शास्त्रकृत्कल्पितस्वादिप्रकृतेरर्थः प्रत्ययान्तेषु सुबन्तेषु यो ऽभिव्यक्ततरो लक्ष्यते बोद्धृभिः स इत्यन्वयः। यत्तु प्रत्ययान्तेष्वित्यस्य कृदाद्यन्तेष्वित्यर्थ इति। तन्न। तावन्मात्रेण कस्याप्यर्थस्याभिव्यक्तेरप्यभावेनाभिव्यक्ततरत्वस्य सुतरामभावात्। अर्थवत्सूत्रे ऽप्येवमेवेति। अनुवृत्तिसामर्थ्यादित्यनेन सूचितम्। अन्यथा तत्सामर्थ्यादित्येव वदेत्। पूर्वसूत्रे यादृशार्थस्यैव ग्रहः। शास्त्रीयार्थग्रहणे तु तदनुवृत्तिर्व्यर्था स्यादिति तद्भावः। किं च पूर्वसूत्रे सामान्यतो ऽर्थवत्त्वग्रहणे न किंचित्फलं प्रत्ययेष्वतिव्याप्तिदानातिरिक्तम्। अत एव तद्धितग्रहणस्य नियमार्थत्वाश्रयणेन ह्रस्वो नपुंसके यत्तस्येति न्यासेन काण्डे इत्यादौ ह्रस्ववारणात्फलाभावेन वा भाष्योक्ते तत्प्रत्याख्याने पञ्चनावमिय इत्यादौ पञ्चनावेत्यस्यानेन न प्रातिपदिकत्वं नाप्युत्तरसूत्रेण। प्रातिपदिकत्वे तु टाबापत्तिः। एवञ्च प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो विफलः। दश दाडिमानि षडपूपा इत्यादिनिरर्थकपदसमुदायव्यावृत्तिरर्थवद्ग्रहणस्य फलम्। तत्र हि

आवापोद्वापाभ्यां कल्पित इत्यर्थः। *तदर्थस्य* प्रशस्तस्येत्यर्थः। स च स्वार्थद्रव्यलिङ्गसंख्याकारकरूपः। * प्रत्यासन्न *। तद्विषयकप्रतीत्यव्यवहितप्राक्कालिकप्रतिपत्तिविषय। स च कृत्तद्धितान्तस्यैव न तु केवलकृत्तद्धितस्येति भावः। * लक्ष्यत इति *। सुपा द्योतकतया सुप्समभिव्याहार एव स प्रतीयत इति भावः। एवञ्च सुबन्तस्यैव सम्पूर्णलौकिकार्थवत्त्वम्। तत्प्राग्भागस्य तु लौकिकार्थप्रत्यासन्नत्वमित्युक्तम्। विवरणकारोक्तिं खण्डयति। * यत्त्विति *। * अभिव्यक्तेरपीति *। अभिव्यक्तेरेवेत्यर्थः। यत्र च लिङ्संख्यादौ प्रतीतिरस्ति तत्र न कृदन्तत्वमात्रमपि तु सुबन्तत्वमिति। * तद्भाव इति *। भाष्यकैयटयोर्भाव इत्यर्थः। * सामान्यत इति *। लौकिकालौकिकसाधारणार्थवत्त्वमित्यर्थः। * अत एव *। पारिभाषिकार्थवत्त्वस्याभिप्रेतत्वादेव। * तद्धितग्रहणस्येति *। एतत्प्रागुपपादितम्। * पञ्चनावमिय इति *। अत्र श्रूयमाणसुबन्तेनैवैकार्थीभावाङ्गीकारादेतत्संज्ञाफलभूतविभक्तिभिन्नस्य सुपोऽपेक्षासत्त्वाच्च प्रातिपदिकत्वम्। प्रत्ययस्य प्राप्तिरेव नेति प्रत्ययमात्रस्य चिकीर्षिता या प्रातिपदिकसंज्ञा तत्फलभूतयौद्धविभक्तिभिन्नस्य प्रकृतिस्वरूपस्यापेक्षासत्त्वात्। एवञ्च सामान्यतोऽर्थवत्त्वस्याश्रयणे प्रत्ययातिव्याप्तिवारणाय तत्पर्युदासे गौरवमिति भावः। * निरर्थकपदसमुदाय इति *। निरर्थकश्चासौ पदसमुदायश्चेत्य

सुपो धात्विति लुगापत्तिरिति भाष्ये स्पष्टमिति दिक् ।

पूर्वसूत्रेणेति । प्रत्ययग्रहणं यस्मादिति प्रत्ययान्तत्वाभावादिति भावः । नियमस्य सजातीयविषयत्वात्साजात्यं दर्शयितुमाह । पूर्वो भाग इति । एवं न यत्तच्छब्दार्थयोरननुगतत्वेन शब्दानुगमस्याप्रयोजकत्वेन व्यवच्छेद्यानु-

---

र्थ । एतेन पदसमासेन नियमेनास्य न व्याप्तिरिति सूचितम् । यत्र समानिरथा-र्थो प्रातिपदिकसंज्ञाप्रवृत्तिस्तु न फलम् । साधकं विना सुपोऽनुत्पत्तेः सुन्दमाया-त् । न च दध्ना दाडिमानीत्याद्यर्थपदद्वयस्य फलमिति वाच्यम् सिद्धत्वादुत्तर-सूत्रे तदनुवृत्तिरप्यभावेनोत्तरसूत्रस्य समासग्रहणस्यापूर्वमन्यापसमर्थसमासस्य पर्युदासलभ्यार्थपरत्वाभावेऽपि प्रातिपदिकसंज्ञासिद्ध्यर्थं ग्रहणमिति नियम एव नास्तीति वाच्यम् । तेषां प्रातिपदिकसंज्ञाया समासग्रहणाभावेऽपि धर्मिग्राह-कमानेनैव सिद्धेः । न चार्थवच्छब्दसत्त्वे च मूले व्यवच्छेद्यधातुप्रत्ययप्रत्यया-न्त वर्जयिष्यति तन्नोपपद्यते समासकर्तृकत्वाभावादिति वाच्यम् । प्रातिपदिक-संज्ञकस्यविशिष्टमयनेऽर्थवच्छब्दस्वरूपस्य कर्तृत्वे तात्पर्यात् ।

सुबन्तानां समाससंज्ञाविधानात्तस्य समुदायस्य प्रत्ययान्तत्वशङ्काव्यावृत्तये आह । * प्रत्ययग्रहण इति * । * साजात्यमिति * । समभाव्यपच्छेदयोरि-त्यादि । समाससाजात्यमित्यर्थः । तत्र पूर्वभागस्य पदत्वमत्रयात् । साजात्यस्वी-कारे सङ्घातस्य चेत्यदसंज्ञकपूर्वभागकसमासस्यैवेति नियमे समासातिरिक्तस-ङ्घातमात्रस्य व्यावृत्तिः स्यात् । एतत्सूत्रमर्थवतामेकैकवर्णानां संज्ञाविधायकत्वेन चरितार्थमिति भावः । ननु यत्तच्छब्दयोर्बुद्धिस्थपरामर्शकतया यदा यो बुद्धि-स्थस्तस्यैव बोधो न त्वन्यस्येति यत्र सङ्घात इत्यत्र समासान्तरस्य सङ्घातस्य ग्रहणे व्यवच्छेद्यवाक्यासङ्ग्रहः । वाक्यस्यैव यत्रेत्यनेन ग्रहणे तत्पदेनापि तस्यैव बोधात्तद्भेदस्य समासेऽभावात्तस्य यदि समासस्येत्यसङ्गतमिति तच्छङ्कनद्व-याह तन्मतं दूषयति । * एतेनेति * । मूलोक्तनियमाकारस्य साजात्यप्रदर्श-नपरत्वेन । नन्वस्त्वर्थाननुगमः शब्दानुगमस्तु स्यादेवेत्यत आह । * श-ब्दानुगमस्याप्रयोजकत्वेति * । अयम्भावः । शब्दानुगमो नामानुगतार्थप्र-तिपादकत्वमेव । यथा घटादिशब्दानां घटत्वादिनाऽनुगतानामेकाकारप्रतीति-विषयीभूतानामर्थानां प्रतिपादकत्वम् । न तु शब्दानुगम इत्यस्यैकानुपूर्वी-कत्वसम्पादनमित्यर्थः । अर्थभेदाच्छब्दभेदस्वीकारेऽपि शब्दानुपूर्व्या एक-स्यस्यैव सत्त्वात् । एवञ्च प्रकृते शब्दानुगमसद्भावेऽपि पूर्वोक्तरीत्यार्था-नानुगततया सोऽकिञ्चित्कर इति । ननु त्वत्वादीनां बुद्धिविषयतावच्छेदक-त्वोपलक्षितधर्मावच्छिन्ने शक्तिस्वीकाराच्छक्यतावच्छेदकानामननुगमेऽपि शक्य-तावच्छेदकतावच्छेदकैक्यादनुगतत्वव्यवहारो भविष्यतीत्यत आह । * त्यद

गमे ऽपि क्षत्यभावेन च यत्र सङ्घातइत्यादिव्यर्थमेवेत्यपास्तम् । पदशब्दे नात्र स्वातन्त्र्येणापि प्रयोगार्हमर्थवद्गृह्यते । अत एवार्थवत्समुदायाना स-

---

च्छेदानुगमेपीति * । समाहो विवक्षितधर्मवत्त्वेन बोधनीये सर्वसमाहारोपस्थि- तिरपेक्षिता सा चाननुगमे न सम्भवतीत्यनुगमापेक्षा । व्यवच्छेदाननुगमेऽपि तेषां विशेषधर्मसम्बन्धबोधस्यानाभिप्रेतत्वात्तेषामननुगमेपि क्षतिविरहादिति भावः । यथोक्त भाष्ये । शब्दापशब्दयोरन्यतरोपदेशेन कृत स्यादिति । मूलोक्त- स्य नियमाकारस्यतत्साध्यस्य प्रत्ययग्रहण इति परिभाषाया देवदत्तोगार्ग्य इत्यत्रा तिव्याप्तिवारणार्थमावश्यकत्वप्रदर्शनपरभाष्याल्लभ्यते इति कस्य चिच्छङ्काया न्तदर्थमाह । * पदशब्देनेति * । यदि पदशब्दः पदसंज्ञकपरस्तदा छूपण्वसु- रित्याद्यसंग्रह । यदि पदसंज्ञाप्राप्तियोग्यपरस्तथापि भसंज्ञया प्रकृते बाधात्तद्योग्य- तापि नेति स्वीकारे सर्वसमाससाजात्याभाव एव । पदसंज्ञाप्रयोजकप्रत्ययप्र- कृतिपरत्वे राज्ञ पुरुष इत्यादिवाक्यघटकस्य पूर्वभागस्य विभक्त्यन्तस्य तादृश- प्रकृतिभाव एव । ननु षष्ठीप्रकृतिप्रातिपदिकमादाय वाक्यसंग्रह इति वाक्या- नाशियमेन व्यावृत्तिर्भविष्यतीति चेत् । एव सति पदशब्दस्य तत्र शक्त्यभावेन लक्षणाया आवश्यकत्वे जहत्स्वार्थलक्षणापेक्षयाऽजहत्स्वार्थलक्षणैवोचिता । किं च जन्मवानित्यादौ प्रातिपदिकत्वसिद्धये उच्चरस्तु प्रत्ययो नेत्यपि निवेशनीय- मिति गौरवमपि भविष्यतीत्याशयेनाह । * स्वातन्त्र्येणेत्यादि * । स्वातन्त्र्येण प्रयोगयोग्यत्वे सत्यर्थवदित्यर्थः । * अत्र साजात्यप्रदर्शकवाक्ये * । अत्र पूर्वे शब्दोपादानात्परस्यापि तादृशस्यैवोपस्थितिरिति स्वातन्त्र्येण प्रयोगयोग्यता- विशिष्टार्थवत्त्वविशिष्टपूर्वोत्तरभागकसमुदायलाभाज्जन्मवानित्यादे संग्रह । पू र्वोत्तरपदयोस्स्वातन्त्र्येण प्रयोगार्हत्वञ्च तत्तत्प्रयोगाभावेऽप्यर्थबोधजननाय प्रयु- ज्यमानत्वम् । यत्तु स्तम्बेरम शकृत्करि समस्य इत्यादे· स्वातन्त्र्येण प्रयोगा- नर्हत्वात्तद्घटितरूपेण साजात्यविवक्षण युक्तमिति । तन्न । वेदव्यास इत्यत्रो पपदसमासे विनापि प्रत्ययमिति वचनेन वेदेत्यस्य लोपेऽपि व्यासेत्यस्य प्रयोग- वत्स्तम्बेरम इत्यादावपि तथा सम्भवात् । यदि च भीमसेन इत्यस्य यदुत्तरपद सेन इति तावन्मात्रस्य पृथक्प्रयोगादर्शनाल्लोपविधायकं वचन क्वाचित्कमिति नैतेषु पूर्वोत्तरपदयोरन्यतरलोपेनान्यतरस्य स्वातन्त्र्येण प्रयोगार्हत्वसम्भव इति मन्यते । तदा किञ्चिद्भिन्नोपपदसंज्ञाविधायकशास्त्रविधेयप्रत्ययान्तघटितसमुदा- यावयवत्वपूर्वोत्तरभागाभावसमानकालिकार्थबोधजनकतावच्छेदकतावच्छेदका- नुपूर्वीमत्त्वान्यतररूपमेव स्वातन्त्र्येण प्रयोगार्हत्वमिति वक्तव्यम् । एतद्घटक पूर्वोत्तरभागाभावत्वञ्च कालिकसम्बन्धेन यत्प्रतियोग्यधिकरणन्तन्निरूपितावेशे- षणतासम्बन्धावच्छिन्नवृत्तित्वात्मकसामानाधिकरण्यसम्बन्धेन तत्तत्प्रतियोगि

मासग्रहणं नियमार्थमित्युक्तम् । अत्र भाष्ये । सुबन्तानामित्यनेन भेदसं

---

विशिष्टान्येधवत्त्व इति न विशिष्टाभावोभयाभावमादाय अन्मयानित्यादौ दोषः । न चैव सति स्वातन्त्र्येण प्रयोगार्हत्वं यदित्यत्र पृथगर्थवत्त्वनिवेशनमफलमिति वाच्यम् । निरुक्तस्य स्वातन्त्र्येण प्रयोगार्हत्वस्य निवेशसूचनाय तदुपादानात् । उक्तार्थे भाष्यसम्मतिमाह । * अत एवेति * । उक्तान्यथानुपपत्तिपरिहारार्थमेव । * अर्थवत्समुदायानामिति * । अर्थवत्समुदायपदमत्रार्थान्तरेण षष्ठीतत्पुरुषकर्मधारयाभ्यामर्थवत्तामयवान्य समुदायस्तत्पराधकम् । कर्मधारयमात्रविवक्षायामज्युत्पन्नमित्यादेरसंग्रहः षष्ठीतत्पुरुषमात्रविवक्षायामुत्तरसूत्रेऽनुवर्तमानं यदर्थवत्पदं तद्वैयर्थ्यम् । तत्र ह्यनुवर्तमानस्यार्थवत्पदस्य नियमार्थकत्वमावश्यकम् । अन्यथाऽनर्थको योऽर्थवता समुदायोऽधात्वभोजी ब्राह्मणोऽलवणभोजी ब्राह्मण इत्यादिस्तेनापूर्वसूत्रेणाप्राप्ता या संज्ञा तद्विधायकत्वेन समासग्रहणस्य चरितार्थतया नियामकत्वानुपपत्तेः । न चेष्टापत्तिः । मूलकेनोपदंशमित्यादिवाक्ये कृदन्तत्वादतिव्याप्त्यापत्तेः । पूर्वसूत्रफलसाधकस्यैवानुवृत्तौ तु पूर्वसूत्रे यथाऽर्थवत्त्वं शास्त्रस्यैवार्थवत्पदबोध्यत्वं तयोरुत्तरसूत्रेऽपि वाच्यमिति कर्मधारयोऽप्यावश्यकः । किञ्च दशदाडिमानीत्यादि यदर्थवद्ग्रहणव्यावर्त्यमुक्तं तदपि कर्मधारयपक्षे सङ्गच्छते । अन्यथा तस्य समुदायस्य नियमेनैव व्यावृत्तौ तस्यार्थवद्ग्रहणव्यावर्त्यत्वानुपपत्तिः । अधात्वभोजीत्यादीनां तु सुबन्तपुस्तकस्येति ज्ञापकेन साधुत्वं बोध्यम् । * अत्र भाष्य इति * । वाक्यावृत्तिपरभाष्य इत्यर्थः । * सुबन्तानामित्यनेनेति * । अस्य बहुपटव इत्यादिसमुदायेत्यादि । अत्र प्रातिपदिकसंज्ञाभावेऽपि न क्षतिरिति तु न वाच्यम् । बकाराकारस्य चित इत्यनेनोदात्तत्वापत्तेः । तदुक्तं भाष्ये । तुल्यजातीयस्य नियमः कश्च तुल्यजातीयः । यथाजातीयकानां समासः । कथञ्जातीयकानां समासः । सुबन्तानाम् । यद्यर्थवत्समुदायमात्रविषयको नियमः स्यात्तदा बहुपटव इत्यादीनां व्यावृत्तिः स्यात् । अत्र हि द्योत्येनार्थेन बहुजर्थवान् प्रकृतिस्तु वाच्यार्थेनार्थवतीति स्पष्टमेव । ननु सुबन्तत्वेनापि समाससामान्यसाजात्यं वक्तुमशक्यम् । अद्यश्रीतीत्यादौ सुबुत्पत्तेः प्रागेव गतिकारकोपपदानामित्यनेन समाससंज्ञाप्रवृत्तिबोधनादत आह । * भेदसंसर्गद्वारकार्थवन्त इति * । प्रातिपदिकसंज्ञायोग्यावयवानां शब्दानां पृथक् प्रयोगे सति तत्संसर्गाकाङ्क्षाभेदसंसर्गः स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामित्यर्थः । समासेऽपि वाक्यीयेनैवार्थेन विशिष्टार्थवत्त्वम् । बहुपटव इत्यादौ तु तथा नेति भावः । पचतभृज्जता, खादतमोदतेत्यादिसमासस्यापि द्वन्द्वान्तरार्थलक्षणाया आवश्यकत्वमिति च सूचितम् । मूलोक्तनियमे पूर्वभागं पदमित्युक्तं तस्य यथाश्रुतार्थकत्वे गमिरित्ययमाहेत्यादौ पूर्वभागस्य

सर्गद्वारकार्यवन्त उपलक्ष्यन्ते इति कैयटेन स्पष्टमेवोक्तम् । तेन गवित्यय माहेत्यादौ गोइत्यादीनां सुबन्तत्वाभाव ऽपि न समुदायस्य प्रातिपदिकत्वम् । अनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तावन्मात्रस्यापि पृथक्प्रयोगार्हत्वात् । बहुपटव इत्यादौ प्रातिपदिकत्वसिद्धये स्वातन्त्र्येणेति । तत्र पूर्व इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणात्पुत्रकाम्येत्यादौ न दोषः । अत एवाङ्गसञ्ज्ञासूत्रे भाष्ये प्रत्ययग्रहणं 'यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषायाः फलनिरूपणावसरे देवदत्तो गार्ग्येति समुदायस्य यञन्तत्वेन प्राप्तप्रातिपदिकसञ्ज्ञाभावः फलत्वेनोक्तः । यथाश्रुतमूलोक्तनियमे तु नियमेनैव तत्र तदप्राप्त्या भाष्यासङ्गतिः स्पष्टैव । एतेन वृषण्वसुरित्यादौ पूर्वभागस्य प्रत्वात्पूर्वो भागः पदमित्ययुक्तमित्यपास्तम् । वाक्यस्य नेति । प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिः । पिण्डीमित्यादौ वाक्यैकदेशप्रयोगेऽलुक्समासे चाङ्गाधिकारविहितसुप्प्रत्ययनिमित्तककार्याणां सुबादेशानाञ्च चारितार्थ्ये विकल्पेन समासविधानञ्च स्वराद्यर्थमिति भावः । शशशृङ्गादिपदानाञ्च बौद्धे शशशृङ्गादौ शक्तिरिति

---

पदत्वाभावान्नियमाऽप्राप्त्याऽतिप्रसङ्ग इत्याशङ्कां वारयितुमाह । * तेनेति * । पदशब्दस्य निरुक्तार्थकरणेन । अनुकरणस्य स्वातन्त्र्येण प्रयोगार्हत्वमुपपादयति । * अनुकरणस्येति * । * स्वातन्त्र्येणेतीति * । एतद्घटकबहुचो न पूर्णोक्तस्वातन्त्र्यमिति भाव । यत्तु विभक्तीतरापारतन्त्र्यमत्र स्वातन्त्र्यमिति तदस्त स्वेरम इत्याद्यसङ्ग्राहकतया न्यूनम् । * पुत्रकाम्येति * । अप्रत्ययादित्यनेन काम्यज तादृक्प्रत्यये टाप् । * न दोष इति * । उत्तरभागस्य निरुक्तस्वातन्त्र्यविरहात् । न च कृदन्तत्वात् सिद्धि । परत्वान्नियमेन बाधप्रसङ्गात् । * अत एव * । उक्तस्यैव नियमस्याभिप्रेतत्वादेव । मूलस्थपदपदस्योक्तार्थकरणे तु नासङ्गतिरिति सूचयितु यथाश्रुतेति । * एतेन * । पदशब्दस्योक्तार्थकत्वेन । * सुप श्रवणानापत्तिरिति * । ननु सर्वत्र वाक्यस्यैव प्रयोगाद्वाक्यावयवसुपां लोपेन चेदपहारस्तदाङ्गाधिकारविहितानां सुब्निमित्तकार्याणां सुबादेशानाञ्च वैयर्थ्यापत्तिरत आह । * पिण्डीमित्यादाविति * । ननु वाक्येऽपि चेल्लोपस्तदा वाक्यस्यापि समाससमानानुपूर्वीकत्वापत्तौ समासविकल्पविधानमनुपपन्नमत आह । * विकल्पेनेत्यादि * । स्वरादीत्यादिना एकार्थीभावनिमित्तकसर्वकार्याणां विशेषणाद्ययोगानाम्परिग्रह । नन्वर्थवत एव चेत्प्रातिपदिकसञ्ज्ञा तदा शशशृङ्गादिशब्दानां लौकिकार्थाभावात्प्रातिपदिकसञ्ज्ञानापत्तिरित्यत आह । * शशशृङ्गादिपदानामिति * । एतेन तेष्वपि पूर्वसूत्रेणैव प्रातिपदिकसञ्ज्ञेति न तेषु प्रातिपदिकसञ्ज्ञासिद्ध्यर्थं समासग्रहणं नियमार्थमिति

पूर्वेणैव प्रातिपदिकत्वे सिद्धम् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वम् । अक्षौहिणीरथन्तरादिपदेषु अवयवानामत्यन्तनिरर्थकानामप्यन्यत्र

---

शङ्कनीयमिति भावः । ननु बौद्धपदार्थानङ्गीकारेऽपि शशशृङ्गस्य तादात्म्यसम्बन्धावच्छिन्नशशीयनिष्ठप्रकारतानिरूपितविशेष्ये लक्षणया तादृशविशेष्याभेदावगाहिबोधजनकोऽयं शब्दो भविष्यति । तादृशप्रकारतानिरूपितविशेष्यता चान्यथाख्यातिनिरूपिता प्रसिद्धैवेत्यत आह । * स्वप्नाद्यनुरोधेनेति * । अत्रानुभूतानां पदार्थानां कदाचिदपि सत्ता । प्रबोधोत्तरमनुपलम्भात् । यस्य हि व्यावहारिकी सत्ता स पदार्थो घटादिरनुभूयत एव । न चात्रापि संस्कारविषयपदार्थानामन्यथाख्यातिरूपमेव ज्ञानमिह स्यादिति वाच्यम् ।

" दिवि पृथ्व्यादिचित्तस्थस्य बहिष्ठस्य न कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयत इति ॥ "

कूर्मपुराणीयस्मृतेर्वासनारूपेणान्तःस्थितानामेव पदार्थानां विलक्षणान्तःकरणस्य वृत्तिरभ्युपेयते न तु तेषाम्पदार्थानां कदाचिदपि सद्भावः । चाकचिक्यादिदोषवशादेवेदं रजतमिति भ्रमो जायते तत्र सद्विषययोर्विशेषणविशेष्ययोर्व्यावहारिकी सत्ताऽभ्युपेयेति न्यायमतरीत्या स्वीकारो नोचितः । ज्ञानलक्षणाप्रत्यासत्तेरनङ्गीकारात् । तत्सद्विशेष्यानुयोगिकत्वसत्प्रतियोगिकत्वविशिष्टसम्बन्धाननुभवाच्च । किन्तु चित्तस्य द्रव्यरूपपरिणाम एव वृत्तिरिति व्यवह्रियते । चित्तमेवेन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य विषयवासनावशात्तथा परिणमते । तस्य च परिणामस्य प्रातिभासिकी सत्ता । यावदधिष्ठानस्य व्यावहारिकसत्ताविशिष्टवस्तुत्वादितत्तद्रूपेण साक्षात्कारो न भवति तावत्स तिष्ठति । तादृशसाक्षात्कारे सति स निवर्तते । स्वप्ने तु विषयेन्द्रियसन्निकर्षस्याप्यभावेनान्तःकरणस्य निर्गमनासम्भवाद्बौद्धस्यैव भानमिति बौद्धस्वीकार आवश्यक इति । अधिकमन्यत्रानुसन्धेयम् । नन्वक्षौहिणीरथन्तरादिष्ववयवानामत्यन्तानर्थक्यात्प्रातिपदिकत्वानापत्तौ सुबुत्पत्त्यभावेन समासानापत्तौ समुदायस्य साधुत्वं न स्यादत आह । * अक्षौहिणीरथन्तरादिपदेष्विति * । अन्यत्र दृष्टार्थारोपेण । अक्षान् दीव्यतीत्यादौ ऊहो मनुष्याणामित्यादौ च प्रसिद्धानामर्थानामारोपेणावयवस्य साधुत्वार्थं तदर्थकत्वकल्पनेन प्रातिपदिकत्वादिकमुपपादनीयम् । जहत्स्वार्था वृत्तिरिति पक्षे मण्डपकुशलादिपदेऽप्ययमेव प्रकार ऊहनीयः । अत्र नैयायिकमतानुसारेण । अर्थवत्त्वमत्र शक्तिलक्षणान्यतरसम्बन्धेनार्थोपस्थापकत्वमेव । तत्र धातुप्रत्ययोरप्यस्तीति पर्युदासद्वयम् । प्रत्ययान्ते च प्रकृतिप्रत्ययसमुदायरूपेऽर्थवत्त्वमाधायप्राप्तिव्याप्तिरिति प्रत्ययान्तपर्युदासोऽनावश्यकः । अव्युत्पन्नमित्यादिकमेतत्सूत्रोदाहरणम् । डेपक्ष्ठडिति सूत्रस्य । अव्युत्पन्नप्रातिपदिकपक्षसद्भावे चैतत्सूत्रमेव

दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथा कथञ्चित्साधुत्वान्वाख्या-

---

ज्ञापकम्। कृदन्ते लिट् धुगित्यादौ धातुभेदाभावात् कृदन्ते पक्ता कारक इत्यादि-समुदायेऽपि निरुक्तार्थवत्त्वाभावादप्राप्ता सा संज्ञोत्तरसूत्रेण विधीयते। अस्यापत्यमिरित्यादौ प्रत्ययभेदाभावात्तद्धितान्ते गार्ग्य इत्यादौ च निरुक्तार्थवत्त्वाभावात्तद्धितान्तसमुदायेऽपि सारब्धा। एवमेव राजपुरुषादिसमासे समुदायेऽप्राप्ता सा विधीयते। समुदायस्य च शक्त्यभावे कृत्तद्धितेति सूत्रमेव ज्ञापकम्। एतत्समासपदघटितसूत्रम्भगवान् पाणिनिः प्रणिनाय। अत्र कृत्तद्धिते ग्रहणम्प्रत्ययग्रहणपरिभाषया तदन्तपरम्। न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणासम्भव इति वाच्यम्। तज्ज्ञापकेन सुप्तिङन्तमिति सूत्रस्थान्तशब्देन प्रत्ययग्रहणपरिभाषाया कादाचित्कत्वस्यैव ज्ञापनात्। न च विशिष्टस्य शक्त्यभावे बहुपटव इत्यादिसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोतीति वाच्यम्। प्रत्ययग्रहणपरिभाषाया इदन्त एव प्रवृत्तिस्तद्धितपदन्तु स्वाव्यवहितपूर्ववृत्तित्वस्वाव्यवहितोत्तरवर्तित्वान्यतरत्वसम्बन्धेन तद्धितविशिष्टे लाक्षणिकमिति स्वीकारात्। न चाणुपगुरिति समुदायेऽतिव्याप्तिरिति वाच्यम्। व्याकरणप्रसिद्धसमुदायस्यैव लक्ष्यत्वात्। सर्वके इत्यादिसङ्ग्रहस्तु तन्मध्यपतितन्यायेन सर्वसाधारण। न चैतन्मूलकेनोपनामित्यादिसमुदायस्य कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया कृदन्तत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम्। गतिरनन्तर इतिसूत्रस्थानन्तरपदस्य क्वचित् कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्यत्रैव ज्ञापकत्वकल्पनात्। दर्शिता चेयं रीतिर्वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञापकस्यात्रैव उपदेश इतिसूत्रस्थोपदेशपदस्य लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्व एव ज्ञापकत्वमिति यदाङ्क्रिनेर्वाने। ननु समासाविरूपसमुदायस्य शक्ति समर्थः पदविधिरितिसूत्रकरणेन भगवता पाणिनिना दर्शिता सा कथमपलप्यत इति चेन्न। समुदाये शक्त्यभावेऽपि नीलोत्पलमित्यादौ समासप्रयोजकविग्रहवाक्येऽवयवाना योऽर्थे प्रसिद्धस्तत्तदर्थविशिष्टानान्तेषा व्यपेक्षालक्षणसामर्थ्यविशिष्टानामेव समर्थः पदविधिरितिपरिभाषाविषयतास्वीकारात्। व्यपेक्षालक्षणसामर्थ्यञ्चेत्सुसो सामर्थ्ये इति सुप्रसिद्धमेव। किञ्चैकार्थीभावः किं वृत्तित्वसमासत्वान्यतरावच्छेदेन तत्सामानाधिकरण्येन वा। नाद्यः। परार्थाभिधानं वृत्तिरितिलक्षणप्रणयनेनावयवार्थातिरिक्तसमुदायार्थ एव समुदायशक्तेरभ्युपेतव्यतया कर्मधारये तदनुपपादनात्। नान्त्य। पङ्कजादियोगरूढशब्दस्थले रथन्तरादिशुद्धरूढस्थले च यत्र समुदायशक्ति कोशादिसुप्रसिद्धा तत्र समुदायशक्तेरस्माभिरपि स्वीकारात्। सर्वनामादिशब्दाना समुदायात्मकाना व्याकरणप्रसिद्धिमाश्रित्य स्वीकाराच्च। न चैकार्थीभावाभावे राजपुरुष इत्यात्रौ राजादिपदार्थस्य नामार्थतया पुरुषादिपदार्थे भेदसम्बन्धेनान्वयोऽनुपपन्न इति वाच्यम्। तेषु राजादिपदाना राजसम्बन्ध्यादिलाक्षणिकतयाऽभेदे

शास्त्रबोधितान्यतरप्रयोगाविषये । अत एव लिङ्क्ष्यानित्यादौ न दोषः अत्र प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानाभावेऽपि केवल इति न्यायमूलकम् । एतन्मूलकमेव पठ्यतेऽपदं न प्रयुञ्जीतेति । अपरिनिष्ठितमिति तदर्थः । परिनिष्ठितत्वञ्चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । नित्ये तिङन्तादावव्याप्तिवारणायाप्रवृत्तेति । वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते सेद्धत्यादावव्याप्तिवारणाय नित्येतीति दिक् ॥

ङ्याप्प्रातिपदिकात् । समाहारद्वन्द्वः । ननु परश्चेत्यनेन प्रकृतेराक्षेपात्प्रातिपदिकाधिकारो व्यर्थः । तिङन्तात्तु न द्वितीयादिः । सङ्ख्याभावा

---

भाम । ननु प्रत्ययः परो भवत्येवेत्यस्य यत्र प्रत्ययस्य लुक् तत्र नियमभङ्गस्य परिहारमाह । * अयं न्याय इति * । * अन्यतरेति * । प्रकृतिप्रत्यययोरन्यतरेत्यर्थः । एतेन यत्र प्रकृतेर्निवृत्तिस्तत्रापि व्याप्तिः इयानित्यादौ न नियमाव्याप्तिः । न चापदं प्रयुञ्जीतेति यथा वाचनिकं तथा न केवला प्रकृतिरिति नियमस्यापि वाचनिकत्वमपास्त्वित्यत आह । * एतदिति * । एतन्मूलकमेव न केवला प्रकृतिरिति नियममूलकमेवेत्यर्थः । ननु परिनिष्ठितपदार्थाप्रसिद्ध्याऽपदपदार्थाप्रसिद्धिरित्यत आह । * अप्रवृत्तनित्यविधीति * । अप्रवृत्तो यो नित्यविधिस्तस्य यदुद्देश्यतावच्छेदकं तदनाक्रान्तत्वमिति विवक्षितम् । न च भवतेरित्यादावप्रवृत्तो यो नित्यविधिरार्धधातुकेति तस्य यदुद्देश्यतावच्छेदकं वलाद्यार्धधातुकपरधातुत्वं तदनाक्रान्तमेतदिति परिनिष्ठितमेतत्स्यादिति वाच्यम् । उत्सर्गापवादस्थलेऽपवादविषयं परित्यज्यैवोत्सर्गप्रवृत्तिरित्युत्सर्गस्योपदेशकालावच्छिन्नवलाद्यार्धधातुकत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टधातुपरवलाद्यार्धधातुकत्वस्योद्देश्यतावच्छेदकतया तदनाक्रान्तत्वस्य प्रकृते सत्त्वात् । एवमेवान्यत्रापि बोध्यम् । * सेद्धत्यादावव्याप्तीति * । न च नित्यपददानेऽपि कथमस्य परिनिष्ठितत्वम् पूर्वोक्तविशेषणविशिष्टधातुपरवलाद्यार्धधातुकत्वसत्त्वादिति वाच्यम् । स्वरत्यादिभिन्नत्वेनापि धातोर्विशेषणीयत्वात् । न चास्य निषेधस्य व्यापकतया न केवलेति वचनस्य च प्रकृतिप्रत्ययमात्रविषयकतयैतन्मूलकतयेत्यसङ्गतमिति चेत् । केवलप्रत्ययप्रकृतिप्रयोगेऽप्यपरिनिष्ठितस्य प्रयोगे प्राप्ते तेन नियमेन तस्य निवृत्तावेकदेशानुमत्या व्यापकस्यापि तन्मूलकत्वमिति गृहाण ।

एकवचनोपपत्तये आह । * समाहारेति * । * प्रकृतेराक्षेपादिति * । परत्वस्य सावधिकत्वात् । न चाक्षिप्तस्य शाब्दे भानाभावेन कथमेतदिति वाच्यम् । अवध्याकाङ्क्षाया अवश्यं नित्यत्वात्प्रकृतेरिति शब्दस्याध्याहारेण विवक्षितवाक्यार्थपर्यवसानसम्भवात् । * न द्वितीयादीति * । पश्य मृगो धावतीत्यादौ धावतिपदात्कर्मबोधिका द्वितीया स्यात् । न च पचति भवतीत्यत्र तिङन्तात्प्र

त् । संख्यायास्तिङोक्तत्वाच्च । धातुभ्यस्तु न । तिङामपवादत्वात् । तस्ये-त्यादिसमर्थविभक्तिनिर्देशात्तमन्विशेर्षा तिङश्चेति ज्ञापकाच्च न तेभ्यस्तद्धित-व्यावृत्त्यर्थ इति चेन्न । तदभाव स्वार्थद्रव्यलिङ्गसंख्याकारकमयुक्तकार्यैः सस्कृतस्य बहिर्भूतापत्यादियोग इति कुत्सितइति सूत्रभाष्योक्तन्यायेन त स्यापत्यमित्यादौ तत्सबन्ध्यपत्यमित्याद्यर्थे प्रथमोच्चारितबोध्यात्प्रत्यय इ-त्यर्थस्य सत्त्वेन च सार्थकतद्धितानां सुबन्तादुत्पत्त्यानुदात्तादेरित्यस्य प्रा धान्यादुपस्थितसुबन्तविशेषणत्वापत्तौ सर्वस्य विकारः सार्व इत्यत्राप्रना-

---

थमाया अप्यापत्तिसम्भवेन प्रथमादीति वक्तव्ये द्वितीयादीत्यनुपपन्नमिति वाच्य-म् । अनभिहिताधिकारे कर्मणीति सूत्रस्य प्रथमोपादानात् । * सङ्ख्याभावादि-ति * । सङ्ख्यान्तराभावादित्यर्थः । गमकाभावेनौत्सर्गिकैकवचनस्याप्यप्रवृत्ते । एव सर्वत्र तिङन्तस्य भवतिक्रियाकर्तृत्वसम्भवेन प्रथमाया दुर्वारत्वात्सुबन्त-त्वेनैव पदत्वे सिद्धे तिङ्ग्रहणस्यानर्थक्यमपि सम्भाव्येत । न च तिङर्थसङ्ख्या-वच्छिन्ने सुबर्थसङ्ख्याया प्रकारतया भानं स्यादिति वाच्यम् । दण्डवान्दण्डवा-नितिवदुद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधासम्भवात् । ननु तस्या एव सङ्ख्याया प्रतिपादक सुप्कथन्न स्यादित्यत आह । * तिङोक्तत्वादिति * । ए-तेनैकसङ्ख्याया धात्वर्थेऽपरस्यास्तिङर्थसाधनेऽन्वयाभिप्रायेण तिङन्तात्सुबुत्प त्ति स्यादित्यपास्तम् । न च द्योतकविषये उक्तार्थानामिति न्यायो द्वौ ब्राह्मणा-वित्यादौ यथा न दृष्टस्तथात्रापि स्यादिति वाच्यम् । द्योतकविषयेऽपि क्वचि-न्न्यायप्रवृत्तेः स्वीकारात् । अत एव स्त्रीप्रत्ययप्रकरणे ध्येणोक्तेऽपीत्यादि वक्ष्य-ति । वाक्यात्तर्हि सुबुत्पत्तिः स्यादित्यपि नाशङ्कनीयम् । स्वघटकसुपा तत्रापि सङ्ख्याया उक्तत्वात् । ननु धातुभ्यस्तर्हि स्यादत आह । * धातुभ्य इति * । * अपवादत्वादिति * । विशेषविहितत्वेनेत्यादि । ननु धातुतिङन्तेभ्यस्तद्धि तव्यावृत्त्यर्थम्प्रातिपदिकाधिकार इत्यत आह । * तस्येत्यादीति * । तिङन्ताद्वे त्यन्तरेणापि तद्धित वारयति । तमबविधाविति * । * न्यायेनेति * । अनया युक्त्या सुबुत्पत्त्यनन्तरमेव तद्धितोत्पत्तिसम्भावनेति भावः । हेत्वन्तरमाह । * तस्यापत्यमित्यादेरिति * । * उपस्थितेति * । पूर्वोक्तहेतुद्वयेनोपस्थितेत्य र्थः । एवञ्च प्रातिपदिकाधिकाराभावेऽनुदात्तादेरित्यस्यानुदात्तादेः सुबन्तादि-त्यर्थोऽपि सम्भाव्येतेति भावः । नद्योन्छादिगणे सर्वशब्दस्य पाठेनाञि कर्तव्ये सर्वस्य सुपीत्येतन्न प्रवर्त्तेत इति कल्प्यते सर्वत्रैव सर्वस्य सुपीत्यस्य प्रवृत्त्या-न्तोदात्तत्वस्य श्रवणाभावात्तत्पाठस्याञ्सिद्धिमात्रफलकत्वात् । यदि च प्रातिप दिकाधिकाराभावेऽनुदात्तादे सुबन्तादित्यर्थ च सति सार्व इत्यत्र मधुकरी-त्याऽञोऽप्रवृत्तिस्तर्हि उञ्छादिषु सर्वशब्दपाठस्य वैयर्थ्यं स्पष्टमेवेति वाच्यम् ।

पत्तेः । सर्वस्य सुपीत्याद्युदात्तत्वात् । तदधिकारसामर्थ्यात्तु प्रातिपदिकस्यैव तद्विशेषणमिति न दोषः । सर्वशब्दस्योञ्छादिपाठेनान्तोदात्तत्वात् । स्पष्टश्चेदमत्र भाष्ये । न चान्तरङ्गानपीति न्यायेन लुङ्निमित्तप्रत्ययात्पूर्वं माद्युदात्ताप्राप्त्या तस्य सुबन्तविशेषणत्वेपि न दोष इति वाच्यम् । तेन न्यायेन धर्मिग्राहकमानादन्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेना दोषात् । सर्वस्य सुपीत्यत्र सौत्तरीणां सप्तमीनां तदन्तसप्तमीत्वात् । प्रत्यये परतः पूर्वस्य कार्यत्वाभावेन नलुमतेत्यस्याप्राप्तौ प्रत्ययलक्षणेन सुबन्ततया तस्यान्तरङ्गनिमित्ताविनाशकत्वाभावात् । अत एव सर्वस्तोमादिबहुव्रीहेराद्युदात्तत्वसिद्धिः । न चानुदात्तादिप्रकृतिकषष्ठ्यन्तादित्यर्थेन न दोष इति वाच्यम् । गर्गादिभ्य इत्यादौ सुबन्त प्रति गर्गादीनां विशेषणत्वासंभ-

---

भस्य प्रथमस्यैतत्सूत्रभाष्ये पठितया संकोचप्रयोजनसामान्योपलक्षणत्वात् । एव हि वार्तिके उक्तम् । वृद्धाछन्दावर्णस्वरद्वयज्लक्षणप्रत्ययविधौ तत्सम्प्रत्ययार्थम् । वृद्धाछन्दावर्णस्वरद्वयज्लक्षणे तर्हि प्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते । वृद्धात् अवृद्धात् अवर्णान्तात् अनुदात्तादेः द्व्यच इति एतानि प्रातिपदिकविशेषणानि यथा स्युरिति । अथाक्रियमाणे प्रातिपदिकग्रहणे कस्यैतानि विशेषणानि स्युः । समर्थविशेषणानि । तत्र को दोषः । उदीचां वृद्धादगोत्रात् इह च प्रसज्येत ग्लानां ब्राह्मणानामपत्यम् । एतद्धि समर्थं वृद्धम् । इह न स्यात् ग्लयोर्ब्राह्मण्योरपत्यमिति । प्राचामवृद्धात्फिन् बहुलम् । ग्लयोर्ब्राह्मण्योरपत्यमित्यत्र प्रसज्येत एतद्धि समर्थमवृद्धम् । इह न स्यात् ग्लानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । अत इञ् । इहैव स्याद्दक्षस्यापत्यन्दाक्षिरिति एतद्धि समर्थमकारान्तम् । इह च न स्याद्दक्षयोरपत्यन्दक्षाणामपत्यमिति एतद्धि समर्थमनवर्णान्तम् । अनुदात्तादेरञ् भवति । इह प्रसज्येत वाचो विकारस्त्वचो विकार इति । इह न स्यात् सर्वेषां विकार साव इति । द्व्यचष्ठगिह प्रसज्येत वाचा तरति त्वचा तरति । इह न स्यात् । घटेन तरतीति भाष्ये उक्तम् । एव पञ्चानां विकार इति विग्रहे षट्त्रिचतुर्भ्य इति विभक्तेरुदात्तत्वेन समर्थस्यानुदात्तादित्वादञ् प्राप्नोति । प्रातिपदिकाधिकारे तु पञ्च सङ्ख्याया इति पञ्चन्शब्दस्याद्युदात्तत्वादनुदात्तादिप्रातिपदिकप्रकृतिकसुबन्तत्वाभावान्न भवतीति बोध्यम् । ननु प्रातिपदिकाधिकारेऽपि यत्प्रातिपदिकं सर्वं इत्येतदनुदात्तादि तस्य समर्थम्, यच्च समर्थं सर्वं ङसिति तन्न प्रातिपदिकमित्यञ् न प्राप्नोति । लक्षणया प्रातिपदिकपदस्य तत्प्रकृतिकपरत्वञ्चेदनुदात्तादिपदस्यैव तत्प्रकृतिकेलक्षणास्तु किम्प्रातिपदिकाधिकारेणेत्याशङ्क्यते । * न वेति * । प्रमाणाभावात् ।

घादगत्या लक्षणास्वीकारेऽपि प्रकृते लक्षणायां मानाभावात् । वस्तुतस्तत्रापि न लक्षणा । गर्गादिरूपात्प्रातिपदिकात्तत्संबन्ध्यपत्यमित्यर्थप्रत्यय इत्यर्थे प्रातिपदिकात्परत्वं तद्व्यवधानेन भविष्यति । तद्व्यतिरिक्तव्यवधाने तु न मानाभावात् । एतच्च मतुप्सूत्रे कैयटे स्पष्टमित्यन्यत्र विस्तरः । लिङ्गविशिष्टस्येति । इयञ्च प्रातिपदिकसामान्यग्रहणे तद्विशेषग्रहणे च । अनया परिभाषया ङ्याप्ग्रहणवैयर्थ्यस्य भाष्ये शङ्कितत्वात् । विशेषविषये बहुतरोदाहरणादानाच्च । स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्माः विशिष्टे ऽनेनातिदिश्यन्ते । अत एव बहुव्रीहेरूधस इति सूत्रभाष्ये नद्यृतश्चेत्यस्य नद्यन्तबहुव्रीहेरित्यर्थे कुण्डोध्नीत्यत्र कबापादितः । अन्यथा तु ङ्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः । नद्यन्तानां यो बहुव्रीहिरित्यर्थेन च परिहृत इत्यन्यत् । समासान्तेषु तत्परिभाषाभावस्तु ङ्याप्सूत्रभाष्योक्तो ऽवयवविषयक एव । समुदायविषये तत्प्रवृत्तावपि दोषाभावेन तदंशे तत्प्रवृत्तौ न मानमित्याशयः, ङ्याबन्तादिति । ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम् । तेन ब्रह्मबन्धूतरायुवतितरेत्यादेः सिद्धिः । जातेश्चेति निषेधाश्च

---

श्रस्यानुपपत्त्यारम्भकबीजाभावादित्यादि । * तत्रापि * । गर्गादिभ्य इत्यत्रापि । * न लक्षणेति * । प्रकारान्तरेण निर्वाहे जघन्यवृत्तिकल्पनमन्याय्यमिति भावः । * सामान्यग्रहणे तद्विशेषग्रहणे चेति * । अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यं प्रतिपादनपरभाष्यात्सामान्यग्रहणे कुमारश्रमणादिभिरित्यस्य ज्ञापकतया विशेषग्रहणे चेत्यर्थः । * बहुतरोदाहरणेति * । अयस्कुम्भीत्यादि । नन्वाया स्त्रीप्रत्ययविशिष्टस्य प्रातिपदिकग्राहकशब्देन ग्रहणेऽपि प्रातिपदिकत्वव्याप्यधर्मलाभः कथमत आह । * स्त्रीप्रत्ययेति * । * अत एव * । उक्तार्थस्य स्वीकारादेव । * अन्यथा * । प्रातिपदिकत्वव्याप्यधर्मातिदेशास्वीकारे । ननु समासान्तविधौ नेति ङ्याप्सूत्रभाष्ये उक्तं तद्विरोध इत्यत आह । * समासान्तेष्विति । * अवयवविषय एवेति * । यथा मद्राणां राज्ञी मद्रराज्ञीत्यत्र राजाहःसखिभ्य इति टच् न । * उपलक्षणमिति * । अत्र मानन्तु कुत्सित इतिसूत्रभाष्यमेव । तत्र हि स्वार्थाधिप्रयुक्तकार्यें सत्कृतस्य बहिर्भूतकुत्सादियोग इतिन्यायेनातिशायनिकः प्रत्ययो नोत्पद्यते । ङ्याब्ग्रहणस्य वाच्यार्थमात्रतात्पर्यकत्वे तु नेति फलैक्याय लक्षणाया आवश्यकत्वमिति भावः । * सिद्धिरिति * । विशिष्टात्तद्धितसिद्धिः । अन्यथा लोहिनिका इत्याद्येव प्रयोजनं स्यात् न तु ल्युडन्तघटितम् । इत्यादेरित्यत्रादिना युवतिकेत्यादिपरिग्रहः । ननु पुंवद्भावाद्ध्रस्वत्वं विप्रतिषेधेनेति वार्तिकव्याख्यानावसरे पुंवद्भावावकाशो दारदिका इति भाष्ये उक्तं तेन

पुंवत्त्वम् । वयोवाचिनां वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात् । तद्धित इति । एतच्च समासान्ततिप्रत्ययाद्यतिरिक्तपरं व्याख्यानात् । एतेन यूनी तिर्यङ्गोमतीकेति स्यादित्यपास्तम् । एवञ्च स्त्रीप्रत्ययेषु अत्यन्तस्वार्थिका नारभ्य तद्धितेषु च ङ्याप्ग्रहणासम्बन्धो व्याख्यानात् । अत एव लोहिति केत्येतत्सिद्धये लोहितालिङ्गबाधनं वेति चरितार्थमत्यन्तस्वार्थिकानां सुबु त्पत्तेः पूर्वमुत्पत्तिरिति सर्वस्य द्वे इति सूत्रे भाष्ये स्पष्टं कैयटे च । तत्र हि पदस्येत्यस्य प्रयोजनं द्विपदिकेत्यादौ द्वित्वसंख्यायुक्तपदार्थस्य वीप्सितत्वा-

---

तसिलादिषु कप्रत्ययस्यापि पाठेन युवतिकेत्यादौ पुंवद्भावः स्यादेव कथमुक्त प्रयोगाणां सिद्धिरत आह । * जातेश्चेति * । ननु वयसोऽनित्यत्वेन नास्य जातिवाचकत्वमत आह । * वयोवाचिनामिति * । * वैकल्पिकेति * । आकृतिग्रहणेत्यादिलक्षणेऽनित्यत्वाद्व्यावृत्तविशेषणाभावाद्युवत्वादिकमपि जातिरेव ,एव युवतितरेति भाष्योदाहृते न पुंवत्त्वम् । न चैव युवजानिरित्यत्र पुंवत्त्वानापत्तिर्जातेश्चेति निषेधादिति वाच्यम् । अपर आहेत्यादिना प्रादुर्भावविनाशाभ्यां द्रव्यस्य युगपद् गुणैरित्यादिना यावद्द्रव्यभावित्वघटितलक्षणान्तरकरणेन युवत्वस्य तन्मते जातित्वाभावात् । एवञ्च भिन्नज्ञापकद्वयैकलक्षणद्वयप्रामाण्येन वयोवाचके जातिकार्यविकल्प इति भावः । वृद्धा वेदया तपस्विनीत्यादौ पक्षे तर्हि ङीप् प्राप्नोतीत्यत एतादृशानामजादिषु पाठो बोध्यः । गौरादिषु तरुणतलुनयोः पाठस्तु अपर आहेति मते जातित्वाभावात् । * एतच्चेति * । तद्धितपदञ्चेत्यर्थः । * व्याख्यानादिति * । लक्ष्यसिद्धिमूलकाद्व्याख्यानादित्यर्थः । * एतेन * । तद्धितपदस्य समासान्ततिप्रत्ययातिरिक्तपरत्वेन । तद्धितपदस्य तद्धितसामान्यपरत्वे समासान्ततिप्रत्यययोरपि तद्धितसञ्ज्ञकत्वेन एतयोरपि स्त्रीप्रत्ययान्तादेवोत्पत्तिः स्यात्तथा च यूनीतिर्यङ्गोमतीकेति स्यादेव तच्चाधुना नेति भावः । तद्धितपदस्य समासान्ततिप्रत्ययातिरिक्तपरत्वे सति यत्फलितन्तदाह । * एवञ्चेति * । तदन्यपरत्वे चेत्यर्थः । * आरभ्येति * । एतेन समासान्तानां सङ्ग्रहः । * व्याख्यानादिति * । कुत्सित इति सूत्रभाष्योक्तन्यायेन सार्थकतादितानां ङ्याबन्तादेवोत्पत्तिर्भविष्यति । ङ्यापो स्त्र्यर्थविवक्षायामेव प्राप्त्याऽस्य तत्स्वार्थिकानां तु स्वार्थद्रव्यमात्रापेक्षत्वेन ताभ्यां पूर्वमेव प्राप्तिरिति तन्न्यायाविषयत्वमित्येव युक्तिमूलकादित्यर्थः । एवं सति यत्सिद्धन्तदाह । * अत एवेति * । अत्य तत्स्वार्थिकानामप्रकृतिप्रयोज्यविषयताविलक्षणविषयत्वात्प्रयोजकत्वादेव । सुबुत्पत्तेः पूर्वमुत्पत्तिरिति । सुबुत्पत्तेः सङ्ख्यापेक्षत्वेन बहिरङ्गत्वादिति भावः । पूर्वोक्तार्थे भाष्यसम्मतिमप्याह । * सर्वस्य द्वे इति * । * प्रयोजनमिति * । अस्य द्विर्वचनाभाव इत्यनेनान्वयः । * पदार्थस्य * । पदपदार्थ

त् वीप्सायामेकत्वलक्षणसङ्ख्याया अनन्तर्भावात्समासाद्विभक्त्यभावेन पदत्वाभावात्प्राक्ताद्धितोत्पत्तेर्द्विर्वचनाभाव इत्युक्तम् । पुयोगादिति सूत्रे भाष्ये ऽप्येतत्स्फुटम् । तत्र हि गतिकारकोपपदानामित्यस्या' साङ्कूटिनमिति प्रयोजनमुक्तम् । तत्र हि आभिविधौ भावइनुणि कूटिन्शब्दादण्प्रत्ययविभक्त्योः प्राप्तयोः स्वार्थिकत्वेनान्तरङ्गत्वादणि कूटिनित्यस्यैव वृद्धि' स्यादित्युक्तम् । तस्यापि सुबन्तादुत्पत्तौ तु पूर्वं सुपि इनुणन्तत्वरूपाधिकसापेक्षत्वेन बहिरङ्गतया ऽणः पूर्वं समासे विशिष्टादणि रूपासिद्धौ भाष्यासङ्गतिः, प्राक्सुबुत्पत्तेः तु उक्तरीत्यैवान्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणिति साङ्कूटिनसिद्धिरित्यन्यत्र विस्तरः ।

स्वौजस ॥ सूत्रे समाहारद्वन्द्वः । टरूपाश्रेत इति । न च फलाभावः ।

---

स्येत्यर्थः । * एकत्वलक्षणेति * । द्वित्वसङ्ख्यायुक्तपदार्थस्य व्याप्तिबोधसमये तदर्थगतैकत्वानवगमात् । * पदत्वाभावादिति * एतेन द्विर्वचनाभावे हेतुरुक्तः । * प्राक् तद्धितोत्पत्तेरिति * । तद्धितोत्पत्त्यनन्तरन्तु न द्विर्वचनम् । तद्धितान्तेन वीप्साया बोधनात् । तद्धितस्यास्य स्वार्थिकतया सुबुत्पत्तेः प्रागेवोत्पत्तिरिति स्पष्टमनेन लभ्यते । सुबुत्पत्तेस्तु सङ्ख्यापेक्षत्वमेतादृशतद्धितस्य तु नेत्यत्यन्तस्वार्थिकेति समाख्यापि साधु सङ्गच्छते । अस्मिन्नर्थे भाष्यान्तरमपि साधकमाह । * पुयोगादितीति * । अन्तरङ्गत्वादणीति । सुबुत्पत्तेः सङ्ख्यापेक्षत्वेन बहिरङ्गत्वमिति भावः । एवं चात्यन्तस्वार्थिकानां सुबुत्पत्तेः प्रागुत्पत्तिस्वीकारवत् स्त्रीप्रत्ययानां लिङ्गबोधकत्वेन बहिरङ्गतया स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम् । * इनुणीति * । कृदधातोरिति शेषः । * स्वार्थिकत्वेनान्तरङ्गत्वादिति * । विभक्त्यर्थभूतसङ्ख्याकारकापेक्षत्वेन बहिरङ्गत्वादिति स्पष्टमेव लभ्यते । * तस्यापि * । अत्यन्तस्वार्थिकाणोऽपि । अपिशब्देन समाससङ्ग्रहः । न च समासस्य पदद्वयसापेक्षत्वमणस्त्विनुणन्तमात्रापेक्षतयाऽन्तरङ्गत्वमिति वाच्यम् । अण्प्रत्ययो भवतीत्यर्थे अननीये सौत्राण्पदादण्प्रत्ययस्वरूपज्ञानस्याप्यपेक्षासत्त्वेन समासाद्बहिरङ्गत्वमिति भावः । इदमत्र बोध्यम् । समासान्तप्रकरणे प्रातिपदिकादित्यस्याप्यसम्बन्धः तेषामलौकिकविग्रहवाक्य एवोत्पत्त्या तस्यामवस्थायामप्रातिपदिकत्वादिति ॥

* समाहारद्वन्द्वे इति * । इतरेतरद्वन्द्वे बहुवचनापत्तिः पृथक्पदत्वे प्रत्येकं विभक्तिश्रवणापत्तिरत आह । * समाहारद्वन्द्व इति * । ननु लोपफलिकेत्संज्ञा न युक्ता उच्चारणसामर्थ्यात् । अन्यथा काम्यच ककारस्यापि सा कथन्न स्यादत आह । * इतरव्यावृत्त्या चरितार्थानामिति * । एतेन काम्यजपय

लोपस्यैव फलत्वात् । तत्र तत्रेतरव्यावृत्त्या चरितार्थानां लोपफलकत्वस्वीकारे बाधकाभावात् । काम्यजादौ तु लोपे सति वर्णोच्चारणवैयर्थ्याच्च तन्मात्रफलिकेत्सञ्ज्ञेति बोध्यम् । न विभक्ताविति निषेधोपयोगिनी विभक्तिसञ्ज्ञेति ।

विभक्तिश्च ॥ चकार एकसञ्ज्ञाधिकारेऽपि पुरुषवचनसञ्ज्ञाभ्यां समावेशार्थो ऽन्यथा पर्यायः स्यात् । सुप इति सूत्रं तिङस्त्रीणीति सूत्राच्चेह इति चानुवर्तते । प्रथमयोरित्यादौ व्याख्यानात्माचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणं बोध्यम् । अन्यथा औजसोः पूर्वत्र्येव वदेत् । विभक्तिप्रदेशेषु सुप्तिङिति न वक्तुं शक्यम् । यत्र तत्रेत्यादौ त्यदाद्यत्वानापत्तेः ।

---

चकार इवोच्चारणसामर्थ्यमेषु नास्तीति भावः । * निषेधोपयोगिनीमिति । धात्वन्तरसम्बन्धेन विभक्तिशब्दावच्छिन्नस्य निमित्तत्वादिति भावः । ननु विभक्तिश्चेतिसूत्रमकर्तुं शक्यम् । न विभक्ताविति सूत्रे सुप्तिङ्ग्रहणेनैव सिद्धेः । अत एव आविभक्तावित्यादिसूत्रे सुब्ग्रहणमेवास्तु । स्वसार्दीनाम इत्यत्रापि सुब्ग्रहणमेवानुवर्तते । तथा सति प्राग्दिश इत्यत्रापि सुपेत्येवाधिकारः । यत्र तत्रेत्यादौ सुप्सञ्ज्ञके त्रलादावत्वमभविष्यति । न चैवमेतर्हीत्यत्र सुपि चेति दीर्घापत्तिरिति वाच्यम् । यञि सुपि च इति करणेनादोषात् । पादौ मादौ सुपीति तस्यार्थः । न च यत्र तत्रेत्यादौ सुपक्त्रलादेर्लोपः इदानीमित्यादावनुदात्तौ सुप्पितावित्यनुदात्तत्वञ्च स्यादिति वाच्यम् । त्रलादिविधानसामर्थ्येन लुगभावसिद्धेः । त्रलो लित्करणेन ज्ञापकेन प्राग्दिशीयप्रत्ययेऽनुदात्तौ सुप्पितावित्यस्याप्रवृत्तेश्चेति चेत्र । त्रलादीनां विधानसामर्थ्यकल्पनेन त्रलो लित्वस्य ज्ञापकत्वाश्रयणेन मनोव्यापारगौरवस्य स्पष्टत्वात् । किञ्च विभक्तिसञ्ज्ञाभावे इयेन सहेति वार्तिके सुबलोपश्चेत्येव वाच्यम् । एवञ्च तत्रवत्यादौ त्रलादीनामश्रवणेन चरितार्थतया तत्रत्येत्यादौ लोपापत्तेर्दुर्वारत्वात् । यञि इत्यत्र तत्पदद्वयकरणाच्च । सर्वदा इत्यत्र दाप्रत्ययस्य विभक्तिसञ्ज्ञायां प्रत्ययाद्युदात्तत्वेना तोदात्तत्वमभवति । सुप्सञ्ज्ञायान्तु सौत्रधर्य सप्तम्य इति सिद्धा तानादौ विभक्तिनिमित्तकाद्युदात्तत्वेऽपि पुनर्दा वस्य सर्वस्य सुपीत्याद्युदात्तत्वापत्तावनुदात्तान्तत्वापत्ते श्चेति ।

* समावेशार्थ इति * । तेन युष्मद्युपपदे इत्यादिप्रवृत्तिः । न त्वन्यतरबाध वचनद्वयप्रामाण्यात्तदाह । * पर्याय इति * । ननु श्रीणित्रीणीत्यस्यानुवृत्त्यैतेन मा विभक्ताविति सूत्रविषये सामर्थ्यानिर्वाहेऽपि प्रथमयोरित्यत्र वचनयोरेव ग्रहणम्प्राप्नोतीत्यत आह । * प्रथमयोरित्यादाविति * । * वाच्ययोरित्यर्थः । * व्याख्यानादिति । प्रथमयोरितिशब्दोपादानमूलकाद्व्याख्यानादित्यर्थ इतदाह । * अन्यथेति * । तयोरेव ग्रहण इत्यर्थः । विभक्तिप्रदेशेष्विति । निरू-

तेषां सुप्सञ्ज्ञा त्वशक्या । एतर्हीत्यादौ सुपिचेति दीर्घापत्तेः । सप्तम्यन्ता इति । स्त्रीलिङ्गा इति शेषः। प्राचां वैयाकरणान्तराणाम् । इहापि । अस्मिन् व्याकरणेऽपि ।

सुपः ॥ सुबिति प्रत्याहारात्षष्ठ्यन्तः ।

द्व्येकयोः ॥ नियमार्थे इमे । इह सूत्रे द्व्येकशब्दौ संख्यापरौ न सङ्ख्येयपरौ बहुवचनापेक्षेस्तदाह । द्वित्वैकत्वयोरिति। लौकिकप्रयोगे त्वाद्-शतः सङ्ख्याः सङ्ख्येयइति कोशभाष्याद्युक्तेः सङ्ख्येयपरत्वे एव प्रायः साधुत्वं क्वचित्सङ्ख्यापरत्वेऽपि सङ्ख्येयगतसङ्ख्यारोपेण साधुत्वम् । अत एव कस्य द्वित्व इत्याद्यर्थे कयोर्द्वयोः केषां बहुष्विति प्रयुक्तमिति बोद्ध्यम् । एकशब्दो द्विशब्दसाहचर्यात्संख्यावाच्येव । एकग्रहणन्त्यक्त्वैकवचनमुत्सर्गः कर्तव्यस्तेनाव्ययेभ्य' पचतिकल्पमित्यादौ च व्यर्थैकवचनप्रयोगासिद्धिरिति

---

पितरवकमेतत् । * दीर्घापत्तेरिति * । न च तिङ्सञ्ज्ञैवास्तु । निघातापत्ते । * अस्मिन् व्याकरण इति * । तेनेहेत्यस्यास्मिन्प्रकरण इत्यर्थकत्वभ्रमनिरास ।

ननु सुबिति सप्तमीबहुवचनस्यैव ग्रहणमस्त्वित्यत आह । * प्रत्याहारादि-ति * । पूर्वसूत्रे त्रीणित्रीणीत्युपादानादेकस्य समानफलकानेकसञ्ज्ञाकरणस्य प्रसङ्गाच्चेत्यादि ।

नन्वादशात सङ्ख्याशब्दस्य सङ्ख्येयपरतया द्वित्वैकत्वयोरित्यनुपपन्नमत आह । * न सङ्ख्येयपराविति * । * बहुवचनापेक्षेरिति * । एवं हि सति द्व्येकेष्विति स्यात् । * प्राय साधुत्वमिति * । एतत्फलमाह । * क्वचिदित्यादि * । नन्वेकशब्दस्यान्याद्यर्थकस्यापि ग्रहण स्यादत आह । * द्विशब्दसाहचर्यादि-ति * । नन्वेकत्वे वाच्य एव चेदेकवचनन्तदाऽव्ययेभ्यस्तस्याप्युत्पत्तिर्न स्याद-त आह । *एकग्रहणमिति* । * व्यर्थैकवचनेति * । अत्रैकशब्दस्यानुपादानेन प्रसिद्धस्यैकशब्दार्थैकत्वस्याभावेऽप्येकवचनसिद्धिरिति भाव । बहुषु बहुवचनमित्यनेन शास्त्रेण बहुत्वे बहुवचनस्य प्रवृत्तिरुद्भाविता । तत्र केषां बहुष्वित्याकाङ्क्षायां येषु कर्मादिषु बहुवचन विधीयते तेषाम्बहुष्विति भाष्ये उक्तम् । अत्र केषां बहुष्वित्यत्र षष्ठ्युपादानाद्बहुत्व बहुवचनयोरूप्यम् । तत्र बहुत्वस्य सङ्ख्या । नियतविषयपरिच्छेदहेतुर्हि सङ्ख्या । बहुत्वन्तु न तथा । न च बहुत्वस्यासङ्ख्यात्वे सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चेत्यनेन विरोध इति वाच्यम् । तत्रत्यसङ्ख्यापदेन बहुत्वस्याप्युपलक्षणात् । त्रिचतुरादिव्यक्तीनां विवक्षायामपि बहव इति प्रयोगात् । अत एव बहुगणेतिसूत्रभाष्ये यदयमसङ्ख्या सङ्ख्येत्याह सङ्ख्यावद्भवतीत्युक्तम् । तच्च बहुत्व त्र्यादिसङ्ख्याव्यापकमखण्डोपाधिरूपम् । किञ्च लोके घटा इत्युक्ते कतीति सङ्ख्याप्यसङ्ख्याजिज्ञासा भवति । यदि बहुत्वमेव नियत

तद्धितश्चेति सूत्रे भाष्ये स्पष्टम् ।

बहुषु ॥ बहुशब्दोऽत्र त्रित्वादिपरार्द्धान्तसङ्ख्यानां व्यापको यो धर्मविशेषो बहुत्वं तत्परः । बहुवचनं त्वाश्रयगतं बहुत्वं धर्मं आरोप्य ध्रुवम् । तेन वैपुल्यवाचिनो न ग्रहणम् । दारा इत्यादौ त्ववयवादिगतबहुत्वस्यावयविन्यारोपो बोध्यः । स च कोशवृद्धव्यवहारानुसारेणैवेति नातिप्रसङ्गः । भर्तृदारयोरथतेजसोरित्यादौ स्तौ तु द्विवचनमेव । आरोपे मानाभावात् । अत एव श्वेरूपयोरिति सङ्गच्छते । एतेनैकस्मिन्नपि गुरवः समागता इत्यादि समर्थितम् । अन्वर्थसञ्ज्ञयैव सिद्धे इदं सूत्रद्वयं स्पष्टार्थम् । राम इति । रुत्वे एकदेशविकृतन्यायेन सुबन्ततया पदत्वाद्विसर्गः ।

---

विषयपरिच्छेदकत्वमथेत्तर्हि छाडशाजिज्ञासाबोधकव्यवहारो न स्यात् । न च यत्र घटत्रयविषयकं घटा इत्याकारकं ज्ञानं तत्र बहुत्वप्रकारकज्ञानेऽपि त्रित्वप्रकारकनिश्चयाभावात्त्रित्वप्रकारकसंशयप्रतिबन्धो न स्यादिति वाच्यम् । द्वित्वादिवद्बहुत्वस्याप्यपेक्षाबुद्धिजन्यतया यदापेक्षाबुद्धिविशेषजन्यबहुत्वप्रकारकप्रत्यक्षं तदा त्रित्वप्रकारकप्रत्यक्षसामग्र्या अपि कल्पनेन जायमानत्रित्वादिप्रकारकप्रत्यक्षेण प्रतिबन्धात्संशयानुत्पादात् । यत्र तु न प्रत्यक्षविशेषसामग्री तत्र बहुत्वस्यापि प्रत्यक्षम् । न चैवमपि यत्र घटा इति बहुवचनान्तशब्दप्रयोगस्तत्र त्रित्वस्य बहुवचनार्थतावच्छेदकतया तद्व्यक्तित्वप्रकारताकशाब्दबोधासम्भवेन तादृशसंशयापत्तिरिति वाच्यम् । इष्टापत्तेः । यदा घय इत्यादिशब्दान्तरात्त्रित्वादिशाब्दधीस्तदैव संशयनिवृत्त्यभ्युपगमात् । न च बहुत्वस्याखण्डोपाधित्वेऽभावत्रयस्य वृत्तितया यत्किञ्चिद्व्यक्तिविवक्षायामपि घटा इति प्रयोगापत्तिरिति वाच्यम् । त्रित्वादिव्याप्तिविशिष्टपर्याप्तेरेव बहुत्वसम्बन्धत्वोपगमेनैकस्मिंस्तादृशपर्याप्तिसम्बन्धेन तस्यासत्त्वात्प्रामाणिकानां तथा व्यवहारः । अत एव दारा इत्यादौ बहुवचनस्यारोपेण साधुत्वस्वीकारः साधु सङ्गच्छत इत्याशयादिति दिक् ।

ननु बहुष्विति सूत्रे बहुशब्दस्य बहुत्वार्थकत्वे बहुवचनासङ्गतिरत आह । *बहुवचनं त्वाश्रयेति* । नन्वेकव्यक्तावपि दारशब्दस्य बहुवचनान्तस्य प्रयोगो दृश्यते । स च वाच्यार्थे बहुत्वाभावादसङ्गत इत्यत आह । *दारा इत्यादाविति* । *कोशवृद्धव्यवहारेति* । कोशाद्यथा । दाराः पुंसि च भूम्न्येवेति । वृद्धव्यवहाराद्यथा । गुरवः समागता इत्यादौ । *राम इतीति* । रमन्ते योगिनो यस्मिन्निति व्युत्पत्त्या हलश्चेति घञा कृदन्ततया प्रातिपदिकत्वात्स्वाद्यः । कार्यकालपक्षाभिप्रायेणाह । *एकदेशविकृतन्यायेनेति* । रेफान्तसमुदाये सान्तनिष्ठपदत्वस्यासिद्धेः । एतेन सकारमात्रस्य रुत्वे स्थानितया तन्निष्ठसुबन्तस्य रुशब्देऽतिदेशो दुर्लभ इत्यपास्तम् ।

सरूपाणामे ॥ वृद्धो यूनेति सूत्रादेवकारोऽपकृष्यत इत्याह । सरूपा-
ण्येवेति । तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्भ्यामि नैकशेषः । न चै-
कविभक्ताविति व्यर्थम् । यानि सरूपाण्येवेत्युक्त्यैवोक्तदोषवारणादिति वा-
च्यम् । हरिणस्त्रीवाचकहरिणीशब्दस्य हरितवर्णविशिष्टस्त्रीवाचकहरिणीश-
ब्दस्य चैकशेषानापत्तेः । पुंवद्भावेन तद्धितादौ वैरूप्यात् । दृष्टानीति । लौ-
किक प्रयोगे इति शेषः । एकशेषश्चायमनैमित्तिकत्वेनान्तरङ्गत्वाद्विभक्त्यु-
त्पत्तेः पूर्वमेवेति एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्यम् । ननु तन्त्रेणैव सिद्धे-
रिद व्यर्थम् । यथा अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यत्राक्षा इति का-

---

भ्यामीति । भ्यामादावित्यर्थः । एवकारबलेनान्वयितावच्छेदकावच्छेदेन
विधेयान्वयलाभाद्विभक्तिरूपावच्छेदेन सारूप्य एवैकशेष इति भावः । * पुंव-
द्भावेनेति * । भस्याढे तद्धित इति सूत्रविहितेनेत्यादि । नन्वेकशेषस्यापरनिमित्तक-
त्वेनान्तरङ्गतया बहिरङ्गदीर्घादीनामसिद्धत्वान्मातृशब्दयोर्वैरूप्यादर्शनादेकशेषो
दुर्वार इत्यत आह । * लौकिक इति * । स च परिनिष्ठित एव । तत्र वैरूप्य-
न्नस्त्यत एवेति भावः । * प्राप्तिरेव नेति * । एतावतैव द्वन्द्वापवाद एकशेष
इति व्यवहारः । न च सर्वशब्दस्य संज्ञाभूतस्यासर्वनामत्वाज्जसि सर्वा इति
सर्वनाम्नस्तु सर्वे इत्येव वैरूप्यादेकशेषो न प्राप्नोतीति वाच्यम् । विभक्ताविति
सप्तम्य सोपादानेन तत्प्रत्यययोग्यप्रातिपदिकांश एव वैरूप्याभावस्य विवक्षित-
त्वात् । न च तथाप्यनयोरामि सर्वेषां सर्वाणामिति वैरूप्यदर्शनादेकशेषो न प्रा-
प्नोतीति वाच्यम् । विभक्तिसञ्ज्ञाविधायोद्देश्यतावच्छेदकधर्मरूपेण तादृशधा-
त्वर्मोपच्छिन्नपरत्वविशिष्टं यद्रूप्यं तन्मात्रस्य सारूप्यपदार्थत्वात् । न चैकवि-
भक्ताविद्यस्यैकधर्मावच्छिन्नविभक्तावित्यर्थो न सम्भवति । यत्रैकशेषपरतन्त्र
समुदायादेकविभक्त्यभावेनैकशेषशास्त्रस्य वैयर्थ्यापत्ते । एकजातीयायामित्यर्थे
स्वसा च स्वसारौ च माता च मातरौ चेत्यत्रैकशेषानापत्तिरिति वाच्यम् । लौ-
किकप्रयोग इत्यस्यैकशेषप्रवृत्त्युत्तरमुत्पत्तियोग्या या विभक्तिस्तस्यामित्यस्यैक-
शब्दोपादानेन विवक्षितत्वात् । * तन्त्रेणैवेति * । सकृदुच्चरितस्यैकस्य शक्त्या
नेकार्थप्रतिपादकत्वं तन्त्रम् । * कारकस्येति * । अनेन विभक्त्यन्ततन्त्रमप्रेति
सूचितम् । न चात्र तन्त्रानङ्गीकारेऽपि शास्त्रीयैकशेषेणैव निर्वाह इति वाच्यम् ।
द्वन्द्व इत्यस्यानुवृत्त्या इदितो नुमिति लिङ्गेन च सहविवक्षायामित्यस्यावश्यकत्वा-
त् । सा चैकधर्मावच्छिन्नान्वयित्वे एव । प्रकृते च समभिव्याहृतानेकसाहित्या-
नवच्छिन्नक्रियायामेवान्वयस्य तात्पर्यविषयतया सा न । शाब्दबोधोऽप्यक्षपद-
बोध्यानां साहित्यानवच्छिन्नान्तःक्रियान्वयिनां समूहालम्बनरूप । न केवल-

रकस्य सकृदुपादानेऽपि सर्वत्रान्वयः । तन्त्रस्य कारणन्तु शब्दानामतुल्यरूपता । एवमक्षो भज्यतां भुज्यतां दीव्यतामित्यपि । तन्त्रन्तु द्विधा शब्दतन्त्रमर्थतन्त्रञ्च । शब्दस्य पर्यायपरिहृत्यसहत्वे आद्यम् । यथा ऽक्षा इत्यादौ । तत्सहत्वे त्वन्त्यम् । यथा घटा इत्यादौ । तत्राक्षा भज्यन्तां भुज्यन्तामित्यादावन्वयिपदार्थभेदाद्बोद्धुराकाङ्क्षयैव बोधः । उच्चारणन्तु तन्त्रेण । अन्वयिपदार्थस्यैकत्वे तु एकोपस्थित्यैवान्वयो यथा ऽक्षानपश्य घटान् पश्ये

---

ऽप्यबहुवचनसम्भवाय एव तन्त्रेण निर्देशः किन्त्वेकवचनान्तप्रयोगेऽपि तदाह । *एवमक्ष इति * । न चानेकस्य बह्वर्थकत्वे बहुवचनापत्तिरिति वाच्यम् । विभक्त्यन्तस्य तन्त्रेणानेकार्थकत्व विवक्षितत्वात् न प्रातिपदिकमिति तदभावे । उचितश्चैतादृशो विषये तन्त्रस्वीकारः । अन्यथा साहित्याभावेऽप्येकशेषस्वीकारे द्विश्यमाणकशब्दस्यानेकार्थाभिधायकत्वे वृत्त्या पुष्पवन्तपदप्रयोग इवैकवचनान्तस्य स्यात् । न्वयक्षो भज्यतामित्यत्र न तन्त्रम्, किन्तु वक्तुर्यदा श्रूयमाणकशब्दादुपस्थितानामबहूनामर्थानामनेकशान्वयविवक्षा तदा तस्य शब्दस्यावृत्त्याऽर्थानामपृथगुपस्थितिरेव स्वीक्रियत इत्यत आह । * तन्त्रमिति * । * शब्दस्य पर्यायपरिहृतीति * । पर्यायस्य पर्यायवाचकस्य परिहृतिः स्वप्रयोगाभावेऽपि स्वबोध्यबोधायस्तु प्रवृत्ति तत्सहत्वन्तद्योग्यत्वमिति यावत् । अत्र शब्दस्येति षष्ठ्यर्थो निष्ठत्वम् । एवञ्चैतादृशशब्दनिष्ठधर्मवैविध्येन शब्दोऽपि द्विविधः । स्वावच्छिन्नशक्यतावच्छेदकावच्छिन्नविषयतासमनियतविषयताकबोधजनकतावच्छेदकस्वभिन्नानुपूर्वीकशब्दक एवसम्बन्धधर्मवत्व शब्दतन्त्रमिति निष्कर्षः । स्ववाचकतावच्छेदकतानुपूर्वी । सा च घटशब्दनिष्ठा । तदवच्छिन्नशक्यतावच्छेदकावच्छिन्नविषयतासमनियतविषयताकबोधजनकतावच्छेदकस्वभिन्नकलशेत्यानुपूर्वीकत्वस्य तत्र सत्वात् । समनैयत्यघटकव्यापकत्वानिवेशे रथाक्षविषयविषयकबोधजनकताव्यक्तिरिति शब्दमादायाव्याप्त्यापत्तिनिवेशे द्रव्यशब्दमादायाक्षावित्यादावसम्भव स्यादित्युभयोपादानम् । अक्षेत्याद्यानुपूर्वी च न तादृशीत्येतादृशेषु शब्दतन्त्रमेव । एवञ्चैकस्मिन् शब्देऽर्थे वा बहूनामर्थानां शब्दानां वा सम्बन्धसम्भवाच्चकिदुदुम्बधारण इति भाष्यार्थानुसारात्तत्रव्यवहार उभयत्रापि समञ्जस एव । यत्र तु यत्रानेकार्थबोधो जायतामितीच्छया वक्तुः शब्दोच्चारणानुकूला वृत्तिस्तत्र तन्त्रेणोच्चारणमिति व्यवहारः । यत्र तु न तादृशीच्छा तत्र तथा व्यवहाराभावः । इदं तन्त्रेणोच्चारणमनेकक्रियान्वयविवक्षायामेव सकृदुच्चरितः शब्दः सकृदर्थं गमयतीतिन्यायादित्याशयेनाह । * अन्वयीति * । अन्वयानुयोगिधात्वर्थस्य भेदादित्यर्थः । * एकस्य इति * । न च क्रियायाः सङ्ख्याया अभावादेकत्वं इत्यसङ्गतमिति वाच्यम् । सत्याकृतपरि

त्यादाविति चेत्सत्यम् । सरूपाणामेकशेष एवेति नियमार्थत्वात् । तत्फलन्तु प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचित्तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः । स चायं नियमो विभक्तौ यानि सरूपाण्येव तद्विषयः सहविवक्षाविषयश्च । अत एव विभक्त्यन्तानामेकशेष इति पक्षे द्वन्द्वप्रतिषेधो वक्तव्य इत्याशङ्कानवकाश एकशेषो द्वन्द्वं बाधिष्यते इति भाष्ये उक्तम् । किं वा सहविवक्षायामपि तत्प्रवृत्तौ सहाविवक्षाया द्वन्द्वस्य वाऽन्यत्र कर्मधारयस्यापि बाधापत्तौ सारवसारवोर्मिज इत्यादिप्रयोगविरोधापत्तिः । असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण ब्राह्मणाभ्याङ्कृतन्देहि पयो जरयतीत्यादि नीलोत्पलस्पर्धिनी नेत्रे तनुर्वो हरेरिति विद्वन्मानसहंसेतिवच्चेष्टमेवेति बोध्यम् । न चासहविवक्षायान्तन्त्रसत्त्वे इदित इति गुरुनिर्दे-

---

च्छेदशून्यत्वे इत्यर्थात् । * एकोपस्थितीति * । इत्युपस्थापितदर्शने प्रभुश्च मान्तेनाक्षानितिपदेन तन्त्रेणोपस्थापितानां देवनाक्षरथाक्षविभीतकाक्षाणामन्वयः । * तत्फलन्त्विति * । नियमफलन्त्वित्यर्थः । * प्रत्यर्थमिति * । अर्थमर्थम्प्रतीत्यर्थः । अत्रापि नाऽर्थावर्थौ प्रतीति भाष्योक्तविग्रहोऽपि सूचितः । * तद्विषय इति * । सूत्रस्वारस्यात् । अन्त्य आह । * अत एवेति * । सहाविवक्षाविषयत्वस्वीकारादेव । प्रकृतसूत्रे तिष्यपुनर्वस्वोरित्यतो द्वन्द्वे इत्यस्यापकर्षणादेतल्लाभः । तस्यापकर्षणमकृत्वा तादृशनियमस्वीकारे दोषमाह । * किञ्चेति * । * सारवसारव इति * । आरवै सहिता सारवा सरय्वा भवा सारवा । सारवाश्च ता सारवाश्च ऊर्मयस्तासु जात इत्यर्थः । विभक्त्यन्ततन्त्रन्त्वसहविवक्षायामपि स्वीक्रियत इत्याह । * असहविवक्षेति * । ब्राह्मणाभ्यामिति तृतीयान्तश्चतुर्थ्यन्तश्च । * पय इति * । द्वितीयान्तः प्रथमान्तश्च । नवमे काव्यप्रकाशे

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ।
ध्यानालम्बनता समाधिनिरतैर्नीतेहितप्राप्तये ॥
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती ।
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेरिति ॥
लिङ्गवचनश्लेषोदाहरणम् । तथा
विद्वन्मानसहंस वैरिकमलासङ्कोचदीप्तद्युते ।
दुर्गामार्गण नीललोहित समित्स्वीकार वैश्वानर ॥
सत्यप्रीतिविधान दक्ष विजयप्राग्भाव भीम प्रभो ।
साम्राज्यं वर वीर वत्सरशतं वैरिञ्च्यमुच्चैः क्रिया इति ॥

दशमोल्लासे उक्तम् । अत्र विदुषां मानसमित्र मानसाधिकरणकहंसेत्याद्य

शो ऽर्थः । अन्यपदार्थावगतये तत्सत्त्वात् । इधस्य धातोरिति करणे तु गौरवम् । एतच्च सूत्रं भाष्ये प्रत्याख्यातम् । अर्थान्तरं प्रति यदर्थान्तरं प्रति च यत्तदपि प्रत्यर्थमेवेत्याश्रयणेन । अनेकघटादिपदानां साहित्ये वृत्तिरेव न, अनभिधानात् । एकस्यैव त्वनेकार्थस्य तत्र वृत्तिरभिधानस्वाभाव्यादिति तदाशयः । द्विर्वचनेचीत्यादावेकशेषशब्दस्तु भाष्ये तन्त्रपरः । स चोच्चारयितुः । बोद्धुस्त्वावृत्तिरेवेति बोध्यम् ॥ एकविभक्ताविति नैकपदन्तु स्पष्टार्थम् । एकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थं स्पष्टं बोधयितुम् । ध्वनितश्चेद विभक्तिः सारूप्ये उपलक्षणमिति भाष्ये एकपदानुसारेण । समाहारद्वन्द्वविषये तु नैकशेष । एकवचनस्यान्यतरस्या-

---

र्थे । एतेषु सहविवक्षाया अभावेऽपि तुल्यरूपात्मकस्य तन्त्रकारणस्य सत्वात्तन्त्रसद्भावो नानुपपन्नः । शब्दानां तुल्यरूपत्वमेव तन्त्रकारणम् । तदुक्तम् ।

अक्षादिषु यथाभिन्ना प्रातिभञ्जिनि विक्रिया ।
प्रयोगकाराभेदेऽपि प्रतिभेदम्पृथक् स्थिता ॥
अक्षाणां तन्त्रिणान्तन्त्रे उपायस्तुल्यरूपतेति ।

भाष्यवृत्तसम्मतमेकशेषप्रत्याख्यानमाह । * एतच्चेति * । नन्वेवं सूत्रप्रत्याख्याने यदा नैकेन नानार्थप्रतिपादनविवक्षा किन्तु प्रतिव्यक्तिप्रतिपादनेच्छा तदाऽनेकघटशब्दानां सह प्रयोगः प्राप्नोतीत्यत आह । * अनेकघटादिपदानामिति * । सूत्रारम्भवादिमतापेक्षया प्रत्याख्यानवादिमतस्य प्राबल्यात् । * तन्त्रपर इति * । विभक्त्य तत्तन्त्रपर । सूत्रारम्भपक्षे एकग्रहणेऽपि विभक्तित्वव्याप्यरूपेण साजात्यविवक्षया यद्धर्मावच्छिन्ने सारूप्यन्तत्रैकशेषस्तेन श्यामावायेकशेषो भवत्येव तेषु सारूप्यसद्भावात् न त्वौजसादिषु तत्र वैरूप्यादिति केचित् । तन्मतं दूषयन्नेकग्रहणफलमाह । *एकविभेति* । एवकारलभ्याभावप्रतियोगिभूतं विरूपत्वं विभक्तित्वावच्छेदेन विवक्षितमिति भावः । यत्तु समाहारविवक्षायामप्येकशेषेण भवितव्यं, सूत्रारम्भेऽनभिधाने प्रमाणाभावात्तत्रापि सूत्रप्रवर्त्तेत एव, अन्यथा घटघटावित्यस्याप्यनभिधानेनैव सूत्रस्यैव वैयर्थ्यादिति कश्चिदाह । नन्वेवं शिष्यमाणादेकस्मात्समूहस्येतरेतरयोगस्य वा प्रतीतिरित्यत्र विनिगमकाभाव इति वाच्यम् । प्रकरणादेरेव निर्णायकत्वात् अन्यथा घटा इत्यादौ कदाचिद्व्यक्तित्रयस्य कदाचिच्चतुर्णां पञ्चानां चेत्यत्रापि नियमो न स्यात् । समाहारविवक्षायामप्येकशेषाङ्गीकारादनेकम्ब्राह्मणम्भोजयेत्युपपद्यते । अत एव च न ब्राह्मणं हन्यादित्यस्याप्युपपत्तिः । न चैवं समूहेऽभावप्रतियोगिहननकर्मत्वप्रतीतावपि ब्राह्मणेषु कथन्तत्प्रतीतिरिति वाच्यम् । समूहस्यावयवानतिरेकात् । एकत्वान्वयस्तु प्रभासमूह एवेति तन्मतन्दूषयति । * समाहारद्वन्द्वविषये त्वि-

मित्यनेनैकशेषविषयपदानां समाहारे द्वन्द्वाभावबोधनात् । न ब्राह्मणं हन्यादित्यादौ तु जातिपक्षेणैव निर्वाहः । अत एव तत्र व्यक्तिपक्षे य कञ्चिद् ब्राह्मणं हत्वा कृती स्यादिति दूषणं भाष्ये उक्तम् । शेषशब्दार्थेतरनिवृत्तिपूर्वकमवस्थानन्तदाह । एक एवेति । एकेति लुप्तविभक्त्यन्तं पृथक्पदम् । अत एव तत्र स्वरूपाणामित्यस्यान्वयः । तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया । तत्र शिष्यमाणं लुप्यमानार्थाभिधायीति न्यायेन श्रूयमाणपदवृत्त्या बोधः । धातुषु नास्य प्रवृत्तिः । एकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तिभेदानां प्रतीत्या ऽनेकधातुप्रयोगाप्रस-

---

ति * । * अन्यतरस्यामित्यनेनेति * । यद्येकशेषविषयाणां समाहारे वृत्तिः स्यात्तदा समाहारविवक्षायामेकवद्भावस्येतरेतरयोगविवक्षायान्द्विवचनबहुवचनयोः सिद्धावन्यतरस्यामिति व्यर्थमेव स्यादिति भावः । अत्र केचित् । आश्विकश्च आश्विकी च आश्विकञ्च तानीमानि आश्विकानीत्यत्र बहुप्रकृतित्वाभावात् फलसेनेति वार्तिकेनैकवद्भावस्य व्यावर्त्तनात्समाहारद्वन्द्वाभावेनैकवद्भावस्याप्राप्तस्य प्रापणार्थं प्रकृतसूत्रे एकवच्चान्यतरस्यामित्यावश्यकमित्यस्य ज्ञापकत्वाच्चिन्त्यमिति । तन्न । एकशेषस्य द्वन्द्वापवादतयाऽपवादविषयपरिहारेणोत्सर्गस्य विकल्पवारणाय प्रवृत्तिस्वीकारात् । फलसेनेति वार्तिकस्य च समाहारद्वन्द्वविधायकशास्त्राकृत्येन विभिन्नशक्यतावच्छेदककविषयकतयोक्तस्थले वार्तिकाप्रवृत्तेरिति । * जातिपक्षेणैवेति * । न च जातेः साक्षात्कार्यान्वयित्वासम्भवाद्व्यक्तेराक्षेपो वाच्यः । तासाञ्च बहुत्वाद्बहुवचनमेव स्यादित्येकवचनासङ्गतिरिति वाच्यम् । एतत्पक्षे जातेः प्राधान्येन तस्या एकत्वात्प्रधानानुरोधेनैकवचनोपपत्तेः । * अत एव * । जातिपक्षस्याभिप्रेतत्वादेव । *इति दूषणमिति* । न च विभक्त्यन्ततन्त्रेणैतादृशे विषये निर्देशाश्रयणेन दूषणासङ्गतिरिति वाच्यम् । प्रतिव्यक्ति शास्त्रावृत्त्यापत्तेरिति लाघवेन जातिपक्षस्यैवौचित्यात् । यत्रैकशेषस्तत्र श्रूयमाणातिरिक्तनिवृत्तेरशास्त्रत्वं वारयति । * एकशेषशब्दार्थेति * । एकेत्यस्य सरूपाणामित्येतदपेक्षत्वेनासामर्थ्यशङ्कानिरासायाह । * पृथक् पदमिति * । श्रूयमाणपदवृत्त्येति * । लुप्यमानपदार्थेऽपि श्रूयमाणस्य शक्तिग्राहकञ्चैकशेषविधायकशास्त्रमेव । ब्राह्मणावित्यत्रेव भवतो भवन्तीत्यादिष्वपि विभिन्नकर्तृकैकव्यापारप्रतीतिरेकशेषादेवेति भ्रमवारणायाह । *धातुष्विति* । * निवृत्तभेदानामिति * । स्वतो द्वित्वादिसङ्ख्यारहितानामित्यर्थः । स्वगतभेदरहितत्वन्तु प्रतीयत एव अत एवैकवचनम् । यत्रापि देवदत्तयज्ञदत्तविष्णुमित्रैरास्यत इत्युच्यते तत्र धर्म्युपस्थापककर्तृभेदाद्भेदेऽपि तिङन्तार्थस्यानवगतिरेव । एवम्भेदसमानाधिकरणद्वित्वाद्यनवगतेः । न च देवदत्तः पचति । यज्ञदत्तस्तु प

क्तः। सरूपाणां किम्। पटपटौ शेष इत्येतन्मात्रोक्तौ द्विबहोरपि शेषः प्र-
सज्येत। एक इत्येतावदुक्तो त्वेक आदेश इत्यर्थः स्यात्। तथा चाश्वश्चा
श्वश्चेत्यादौ कदाचित् दुव्युदात्तत्वस्वरूपानुदात्तत्वस्वरूपसाम्यमादायोभयस्वरि
तैकादेशः प्रसज्येत। न चाक्षस्यादेवनस्येतिफिट्सूत्रेण शकटाक्षे आद्युदा
त्तस्य देवनाक्षे फिष इत्यन्तोदात्तस्य चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः
स्यादिति वाच्यम्। स्वरभिन्नानां यस्योत्तरस्वरविधिरिति वचनेनैव निर्वा
हात्। एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः। किं

---

चातितराम्। विष्णुवत्तस्तु पापच्यत इत्यादौ पञ्चकस्य पचतीत्यादौ च प्रकर्षे पौनःपुन्याभ्यावृत्तिगणनप्रतीत्यामप्रतीतिरस्त्वयेयेति वाच्यम्। तेषामाश्रयगत प्रकर्षादिनिबन्धनतया। आश्रयगतो य प्रकर्षः पटुत्वादिलक्षणस्तन्निबन्धन क्रियाया प्रकर्ष पौनःपुन्यपुनरुत्पत्तिरभ्यावृत्तिरपि पुनःपुनरुत्पत्तिरेव। उत्पत्तेश्च तदधिकरणसमयव्यक्तानधिकरणसमयसम्बन्धरूपतया समयसम्बन्धगतपौनःपुन्यादिनिबन्धनमेव क्रियायाः पौनःपुन्यादिकमिति बोध्यम्। अत एव भाष्येऽनवकाशत्वेनैकशेषस्य द्वन्द्वापवादस्योपन्यासानन्तरं तिङन्तेषु एकशेषस्य चारितार्थ्यमाशङ्क्य न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति एका हि क्रियेति भाष्ये उक्तम्। न च क्रियासमूहः काल इति व्यवहारः क्रियाया एकत्वेऽनुपपन्न इति वाच्यम्। न हि वयं सर्वापि क्रिया वस्तुत एकैवेति ब्रूमः। किन्तु क्रियानामेवमत्यन्तापरत्वया पूर्वापरीभूतावयवेति भाष्यात्तस्या स्वतोभेदेऽपि शब्दशक्तिस्वाभाव्येन धातुवाच्यक्रियाया आश्रयादिभेदेन भेदेऽपि तिबृचभेदाया एव धातुतः प्रतीतिरित्यभ्युपगमात्। न चैवमपि कर्तृद्वयविवक्षाया लट्द्वयापत्तिरिति वाच्यम्। वर्तमाने लडित्यादावेकत्वस्य विवक्षितत्वात्। * उभयस्वरितकादेश इति * अन्यतरसाम्यमादायान्यतरधर्मवान्यद्यपि प्राप्नोति तथापि विनिगमनाविरहादुभयस्वरितकोऽपि स्यात्। यद्यप्यान्तरतम्यघटकोदात्तानुदात्तशब्दाभ्यान्तरतशकयोर्ग्रहणात्स्वरितघटकयोस्तयोस्तथात्वाभावादुभयस्वरितक इत्यसङ्गतम्। तथापि तेनैव रूपेण साम्यमत्र ग्राह्यमित्यत्र विनिगमनाविरहाद् दुव्युदात्तसक्षक कदाचिदनुदात्तसक्षकश्चादेश प्राप्त इत्याशय। * स्वरभिन्नानामिति *। स्वरैर्भिन्नानामित्यर्थः। * उत्तर इति *। उत्तरसूत्रेण विहित इत्यर्थः। एवञ्चाक्षस्यादेवनस्येति सूत्रस्य परतयाऽऽद्युदात्तस्यैवैकशेषः। * अनभिधानादिति *। तदुक्तम्भाष्ये। इह कस्मान्न भवति। एकश्च एकश्च द्वौ च द्वौ चेति। सङ्ख्याया अथासम्प्रत्ययादन्यपदार्थत्वाच्चानेकशेष इति। अत्र कैयटः। सङ्ख्याया अर्थस्यासम्प्रत्ययादित्यर्थः। यत्रैक शब्दोऽनेकमर्थमभिधातु शक्नोति तत्रैकशेषो नान्यत्र प्रयुक्तानामन्वाख्यानात्। एकावित्युक्तेऽसहायावित्यर्थो गम्यते न तु प्राप्ति-

शत्यादौ स्थित एवैकशेष इत्यलम् ॥

चुट्ठू ॥ आदिर्ञिटुडव इत्यत आदिरिति पश्चात्प्रत्ययस्येत्यतः प्रत्ययस्येति चानुवर्त्तते तदाह । प्रत्ययाद्याविति । तेन वाचाटे नेत्त्वम् । प्रत्ययेति किम् । चामराद्याविव मा भूदिति । चुञ्चुप्चणपोर्यादित्वात्परनिमित्तकलोपस्य बहिरङ्गासिद्धत्वात्प्रत्ययादित्वाभावान्नेत्त्वम् ॥

न विभक्तौ ॥ हलन्त्यमित्यस्य निषेधोऽयम् । अनित्यमिदन्थमोर्मकारपरित्राणार्थादुदित्करणात् । तेन किमोत्केति सिद्ध, प्राग्दिशीयत्वादयं

---

स्यर्थ । * अन्यपदार्थत्वादिति * । असन्दिग्धेन पदान्तरेणायमर्थ प्रत्याय्यत इत्यर्थ । यथा एकश्च एकश्चेत्यत्र द्वाविति । द्वौ च द्वौ चेत्यत्र चत्वार इति । अत्रेद बोध्यम् । एकादिदशशब्दान्तान्यतम पक्ष । एकशेषविधायकशास्त्रोद्देश्यत्वाभाव साध्यम् । स्वशक्यतावच्छेदकमात्रावच्छिन्नविषयताशालिशिष्यमाणशब्दजन्यबोधजनकशब्दक यत्सन्निधत्वादिति शिष्यमाणशब्दजन्यबोधीया या स्वप्रयोज्यविषयतातिरिक्तवृत्तिविषयता तत्प्रयोजकशब्दान्तरकत्वादिति वा हेतु । स्वमेकशेषप्रवृत्तिप्राक्कालिकसहविवक्षाविषय शब्द । ननु गार्ग्याविवत्यत्र कदाचिद्गर्गगोत्रापत्यद्वयस्य बोधजननेऽपि गार्ग्यायणस्यापि गार्ग्यश्च गार्ग्यायणश्चेत्येव सहविवक्षाया बोधात्स्वशक्यतावच्छेदकमात्रावच्छिन्नविषयताशालिशिष्यमाणशब्दजन्यबोधजनकशब्दकत्वस्य तत्रासत्त्वेनैतादृशधर्मावच्छिन्नाभिन्नत्वस्य तत्र सत्त्वेन प्रथमहेतौ व्यभिचार । तथा विंशतिश्च विंशतिश्च विंशती इत्यत्र द्वितीयेऽपि शिष्यमाणविंशतिशब्दजन्यबोधीया स्वप्रयोज्यविषयतानतिरिक्तवृत्तिविषयता तत्प्रयोजकचत्वारिंशच्छब्दकत्वसत्त्वेन व्यभिचार । एव घटादिशब्देऽपि पर्यायकलशादिशब्दमादाय व्यभिचार इति चेत्र । यद्यन्तर्हि नेमौ पृथक्परिहारौ एकपरिहारोयम् । सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चेति भाष्येणैवात्र समाधानात् । एतञ्च सामानाधिकरण्यसम्बन्धेन प्रथमविशिष्टद्वितीयस्य हेतुत्वादित्युक्तम्भवति । गार्ग्याविवत्यत्र प्रथमस्य विशेषणस्य सत्त्वेऽपि विशेष्यस्यासत्त्वेन विंशती घटावित्यादौ च विशेषणस्यासत्त्वेनैतेषु हेतुतावच्छेदकावच्छिन्नाभावसत्त्वान्न व्यभिचार ।

आदिग्रहणानुवृत्ते फलमाह । * तेनेति * । आदिशब्दानुवृत्तिकरणेन । * चामराद्याविति * । तथा सति चित इत्य तोदात्तापत्ति । आद्युदात्तो हि स । घृधान्त इति फिट्सूत्रेण । * नेत्त्वमिति * । यद्यत्रेत्संज्ञा स्यात्तदा चित्त्वित्त्वयो पर्याय स्यात् ।

* मकारपरित्राणार्थादिति * । मकारे सति व्यर्थमिनान्यत्रस्य मकारे

विभक्तिः । अत एवेदानीमोमस्य नेत्वमिति नव्याः । भाष्ये तु प्राग्दिशो येष्वस्यामप्रवृत्तावुदित्वं ज्ञापकमित्युक्त्वा दानींञ्चेति सूत्रे लोपो व्योरिति लोपेन यकार प्रश्लिष्येत्संज्ञा वारिता । अन्यत्रानित्यत्वस्य फलाभावाच्चैवमेवोक्त लोपस्यासिद्धत्वाच्च नान्त्यत्वमिति बोध्यम् । विभक्तौ किम् । अचो यत् ॥

अतो गुणे ॥ उस्यपदान्तादित्यतो ऽपदान्तादिति एङि पररूपमित्यतः पररूपमिति चानुवर्तते । पुरस्तादिति । अत एव नादिचीतीज्ग्रहणञ्चरितार्थम् । तद्धि रामाः रामानित्यादौ निषेधाभावाय, पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव । नोत्तरानिति । अनन्तरापेक्षयोत्तरान् व्यवहितानित्यर्थः ।

एकवचनं सम् ॥ सु' सम्बुद्धिरित्युचितम्, सम्बोधने चेत्यतः सम्बोधन इत्यनुवृत्तेः । सप्तमीबहुवचने न दोषः । सम्बुद्धौ अङ्गस्य गुण इति व्यवहाराच्च तदन्तस्य सञ्ज्ञा । तस्मात्पारायणादावदृष्टार्थमेव न्यास इति बोध्यम् ।

सम्बुद्ध्याक्षिप्तस्येति । सम्बुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादेरेवोपस्थितिः । स चात्र योग्यतया पञ्चम्यन्त इति भावः । प्रत्यये गृह्यमाणे यस्मात्स विहित इत्याद्युपतिष्ठत इति प्रत्ययग्रहणे यस्मात्स विहित इत्या

---

ऽभावात् । * अत एव * । विभक्तित्वादेव । * नव्या इति * । एतेनानित्यत्वस्य दानीमन्यतिरिक्तस्थले फलाभावेन तत्र तु प्रकारान्तरेणैव निर्वाहात्सामान्यतोऽनित्यत्वाश्रयणमनुचितमित्यरुचिः सूचिता । * इत्संज्ञा वारितेति * । समपदादित्यत्र सकारतकारयोरित्त्वाभावो निपातनादेव । न चैवमपीतस्तकारस्येत्त्वं स्यादिति वाच्यम् । लनौ पृष्टप्रतिवचने शेषे लड्यदौ, क्रियातिपत्त्यादिस्यादिनिर्देशादुच्चारणार्थस्य तस्येत्त्वस्वीकारात् । ननु यलोपेऽन्त्यत्वमस्त्येवेत्यत आह । * लोपस्यासिद्धत्वाच्चेति * । बहिरङ्गत्वेनासिद्धत्वादित्यर्थः । चो वाक्यालङ्कारे ।

* अत एव * । पुरस्तादपवादन्यायाश्रयणादेव । इज्ग्रहणाभावेऽप्यज्ग्रहणानुवृत्त्यैव सिद्धे । * तद्वैयर्थ्यमिति * । इज्ग्रहणवैयर्थ्यमित्यर्थः । नन्वनन्तराणीत्यस्य प्रतिपक्षे व्यवहिते वक्तव्ये नोत्तरानित्ययुक्तमत आह । * अनन्तरापेक्षेति * । तथा चैवशब्देन प्रतिपक्षकथनमेवेति भावः । * न तदन्तस्य संज्ञेति * । न च संज्ञाविधाविति निषेधः शङ्क्यः । सामाश्रितमितिवन्महासंज्ञाकरणेन प्रत्ययग्रहणेऽपि तदन्तग्रहणसिद्धेः ।

* योग्यतयेति * । अन्यथा समानविभक्तिकत्वाभावेनैकह्रस्वादित्यमेवेन विशेषणञ्च स्यात् । * प्रत्यय इति * । अङ्गसंज्ञासूत्रे प्रत्यय इत्यन्तस्य योगवि

द्विपरिभाषार्थ इत्यङ्गस्येति सूत्रे भाष्ये स्पष्टम् । अनुमानरूपाक्षेपस्तु नात्र फलाभावात्, यथा पीनत्वानुपपत्त्या ऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलं, न तथा एतत्सूत्रे तदनुमानेन संबुद्ध्युपपत्तिर्भवति । किं च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वे ऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः । अत एवाङ्गस्येति सूत्रे तत्स्थाने प्रत्यय इत्यधिकारः कार्य इति पक्षे प्राकरोदित्यादौ उपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरिति परिभाषोपस्थित्या समाहितं भाष्ये न त्वङ्गाक्षेपेणेति दिक्। अङ्गस्य । उक्तार्थस्य हल्ङ्याबिति सूत्राद्धलित्यनुवर्त्तते । हे कतरदिति । पक्षत्यकारस्य टिलोपेनापहारादिति भावः। न चाङ्गात्परस्याः सम्बुद्धेरवयवस्य हलो लोप इत्युचितम्, सम्बुद्ध्याक्षिप्तस्य सम्बुद्ध्यैवान्वयस्योचितत्वादत आह । कुलेतीति । अत्र परत्वात्पूर्वरूपे उभयत आश्रयणे ऽन्तादिवद्भावाभावात्तत्स्वीकारे ऽपि ह्रस्वसम्बुद्ध्योः पौर्वापर्यव्यवहारासंभवात्ताद्रूप्यानतिदेशाच्च ह्रस्वान्ताङ्गात्परसम्बुद्धेरभावान्मलोपो न स्याद्, एवञ्च लक्ष्या-

---

भागेनैतादृशपरिभाषाया लाभात् । सम्बुद्धेः प्रत्ययतया प्रत्ययज्ञानस्य प्रकृतिज्ञानव्याप्यत्वादनुमानरूपं प्रकृतिज्ञानम्भविष्यतीत्यत आह । * अनुमानेति * । भावे ल्युट् । अनुमितीत्यर्थः । * फलाभावादिति * । न च हे कतरदित्यत्र हलो लोपाभावस्यैव फलत्वामेति वाच्यम् । तस्य शास्त्रीयप्रत्ययग्रहणपरिभाषयैव लाभेनानुमानस्य व्याप्त्यादिज्ञानसापेक्षस्य विलम्बितोपस्थितिकत्वात् । न चानुमीयमानाङ्गस्य सम्बुद्धिसत्त्वमेव फलमिति वाच्यम् । तथा सत्यपि पदेन तस्यानुपस्थापनाच्छाब्दबोधाङ्गत्वं तस्य न स्यादितिभाव । * ज्ञान इति * । प्रत्ययत्वेन ज्ञाने प्रत्ययाधिकारे पाठो विधेयसमर्पकविभक्तिनिर्देशश्च साधकं न तु प्रकृतिज्ञानम्, तस्य तज्जनकतावच्छेदकधर्मशून्यत्वादिति भाव । *अत एव* । एतादृशे विषये प्रत्ययग्रहणपरिभाषाया एवोपस्थितेरेव । न च सम्बुद्धिसंज्ञकप्रत्ययो यस्माद्विहितस्तदादिष्टिलोपे कृतेऽपि कतरेत्यस्यैवेति कथमत्र लोपाभाव इति वाच्यम्। परिभाषाया प्रत्ययपरकस्य तदादेरित्यंशस्य घटकतच्छब्देनोपस्थिततया प्रकृते सम्बुद्ध्या तादृशस्यैव तदादेरित्यंशस्योपस्थितिः। सौत्र रेफान्तो न ह्रस्वान्त इत्यदोषात् ।*परत्वादिति*।लोपापेक्षया इत्यादि।*पूर्वरूपे*।अमि पूर्व इत्यनेन । *व्यवहारासम्भवादिति*। अन्तादिवच्चेतिशास्त्रबलादेकस्मिन्नपि यदि व्यपदेशापन्नतयापि ह्रस्वस्य सम्बुद्धेश्च पूर्वत्वस्य परत्वस्य चातिदेशबोधकशास्त्राभावेन तादृशव्यवहारासम्भवादिति भाव । ननु स्थानिवद्भावेन तादृशव्यवहारो भविष्यतीत्यत आह । * ताद्रूप्येति * । ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मघटितस्यानतिदेशेन ह्रस्वान्तात्परा सम्बुद्धिरिति व्यवहार स्थानिवत्त्वेनापि दुर्घ-

नुरोधादन्यासिद्धस्याप्यन्यत्रान्वय इति भावः । एतदर्थमेव हल्लुप्यते संबुद्धेश्चेदिति व्याख्यातम्, मस्य सम्बुद्धित्वासंभवात् अर्द्धविकारेणैकदेशविकृतन्यायेनापि न सम्बुद्धित्वम् । एकवचनसञ्ज्ञासम्बुद्धिसञ्ज्ञयोरुक्तपरिमाणनिष्ठतया तयोस्तेन न्यायेनालाभाच्च । मकारस्यादेशत्वाभावाच्च नात्र स्थानिवद्भावः । अत एव राममित्यादौ सुपि चेति दीर्घो न । न च सम्बुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूतात्सर्मकेनामः सम्बुद्धित्वाभावे कथमस्य सम्बुद्ध्यवयवत्वमिति वाच्यम् । सुप्सञ्ज्ञाया सकारविशिष्टे सत्त्वेन तदुपस्थाप्यमानैकवचनसञ्ज्ञाया विशिष्टे सत्त्वेन सम्बुद्धिसञ्ज्ञायामित्सञ्ज्ञाकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात् । एतेनादड्डादेशेनैव नपुंसकत्वाभिव्यक्तौ कुलेतीति व्यर्थमित्यपास्तम् । एङ्ग्रहणं किमिति । हरे विष्णो इत्यादौ अङ्गाधिकारस्थात्परनिमित्तापेक्षत्वाच्च गुणात्पूर्वं ह्रस्वान्तत्वादेव सि

द्ध । ह्रस्वत्वस्य वर्णवृत्तितया विशेषणतयाऽनाश्रयणात् । ननु पूर्वोक्तन्यायेन ह्रस्वान्ताक्षरमेकदेशविकृतन्यायेन मस्य सम्बुद्धित्वं तस्यैव च व्यपदेशिवद्भावेन तदवयवत्वमिति लोपो भविष्यतीत्यत आह । * अर्द्धविकार इति * अत्रार्द्ध शब्दो भागाभिप्रायेण न तु मात्रया । अत एव द्वे वक्ष्यतरमाह । * एकवचनस्येति * । ननु स्थानिवद्भावेन सम्बुद्धित्वाल्लोपो भविष्यतीत्यत आह । * मकारस्येति * । न चैतादृशे विषये सम्बुद्धित्वस्यामिति समुदायवृत्तित्वेऽपि पूर्वरूपेणानुमानिकादेशकल्पनया अ अ इत्यस्य स्थाने मकारस्यावशिष्टस्य मकारस्यादेशः सम्बुद्धिर्भविष्यतीति न कुलेत्यादौ लोपाप्राप्तिरत आह । * अत एवेति * । मस्यादेशत्वाभावादेव । यदि मकारे सम्बुद्धित्वमतिदेशलभ्यं भवेत्तदा सुप्त्वमपि तुल्यन्यायात् स्यादिति भाव । सिद्धान्तार्थेऽपि शङ्कते । * न चेति * । * मकारमात्रनिष्ठत्वेनेति * । इद यथाश्रुतसूत्ररीत्या । सुम्सम्बुद्धिरिति न्यासे तु शब्दतः समुदायस्य सञ्ज्ञित्वेनाश्रयणाद्युक्तमनल्विधित्वेन । सूत्ररीत्यैव समाधत्ते । * सुप्सञ्ज्ञाया इति * । * अनल्विधित्वादिति * । इष्टो दीर्घ इव । * एतेनेति * । उक्तरीत्या कुलेत्यस्य शङ्कासमाधानपरतया योजनेन । एङ्ह्रस्वादिति सूत्रस्थस्य एङ्ग्रहणस्य प्रयोजनमन्यथासिद्धमित्याह । * हर इत्यादि । * अङ्गाधिकारस्थादिति * । एतेनाधिकापेक्षत्वरूप बहिरङ्गत्वबीजं सूचितम् । ननु सकलापेक्षान्तरङ्गत्वाद्बहिरङ्गभावो यत्र निरस्त इति चेत्तत्राह । * परनिमित्तेति * । परनिमित्तकं बहिरङ्गमिति पूर्वपक्षिणो मतमिति भाव । * सम्बोधने प्रयोगसत्त्वे इति * । एवञ्चानेन नान्तःपादमितिसूत्रस्थेन न चेह पञ्चा तारपरोदरस्तीति भाष्ये ण विप्रेषात्सावीदृशानामत्राभिधानेन एकारग्रहणस्यापि न प्रयोजनमिति सूचितम् । सौ पदत्वञ्च स्वादिष्विति योगविभागेन साधितमेव मूले * नित्यत्वाच्चेति * । न च नित्यादप्यन्तरङ्गस्य बलवत्त्वन्तच्च ह्रस्वान्तत्व

द्धिः । सेप्रभृतीनां सम्बोधने प्रयोगसत्त्वे एग्रहणेनैव सिद्धेः प्रत्याहारग्रहणं व्यर्थमिति प्रश्नः । हरे इति । सामर्थ्यादेवात्र सन्निपातपरिभाषा न । गुणात्सम्बुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च । अत एव हे लक्ष्मि इत्यादौ लोपसिद्धिः । परत्वादिति । अभ्युच्चयः । नित्यत्वाच्चेति । चेनाऽनवकाशत्वसङ्ग्रहः । नपुंसके त्रपो इत्यादावस्यापि लुकि बाध इत्यन्यत् ॥

अमि पूर्वः ॥ पूर्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणन्तु राममित्यादौ द्विमात्रावरणाय ॥

---

प्रयुक्तस्य लोपस्योपपादितमेवेति वाच्यम् । परस्थानिकमन्तरङ्गम्परनिमित्तकम्बहिरङ्गमित्यस्य लक्ष्यसाधकत्वेनासम्प्रतिपन्नत्वादिति भावः । ननु सम्बुद्धिनिमित्तके गुणे कृते उपजीव्यविरोधस्यान्याय्यत्वमूलकसन्निपातपरिभाषया सम्बुद्धिलोपो न स्यादत आह । * सामर्थ्यादेवेति * । एङ्ग्रहणसामर्थ्यादित्यर्थः । सम्बुद्धिसन्निपातेन गुणे कृते यदि सम्बुद्धिलोपो गुणनिमित्तकः स्यात्तदा सन्निपातपरिभाषाविरोधः स्पष्ट एव । * अत्रेति * । लोपविषये । ननु अतोमितिसूत्रे म् इति छिद्रपक्षे ज्ञानमित्यादौ सुपि चेति दीर्घापत्तिमुक्त्वा सन्निपातपरिभाषया दीर्घवारणे हे ज्ञानेत्यादौ सम्बुद्धिलोपानापत्तिः । अनिमित्तसन्निपातस्य प्रत्ययलोपेन विनाशादित्युक्तम् । यदि लोपविषये सन्निपातपरिभाषा नेति प्रकृतोक्तरीत्योच्यते । तदा तत्र वक्ष्यमाणग्रन्थविरोध इति चेन्न । इग्नेजन्तसूत्रभाष्ये सन्निपातपरिभाषाया दोषनिरूपणावसरे नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यादित्युक्तम् तत्प्रामाण्येन सम्बुद्धिनिमित्तककार्ये कृते तस्य कार्यस्य यत्र सन्निपातविघातककार्यात्तन्निमित्तस्य प्रसक्तिस्तत्र सन्निपातपरिभाषाया अप्रवृत्तिः कल्प्यते । यत्र तु सम्बुद्धेरेव कार्यं तत्र सा प्रवर्तत एवेत्याशयात् । * सामर्थ्याच्चेति * । उभयोपादानसामर्थ्यादिङ्साम्यमेतत्सूत्रस्य विषय । हे हरे हे विष्णो इत्यत्र यदि सन्निपातपरिभाषया लोपो न स्यात्तदा लोपद्वारकस्यैङ्त्वव्यापकप्रवृत्तिकत्वभङ्गः स्पष्ट एव । * अत एव * । सन्निपातपरिभाषाऽप्रवृत्तिस्वीकारादेव । एचश्चैडिति प्रत्याहाराश्रयणं सन्निपातपरिभाषाया अनित्यत्वं ज्ञापकमिति तत्त्वम् । असमबलस्थले परत्वस्य नियामकमित्याशयेनाह । * अभ्युच्चय इति * । ननु सम्बुद्धिगुणस्य नानवकाशत्वम् त्रपो इत्यादौ लुका बाधेनैङ्ह्रस्वादित्यस्याप्राप्तौ गुणस्य चारितार्थ्यादित्यत आह । * नपुंसक इति * । * अस्यापि * एङ्ह्रस्वादित्यस्यापि । * अन्यदिति * । लुका बाधेऽपि प्रकृतसूत्रोद्देश्यतावच्छेदकसत्त्वेन गुणस्य प्रकृतसूत्राप्राप्तियोग्येऽपि विषयेऽचारितार्थ्येनापवादत्वमक्षतमिति भावः ।

* पूर्वग्रहणन्त्विति * । पूर्वो वर्णः स्थानप्रयत्नाभ्यां यज्जातीयस्तज्जातीय एव यथा स्यादिति ।

लशक्व ॥ समाहारद्वन्द्वः । अतद्धिते किम् । कर्णेललाटात्कनलङ्कारे कर्णिका । कित्त्वफलं त्वादिवृद्धिः स्यात् । आदिग्रहणादुद्दः पाकनो न । तस्य कित्त्वे गुणो न स्यात् ।

तस्माच्छ ॥ पुंसीति पञ्चम्यर्थे सप्तमी, पुंसो विहितस्येत्यर्थः । तत्र विद्यमानाद्विहितस्येत्यर्थो वा । तस्मादिति किम् । एतान् गाः पश्य । पुंसि किम् । मतीः ।

अट्कु ॥ बाधितुमिति । तेन पर्यणद्धमित्यत्रोपसर्गादसमासेपीति णत्वासिद्धिरिति भावः । अयोगवाहानामिति । न विद्यते योगो वर्णसमाम्नाये येषां ते ऽयोगाः । अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वादित्यर्थः । ते च ते वाहयन्ति प्रयोगं निर्वाहयन्ति ते वाहाः । ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः । अत एवोरः केणेत्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः । तदुक्तं भाष्ये । नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धमिति । आदर्शेनेत्यादौ तु नातिप्रसङ्गः । अडतिरिक्तव्यवायात् । तस्मादित्युपस्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारे ऽडादिव्यतिरिक्ताव्यवहितपरम् । तदुक्तम् । णत्वे ऽन्यव्यवाये प्रतिषेधो वक्तव्यो न वा ऽन्येन व्यवहितत्वादिति ग्रन्थेन । एतदुत्तरमतो व्यवायस्तरामाप्नोत्येव । अतैव व्यवाय इत्यर्थादित्यादि भाष्यमेकदेशिनोऽयुक्तिमत्युक्तिपरम् । चुटुतुलशर्व्यवाये नेति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धेऽट्कुप्वादित्युक्त्या

---

* पुंसो विहितस्येति * । अत्र विहितत्वानुपादाने अतिमालानित्यादौ पूर्वसवर्णदीर्घे कृते पुंसि यो वर्तते ततः परस्य शसोऽसम्भवः । आद्यव्याख्याया व्यत्ययकल्पनापेक्षया लाघवादाह । * तत्र विद्यमानादिति * । *एतान्गा इति* अत्रैतानित्यस्योपादानं गोशब्दस्य पुंसि विद्यमानत्वसूचनाय । यत्तु तस्मादित्यस्याभावेऽप्येतान् गाः पश्येत्यत्र न दोषः । शसो नुम् पुंसीति न्यासात् अकः इति हलन्तेऽतिप्रसङ्गाभावायानुवर्तनीयम् । एवञ्चादेः परस्येत्युपस्थित्याऽकारस्यान्त्यावयवे नुमि पूर्वसवर्णदीर्घे सकारस्य संयोगान्तलोपे सिद्धमिष्टम् । गा इत्यत्र तु न नुम् प्रसक्तिरपवादत्वात्पूर्वमात्त्वेऽकः परस्य शसोऽभावादिति । तन्न । विश्वपः इत्यादावाकारलोपेऽपि पञ्चमीसमासेन शसोऽकः परत्वादकारस्य नुमापत्तेः पञ्चमीसमासः प्रत्याख्यात इति न भ्रमितव्यम् । तदावश्यकत्वस्यान्यत्र स्पष्टत्वात् ।

* णत्वसिद्धिरितीति * । अत्राङ्ग्रहणं पदव्यवाये इतिसूत्रे पदशब्द आङ्भिन्नपदपर इत्यत्र तात्पर्यग्राहकमिति भावः । यदुक्तमडाद्यतिरिक्तव्यवायादिति तल्लाभप्रकारमाह । * तस्मादिति * । प्रतियोगिज्ञानसापेक्षेति न्यासस्य गु

एतैरेव व्यवाये इत्यर्थः वदता तस्यास्तदुक्तित्वध्वननात्। एतद्वार्तिकमतम्। भाष्ये तु रषाभ्यामिति सूत्रे ऋवर्णान्नस्य प्रत्याख्यानाय व्यवाये इति योग विभज्याट्कुप्वाङ्नुम्भिरित्येतैरेवाक्षरसमाम्नायिकव्यवाये नान्यैरित्यर्थक व्याख्यातम्। तदा त्वादर्शेनेत्यादौ प्राप्तिरेव नेति बोद्ध्यम्। णत्वे इति। णकार इत्यर्थः। पदान्तस्य। नभाभूपू इति सूत्रान्नेति वर्त्तते। अत्र ऽनन्तरस्येत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोद्ध्या। अपदान्तस्येत्यनुवर्त्य तस्य भाष्ये प्रत्याख्यानात्।

यस्मात्प्र॥ यस्मादिति तदादीति तच्छब्दाकाङ्क्षापूरणाय। तदादीति। तत्प्रकृतिरूपमादिर्यस्येत्यर्थः। प्रत्यासत्तिन्यायलब्धार्थमाह। तस्मिन्प्रत्यये इति। गुणः कृतात्मसंस्कार इति न्यायेनात्रापि तस्मिन्निति परिभाषाप्रवृत्तिः। प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्व बोद्ध्यम्। स्त्रीयतीति। इदम्शब्दाद्वतुपि वस्य किमिदम्भ्यावोघइति घादेशे तस्येयादेशे इदङ्किमोरितीशि यस्येति लोपे ङीपि ईयतीति रूपम्। न च तत्र परत्' स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न यस्येति लोपस्याभीयत्वादसिद्धत्वेनात्र तद्प्राप्तेरिति वाच्यम्। व्याश्रयत्वेनाभीयासिद्धत्वाप्राप्तेः। तत्र हि समानाश्रय-

---

त्वधे हेतु। इत्युक्त्या इत्यस्य लब्धमिति शेषः। * तस्या इति *। समाधानपरभाष्योक्तेरित्यर्थः। सिद्धान्तमाह। *भाष्ये त्विति*। अत्राक्षरसमाम्नायिकैरित्येतन्नियमस्य सजातीयापेक्षत्वाल्लब्धम्। अत्राक्षरसमाम्नायिकत्वञ्चाक्षरसमाम्नायपठितत्वञ्चिन्तु अक्षरसमाम्नायपठितग्राह्यत्वमपि। अत एव सरूपाणामिति निर्देशसङ्गतिः। स्व रूपमिति शास्त्राणशब्दाणशब्दप्रकारकैवोपस्थितिस्तस्मात्स्वप्रत्ययस्य प्रकारीभूतशब्दबोधकतया तस्यैव प्राप्तिरित्याशयेनाह। * णकार इति *। * न्यायानामिति *। एकस्यैव विषयभेदाद्बहुत्वारोपेण बहुवचनम्। न्यायाप्रवृत्तिरिति सूचितम्।

ननु यस्मात्प्रत्ययविधिरित्यत्र गुणानाञ्च परार्थत्वादिति न्यायेन तस्मिन्निति परिभाषाप्रवृत्तिर्न स्यादत आह। * गुण कृतात्मेति *।

गुण कृतात्मसंस्कार प्रधानम्प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते॥

पानीयमेलादिसस्दृतम्पुरुषस्य यथेति न्यायेनेत्यर्थः। भवतीत्यादौ भू इत्यादेशान्निरूपिताङ्गत्यसिद्धये आह। * प्रकृतिमात्रस्येति *। मूले, विधिरिति किम्। *स्त्री इयतीति*। विधिग्रहणाभावे यस्मात्प्रत्यय पर इत्याश्रयणे स्त्रीशब्दाद्वतुप परत्वात्तस्मिन्नपि स्त्रीशब्दस्याङ्गसंज्ञा स्यात्तथा सति स्त्रिया इतीयङापत्तिः। अत्र शङ्कते। * न चेति *। *आभीयत्वादसिद्धत्वेति*। असिद्धवदत्राभादित्यनेना

लशकु ॥ समाहारद्वन्द्वः । अतद्धिते किम् । कर्णललाटात्कनलङ्कारे क र्णिका । कित्त्वफलन्त्वादिवृद्धिः स्यात् । आदिग्रहणादूढ्ढ. पाकनो न । त स्य कित्त्वे गुणो न स्यात् ।

तस्माच्छ ॥ पुसीति पञ्चम्यर्थे सप्तमी, पुंसो विहितस्येत्यर्थः । तत्र वि द्यमानाद्विहितस्येत्यर्थो वा । तस्मादिति किम् । एतान् गाः पश्य । पुंसि किम् । मती. ।

अट्कु ॥ बाधितुमिति । तेन पर्याणद्धमित्यत्रोपसर्गादसमासेपीति ण त्वासिद्धिरिति भावः । अयोगवाहानामिति । न विद्यते योगो वर्णसमा म्नाये येषान्ते ऽयोगाः । अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाश्चेत्यर्थः । ते च ते वाहयन्ति प्रयोग निर्वाहयन्ति ते वाहा' । ते चानुस्वारविसर्गजिह्वा मूलीयोपध्मानीययमाः । अत एवोर केणेत्यादौ विसर्गव्यवधानेऽपि ण त्वसिद्धिः । तदुक्त भाष्ये । नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इ त्येव सिद्धमिति । आदर्शेनेत्यादौ तु नातिप्रसङ्ग' । अडतिरिक्तव्यवायात् । तस्मादित्युपस्थित निर्दिष्टग्रहणमेतत्समभिव्याहारे ऽडादिव्यतिरिक्ताव्यवहि तपरम् । तदुक्तम् । णत्वे ऽन्यव्यवाये प्रतिषेधो वक्तव्यो न वा ऽन्येन व्य वहितत्वादिति ग्रन्थेन । एतदुत्तरमटा व्यवायसत्वात्प्राप्नोत्येव । अटैव व्य वाय इत्यर्थादित्यादि भाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरम् । चुटुतुलशर्व्यवाये नेति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धेऽट्कुप्वाङित्युक्त्या

---

* पुसो विहितस्येति * । अत्र विहितत्वानुपादाने अतिमालानित्यादौ पूर्व सवर्णदीर्घे कृते पुंसि यो वर्त्तते ततः परस्य शसोऽसम्भव । अाद्यव्याख्याया व्यत्ययकल्पनापेक्षया लाघवादाह । * तत्र विद्यमानादिति * । *एतान्गा इति* अप्रैतानित्यस्योपादान गोशब्दस्य पुंसिविद्यमानत्वसूचनाय । यत्तु तस्मादित्य स्याभावेऽप्येतान् गा पश्येत्यत्र न दोष । शसो नुम् पुसीति न्यासात् अक इति हल ते ऽतिप्रसङ्गाभावायानुवर्त्तनीयम् । पश्चाद परम्येत्युपस्थित्याऽकारस्या न्त्यावयवे नुमि पूर्वसवर्णदीर्घ सकारस्य सयोगान्तलोपे सिद्धमिष्टम् । गा इत्यत्र तु न नुम प्रासिरपवादत्वात्पूर्वमात्वेऽक परस्य शसोऽभावादिति । तत्र । विश्वप इत्यादावाकारलोपेऽपि पञ्चमीसमासेन शसोऽक' परत्वादकारस्य नुमापत्ते पञ्च मीसमास प्रत्याख्यात इति न भ्रमितव्यम् । तदावश्यकत्वस्या यत्र स्पष्टत्वात् ।

* णत्वसिद्धिरितीति * । अत्राङ्ग्रहणम्पदव्यवाय इतिसूत्रे पदशब्द सा कल्यभिन्नपदपर इत्यत्र तात्पर्यग्राहकमिति भाव' । यदुक्तमड्व्यतिरिक्तव्यवायादि ति तद्वासमप्रकारमाह । * तस्मादिति * । प्रतियोगिज्ञानसापेक्षेति न्यासस्य गु

एतैरेव व्यवाये इत्यर्थः वदता तस्यास्तदुक्तित्वध्वननात् । एतद्वार्तिकमतम् । भाष्ये तु रषाभ्यामिति सूत्रे ऋवर्णान्नस्य प्रत्याख्यानाय व्यवाये इति योग विभज्याट्कुप्वाङ्नुम्भिरित्येतैरेवाक्षरसमाम्नायिकव्यवाये नान्यैरित्यर्थक व्याख्यातम् । तदा स्वादर्शेनेत्यादौ प्राप्तिरेव नेति बोध्यम् । णत्वे इति । णकार इत्यर्थः । पदान्तस्य । नभाभूपू इति सूत्रान्नेति वर्त्तते । अत्र ऽन-न्तरस्येत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या । अपदान्तस्येत्यनुवर्त्य तस्य भाष्ये प्रत्याख्यानात् ।

यस्मात्प्र ॥ यस्मादिति तदादीति तच्छब्दाकाङ्क्षापूरणाय । तदादीति । तत्प्रकृतिरूपमादिर्यस्येत्यर्थः । प्रत्यासत्तिन्यायलब्धार्थमाह । तस्मिन्प्रत्यये इति । गुणः कृतात्मसंस्कार इति न्यायेनात्रापि तस्मिन्निति परिभाषाप्रवृ-त्तिः । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्व बोध्यम् । स्त्रीयतीति । इदम्शब्दाद्वतुपि वस्य किमिदम्भ्यांवोघइति घादेशे तस्येयादेशे इदङ्कि-मोरितीशि यस्येति लोपे ङीपि ईयतीति रूपम् । न च तत्र परतः स्त्रीश-ब्दस्येयङाद्यापत्तिरूपो दोषो न यस्येति लोपस्याभीयत्वादसिद्धत्वेनात्र तद्-प्राप्तेरिति वाच्यम् । व्याश्रयत्वेनाभीयासिद्धत्वाप्राप्तेः । तत्र हि समानाश्रय-

---

रूपे हेतु (इत्युक्त्या इत्यस्य लब्धमिति शेषः । * तस्या इति * । समाधानप-रभाष्योक्तेरित्यर्थः । सिद्धान्तमाह । *भाष्ये त्विति* । अत्राक्षरसमाम्नायिकैरि-त्येतन्नियमस्य सजातीयापेक्षत्वाल्लब्धम् । अत्राक्षरसमाम्नायिकत्वञ्चाक्षरसमा-म्नायपठितत्वं न किन्तु अक्षरसमाम्नायपठितग्राह्यत्वमपि । अत एव सरूपाणामिति निर्देशसङ्गतिः । स्य रूपमिति णकाराणशब्दाणशब्दप्रकारकैवोपस्थितिस्तस्मा-च्चप्रत्ययस्य प्रकारीभूतशब्दबोधकतया तस्यैव प्राप्तिरित्याशयेनाह । * णकार इति * । * न्यायानामिति * । एकस्यैव विषयभेदाद्बहुत्वारोपेण बहुवचनम् । न्यायाप्रवृत्तिरिति सूचितम् ।

ननु यस्मात्प्रत्ययविधिरित्यत्र गुणानाञ्च परार्थत्वादिति न्यायेन तस्मिन्नि-तिपरिभाषाप्रवृत्तिर्न स्यादत आह । * गुणः कृतात्मेति * ।

गुणः कृतात्मसंस्कारः प्रधानम्प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥

पानीयमेलादिसंस्कृतप्पुरुषस्य यथेति न्यायेनेत्यर्थः । भवतीत्यादौ भू इत्यादे-र्दानिरूपिताकृत्यासिद्धये आह । * प्रकृतिमात्रस्येति * । मूले, विधिरिति किम् । * स्त्री इयतीति * । विधिग्रहणाभावे यस्मात्प्रत्ययः परः इत्याश्रयणे स्त्रीशब्दाद्वतुप परत्वात्तस्मिन्नपि स्त्रीशब्दस्याङ्गसंज्ञा स्यात्तथा सति स्त्रियाः इतीयङापत्तिः । अत्र शङ्कते । * न चेति * । *आभीयत्वादसिद्धत्वेति* । असिद्धवदत्राभादित्यनेना

सिद्धत्वादित्यर्थः । अत्राङभिविधौ । एवञ्च आभादिति पञ्चम्यर्थस्य व्यापकत्वस्य सत्त्वे तात्पर्यग्राहकत्वेन द्योतक इति फलितम् । भशब्दश्च लक्षणया भाधिकारसम्बद्धशास्त्रपरः । असिद्धपदञ्च लक्षणयाऽसिद्धकर्तृकसत्तापरम् । असिद्धमनिष्पन्नमित्यर्थः । तृतीया तत्र वेति । तृतीयार्थः प्रतियोगित्वम् । एवञ्चानिष्पन्नादिप्रतियोगित्वस्य निरूपकत्वसम्बन्धेन वत्यर्थसादृश्येऽन्वयेनासिद्धकर्तृकसत्ताप्रतियोगिकसादृश्यलाभः । सादृश्यञ्च प्रवृत्तिरूपनिवृत्तिरूपं च । भाधिकारसम्बद्धशास्त्रनिष्ठा व्याप्यता तादात्म्यसम्बन्धावच्छिन्ना ग्राह्या । सादृश्यनिष्ठा व्यापकता च स्वरूपसम्बन्धावच्छिन्ना विवक्षिता । भाधिकारसम्बद्धशास्त्रस्य तादात्म्यसम्बन्धेन यः सम्बन्धी तन्निष्ठो योऽत्यन्ताभावस्तदप्रतियोग्यसिद्धकर्तृकसत्ताप्रतियोगिकं सादृश्यमित्युभयार्थः । आभादिति पदञ्चावर्तते । तदर्थोऽपि व्यापकत्वपर्यन्तमपूर्ववत् । शास्त्रे कर्तव्ये इत्यध्याहारः । एतद्घटकशास्त्रे चावृत्ताभाच्छब्दार्थव्यापकत्वस्य स्वाश्रयसम्बद्धत्वसम्बन्धेनान्वयः । तादृशव्यापकत्वाश्रयश्चासिद्धवत्पदमेव अत्रेत्येतद्घटकैतच्छब्देनासिद्धवत्पदसम्बद्धशास्त्रीयनिमित्तसमुदायो गृह्यते । विषयत्वं सप्तम्यर्थः । स च स्वसजातीयनिमित्तसमुदायरूपः । एवञ्चासिद्धवत्पदसम्बद्धशास्त्रीयनिमित्तसजातीयनिमित्तके भाधिकारसम्बद्धशास्त्रव्यापकत्ववत्सम्बद्धशास्त्रे कर्तव्येऽविद्यमानकर्तृकसत्ताप्रतियोगिकसादृश्यवती भाधिकारसम्बद्धशास्त्रकर्तृका सत्तेति सूत्रार्थः । एतत्सूत्रभाष्येऽसिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थञ्चेति सूत्रप्रयोजनमुक्तम् । यथा एधि शाधीत्यत्र एत्वासिद्धत्वाच्च घ्वसोरेद्धावित्येत्वे कृतेऽपि तस्यासिद्धत्वाद्धिभावो भवति । एवं शाधीत्यत्र शाभावे कृतेऽपि तस्यासिद्धत्वाद्धिरनामिति । न चोभयमप्यन्यथा सिद्धम् । घ्वसोरिति सूत्रेऽत इत्यनुवर्त्यात एवैत्वे धित्वे सलोपे चैधीत्यस्य शा हाविति सूत्रे शास् हाविति न्यासेन शास इदङ्हलोरितिप्राप्तेत्वबाधकशासादेशे धित्वे सलोपे च शाधीत्यस्य च सिद्धेः । अथ वा न हाविति न्यासेनेत्वनिषेधेऽपि सिद्धेरिति वाच्यम् । कुर्वित्यत्र कृ उ हि इति स्थिते सर्वविधिभ्य इति न्यायेन हेर्लुकि सार्वधातुकपरत्वमसिद्धत्वादाश्रित्यात उदिति सूत्रेणोरत्वार्थं तस्यावश्यकत्वात् । यदि चोभयत्रान्ताङ्गान्यथकरोतेरत उदित्यत्र लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञया भूतपूर्वगत्या सार्वधातुकपरत्वाश्रयणेन चास्यापि सिद्धिरित्युच्यते, तदाऽऽसन्नायमित्यत्र श्नसोरिति सूत्रेणाल्लोपे प्रथमस्य इणो यणिति यणादेशेऽनजादित्वादाण्न प्राप्नोतीति सूत्रमावश्यकमिति वदन्ति । न च भवतेरिदन्यतरस्याल्लुँङ्लङितिसंहितापाठे ल्कारान्तरं प्रश्लिष्य आर्द्धधातुकग्रहणानुवृत्त्या वा लावस्थायामेवाडागमेनाप्यन्यथा सिद्धिरिति वाच्यम् । एवं सत्यैज्यत इत्यस्यासिद्ध्यापत्तेः । न चाडजादीनामितिसूत्रस्याडागमेनैव लक्ष्यसिद्धेरनारम्भ एव युक्तः । वृद्धिविधावदश्चेति कर्तव्यम् । तत्र उपसर्गादृतीति सूत्रानन्तरं पाठ्यम् । उपसर्गादृतीतिसूत्रात्तु ग्रहणमनुवर्त्य पञ्चम्या विपरिणामनादौ आरब्धयेऽचि वृद्धिः स्यादिति व्याख्यानात् इयपोह्नदीरयादौ न दोषः । न चास्यपोऽहसमित्यत्र पूर्वान्तवत्त्वेनाद्वृत्वा

त्वमसिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम् ।

स्पूर्वरूप वाधित्वा वृद्धिः स्यादिति वाच्यम् । येन नाप्राप्तिन्यायेन गुणस्यैव वाधिका वृद्धिरिति परत्वात्पूर्वरूपेण सिद्धे । न चाटीदित्यत्र पररूपापत्तिः । अतोगुणइतिसूत्रानन्तरमाङ् इतिकरणे वृद्धश्चेतिसूत्रस्थचकारस्य पुनर्वृद्धिविधायकतया वा पररूपस्य वाधनात् । अत एवोस्यामाङ्ग्रहणात् प्रतिषेध इति वचनप्रत्याख्यानमपि सङ्गच्छते । एवञ्चायमित्यत्रान्तरङ्गत्वाद् वृद्धावायादेशे च सिद्धिर्भविष्यति । वृद्धौ कृतायामिणो यणिति तु न । एरनेकाच इतिसूत्रादेरित्यपकर्षेण-वर्णान्तस्येणो यणित्यर्थात् । न च वार्णादाङ्गमितिन्यायेन वृद्धिम्बाधित्वाऽनेकाच्त्वादियणान्तरायणापत्तिरिति वाच्यम् । अजादौ प्रत्यये इणो यण्विधानेनो-भयोर्युगपत्प्राप्त्यभावात् । न च लावस्थायामडागम इति पक्षे अध्येयातामिति न सिध्यति । अत्र पूर्वमडागमे इयङ्वृद्ध्योर्युगपत्प्राप्त्यभावेनान्तरङ्गत्वाद्वृद्धौ इयङोऽप्रवृत्तेरिति वाच्यम् । आडागमप्रत्याख्यानपरभाष्यप्रामाण्येन लोके तदनभिधानात् । सम्प्रसारणाच्चेति सूत्रभाष्यस्थाध्येयातामितिप्रयोगस्य तु छान्दसत्वमभ्युपेत्य बहुलछन्दस्यमाङ्योगेऽपीतिबहुलग्रहणेन पूर्वमियङि ततोऽटि वृद्धिरित्युपपत्तिः । आमन्नित्यत्र तु अटि वृद्धौ अदितितपरकरणेनाल्लोपाप्रवृत्तिः । एवमकारि वेहीत्यत्र चिणो लुगिति लुकि नलुमतेतिनिषेधेन प्रत्ययलक्षणाभावेऽपि लावस्थायामडागमे ततश्चिणि लोपाभाव इत्यपि बोध्यमिति चेन्न । आगहि जहीत्यत्रानुनासिकलोपे जादेशे च कृतेऽतो हेरिति लुक्प्राप्नोति । स चासिद्धवत्वाद्वेत्यस्य प्रयोजनत्वात् । नन्वतो हेः प्रत्ययात् । उतश्चासयोगपूर्वादिति न्यासेनात प्रत्ययादेव प्रवृत्त्यैतदप्यन्यथा सिद्धमिति चेन्न । पच्धातोर्यङ्लुगन्तात्परस्य लोपानापत्तेः । यदि यङ्लुकश्छान्दसत्वमिति ब्रूषे तथाऽपि मघशब्दाच्छन्दसीवनिपाविति वनिपि शसि वकारस्य सम्प्रसारणे यस्येति चेत्यल्लोपः प्राप्नोति तस्यासिद्धत्वादप्रवृत्तेः फलत्वात् । न च बहिरङ्गपरिभाषया सम्प्रसारणस्यासिद्धत्वम्भविष्यतीति वाच्यम् । बहिरङ्गपरिभाषाया अन्तरङ्गस्याजानन्तर्यनिमित्तकत्वेऽप्रवृत्तिस्वीकारात् । किञ्च शुन इत्यत्र वकारस्य सम्प्रसारणे वार्णपरिभाषया पररूपं वाधित्वाऽल्लोपः स्यात् । सूत्रारम्भे तु सम्प्रसारणस्याल्लोपे कर्तव्येऽसिद्धत्वान्नसंयोगादितिसूत्रेण निषेधाभावाल्लोपः । न चेष्टापत्तिः । उदात्तनिवृत्तिस्वरापत्तेः । किञ्च दध्न इत्यत्र इत्योरेदिति सूत्रेण रेभावे तस्यासिद्धत्वादातो लोप इत्याल्लोपो भवति स च सूत्राभावे न स्यात् । यद्यप्येतस्य छान्दसत्वेन छन्दस्युभयथेतिसूत्रेण सार्वधातुकत्वात्सार्वधातुकमपिदिति ङित्वेनातोलोप इटिचेति लोपेन सिध्यति । तथापि कारिष्यत इत्यत्र चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपस्य सूत्रप्रयोजनत्वात् । यदि तु स्यसिजिनि सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वेन णिलोपोऽपि साध्यते तथाप्यकारितरामित्यत्र चिणो लुकि

अस्ति च यस्येतिलोपापेक्षया स्त्रियाइतिसूत्रेऽधिकस्य स्त्रीशब्दस्यापेक्षा

---

कर्तव्ये चिणो लुग् असिद्धो भवति। सूत्राभावे तु तरपोऽपि लोपः स्यात्। तदा वृत्त्यर्थं यदि चिणोलुगिति सूत्रे तग्रहणं क्रियते। यदि वा चिणोलुगिति सूत्रे मण्डूकप्लुत्या एकदेशस्वरितत्वप्रतिज्ञया गमहनेतिसूत्रात् ङिद्ग्रहणस्यानुवृत्तिमाश्रित्य ङितो लोपे इति व्याख्यायते। तर्हि क्लिष्टा इत्येतदपेक्षया सूत्रारम्भ एव ज्यायानित्याशय। असिद्धवदत्राभादित्यत्र शास्त्रीयनिमित्तसजातीयत्वञ्चान्यूनानतिरिक्तत्वेन। निमित्तमत्र समवायिकारणं निमित्तकारणञ्च। अत एव समानाश्रये आभीये कर्तव्ये इति व्याख्यातम्। एवञ्च प्रयोगमात्रासिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम्। अत्रान्यूनत्वनिवेशात्पपुषः शशुषः इत्यत्र सम्प्रसारणे कृते आतो लोपे कर्तव्येऽसिद्धत्वाभाव सिध्यति। सम्प्रसारणनिमित्तभत्वानिमित्तकशास्त्रसापेक्षत्वात्। एवं प्रशमय्य गतः प्रतमय्य गत इत्यत्र मिता ह्रस्व इत्यस्य णेरयादेशे कर्तव्ये नासिद्धत्वम्। असिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायाधिकनिमित्तकत्वमत्राप्यादेशस्य। एवञ्चारादयिता चायायितुमित्यत्रात्र कृते आतश्चासिद्धत्वाच्च्यवहलादिति लोपः प्राप्नोति तस्याधिकनिमित्तकत्वादसिद्धत्वाभाव। न च जहीत्यत्र हन्तेर्जोदेशेऽतो हेरिति हेर्लुक् प्राप्तोऽपि द्विनिमित्तकजादेशस्यासिद्धत्वान्नेति भाष्ये उक्तं तद्विरुध्यतेऽतो हेरितिलुक्प्रवृत्तिनिमित्तातिरिक्तस्य आदेशस्थानिनो हन्तेर्जादेशनिमित्तत्वेन समानाश्रयत्वाभावादिति वाच्यम्। एतद्भाष्यप्रामाण्येन निरुक्तस्य समानाश्रयत्वविघातस्यानङ्गीकारात्। न च तथापि चिणो लुकि कर्तव्ये चिणो लुगसिद्ध इत्यपाचितरामित्यत्र तरपो न लुगित्युक्तं तद्विरुध्यते। उत्तरकालप्रवृत्तिकलुक्सम्बन्धिनस्तरपः पूर्वकालजातलुक्स्थानितरपाद्भिन्नतया समानाश्रयत्वाभावादिति वाच्यम्। अन्यूनातिरिक्ताश्रयकत्वघटकातिरिक्तस्य येन रूपेणासिद्धत्वाश्रयशास्त्रनिमित्तता तद्धर्मावच्छिन्नप्रतियोगिताकभेदवद्रूपतया प्रकृते चिण्परत्वमात्रस्यैवोद्देश्यतावच्छेदकत्वेन तादृशधर्मावच्छिन्नप्रतियोगिताकभेदस्य चोत्तरकालिकस्य चिणोलुक्शास्त्रस्य सम्बन्धित्वमस्त्यतस्समानाश्रयत्वमव्याहतमेवेत्याशयात्। स्थानिनोऽपि निमित्तमध्ये प्रवेशस्योपरागाद्विधिग्रहणस्याङ्गसंज्ञासूत्रघटकस्य प्रयोजननिरूपणावसरे स्त्री इयतीत्यत्रेयङादेशे इयङादेशनिमित्तके कर्तव्येऽङ्गसंज्ञा नेत्युक्तं सङ्गच्छते। स्थानिनो निमित्तत्वेनाश्रयणाभावे यस्येतिचेति लोपस्य स्त्रिया इतीयङादेशस्य चेयङ्छब्दानिमित्तकत्वेन समानाश्रयतया इयङादेशे कर्तव्ये यस्येति लोपस्यासिद्धत्वं स्यात्। स्थानिनस्तथात्वे तु व्याश्रयतयाऽसिद्धत्वाभाव स्पष्ट एव। अत्रेदन्तत्त्वम्। अत्र भाष्ये आरभ्यमाणेऽप्येतस्मिन् योगे सिद्धं वसुसम्प्रसारणमज्विधावित्युक्तम्। व्याश्रयत्वादसिद्धत्ववचनमप्रत्याख्यातमिति ध्येयम्। परन्त्वारभ्यमाणे-

प्रत्यासत्त्याऽजादिप्रत्ययनिरूपिताङ्गे एवेयङ्प्रवृत्त्या स्त्रीशब्दस्य सुनिरूपिताङ्गत्वेऽपि न दोषः। विधिग्रहणादेव भवन्तीत्यादावतोदीर्घो यञीति न। तदादिग्रहणं करोमीत्यादौ विकरणस्य गुणार्थम्। प्रत्ययविशिष्टस्येति। तथा सति अङ्गेन प्रत्ययपरत्वलाभानापत्तौ वव्रश्चेत्यस्यासिद्धिः। किं च

---

ऽप्येतस्मिन्निति वाक्येऽपिशब्दोपादानसामर्थ्याद्भाष्यकारस्यासिद्धवत्सूत्रानारम्भ एवाभिमत इति कल्प्यते। अत एवाह कैयटः। अनेकपरिहाराश्रयेण प्रतिपत्तिगौरवमाभूदित्येवमर्थमारभ्यमाण इत्यर्थ इत्याह। नन्वेवमिर इत्संज्ञा वक्तव्येतिवार्तिकप्रत्याख्यानावसरे गो पादान्त इति सूत्रादन्तपदसम्बन्धेनेदित्स्यस्येति व्याख्याने नुम्विधायकसूत्रस्थधातुग्रहणस्याङ्गस्येत्यस्याङ्गमात्रायोग्यार्थकत्वं कल्पयित्वा उपदेशावस्थायामेव नुम्प्रवृत्तिः प्रयोजनम्। तेन कुण्डा हुण्डेत्यादौ गुरोश्चहल इति सूत्रेणाकारप्रत्ययः सिध्यतीत्येतादृशसिद्धान्ते तासन्ते भवितेत्यादौ नुम्प्राप्नोतीत्याशङ्क्य ताम एव वक्तुं शक्यत्वादित्युक्तम्। एवं सति हन्तारावित्यादौ टिलोपे कृतेऽनिदितामिति नलोपः प्राप्नोति। सूत्रसत्त्वे त्वाभीयत्वेन टिलोपस्यासिद्धत्वेन नलोपाप्राप्तिरिति वाच्यम्। हन सिजिनिष्किरन्विधानेनाहतेत्यादौ नलोपसाधकेन विकारणोपधात्वमादाय नलोपाभावज्ञापनेनादोषात्। अत एवामस्तेत्यत्र नलोपो न। न च लावस्थायामडागममाश्रित्य सूत्रप्रत्याख्यानेऽधयोदित्यादावुप्रत्ययस्याद्युदात्तत्वेऽडोऽनुदात्तत्वापत्तिरिति वाच्यम्। अन्यत्र विकरणेभ्य इति पर्युदासात्। न च तथाप्यग्रहीष्टामित्यादावेकाचो ग्रहेर्विहितत्वाभावाद्दीर्घो न स्यादिति वाच्यम्। अन्तरङ्गे दीर्घे कर्तव्ये बहिरङ्गस्याटोऽसिद्धत्वात्। सम्परिभ्यां करोताविति सूत्रे पञ्चमीनिर्देशेन सम्परिभ्यामव्यवहितयोगस्य करोतेरित्यर्थकरणेन समस्कृतेत्यादौ नानुपपत्तिः। न चास्मिन्पक्षेऽवियन्नित्यत्राटमाश्रित्यैरनेकाच इति यणापत्तिः। सूत्रसत्त्वे त्वटोऽसिद्धत्वादियङेष्टसिद्धिरिति वाच्यम्। एरनेकाच इति योगं विभज्येणो यणित्यनुवर्त्य योगविभागस्येष्टार्थत्वेनाडागमसहितानेकाच्परश्चेद्यण् तर्हि इण एवेति नियमेन निराकरणात्। आडागमसाहित्यञ्चानेकाज्ग्रहणानुवृत्त्या लभ्यते इति दिक्। * विकरणस्य गुणार्थमिति *। भवामि भविष्यामीत्यत्र मूलोक्तोदाहरणे तु विधिग्रहणाभावेऽप्यतोदीर्घो यञीतिसूत्रारम्भसामर्थ्याद्दोषो भविष्यतीति भावः। * वव्रश्चेत्यसिद्धिरिति *। उरदत्त्वस्य प्रत्ययपरत्वलाभानापत्तौ परनिमित्तत्वाभावेनाच परस्मिन्नित्यस्याप्राप्त्याऽत्वस्य सम्प्रसारणत्वाभावेन नसम्प्रसारणेतिसूत्रस्याप्राप्तेर्वकारस्य सम्प्रसारणापत्तेर्वव्रश्चेत्यस्यासिद्धिरित्यर्थः। दूषणान्तरमाह। * किञ्चेति * प्रत्ययान्तस्याङ्गसंज्ञाया लुप्तो यः प्रत्ययस्तस्य राजन्शब्दाद्विधानेन तच्छब्देन राजन्नित्यस्य ग्रहणे प्रत्ययो निमित्तमिति लुप्तप्रत्ययनिमित्तत्वं राजन्शब्दादेः सुबन्तस्यास्तीति निषेधापत्तिरिति भावः। देवदत्त ओदनमपा

राजपुरुष इत्यादौ नलुमतेति निषेधात् पूर्वपदे पदत्वाभावेन नलोपानापत्तेरिति भावः । ततोऽप्यधिकस्य वेति । देवदत्त ओऽग्नमपासीदित्यादौ देवदत्तादिशब्दोत्तरसुप निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वस्य लुङ्परत्वेन देयात्पूर्वमप्यडापत्ति' । अङ्गसञ्ज्ञाया' प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति भावः ॥

टाङसि ॥ अङ्गस्येति षष्ठ्या अतोभिस इत्यतोऽनुवृत्तेनात इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह । अकारान्तादिति । अकारात्परेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ इति पक्षान्तर भाष्ये । किं चादन्तादङ्गादित्यर्थेऽपि ब्राह्मण भिस्सेत्यस्याऽऽग्रातिप्रसङ्ग. । ब्राह्मणेत्यस्यापि सुपोरनावावित्ति सूत्रभाष्योक्तरीत्याऽन्तर्वर्तिविभक्त्याऽङ्गत्वात् । अर्थवत्परिभाषया प्रत्ययग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे पाठो व्यर्थः । भिस प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्रहणमिति युज्यते वक्तु नान्यथा । इदमेव हि अतोभिस इत्यत्राङ्गाधिकारस्य प्रयोजन दत्तमित्यलम् ॥

सुपि च ॥ अतो दीर्घो यञीत्यनुवर्तते । यञीत्यनेनाल्त्वात्तदादिविधिरित्याह । यवादाविति ॥

ङेर्य' ॥ चतुर्थ्येकवचनस्यैव ग्रहण व्याख्यानादित्याह । ङे इत्येतस्येति । सनिपातेति । उपजीव्यविरोधन्यायमूलेयम् । सन्निपात सङ्कल्पसत-

---

शीविदित्यादौ प्रत्यासत्त्या दोषवारणमशक्यमित्याह । * अङ्गसञ्ज्ञाया इति * ।
* इति षष्ठ्या इति * । इत्यधिकृतषष्ठ्या इत्यर्थ '। अङ्गस्येति षष्ठ्या विपरिणामे गौरवात्पक्षान्तरमाह । * अकारात्परेषामिति * नतु ब्राह्मणेत्यस्य नलुमतेत्यनेन निषेधादङ्गत्वन्दुर्लभमत आह । * सुपोरनावावितीति *। सत्र पञ्चभि क्रोष्ट्रीभि क्रीतम्पञ्चक्रोष्टृ इत्युक्तम् । अङ्गस्य क्रोष्टुस्तज्वदङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेन । नलुमतेतिनिषेधस्तु न । लुप्तप्रत्ययनिमित्ताङ्गसञ्ज्ञाविशिष्टोद्देश्यककार्यान्तरे प्रतिषेधो न तु तस्यामपीति भाव । न चार्थवत्परिभाषया प्रत्ययाप्रत्ययपरिभाषया वा वारणम्भविष्यतीत्यत आह । * अर्थवदिति * किञ्च भिस' प्रत्ययस्यैव ग्रहणमित्यत्र साधकाभाव । प्रत्ययाप्रत्यययो प्रत्ययस्यैव ग्रहणमितिपरिभाषाया लक्ष्यमाधकत्वेना यत्रानाश्रयणात् । प्रत्ययस्यैव ग्रहणमिति नियमासिद्धौ भिस्साशब्दार्थस्यापि 'ग्रहणसम्भावनयाऽर्थवत्परिभाषाया अप्यप्रवृत्तिरिति भाव ।

* व्याख्यानादिति * । धातुलोपधार्देर्गाङुक इत्यत्र सप्तम्येकवचने यादे

क्षिमित्तको यो विधिः स त सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तमित्यर्थः। न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्। आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः। किं चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावः। किं चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्या अतिव्याप्तिपरभाष्यासङ्गतिः। सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति वद। कार्यस्य निमित्तयोः सन्निपातस्तयोः सूत्रे उपादानमपेक्षितमिति तु नाग्रहः। अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताङ्गसञ्ज्ञाऽनया परिभाषया ऽल्लोपस्य निमित्तन्न स्यादित्याशङ्क्यानित्यत्वेन समाहितं भाष्ये कुम्भेजन्त-

शादर्शनमूलकादित्यर्थः। *यो विधिरिति*। कमणि किप्रत्यय। तद्विघातस्येत्यत्र कर्मण्यण्। असिद्धं बहिरङ्गमिति परिभाषायामन्तरङ्ग इति सप्तम्यन्तस्यान्यसाकाङ्क्षतया बुद्धिस्थे सतीत्यस्याध्याहारोऽपि सम्भवतीत्याशयेन शङ्कते। *न चेति*। प्रकृतिप्रत्ययोभयस्य यादेशे दीर्घे च यद्यप्यपेक्षा तथापि प्रत्ययविशेषणस्य यञादित्वस्य तादृशसमुदायबहिर्भूतस्य दीर्घेऽपेक्षासत्त्वाद्बहिरङ्गत्वमिति भावः। *तद्विघातस्य जायमानत्वेनेति*। एतेनोपजीव्यविरोधोऽप्यत्रेति सूचितम्। अस्याम्परिभाषायामन्तरङ्ग इत्यस्य कर्तव्य इत्यनेनैवाकाङ्क्षापूरणस्य भाष्यादिसर्वग्रन्थसम्मतत्वादित्याशयेनाह। *किञ्चेति*। *तत्र कृते* अन्तरङ्गे कृते। *तदप्रवृत्ताविति*। सन्निपातपरिभाषाया अप्रवृत्तावित्यर्थः। *अतिव्याप्तिपरभाष्येति*। नदीह्रस्वत्व सम्बुद्धिलोपस्येत्यर्थः। असिद्धत्वमपि कथमिति बहिरङ्गाऽसिद्धत्वस्य शास्त्रप्राप्यत्वात्। अत एव पुग्ग्रस्वत्वस्य प्रदीदपदिति भाष्यसङ्गतिः। यदि भवदुक्तरीत्यातिदेशिकसन्निपाताभाव सन्निपातपरिभाषाया अप्रवृत्तौ हेतुर्भवेत्तदा प्रकृतेऽपि पुक्शास्त्रस्यान्तरङ्गत्वाद्ह्रस्वत्वस्य तु बहिरङ्गत्वात्परिभाषाया अप्रवृत्तौ भाष्यासङ्गतिः स्पष्टैव। यत्तु सन्निपात सश्लेष उपात्तयोर्यादृशो यत्कार्यस्य निमित्त तत्कार्यन्तादृशसश्लेषविघातकस्य प्रत्ययानिमित्तम्। यथा घेर्ङितीति सूत्रे उपात्तयोर्घिङितो सम्श्लेषो गुणस्य निमित्तन्तस्मिन्कृते सति स गुणोऽव्ययसञ्ज्ञाद्वारा लुकप्रत्यानिमित्तम। ह्येयं इत्येतत्सूत्रेत्वुभयोरनुपादानान्नाय सन्निपातपरिभाषाविषय इति रामायेत्यत्र सुपि चेति दीर्घः सन्निपातपरिभाषाविरोधान्न प्रवर्तेत इत्यसङ्गतमिति कश्चिदाह। तन्मतन्दूषयितुमुपक्रमते। *कार्यस्य निमित्तमित्यादिना*। *नाग्रह इति*। इन्मेजन्त इतिसूत्रभाष्ये कुम्भकारेभ्य इत्यत्रानयापरिभाषयाऽव्ययसञ्ज्ञावारणपरभाष्यविरोध एव सति स्यादिति भाव। अत्रैवार्थे भाष्यान्तरसम्वादमाह। *अत एवेति*। तादृशनियमाभावादेवेत्यर्थः। ननु सुपि चेति दीर्घापेक्षयाऽत्रादित्य

सूत्रे, न त्वङ्गसञ्ज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति । न च सुप्यपीत्यस्याङ्ग-स्मार्येति दीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यम् । तस्यापि सन्निपातपरिभाषा ऽप्राप्तेः विरोधाभावात्फलविशेषाभावाच्च । परत्वेप्यकृदिति नोपन्यस्तम् । तस्याकृदित्यादिपर्युदासेनासुप्त्वेन प्रवृत्तिरित्यन्ये ।

झलि किमिति । अतो वृद्धीत्यतो हलीत्येवानुवर्त्य सन्निपातपरिभाषया रामाणामित्यत्र न दोष इति प्रश्नः । झल्ग्रहणमत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थं तेन सर्वेषामित्यादावेत्वसिद्धिरित्युत्तरम् । एतेन बहुवचने झलीगिति तु न सूत्रितम् । ज्ञानयोरित्यादौ नुमापत्तेः । इति तु गतं

---

स्य परत्वात्तेनैव दीर्घो भवतु योग्य इत्यत आह । * विरोधाभावादिति * । एककार्यसाधकत्वेन विरोधाभावादिति भावः । पर्युदासन्यायेनाह । * अकृदितीति * । *अन्य इति* । मुख्या इत्यर्थः । अतएवोभया धृष्णुयेत्यादौ न दीर्घः । सुपांसुलुगिति सूत्रेण तृतीयैकवचनस्य यादेशः ।

झल्ग्रहणाभावेऽपि रामाणामित्यादिसिद्धये आह । * अतो वृद्धीति * । झल्ग्रहणमत्वविषये विलक्षणार्थज्ञापकमाह । * झल्ग्रहणमिति * । एतेन * । एत्वे सन्निपातपरिभाषाया अप्रवृत्तिस्वीकारेण । * रामस्येति * । अत्र स्यादेशोऽदन्तसन्निपातस्योपजीव्यत्वेन सन्निपातपरिभाषयैवैत्वव्यावृत्तौ बहुवचनग्रहणस्यात्रातिव्याप्तिवारकत्वसूचनमसङ्गतं स्यात् । क्वचित्तु राम रामस्येति पाठः । तत्र राम इत्यत्र न बहुवचनग्रहणप्रयोजनम् । प्रत्यय इत्यादिनिर्देशो क्वचिन्निपाधामसिद्धत्वयेति कल्प्यते । अन्यथा षत्वस्यासिद्धत्वाद्रेफान्ते पदत्वाभावाद्विसर्गो न स्यात् । एवं च राम स् इत्यवस्थायामेत्वकत्वयोः प्राप्तौ परत्वात्कुत्वे सकृद्गतिन्यायेनैत्वव्यावृत्तिः स्यादित्यरुचेराह । * रामस्येति * । यत्र सन्निपातपरिभाषयाऽतिप्रसङ्गवारणं भवति तादृशमत्युदाहरणमाह । * रामाभ्यामित्यपीति * । मात्रालाघवानुरोधात्केन चिदुक्तं तद्दूषयति । * बहुवचन इति * । * ज्ञानयोरिति * । ज्ञानशब्दस्य ओसि परे इगागमे कृते आद्गुण इति गुणस्येकोऽचीति नुमश्च प्राप्तौ वार्णादाङ्गस्य कार्यस्य बलवत्त्वाद्गुणात्पूर्वं नुमि सति रूपासिद्धिः । न च बहुवचने झलीडिति न्यासोऽस्तु । एवञ्च ज्ञानयोरित्यत्र न नुम् प्राप्तिः विभक्तौ यदङ्गं तस्येगन्तत्वाभावादिति वाच्यम् । बहुवचने झलीति सप्तम्या प्रचारितार्थ्येन झलादौ बहुवचने सुप्यत इडित्यर्थापत्तावनिष्टापत्तेः । यदि च यत्तदेतेभ्य इतिनिर्देशेन सप्तमीनिर्दिष्टपदानां षष्ठ्यन्तत्वमत इत्यस्य च षष्ठ्यन्तस्य पञ्चम्यन्तत्वकल्पनं सप्तमीनिर्देशाच्च यस्मिन्विधिरिति परिभाषया

इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिवत्त्वादेङइत्यस्यामाप्तौ व्यवधाना-द्धलुङ्याविसत्यस्यामाप्तौ सम्बुद्धिलोपानापत्तेश्च । जश्त्वमिति । बाधित्वेति शेषः । अवसाने चर्त्वस्य पदान्तजश्त्वापवादत्वात् । द्वित्वे रूपेति । पूर्वत्रा-सिद्धमद्वित्वे इति न्यायाच्चर्त्वोत्तरन्द्वित्वं बोद्ध्यम् । तादेश इति । अन्यथा

---

वृत्तिसम्पादकत्वेन चारितार्थं इत्युच्यते तदाऽधिक ज्ञानगौरवं स्पष्टमेव। किञ्चेद-शब्दादृभ्यसि त्यदाद्यत्वे पररूपत्वे च कृते हलि लोपस्येडागमस्य च प्राप्तौ नि-त्यत्वादिट् स्यात्। परञ्च हलादिपरत्वाभावाल्लोपानापत्ति । लोपविधानन्तु द्विव-चने चरितार्थमिति दिक् । *इति शेष इति* । यत्त्वेव शेषपूरणेन प्रकृतग्रन्थसङ्ग-मनेऽपि रत्नमुडित्यादावान्तरतम्यात्पकारस्य चर्त्वेन पकार एव प्राप्नोति । न टकारोऽल्पप्राणतया प्रयत्नभेदादतस्तत्रादिशब्दे दकारस्य स्थानेऽष्टतकारित्वं-पि शास्त्रमग्निवदिति न्यायेन फलाभावेन जश्त्वाप्रवृत्तौ तत्र चर्त्वस्य चारिता-र्थ्यादपवादत्वमेव नेति रामादित्यादावुभयो प्राप्तावसिद्धत्वाच्चर्त्वात्प्राग् जश्त्व-मिति । तन्न । फलाभावेऽपि पर्जन्यवल्लक्षणन्यायेन शास्त्रप्रवृत्तेर्बहुषु दृष्टत्वा-द्येननाप्राप्तिन्यायेन चर्त्वस्य जश्त्वापवादतयाऽसिद्धत्वस्याप्राप्ते । रत्नमुडित्य-स्य सिद्धिस्तु अर्क्षित्यादय षडिति न्यासेन शकारस्य स्थाने जश्त्वात्पूर्वं श्चुत्वं शास्त्राप्रवृत्तिकल्पनमिति भविष्यति । * चर्त्वोत्तरान्द्वित्वमिति * । यत्तु द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यमिति वार्त्तिकाद्वर्णद्वित्वे एतदप्रवृत्तिरिति । तन्न । वाक्रू वागिति भाष्योदाहरणेन वर्णद्वित्वेऽपि तत्प्रवृत्ते। स्वीकारात् । द्वित्वे पर-सवर्णत्वमिति वार्त्तिकन्तु पूर्वत्रासिद्धीयमिति वचनस्येवावयुत्यानुवाद इति बोध्यम् । मूले सस्य द्वित्वेति । अनचि चेत्यनेन वैकल्पिकद्वित्व इत्यर्थः । अत्र सकारस्य स्थाने खरि चेत्यनेन स्थानत प्रयत्नतश्च तुल्यस्तकार प्राप्नोतीति श्रा तस्य शङ्कायामाह । * आन्तरतम्यादिति * । स्थानेऽन्तरतम इति सूत्रे तम ब्ग्रहणेन सदृशेनैवादेशेन भाव्यमित्युभाभ्यामन्तरतम सकार एव स्यात् । तदे तदुपपादयति । * अन्यथेति * । अन्यथा उभाभ्यामान्तरतम्यानाश्रयणे । * इदम् * । सस्यार्द्धधातुक इत्येतत् । ननु सस्यार्द्धधातुक इतन्यासारम्भे वत्स्यतीत्यादौ चयो द्वितीया इत्यनेन पक्षे थकारो भवति । खरि चेति सूत्रेण तकारे त्वस्याऽसिद्धत्वाद्द्वितीयादेशाप्राप्त्या थकारघटितरूपासिद्धिरिति कथ-मियमाशङ्का यत्तु तत्वस्यार्द्धधातुकसक्षकस्य शब्दापेक्षत्वान्द्वितीयादेशस्य तु स-कारमात्रापेक्षत्वमित्यन्तरङ्गत्वाद्द्वितीयादेशे कर्त्तव्ये सस्यार्द्धधातुक इत्यस्यापि बहिरङ्गपरिभाषयाऽसिद्धत्वादत्र द्वितीयादेशो न भवत्येवेति । तन्न । अयात्सी दित्यत्र शास्त्रद्वयस्यापि । आर्द्धधातुकसंज्ञाया अधिका—

खरि चेति चत्वेन सिद्धाविदं व्यर्थं स्यादिति भावः ॥

ह्रस्वन ॥ ह्रस्वनद्याप इति पञ्चमी । आमि सर्वनाम्न इत्यत आमीति वर्त्तते । तच्च षष्ठ्या विपरिणम्यते नामीति लिङ्गादित्याह । ह्रस्वान्तादित्यादि । आमत्र षष्ठीबहुवचनमेव न तु ङेरामादीति स्पष्टं भाष्ये । यत्तु नुडिति विभज्य सामान्येन नुट् विधेयः, नद्याप इति दीर्घान्ताच्चेन्नद्याप एवेति नियमार्थमिति दीर्घेषु न दोषः । हलन्ताच्चेत् षट्चतुर्भ्य एवेति नियम इति हलन्तेषु न दोषः, एवञ्च ह्रस्वग्रहणं न कार्यमिति । तन्न । नद्याप इत्यस्य स्त्रीलिङ्गनाच्चेन्नद्याप एवेति नियमपरतया ऽपि व्याख्यातुं शक्यत्वेन नदीत्वाप्त्वयोर्ह्रस्वेपि इष्टत्वेन त्वदुक्तनियमे इष्टतरमानाभावेन च मतीनामित्यादौ नुडनापत्तेः ॥

अपेक्षणात्तस्य बहिरङ्गमिति तु न वाच्यम् । सकृत्कृतबहिरङ्गत्वानाश्रयणात् । ऐपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाभावस्यान्यत्रोपपादितत्वात्तस्मेति चेन्न । अस्य ग्रन्थस्य प्राचीनमताभिप्रायकत्वात्तन्मते सर्वपाक्षसान्तरङ्गबहिरङ्गभावस्य त्रिपाद्यप्रवृत्ते स्वीकारात् । नमुन इति सूत्रे नेति योगविभागेन क्वचिदसिद्धत्वेत्यर्थकल्पनेन खरि चेत्यनेन तकारादेशोऽप्यसिद्धत्वन्न भविष्यतीति कल्पनाया सम्भवाच्चेति ।

* षष्ठ्या विपरिणम्यत इति * । नद्याप इति पञ्चम्यन्तस्य सत्त्वात् । आमीति सप्तमी तु अक्षय इत्यत्र चरितार्थी । साधकमप्यत्राह । * नामीति लिङ्गादिति * । इत्यस्माभाष्य इति * । तत्र हि षट्य आम्शब्दा पठ्यन्ते । काम्प्रत्ययादाममन्त्रे लिटि । ङम् आम् आम् । किमेत्तिङिस्यत्र । ङेराम् नद्यामित्यत्र कस्येदं ग्रहणम् । षष्ठीबहुवचनस्य ग्रहणम् । काम्प्रत्ययेतिसूत्रपठितस्य तु सानुबन्धकत्वान्न ग्रहणम् । स चानुबन्ध इत्सञ्ज्ञापरित्राणार्थं कर्तव्य । असति चेत्सञ्ज्ञाया कदमन्त्यादच परो यथा स्यादिति । प्रत्ययान्तादय विधीयते तत्र नास्ति विशेष मिदचोन्त्यात्परत्वेन प्रत्ययपरत्वेन वा । यस्तर्हि न प्रत्ययान्तादिभ्यादेरिति । अत्राप्यास्कासोराम्वचन ज्ञापकन्नायमन्त्यात्परो भवतीति । किमिदितिसूत्रविहितस्यापि न ग्रहणम् । सानुबन्धकत्वात् । ङेरामो निरनुबन्धकत्वे ऽपि तत्र षाट्स्याडाड्भि परत्वाद्बाधे सकृद्गतिन्यायात्पुनस्तदप्रवृत्ते षष्ठीबहुवचनस्यैव ग्रहणमित्युक्तम् । दण्डिसम्मतमर्थं खण्डयति । *यत्त्विति* । हूहूशब्दादिभ्योऽतिप्रसङ्गं वारयति । * नद्याप इतीति * । लिहान्दुहामित्यादावतिप्रसङ्गं वारयति । *हलन्ताच्चेदिति* । विपरीतनियमापत्त्या तद्दूषयति । *नद्याप इति * । एवं सति हाहाहूहूशब्देऽतिप्रसङ्गः स्यादेव । * ह्रस्वे ऽपीति * । मत्यतिमालादौ ।

नामि ॥ ढ्रलोपेऽणइत्यतो दीर्घ इत्यनुवर्त्तते। अङ्गस्येति किम्। चर्मणाम्। नन्वामीत्येवास्तु नित्यत्वात्पूर्वं दीर्घे कृतेऽपि ह्रस्वान्तान्नुडित्येतत्सामर्थ्यात् भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः। न च नृचेति दीर्घविकल्पान्नृणामित्यत्र नुट् चरितार्थः, नृनचाप इत्येव सिद्धेः। तदुक्तं भाष्ये "नैकमुदाहरणं योगारम्भं प्रयोजयती"ति। तिसृणामिति पड्डित्यत्र त्रेरित्यनुवृत्त्या सिद्धमिति भाष्ये एव स्पष्टम्। एतेन ऋन्नाप इति न्यासे भाष्यतात्पर्यमित्यपास्तम्। चतसृणां प्रियचतसृणामित्यत्र पड्चतुर्भ्य इति सिद्धम्। गौणे तदप्रवृत्तौ तु न मानम्। बहुवचनन्तु लाघवार्थं द्विवचने हि चतुर्भ्यामिति गुरुनिर्देशः स्यात्। नैकमुदाहरणमिति प्रकृतसूत्रस्थभाष्यविरोधश्च। समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थ इति तु न युक्तम्। अस्थिदधि, तिसृभ्योजस, इत्यादौ व्यभिचारात्। न चाङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति सर्वादिसूत्रभाष्यात् गृह्यमाणाद्विहितविभक्तेरित्यर्थकादस्य नुटो गौणे ऽप्रवृत्तिः। पड्भ्य इत्यत्रापि विहितविशेषणमेवेत्याशयेन परमपञ्चेत्यादौ लुगभावमाशङ्क्य पदप्रधान एव समास इत्युक्तम्। समासस्य पदप्रधानत्वेन सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन पट्त्वसत्त्वान्न दोष इति तदर्थः। ष्णान्तेत्यत्र लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानं प्रकृते ऽपि तथैव, पड्भ्य इत्यादौ पञ्चम्या विरुद्धविभक्तित्वादङ्गस्येत्यनेन सम्बन्धायोग्यत्वात् विहितेत्यध्याहारेण प्रत्ययविशेषणत्वमेवेति भाष्योक्तेरिति गौणे नुटो ऽप्रवृत्तिरिति वाच्यम्। नामीति सूत्रस्थोक्तभाष्य-

---

नन्वेकमित्यसङ्गतम्। तिसृणामित्यत्र चारितार्थ्यादत आह। * तिसृणामितीति *। अन्यत्रापि चारितार्थ्यं वारयति। * चतसृणामिति *। गौणेऽप्रवृत्तौ भाष्यविरोधमप्याह। * नैकमिति *। अस्य गौणेऽप्रवृत्तिसाधकमुपायान्तरं खण्डयति। * समाहारेत्यादि *। अस्थिदधीतिसूत्रे तिसृभ्य इत्यत्र च बहुवचननिर्देशेऽपि गौणे प्रवृत्ते प्रामाणिकतया व्यभिचारादित्यर्थः। गौणेऽप्रवृत्तिर्भाष्यान्तरसम्वादेन परेणोक्तेति यत्तद्दूषयितुमुपक्रमते। * न चेति *। * पञ्चम्येति *। पञ्चम्यन्तेनेत्यर्थः। स्वकल्पितेऽर्थे भाष्यान्तरमपि साधकमाह। * पड्भ्य इत्यत्रापीति *। * न दोष इति *। अस्य विहितविशेषणत्वेऽपीत्यादि। ननु ष्णान्तेति सूत्रेऽनुवर्तमानसङ्ख्यापदेन लोके गणनायाम्प्रसिद्धानामेव ग्रहणे पदप्रधानत्वेऽपि कथं लुगित्यत आह। * ष्णान्तेत्यत्रेति *। * प्रकृतेऽपीति *। पड्चतुर्भ्य इत्यत्रापि। * उक्तभाष्येति *। न ह्येकमितिभाष्यस्यार्थः। अङ्गस्ये

प्रामाण्यान्नुड्विधायके विहितविशेषणानाश्रयणेन पदादिभ्यः परस्याङ्गसञ्ज्ञा-निमित्तस्यामो नुडित्यर्थेन गौणे ऽपि प्रवृत्तेः । अतो भिस इत्यादावङ्गस्ये-त्यस्यैवमन्वयस्यैवान्यत्रापि सूत्रे भाष्ये उक्तत्वात् । अत एव परमचतुर्णामि-त्यादौ नुट् । यद्यप्येवं षड्भ्यो, ऽड्डुत्तरादिभ्य इत्यनयोरपि वक्तुं शक्यम् । तथापि लक्ष्यानुसारात्तत्र विहितविशेषणम्, विरुद्धविभक्तित्वादिति भाष्यो-क्तयुक्तिस्त्वेकदेशिन इति बोध्यम् । अड्डुत्तरादिभ्य. षड्भ्यो लुगित्यन-योरेव सर्वादिसूत्रे भाष्ये उपन्यासाच्च । षड्भ्य इत्यादौ षडर्थगतसङ्ख्या-भिधायिजश्शसोरित्यादिक्रमेणार्थ इति कैयटोक्तं तु अड्डुत्तरादिभ्य इति सूत्र-भाष्यविरोधादिभिर्दूषयिष्यते । न च पदां दतामित्यादावतिप्रसङ्गः । ह्रस्व-त्वं नाम मात्राकालिकत्वं तत्सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयणं न तु विशेष्यभूतावन्तत्वांशेऽपीत्यदोषादिति चेन्न । नो-पधाया इत्युत्तरार्थत्वात् । तेन चर्मणामित्यादौ दीर्घाभावः सिद्ध इति दिक् ।

---

स्यस्यैवमन्वयोऽन्यत्र भाष्ये दृष्ट इत्याह । * अतो भिस इति * । * अत एव * । विहितविशेषणानाश्रयणादेव । सर्वादिसूत्रस्थभाष्ये योजयति । * यद्यपीति * । * एकदेशिन इति * । विरुद्धविभक्तिरेवात्र यत्नसाध्यत्वादित्यादेरिति भावः । * अनयोरेवेति * । एतच्च तद्भाष्यबलेन षड्चतुर्भ्यो इत्यस्यान्यथा व्याख्यानम् अनुचितमिति भावः । कैयटोक्तिं खण्डयति । * षड्भ्य इत्यादि * । नामीति न्यासे कृते दीर्घे यदि भूतपूर्वगत्या ह्रस्वान्तत्वमाश्रित्य नुट् तदा पदां दतामित्य-त्रापि नुट् प्राप्नोतीति शङ्कां ह्रस्वग्रहणसामर्थ्यान्निराकरोति * न चेति * । * मात्राकालि-कत्वांशमिति * । नुड्विधायकसूत्रस्थह्रस्वग्रहणस्य तावन्मात्रेणोपपत्तेः । * तेन * । उत्तरार्थत्वेन । तत्फलमाह । * चर्मणामिति * । अत्र नलोपस्यासिद्धत्वान्नान्तत्वा-द्दीर्घप्राप्तिः । * दिगिति * । दिगर्थस्तु ह्रस्वग्रहणसामर्थ्यात् भूतपूर्वह्रस्वान्ता-न्नुडिति स्वीकारे पदां दतामित्यादावतिप्रसङ्गशङ्का पदादीनामादेशत्वपक्षे । यदा तु पदादीनां प्रकृत्यन्तरत्वपक्षस्तदा पदां दतामित्यत्रातिप्रसङ्गशङ्कैव न । किञ्चादेशत्वपक्षेऽपि शस्प्रभृतिष्विति वचनात् विपदः चर्माणि न हलन्तादेशाम्विधा-नेनामुत्पत्तिकालिकह्रस्वान्तत्वाभावान्नुडप्राप्तिः यतस्तु ह्रस्वग्रहणसामर्थ्यात्कल्प्यते तावतापि पदामित्यादावतिप्रसङ्गो वारयितुं शक्य एवेति । ननु सुपि चेति दीर्घे कर्तव्ये यथा सन्निपातपरिभाषा प्रवर्तते तथा नामीति दीर्घविधावपि सा कुतो न प्रव-र्तते इतिशङ्कायामाह । * सन्नेति * । सुपि चेति दीर्घे कर्तव्ये सन्निपातपरि-भाषाप्रवृत्तिस्तु ष्णान्ता षडिति सूत्रे भाष्ये ध्वनिता । तत्र हि आम्प्रकारविशि-ष्टस्य ग्रहणाभावे सप्तमोप इति न्यासे यदा नां पञ्चानामित्यत्रापि नलोपः प्राप्नो-तीति दूषणमभिहिते दीर्घे जाते नास्ति लोपप्रसक्तिरिति पूर्वपक्षिणा शङ्कितं परत्वा-

परिभाषाविरोधादिति । सर्वत्रानित्यत्वाश्रयणे मानाभाव इति भावः । कृ-
ताकृतप्रसङ्गित्वान्नामीति नित्यत्वं न विशेषाभावेन फलाभावान्न कृते तत्प्रा-
प्तिरिति वाच्यम् । विशेषाभावेनाऽपि पर्जन्यन्यायेन शास्त्रप्रवृत्तेरिको झ-
लिति सूत्रे भाष्ये उक्तत्वात् । आयादय इति सूत्रे भाष्ये स्यादिभिः पर-
त्वादायादिबाधमाशङ्क्यानवकाशत्वादायादयः । न च गोपायतीत्यादिरव-
काशः, अत्रापि शपः स्यादेः प्राप्ते । न च नास्ति विशेषः अन्यदिदानीमिद-
मुच्यते नास्ति विशेष इति । तदुक्त आयादीनां स्यादिभिर्व्याप्तो ऽनवकाश
इति स नास्त्यनवकाश इति भाष्योक्तेश्चेत्यपि बोध्यम् । आरम्भेति । यत्तु
कतीनामित्यत्र षट्चतुर्भ्य इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावका-
शत्वमस्त्येवेति, तन्न । न ह्येकमित्युक्तन्यायेन कृतेर्नामीत्येव सिद्धे सामान्य-
सूत्रारम्भेत्यर्थात् । एवञ्च नतिसृचतसृत्यकरणेन लाघवमिति भावः । नु-

---

दीर्घम्बाधित्वा नलोपः प्राप्नोतीति सिद्धान्तिनोक्तम् । अत्र परत्वादिति कथनेन
नामीति सूत्रस्य प्रवृत्तिरभिहिता न तु सुपि चेत्यस्य । नलोपशास्त्रापेक्षया सुपि
चेति शास्त्रस्यैव परत्वात् । न च सुपि चेति दीर्घस्तर्हि परत्वान्नलोपात्प्राक्
स्यादिति वाच्यम् । तस्य सन्निपातपरिभाषयाऽप्रवृत्तेः । नामीति दीर्घे तु आर-
म्भसामर्थ्यात्परिभाषाबाध इति भावः । यद्यपि सुपि चेति दीर्घेऽपि कष्टायक्रम-
ण इति निर्देशात्सन्निपातपरिभाषा न प्रवर्त्तते इति प्रागभिहितन्तथापि नामि
परे सुपि चेति दीर्घे कर्तव्ये तदप्रवृत्तौ मानाभावः । अत एव सन्निपातपरिभा-
षाया दोषनिरूपणावसरे वादेश सुपि चेति दीर्घस्येत्येवाभिहितम् । यदि तु
कष्टायेति निर्देशेन सामान्यतो दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिं कल्प
यित्वा सुपि चेति दीर्घ इत्येव वक्तुमुचितमित्युच्यते तदाप्याह । * इत्याहुरे-
ति * । इत्यरुचिप्रसक्तिमुपपादयितुमाह । * न चेत्यादि * । आयादय इति
सूत्रभाष्य इति * । तत्र छायिशेषेण यादिविधिमुक्त्वा सार्वधातुके नित्यमिति
न्यासपक्षे स्याद्विकल्पस्य विप्रतिषेधेन तुल्यनिमित्तत्वादिति वार्तिककृतोक्तम्
तत्खण्डनाय वार्तिकमनारम्भणीय स्यादिविधानस्यानवकाशत्वादित्यादिग्रन्थम
नेन गोपायेत्यत्र चारितार्थ्याद्बाधका इत्यस्य नामित्यपास्तम् । * समान्येति * ।
षट्त्रिचतुर्भ्यो हलादिरिति स्वरप्रयोजकत्वस्य स्थानिवत्त्वेन लाभादिति भावः ।
कृतेर्नामीति न्यासे लाघवमप्याह । * एवञ्चेति * । * तृतीति तु नेत्यमिति * ।
मात्रालाघवसत्त्वेऽपि बहूनामर्थानामुपस्थानेन गौरवापत्तेः । तृदन्तस्याङ्गस्य
दीर्घ इत्यर्थेऽनड् इत्यादौ दीर्घापत्तेः । न च नुटि पदकृन्तस्य दीर्घ इत्यर्थे वाच-

शीति तु नोक्तम् ।

अपदान्तस्य षः इत्येव सिद्धे मूर्धन्यग्रहणमिण्कोः षीध्वमित्यत्र ढविधानार्थं रषाभ्यामित्यत्रानुवृत्त्यर्थम् । एतच्च तत्र णग्रहणं पदान्तस्येति च न कर्तव्यमिति भाष्ये स्पष्टम् ।

इण्कोः ॥ वर्गग्रहणञ्चर्त्वस्यासिद्धत्वात् सक्षित्याद्यर्थम् ।

आदेश ॥ प्रत्ययशब्दस्तदवयवपरो व्याख्यानात्, सातेः षत्वनिषेधा ल्लिङ्गाच्च तदाह । प्रत्ययावयवस्येत्यादि विवृतास्योपस्येति । निवृत्तरूपाभ्य न्तरप्रयत्नवतो ऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाद्यम् । क कारवारणाय द्वितीयम् । रामस्येति । टाङसीति सूत्रे सकारोच्चारणं त्वि ण्कोरित्यत्रानुवृत्तावेव तात्पर्यग्राहकमिति भावः ।

---

स्रोपः । लुकि परे यत्किञ्चिन्निमित्तकाङ्गस्य ग्रहणे तत्रैवातिव्याप्ते । अङ्गस्याप्रयो जके लुडीति तु वक्तुमशक्यम् । लुङ्मात्रस्याङ्गस्याप्रयोजकत्वासम्भवात् । उ डीत्यस्य लुङादौ लक्षणाया तु एषणैव दोषः । एवं सत्प्लुत इत्यत्र इयोर्ह्रस्वा दचीति सूत्रेण लुडि नोपधाया इति दीर्घापत्तिः । सत्यपि तत्परिभाषया संयोगान्त लोपस्यासिद्धतया वा तद्वारणकल्पनेऽपि ज्ञानगौरवं स्फुटम् । विश्वाक्षण्वन्त इत्यत्र छन्दस्यपि दृश्यत इत्यनड्यजन्तात्परस्य मतुपो लुडित्यर्थे णानालुडि ति सूत्रेण लुडि कृते दीर्घापत्तिः । यदि तु नोपधाया इति दीर्घ कर्तव्येऽसौ लुडि त्यस्यासिद्धत्वरूपंसंज्ञासिद्धत्वादिति कल्प्यते तदाऽसिद्धत्वकल्पनैव दोषः । यदि त्वनड्वः इत्यादौ दीर्घापत्तिवारणाय तस्य लुगच्चीति न्यासेन लुगागमकारस्य नसो लुगागम क्रियते तदा नलोपः प्रातिपदिकान्तस्येति नलोप प्राप्नोति उ ग्विधानसामर्थ्याल्लोपाभावकल्पने तु फलतोगौरवं स्फुटमेव ॥

* ष इत्येव सिद्ध इति * । लाघवार्थमित्यादि * । *नन्विणः षीध्वमिति सूत्र ढग्रहणमस्त्वित्यत आह । * रषाभ्यामित्यत्रेति । एतच्चेति * । पदद्वयस्याधि कारत्वे चेत्यर्थः । इण्कोरित्यत्र समाहारद्वन्द्वः । सौत्रम्पुंस्त्वम् । *सक्षित्याद्यर्थ मिति * । आदिना गवाङ्क्ष्वित्यस्य सङ्ग्रहः ।

* तदवयवपर इति * । लक्षणया प्रत्ययावयवपर इत्यर्थः । * व्याख्याना दिति * । आत्मनेपदेष्वित्यादिनिर्देशमूलकात् । तत्र लिङ्गमप्याह । *सातेरिति* । बाह्याभ्यन्तरयोर्द्वयोरप्यान्तरतम्यपरीक्षोपयोगित्वं सवर्णसंज्ञायान्त्वाभ्यन्तरप्र यत्नस्यैव तुल्यास्यप्रयत्नमित्यत्र प्रयत्नपदबलादुपयोग इत्याशयेनाह । * विवृतत्व रूपेत्यादि * । ननु टाङसीतिसूत्रे सकारोच्चारणसामर्थ्यादेव षत्ववारणम्भवि ष्यतीत्यत आह । * टाङसीति सूत्रे इति * ।

सर्वादीनि ॥ तद्गुणसंविज्ञानो बहुव्रीहिः । आदिशब्दो ऽवयववाची तेन सर्वशब्दघटित उद्भूतावयवभेदः समूहः समासार्थ इति बहुवचनम् । उद्भूतावयवभेदः । इत्यस्यारोपितावयवगतसख्य इत्यर्थः । तत्र वैयर्थ्यात्प्रवृत्तावपि अवयवेषु प्रवर्त्तमाना ऽविशेषात्सर्वशब्दे ऽपि भवति । सर्वनामानीत्यत्र पूर्वपदादिति णत्वमतएव निपातनान्न । नाम्प्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वात् णत्वसहितमसाधु इति स्पष्टं भाष्ये । प्रयोजन सर्वनामाव्ययसंज्ञायामिति वार्त्तिकात् शब्दरूपविशेष्यमादाय ज्ञापकात्तदन्तविधिरित्याह । द्वन्द्वे चेतीति । प्रथमार्थे सप्तमी द्वन्द्वः सर्वनामसंज्ञा नेति तदर्थः । न हि तदन्तविधिं विना समुदायसञ्ज्ञाप्रवृत्तिरस्ति या निषिध्येतेति भावः । ननु तदन्तस्यापि सर्वनामत्वे सर्वनाम्नः स्मा इत्यादिषु सर्वनाम्नो विहितस्य ङः स्मै इत्यर्थाश्रयणेनापि सर्वादौ दोषाभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्ये सूचितं विरुद्ध्येतेति चेन्न । प्रयोजन सर्वनामाव्ययसञ्ज्ञायामिति तदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधेनास्य भाष्यस्यैकदेश्युक्तित्वात् । इत एवारुचेर्भाष्ये पक्षान्तरोपादानम् । न च ऋष्युक्तपक्षेषु नारुचिरिति भ्रमितव्यम् । वृद्धिसञ्ज्ञासूत्रे ऽपरितुष्यन् खल्वपि भवाननाकृतिर्लिङ्गे न वेत्याहेति वार्त्तिककार प्रति भाष्योक्तेः । अकचेति । कुत्सितइति सूत्रोक्तभाष्यरीत्या सख्याकारकाभ्यां पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्सा-

* तेन * । तादृशबहुव्रीहिणा । तत्र वैयर्थ्यात्सामर्थ्यात्तदङ्गेष्विति न्यायेना- [illegible] । * तत्र वैयर्थ्यादिति * । निपातनस्य बाधकत्वाल्लोकेऽपि तथैव प्रयोग इति बोध्यम् । तदेतदुपपादयति । * नाम्प्राप्त इति * । शब्दस्वरूप विशेष्यमादाय तदन्तविधिं सत्येव गमक इत्याशयेन ज्ञापकमाह । * मूले द्वन्द्वे चेतीति * । तदेतदुपपादयति । * प्रथमार्थ इति * । एवञ्च द्वन्द्वात्मकसमुदाये सर्वनामसञ्ज्ञाप्राप्तिस्तदन्तविधिं विना नेति ज्ञापकत्वं निषेधस्य । तदन्तविधौ शङ्कते । * नन्विति * । *विरुद्ध्येतेति * । सत्यपि विहितविशेषणेऽतिसर्वशब्दे सञ्ज्ञाप्राप्तिरस्त्येवेति भाव । * इत एव वारुचेरिति * । सूत्रेऽप्युपसर्जनप्रतिषेधेऽतिसर्वशब्दे दोषतादवस्थ्यमत प्रतिषेधो न युक्त इत्यरुचेरेवेत्यर्थः । *पक्षान्तरेति * । अथ वा महतीय सञ्ज्ञेति पक्षान्तराश्रयणरूपेत्यर्थः । ननु वार्त्तिकस्य ऋष्युक्तत्वेन प्रामाणिकत्वात्तत्रारुचिरनुपपन्नेत्याशङ्क्य समाधत्ते । * न चेत्यादिना * । वृद्धिसञ्ज्ञासूत्र इति । अस्य इति भाष्योक्तेरित्यत्रान्वय । तत्र हि आचार्याचारात्सञ्ज्ञासन्देह व्यवस्थाप्य सूत्रकार प्रति प्रकृतसूत्रस्यागमकत्वमाशङ्क्य सूत्रकारीयपुनः पुनर्वृद्धिशब्दोच्चारणरूपाचार्याचारेण गमकत्वसाधनमयुक्तमित्याशयेनान तर-

विवक्षाया सर्वनामात्वयकटे प्रागकजित्यर्थात्तदन्तसञ्ज्ञाभावे तदसिद्धिरिति भावः। एवमेव प्रलाद्यसिद्धिर्बोध्या। एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धिरित्यपास्तम्।

जसः शी ॥ दीर्घोच्चारणमुत्तरार्थं वारिणी इति। अदन्तादिति परस्येत्यनेनान्वेति। अत इत्यस्याङ्गविशेषणतया अदन्तादङ्गादित्यर्थः। सर्वनाम इति तु विहितविशेषणन्तस्य तु नाङ्ग विशेष्यमात्रत्वे मानाभावात्। तेन वर्णाश्रमेतरा मासपूर्वा इत्यत्र न। अत एव विभाषाजसीति चरितार्थम् अङ्गसञ्ज्ञानिमित्तस्यादन्तात्सर्वनाम्नो विहितस्येत्यर्थस्तु न। तेषामित्याद्यसिद्धेः। अत्वविधौ विषयसप्तमी तु न। तस्मिन्निति परिभाषाबाधे माना भावात्। प्रागित्सञ्ज्ञाया इति। प्रत्ययादित्वज्ञानाभावात्तज्ज्ञानाभाव इति भावः। परे तु अनुबन्धत्वयोग्यतया अत्रापि तन्निषेधामहत्त्वा शित्त्वादेव सर्वादेशः। इत्सञ्ज्ञायोग्यशकारत्वमेव तत्सूत्रे शित्त्वम्। अत एव फाणोर्विषये नानुबन्धकृतमसारूप्यमिति विकल्पाभावः। अन्यथा कादेर्वाक्यार्थबोधो

मनाक्तितिलिङ्गेन वा सेवासत्त्वासन्देह साधित। * तदसिद्धिरिति *। अप आद्यसिद्धिः।

* एतेनेति *। सर्वनामप्रत्ययविधिसुबन्तादित्यर्थकरणेन। * उत्तरार्थमिति *। सर्वे इत्यत्र तु ह्रस्वादेशेऽपि गुणेन सिद्धेः। * आवृत्तावियिति *। अङ्गस्येत्यस्यावृत्तावित्यर्थः। * तेन *। विहितत्वांशनिवेशेन। * इत्यत्र नेति *। उभयत्र समुदायस्य प्रथमार्थसप्तम्यन्तपदघटितेन तृतीयासमासे द्वन्द्वे चेत्यनेन सर्वनामसञ्ज्ञानिषेधात्। * अत एव *। सर्वनाम्नो विहितस्येत्यर्थकरणादेव। अन्यथाऽनेन समुदायस्य सर्वनामसञ्ज्ञाभावपक्षेऽप्यवयवस्य सर्वनामतया तत परस्याच्छीभावस्य दुर्वारतया विकल्पविधानं व्यर्थं स्यादिति भावः। नन्वङ्गस्यावृत्त्यभावेऽपि सर्वनाम्नोऽदन्ताद्विहितस्याङ्गसञ्ज्ञानिमित्तस्येत्यर्थे कुतो नेत्यत आह। * अङ्गसञ्ज्ञानिमित्तस्येति *। अदन्ताद्विहितस्येत्यर्थेऽदन्तत्वस्योद्देश्यतावच्छेदकत्वं स्यादेव सति तद्धर्मावच्छिन्नस्य विधानकाले सिद्धिं विना न सुद्‍प्राप्तिरिति भावः। यदि त्वत परस्याङ्गसञ्ज्ञानिमित्तस्य सर्वनाम्नो विहितस्येति व्याख्यायते तदा तु नानुपपत्तिरित्यवधेयम्। ननु विभक्तिविषये विभक्त्युत्पत्तेः प्रागेवात्वम्भविष्यतीति नायं दोष इत्यत आह। * अत्वविधाविति *। प्रत्ययादित्वज्ञानाभावादिति *। समुदायादेशो हि स्थानिवद्भावेन समुदायस्य प्रत्ययत्वज्ञान ततः प्रत्ययादित्वज्ञाने सति लशक्वतद्धिते इत्यस्य प्राप्तिस्ततोऽनुबन्धत्वज्ञानमिति भावः। सिद्धान्तार्थमाह। * परे त्विति *। * अत एव *। अनुबन्धपदस्येत्याद्यपक्त्वादेव। * अन्यथा *। अनुबन्धपदस्य बाधकतासम्बन्धेनैतपदाविशि

त्तर् प्रत्ययत्वज्ञाने इत्सञ्ज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकाले ऽनुबन्धज्ञानाभावेन विकल्पो दुर्वारः। पश्चादनुबन्धत्वज्ञाने ऽपि जातनिवृत्त्ययोगात्। यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्तिस्तर्ह्यत्रापि पश्चात्तज्ज्ञाने सर्वादेशत्वस्यापि निवृत्त्यापत्तिः। ध्वनितञ्चेद लुटःप्रथमस्य, अनेकाल्शिदित्यादिसू-

---

त्रार्थकत्वे। विकल्पो दुर्वार इति विधानकालेनानुबन्धकृतमसारूप्यमितिवचनस्याप्रवृत्तौ वासरूपसूत्रप्रवृत्त्येति भाव। वासरूपवचनन्तु स्तम्बशकृतोरिनीत्येतद्विषयेऽण्व्यावर्तकत्वेन चरितार्थमिति बोध्यम्। न च हलन्त्यमिति सूत्रेण व्यवसितान्त्यस्येत्सञ्ज्ञाविधानाद्वाक्यार्थज्ञाने सति प्रत्ययत्वेन परिच्छिन्नाधान्त्ययोः ककारणकारयोरित्त्वज्ञाने नानुबन्धेत्यस्य प्रवृत्तिरिति विकल्पो दुर्वार इति वाच्यम्। प्रत्ययत्वेनैकवाक्यतासत्त्वात्तत्सूत्रजन्यशाब्दबोधरूपे प्रत्ययत्वेन ज्ञाने तत्सत्त्वयोः प्राप्तिसम्भवात्। * जातनिवृत्त्ययोगादिति *। कार्यिप्रये जातस्याणो निवृत्त्ययोगादित्यर्थः। * तज्ज्ञान इति *। अनुबन्धत्वज्ञान इत्यर्थः। * तन्निवृत्तिः *। अणो निवृत्तिरित्यर्थः। * अत्रापि *। अत्र शीत्यत्रापि। * तत्त्वज्ञाने *। प्रत्ययत्वज्ञाने। * निवृत्त्यापत्तिरिति *। नानुबन्धकृतमनेकाल्त्वमित्यस्य प्रवृत्त्या सर्वादेशत्वस्यापि निवृत्त्यापत्तिरित्यर्थः। * ध्वनितञ्चेदमिति*। तत्र लुट प्रथमस्येति सूत्रभाष्ये डानिकारस्य शित्करणसर्वादेशार्थम्। डाधिकारः शित्कर्तव्य। किम्प्रयोजनम्। सर्वादेशार्थम्। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येतेत्युक्तम्। अत्र कैयट। डाधिकार इति। डादेश इत्यर्थः। नानुबन्धकृतमनेकाल्त्वमित्यस्य स्यान्निति डाश्वक्तव्य इत्याह। तदग्रे भाष्ये सिद्धमलोऽन्त्यविकारात्। सिद्धमेतत्। कथमलोऽन्त्यविकारात्। अस्त्वयमलोऽन्त्यस्य। का रूपसिद्धिः कर्ता। डिति टेर्लोपालोप डिति टेर्लोपेन लोपो भविष्यति। अभत्वान्न प्राप्नोति। डित्करणसामर्थ्याद्भविष्यति इत्युक्तम्। * डितीति *। आकारे डिति परत टिसञ्ज्ञकस्य लोपो डित्करणसामर्थ्याद्भविष्यतीति। एतद्भाष्येऽन्त्यादेशत्वमभ्युपेत्य टिलोपेन समाहितम्। पूर्वपक्षिणा च डादेशस्य शित्त्वङ्कर्तव्यमित्युक्तमेतेन ध्वनितम् यद्यनुबन्धपदस्यानुबन्धयोग्ये लक्षणा न स्यात्तदा आदेशप्रवृत्तिकालेऽप्युक्तरीत्यानुबन्धत्वाभावेन नानुबन्धेत्यस्याप्राप्त्याऽनेकाल्त्वेनैव सर्वादेशत्वे सिद्धे पूर्वपक्षसमाधानयोर्निर्बलत्वापत्तिरिति। तदोऽग्रे भाष्ये अनित्याद्वा। अथ वाऽनित्त्वादेतत्सिद्धम्। अनित्त्वञ्चालोऽन्त्यस्याय प्रभवन्न प्रत्यय स्यादित्यादिनोपपादितम्। आनुपूर्व्या। इदम्भाष्यमनुबन्धपदस्य लक्षणाया अभावे नानुबन्धेतिवचनस्याप्रवृत्तिस्वीकारेऽप्यानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वम्भविष्यतीत्यभिप्रायेण। तत्र प्राश्लिष्टनिर्देशाद्वा। अथ वा प्राश्लिष्ट-

षेषु भाष्ये इति प्राहुः ।

अतः सर्वनाम्न इति । अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्यर्थः । तेन मासपूर्वायेत्यत्र स्मै न ॥

ङसिङ्योः ॥ स्मात्स्मिनोर्हल्न्त्यमिति न । न विभक्ताविति निषेधात् । यद्यपि इत्संज्ञाप्रवृत्तिकाले न विभक्तित्वज्ञानं तथापि विभक्तावित्यस्य विभक्तित्वयोग्ये इत्यर्थान्न दोषः । अत एव सूत्रे तुग्रहणं चरितार्थम् ।

आमि सः ॥ आज्जसेरसुगित्यत आदिति वर्तते । पञ्चत्रिंशदिति । तेन सर्वार्थप्रतिपादकत्वे ऽपि कृत्स्नसकलादिशब्दानां नेति भावः । सर्वविश्वौ बुद्धिस्था ऽनेकसंख्याकावयवारब्धसमुदाये शक्तौ तस्य समुदायस्यानुद्भू

---

निर्देशोयम् । डा आ डा इत्युक्तम्भाष्ये । एतेनाकारस्य प्रश्लेषाभावे डकारस्यानुबन्धत्वयोग्यत्वाभावात्तुपुन्धेत्यस्य प्रवृत्त्या सर्वादेशत्वं दुर्लभं स्यादित्युक्तप्रायम् । यत्तु मध्यपठितस्यानिर्धारितस्यैव सिद्धान्त्युक्तित्वम्पूर्वोत्तरयोस्त्वेकदेश्युक्तित्वमिति कल्पनं तत्प्राचीनमत एव श्रद्धाजाड्येनेति दिक् ॥

ननु तृतीयासमास इत्यनेनापि समुदायस्य सर्वनामसंज्ञानिषेधादवयवस्य सर्वनामत्वान्मासपूर्वायेत्यत्र स्मैभावो दुर्वार इत्यत आह । * सर्वनाम्नो विहितस्येत्यर्थ इति * । *विभक्तित्वयोग्येति * । विभक्तित्वव्यवहारविषयत्वयोग्ये इत्यर्थः । सोऽत्र विभक्तिपदं तत्र लाक्षणिकमिति भावः । अत्र साधकमाह । *अत एवेति* । विभक्तिपदस्य तादृशार्थलाक्षणिकत्वादेव । *तुग्रहणञ्चरितार्थमिति* । सर्वस्मिन्नित्यादौ नकारस्येत्संज्ञाव्याघातकत्वेनैव तुग्रहणञ्चरितार्थं स्यात्स च लक्षणां विना न सम्भवतीति भावः । न च प्राग्दिशीये चारितार्थ्यम् । तेष्वप्रवृत्तेरिष्टत्वात् । यत्तु उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गम्बाधत इति न्यायेन स्मिन्नादेशप्रतिपत्तिकाले प्राप्तसंज्ञाया वारणे सिद्धे विभक्तिपदस्य लक्षणाकल्पनमनुचितमिति । तन्न । उत्सर्गापवादयोरेकवाक्यताया एव निकटप्रकारणाय सम्प्रदायसिद्धतया हलन्त्यमितिसूत्रघटकहल्पदस्य विभक्तिस्थतवर्गादिभिन्नहल्त्वावच्छिन्नबोधकत्वं वाच्यम् । एवञ्च स्मिन्नादेशस्य प्रवृत्तिसमये विभक्तित्वज्ञानाभावादित्यस्यानुपपत्तिस्तदवस्थैवेति लक्षणाया भवतापि वाच्यतया न्यायानुपयोगात् । * तेन * । परिगणनेन । अन्यथाऽर्थसंज्ञया कृत्स्नादिशब्दानामपि स्यादिति भावः ।

* समुदाये शक्ताविति * । यथा सर्वोयं धान्यराशिश्चैत्रस्येत्यादौ । यदा तद्राश्यवयवा एकत्रबुद्धिस्थास्तदा तदभिप्रायेणायं प्रयोगः । मैत्रीयगोधूमराशेरपि यदा कदाचिच्चैत्रीयबुद्धिस्थावयवारब्धत्वेपि सम्प्रति चैत्रसम्बन्धित्वविवक्षाया सर्वोयं राशिश्चैत्रस्येति प्रयोगो न तु तदा चैत्रस्येत्यतो बुद्धिस्थत्वं वि

तावत्त्वभेदत्वे एकवचने यथा सर्वो लोक इति तादृशसमुदायद्वयादिविवक्षायां द्विवचनादि, सर्वौ व्यूहौ सर्वे व्यूहा इति । यदा ऽप्युद्भूतावयवभेदसमुदा-

शेषणम् । * तादृशसमुदायद्वयादीति * । बुद्धिस्थानेकसंख्याकावयवारब्धस-मुदायद्वयविवक्षाया द्विवचनम् । तादृशसमुदायत्रयादिविवक्षायां बहुवचनम् । नन्वेवं सर्वोऽप्यात्मा नित्य इतिप्रयोगानुपपत्तिः । अद्वैतसिद्धान्तेऽन्तःकरणाद्युपाधिभेदादात्मनाम्भेदेऽपि बुद्धिस्थानेकसंख्याकावयवारब्धसमुदायरूपत्वानुपपादनात् । एवमात्मना सर्वेषामेकत्वमित्यादिप्रयोगानुपपत्तिः । न चाशेषत्वाव-च्छिन्नं सर्वशब्दार्थः । अशेषत्वञ्च विधेयशून्यावृत्त्युद्देश्यतावच्छेदकत्वम् । प्रकृते विधेयस्य नित्यस्य यस्तादात्म्यसम्बन्धावच्छिन्नाभावस्तद्वानानित्यः प्रपञ्चस्त-न्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभाववदात्मत्ववत्त्वमात्मनि प्रतीयत इति नानुपपत्तिरिति वाच्यम् । सर्वे घटाः प्रमेयत्ववन्त इत्यप्रयोगत्वापत्तेः । वि-धेयस्य विधेयतावच्छेदकस्वरूपसम्बन्धावच्छिन्नाभावाप्रसिद्धेः । किञ्च सर्वे घटा रूपवन्त इत्यादौ शब्दाद् घटत्वावच्छिन्ने तादात्म्यसम्बन्धेन रूपाभाववद्-वृत्तिघटत्वावच्छिन्नस्य विधेयत्वेऽधिकावगाहित्वेन शाब्दबोधसम्भवेऽपि चार-त्र्य घटत्वविषयत्वावगाह्यनुभवस्य सार्वजनीनस्याभावादनुपपत्तिः । न चोद्दे-श्यतावच्छेदकव्यापकविधेयकत्वमेव सर्वशब्दार्थः । तदवच्छिन्ने तस्य विधेय-तया भानानुपगमात् । न च सर्वशब्दार्थो व्यापकत्वमेव, तस्य विधेयेऽन्वयाच्चा-नुपपत्तिरिति वाच्यम् । नामार्थयोर्भेदसम्बन्धेनान्वयानुपगमात् । नाप्यभेदेन विधेयत्वव्यापकः सर्वपदार्थः । एवं सति विधेयबोधकपदसामानाधिकरण्येन सर्वशब्दस्य तल्लिङ्गत्वापत्त्या सर्वं वेदाः प्रमाणमित्यत्रान्वयिप्रमाणशब्दवत्सर्वश-ब्दे नपुंसकत्वापत्तिः । एवमेकवचनापत्तिश्चेति चेन्न । उद्देश्यतावच्छेदकव्यापक-विधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तम् । स च धर्मः सर्वे घटा रूप-वन्त इत्यादौ घटनिष्ठघटत्वम् । तदवच्छिन्नस्य चोद्देश्येऽभेदेनान्वयोपगमान्न पूर्वोक्तानुपपत्तिः । व्याप्यत्वपर्याप्त्युद्देश्यतावच्छेदकव्यापकत्वाच्चोद्देश्यतावच्छेद-कसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम् । न च विधेयव्याप्य-त्वञ्च विधेयतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकविधेयाभाववदवृत्तित्वमे-वञ्च सर्वे घटाः प्रमेयत्ववन्त इत्यादौ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकप्रमे-यत्वाभावाप्रसिद्ध्याऽनुपपत्तिरिति वाच्यम् । व्यभिचारित्वसम्बन्धावच्छिन्नप्रति-योगिताकविधेयतावच्छेदकावच्छिन्नाभाववत्त्वस्यैव व्याप्यत्वरूपत्वात् । व्यधि-करणसम्बन्धावच्छिन्नाभावश्च सर्वमतप्रसिद्ध एव ॥ अथ सर्वशब्दार्थश्च यत्र सर्वशब्दस्योद्देश्यबोधकपदसामानाधिकरण्यं तत्र । यत्र तु विधेयबोधकपदसा-मानाधिकरण्यं तत्र [illegible] विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकावच्छिन्नसम्ब-न्धव्याप्यपर्याप्तिकयावत्त्वं प्रवृत्तिनिमित्तम् । पृथिवी सर्वगन्धवतीत्यादौ यथा । पूर्वादिनाम्नाः सर्वनामसंज्ञाया अष्टाध्यायीस्थसूत्रेण असाधारं षष्ठीमाश्रित्यं

यदि विवक्षा तदापि बहुवचनं सर्वे यथा इति । पूर्वपरावर ॥ व्यवस्थासञ्ज्ञायामेवेमे सर्वादय इत्यर्थः। एवमुत्तरसूत्रत्रये ऽपि । नित्यं द्विवचनान्त इति । द्विवचनान्त एवेत्यर्थः । अयजर्थ इति । ननु याकचोः को विशेषः । प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तत्वस्यैव सत्त्वात् । न च सुबन्तात् तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदात्तत्वमुभकाभ्यामित्यादौ सुबन्तस्य के तु प्रकृतेरिति विशेष इति वाच्यम् । तद्धितविधौ प्रातिपदिकादित्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात्, स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यत् । युष्मदस्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं तस्यैव टेः प्रागकजिति बोध्यम् । न चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकावयवौ यस्येत्यर्थे उभकशब्दादयच्युभकय इति रूपं के तु नेति विशेषः । कथमिदानीं काकचोर्विशेष इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्कते न चेति । द्विवचनपरत्वाभावेनेति । अकचि तन्मध्यपतितन्यायेनोभशब्दस्य द्विवचनपरत्वे के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः। उभादुदात्तो नित्यमिति सूत्रे भाष्यकृता ऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणमयोग्यं सत् योगविभागेनोभयशब्दाद्वृत्तिविषये ऽप्यन्तरङ्गार्थिकायज्विधानार्थम्, अयच्च तद्विषये सुबुत्पत्तेः पूर्वमेव स्वार्थिकत्वेनान्तरङ्गत्वात् । अत एवायज्विशिष्टस्योभस्य सर्व-

---

कार्येन्तत्र सिद्धेर्गणसूत्रार्थमाह । * व्यवस्थेति * । ननु नित्यं द्विवचनान्त इत्यनुपपन्नं यत्र टाबन्तोभस्य द्विवचनान्तत्वासम्भवादत आह । * द्विवचनान्त एवेत्यर्थ इति * । एतेन नित्यं द्विवचनान्त इत्यत्र नित्यशब्दोऽवधारणार्थ इति सूचितम् । तेन सजातीयवचनान्तरस्यैव व्यवच्छेदो न तु टापः । * अन्तोदात्तत्वस्यैवेति * । चित इति सूत्रे सप्रकृतेरित्युक्तत्वात् । ननु प्रत्ययविधौ यदुद्देश्यतावच्छेदकं तदवच्छिन्नस्यैव प्रकृतित्वमिति विशेषोऽस्त्येवेत्याशयेन शङ्कते । *न चेति* । * प्रातिपदिकस्यैव प्रकृतित्वादिति * । यदुद्देश्यत्वेनोपात्तं तत्प्रकृतिरित्युच्यते तादृशञ्च प्रातिपदिकमेवेति भावः । *न्यायात्* । स्वार्थपरिपूर्णस्यैवेतराकाङ्क्षत्वमित्येवरूपात् । * वचनादिति * । ओकारसकारभकारादाविति वक्ष्यमाणवचनादित्यर्थः ।*के तु नेति*। कान्तस्य शब्दान्तरत्वात्।*प्रत्ययान्तरत्वेन व्याख्यानादिति * । प्रत्ययविधायकसूत्रेषु महाविभाषासम्बन्धस्य बहुशो दर्शनादित्यर्थः स्वीकर्तुमस्योपादानात् । * वृत्तिविषय इति * । अयं भावः । उभयोऽन्यत्रेति वार्तिकस्वारस्येनोभौ साभ्यासस्येति सौत्रप्रयोगेण च यत्र द्विवचनस्याप्रयुज्यमानत्वं तत्रैवायच्साधुत्वमन्तेन वृत्तिविषय इति लब्धमिति । * अत

नामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः । अत्र नित्यशब्दस्य वाच्यार्थविरोधान्महाविभाषाया असम्बन्धः। अयमप्याद्युदात्त एवा उदात्तग्रहणानुवृत्ते । अयच्च वार्तिकमामाण्यात्रोभशब्दस्योभयशब्दस्य वा द्विवचनविषयत्वाभावसम्भावना तत्रैव । अत एवोभयोऽग्नय इत्यादौ ग्रयवासेत्यलुकि नायच्, तत् ध्वनयन् वार्तिकमाह उभयोन्यत्रेति । द्विवचनपरत्वाभावे इति । तत्परत्वविषयत्वाभावे इत्यर्थः। उभयो मणिरित्यादौ तु न। लिङ्यभ्यासस्योभयेषामिति निर्देशेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च तस्य क्वचिदप्रवृत्तेः । अतो रूपाद्यन्ते नायच्, रूपादेरस्मादनभिधानमेव वा । अयच्यकच् तु न वाच्यः, रूपजीव्यत्वेन कस्यैव प्राप्तेः । अपवादस्त्वन्यत्र

---

एव * । सुबुत्पत्ते पूर्वमस्योत्पत्तेरेत्र । * त्रलाद्युत्पत्तिरिति * । एतेन यस्य मते उभशब्दस्य न सर्वादौ पाठस्तन्मतं प्रति त्रलादिघटितस्य दृष्टान्ततयैवोपन्यासः सङ्गच्छते । * अयञ्च * । अयन्प्रत्ययश्च । ननु वृत्तिविषय इत्येतावन्मात्रोक्तावुभयोवास इत्यत्रायच् दुर्वार इत्यत आह । * उभशब्दस्येति * । ननूभशब्दस्य द्विवचनपरत्वाभावो वृत्तिविषये पूर्वमयच् यदि स्यात्तदाऽस्येयेरयत आह । *उभयशब्दस्य वेति * । यद्यत्रायच् स्यात्तदापि प्रकृते विभक्तेर्लुकि कृते उभयशब्दस्य द्विवचनपरत्व स्यादेवेति पूर्वमप्ययच् न प्रवर्तत इति भाव । ननु द्विवचनपरत्वाभावेनेत्यसङ्गतम् । नित्यमिति सूत्रेण विधीयमानस्यायचोऽन्तरङ्गत्वात्समासतद्धिताद्युत्पत्ते सुबुत्पत्तश्च पूर्वमेवोत्पत्तिसम्भवात्तथा सर्वत्रैव द्विवचनपरत्वाभावोऽस्त्येवेत्यत आह । * तत्परत्वविषयत्वाभाव इति * । भावप्रधाननिर्देशेन द्विवचनपरत्वविषयत्वाभाव इत्यर्थ । न च कप्रत्ययेनेष्टसिद्धिरिति यस्य शङ्का तन्मते उभशब्दस्य सर्वादिषु पाठाभावेन तत्रत्रतसिलादिविवक्षाया कर्तुमशक्यत्वेन द्विवचनपरत्वविषयतायाः एव सर्वत्र सम्भवेन द्विवचनपरत्वविषयत्वाभावस्यासम्भवेन उभयत उभयत्रेति दृष्टान्तेन कप्रत्यये सत्ययच् स्यादित्यसङ्गतमिति वाच्यम् । द्विवचनविषयत्वाभावसम्भावनेतिव्याख्यानेनैव समाधानात् । एवञ्च तन्मते उभशब्दस्य पाठाभावेप्युभयशब्दस्य सर्वादौ पाठस्य सत्त्वादयत्रायच् स्यात्तदा त्रतसिलादि स्यात्ततश्च द्विवचनस्य लुक् स्यादेवरीत्या द्विवचनपरत्वविषयत्वाभावसम्भावनासत्त्वात्नुपपत्ति । ननूभयो मणिरित्यत्र तयप स्थानेऽयजादेशो यत्र तत्र स्वार्थिक पुनरयच् स्यात्त आह। * उभयो मणिरित्यादाविति * । रूपाद्यन्त इति * । उभरूपमित्यादौ, वृत्तिविषय इत्येतद्वाक्यविज्ञाप्यार्थस्य तत्राप्यक्षतत्वात् । अत्रादिना यहभशब्दसङ्ग्रह । ननु वृत्त्याद्यर्थविवक्षायामेव वृत्तिविषयता तत्रापि कृते उभयशब्दस्य सर्वादौ पाठस्य सर्वमतसिद्धतयाऽकजेव स्यात्तथा सति द्विवचनपरत्वविषयतासत्वेन कथमयच प्रसङ्ग इत्यत आह । * अयच्यकच् स्यिति * । उपजी-

चरितार्थः । अत्रेदं चिन्त्यम् । अकजिव गावेवोभग्रहणेन सिद्धे सञ्ज्ञाप्रणयनं किमर्थम् । अभिव्यक्तपदार्थकत्वात्सञ्ज्ञाव्याप्तिः । सर्वनामसाहचर्याच्च । अत एवोपसर्जनव्याप्तिरिति उभयोऽन्यत्रेति वार्त्तिके तयप्समानार्थका ऽप्ययच् गृह्यते । उभयो मणिरुभये देवमनुष्या इति भाष्ये तदुदाहरणात् स्वार्थिकस्य च ग्रहणम् तदुपक्रमेण वार्त्तिकप्रवृत्ते. । एवञ्चावयवद्वयारब्ध मणिद्वयाविवक्षयोद्भूतावयवभेदविवक्षया वा द्विवचनमस्याऽसाध्वेव । एत न्मूलकमेवोभयस्या ऽसर्वविभक्तिस्त्वन्ताद्धितश्चेति सूत्रे कैयटेनोक्तं तदाह ॥ कैयट इति । हरदत्त इति । अत्रारुचिनीज प्रागुक्तभाष्यविरोधः । भाष्ये तू भशब्दपाठः प्रत्याख्यातः कप्रत्ययस्याज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन द्वि- त्वसंख्याप्रकारसंख्येयविशेष्यकबोधाविषयाय नुवादकत्वरूपाद्द्विवचनत्वेन वा र्त्तिके द्विवचनशब्देन तस्यापि ग्रहणमुभशब्दग्रहणवत् । अत एवोभयोरुभा मुभाभावित्यादौ नायच् । तदुक्तं भाष्ये केऽप्यन्तरेण वचनाद्द्विवचनपरो भ विष्यति कथं स्वार्थिकाः प्रत्ययाः प्रकृतितो विशिष्टा भवन्तीति प्रकृतिग्रह णेन स्वार्थिकानामपि ग्रहणं भवतीति । इति हेतो' प्रकृतेः कादिप्रकृतेरुभ- शब्दस्य ग्राहकेण द्विवचनशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थ. । अत

---

प्यत्ययेनेति * । यद्यत्र कप्रत्यय स्यात्तदा द्विवचनपरत्वाविषयत्वाभावमाश्रित्या यच प्राप्तिरिति कप्रत्ययस्य भाविनी या उत्पत्ति सा उपजीव्या यदि तु कप्र त्ययस्य बाधकोऽकच् प्रवृत्ते स्यात्तर्हि उपजीव्यविरोध स्पष्ट एवेति भाव । नन्वपवादविषये कथं भाष्यप्रवृत्तिरत आह । * अपवादस्त्वन्यत्रेति * । युष्म दस्मच्छब्दविषये । तस्येह पाठस्तूभकावित्यकजर्थ इतिमूलोक्त सिद्धान्तमाह । * अत्रेदञ्चिन्त्यमिति * । नन्वकजिवधायेवोभशब्दपाठे सञ्ज्ञाभूतेमशब्दादप्य कच् स्यात्सर्वादौ पाठे तु सर्वनामसञ्ज्ञायास्तत्राभावेन नाकच्प्राप्तिरिति विशेषो ऽस्त्वेवेत्यत आह । * अनभिव्यक्तेति * । *अत एव* । सर्वनामसाहचर्यादेव । एतेनाभिव्यक्तेति न्यायस्य प्रवृत्तावेव निर्भरस्याभावात् । अथोभयशब्दविषये विशेषमाह । *उभयोऽन्यत्रेतीति* । *तयप्समानार्थक इति* । एतेन वक्ष्यमाण प्रत्ययान्तरत्वपक्ष एव मुख्य इति सूचितम् । * तदुपक्रमेण * । स्वार्थिकोपक्रमे ण । * एतन्मूलकमेवेति * । उक्तभाष्यमूलकमेवेत्यर्थ । * प्रागुक्तभाष्येति * । उदाहरणप्रदर्शनपरभाष्येत्यर्थ । यदि द्विवचनमपि स्यात्तदा तदन्तोदाहरणा प्रदर्शनेन न्यूनतापत्ति स्यादिति भाव । सिद्धान्तमाह । * भाष्ये त्विति * । उभयोऽन्यत्रेति वार्त्तिकव्याख्यानावसरे यो द्विवचनशब्द उक्त स न कृत्रिमस्यैव बोधक किन्तु यौगिक इत्याशयेनाह । * द्वित्वसंख्येति * । *अत एव* । द्विव चनशब्दस्य यौगिकत्वादेव । पूर्वोक्तार्थे भाष्यसम्मतिमाह । * तदुक्तमिति * । भाष्यस्थप्रकृतिग्रहणशब्द करणल्युडन्त इत्याशयेनाह । *ग्राहकेणेति* । उभयत उभ

सिला तु विभक्त्यन्तस्य स्वार्थे विहिताविति तत्तत्कारकशब्दात् । जसीति । अवयवद्वयारब्धसमुदायवृत्त्वविवक्षायामित्यर्थः । अन्तरङ्गत्वादिति । सर्वार्थबोधकत्वरूपार्थस्योभयत्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बहिरङ्गत्वम् । अत एव सञ्ज्ञोपसर्जनमथमादिशब्दे न विकल्पः, अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः । इदमर्वाचामनुरोधेन । परे तु अस्य पक्षे ऽभावबोधकतया निषेधाश्च बलीयांस इत्यनेनास्य प्राप्तिः, किं च नान्तरङ्गं बलीय इत्यस्य अत्र विषयो युगपत्प्राप्त्यभावात् । सञ्ज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाप्रवृत्तेः । अत एवोभयइत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः । पूर्वापरेत्यादि पक्षे तदभावमात्रबोधकम् । असिद्धं बहिरङ्गमित्यपि न, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः । अन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात् । बहुशस्तथा दृष्टत्वात्तदुत्तरमप्यतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात् । जसीति विष

---

यत्रेति प्रयोगासङ्गतिरूपरिहरन्नाह । *प्रतसिलाविति* । *शक्तिप्रधानाविति* । अपादानत्वाधिकरणत्वशक्तीत्यर्थ । इद शक्तेर्विभक्त्यर्थत्वमेवेति मते । कारकस्य विभक्तिवाच्यत्वेऽपि सङ्ख्याया प्रकृत्यर्थविशेषणतयाभानेन सङ्ख्याप्रकारकप्रकृत्यर्थविशेष्यकबोधो यद्यपि भवति । तथापि न विभक्तिवाच्यार्थं सङ्ख्याया प्रकारत्वमिति निरुक्तद्विवचनस्वाभाव्य स्पष्ट । उभयशब्दाद्बहुवचनोपपत्तये आह। *अवयवद्वयेति* । *अत एव* । अर्थस्योभयत्र निमित्तत्वादेव । * न विकल्प इति* । अर्थाभावादित्यादि । स्वसिद्धान्तरीत्याह । *अर्थकृतेति* । अर्वाचाम्। प्रक्रियाकारादीनाम्।*अभावबोधकतयेति*। इदन्निषेधाश्चेति वचनप्रवृत्तौ नियामकम् यदुक्तमन्तरङ्गत्वादिति तत्खण्डयति । *किञ्चेति* । *अत एव* । प्रातिपदिकसञ्ज्ञासमकाले सर्वनामसञ्ज्ञाप्रवृत्तिस्वीकारादेव । ननु प्रातिपदिकसञ्ज्ञासमकालमेव चेत्सर्वनामसञ्ज्ञा तदा पूर्वपरेत्याद्यष्टाध्यायीस्थसूत्रवैयर्थ्यमत आह । * पूर्वपरेत्यादीति * । ज्ञापकसिद्धपरिभाषाया अपि न प्रवृत्तिरित्याह । * असिद्धमिति * । अन्तरङ्गे कर्त्तव्ये जातस्य बहिरङ्गस्यानेनासिद्धत्वप्रतिपादनात् । एतादृशार्थे साधकमाह । * बहुश इति * । पचावेदमित्यादौ । * तदुत्तरमिति * । नित्यसञ्ज्ञोत्तरमित्यर्थ । * एतत्प्रवृत्त्येति * । प्रथमचरमेत्यस्य प्रवृत्त्येत्यर्थ । ननु जसीति सप्तम्या विषयसप्तमीत्वात्पूर्वं विकल्पप्राप्ति स्यादत आह । * जसीति विषयेति * । तदुत्तरमेव तद्विषयात् । प्रातिपदिकसञ्ज्ञोत्तरमेव जस्विषयत्वसत्त्वात् । नित्यसञ्ज्ञायास्तु प्रातिपदिकसंज्ञाप्राप्तिसमानकालप्राप्तिकतया विकल्पेन बाधो न सम्भवतीति भाव । एतेनान्तरङ्गत्वादित्युक्तिर्निरस्ता । स्या

प्रसप्तमीति पक्षेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः प्रवृत्तिस्तदुत्तरमेव तद्विषयात्, स्थानिवदतिदेशप्रापितायाः निरवकाशत्वाच्च, प्रत्ययस्य स्थानिवद्भावस्यानुमानिकयानया बाधायोगाच्च । सर्वनामसञ्ज्ञायामुक्तयुक्त्या यथोद्देशपक्षस्यैवौचित्यात् । अत एव तयादेश उभयप्रतिषेधः । तयपोग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोतीति स्थानिवत्सूत्रस्थवार्त्तिकमयच्प्रत्ययान्तरमिति सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातम् । न त्वन्तरङ्गन्यायबलेन । उभयीत्यत्र ङीप्तु टिड्ढेति सूत्रे मात्रशब्दादारभ्यायाच्चकारात्प्रत्याहाराश्रयणेन सिद्धः । अत इत्यनुवृत्त्या पचतीत्यादौ नातिप्रसङ्गः । तयप्ग्रहणन्तु सूत्रेऽवयुत्यानुवादः । द्वित्रिशब्दप्रकृतिकायजन्तस्य जसः शीविषयेऽनभिधानमेव पुंस्येव चाऽनभिधानमिति तदाशय इति वदन्ति । तथापि

---

निषद्भावेन या विकल्पप्राप्तिस्तस्याः परेणोक्तमन्तरङ्गत्वाद्बाधमभ्युपेत्यापि प्रकारान्तरेण तन्मतं निरस्यति । * स्थानिवदतिदेशेति * । अत्र निरवकाशत्वोक्त्याऽन्तरङ्गस्यापि निरवकाशबाधकत्वासम्भवः सूचितः । नन्वन्तरङ्गपरिभाषया स्थानिवद्भावस्यैव बाधोऽस्त्वत आह । * प्रत्ययस्येति * । ननु कार्यकालपक्षे द्वयोस्सञ्ज्ञयोर्युगपत्प्राप्तिः स्यादत आह । * सर्वनामसञ्ज्ञायामिति * । * उक्तयुक्त्येति * । उभय इत्यत्र सर्वनाम्नो विहितत्वसिद्ध्यर्थं यथोद्देशत्वमेव स्वीकरणीयमन्यथा शीभावो न स्यादिति तीरयेरर्थः । उक्तार्थे भाष्यसम्मतिमाह । * अत एवेति * । अन्तरङ्गपरिभाषया प्रवृत्तेऽनिर्वाहादेव । प्रत्ययान्तरत्वपक्षे ङीबसिद्धिम्परिहरति । * उभयीत्यत्रेति * । अतिप्रसङ्गम्परिहरति । * अत इत्यनुवृत्त्येति * । नन्वेवं सति मात्रज्ग्रहणेनैव सिद्धे टिड्ढेतिसूत्रे तयप्ग्रहणवैयर्थ्यापत्तिरत आह । * तयप्ग्रहणन्त्विति * । अवयुत्येति ल्यबन्तम् । पृथक्कृत्येत्यर्थकम् । अवयुतिशब्दप्रकृतिकतृतीयान्तं वा । समुदायादेकदेशस्य पृथक्करणेनानुवाद इत्यर्थः । ननु द्वित्रिशब्दादवयवे वर्त्तमानादवयविनि यदा तयप् तदा तस्य स्थानेऽयजादेशे स्थानिवद्भावेन तयप्त्वया तया प्रथमचरमेति जसि विकल्पो भवति । अयच् प्रत्ययान्तरत्वे तु न विकल्पप्राप्तिरत आह । * द्वित्रिशब्देति * । जस शीविषय इति न्यूनमन्यत्रापि प्रयोगाभावादत आह । * पुंस्येवेति * । स्त्रियान्नपुंसकत्वे च प्रयोगो दृश्यते । त्रयी विद्या असती कुलद्वयमाश्रयतीत्यत्र यथा । * तदाशय इति * । तयादेशो उभयप्रतिषेध इति वार्त्तिकप्रत्याख्यानपरभाष्याशय इत्यर्थः । न च तस्यपामिति वक्तव्ये तस्यस्यपमिपामिति गुरुनिर्देशात्स्थानिवद्भावानुबन्धस्यावयवानुबन्धत्वाभावो ज्ञापित इति यदि मात्रजिति प्रत्याहारस्तदाऽयचश्चिरयप्त स्यादिति वाच्यम् । ज्ञापकसिद्धं न सर्वत्रेति परिभाषया

देति । प्रत्ययग्रहणे तदन्तग्रहणमिति प्रयोजनं सर्वनामाव्ययसञ्ज्ञायामिति च तदन्तविधिद्वयेन डतरान्तान्तेत्याद्यर्थे परमकतरस्य व्यपदेशिवद्भावेन कतरस्य च सञ्ज्ञासिद्धेति भावः । तत्र मानमाह । केवलयोरिति । प्रयोजनाभावात् फलाभावादित्यर्थः । अदन्तादक्षात्परस्य सर्वनाम्नो विहितस्येत्येव जसः शीत्यादेरर्थादिति भावः । ननु डतरग्रहणेनैव सिद्धेऽन्यतरशब्दपाठो व्यर्थो ऽत आह, अन्यतरेति । किंयत्तदएव तयोर्विधानादिति भावः । अपुरीति । पुःशब्दस्य विशेष्यत्वेनेत्यर्थः । तद् ध्वनयन् स्त्रियामुदाहरति । अन्तरायामिति ।

'एको ऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समाने ऽल्पे सङ्ख्यायां च प्रयुज्यते'

इति केचित्, केवले ऽसहाये । तत्र सङ्ख्या ऽन्यार्थोसहायवाची प्यान्तापद् बहुषु बहुवचनमेकादाकिनिश्चेत्यादि सूत्रेषु भाष्ये स्पष्टमुक्तः ।

---

कचित्समुदायानुबन्धत्वस्वीकारात् । यत्तु द्वित्रिभ्यामिति सूत्रे तयप्ग्रहणस्याकरणाप्रीक्ष्येदम् । वस्तुतस्तु उभयशब्दप्रकृतिकायच एव प्रत्ययान्तरत्वम् । अत एव कर्तृकर्मणोरिति सूत्रे धातोर्द्वये प्रत्ययास्तिङ कृतश्चेति प्रयोग सङ्गच्छते । * ध्यथा द्वयेषामिति * । माघप्रयोगश्च द्वयमिभ्रन्तीतिरीत्या यद्यप्युपपद्यते तथाप्युक्तप्रयोगस्यान्यथोपपादनासम्भवादिति । तत्र । अयच्प्रत्ययान्तरमिति प्रकृतिविशेषानुपादानेन प्रत्ययान्तरत्वोक्त्या द्वये प्रत्यया इतिप्रयोगाच्च द्वयश ब्दोऽव्युत्पन्नप्रातिपदिकन्तस्य च प्रथमचरमेतिसूत्रस्थचकारेण सङ्ग्रहात्सर्वनामसञ्ज्ञासिद्धिरित्याशयात् । उभया आमित्रा इति प्रयोगश्च छान्दसत्वेन साध्य इति दिक् । फलाभावमुपपादयति । *अदन्तादक्षात्परस्येति* । *पूःशब्दस्येति* । तदर्थस्येत्यर्थे । अत एवान्तरायाम्नगर्यामिति प्रयोगस्याप्युपपत्ति । एकशब्दस्य यावन्तोऽर्था एकोन्यार्थे इत्यादिनोक्तास्तेषु केषाञ्चिदर्थानां सप्रमाणत्वद्भस्य किन्तु नेति विशेषन्दर्शयितुमाह । *तत्रेति* । ष्णान्ता षडिति सूत्रे सङ्ख्यावाची एको द्वौ बहव इत्यत्र प्रसिद्ध । अन्यार्थकोऽपि तत्रैव साधमादो पुरुष एकास्ता इत्यत्रोक्त । असहायवाच्यपि तत्रैव एकाग्नय एकहलानीत्यत्रोक्त । * एको गोत्र इति सूत्रशेष इति * । तत्र हि एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयति इत्युक्तम् । तथान्येनैकशब्दस्य परमप्रकृतिपरत्वे कथिते सिद्धान्तिनोक्तम् । न हीद लोकाद्भिद्यते लोके हि सङ्ख्या प्रकर्षमानामुपचरन्ति । एक इति वा प्रथम इति वा । यावद्भूयात्प्रथमो गोत्रे प्रत्ययमुत्पादयति तावदेको गोत्र इतीति । अत्र कैयट । लोके योऽर्थं एकशब्दस्य दृश्यते स एवेहाश्रीयते । लोके च प्रथमशब्दसमानार्थ एकशब्दो दृश्यते इतीहापि प्रथमवाच्येवाश्रीयते शास्त्रेऽपि प्रथमार्थं एकशब्दो दृश्य

यसप्तमीति परेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः प्रवृत्तिस्तदुत्तरमेव तद्वि-पयात्, स्थानिवदतिदेशप्रापिताया निरवकाशत्वाच्च, प्रत्ययस्य स्थानिवद्भावस्यानुमानिकत्वानया बाधायोगाच्च । सर्वनामसञ्ज्ञायामुक्तयुक्त्या यथोद्देशपक्षस्यैवौचित्यात् । अत एव तयादेश उभयमविशेषः । तयपोग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोतीति स्थानिवत्त्वप्रत्ययवार्त्तिकमयच्प्रत्ययान्तरमिति सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातम् । न त्वन्तरङ्गन्यायबलेन । उभयीत्यत्र ङीप्तु टिड्ढेति सूत्रे मात्रशब्दादारभ्याचष्कारात्प्रत्याहाराश्रयणेन सिद्धः । अत इत्यनुवृत्त्या चकतीत्यादौ नातिप्रसङ्गः । तयप्ग्रहणन्तु सूत्रेऽवयुत्यानुवादः । द्वित्रिशब्दप्रकृतिकायजन्तस्य जसः शीविषये ऽनभिधानमेव पुंस्येव चाऽनभिधानमिति तदाशय इति वदन्ति । तथापि

---

नियन्न्यायेन या विकल्पप्राप्तिस्तस्याः परेणोभयमन्तरङ्गत्वाद्बाधमभ्युपेत्यापि प्रकारान्तरेण तन्मतन्निरस्यति । * स्थानिवदतिदेशेति * । अत्र निरवकाशत्वोक्त्याऽन्तरङ्गस्यापि निरवकाशबाधकत्वासम्भवः सूचितः । अन्तरङ्गपरिभाषया स्थानिवन्न्यायस्यैव बाधोऽस्त्वत आह । * प्रत्ययस्येति * । ननु कार्यकालपक्षे द्वयोस्सञ्ज्ञयोर्युगपत्प्राप्तिः स्यादत आह । * सर्वनामसञ्ज्ञायामिति * । * उक्तयुक्त्येति * । उभय इत्यत्र सर्वनाम्नो विहितत्वसिद्ध्यर्थं यथोद्देशत्वमेव स्वीकर्तव्यमन्यथा शीभावो न स्यादिति रीत्येत्यर्थः । उक्तार्थे भाष्यसम्मतिमाह । * अत एवेति * । अन्तरङ्गपरिभाषया प्रकृतेऽप्रवृत्तेर्बाधादेव । प्रत्ययान्तरत्वपक्षे ङीवसि-द्धिम्परिहरति । * उभयीत्यत्रेति * । अतिप्रसङ्गम्परिहरति । * अत इत्यनुवृत्त्येति * । नन्वेव सति मात्रज्ग्रहणेनैव सिद्धे टिड्ढेतिसूत्रे तयप्ग्रहणवैयर्थ्यापत्तिरत आह । * तयप्ग्रहणन्त्विति * । अवयुत्येति ल्यबन्तम् । पृथक्कृत्येत्यर्थकम् । अवयुतिशब्दप्रकृतिकतृतीयान्तं वा । समुदायादेकदेशस्य पृथक्करणेनानुवाद इत्यर्थः । ननु द्वित्रिशब्दादवयवे वर्त्तमानादवयविनि यदा तयप् तदा तस्य स्थानेऽयजादेशो स्थानिवन्न्यायेन तयप्प्रत्ययतया प्रथमचरमेति जसि विकल्पो भवति । अयच प्रत्ययान्तरत्वे तु न विकल्पप्राप्तिरत आह । * द्वित्रिशब्देति * । जसः शीविषय इति न्यूनमन्यत्रापि प्रयोगाभावादत आह । * पुंस्येवेति * । क्रियान्नपुंसकत्वे च प्रयोगो दृश्यते । त्रयी विद्या असती कुलद्वयमाश्रयतीत्यत्र यथा । *तदाशय इति* । तयादेशे उभयप्रतिषेध इति वार्त्तिकप्रत्याख्यानपरभाष्याशय इत्यर्थः । न च तस्यपामिति वक्तव्ये तस्यस्थानिपामिति गुरुनिर्देशात्समुदायानुबन्धस्यावयवानुबन्धत्वाभावो ज्ञापित इति यदि मात्रजिति प्रत्याहारस्तदाऽयचश्चित्स्वन्न स्यादिति वाच्यम् । ज्ञापकसिद्धन्न सर्वत्रेति परिभाषया

हेति । प्रत्ययग्रहणे तदन्तग्रहणमिति प्रयोजनं सर्वनामाव्ययसञ्ज्ञायामिति च तदन्तविधिद्वयेन डतरान्तान्तेत्याद्यर्थे परमकतरस्य व्यपदेशिवद्भावेन कतरस्य च सञ्ज्ञासिद्धेति भावः । तत्र मानमाह । केवलयोरिति । प्रयोजनाभावात् फलाभावादित्यर्थः । अदन्तादक्षात्परस्य सर्वनाम्नो विहितस्येत्येव जसः शीत्यादेरर्थादिति भावः । ननु डतरग्रहणेनैव सिद्धेऽन्यतरशब्दपाठो व्यर्थोऽत आह, अन्यतरेति । कियत्तदेव तयोर्विधानादिति भावः । अपुरीति । पूःशब्दस्य विशेष्यत्वेनेत्यर्थः । तद् ध्वनयन् स्त्रियामुदाहरति । अन्तरायामिति ।

'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते'

इति केचित्, केवले ऽसहाये । तत्र सङ्ख्या ऽन्यार्थोसहायवाची ष्णान्तापट् बहुषु बहुवचनमेकादाकिनिश्चेत्यादि सूत्रेषु भाष्ये स्पष्टमुक्तः ।

---

कश्चित्समुदायानुबन्धत्वस्वीकारात् । यत्तु द्वित्रिभ्यामिति सूत्रे तयग्रहणस्याकरणमीक्ष्येदम् । वस्तुतस्तु उभयशब्दप्रकृतिकायच एव प्रत्ययान्तरत्वम् । अत एव कर्तृकर्मणोरिति सूत्रे धातोर्द्वये प्रत्ययास्तिङः कृतश्चेति प्रयोगः सङ्गच्छते । * द्वयथा ह्यपेयामिति * । माघप्रयोगश्च द्वयमिभन्तीतिरीत्या यद्यप्युपपद्यते तथाप्युक्तप्रयोगस्यान्यथोपपादनासम्भवादिति । तत्र । अयच्प्रत्ययान्तरमिति प्रकृतिविशेषानुपादानेन प्रत्ययान्तरत्वोक्त्या द्वये प्रत्यया इतिप्रयोगश्च द्वयशब्दोऽव्युत्पन्नप्रातिपदिकं तस्य च प्रथमचरमेतिसूत्रस्थचकारेण सङ्ग्रहात्सर्वनामसञ्ज्ञासिद्धिरित्याशयात् । उभया आमिश्रा इति प्रयोगश्च छान्दसत्वेन साध्य इति दिक् । फलाभावमुपपादयति । *अदन्तादक्षात्परस्येति* । *पूःशब्दस्येति* । तदर्थस्येत्यर्थः । अत एवान्तरायामगर्यामिति प्रयोगस्याप्युपपत्तिः । एकशब्दस्य यावन्तोऽर्था एकोन्यार्थे इत्यादिनोक्तास्तेषु केषाञ्चिदर्थानां सप्रमाणत्वं कस्य चिन्नेति विशेषं दर्शयितुमाह । *तत्रेति* । ष्णान्ता षडिति सूत्रे सङ्ख्यावाची एको द्वौ बहव इत्यत्र प्रसिद्धः । अन्यार्थकोऽपि तत्रैव साधमादो पुरुष एकास्ता इत्यत्रोक्तः । असहायवाच्यपि तत्रैव एकाग्नयः एकहलादौ इत्यत्रोक्तः । * एको गोत्र इति सूत्रेऽपि इति * । तत्र हि एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयति इत्युक्तम् । तत्रान्येनैकशब्दस्य परमप्रकृतिपरत्वे कथिते सिद्धान्तिनोक्तम् । न हीह लोकान्निपठे लोके हि सङ्ख्या प्रवर्तमानामुपचरन्ति । एक इति वा प्रथम इति वा । यावद् द्व्यपत्यप्रथमो गोत्रे प्रत्ययमुत्पादयति तावदेको गोत्र इतीति । अत्र कैयट । लोके योऽर्थ एकशब्दस्य दृश्यते स एवेहाश्रीयते । लोके च प्रथमशब्दसमानार्थ एकशब्दो दृश्यते इतीहापि प्रथमवाच्येवाश्रीयते शास्त्रेऽपि प्रथमार्थ एकशब्दो दृश्य

एको गोत्रे इति सूत्रशेष भाष्ये प्रथमार्थोऽपि उक्तः साधारणसमानार्थयो' सङ्ख्यावाचिन एवार्थतः पर्यवसान यथा तेनैकदिक् चैत्रमैत्रयोरेका मातेत्यादौ । सर्वस्य द्वे इति सूत्रे एकैकश इति भाष्यमुपादाय केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्तीति वदता कैयटेन केचिदित्युक्त्या तदर्थकाभावो ध्वनित एव । एव च प्रधानार्थे न दृढ मानम् ।

स्वाभिधेयापेक्षावधीति समस्तः पाठ' । नियमेनावधिसापेक्षेऽर्थे वर्त्तमानपूर्वादीनामित्यर्थः । दक्षिणा गाथका इति । उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थास्तीत्याग्रहे तु उत्तरे प्रत्युत्तरे च शक्त इति प्रत्युदाहरण बोद्धव्यम् । उत्तराः कुरव इति । सुमेर्वधिकपरदेशरूपोपाधिविशिष्टकुरुपूत्तरशब्द' शब्द

ते। एकेऽल्पप्राणा इति । प्रथमेऽल्पप्राणा इति गम्यते । उपचरन्तीति। व्यवहरन्तीत्यर्थ ।साधारणार्थकस्तेथैकादिगित्यत्र दृष्ट ।समानार्थकस्तु चैत्रमैत्रयोरेका मातेत्यत्र एतयोरेकत्वसङ्ख्यया कारकबाधासम्भवात् अर्थत इति । सावधिभक्तिकस्तसि । अर्थवत्त्वात् । दिशो मातुश्चैकत्व विना साधारणत्वसमानत्वयोरनुपपत्ति । अल्पार्थकस्त्वनेकधान्यवपनयोग्यक्षेत्रेऽपि धान्याल्पत्वाद्येकजातीयस्यैव धान्यस्य वपन इत्याऽत्र क्षेत्रे मयैकस्यैव धान्यस्य वाप कृत इति कृषीवलोऽन्यम्प्रति प्रयुङ्क्ते तदीयवाक्ये प्रसिद्ध । * तदर्थकाभावो ध्वनित इति * । पूर्वोक्तप्रयोगघटकैकशब्दस्य तु एकजातीयत्वार्थकत्वकल्पनेनाप्युपपत्तिरिति भाव । * न दृढम्मानमिति * । यदा स्वसहायत्व स्वस्य दुरदृष्टत्वप्रयोज्यमेकाकिभिः क्षुद्रकैर्जितमित्यादौ यथा तदा प्रधानत्वप्रतीत्यभावेऽपि बहुषु राजसु वीरेषु सत्स्वपि प्राधान्यादयमेकवीर इति यदा प्रयोगस्तदा प्राधान्यप्रतीतिर्यद्यपि सम्भवति तथापि न दृढम्मान स्वनिष्ठगुणसजातीयगुणवत्त्वकृतसाजात्यवदन्याभावप्रयोज्यासहायत्वस्यापि पर्यवसानेन वाक्यार्थनिष्पत्तिसम्भवादिति भाव ।

स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्थेति क्वचित्पाठस्स वायुक्त । कर्मघमन्तस्यापेक्षशब्दस्यावधिसापेक्षत्वेन नियमेन योगासम्भवादत आह । *समस्त पाठ इति* । एव च स्वाभिधेयापेक्षशब्दस्यावधिशब्देन समास कृत्वा नियमेशब्देन समासे कृते स्वाभिधेयेनापेक्ष्यमाणस्यावधेर्नियमो व्यवस्थेति वाक्यार्थ सिद्ध । एवञ्च यत्फलितन्तदाह । * नियमेनेति * । नियमेनावधिसापेक्षत्वञ्चावधिबोधकशब्दप्रयोगनिवर्त्तनीयोत्थिताकाङ्क्षाजनकज्ञानविषयत्वम् । तच्च पूर्वादिशब्दार्थे प्रसिद्धमेवेति भावः । व्यवस्थायामिति सप्तमी तु विषयत्वाधिकैव । * आग्रहे त्विति * । एवमभिधानेनात्र दक्षिणशब्दस्य वाधसापेक्षार्थवृत्तित्वाभावः सूचित' । *उत्तरे प्रत्युत्तर इति* । अत्रोत्तरशब्द प्रतिवाद्युच्चारितवाक्यपर । प्रत्युत्तरशब्दस्तु पूर्ववाद्युच्चारितोत्तरनिराकरणसमर्थवाक्यपर । उत्तरा कुरव इति वाक्यघटकोत्तरशब्दार्थे व्यवस्थाविषयत्वमुपपादयति । * सुमेर्ववधिकेति * । अनेन सुमेरुशब्दस्याकाङ्क्षानिवर्त्तकत्व सूचितम् ।

प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्थाविषयत्वं बोद्ध्यम् । दिग्वाचकपूर्वादिशब्दानां मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसंनिहितदेशतत्कालिकसूर्यसंमुखयावद्देशतत्कालिकतत्पृष्ठस्थयावद्देशरूपोपाधिविशिष्टदिशि तत्तच्छब्द प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति उपाध्यन्तर्गततया व्यवस्थास्त्वेव, मध्याह्ने सूर्यस्योदङ्मुखत्वात् । देशवृत्तीनान्तत्तदवधिकोदयाचलसन्निहित-

---

* मध्याह्नेति * । अस्य तत्पुरुषोऽयेत्यादि । एवमेव सर्वेषामेव वर्णानामेतदुत्तरत्र स्थित इति वाक्यस्याप्युपपत्तिः । दिग्वाचकानाम्पूर्वादिशब्दानाम्प्रवृत्तिनिमित्तमुक्त्वा देशवृत्तीनामप्याह । * देशवृत्तीनामपि * । अत्र केचित् । अस्ति छायामित्यस्योत्तराः कुरव इति प्रत्युदाहरणमसङ्गतम् । देशविशेषे उत्तरशब्दस्य निरूढत्वादवधेर्नियमेनापेक्षाया अभावेन व्यवस्थाया अभावात् । किञ्च दिग्वाचकपूर्वादिशब्दानामपि सर्वनामसंज्ञा दिक्षु तेषां रूढत्वान्न प्राप्नोति । किञ्च दिङ्नामान्यन्तराल इति सूत्रभाष्ये दिक्समाससहयोगयोश्चादिभ्यो बहुव्रीहिः । किं कारणमन्तरालप्रधानाभिधानात् । दिक्समासे सहयोगे च अन्तरालम्प्रधानञ्चाभिधीयते तत्रान्यपदार्थ इत्येव सिद्धम् । यद्येव दक्षिणपूर्वा दिक्समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति । अथ पुनरियं सैव दक्षिणा सैव पूर्वेति कृत्वा समानाधिकरणलक्षणः पुंवद्भावः सिद्धो भवति । न सिध्यति । भाषितपुंस्कस्य पुंवद्भावः । न चैतौ भाषितपुंस्कौ । ननु च भो दक्षिणशब्दः पूर्वशब्दश्च पुंसि भाष्येते । समानायामाकृतौ यद्भाषितपुंस्कम् । आकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणापूर्वेति दिक्शब्दौ । दक्षिणः पूर्व इति व्यवस्थाशब्दौ । एवन्तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति वक्तव्यम् । दक्षिणोत्तरपूर्वाणामित्येवमर्थमिति भाष्ये उक्तम् । अत्र कैयटः । दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं दिक् सा दक्षिणपूर्वेत्युच्यते तत्रान्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धः समासः । * अथ पुनरिति * । सूत्रारम्भकाले । सूत्रमेव व्याख्यायते । अन्तराले यानि दिङ्नामानि वर्त्तन्ते तानि समस्यन्ते । दक्षिणादीनाञ्च सामीप्यादन्तरालवृत्तित्वन्ततश्च दक्षिणा चासौ पूर्वेति समानाधिकरणलक्षणः पुंवद्भावः सिद्धो भवति । सूत्रारम्भे त्वन्यपदार्थसम्पादनाय दक्षिणापूर्वेति शब्दयोः स्वार्थ एव वृत्तिरभ्युपेया । ततो वैयधिकरण्यम् । ततो न सिध्यतीति प्रतीकमुपादाय प्रवृत्तिनिमित्तभेदं प्रयोपपादितः । * दिक्शब्दाविति * । विना प्रवृत्तिनिमित्तेन दिग्विशेषे रूढ्या प्रवृत्तावित्यर्थः । देशकालयोश्च व्यवस्थापेक्षं प्रवृत्तिनिमित्तम् । एतेन ग्रन्थेन दिग्वाचकपूर्वादिशब्दानां व्यवस्थाविषयत्वाभावात्सर्वनामसंज्ञा न प्राप्नोतीत्यभिहितम् । अपि च दक्षिणा गाथका इत्यत्राप्युत्कर्षस्यावधिरापेक्ष्येन व्यवस्थाया सत्यात्कथम्न सर्वनामसंज्ञेति । तन्न ।

स्वादिप्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः ।

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।

---

रूढ्या बोधकशब्दमात्रप्रवृत्तिनिमित्तत्वाच्छक्यम् । अत एव सहायासमर्थेति सूत्रेण समूहार्थकसमशब्दस्य सूत्रकृता साधुत्वमुक्तम् । अत एव पशुरामस्तेन गवादयो व्यवह्रियन्ते । न हीयं तु पदप्रवृत्तिनिमित्तवत्त्वम् । इन्द्रशक्रादीनां भिन्नप्रवृत्तिनिमित्तकत्वापत्त्या पर्यायत्वानापत्तेः । सहायेन दीर्णीभूता इत्यत्र स्वाधुनिकसहायेन पत्र गृहाण । किंतु ईश्वरः सङ्केत । कुत्र तु स्वाधुनिक इत्यत्र व्याख्यातृवचनमेव प्रमाणम् । एवञ्च गणविशेषे विधिशब्दस्याधुनिकार्थ एव सङ्केत इति विशेषाध्यानानामिति सिद्धम् । उत्तरे पुरुष इति प्रत्युदाहरणस्याप्युपपत्तिर्गत्यैव । यथोत्तरन्दिग्वाचकानां व्यवस्थानियतत्वाभावादिति । तदपि न । यदि पूर्वादिशब्दा अपि व्यवस्थाशब्दाः स्युरिति भाष्येणैव समाधानात् । अस्य भाष्यस्य त्वयापि भाषितपुंस्करूपमिति शेषः । दिग्वाचकानां सर्वनामत्वमेष्टव्यमिति तात्पर्येण चेद्भाष्यस्य प्रवृत्तम् । अत्रापि व्यवस्थाशब्दाः स्युरित्यस्य व्यवस्थाविषयप्रवृत्तिनिमित्तकाः इति पूर्वव्याख्यानमेवम् । दिग्वाचकपूर्वादीनामपूर्वावधिभूतमागधविषयोदयाचलादिविषयत्वतद्देशरूपोपाधिविशिष्टदिशि प्रवृत्तिस्तथा च व्यवस्था स्फुटैव । अयम्भावः । आकाशवदेकस्यैव दिक्पदार्थस्यौपाधिको भेदः । उपाधिश्च पृथिवीमध्यान्तरमागतस्थास्थावरादि पर्वताश्च । तत्राप्युदयाचलसन्निहितत्वादिकमेव प्रवृत्तिनिमित्तम् । अवधिस्तु पृथिवीमध्यमेकमेव । न चैवमपूर्वत्वाभावे सिद्धे सर्वनाम्न इत्यनेन तत्साधनं व्यर्थमिति वाच्यम् । दिग्वाचकानां रूढ्या शब्दस्वरूपप्रवृत्तिनिमित्तकत्वे प्रवृत्तिरिति समानायामाकृतौ भाषितपुंस्कत्वमस्तीत्यभिप्रायेण तथाभिधानात् । वस्तुतस्तूपपादितरीत्या व्यवस्थाविषयत्वमस्त्येव । पृथ्वीमध्यस्यावधित्वञ्च रामायणे किष्किन्धाकाण्डे सुग्रीवेण वानरान् प्रति अस्यमागधाधिकस्यैव दिग्विभागस्योक्तेः कल्प्यते । पृथ्वीमध्यञ्च मध्याह्नसूर्यसंयोगिदेशः । न च पूर्वादिष्वपरशब्दस्य पाठो व्यर्थः । परशब्दस्य नञा समासे तदन्तविधिनाऽपरशब्देऽपि सर्वनामकार्यसिद्धेरिति वाच्यम् । एवं तर्हि परापरशब्दयोः समानार्थकत्वव्यवहारापत्तिप्रसङ्गात् । किंतु परशब्दवदपरशब्दस्यापि दिक्कालयोस्तदवच्छिन्ने च रूढिः । अपरशब्दे नञ्समासस्मरणेऽपि अजहत्स्वार्थवृत्त्या परशब्दार्थस्यैवाभिधानम् । तस्मिन् रूढिसद्भावाज्जहत्स्वार्थवृत्तिस्वीकारो न विरुध्यते । अपरे त्वत्र परशब्दस्यानर्थकतया स्वीयसर्वार्थवाचकपरशब्दात्तत्त्वाभावेनैतदुपादानमावश्यकमेवेत्यवधेयम् ।

अन्तरशब्दस्यार्थानाह । * अन्तरमवकाशेत्यादिना * । अवकाशे । राजका-

छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चे' ति

कोशोक्तार्थान्तरव्युदासार्थमाह, अन्तरंबहिर्योगेति । अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसादिषु शीभावेऽपि न स्वयजाद्युदात्तत्वादाविति बोध्यम् ।

न बहुव्रीहौ ॥ चिकीर्षितइत्यध्याहारलभ्य प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम् । नेदं सूत्रं बहुव्रीहेस्तत्त्वनिषेधकं उपसर्जनप्रतिषेधेन सिद्धेः । प्रक्रियावाक्ये इति अलौकिके इत्यर्थः । न चालौकिके समासप्रवृत्तयेकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव समासइव तत्रापि निषेधः सिद्ध इति वाच्यम् । तत्रैकार्थीभावस्यारोपे ऽपि स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावेनातिभवकानित्यत्रैव प्राप्तस्याकचो ऽभावार्थं सञ्ज्ञानिषेधे इत्यत्र तात्पर्यात् । लौकिके तु नास्य प्रवृत्तिस्तत्र समासस्य चिकीर्षितत्वाभावात् । अतिक्रान्त इत्यादिना पूर्वोक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । भाष्यकारस्त्विति । अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयमिति भाष्योक्ते वृत्तिकृद्रीत्येदं व्याख्यानमुक्तमिति भावः । ननु स्मृतिद्वयप्रामाण्याद्विकल्पो ऽस्तु कथं प्रत्याख्यानमत आह । यथोत्तरमिति । एतच्च धिन्विकृण्व्योर चेति सूत्रे भाष्ये ध्वनितम् । एवञ्च वृत्तिकृदुक्तार्थकं नेदम् । तस्मादुपसर्जनप्रतिषेधा-

---

र्थसाधने नियुक्तम्प्रति अन्येन मदीयमिदङ्कार्यान्तरं कर्त्तव्यमित्युक्ते स वदति । सत्यन्तरे भवदीयकार्यान्तरं करिष्यामीति । अवधौ । दिनान्तरे मासान्तरे । परिधाने । अन्तरे शाटकाः । अन्तर्द्धौ मेघान्तरे सूर्य । भेदे रामायणे रावणम्प्रति सीतावाक्ये यदन्तरं वायसवैनतेययोर्यद् तदस्मद्गमयोरपीति । * तादर्थ्ये * । प्रयवन्तरे मया धनमर्जितमिति । छिद्र विवरन्तत्र । अन्तरे शस्त्रम्प्रहर्त्तव्यमिति । आत्मीये यथा । अयं ममात्यन्तममान्तरः । विनार्थं अन्तरेण पौरुषमिदन्न साध्यमित्यत्र । बहिरर्थे । अन्तरे अन्तरा वा चण्डालादिगृहाः । अवसरे मम सेवकान्तरं जानाति । मध्ये । आवयोरन्तरे विष्णुः । अन्तरात्मनि । अन्योन्तरात्मा आनन्दमयः । इत्युपलक्षणम् । तेन सादृश्यस्यापि सङ्ग्रहः । यथा स्थानेऽन्तरतम इत्यत्र ।

* तत्त्वनिषेधकमिति * । सर्वनामसञ्ज्ञानिषेधकमित्यर्थः । * सिद्धेरिति * पदस्याध्याहारं विना सूत्रस्यैवार्थपरता दुर्निर्वचनेत्यध्याहारः । नापहृतव्यूहपरिभाषयाऽलौकिकप्रक्रियावाक्येऽप्यकजभावप्रसङ्ग इत्यत आह । * अकृतव्यूहेति * । एतत्तत्त्वमन्यत्रोक्तम् । * स्वर * । न्यायसिद्धमिति विवृतम् । * प्रत्यङ्गम् * । प्रत्यवयवम् । * ध्वनितमिति * । एवं हि भाष्ये उक्तम् । धिन्विकृण्व्योरधानि

नुवादकम् । यद्वा वार्त्तिककृता तु तस्य कृतत्वात्सूत्रकृतेदमारब्धम् । सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमेव न सूत्रकृदूहितमिति विभाषादिगिति सूत्रे कैयटे स्पष्टम् । सूत्रे सप्तमीनिर्देशः प्रथमार्थएव । अतएव वृत्तिकृदुक्त प्रक्रियावाक्ये निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाच्यस्यपद् लक्षणया साधितः । अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम् । तदनुगुणानामेवेति प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासञ्ज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः । नामपदस्वारस्येन प्राधान्येनेत्यस्य लाभः उपसर्जनीभूतरविशेषणतयैवोपस्थापकमिति तेन तथाहुः । पूर्वादिसङ्ग्रहाय स्वीयसर्वार्थेति । सञ्ज्ञाव्यावृत्तये ऽभिव्यक्तेति न्यायमूलकं प्रसिद्धेतीति भावः । सर्वादिसूत्रस्य वा-

---

कायमकारः श्रूयते । न क्वचिच्छ्रूयते लोपोऽस्य भवति । अतो लोप आर्द्धधातुक इति । यदि न क्वचिच्छ्रूयते किमर्थमयमुच्यते न लोप एवोच्येत । नैवं शक्यम् । लोपे सति गुणः प्रसज्येत । अत्वे पुनः सति अकारलोपस्य स्थानिवद्भावाद् गुणो न भविष्यति । ननु च लोपेऽपि सति रधातुलोप आर्द्धधातुक इति प्रतिषेधो भविष्यति । आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्द्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते स योगः । तस्मिन् प्रत्याख्याते गुणः स्यादेवेत्युक्तम् । अनेन सूत्रमतः प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसम्मतलक्ष्यमेव सूत्रमतेऽपि साध्यमिति ध्वनितमित्यर्थः । एतच्च प्रत्याख्यानविरुद्धफलकसूत्रादार्थकल्पनं वृत्तिकाराणामनुचितमिति सूचितम् । तदाह । *एवञ्चेति * नन्वेवं सूत्रे सप्तमीनिर्देशो विरुध्यतेऽत आह । * सूत्रे इति * । * अत एव * । सप्तम्याः प्रथमार्थत्वादेव । तदनुगुणत्वं विशदयति । * प्राधान्येति * । ननु सर्वार्थवाचकत्वं सर्वविश्वयोरेव न त्वन्येषामत आह । * प्रसिद्धस्वीयेति * अत्र सामानाधिकरण्यं स्वरूपसम्बन्धेन तादृशवाचकत्वधर्मवत्त्वरूपम् । * आवश्यकत्वेनेति * । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयो वाच्य स एवांशतो बाधात्र सम्भवतीत्यत उद्देश्यतावच्छेदकस्य तद्व्यावृत्तत्वसिद्धये तेषामनुकरणमेव नेति भावः । * नामपदस्वारस्येनेति *। अन्यथा सर्वार्थेति वदेत्। * स्वीयसर्वार्थेति * । तत्तत्पदवाच्यसर्वेत्यर्थः । * अभिव्यक्तेतिन्यायमूलकमिति * । उपसूत्रयत्समासः । अभिव्यक्तेतिन्यायस्य यन्मूलं शीघ्रोपस्थितिकत्वं तदेवैतस्यापि मूलम् । अयम्भावः । सञ्ज्ञोपसर्जनप्रतिषेध इति वार्त्तिकारमतेऽप्रसिद्धस्य सञ्ज्ञा न भवतीति सिद्धो अथ वा महतीयं सञ्ज्ञा क्रियते इत्यादिना वार्त्तिकप्रत्याख्यातृभाष्यकारनये वार्त्तिकव्याख्यतया प्रसिद्धन्यायवृत्तिरयमेव

यमर्थः । सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपद्वन्तीति तत्र प्राप्ताप्राप्तविवेकन्यायेन सर्वनामपदवत्त्वांशे एव विधिः सर्वार्थवाचकत्वस्य लोकतः सिद्धेः । एतेनान्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेष्यतया सर्वादीनीत्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात् । रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्व

---

स्वीकार्या । सा च स्वीयस्य प्रसिद्धस्यैवार्थस्य ग्रहणेन भवतीति । यत्तु प्रातिपदिककार्येऽव्यभिचरितोतिन्यायस्य प्रवृत्त्या प्रसिद्धेति लब्धम् । गौणमुख्यन्यायादस्य न्यायस्य भेदेनोपादानात्तस्य पदकार्यविषयत्वेऽप्यस्य न्यायस्य प्रातिपदिककार्यविषयत्वमपि । अत एव संज्ञाभूतत्रिशब्दस्यामि त्रयादेशो नेति । तन्न । अभियुक्तोक्तलोकस्यापूर्वत्वाभावसिद्धान्तात् । अत एवास्य सम्पद्यतेऽमहान्महत् इत्यद्भूततीतिभाष्योक्त्याप्यस्य त्यादेशादीर्घयोरप्युपपत्ति । नापि संज्ञाभूतत्रिशब्दस्यामि परे त्रयादेशस्यापत्ति । संज्ञाया एकद्रव्योपनिवेशिनीत्वात्तत्र आम सम्भवस्यैवाभावात् । न च तादृशत्रिशब्दानामेकशेषेण तत्सम्भव इति वाच्यम् । त्रेस्त्रय इतिसूत्रघटकत्रिशब्दमात्रोच्चारणेन यस्यार्थस्य शीघ्रोपस्थितिस्तदर्थेन त्रित्वसंख्याविशिष्टसंख्येयात्मकेन विशिष्टस्य त्रिशब्दस्य ग्रहणात् । अन्यथा त्रित्रिशब्दावयवत्रिशब्दस्याप्यादेशप्रसङ्गः स्यात्र हि तादृशः संज्ञाभूतत्रिशब्दोऽस्ति । न चैवमपि संज्ञाभूतयुष्मदस्मदोस्त्वाहाद्यादेशापत्तिरिति वाच्यम् । उक्तरीत्या तेषामपि परिहारसम्भवात् । अन्यथा त्वाद्यादेशानां स्वरूपमात्राश्रयत्वेन युष्मद्युपपद इत्यादिसौत्रप्रयोगानुपपत्तिरिति दिक् । * सर्वादीनि तदन्तानि चेति * । येन विधिरितिसूत्रभाष्यपठितप्रयोजनं सर्वनामाव्ययसंज्ञायामिति वार्तिकरीत्येदम् । *एतेन* । महासंज्ञयोपस्थापितयोर्योगार्थरूढ्यर्थयोर्विशिष्टवैशिष्ट्यावगाहियावन्यार्थबोधपरत्या सूत्रार्थवर्णनेन । एकपदोपस्थापितयोरपि विशेषणविशेष्यभावेन शाब्दबोधस्याख्यातोपस्थितिसत्याकारकयोरिवोत्पत्तौ बाधकाभावात् । * अव्युत्पन्नत्वादिति * । उद्देश्यतावच्छेदकरूपेणोद्देश्यस्य ज्ञातरूपसिद्धिं विना विधेयत्वेनाभिमतस्य तत्त्वेनान्वयासम्भवात् । सिद्धं धर्मिणमुद्दिश्य साध्यो विधेय इति न्यायस्य फलत्वादिति भावः ॥ नन्वेकपदोपस्थापितयोः कर्तादिसाधनान्वयो परमते धातौ फलव्यापारयोः पृथक्शक्तिवादिमते उद्देश्यविधेयभावेनान्वयापत्तिवारणाय फलावच्छिन्नव्यापारे शक्तेः स्वीकारात्तस्य मतेऽपि फलत्वात्पृथगुपस्थितयोस्तथान्वय इष्ट एवेत्यत आह । * रूढ्यर्थयोगार्थयोरिति * । यः शब्दः केवलयौगिकस्तत्र पृथगुपस्थितयोरुद्देश्यत्वाविधेयत्वाप्रकारताविशेष्यताविलक्षणविषयताशालिबोधः स्वीक्रियते न तु योगरूढस्थलेऽन्यत्र तथाऽदर्शनादिति भावः । *

न्वयवद्वाग बोद्ध्यम् । एतेन तदाक्षिप्तस्य विशेष्यतेत्यपास्तम् । तद्विनाऽनुपपत्त्यभावेनाक्षेपायोगादाक्षिप्तस्य शाब्देऽन्वये मानाभावाच्च । के चित्तु आवृत्त्या एकस्योद्देश्यता परस्य विधेयतेति वदन्ति । परन्त्वाद्यः पक्ष इतो लघुरिति बोद्ध्यम् । सन्निवेशनादिति । तदनुमानादित्यर्थः । अत्रोपसर्जन

---

स्य धाभावो विधेय । अन्वर्थमत्रोपस्थितस्यार्थस्यान्वयकस्य विशेष्यतायास्ते नापि स्वीकारासयोरसम्बन्धस्य वक्तुमशक्यत्वात् किन्तु योगरूढस्थले योगार्थरूढ्यर्थयोयत्रोपस्थितिस्तत्रा यतरस्य यत्रोद्देश्यत्व तत्रापरस्योद्देश्यतावच्छेदकत्व यत्र वा तदन्यतरस्य विधेयतावच्छेदकत्वमिति नियम फलमस्तस्य भयस्कलिप्तेर वाक्यार्थबाधे स्याग इति भाव । * एतेन * । उक्तनियमस्यागप्रसक्तेन। आक्षेपकमपि नास्तीत्यत आह । *तद्विनेति* । *मानाभावाच्चेति* । पदवृत्त्युपस्थापितार्थस्यैव शाब्देऽन्वयप्रतियोगित्वमिति नियमात् । अत एव प्रविश पिण्डीमित्यादौ वाक्यार्थ वाक्यैकदेशस्य शक्तिर्भोक्त्यमिद्धा तानुसारिभि स्वीक्रियते । * तदनुमानादिति * । सर्वार्थवाचकानुकरणानुमानादित्यर्थ ॥ सर्वादिगणपठितानि सर्वार्थवाचकानुकरणानि । महासंज्ञाऽर्थेभ्य बोधकत्वेन पाणिन्यभिप्रेतत्वात् इति व्यतिरेक्यनुमानस्य सम्भवादिति भाव । एतेन तदनुगुणानां सन्निवेशो ताल्वादिव्यापारस्य हेतु यत्र तु महासंज्ञाकरणस्यैतीवमसङ्गतमित्यपास्तम् । * अत्रोपेति * । संज्ञोपसर्जनप्रतिषेध इतिवार्तिके । ननु लौकिकोपसर्जनस्य वार्त्तिके ग्रहणे तदो स साविति सूत्रस्थभाष्यविरोध । तत्र हि । किमर्थमनन्त्ययोरित्युच्यते । अन्त्ययोर्मा भूत् । नैतदस्ति प्रयोजनम् । अत्वमन्त्ययोर्बाधक भविष्यति । अनवकाशा हि विधयो बाधका भवन्ति । सावकाशमत्वम् । कोऽवकाशः । द्विशब्दः । उदाहरणमात्रमेतत् । अन्यत्र सो सर्व एव त्यदाद्योऽवकाशः । सत्वमपि सावकाशम् । कोऽवकाश । अनन्त्यम् । एवमुभयो सावकाशयो परत्वात्सत्वं प्राप्नोति । किञ्च स्यात् । हे स इति । एङ्ह्रस्वात्सम्बुद्धेरिति सम्बुद्धिलोपो न स्यात् । न चानन्त्ययोरित्युक्तेऽपि त्यदाद्यत्वे सन्निपातपरिभाषया लोपो न स्यात् । परिभाषाया अनित्यत्वात् । इह च या सा इत्यत्र सत्वे टाप्न स्यात् । न वासयोरिति लिङ्गे आश्रीयमाणे अनेकोऽर्थ कल्प्य स्यात् । तस्मादनन्त्ययोरिति वक्तव्यम् वक्तव्यम् एव वक्ष्यामि । तदो स सौ । तत अदस । अदसश्च दकारस्य सो भवति । इदमिदानीं किमर्थं नियमार्थम् । अदस एव दकारस्य नान्यस्य दकारस्येति । यदि नियम क्रियते ढौयतेरप्रत्यय । स इति प्राप्नोति । स्य इति चेष्यते । यथा लक्षणमप्रयुक्ते इति । अत्र त्यदाद्यत्वकरणेन शास्त्रीयस्योपसर्जनस्य ग्रहणम् । लौकिकस्य तस्य वार्तिके ग्रहणे तु भाष्यासङ्गति । स्पष्टैवेति चेन्न । तत्सूत्रभाष्ये नञ्समासस्य पूर्वपदार्थप्राधान्येऽस इत्याद्यत्वमनन्त्ययोरनापत्तिरुक्ता ।

त्वमितरविशेषणत्वेनार्थोपस्थापकत्वम्। तदोः स इति सूत्रे अदस एव दस्य नान्यस्येति नियमन ह्रीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते यथालक्षणमप्रयुक्त इति भाष्यन्तु प्रकृतसूत्रतत्सूत्रस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति न तद्विरोधः।

तृतीया समासे॥ द्वन्द्वे चेति सूत्रस्थाकरोक्तरीत्या न बहुव्रीहाविति सूत्रस्थाकरोक्तरीत्या च प्रथमार्थे सप्तमी, अयमपि समासस्यैव निषेधो नावयवानाम्। समुदायस्येति। अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्ग मुक्तसंशयामिति भाष्योक्त्या प्रकरणविषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशाना प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः। किं चावयवमात्रस्य निषेधे वर्णाश्रमेतराणामित्यत्र सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायसञ्ज्ञायां सुडापत्तिस्तस्य सञ्ज्ञानिषेधे ऽपि सर्वार्थवाचकसर्वादित्वानपायात्। अवयवस्य व्यपदेशिवद्भावेन समुदायस्य च द्वन्द्वे विद्यमानत्वेन निषेधे तु अवयवस्य निषेधे फलाभावः। न च त्वच्छब्दस्य तान्तत्वे काकुचोर्विशेषेण फलम्। द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावात्। समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्य' पृथक्तदनुत्पत्तेः। अन्यथा तव प्रत्येकक्प्रत्ययोत्पत्तिः,अत एवोक्त भाष्ये ऽकज्भि न भवति भिभापाजसीति सूत्रे। समुदायकुत्साविवक्षायामिति तदर्थ। कृताकचा समासस्तु भवत्येव, तत्र सर्वथित्वादनेन विकल्पो भवत्येव। त्वदधरमधुरमधूनि पिवन्त'मिति जयदेवप्रयोगबलेनान्यार्थत्वच्छब्दस्य सत्त्वेपि तस्य सर्वनामत्वे मानाभावात् बहुसंमतत्वाच्च। एतेन न बहुव्रीहाविति तदस्यापि द्वन्द्वे चिकीर्षितइत्यर्थ इत्यपास्त-

शास्त्रीयस्य तस्य ग्रहणे तु पूर्वपदार्थप्राधान्यपक्ष इवोत्तरपदार्थप्राधान्यपक्षेप्य त्ययसत्त्वयोरनापत्त्या तद्भाष्यासङ्गति स्पुटैव। तस्मान्न्यायसिद्धानेकभाष्यविरोधात्तदो स सावितिभाष्यस्यैकदेश्युक्तित्वात्सर्वेतदाह। * तदो स इतीति *। विहितविशेषणाश्रयणेनैव दोषाभावस्योपपादनात्। * विशेषणान्वयाभाववदिति *। एकार्थीभाववशात्। * प्रत्ययम *। केन। एव प्रायः स्यादेवेत्याह। * कृताकचा समासो भवत्येवेति *। तत्र *। साकच्कघटितसमासे। यदुक्तं त्वच्छब्दस्य तान्तसद्भावे तत्र काकचोर्विशेष इति। तद्दूषयति। * त्वदधरेति *। समुदायस्यैव निषेध इत्यर्थस्यापादकप्रमाद। * अस्मादादेश्यादि *। नेन हि निषेधस्य विकल्प शोभाते...

म् । फलाभावात् । जसाधारे शीभावे एव विकल्पविधायकस्य विभाषाजसीत्यस्यासङ्गतेश्चेति भावः । उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपसर्जनसञ्ज्ञाया अप्राप्त्या द्वन्द्वे चेत्यपि न बहुव्रीहावितिवदिति तत्त्वम् । अत एव गोस्त्रियोरितिसूत्रे कुक्कुटमयूर्यावित्यादौ ह्रस्वनिवारणाय द्वन्द्वे चेति वचनमारब्धमिति दिक् । नाकजिति । समुदायनिष्ठकुत्साद्यर्थबोधकोऽकज् नेत्यर्थः ।

प्रथमचरम ॥ अत्र सूत्रे नेति न सम्बध्यते प्रथमादिष्वसंभवात् । जसी-

---

यते । अवयवस्य जसाधारे शीभावे कर्तव्ये तेन निषेधविकल्पः स्यात्तदा तु विषये शीभावप्रसक्त्या तद्वैयर्थ्यं स्पष्टमेव । एवञ्च तस्मिन् सूत्रे द्वन्द्वपदस्य समुदायपरत्वेऽर्थाधिकारानुरोधात्पूर्वसूत्रेऽपि द्वन्द्वपदं समुदायपरमिति भावः । पर्यवसितार्थमाह । * उद्भूतावयवेति * । * न बहुव्रीहावितिवदिति * । अनुवादकमिति शेषः । इतरेतरयोगद्वन्द्वेऽपि समुदायस्य विशेष्यताया साधकमाह । * अत एवेति * । समुदायस्य विशेष्यत्वादेवेत्यर्थः । * सूत्र इति * । तत्सूत्रभाष्य इत्यर्थः । केचित्तु परमसर्वादाविवावयवद्वारकसर्वार्थवाचकत्वस्य द्वन्द्वेऽपि सत्त्वादुपसर्जनत्वाभावो गोस्त्रियोरितिसूत्रस्थवार्तिकं तु तत्रैव द्वन्द्वेऽप्युक्तमित्यादिना भाष्यकृता प्रत्याख्यानादेकदेश्युक्तिः । अत एव विभाषा दिक्समासे इति सूत्रे बहुव्रीहाविति किमर्थं द्वन्द्वे मा भूत् । दक्षिणोत्तरपूर्वाणामिति । नैतदस्ति । द्वन्द्वे चेति प्रतिषेधो भविष्यतीति भाष्ये उक्तम् । एवञ्च न बहुव्रीहावितिवद् द्वन्द्वे चेत्यत्रापि चिकीर्षित इत्यध्याहारेण प्राग्वृत्तेर्निषेधनादकज्न प्रवर्तत इति एकत्रिका इत्यस्य सिद्धिः । अथ वा चिकीर्षित इत्यध्याहाराभावेऽपि इतरेतरयोगेऽवयवस्य प्राधान्यात्समासनक्षाया विद्यमानानीत्यध्याहारेण निषेधो भविष्यतीत्य एतदप्यूहपरिभाषया पूर्वमप्यकजप्रवृत्तिरित्याहुः । अत्रेदं चिन्त्यते । अवयवद्वारकसर्वार्थवाचकत्वादुपसर्जनत्वाभाव इत्यसङ्गतम् । उपसर्जनत्वाभावे विशेषणत्वाभावस्यैव विभक्तित्वाभावस्य वा प्रयोजकता न त्वेतस्य । तादृशाभावश्च प्रकृते नास्ति विशेषणत्वात्, नञ्सूत्रस्थभाष्योपपादितरीत्या समूहस्य प्राधान्यात् । किञ्च द्वन्द्वे चेति वार्तिकं प्रत्याख्यातमिति यत्तदपि भाष्यानवबोधमूलकम् । द्वन्द्वेऽप्युक्तमितिग्रन्थेनान्यथासिद्धेरेवोद्भावनात् । एवं हि भाष्ये उक्तम् । द्वन्द्वेऽप्युक्तम् । किमुक्तम् । परवल्लिङ्गमिति । शब्दशब्दार्थाविति । तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणम्भविष्यति । एवमेव कुक्कुटमयूर्यावित्यत्र परवल्लिङ्गमिति सूत्रभाष्येऽपि ह्रस्वत्वमाशङ्क्य समाहितम् । तत्र कैयटः । शब्दशब्दार्थाविति । लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्चैतन्त्रेणैकशेषेण वोच्यत इत्यर्थः । आतिदेशिकस्य श्रवणमिति तस्या उपसर्जनत्वाभावादन्तस्य चाप्रातिपदिकत्वाद्ध्रस्वाभावादिति । एवं वदता कैयटेनापीतरेतरयोगद्वन्द्वे समूहस्य प्राधान्यं सूचितमेव । भाष्यकृतापि द्वन्द्वे चेतिवार्तिकस्य गोस्त्रियोरितिसूत्रस्थस्य युक्त्याऽऽवश्यकत्वं सूचितञ्च तु तत्र समाहारस्य विशेषणत्वप्रदर्शनेन । अकृतव्यूहप-

त्यमुत्तरार्थाधिकारादयमपि शीभावे एव विकल्पस्तदाह । जसः कार्यं प्रतीति । तयः । सख्याया अवयवे तयबिति । तदन्ता इत्यत्र हेतुरुक्तः । द्वितीयतृतीया द्वेस्तीय', स्त्रे संप्रसारणञ्चेति साधू । अर्थवदिति । प्रतिपदोक्तरूपत्वेऽपि बोध्यम् । तेनाम्नन्ते आद्युदात्तस्य द्वितीयाय भागायेत्येवानभावे तु स्मै भवत्येव ।

जराया ॥ अष्टन इत्यतो विभक्ताविस्यचिर इत्यतो ऽचीति अनुवर्तते तदादिविधिश्चेत्याह । अजादाविति । जरसावित्यादौ तु व्यपदेशिवद्भावेन । विभक्तौ किम् । जराया इदञ्जारम् । प्रतिपत्तिलाघवाय जराया असुङ् न कृतः । पदाङ्गाधिकारे इति । पदमङ्ग विशेष्य विशेषणेन तदन्तविधिरिति भाव. । पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च गृह्यते इति येनविधिरित्यत्राकरे स्पष्टम् । निर्दिश्यमानस्येति । षष्ठी स्थानेयोगेति सूत्रमावर्तते । आवृत्तस्य चायमर्थः । षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न

---

विभाषयेत्यप्यसङ्गतम् । तस्या परिभाषाया अभावस्यान्यत्र प्रपञ्चितत्वादिति दिक् ।

* असम्भवादिति * । निषेधस्य प्राप्तिपूर्वकत्वात्प्रथमादिषु प्राप्तेरेवाभावात् । यद्यपि नेमशब्दे सम्भवोऽस्ति तथापि बहूनामनुरोधो न्याय्य इतिन्यायेन नेति न सम्बध्यत इत्युक्तम् । * हेतुरुक्त इति * । केवलस्य सज्ञाया प्रयोजनाभाव इत्येवरूप । तीयस्य ङित्सूपसङ्ख्यानमितिवार्तिकस्य द्वितीयतृतीयशब्दयो प्रवृत्तिमुपनयायाह । * द्वितीयतृतीयावित्ति * । न्यूनताम्परिहरति । * प्रतिपदोक्तेति * ।

नन्वर्द्धमात्रालाघवानुरोधेनासुङादेश एव कुतो न कृत इत्यत आह । * प्रतिपत्तीति * । असुङिति न्यासे आदेशत्वेनाभिप्रेतस्य स्वरूपस्य ज्ञाने हलन्त्यमुपदेशेजितिसूत्रद्वयस्यापेक्षासत्त्वाद्गौरवमिति भाव । किञ्च जराशब्दाद्वाञ्छसाणिजन्तात्क्विप्यजादौ विभक्तौ स्थानिवद्भावेन जराशब्दत्वादसुङादेशे जसौ जस इतिरूपापत्तिरपि बोध्या । न च णिलोपस्य स्थानियत्वम् । क्वौ लुप्तमिति निषेधात् । परन्त्वस्य वचनस्यासार्वत्रिकत्वानुरोधेन प्रतिपत्तिलाघवायेत्ययाभिहितमित्ययधेयम् । * उत्तरपदाधिकार केवलपदाधिकारश्चेति * । उत्तरपदाधिकारे प्रयोजनमिष्टकेषीकामालानामिति । इष्टकचितम् । पक्केष्टचितमित्यादि । केवलपदाधिकारे । वसुस्रंसुध्वंस्वनडुहान्द । परमानडुद्भ्यामित्यादि । अह्नाधिकारे महान् परममहानित्यादि । षष्ठी स्थानेयोगेति सूत्रे । षष्ठीपद षष्ठ्यन्तपरम

प्रतीयमानमिति तेनेदं सिद्धमिति भावः । नन्वय जरशब्दो न जराशब्द', अत आह, एकदेशेति । स्थानिवत्सूत्रेणेति भावः । जरा इत्युक्तपरिमाणस्य ग्रहात् । अनेन स्थानिवत्सूत्रेण कार्यप्रवृत्त्या निर्दिश्यमानस्येति परिभाषाबाधाभावो बोध्यः । येनविधिस्तदन्तस्येत्यस्य तु सञ्ज्ञासूत्रत्वात् सूत्रस्थजराशब्दो जराशब्दान्तपर इति तदन्ते आदेशप्रवृत्तौ परिभाषाविरोध स्पष्ट एवेति दिक् । निर्जरसेति । अत्र स्वादिष्विति पदत्वेन रुत्वं न । भत्वेन पदत्वबाधात्सूत्रेऽपूत्तरस्यस्य पूर्वत्रापकर्षवत् अग्रे लेखो वैचित्र्यायेति बोध्यम् । पक्षे इति । जरसादेशाभावपक्षे इति भावः । इदमर्वाचामनुरोधेन ।,परे तु विभक्त्यादेशेभ्य. परत्वाजरसित्यसङ्गत विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव जराया इति सूत्रे ऽनतासीत्यत्र नुम्जरसो' प्राप्तयोर्विप्रतिषेधेन जरसिति भाष्योक्तं सङ्गच्छते।। अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरस' प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमा विप्रतिषेध विचारासङ्गति' स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरस' पूर्वं शिभावे प्रवृत्ते तत्सङ्गति. स्पष्टैव । अत एव डाडसीति सूत्रे कैयटेनोक्तं भाष्यकारः सन्नि

---

उच्चार्यमाणमित्यध्याहार एतेन यत्फलितमन्तराह । * षष्ठ्यन्तमित्यादि * । ननु स्थानिवत्सूत्रेण तदनुवृत्तावपि कथन्निर्दिश्यमानत्वमत आह । * अनेनेति * । तस्मिन्सूत्रे आदेशग्रहणेनानुमानिकादेशस्यापि तत्र ग्रहणात्तत्र निर्दिश्यमानपरिभाषाप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेवेति । एकदेशविकृतन्यायस्य लौकिकत्वाल्लोके चाक्तपरिमाणार्थवाचकस्य न्यूनाधिकयोरप्रवृत्तेरतिदेशद्वारेण तत्त्वमेवातिदिश्यते । एतावन्मात्रमपि पुरुषारम्भोऽनियर्तक इति भाष्योक्तेः । न च जराशब्देन तदन्तोपस्थितावपि न कथन्तात्प्रवृत्तिरिति वाच्यम् । सञ्ज्ञाशब्दानामेव स्वभावो यथाप्रदर्शाकृत्यवच्छिन्नस्य तथा इना तादृशाकृत्यवच्छिन्नोपस्थापकत्वमेवेत्याशयात् । न च सञ्ज्ञाशब्दविषयेऽपि चेन्निर्दिश्यमानपरिभाषाप्रवृत्तिस्तदाऽस्य च्छ्वाविति सूत्रस्य मालीभवतीत्यादौ प्रवृत्तिन स्यात् । अणुदित्सूत्रेणाकारस्य सवर्णबोधनाद्दीर्घस्यानिर्दिश्यमानत्वादिति वाच्यम् । न भ्रूसुधियोरिति ज्ञापकेन ग्रहणकशास्त्रगृहीतानामपि निर्दिश्यमानकार्यबोधनात् । * वैचित्र्यायेति * इदमेव चात्र वैचित्र्य यस्य शास्त्रस्य यत्रोपयोगस्तस्य तत्रैव लेख इति नियमाभाव इति । सिद्धान्तमाह । * इदमिति * । परत्वाज्जरसितिकथनम् । * अत एव * । पूर्वविप्रतिषेधस्येष्टत्वादेव । कैयटस्याऽप्यत्र सम्मतिमाह, * अत एवेति * । उक्तव्यवस्थाप्रदर्शनार्थं । तत्र हि भाष्यकृता नादेशोऽप्यादेशश्चास्त्विति लाघवमभिप्रेत्योक्तम् । कैयटश्च तद्भाष्य व्याख्यायाह । अन्ये त्वतिजरसिनातिजरसानिति सिद्धये इन आच्च विहितावित्याहुः सन्निपातपरिभाषाया अनित्यत्वा-

पतिपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं न त्वतिजरसिनातिजरसादिति गौरवमुद्भावितवानिति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे च तस्याप्राप्त्या सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नित्यस्यासङ्गतिः स्पष्टैव । वृत्तिकारोप्याह । अतिजरसिन अतिजरसादिति के चिदिच्छन्ति यथा तु भाष्यं तथा नैतदिष्यतइति लभ्यतइति, नपुंसकद्वितीयैकवचने ऽपि लुग्बाधेनातोमित्यमि सन्निपातपरिभाषया जरसभावः । न च तत्र नाऽकारान्तसन्निपातकृत एवाजादिः किं तु तदभावेऽपि । एषा तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति अत्र भवत्येव जरासिति वाच्यम्, मानाभावात् । टाङसीति सूत्रस्थेनातिजरेणेत्येतद्विषयकैयटेन विरोधाच्च । ध्वनितश्चेद जराया इति सूत्रे भाष्ये । तत्र हि पूर्वपक्षिणा अतिजरस पश्येत्यत्र लुङ् कस्मान्नेति पृष्टे परेण प्रथमैकवचनेष्यतिजरसन्तिष्ठतीत्यत्रापि कुतो लुङ् न भवते इति पृष्टे पूर्वपक्षिणा प्रथमैकवचने ऽम्भावोत्तरमेव जरस् तत्र जरसि कृते सन्निपातपरिभाषया न जरमिति पाठभेदेन विनैव उक्त्वा परेण यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति जरासिति द्वितीयैकवचनादौ इष्टिते सिद्धान्तिना इष्टमेवैतदतिजरैमतिजरैरिति भवितव्यमिति । अत्र विशेषोपादाने ऽल्पपाठ एव युक्तः । अन्यथा लुकः प्रथमैकवचने सैनाभावे उपपादिते द्वितीयैकवचनेऽपि तेन न्यायेन लुको ऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोध्यम् । एव क्षिपाञ्जरसादेशे कृते याडाप इत्यादीनामाकारप्रश्लेषणं विफलमेव तेषां

---

ङजरसादेश यदन्त । भाष्यकारस्तु सन्निपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यमिति मत्वा गौरवमुद्भावितवानिति । * गौरवमुद्भावितवानिति । * गौरवमिति * । इत्यादीनां बाध्यत्वमित्यादिः । जर स प्रवृत्तिः प्रवृत्तिस्तरसमतिमप्याह । * वृत्तिकार इति * । अत्र केचिदिष्टरुचया न्यस्य तत्रापरितोषो व्यज्यते । तदेव स्पष्टयति । * यथा [illegible] भाष्यमिति * । * लुग्बाधेनेति * । अस्य विशेषविहितादेशत्वात् । * एषा तु * । सन्निपातपरिभाषा तु । * न प्रवृत्तियोग्यतेति * । यथा प्रथमैकवचनेऽतिजर गन्तत इत्यत्र । * मानाभावादिति * । तादृशविशेषविधानमानाभावादित्यर्थः । अतोऽर्थे कैयटस्यापि सम्मतिमाह । * टाङसीति * । सर्वत्र भाष्यसम्मतिमप्याह । * ध्वनितश्चेति * । अत्र तत्र दीर्घस्योच्चारणमप्रमाणम् । * इति भवितव्यमिति * । एतेन विशेषपदेन पर सन्निपातपरिभाषया जरसादेशाभाव इति ध्वनितम् । * तथाप्यप्रामिति * । याडाप इत्यादीनामित्यर्थः ।

परत्वात् । अतिजरसशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः । परे तु जरसादेशात् विभक्तिसम्बन्धिकार्यमात्र पूर्वविप्रतिषेधेन तेन जराणामित्यादावापि पूर्वं नुटि जरसो ऽभाव एव । एवं ह्रस्वनद्याप इत्यत्राकारप्रश्लेषे न फलं नापि मानम् । अत एव ङ्याब्ग्रहणे ऽदीर्घ इति वत् जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्तिककृतानारब्ध इत्याहुः । परिभाषाया अनित्यत्वमिति । इनातोरिकारदीर्घोच्चारणमेसि कर्तव्ये ऐस्करणञ्च तदनित्यत्वे मूलमिति तदाभिमानः । षष्ठ्येकवचने इति । एकसूत्रोपात्तत्वात्स्थादेशविषये ऽपि पूर्वविप्रतिषेध इति तद्भाव. । एतच्च भाष्येति । इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः । इष्टमेव तत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्यमिति जराया इति सूत्रस्थभाष्येऽपीति चार्थ इत्यन्यत्र विस्तरः ॥

पद्दन्नो ॥ आदेशैः स्थानुरूपा. स्थानिन आक्षिप्यन्ते इत्याह । पाद-

---

विभक्त्यादेशविषये पूर्वविप्रतिषेधाश्रयणेऽप्याकारप्रश्लेषस्य न वैयर्थ्यमित्याशयेनाह । * अतीति * परमसिद्धान्तमाह । * परे त्विति * । * विभक्तिसम्बन्धिकार्यमात्रमिति * । अत्र सम्बन्धीत्युपादानादादेश एव पूर्वविप्रतिषेध इत्येतन्नेति बोधितम् । * अत एव * । विभक्तिसम्बन्धिकार्यमात्रस्य पूर्वविप्रतिषेधे न प्रवृत्ते पूर्वमित्यादेव । * अदीर्घ इतिवदिति * । अत्र वैपरीत्य दृष्टान्त । अय यथाऽरब्धस्तथा जरसादेशस्य स्थानिवत्त्वप्रतिषेधो नारब्ध इत्यर्थ । * तदभिमान इति * । इकारोच्चारण जरसादेश कृतेऽपीकारश्रवणार्थम् । नन्नु सन्निपातपरिभाषाया अनित्यत्वास्वीकार विना वक्तुमशक्यमिति तद्भाव । भाष्यां तरमाह । * इष्टमेवैतदिति * । एतेनैस्करणस्य परिभाषाया अनित्यत्वे ज्ञापकमिति यत्केनचिदुक्त तन्निरस्तम् । मतौरित्युत्तरार्थन्तत्सत्त्वात्त ।

प्राचीनै पद्दन्न इतिसूत्रस्यादेशविधायकत्वेन व्याख्यानक्लृप्तन्तदनुरोधेन व्याचष्टे । * आदेशैरिति * । स्थानुरूपा स्वसदृशा । सादृश्यञ्चात्र वर्णतोऽर्थत श्च विवक्षितम् । वर्णत इत्युक्तेश्चरणशब्दस्य न पदादेशः । न च पदादेशस्य वैकल्पिकतया पदा चरणेनेतिरूपद्वयमिष्टमेवेति वर्णत इत्युक्तिविफलेति वाच्यम् । स्वपा प्राङ्मकारादित्यधिकारपठितेन स्वाङ्गानामकुचादिनामितिसूत्रेण कवर्गरेफवकारांश्च वर्जयित्वा द्व्यचां स्वाङ्गानां द्वितीयमुदात्तमित्यर्थकेन चरणशब्दस्य मध्योदात्ततया शेषनिघातेनानुदात्तादित्वस्यानुदात्तत्वस्य च सत्त्वेन विनिगमनाविरहात्तत्तत्क्रमकृतसादृश्यस्यापि परिग्रहात्कदाचित्पदेत्यादिशब्दघटके पद्दूवे ऽनुदात्तादित्वानुदात्तत्वस्यापि प्राप्त्याऽनुदात्तादेः पदेति प्रयोगस्यापत्तिरित्याशयात् । अर्थत इत्युक्ते श्लोकपादवाचकस्यादेशाभाव इ

न्तेति । अनुदात्तस्य चर्दुपधस्येत्यतो ऽन्यतरस्यामित्यनुवर्त्तते । अत एव तुल्यास्यसूत्रादिभाष्ये आस्ये तुल्यः पादेनोपहृत मासेन पूर्वायेत्यादिप्रयोगा हृदयस्य प्रिय इति सौत्रप्रयोगाश्चोपपन्ना भवन्ति ये च तद्धिते इति सूत्रस्थे वाकेशेष्विति वार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासंबन्धबोधकम् । यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन भागुरिमतसिद्धतया वैकल्पिकत्वेन च वाकाचेत्युभयत्रापिनिश्शयोः सूत्रे निश्ग्रहण विनापि सिद्धिस्तथापि सुटि हलन्तस्यासाधुत्वबोधनायात्र ग्रहणमिति वृत्त्यनुसारिणः । परे तु अनुदात्तस्येति सूत्रे ऽन्यतरस्यामित्यस्य स्वरितत्व नास्ति । अत एव शीर्षंछन्दसीति सूत्रे शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरस्शब्दस्य प्रयोगो न स्यादित्युक्तं भाष्ये । अन्यथा विकल्पानुवृत्त्यादेशत्वेपि दोषाभावेन तदसङ्गतिः स्पष्टैव । येचतद्धितइत्यत्र चादेशत्वाय शिरसो ग्रहण कर्तव्यमित्युक्त, वाकेशेष्विति च वक्तव्यमित्युक्त, तस्माच्छसा

---

ति । * अत एव * । अन्यतरस्यामित्यनुवृत्तेरेव । * उपपन्नो भवतीति । * आदेशानाश्रियत्वे तु आस्येनेत्यादिप्रयोगाणामनुपपत्तिरिति भाव । नन्वनुदात्तस्येति सूत्रस्थान्यतरस्यामितिशब्दस्य चेत्स्वरितत्वेनानुवृत्तिस्तदा ये च तद्धित इतिसूत्रेपि तत्सम्बन्ध स्यादेव सति तत्सूत्रस्थवार्त्तिकस्यापि वैकल्पिकत्व सिद्धमेवेति वा कशेष्वित्यत्र वाग्रहणवैयर्थ्यापत्तिरत आह । * ये चेति * । * तत्र सूत्रे * । ये चेति सूत्रे । * वाग्रहणासम्बन्धेति * । वार्थार्थकान्यतरस्यामित्यस्यासम्बन्धेत्यर्थ । * निश्निश्योरिति * । शब्दस्वरूपपरत्वाद्विरूपत्वेपि समानार्थत्वाभावादेकशेषाभाव । * वृत्त्यनुसारिण इति * । एतन्मते पद्दन् इतिसूत्रवद्येचतद्धित इतिसूत्रस्याप्यादेशविधायकतया तत्रैवात्रापि प्रकृतिविशेषाक्षेपेणैव सिद्धे शिरस्शब्दस्य ग्रहणञ्च कार्यमिति लाघवम । नसाम् पृतामित्यादौ तुडादेस्तु भाभावितिप्रश्लेषेण न प्राप्तिरिति वदन्त । भाष्यानुसारिमतमाह । * परे त्विति * । * अत एव * । अन्यतरस्यामित्यस्यास्वरितत्वादेव । * इत्युक्तमिति * । यदि त्वादेशविकल्पोऽन्यतरस्यामित्येतत्सम्बन्धेन स्यात्तदा शीर्षादेशाभावे शिरस्शब्दस्य प्रयोग सिद्धएवेति प्रकृत्यन्तरकथन व्यर्थमेव स्यात् । शिरो मे श्रीर्यते सुखम् । स्वन्ते शिरोभिनत्ति । तद्वा अथर्वण शिर इति । शिरसो ग्रहण कर्त्तव्यमिति । तदुक्तम्भाष्ये । ये च तद्धित इत्यत्र शिरसो ग्रहण कर्त्तव्यम् । किम्प्रयोजनम् । आदेशार्थम् । आदेशो यथा ,शिर्षायेत । प्रकृत्यन्तरम्मा विज्ञायि । किञ्च स्यात् । यकारादौ तद्धिते ऽस्कारान्तस्य श्रवणम्प्रसज्येत । शीर्षण्यो हि मुख्यो भवति । शीर्षण्य स्वर इति । ननु शीर्षञ्छन्दसीतिसूत्रस्थ

द्विविषयाणि प्रकृत्यन्तराण्येव पदादयः । एवं मांस्पृत्स्नत्रोपि । अत एव नस्पृतोः स्थानिवद्भावाद्दाबन्तत्वमादाय नसां पृतामित्यादौ न नुडादिः । नासिकाया नस् यतस्क्षुद्रेष्विति वार्तिके आदेशत्वमेव । नासिकाया इत्युक्तेः । अत एव तद्विषये नासिकाक्षुद्र इत्यादि न । अत एव पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति वार्त्तिके स्थानिनिर्देशो न कृत इत्याहुः । प्रत्याहार इति । व्याख्यानादौटष्टकारेणेति भावः ।

अक्लीबस्येति । पर्युदासपरतया ऽस्यस्य भाष्ये व्याख्यानात् । लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्यानेऽत एव ज्ञापकात्केषांचिदसमर्थसमासानां साधुत्वं बोध्यम् ।

स्वादिषु ॥ सुरत्र प्रथमैकवचनम् आदिग्रहणेन कबन्तानहग्रहणं व्याख्यानात् तदाह । कप्प्रत्ययावधीति । तदन्तेष्वित्यर्थः ।

---

दीर्घेष्विति प्रकृत्य तरमादेशो मा विज्ञायीतिवार्तिकमनुपपन्नं स्थानिनिर्देशाभावेनादेशाप्रसक्तेरिति चेदत्र कैयटः । यद्यपि शिरस इति स्थानी साक्षान्न निर्दिष्टस्तथापि, समानार्थत्वादादेशोनाक्षिप्येत । यद्यपि पूर्वसूत्रादन्यतरस्याग्रहणानुवृत्त्या इष्टसिद्धिर्भवति । तथाप्युत्तरत्रानुवृत्तिराशङ्क्येतेति तत्परित्यागेन प्रकृत्य तरपक्षो निर्दोष आश्रित इति । एतेन पद्दन्नादिसूत्रेऽपि प्रकृत्यन्तरत्वमेव द्रष्टव्यम् । अत एव तत्र भाष्ये पादादीनामिति वक्तव्यमिति नोक्तम् । * उत्तरत्र * । येष्वत क्षित इत्यत्र । * निर्दोष इति * । छन्दसि सर्वविधीनां वैकल्पिकत्वमिति स्वगतिकगतिरिति भावः । केशेषु वाच्येष्वस्कारान्तस्यापि प्रयोग इष्ट इत्यभिप्रायेणाह । * वाकेशेष्विति चेति * । * अत एव * । प्रकृत्यन्तरत्वादेव । * अत एव * । तद्विषये प्रकृत्यन्तरत्वस्यानिष्टत्वादेव ।

* सुडनपुंसकस्येति * सुडिति नागमग्रहणम् । सर्वनामस्थाने चासम्बुद्धाविति सूत्रेऽसम्बुद्धाविति विशेषणात् । आगमग्रहणे तु तदवर्थं स्यात् । टाटकारेण प्रत्याहार इत्यपि न । औटष्टित्वसामर्थ्यादित्याशयेनाह । * व्याख्यानादिति * । लघुत्वात् । * अत एव ज्ञापकादिति * । अनपुंसकस्येति निर्देशरूपादित्यर्थः । वाक्यभेदाभावेन लघुत्वात् । * केषांचिदिति * । अश्राद्धभोजी ब्राह्मणः । अलवणभोजी ब्राह्मण इत्यादेः ।

स्वादिष्विति सूत्रे स्वादिष्वितिपदेन न सप्तमीबहुवचनादेर्ग्रहणम् । असर्वनामस्थानग्रहणादित्याशयेनाह । * सुरत्रेति * । अत्र सूत्रे सुपीत्यनेनापि सुप्मात्रग्रहणे सिद्धे आदिग्रहणं व्यर्थं स्वादित्यादिग्रहणसामर्थ्यादन्येषामपि प्रत्ययानां ग्रहणम् । ते च प्रत्ययाधिकारपठिताः । तेष्ववधिरेवमाकाङ्क्षायां पाठस्य कप्प्रत्ययस्यैवावधित्वमित्याशयेनाह । * व्याख्यानादिति * । कप्प्रत्ययस्यावधित्वेन निर्देशो वर्तते यत्तल्लिङ्गतस्तदाह । * तदन्तेष्वित्यर्थ इति * ।

यचि भम् । समाहारद्वन्द्वे सौत्रत्वान्न टच् । यचीत्यनेन स्वादेर्विशेषणात्तदादिविधिः असर्वनामेति । तेन सुपादावित्यादौ पादः पत् । भसञ्ज्ञा पदत्वकार्यप्रतिबन्धरूपे ऽशास्त्रीयेपि कार्ये भवति, न पदान्तसूत्रस्थभाष्यप्रामाण्यात् ।

आकडारा ॥ आकडारादिति नावधिः तत्पुरुषो द्विगुश्चेति लिङ्गात्समावेशार्थं हि तदित्याह । कडारा इत्यादि । व्याप्त्यर्थकाङा आचार्यादिति वक्तुं युक्तम् । एकैवेति । सङ्ख्यावाच्येकशब्दोपादानादवधारण सम्पद्यतइ भाव' । या परेति द्वयोः सावकाशयोः परा निरवकाशत्वे तु सैवेत्यर्थः । आभ्यामेव बाधसिद्धिस्तु-न, अन्यत्र तव्यदादौ कृतकृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाभावात् । विप्रतिषेधाप्रवृत्तेः । लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषये ऽदर्शनेन शास्त्रेपि सञ्ज्ञाविषये ऽप्रवृत्तेश्च तेनेति । अनवकाशत्वेनेत्यर्थः । परोदाहरणन्त्वपादानमुत्तराणि कारकाणि बाधन्त-

---

* तेन * । यचि भमितिसूत्रे ऽसर्वनामस्थानपदसम्बन्धेन । * अशास्त्रीयेऽपीति * । भपदसञ्ज्ञयोराकडारीयतया येन नाप्राप्तिन्यायेन यचिभमितिशास्त्रस्य स्वादिष्वितिसूत्रबाधकत्वे सिद्धे बाध्यस्य बाधकशास्त्रविषयाविषयत्वं कल्प्यते । एतेनाशास्त्रीयस्यापि फलस्य सिद्धिः । * भाष्यप्रामाण्यादिति * । तत्र हि वेतस्वानित्यत्र कुमुदनडवेतसेभ्य इति ड्मतुपि ढिलोपे तसौ मत्वर्थे इतिसूत्रविहिता भसञ्ज्ञा सान्तनिष्ठपदत्वप्रतिबन्धद्वारा रुत्वाभावार्था भवतीत्युक्तम् । * वक्तुं युक्तमिति * । अपदगौरवं स्यात् । मात्रालाघवेनेति परिभाषा प्रायः पदगौरवविषये नाश्रीयत इति ज्ञापयितुमिति शेषः । * सङ्ख्यावाच्येकशब्दोपादानादिति * । अर्थात्तस्योपकस्यानुपयोगादिति भावः । * अवधारण सम्पद्यत इति * स ह्यत्र यदि स्यात्तदाप्येकत्वस्य प्रत्येकपर्यवसितयैका सञ्ज्ञा ज्ञातैवेति तदुपादान सामर्थ्याद्वधारणलाभः । * द्वयोः सावकाशयोः परेति * । यथा धनुषा विध्यतीत्यत्र परत्वादपादानसञ्ज्ञाबाधिका करणसञ्ज्ञा । निरवकाशत्वे सैव । यथा हसादौ यचिभमित्यनेन पदसञ्ज्ञाबाधिका भसञ्ज्ञा । क्वचिदनेयमेव असञ्ज्ञाबाधिका पदसञ्ज्ञा । यथा भवदीय इत्यत्र भवतष्ठक्छसाविति छसि सितीति पदत्वम् । एतेन सञ्ज्ञानामपि बाध्यबाधकभावेऽन्यत्र बाधकत्वे प्रसिद्धे यस्मिन् निमित्ते निमित्तमाकडारीयसञ्ज्ञाविषयेऽप्याश्रीयत इति दर्शितम् ज्ञाकभाष्यात् । * अदर्शनेनेति * । यथा तत्तन्नक्षत्रजातत्वेन नाक्षत्रनाम्न्यामपि देवदत्तादिसञ्ज्ञा क्रियते । * अपादानमिति * । कर्मपदम् । कारकाणीति कर्तृरूपम् । * विरोधाभावेन * । सञ्ज्ञानां स्वरूपतोविरोधाभावेन । तेन फलद्वारा विरोधसद्भावेऽपि न हानिः । विरोधादित्यादिना ।

इत्याद्याकरे स्पष्टम्। विरोधाभावेन विप्रतिषेधसूत्राप्रवृत्तावपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयात्रापि तेन व्यवस्था। अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः पर्यायापत्तिर्दोषः। भपदसञ्ज्ञयोः समावेशे तु राज्ञ इत्यादौ नलोपाद्यापत्तिर्बोध्या। न च राजन्य इत्यादौ सुप्तिङन्तमिति पदत्वं दुर्वारम्। परया तु न बाधस्तस्या अन्तरङ्गत्वादिति वाच्यम्। समानाधिकाया अन्तरङ्गया अप्यनया बाह्यसामान्यचिन्तया ऽपवादत्वेनैव बाधादित्याहुः। आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यदग्यङ्गसम्बन्धे निरूपयिष्यते। भपदसञ्ज्ञाविधावङ्गप्रकरणे भस्येत्यस्य पाठनादङ्गमित्यनुवर्त्याङ्गसंस्पदकमवाप्ति भं भवतीत्यर्थेन ताभ्यान्तस्य समावेश एव न पर्याय इति बोध्यम्। पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि णलुत्तमो वेति ज्ञापकात्समावे-

---

श्य सामान्यविशेषभावस्यपरिग्रहः। *तेन*। परत्वेन। *अन्तरङ्गत्वादिति*। पूर्वोपस्थितनिमित्तकत्वरूपत्वादि। *बाह्यसामान्यचिन्तेति*। राजन्यपदुवचनह इति सौत्रनिर्देशश्चात्र मानम्। नत्वाकडारीयसञ्ज्ञाविषये परत्वेन व्यवस्था इति पक्षस्य कार्यकालपक्षे घटते। उभयोरपि कार्यरूपैकदेशस्यत्वादत आह। *आकडारस्येति*। न च यथेयावाङ्गमात्रयापि समावेशो न स्यादत आह। *भपदसञ्ज्ञाविधाविति*। *इत्यर्थनेति*। एतेनाङ्गाधिकारे भस्येत्यस्य पाठेनाङ्गसञ्ज्ञया भपदसञ्ज्ञया पर्यायो भवत्विति अपास्तम्। अन्यत्रापि समावेशमुपपादयति। *पुरुषसञ्ज्ञेत्यादिना*। ननु पुरुषसञ्ज्ञा परस्मैपदसञ्ज्ञा णलयोर्णलुत्तमो वेति ज्ञापकेन समावेशोपपादनेऽपि पुरुषसञ्ज्ञात्मनेपदसञ्ज्ञयोः समावेशो नोपपद्यते। न च तङानावात्मनेपदमिति सूत्रेण तङ आत्मनेपदसञ्ज्ञाविधानसामर्थ्यात्समावेशो भविष्यतीति वाच्यम्। पर्यायत्वसम्पादनेनापि चारितार्थ्यसम्भवादिति चेन्न। प्रथममध्यमोत्तमसञ्ज्ञायामात्मनेपदग्रहणं कर्तव्यमिति वार्त्तिके न समाधानात्। एतेनात्मनेपदग्रहणेनोभयो समावेश उपपादनीय इत्युक्तम्। न चात्मनेपदग्रहणे आत्मनेपदस्यैव पुरुषसञ्ज्ञा स्यान्न परस्मैपदानामिति वाच्यम्। आत्मनेपदग्रहणम्पृथक् कर्तव्यमित्यभिप्रायात्। एवं सति वाक्यभेदो भविष्यति। पूर्वसूत्रञ्च परस्मैपदविषयकमेव। तथ च णलुत्तमो वेति सूत्रमेव सामान्यापेक्षज्ञापकमाश्रीयते। प्रथमादिसञ्ज्ञा एतत्प्रकरणस्थसञ्ज्ञान्तराणां बाधिका न भवन्तीति ज्ञापकस्य विशेषापेक्षत्वे उत्तमसञ्ज्ञया समावेशोपपादनेऽपि प्रथममध्यमसञ्ज्ञाभ्यां समावेशो न स्यात्। *एकदेशविकृतन्यायेनेति*। स्थानिवद्भावेनेत्यर्थः। न तु लौकिकस्यैकदेशविकृतन्यायस्यात्र प्रवृत्तिरङ्गाधिकविकारात्। *आपस्येति*। अत्रानुवृत्तिर्न समुदायस्य किन्तु पूर्वविधावित्यस्य तत्र परस्मिन्नित्यस्य पूर्ववाक्यस्थस्य तत्रानुवृत्त्यैव वाक्यार्थपर्यवसानसम्भ

शः। गुरुलघुसञ्ज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशत उभे अपि वर्णस्येति पक्ष आकरे उपलभ्यमानोप्येकदेशिन एव, समावेशानुपपादनादिति दिक्। यलोपइति। हलि सर्वेषामित्यनेनेत्यर्थः।

अल्लोपो ऽनः। तपरकरणं किम्। अनितः क्विप्यान इत्यादौ लोपाभावायानन्त्वन्तत्रैकदेशविकृतन्यायेनेत्यन्यत्र विस्तरः। पूर्वस्मादिति। अचः परस्मिन्नित्यत्र पूर्वविधावित्यस्यावृत्त्या पञ्चमीसमासाश्रयणादयमर्थो लभ्यते इति भावः। तेन प्रत्यैपिपन्नित्यादिसिद्धिः, अन्यथा जम् स्यात्। अत एवोभेअभ्यस्तमिति सूत्रे उभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थं, ऐर्त्सन् इत्यत्राभ्यस्तलक्षणो जुस्माभूदिति उक्ते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं सहार्थमित्युक्तन्तेन उभे यत्र श्रूयेते इत्यर्थेऽपि प्रत्यैपिपन्निति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं सहार्थमिति तद्भावः। इति पक्षे स्विति। तुनास्यानित्यत्वं सूचितम्। प्रविगणय्येति भाष्योदाहरणमपि तदनित्यत्वे एव सङ्गच्छते। अत एव हे गौरीत्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः। पूर्वस्मान्निमित्तत्वेनाश्रितादिति व्याख्याने तु न मानम्। केचित्तु

---

यात्। * प्रत्यैपिपन्निति *। प्रीणातीत्यत्र प्राग्लिङ्स्यैकारात्मकधातोः सन्नन्तस्य रूपम्। अत्र शपैकादेशस्य स्थानिवत्त्वान्न जुम्। * अत एव *। पञ्चमीसमासाश्रयणादेव। * इत्युक्तमिति *। सिद्धान्तिनेत्यादि। * तेन *। उभेग्रहणेन। * इत्यर्थेपि *। इत्यर्थे स्वीकृतेपि। * तत्सिद्धौ *। ऐर्त्सन्नित्यस्य सिद्धौ। * अनित्यत्व सूचितमिति *। निष्ठायां सेटीति सूत्रे सेड्ग्रहणात्। तद्धि कारितमित्यादाविटि कृते एव णिलोपो न तु ततः प्रागित्यर्थम्। अन्यथा ण्यन्तान्निष्ठाया असम्भवेनानिटि णिलोपो माभूदित्येतत्तात्पर्यकत्वे तस्य वैयर्थ्यापत्ते। इटि कृते एवेत्यवधारणफलन्तु यदीट् प्राङ्णिलोपः स्यात्तदानुदात्तादेकाच इत्यस्य परत्वादिटो निषेधः स्यात्स माभूदिति। अयञ्च पञ्चमीसमासस्यानित्यत्वाभावे जातेऽपि णिलोपे पञ्चमीसमासेन वारयितुं शक्यत इति कालावधारणवैयर्थ्यं स्पष्टमेव। न च ज्ञपः सनीव तेवीड्विकल्पात्तनो निष्ठाया यस्य विभाषेतिसूत्रेणेण्निषेधादस्ति सम्भव इति वाच्यम्। दरिद्रित इत्येतत्सिद्धये यस्यविभाषेतिसूत्रे एकाच इत्यनुवृत्ते। अनित्यत्वे ज्ञापकान्तरमप्याह। * प्रविगणय्येतीति *। अत्रादन्ताच्चुरादेर्गणधातो ल्यप्रत्यये समासे ल्यपि ल्यपिलघुपूर्वादितिणेरयादेशः पञ्चमीसमासस्य नित्यत्वे न स्यात्। अपिना पूर्वोक्तज्ञापकसमुच्चयः। * अत एव *। अनित्यत्वादेव। * न मानमिति *। वाच्यवृत्त्या तादृशार्थालाभात्। यत्तु प्रविगणय्येतिभाष्योदाहरणे लघुपूर्वत्वव्यपदेशिवद्भावे

पूर्वस्मादव्यवहितपरस्य कार्यमेव स्थानिवत्त्व, प्रथिगणय्येत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष तदनित्यत्वे न मानमित्याहु.। पूर्वत्रासिद्धेनेति। अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोयम्। तत्फल त्वतिदेशान्तराणां वतिघटितानान्त्रिपाद्या प्रवृत्तिरोधनम्। अत एवामी क्षीरपेणेत्यादौ मीत्वणत्वे भवत'। अनैकारस्यादस्संबन्धित्व पे इत्यस्यैकाजुत्तरपदस्त्वस्वान्तवद्भावाधीनम्। तस्य दोष इति। इद वाचनिकमेव नमुनेइति सूत्रे नेति योगविभागस्तु भाष्ये न दृश्यते। अत एव सिद्धकाण्डे वार्तिककृतारब्ध न लोप. सुपीति सूत्रञ्च सूत्रकृता। प्रकारार्थमिति। प्रकार' सादृश्य तच्च सुप्त्वेन मास्पचनीत्यादावपि नलुमतेति निषेधानित्यत्वाच्छमादिपरत्व बोध्यम्। शब्दत्वेन सादृश्यमित्यन्ये। तन्न। वाशोकव्यप्रोगेष्वित्यस्य वैयर्थ्यापत्तेः। नासिकायास्तत्क्षुद्रेपुनसिति भाष्यपठितवार्तिकस्य वैयर्थ्यापत्तेश्च। आसन्य प्राणमूचुरित्यत्रापि तद्वदेव शसादिपरत्वम्। अत्र सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्वित्युक्त्या ऽन्यत्र क चिदेव प्रवृत्तिर्बोध्यते। अत एव पद्दन्निशाङ्ग्रहण चरितार्थम्। तेषा द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यं स्पष्टमेव। प्रकारार्थत्वे प्रमाणमाह। भाष्ये इति। तत्र हि शस्प्रभृतिष्वित्युच्यते शस्प्र-

---

न णौ जातस्य लोपस्य स्थानिवद्भावे सति तस्याकारस्यैवेति तत पदस्यावल्यादेशो भविष्यत्यतोऽनित्यत्वफलश्चिन्त्यमिति। तन्न। प्रादिविषयत्वेन विधिपूर्वाल्वादाख्यानणिज तात् एकाप्रत्यये प्रशब्देन समासे पञ्चमीसमासानित्यत्वपक्षे लघुपूर्वपरत्वाभावात्। परस्थानस्वनति। यस्य स्थानिवद्भावस्तस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वप्रकृते वक्तुमशक्यमुकारस्य दीर्घत्वादित्याशयात्। * मूलेऽड्व्यवाय इत्येवेति*। अव्यवधानामावेन रषाभ्यामितिसूत्रेण न किन्तु रषाभ्यामित्यनुवर्तमानेऽट्कुप्वितिसूत्रेण। न च रषाभ्यामितिसूत्रे षग्रहणस्यैव सति वैयर्थ्यमिति वाच्यम्। पुष्णातीत्यत्र चारितार्थ्यात्। यत्तु तस्यदोषइतिवचनमपि नमुनेइतिसूत्रफलस्ययोगविभागाल्लब्धमिति तन्नेति दूषयति। * न मुन इतीति *। * अत एव *। योगविभागस्य भाष्यासम्मतत्वादेव। * सिद्धकाण्डम् *। सिज्लोप एकादेश इत्यादि। *वैयर्थ्यापत्तेरिति *। शोकादीनामपि शब्दत्वात्। न च सुप्त्वेन सादृश्यग्रहणेऽपि नलुमतेतिनिषेधानित्यत्वेन मांस्पचनीत्यादेरिव हृच्छोक इत्यादेरपि सिद्धिर्भविष्यतीति वाशोकेत्यादि व्यर्थमिति वाच्यम्। अनित्यत्वेऽपि यत्र यत्र साधक तत्रात्रप्रवृत्तिरित्यभिप्रायेण वाशोकेत्यादिवचनस्या

भृतिष्वपि दृश्यते शलाकादोपणीकृद्दोपणीयाचते महादेव इत्युक्तम्। आद्यस्याभिगुप्रैपे पच्यमानस्य शलाकाकारे दोपणी इत्यर्थः। छान्दसः कादिलोपः। एतेन दोप इत्यकारान्तस्य दृपणवाचिनो दोपन्नादेश इत्यपास्तम्। तेन पद्ङ्घ्रिरिति। न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्य' पृथक्पदादिवचनं तत्र व्यर्थम्। न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानसमर्थादेशस्याप्यर्थबोधनात्। अत एव नसाद्यादेशानाङ्कोशेऽनुपन्यास इति वाच्यम्। पदादीनां भाष्यरीत्याऽनादेशत्वात्। तत्त्वेऽपि तृज्वत्क्रोष्टुरितिवद्व्यवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं मकारार्थत्वेऽस्यावश्यकत्वात्। स्पष्टं चेदं वाशोकेति सूत्रे मूले। कोशे शब्दा अर्थपरा एव। शक्तिग्रहस्तु पदत्वहेतुकानुमानेन

---

रिताप्यर्थात्। *अन्यत्र* शस्प्रभृतिभिन्ने। *तेन पद्ङ्घ्रिरितीति*। अत्र पादशब्दस्य पदादेश। तत्र शङ्कते। * न च कोशस्थेति *। भाष्यरीत्या अनादेशत्वात् अस्य किन्तु प्रकृत्यन्तरत्वम्। पश्यामिति शेष। *तत्त्वेऽपि*। अनादेशत्वेऽपि। अत एव पादहृदयशब्दयो' पद्हृच्छब्दरूपादेशे सुनिमित्तके कृते सन्निपातपरिभाषया सुलोपो न स्यादिति पद्ङ्घ्रिश्चरणहृति, स्वान्त हृन्मानसामित्यसङ्गतमिति पूर्वपक्षस्य नावसर। केचित्तु शब्दत्वेनैव सादृश्यम्। मन्मते सिनिषेधस्यानित्यत्वात्प्रवृत्तिकल्पनापेक्षया सादृश्यप्रयोजकव्यापकधर्मकल्पनाया गौरवाभावात्। एव सति पदादीनामादेशत्वमेव। हृदयस्य हृदिति सूत्रन्तु नित्यार्थम्। याशोकष्यञिति तु नियमार्थमप्येवोभयो' स्थान्यादेशयो प्रयोगोऽन्यत्र स्थानिन एवेति। एव नासिकाया नसित्यपि नित्यार्थमेव। तेन नासिका क्षुद्र इति न। न च पदश्च इतिसूत्रे सुप्रभृतिष्विस्येवास्त्विति वाच्यम्। अकृत्य' एकदेशस्य सोऽन्तरङ्गानपीतिन्यायेन लुकि कृते स्यादिपरत्वाभावेनादेशाभावापत्तेरित्याहु। अत्रेदश्चिन्त्यम्। शस' सुप्सङ्घाया शास्त्रीयतया तेन रूपेण सादृश्यकल्पनापेक्षयाऽशास्त्रीयेन शब्दत्वेन सादृश्यकल्पनेऽक्लृप्तकल्पनाप्रयुक्त गौरव स्फुटमेव। किञ्च याशोकेत्यस्य नियमार्थत्वकल्पनापेक्षया विधायकत्वे लाघवमेव। एवञ्च भाष्यरीत्या प्रकृत्यन्तरत्वकल्पनमेव समुचितमिति। ननु कोशपठितानां शब्दानां लोकप्रसिद्धशब्दानुकरणत्वेन तेष्वादेशस्य प्रवृत्तिर्नोचिता। एवञ्च पद्ङ्घ्रिरित्याद्युपपत्तये सादृश्यप्रयोजकधर्मचिन्तनमयुक्तमत आह। * कोशे शब्दा इति *। * अर्थपरा *। अर्थाभि''शब्दपरा। न त्वनुकरणानीति भाव। ननु तत्तदर्थनिरूपितशक्तिग्रहस्य कोशाधीनत्व तुमसिद्धन्तथ नोपपद्यते अर्थानां शक्तिग्रहाभावादनुपस्थितेरत आह। * शक्तिग्रहस्त्विति *। यदा विष्णुर्नारायण इत्यादिशब्दघटितकोशजन्यबोधविचारस्तदा न-

सामान्यत एव । एवञ्च विष्णुर्नारायण इत्यादौ विष्णुपदार्थाभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे विस्तरेण निरूपितम् । एतत्पदमस्मुकवाचकमिति शक्तिग्रहस्तु स्वरूपसिद्धमादाय तत्तत्स्वरूपस्यानियतत्वात् पश्चान्मनसैव । अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानीत्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधः, अत एव नामन्त्रिते समानाधिकरणे इति सूत्रभाष्ये

---

दकमेकं विष्णुपदं पक्षीकृत्यानुमिति कल्पनीया । इदं विष्णुपदम् । अर्थवाचकम् । साधुपदत्वात् । गोपदवदित्येव रीत्या सा यहेतुकल्पनायाऽनुमित्या । * सामान्यत * । सामान्यधर्मावच्छिन्नविधेयताकया । अयं भाव । अर्थवाचकत्वघटे साधुपदत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वावगाहि व्याप्तिज्ञानेनार्थवाचकत्वत्वे व्यापकतावच्छेदकत्वावगाही साधुपदत्वत्वे व्याप्यतावच्छेदकत्वावगाही परामर्शो जन्यते । ततो विष्णुपदमर्थवाचकमित्याकारानुमिति । ततोऽर्था विष्णुपदवाच्य इत्याकारकमानसं ज्ञानम् । ततस्तादृशः संस्कारः । ततोऽर्थविशेष्यकविष्णुपदवाच्यत्वप्रकारिका स्मृतिर्विष्णुपदोच्चारणे सति तादृशोद्बोधकवशाज्जायते । एवमेव नारायणपदादपि । तत समानविभक्तिकत्वरूपाकाङ्क्षाप्रकारकपदविशेष्यकज्ञानसत्त्वे प्रतिबन्धकाभावे विष्णुपदवाच्याभिन्नो नारायणपदवाच्य इत्याकारक शाब्दबोधस्तदाह । * एवञ्चेत्यादिना * । ननु पर्यायशब्दस्वरूपप्रतिपादनपरे श्रुतिविशेषे यथा पदानां स्वरूपपरत्वं तथा कोशे व्यवस्थितमत आह । * अघ्न्ये देवीति * । * सदस इति * । प्रत्युदाहरणासङ्गतिः । एतेन पर्यायशब्दस्वरूपप्रदर्शकवाक्यघटकशब्दानामर्थपरत्वे भाष्यसम्मतिरुद्भाविता । एकदेशस्तर्हि विरूपाणामित्यनेन स्यादत आह । * एकशेषस्त्विति * । उक्तार्थे सूत्रसम्मतिमाह । * अत एवेति * । तादृशतात्पर्यादेव । एवञ्च यत्तदेतेभ्य इतिनिर्देशो विरूपाणामपीत्यस्याप्यनित्यत्वे ज्ञापक इति द्रष्टव्यम् । तथा चोक्तममरसिंहेन ।

भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्कर ।
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते इति ॥

भेदस्य लिङ्गभेदस्य लिङ्गविशेषस्य आख्यानाय द्वन्द्व एकशेषश्च न कृत । यथा ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविरिति । तथा स्वरूपभेदप्रतिपादनाय समानलिङ्गानामपि तौ न कृतौ । यथा विष्णुर्नारायण इत्यत्र । तथा स्वस्वार्थविशेषभेदेन भिन्नानां भेदाख्यानाय सङ्करो न कृत । यथा स्वर्गसम्बन्धिनां भूमिसम्बन्धिनाञ्च । स्वरादिवर्गे इतिरीत्या पृथङ्निर्देश एव कृत इति । एतदपवादमाह । * क्रमादृत इति * । यत्र स्त्रीपुंनपुंसकानां क्रम एव विवक्षित

सामान्यवचनमित्यस्येद मत्युदाहरण दत्तम्, अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावाच्चसङ्गतिः स्पष्टैव । एकशेषस्तु न । तथा सति तत्तच्छब्दस्वरूपस्य सम्यक् बोधानापत्तेः । अनेकशब्दाना स्वरूपबोधनपूर्वमेकार्थबोधने कोशतात्पर्यात् । अत एव यत्तदेतेभ्य इत्यादौ पाणिनिनैकशेषो न कृतः । एतेन कोशे शब्दानां शब्दपरता । अत एवैकशेषो न । अर्थपरत्वन्तु न सम्भवति इतः पूर्वं शक्तिग्रहाभावात् एते शब्दा एकार्था इति बोधः । एवञ्चात्र प्रकारार्थत्वाभावेऽपि न क्षतिरित्यपास्तमिति दिक् ।

सख्यावि । सायेभ्य इति वक्तव्ये पूर्वग्रहणमुत्तरपदइत्यधिकृतस्य षष्ठ्यन्तत्वलाभाय । एतेन ब्रह्ममिय इत्येवैतदुदाहरणमित्यपास्तम् । विश्वपा इति । विश्वं पातीति विग्रहे आतोनुपसर्गेइति प्राप्ते वासरूपन्यायेनातो मनिन्क्वनिब्वनिपश्चेति चेन विच् । स चादन्तेभ्यो लोकेपि । कीलालपआगतामिति विभाषा पूर्वाह्णेति सूत्रे भाष्यप्रयोगात् । क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विभ्यो ऽनभिधानमेव । अत एव यू स्त्र्याख्यावित्यत्र विजुक्तो भाष्ये न तु क्विप् । अत एव शस्या इत्यादिप्रयोगेषु भाष्यकृता ईत्व न कृतमिति केचित् । अन्ये क्विपमेवाहुः ।

---

स्तत्र सङ्करे भिन्नलिङ्गाना मिश्रणरूप कृत एव यथा स्तव स्तोत्र स्तुतिर्नुतिरिति । प्राचाम्मत खण्डयति । * एतेनेति * । पूर्वोक्तव्याख्यानेन । * अत एव * । शब्दपरत्वेन भिन्नार्थत्वादेव । अभियुक्तोक्त शक्तिग्राहकत्वमुपपादयति । * एत इति * । * प्रकारार्थत्वाभावेपीति * । यद्यत्र श्रूयमाणपदादीना शास्त्रनिष्पाद्यत्व स्यात्तदा प्रकारार्थकतां विना निर्वाहो न स्यात्तदेव तु नास्ति अनुकरणत्वात् तथा चात्रोभाद्युदात्तइतिवच्छास्त्रस्य न प्रवृत्तिरिति भावः ।

* षष्ठ्यन्तत्वलाभायेति * । एवञ्च सख्यादिपूर्वस्योत्तरपदस्यान्तशब्दस्येत्यर्थ सम्पद्यते, ननु विज्रुपेछन्दसीतिसूत्रे छन्दसीत्युपादानाद्विच् छन्दस्येवेति कथ विश्वपाशब्दस्य लोके साधुत्वमत आह । * स चेति * । न हि कीलालपमागतमिति वाक्य छन्द इति भाव । क्विविषये विशेषमाह । * क्विपस्त्विति * । * अत एव * । अन्यत्रानभिधानादेव । * अत एव * । शंस्येत्यादिषु क्विपोऽभावादेव । * केचिदिति * । ईत्वमघकारादावितिवार्तिकविहितमिति । * आहुरिति * । ईत्वमकारादावित्यनेनेत्य वारयितु शक्यमिति भाव । यद्यपि यकारादौ प्रत्यये घुमास्थेतीत्व वचनेन चेष्टियायते तथा वार्तिककारमते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेन यू स्त्र्याख्यावित्यस्य शास्येत्यादिपदस्य च क्विपापि साधन सम्भवति तथापि विच प्रथमोपस्थितत्वात्स प्रयोक्तः ।

दीर्घाज्ज । चेनेचीत्यनुकर्षः दीर्घाच्छस्येवेति नियमपरं दीर्घाच्छसीस्येव तु न सूत्रितं दीर्घादेव शसीति विपरीतनियमापत्तेः । प्रत्याहारेषु जातिपक्षाश्रयणादत्र प्राप्तिः । न्याय्यत्वादिति । जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः ।

धातोः किम् । हाहानिति । अव्युत्पन्नमिदम् । अस्य क्रियाशब्दत्वे तु सानिति प्रत्युदाहरणम् । परे तु क्त्वः इनः इत्यादिसिद्ध्यर्थमातो ऽनाप इति योगविभागेन तत्ससाध्य तत्प्रत्याख्यातं भाष्ये । एवञ्च साशब्दादेर्यथाभिधानं तदा योगविभागेन लोप इष्ट एव, सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव । भाष्यवार्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात् । आबन्तादाचारक्विपेव न । तत् क्विबन्ताद्वा कर्तृक्विप्नानभिधानादिति न तत्र सूत्रवार्तिकयोर्विरोधः । अत एव प्रथमयोरिति सूत्रभाष्ये पररूपे बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकमिति पक्षे रामानित्यादिसिद्ध्यर्थमतो दीर्घ इति सुपि चेति चानुवर्तमाने बहुवचने झल्येदिति सूत्रे बहुवचने इति योगविभागेन पररूपबाधकं दीर्घं विधाय रामाणामित्यादावनेन दीर्घे परत्वात्कृते ऽग्नीनामित्यादौ सावकाशस्य नुटो ऽप्राप्तिमाशङ्क्य ह्रस्वनद्याप इति सूत्रे आज्जसेरित्यत आद्ग्रहणानुवृत्त्या समाधाय कीलालपामित्यादौ नुड्विधायके आतो धातोरित्यनुवर्त्य लोपेन नुड्बाधकेन समाहितम् । नुड्विधायके आब्ग्रहणं न कार्यमिति तदाशयः । अधात्ववयवाकारान्तानां लोपाभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः । क्त्वः इनः इति क्त्वाप्रत्ययस्येवाचरतीत्यार्थकः क्त्व इद् इनः शस्येत्वमित्यादिप्रयोगस्यमत्रोदाहरणम् । एतेनाचारक्विबन्तात् कर्तृक्विपैते प्रयोगा निर्बाधा इत्यपास्तम् । आचारक्विबन्तप्रकृति-

ननु प्रथमयोरिति सूत्रानन्तरं लाघवाद्दीर्घाच्छसीति सूत्रमस्त्वित्यत आह । * दीर्घाच्छस्येवेतीति * । * विपरीतनियमापत्तेरिति * । अनेष्टापत्तिकत्तुमर्दाख्या । तस्मादितिसूत्र एव भाष्यकृत्कृतम्कु सा पश्य कुण्डिनाम्पश्येतिप्रयोगासङ्गत्यापत्ते, विश्वपाशब्दादिचिं विधिशास्त्रस्य सिद्धान्तरीत्या प्राप्तिमुद्भावयति । * प्रत्याहारेष्विति, * * न्याय्यत्वादिति, * लक्ष्यस्योद्देश्यतावच्छेदकाक्रान्तया निषेधाप्रोतिन्यायेन दीर्घादितिसूत्रप्रवृत्तेन्याय्यत्वादित्यर्थः ।

* सानिति प्रत्युदाहरणमिति, हाहाशब्दस्य तु हाहः इत्येव रूपम्, * लोप इष्ट एवेति । वार्तिकैकवाक्यत्वात्, * आबन्तनिवृत्त्यर्थमेवेति, रमा पश्येत्यादौ । न चैवमाप्तादाचारक्विबन्तात्कर्तरि क्विपि धातुत्वात्सूत्ररीत्यालोपः प्राप्नोति, वार्तिककारमते तु प्रतिफलभेदोऽस्त्येवेत्यत आह, * आबन्तेति । * अत

ककर्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेन तेभ्यः कर्तृक्विपो ऽनभिधानस्यैव लाभाच्च ।

इत्यादन्ताः ॥

जसि च ॥ ह्रस्वस्य गुण इति वर्त्तते ।

ह्रस्वस्य ॥ सम्बुद्धौ चेत्यतः सम्बुद्धाविति वर्त्तते ॥

शेषोध्य । यूस्त्र्याख्याविस्यतो यू इति ङिति ह्रस्वश्चेत्यतो ह्रस्व इति च वर्त्तते । शेषपदार्थमाह, अनदीत्यादि । तदन्तमिति । अनुवृत्तयूभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इति भावः । ननु मत्यै इत्यत्रानवकाशत्वान्नदीसञ्ज्ञैव भविष्यतीति शेषग्रहणं व्यर्थमत आह, एकसञ्ज्ञेति । अधिकारादिति । कडाराः कर्मधारये इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः । स्पष्टार्थः । स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति भावः । मात्रे

---

एव, यदभावकल्पनेनानुपपत्तिपरिहारस्तदभावकल्पनादेव * अथास्थयथया कारान्तानामिति * । हाहाशब्दादीनाम्, *एतेन* स्वारसिकपूर्वोक्तप्रयोगविरोधेन ॥ * आचारेति * । आदन्तप्रकृतिकेत्यादि ।

[ इत्यादन्ता ]

* इति च वर्त्तत इति, न च यूपदन्तरत्यन्दीर्घबोधकमिति ह्रस्वपदार्थेना न्वय इति वाच्यम् । अनुवृत्तस्य यूपदस्य षष्ठ्यन्ततया विपरिणामेन य्वोर्यौ ह्रस्वौ तदन्तमित्यर्थात् । गुणः कृतात्मसंस्कार इतिन्यायात् । नन्वेकसञ्ज्ञाधिकारादित्यनुपपन्नम् । आकडारादितिसूत्रस्य सञ्ज्ञाप्रवृत्तिव्यवस्थापकत्वादित्यत आह । * कडारा इति, * । एवञ्चाधिकारपदम्बुद्धिस्थपरम् । एका सञ्ज्ञेत्यस्य बुद्धिस्थत्वादित्यर्थ । यद्यप्यसखीतिपर्युदासबलेन शब्दस्वरूपस्य विशेष्यस्य लाभो भवति, तथापि पर्युदासलभ्यस्य विलम्बितोपस्थितिकतया झटिति विशेष्यलाभार्थमिति फलितन्तदाह । *स्पष्टतयेति* । यत्तु मत्यै इत्यत्रानवकाशत्वान्नदीसंज्ञैव भविष्यतीत्युक्तम् तन्नायुक्तम् असखीतिपर्युदासात्सखिशब्दे समासाघटके यथा पत्यै स्त्रियै इत्यत्र पतिशब्दे च पति समास एवेतिनियमाद्घिसञ्ज्ञाया अप्राप्तनदीसञ्ज्ञायास्तत्र चारितार्थ्यादिति, तन्न । *कारान्ते चारितार्थ्येप्युकारान्ते चारितार्थ्याभावात् ङितिह्रस्वश्चेतिसूत्रेणोकारस्य स्त्रिया वर्त्तमानस्य नदीसंज्ञा भविष्यतीति घिसञ्ज्ञासूत्रे उकारस्यानदीसञ्ज्ञकस्यैव ग्रहणन्तत्साहचर्यादिकारस्यापि तादृशस्यैव ग्रहणम्भविष्यतीति शेषग्रहणं व्यर्थमित्याशयात् । परन्तु साहचर्येणतादृशार्थकल्पने क्लेश इति स्पष्टप्रतिपत्तये शेषग्रहणम् । * मात्रे इती

इति । ऋतो ङीति तु यू इत्यनुवृत्त्यावेव तात्पर्यग्राहकमिति भावः ।

आङो ना ॥ पुंसीति तु नोक्तम् । अमुना कुलेनेत्यत्र मुत्वस्यासिद्धत्वान्नुमनापत्तौ पुस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपासिद्धेः । न मु ने इति निषेधस्तु न नुमि नमुदादेश इति वार्तिकविरोधात् । अत एव सूत्रकृता वत्वीति वन् नीति नोक्तम् । तथा सति तन्त्रेण नकारानिर्देशोपि सम्भाव्येत आगन्तुनाकारेण तस्यापि न इति निर्देशेन तन्त्रस्वीकारे त्वत्यन्त ज्ञानगौरवमिति न किञ्चिल्लाघवमिति स्पष्टं भाष्ये । आङितीति । ङकारविशिष्टा सञ्ज्ञा न त्वस्य ङस्येत्वम् । अत एव हरिणा मत्येत्यादौ न गुण.।

---

ति* ननु यूग्रहणाननुवृत्त्या ऋकारान्तमात्रस्य घिसंज्ञाया घेर्ङितीतिगुणे सिद्धे ऋतोङीतिसूत्रेण ङौ गुणविधानं घिसंज्ञकस्य ऋतोङिति गुणो नेत्यर्थे ज्ञापकं भविष्यतीति मात्रे इतिरूपमन्यथासिद्धाङ्गिन्तु पित्रा इत्यत्र नाभावापादनमेव कर्तुमुचितमिति चेन्न । ङौ गुणविधानेनैव ज्ञाप्यवचनकल्पनाया घेर्ङितीतिशास्त्रस्य बाधकल्पना स्यात्तदपेक्षया तेन घिसंज्ञासूत्रे यूग्रहणमनुवर्तते इत्येव ज्ञापनीयं लाघवात्।एवञ्च मात्रे इत्यत्र गुणाभावस्य पित्रेत्यत्र नाभावाभावस्य च सिद्धिर्भविष्यतीत्याशयादाह । * ऋतो ङीतीति * ।

पदलाघवाभिप्रायेण शङ्कते । * पुंसीति स्वितीति * । ननु नमुनइतिसूत्रे नकाराकार उच्चारणार्थ । नकारमात्रे विधायकतायाः नुम्विषय पर्यवसानेपि साक्षात्तथानुच्चारणात्ततो नकारपदस्य नकारघटिते लक्षणा भविष्यतीति भावन्वो च इत्यत आह । * नमुनइति निषेधस्त्विति * । * वार्तिकविरोधादिति * । टा या आदेशटायामादेश इति च तदर्थ इति वार्तिकार्थप्रदर्शनपरभाष्येप्यादेशपदोच्चारणेनादेशविषय एव तत्प्रवृत्तेरिष्टत्वात्ताद्विरोधापत्तेरित्यर्थ । नुमि कर्तव्ये मुत्वस्य निषेधो नेत्यत्र सूत्रसम्मतिमप्याह । * अत एवेति * । तत्तात्पर्यकत्वे लाघवान्नेत्येव ब्रूतियद्वदेत् । नीत्यस्य नकारसम्बन्धिनीत्यर्थसम्भवात् । नेइतिनिर्देशोप्युभयलाभ इति चेत्तत्राह । * आगन्तुनेति * । एकस्यैव नेशब्दस्य सूत्रस्थस्य तादृशशब्दद्वयोपस्थापकत्वतात्पर्येण निर्देशकल्पना ततस्तत्सदृशशब्दद्वयोपस्थितिकल्पना । तयोर्मध्ये एकत्रागन्तुकाकारकल्पना ततो नकारमात्रोपस्थितिरेकत्र । अपरत्र नाइतिशब्दस्येतिरीत्या ज्ञानगौरवमित्यर्थ । * न त्वस्य ङस्येत्वमिति * । न च शब्दार्थयोस्तादात्म्यादाङ्शब्दस्य ओङ्शब्दस्य च प्रत्ययमात्रबोधकतया व्यवसितात्वत्वात् ङकारस्येत्संज्ञा प्राप्नोतीति वाच्यम् । धातुप्रत्ययेत्यत्र प्रत्ययपदस्य प्रत्ययाधिकारपठितप्रत्ययसमानानुपूर्वीकशब्दपरत्वात् । यद्येत्संज्ञाप्रवृत्तिः स्यात्तदा सामर्थ्यात्तदुपस्थाप्ये इत्यप्रयुक्तकार्यं स्यात्तदाह । * अत एवेति * । इत्त्वाभावादेवेत्यर्थ । *न गुण इति* । घे

एवमौङ आप इत्यत्रापि । अत एवासम्भवे एवापवादत्वमिति वार्त्तिकमते ऽपि रमे इत्यादौ न याट् ।

घेर्ङितीति ॥ सुपि चेत्यतः सुपीति वर्त्तते तेन पट्वीति सिद्धम् । न च घेर्ङीति सूत्रं कार्यं ङकारादावित्यर्थः । प्रयाहन्नेत्यत्राद्‍ङ्याजयारांमुपसंख्यानमित्याङादेशस्तु ङीत्येव वक्तुं शक्य इति वाच्यम् । मत्यामित्यादावाण्नद्या इत्यस्यानापत्तेः । अल्विधित्वेन स्थानिवत्त्वाभावात् । ङद्ग्रहणे त्वनुबन्धकार्यत्वात् स्थानिवत्त्वं स्पष्टमिति दिक् ।

ङसिङ ॥ एङो द्वित्वेपि अस्वरितत्वान्नयथासङ्ख्यं न । ङितथेति तु नासूत्रि, ऋत उदित्यत्र ऋदन्तान्ङितोऽति परे पूर्वपरयोरित्यर्थे जाग्रतीत्यादौ दोषः स्यादिति । ङसोरित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम् ।

---

ङ्किंतीति सूत्रस्य ङिति गुण इत्यर्थकत्वमितियादिमतरीत्या गुणप्राप्तिर्बोध्या । * अत एव * । औङोपि ङकारस्येत्त्वाभावादेव । ननु रमे इत्यनापवृष्य याटि प्राप्ते शीभाव आरभ्यतेऽतोऽपवादे शीभावे कृते न याट् प्राप्तिरित्यत आह । वार्तिकमतेऽपीति* । असम्भवे एवापवादत्वमिति हि तन्मते स चासम्भव प्रकृते नास्तीति भाव ।

* घेर्ङितीति । * अयम्भाव । एतत्सूत्रभाष्योक्तरीत्याऽनुवर्तमानस्य सुपीत्यस्य ङीत्येतद्विशेषणमस्तु । यस्मिन्विधिरितिपरिभाषया ङकारादावित्यर्थोऽस्तु । एवञ्चाङ् इत्यत्रौङ इत्यत्र च ङकारस्येत्सञ्ज्ञास्वीकारेऽपि न क्षति । इदं सूत्रञ्च घेर्ङीत्येवास्तु । आङ्यारीतिवार्तिके च ङा इत्येवास्तु । तेन प्रयाद्या इत्यत्र गुणस्य सिद्धिरितिमत्यामित्यत्र ङेरामादेशे आण्नद्या इत्याण्न स्यात् ङादित्वाभावात् । अत्रापि ङीत्यस्यानुवृत्त्या ङकारादित्यस्याश्रयणात्तस्याल्विधित्वात् । न चेष्टापत्तिः ह्रस्वनद्याप इति नुडापत्ते । सिद्धान्ते तु येन नाप्राप्तिन्यायेन नुड्बाधके आटि कृते परिशेषात्तत्र षष्ठीबहुवचनस्य ग्रहणमिति सिध्यति । न च ङेरामिति सूत्रेऽपि ङेर्ङामित्येवास्तु एवञ्चैतस्य स्थले ङादित्वात् स्थानिवद्भावोपयोग इति वाच्यम् । ङेर्ङामादेशे कृते लशक्वतद्धित इतिसञ्ज्ञाया आडागमस्य च प्राप्तौ वार्णपरिभाषयेत्सञ्ज्ञाम्बाधित्वा आट् स्यात् । ततश्च प्रत्ययादित्वाभावान् ङकारस्येत्त्वानापत्तेः । अत एवान्तरङ्गत्वान् ङकारस्येत्सञ्ज्ञालोपयोराट पूर्वम्प्रवृत्तिर्भविष्यतीत्यपि निरस्तम् । वार्णपरिभाषाया अन्तरङ्गपरिभाषापवादत्वान्नित्यादिकन्दिगित्यनेन सूचितम् ।

* अस्वरितत्वादिति * । यथासङ्ख्यसूत्रे स्वरितेनेत्यस्य सम्बन्ध इति भाव । * स्पष्टार्थमिति * । यथासङ्ख्यसूत्रे शब्दतः सङ्ख्यासाम्यपदार्थत इत्यस्य स्पष्टतया ज्ञापनायामिति केचित् । नव्य । यथासङ्ख्यसूत्रभाष्ये किमुदाहरणमिको

अघ्येः । इदुद्भ्यामिति किं घेः परस्य ङेरौदच्चेति ङिप्रकृतेर्घेरौदच्चेति वा ऽर्थो मा भूदिति । अदौतोस्तपरत्वं मुखसुखार्थम् । इत्सञ्ज्ञायां च तस्यलोप इति तयोर्लोपः । न चौतो विभक्तित्वान्न विभक्ताविति निषेधात् कथमित्सञ्ज्ञेति वाच्यम् । मुखसुखार्थमित्यस्य तदेव प्रयोजनं न तु कार्यान्तर नापि प्रयोगे श्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव नविभक्तावित्यस्य तत्राप्रवृत्तेः । अत एवेद्वृद्धौ, पत्यावैश्वर्ये इत्यादिनिर्देशाः सङ्गच्छन्ते । यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्तदेत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु किन्तस्यलोप इत्यनेन । स्वभावादस्योभयत्रापि समत्वात् । ध्वनितश्चेदन्तस्यलोप इत्यत्र भाष्ये इति दिवऔत्सूत्रे निरूपयिष्यामः । न चैवमग्नावित्यनौतः स्वरितत्वापत्तिः । न च प्रत्ययाप्रत्ययोरित्येव सिद्धे पुनस्तितिप्रत्ययग्रहणं कर्तव्यमिति वार्तिकादौपदेशिकप्रत्ययत्वस्यैव तत्प्रवृत्तिरिति वाच्यम् । तस्या परिभाषाया लक्ष्यासिद्धये भाष्यकृता क्वाप्यनाश्रयणात् । स्पष्टञ्चेदं तित्स्वरितमित्यत्र कैयटे । अङ्गस्येति सूत्रे भाष्ये तु तत्प्रत्याख्यानार्यैकदेशिना सोक्ता, न तु सिद्धान्तिनेति स्पष्टं तद्विदाम् । श्नान्नलोप इति सूत्रे भाष्येपि ध्वनितस्तदभाव इति वाच्यम् । प्रत्ययग्रहणमित्यस्य विधान-

---

यणचीति कथित तद्विरोधात् । तत्र हि जातिपक्षाश्रयणेनार्थेत एव यथासङ्ख्यस्योपपादनात् । एचोऽयवायाव इत्यत्रानुपपत्तेश्च ।

*इदुद्भ्यामिति किमिति* । अनुवृत्तिप्रयोजनप्रश्न । ङेरित्यत्र षष्ठ्यन्तत्वाप्त स्साहचर्याद् घरित्यस्य षष्ठ्यन्तत्वसम्भावनया आह । * ङिप्रकृतेरिति * । * तत्त्वप्रतिज्ञयेति * । मुखसुखार्थत्वप्रतिज्ञयेत्यर्थ । * अत एव * । तकारस्येत्सञ्ज्ञकत्वादेव । प्राचीनोक्तं खण्डयति । *यदि त्विति*। *स्वभावादस्येति*। पराश्रयत्वाभावादस्येत्यर्थ । * उभयत्र * । मुखसुखार्थ इत्सञ्ज्ञके च । * समत्वादिति * । यथोच्चारणार्थानामितरोच्चारणे सहायकत्वं तथेत्सञ्ज्ञकानामपि स्वस्वस्य धिन परिनिष्ठितरूपसाधने सहायकत्वमित्यर्थ । * न चैवमिति * । अस्य परेण वाच्यमित्यनेनान्वय । * एवम् * । उच्चारणार्थकानामपि लोपकत्वकोत्स प्राम्यीकारे । * तत्प्रवृत्ति * । तित्स्वरितमित्यस्य प्रवृत्ति । ध्वनित इति * । तत्र हि श्नान्नलोप इत्यत्र श्नम आकाराभावे नाम्नलोप इत्येवास्तु इतिपूर्वपक्षे नन्दितेरत्र प्रसक्तातिव्याप्ते क्ङितीत्यनुवृत्त्या वारणं नन्दमान इत्यत्रातिव्याप्तिरित्युक्त्वा यत्तर्हि तदाभ्द्य क्ङितीत्यनेन विशेष्यते क्ङितौ नशब्दादितिविभक्तिविपरिणामनेोक्तम् । यदीयम्परिभाषा स्यात्तदान्यथैव नन्दमान इत्यत्र दोषाभावे सिद्धे विभक्तिविपरिणामक्लेशो व्यर्थ स्यादितिरीत्या परिभाषाभावो ध्वनित इत्यर्थ । प्रत्ययपदस्य विधानकालिकप्रत्ययत्वघटित लक्षणायाम्बीजमाह ।

कालिकप्रत्ययत्ववद्ग्रहणमित्यर्थात् । अत एवादेशेषु दित्त्वमाश्रित्यतत्प्रत्याख्यानेन फलभेदा नेति दिक् ।

अनङ् सौ ॥ साविति प्रथमैकवचनमसम्बुद्धाविति पर्युदासात् । नकाराकारस्तूच्चारणार्थ इत्सञ्ज्ञकः ।

अलो ऽन्त्यात् ॥ अवध्यवधिमतोः साजात्यादाह । पूर्वो वर्ण इति । अत एव शिष्ट इत्यादौ शा डलि समुदायस्य शास इदितीत्त्व न । पञ्चम्यन्ताल्ग्रहणाच्च शस्य न ।

सर्वनामस्थान॥ नोपधाया इति ढ्लोपइत्यतो दीर्घ इति चानुवर्त्तते ।

अपृक्त । अपृक्त इति पुस्त्वमविवक्षितम् । अत एवापृक्त हलिति सङ्गच्छते । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे सञ्ज्ञाविधानमदृष्टार्थम् ।

हल्ङ्याप् ॥ सुतिसीति पृथक् पदम् । हलन्तादिति । सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्सविहितस्तदादेरित्यस्य विशेष्यत्वेन तदन्तलाभ इति भाव । एव ङ्यान्शे द्वेधा तदुपस्थित्या ङ्यावन्तादित्यर्थो द्रष्टव्य. । हल्ङ्याब्भ्य. किमिति । राम इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः। दीर्घात्किं निष्कौशाम्बिरतिखट्व इत्यारभ्य संयोगान्तलोपस्यासिद्धत्वादित्यन्तो ऽपपाठः । मनोरमायां दर्शनात् । सखेति । यद्यप्यत्र सख्युरसम्बुद्धाविति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेरत उपधाया इत्यपे-

---

* अत एवेति * । तादृशार्थे प्रत्ययवल्लक्षणासत्त्वादेव ।

साविति सप्तमीबहुवचनस्य ग्रहणमितिशङ्काव्युदासायाह । *नान्त्यमिति*: अन्त्यस्यालोऽवधित्वात्तल्येन रूपेण तत्सजातीयोऽवधिमान् पूर्वमेव इत्याह ।

* अवध्येति * । अत एव * । अल एवावधिमत्त्वादेव ।

* सञ्ज्ञाविधानमदृष्टार्थमिति * । न च वर्णग्रहणे च सर्वत्रेति [illegible] सुतिसीत्येतद्विशेषणतया हलन्तानां स्वादीनाङ्ग्रहणे [illegible] स्तद्वारणायाभेदेन लोपनीयविशेषणार्थमपृक्त ग्रहणमस्त्विति [illegible] विधानाभावेऽपि सिद्धन्तु विशेषणविशेष्ययोर्यथेष्टत्वा[illegible] स्यादीनां विशेषणत्वेनैवातिप्रसङ्गवारणे तेषां [illegible] अधिकोपादानमयुक्तमित्याशयात् ।

* विशेष्यत्वेनेति * । हल्ग्रहणस्य [illegible] । द्वेधा तदुपस्थित्या, परिमाणोपस्थित्या अत एवानि [illegible] । तदन्तावि धिद्वयाभावे [illegible] सुतिसीनां यतो विधानं [illegible] स्यापप्राप्तत ऽत्र सुलोपो न प्राप्नोति । * इत्या [illegible] ।

क्षया नित्यत्वेन तस्यैवौचित्याधात्र नोक्तम् ।

अचो ञ्णि ॥ मृजेर्वृद्धिरित्यतो वृद्धिरित्यनुवर्तते ऽङ्गस्येति चाधिकृतन्तदाह, अङ्गस्य वृद्धिरिति ।

ल्यपत्यादिति । उच्चारणार्थोकारेण कृतयणः प्रयोगस्थस्यानुकरणादविशेषेणोभयोर्ग्रहणमित्याह । सितीत्यादि । ङसादिपरस्तादृशः सिखीतिनीशब्दप्रकृतिक एव सम्भवतीति भावः । सुसखेति । न पूजनादिति निषेधाद्राजाहःसखिभ्य इति टच् न । समुदायस्येति । असखीत्यस्य सखिभिन्नावयवाविति वर्णसञ्ज्ञापक्षे ऽर्थः । अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्यवर्णादेरेव ग्रहणात्कृत सख्येति वाक्ये न दोषः । सिद्धान्तिसमते तदन्तसञ्ज्ञापक्षे सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पकसखिशब्दे ऽस्य तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत्सर्वं हरदत्तानुरोधेन । यस्येति सूत्रभाष्यात्तु सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः । यथा अत्वसन्तस्येति सूत्रे ऽधातोरित्येतद्घटकधातुपदस्य पिण्डग्र इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणाऽऽकरे दृश्यते । तदन्तसञ्ज्ञापक्षे ऽप्यसखीति य्वोरेव विशेषणन्ततस्तदन्तविधिः । उतश्च प्रत्ययादितिवत् । ततश्च सख्यवयवभिन्नेवर्णाद्यन्तामित्यर्थः । तदन्तविधिश्च शेषपदार्थविशेषणतायाम् । एतश्च प्रकृतेनैव घिसञ्ज्ञेति लभ्यते । तत्र हि भाष्ये इवर्णस्य कि-मुदाहरणम् अतिसखेरागच्छति यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वात् अतिदेशविषये प्रतिपदोक्तपरिभाषया अप्रवृत्त्यो

---

त्तत्र लिङ्गक्रियान्वयाभावाल्ल्यपोऽसाधुत्वापत्तेः । * तस्यैव * । नान्तलक्षणदीर्घस्यैव ।

* सिखीतितीशब्दप्रकृतिक * । तदवयवेकारस्थानिक । * अत्रपक्षे * । वर्णसञ्ज्ञापक्षे । सिद्धान्तार्थमाह । * यस्येति चेतिसूत्रेति * । पिण्डग्र इत्यादिसिद्ध्यर्थमिति * । अन्यथा पिण्डग्र इतिसमुदायस्य धातुभिन्नत्वाद्दीर्घ स्यादिति भावः । *उतश्च प्रत्ययादितिवदिति* । एतेन गुण इत्यात्मसंस्कार इति न्यायप्रश्नारः सूचितः । यदुक्तं यस्येतिचेतिसूत्रभाष्यात्स्थिति तद्दर्शयति । * तत्र हीति * । अस्य इत्युक्तमित्यत्रान्वयः । अत्रार्थ भाष्यान्तरमपि साधकमित्याशयेनाह । * ल्यपत्यात्सूत्र इति * । ननु विकृतनिर्देशाभावेऽप्यतिसखेरित्यत्र लाक्षणिकत्वात्सखिशब्दस्य गौणत्वनिमित्तत्वसम्भव इत्यत आह । * विहितवीति * । एतेन लक्षणप्रतिपदोक्तपरिभाषया यथाऽसखीतिनिषेधो न प्रवर्तते तथा सखिपतिभ्यामित्युच्यमानेपि नातिसख्य इत्यत्रातिप्रसङ्ग इति यस्येतिसूत्रस्थ

पसर्जनह्रस्वत्वे कृते ऽपि घिसञ्ज्ञा न स्यात्। लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोष इत्युक्तम्। भवद्रीत्या हि विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैव। न च लोपेपि लिङ्गविशिष्टपरिभाषया दोषः सखिशब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाभावात्। प्रातिपदिकत्ववदुपस्थापकपदोपादानं हि प्रातिपदिकग्रहणम्। ख्यत्यात्सूत्रे किमर्थं निकृतनिर्देशो न सखिपतिभ्यामित्येवोच्येतातिसखेरित्यत्र मा भूदिति भाष्ये ङ्यन्तप्रकृतिक एवाय विहितविशेषणानाश्रयणेनैव प्रतिपदोक्तपरिभाषानाश्रयणेनैवैतत् भाष्य प्रवृत्तमिति न तद्विरोध इत्यलम्।

---

भाष्य ख्यत्यात्सूत्रस्थभाष्यविरुद्धमिति विरोधोद्भावननिरस्तम्। * अलमिति *। अनेनान्यदपि सूचितम्। तथाहि। लोपाभावेऽप्यतिसखेरित्यत्र पूर्वान्तपक्षाश्रयेन सखिशब्दस्येऽपि, स्वाश्रयसख्यवयवभिन्नत्वमाश्रित्य घिसञ्ज्ञेति तु न युक्तम्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्। किञ्च पूर्वान्तवद्भावेन विशिष्टे सखिशब्दस्यातिदेशो तदवयवेकारे सखिशब्दावयवत्वमार्थसमाजग्रस्तमिति सञ्ज्ञा न स्यात्। किञ्च लिङ्गविशिष्टपरिभाषाया प्रकृते न प्रवृत्ति। विभक्तौ लिङ्गविशिष्टाग्रहणमिति परिभाषया निषेधात्। एवञ्चातिसखिशब्दे घित्वम् भवत्येवेति। अत्र प्राचीमानुयायिन। यदि सख्यवयवाभिन्नयोरिदुतोस्तदन्तस्य वा घिसञ्ज्ञा तदा ख्यत्यादितिसूत्रस्थभाष्य विरोध। तत्र हि अतिसखेरित्यत्र माभूदितिविकृतनिर्देशप्रयोजनकथनावसरेऽतिसखेरितिगुणघटितप्रयोगो दृश्यते स भवन्मते नोपपद्यते। ननु तदपि ङ्यन्तप्रकृतिकमसखीतिपर्युदासस्तु न प्रवर्तते लाक्षणिकत्वादिति चेत्। एव सति सखिपतिभ्यामितिनिर्देशेप्यतिव्याप्तिं वारयितु शक्यते। तेनोक्ते कर्तव्ये लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तेत इति वक्तुमशक्यम्। एकस्मिन्नेव प्रयोगे तस्यैव परिभाषाया प्रवृत्त्यप्रवृत्तेर्विरुद्धत्वात्। किञ्च सखिशब्दस्य सख्यवयवे लक्षणाकल्पने गौरवम्। भाष्योक्त यस्येतिचेतिसूत्रस्य स्वैकदेश्युक्ति। तत्र हि इवर्णस्य इति, किमुदाहरणम्। हे दाक्षि। दाक्ष्या दाक्षेय। आद्ये दाक्षि ई सु इति स्थिते शब्दपरविप्रतिषेधेन दीर्घात्पूर्वं ह्रस्वत्वन्ततो दीर्घ सति तस्यैव श्रवणप्रसङ्ग। न चान्तरङ्गन्दीर्घत्वम्। वार्णकार्यस्याबलवत्वेन ह्रस्वत्वस्यैव प्राप्ते। द्वितीये दाक्षि इ आ इति स्थिते शब्दपरविप्रतिषेधेन यणादेशे परस्य कृते पूर्वस्येकारस्य श्रवणप्रसङ्ग। सवर्णदीर्घे कर्त्तव्ये यणादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम्। पूर्वपरविधित्वात्। न च यणि कर्त्तव्ये स्थानिवत्त्वम्। वर ई इतीकारप्रश्लेषेणेकारनिमित्तकविधिम्प्रति न स्थानिवदिति निषेधादिति तस्याशय। न त्वय सिद्धान्त। फलाभावात्। पट्व्या मृद्व्येत्यत्र परस्मिन्नि...

पतिः समास एव ॥ एवकार इष्टतोऽवधारणार्थः । स्मृतिपुराणेषु पतये स-

---

सूत्रस्थभाष्योदाहरणासङ्गत्यापत्तेश्च । तृतीये दाक्षि ई इति स्थिते स्त्रीभ्यो ढगिति ढकि परस्य लोपे पूर्वस्य श्रवणप्रसङ्गः । तद्धितनिमित्तकः पूर्वस्य लोपस्तु वक्तुमशक्यः । परलोपस्य स्थानिवत्त्वात् । एवं सिद्धान्त्येकदेशिनोक्ते पूर्ववाद्याह । नैतानि सन्ति प्रयोजनानि । सवर्णदीर्घत्वेनाप्येतानि सिद्धानि । अत्र कैयटः । यत्राङ्गयणोर्युगपत्प्रसङ्गस्तत्र याणपरिभाषाप्रसङ्गः । अन्तरङ्गस्यलीय इत्येतदपवादत्वात् । यद्यपि हे दाक्षीत्यत्र पदस्य विभज्यान्वाख्यानेऽस्ति युगपत्प्राप्तिस्तथाप्यत्र क्रमेणान्वाख्यानमेव कल्प्यत इत्याशयः । यण्ढकौ त्वाङ्गावेव न भवतः । ततः पुनः सिद्धान्त्येकदेशिनोक्तम् । अतिसखेरागच्छति । अतिसखे स्वमिति । अस्याप्येकदेशयुक्तित्वं प्रागुपपादितमेवेत्याहुः । अत्रेदमवधेयम् । यदि सन्निपातपरिभाषाया एकदेशानुमतिभाष्ये सन्निपातस्य तदवयवे लक्षणायाम्भाष्यान्तरविरोधः स्यात्तदाऽस्य भाष्यस्यैकदेशयुक्तित्वन्तथा तु न दृश्यते । किञ्च भाष्यकारस्येयर्णस्येति परे लोप इत्यस्येदम्भुक्यमेवोदाहरणमित्यभिमतमिति प्रतीयते । यथा हे दाक्षि । दाक्ष्या । दाक्षेय इति प्रयोजनत्रयं व्युत्पाद्य नैतानि सन्ति प्रयोजनानीत्युक्त्वा तथाऽतिसखेरागच्छति । अतिसखे स्वमितिप्रयोजनकथनोत्तरमेतदपि न प्रयोजनमिति नोपन्यस्तम् । किन्तु इदन्तर्हि प्रयोजनमिति प्रदर्शितम् । तेनास्य सिद्धान्तयुक्तित्वमेव । प्रयोजनान्तरञ्च नोपन्यस्तम् । ख्यत्यात्परस्येति सूत्रेऽप्येषमेव प्रयोगः कृतस्तस्मान्न ङ्यन्तप्रकृतिक पर्यायम् । उक्तभाष्यद्वयप्रयोजनाय विहितविशेषणानाश्रयणलक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरपि तात्पर्यविषयैव । अत एव ख्यत्यात्परस्येति सूत्रे सखिपतिभ्यामित्युच्यमाने इह न स्यात् । सखीयतेरप्रत्ययः । सख्युः पत्युरिति व्याख्यातञ्च कैयटेन । विद्यमानं समस्य स सखः । तमिच्छत्यात्मन इति क्यच् । क्यचि चेतीत्वम् । यदि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिर्विवक्षिता स्यात्तदात्राव्याप्तिः स्फुटैव । न च यस्येतिसूत्रेण इति परे यद्वो वर्णलोपो न स्यात्तदा ङ्यन्तस्य सखीशब्दस्य सखी सख्यावितिप्रयोगौ दृश्येते तयोरुपपत्तिर्न स्यात् । सख्यशिश्वीति ङीपि सवर्णदीर्घे एकादेशे पूर्वान्तवद्भावे नानङ्णिद्वद्भावयोः प्रवृत्तिप्रसङ्गादिति तस्या कथनेन न्यूनतेति वाच्यम् । प्रकृतभाष्यस्योपलक्षणत्वादिति ।

* इष्टतोऽवधारणार्थ इति * । एवकाराभावे पतिशब्द एव समासे घिसञ्ज्ञ इत्यपि नियमाकारः स्यात्तथा चातिसखेरागच्छति । अतिसखे स्वमितिप्रयोगविरोधः स्पष्ट एव । पतिः समास एवेतिनियमे सीतायाः पतये राम । नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतावित्यादिस्मृतिपुराणीयप्रयोगविरोधम्परिहरति ।

खिनेत्यादिव्याकरणानिष्पन्नत्वेनासाधुत्वेन । त्रिशङ्क्वाद्ययाज्ययाजनादाविव तपोमाहात्म्येनासाधुप्रयोगेपि ऋषीणां दोषाभावात् । याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च । अस्माकमपि स्मृतिपुराणाद्ध्ययनविधिबलात्तेपान्तपोबलाच्च यज्ञमद्ध्येपि तदन्तर्गततत्पाठे दोषाभावः । स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव । अत एव नदीसञ्ज्ञासूत्रे भाष्ये छन्दोवत्कवयः कुर्वन्तीत्युक्त्वा न क्षेपेष्टिरस्तीत्युक्तम् । यू स्त्र्याख्याविति सूत्रे हरदत्तग्रन्थे स्पष्टतरश्चैतत्समास इत्युक्ते बहुच्पूर्वे न घित्वम् । अत एव पतिर्वृत्तावेवेति नास्ति । वर्णसञ्ज्ञापक्षे पत्यवयवेकारइत्यर्थः । तदन्तसञ्ज्ञापक्षे पत्यवयवेकारान्तइत्यर्थः । सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः । एतेन शेषोऽप्यसखिपती, पतिसखी समासएवेति वा सूत्र्यतामित्यपास्तम् । यस्येतिचेति सूत्रस्थभाष्यरीत्या सुपतिना सुसख्येत्यादीनामसिद्ध्या तथा न्यासस्य कर्त्तुमशक्यत्वादिति स्पष्टमेवेति दिक् । नित्यं बहुवचनान्त इति किम्' संख्यापरिमाणइत्यनेन किंशब्दाद्बहुत्वसंख्यावच्छिन्नसंख्याविषयप्रश्नएव डतिरिति भाष्ये स्पष्टत्वादिति भावः ।

बहुगण ॥ संख्याप्रदेशेष्वेतत्सञ्ज्ञाकरणसत्त्वेपि तन्मूलकृत्रिमाकृत्रिमन्यायस्य न प्रवृत्तिः कर्त्तरि कर्मेत्यादाविव । अत एव संख्याया अतिशद-

---

* स्मृतिपुराणेष्वित्यादिना * । पतिरित्याख्यात पतिरित्येवरीत्याप्युपपत्तिरन्यत्र स्फुटा । घात्वादेरितिनिर्द्देशाद्विपरीतनियमो नेत्याश्रयणे तु प्रतिपत्तिगौरवम् । बहुच्पूर्वऽतिप्रसङ्गस्तस्यालक्षणत्व सम्भवति तत्रैव किम्मानमत आह । *अत एवेति* । तस्यालक्ष्यत्वादेव । पतिशब्दस्य पत्यवयवेकारलाक्षणिकत्वे मानमाह । * एतेनेति * । सुपतिना सुसख्या इत्यादीष्टेति । शेषो घ्यसखिपतीतिन्यासे सुपतिनेत्यस्यासिद्धि । सखिशब्दस्य सख्यवयवलाक्षणिकत्ववत्पतिशब्दस्यापि पत्यवयवे लक्षणा वाच्या । अन्यथा सख्यवयवभिन्नत्वमिकारस्य विशेषणम्पतिभिन्नत्वं त्विकारान्तस्य विशेषणमित्येकधर्मावच्छिन्नेऽन्वयाभावेन द्वन्द्वानुपपत्ति स्यात्तथा च सुपतिनेत्यस्यानुपपत्ति स्फुटैव । किञ्च पतिश्च मित्रञ्चेति सह विवक्षायान्द्वन्द्वे पतिमित्रे इत्येवेष्यते तस्यासिद्धिरित्यपि बोध्यम् । पतिसखी समास एवेतिनियमे सुसख्येत्यस्यासिद्धिर्बोध्या । कतिशब्दस्य नित्यबहुवचनान्तत्वोपपत्तिमाह । * किम संख्येत्यादि * । *भाष्ये स्पष्टत्वादिति* । तत्र हि किमित्येतत्परिप्रश्ने वर्त्तते । परिप्रश्नश्चानिर्ज्ञाते । अनिर्ज्ञातश्च बहुषु भवति । द्व्येकयोर्नुर्ज्ञातमेवेत्युक्तम् । एवञ्च बहुत्वावच्छिन्नस्यात्र नियमेनोपस्थित्या बहुवचनान्तत्वन्न्याय्यमेवेति भाव ।

* न प्रवृत्तिरिति * । उभयगतिरिह भवतीतिपरिभाषासत्त्वादिति शेष ।

न्ताया इति शदन्तपर्युदासः सङ्गच्छते । न हि शदन्ता कृत्रिमा सख्यास्ति । तस्मात्सख्याप्रदेशेपूभयगतिः । किं च लोकप्रसिद्धमहासञ्ज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिरिति स्पष्टं भाष्ये । अत एव पञ्चकत्व इत्यादिसिद्धि । एतन्न्यायोपयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः । सूत्रे बहुगणग्रहणन्तु तयोर्नियतविषयपरिच्छेदहेतुत्वाभावेनासख्यात्वात् । बहुत्वादि हि त्र्यादिसख्याव्यापको धर्मविशेषः । अत एव भाष्ये एतत्सूत्रमतिदेशार्थं यदयमसंख्यासख्येत्याहेत्युक्तम् । यत्तु भाष्ये एकादिकया चापि सख्यायते इत्युक्त तस्यायमर्थः । बह्वादिकयापि स्वव्याप्यत्रित्वादिसंख्यया सख्यायते । कतिशब्दोपि सख्यानकरणीभूतार्थविषयप्रश्नार्थकतया संख्यानकरणम्, एव वत्वन्तेप्यूह्यम् । यद्वा चापिशब्दौ वाक्यालङ्कारे एकादिकया सख्यायते सापि प्रदेशेषु यथा स्यादेति लोकप्रसिद्धमहासञ्ज्ञाकरणामिति तदर्थः । एतेनार्थान्तरवाचित्वे सति बहुत्ववाचिनश्चेत्संख्याकार्यन्तर्हि बहुगणयोरेवेति नियमार्थं तत् । तेन भूर्यादीनां न, तेषां वैपुल्याद्यर्थान्तरवाचित्वात् । वैपुल्य विशालता विशेष्यविशेषणदलाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिनान्त्र्यादीनाञ्च न व्यावृत्ति । यद्वा । अनियतसंख्यावाचिनाञ्चेद् बहुगणयोरेवेति नियम । अनन्तवाच्वदनन्तवाचिशतशब्दस्य सख्याकार्याभाव इष्ट एवेत्यपास्तम् । सङ्घवैपुल्यवाचकयोर्नेह ग्रहण परस्पर साहचर्येण त्र्यादिसंख्याव्यापकधर्मवाचिनोरेव ग्रहणात् । वतु इति सानुबन्धनिर्देशो ब्राह्मणवदित्यादिव्यावृत्त्यर्थः । डतिस्ताद्धित एव वतुसाहचर्यादित्यलम् ।

---

* अत एव * । तादृशपरिभाषासत्त्वादेव । एवञ्च शदन्तपर्युदास एव तस्या अपरिभाषाया ज्ञापक । * अत एव * । लोकप्रसिद्धार्थकस्य ग्रहणादेव । * एतन्न्याय इति * । कृत्रिमाकृत्रिमन्यायेत्यर्थः । ननु बहुगणशब्दस्यापि सख्याप्रदेशे एकादिशब्दानामिव ग्रहणे सिद्धे सूत्रेऽनयोरुपादान व्यर्थमत आह । * सूत्रे बहुगणग्रहणन्त्विति * । एतत्तस्य पृथगाचोदितम् । * नियतविषयपरिच्छेद इति * । नियतो यो विषयपरिच्छेदस्तद्धेतुत्वादित्यर्थः । परिच्छेदे नियतत्वञ्चेतरव्यावृत्तविषयकत्वम् । परिच्छेदो ज्ञानविशेष । बहुगणयोर्न साक्षात्तथात्वमिति भाव । त्र्यादिसख्याव्यापक । त्र्यादिसंख्याव्याप्या यस्य स । * अत एव * । बह्वादीनामसख्यात्वादेव । एव सति यद्भाष्ये उक्तमेकादिकया चापि सख्यायत इति तद्विरोध । अत्रापि शब्दस्वारस्येन यथा बह्वादिकया सख्यायते तथा एकादिकयाऽन्यतोऽपरस्य ग्रहणमित्यत आह । * यत्तु भाष्य इति * । एवञ्च सख्या

ष्णान्तेत्यतः षडिति वर्त्तते सङ्ख्येति च प्रकृतं तदाह । इत्यन्तेति । अत एव षट्कृतीति षडनुवादेन शुग्विहितः । अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । सङ्ख्येति किम् । पतयः ।

प्रत्ययस्य ॥ अनेकसञ्ज्ञाकरणात् आवृत्त्या विभक्तिविपरिणामेन च तद्भाविनसञ्ज्ञाश्रयणम्, अतो न सङ्करः । तेन हन्तीत्यादौ श्लाविति द्वित्वं न तदाह लुक्श्लुलुप्शब्दैरिति । अदर्शनं लोप इत्यतादर्शनमित्युवर्त्तते । प्रदेशेषु भाविसञ्ज्ञाविज्ञानान्नान्योन्याश्रयः । एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः । तेन प्रत्ययलक्षणसिद्धिः ।

षड्भ्यो ॥ जश्शसोः शिरित्यतो जश्शसोरिति वर्त्तते । षड्भ्य इति विहितविशेषणत्वेन गौणे न । परमपञ्चेत्यादौ तु विशिष्टस्यापि सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन सङ्ख्यावाचितया षट्त्वमस्त्येवेति न दोषः । स्पष्टञ्चेदं पदप्रधान एव समास इत्यादिना सर्वादिसूत्रे भाष्ये । कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम् । प्रत्ययलोपे प्रत्ययस्येत्यनुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत् । तेनाग्नीयेत्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये । इदमेव प्रत्ययग्रहणञ्ज्ञापकमवयवेऽपि प्रत्ययत्वव्यवहारस्य । एवञ्चादेशप्रत्यययोरिदुदुपधस्येत्यनयोर्लक्षणादि नाश्रयणीयं तात्प-

---

नकरणत्वं यथाकथञ्चिद्विवक्षितं साक्षादिति न विरोधः । प्राचीनोक्तं खण्डयति । *एतेनेति* । उक्तभाष्यविरोधेनेत्यर्थः । *बहुत्ववाचिन इति* । बहुवाचिन इत्यर्थः । लाघवान्नियमशरीरान्तरमाह । * यद्वेति * । ननु यदीदं सूत्रं नियमार्थं तदा सङ्ख्येपुत्यवाचकयोरपि ग्रहणं प्राप्नोतीत्यत आह । * सङ्ख्येपुत्येति * । सङ्ख्यानकारणत्वपरम्परयापि न डतिमात्रस्यापि तु तदन्तस्येति सञ्ज्ञाविधावपि तदन्तविधिरित्याशयेनाह । *इत्यन्तेतीति* । *अत एव* । तदन्तस्य सञ्ज्ञास्त्वादेव ।

* करणादावृत्त्येति * । अन्यथा समानफलकानेकसञ्ज्ञाकरणस्याप्रामाणिकत्वमितिन्यायविरोधः स्यात् । ननु सञ्ज्ञात्रयकरणावसमानफलकत्वं कल्प्यत इत्यत आह । * तेन हन्तीति * । समानफलकत्वाकल्पनेऽप्यतिप्रसङ्गः स्यादेवेति भावः । लोपसञ्ज्ञया आसां समावेशमुपपादयति । * अन्यदेशस्थत्वेनेति * ।

* गौणे नेति * । प्रियषड्भ्यान इत्यत्र नेत्यर्थः । षड्भ्य इत्यन्तद्ध्यते परमपञ्चेत्यत्र कथमिति इत्यत आह । * परमपञ्चेत्यादाविति * । * स्पष्टञ्चेदमिति * । उपसर्जनप्रतिषेधखण्डनाय सञ्ज्ञाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्रूपाति । यथैव परमपञ्चेत्यत्र लुङ्न प्राप्नोति । पदप्रधान एव समास इत्यनेन । * प्रमाद

दाधोरिति च चरितार्थम् । स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति
भाष्यम् । प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवेति । न चैवं दाधर्त्ती
ति सूत्रे तेतिक्ते इति किं निपात्यते आत्मनेपदं नैतदस्ति अनुदात्तङित
इत्येव सिद्धं नियमार्थं तर्हि भविष्यत्यत्रैव यङ्लुगन्तस्य नान्यत्र वेभिदीती
त्युक्तम् । अस्य नियमत्वे तेनात्मनेपदं दुर्लभं ङित्त्वस्य प्रत्ययाप्रत्ययसा-
धारणत्वादिति वाच्यम् । आत्मनेपदमित्यस्यैव सिद्धान्त्युक्तित्वात्ततो वि
द्धार्थमिदमिति वार्त्तिकानुसारिणानुदात्तङित इत्येव सिद्धमिति शङ्किते तद-
नुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः । प्रत्ययलोपे
प्रत्ययवदिति सिद्धे लक्षणग्रहणं प्रत्ययनिमित्तकमेव न तु प्रत्ययस्थानिक-
मित्यर्थलाभार्थं तेन नखभिन्न इत्यादावैसादिकं नेत्येके । अतिदेशेनाहार्य-
तद्बुद्धिसम्पादनेऽप्युच्चारणाप्रसङ्गरूपपष्ठ्यर्थाभावान्नैसादीति तदर्थमित्यप-
रे । कार्यमिति । प्राधान्यात् कार्यातिदेशोऽयमिति भावः । इहापि परिवीरि-

---

इति * । तेन हि गृह्यमाणविभक्तेरित्यस्यैव व्याख्या कृता गृह्यमाणाना सम्ब
न्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या इत्यर्थः ।*यद्येवमिति*
गृह्यमाणाद्या विहिता विभक्तिरित्येव सम्बन्धममन्यमानस्य प्रश्नः । *अथ सम्ब
न्धो गृह्यत इत्युत्तरेऽभिप्राय इति* । परन्त्वस्य भाष्यग्रन्थस्य गृह्यमाणाद्विहि
तविभक्तेरित्यर्थः स्वारसिकः प्रतीयते । एवं सति परमपञ्चेत्यत्र लुङ् न प्राप्नोति ।
लोके गणनायामप्रसिद्धानाङ्ग्रहणम् । न हि परमपञ्चादयस्तथा प्रसिद्धा इति
प्रश्नः । सङ्ख्याप्रकारकप्रत्ययविशेष्यकप्रतीतिजनकत्वेन विशिष्टस्यापि पदस्य
सङ्ख्यात्वात्तस्यैव गणनायामप्रसिद्धानामेव ग्रहणमित्यत्र मानाभाव इत्युत्तरेऽभिप्रायः । अ
धिकमन्यत्र स्फुटम् । मा भूदिति । प्रत्ययपदं प्रत्ययत्वपर्याप्त्यधिकरणपरमिति
भावः । इदमेव प्रत्ययपदं प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्य गमकमिति यु-
क्तमेव । एतत्फलमाह । * एवञ्चेति * । प्रत्ययावयवेऽपि । प्रत्ययत्वव्यवहारस्य
युक्तत्वे साधकान्तरमाह ।*सात्पदेति*। अन्यथा साते सकारस्य प्रत्ययत्वाभा
वादेवाप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव । * तत्रैवेतीति * । तेन सुदृषत्प्रासाद इत्यत्र दी
र्घाभावः । न च गते हितमित्यादावकृत्वावच्छिन्ननिमित्तकेऽयादेशेऽतिव्याप्तिरत्वात्
स्थानिवत्त्वाभावादिदं विध्यर्थमिति शङ्क्यम् । अकृतस्यापि प्रत्ययासाधार
णत्वाभावात् । *प्रत्ययनिमित्तकमेवेति* । लक्षणशब्दस्य निमित्तपरत्वात् ।*इ
त्येके इति * । प्राञ्चः । *अपर इति * । सिद्धान्तिनः । ननु प्रत्ययनिमित्तकं का-
र्यं स्यादिति व्याख्याने प्रत्ययलोपसूत्रेणैव कार्यप्राप्तिर्वाच्या । एवं सति परिवी
रित्यत्र क्वेरत्र ङिपि सम्प्रसारणे कृते क्विपो लोपे प्रत्ययलोपशास्त्रेण तुर्दीर्घत्व
योः प्राप्तौ पर्यायस्तयोः स्यादेकवेशान्यत्वादत आह । * इहापीति * । प्रतिपादि-

ति शास्त्रपरिमितिनिषेधेन परत्वाद्दीर्घत्वं भविष्यतीति भाष्येण तृज्वत्सूत्रे शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात्परिनीरित्यत्र तुग्दीर्घौ पर्यायेण न । किं तु दीर्घएव परत्वात् । अन्यथानेनैवोभयोर्विधानात्परत्वाभावेन पर्यायो दुर्वार इति बोध्य, तदाह जसि चेति गुणे प्राप्ते इति । जसि चेति विहिते ऽनेन गुणे प्राप्त इत्यर्थः ।

न लुमता ॥ लुशब्दयुक्ता लुमन्तस्तदाह, लुगित्यादि । अङ्गकार्यमिति। लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यक यत्कार्यमाङ्गमनाङ्ग वेत्यर्थः । तेन पञ्चेत्यादौ पदसञ्ज्ञा भवति । राजपुरुषादौ भसञ्ज्ञा च न । अङ्गसञ्ज्ञा तु यथोद्देशत्वात्प्रत्ययसत्ताकाले जाता तिष्ठत्येव । तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा । तस्याः लब्धाङ्गसञ्ज्ञकार्यत्वाभावेन निषेधाप्रवृत्ते' । स्पष्टश्चेद युवोरनाकौ इत्यत्र कैयटे । न

---

तामिति शेष । * अन्यथा * । तद्देशस्थत्वानङ्गीकारे ।

सूत्रस्य सिद्धान्तार्थमाह । *लुगित्यादि* । *लब्धाङ्गसञ्ज्ञकेति * । लुप्तप्रत्ययनिरूपितेत्यादि । * तेन * । लुप्तप्रत्यये परतो य पूर्वस्तदुद्देश्यकत्वनिवेशेन। भसञ्ज्ञा च नेति * । सुप्तिङिति पदसञ्ज्ञा यथा समुदायोद्देश्यिका तथा भसञ्ज्ञा न समुदायोद्देशिका किन्तु लुप्तप्रत्यये परतो य पूर्वस्तदुद्देश्यिकेति भसञ्ज्ञाया प्रत्ययलक्षणप्रतिषेध इति भसञ्ज्ञा नेत्यर्थ । अङ्गसञ्ज्ञा यथा लुप्तेपि प्रत्यये भवति तथोपपादयति । * अङ्गसञ्ज्ञा त्विति* । एवञ्चाङ्गसञ्ज्ञाया नलुमतेतिनिषेधाभावादङ्गसञ्ज्ञाया लब्धाङ्गसञ्ज्ञकोद्देश्यकभस्त्वे प्रत्ययलक्षणप्रतिषेधाङ्गत्वे कर्त्तव्ये निषेध प्रवर्त्तते । * कैयट इति । * तत्र हि युवुशब्दान्तस्याङ्गस्यानाकौ भवत इत्यर्थे नन्दनप्रिय कारकप्रिय इत्यत्र वाक्यस्य विभज्यान्वाख्याने नन्दनशब्दात्कारकशब्दाच्च या विभक्तिस्तस्या सुपोधातुरिति लुकि कृते ऽनाकौ न प्राप्नुत इति पूर्वपक्षे अङ्गावयवोर्युवु इत्येतयोरनाकौ भवत इत्यर्थाभिप्रायेण मा भूत यासौ सामासिकी विभक्तिस्तस्या, यासौ समासाद्विभक्तिस्तस्या भविष्यत इति समाधाने कृते यत्र तर्हि समासाद्विभक्तिर्नास्ति । नन्दनदाधि । कारकदधि । इति पुन शङ्कायामेवन्तर्हि न वा परनिमित्त सञ्ज्ञा च प्रत्ययलक्षणे । न चेह परनिमित्तमाश्रीयते अस्मिन्परत युवोरनाकौ भवत इति । किन्तर्हि अङ्गस्य युवोरनाकौ भवत अङ्गसंज्ञा भवति प्रत्ययलक्षणेनेति भाष्ये उक्तम् । अत्र कैयट । न हीह विभक्ति प्रत्ययान्तर वा निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनायोर्नास्तीति नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्यायमविषय । केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते । अस्ति च प्रत्ययलक्षणेनाङ्गसञ्ज्ञा । नहि तस्या विधीयमानाया नलुमताङ्गस्येति प्रतिषेध प्रवर्त्तने लब्धाङ्गसञ्ज्ञकस्य कार्यान्तरे

लुमतेत्यस्यानित्यत्वादङ्गसञ्ज्ञायामप्रवृत्तिरिति तन्नावेति काश्चित्। अत एव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमिति तद्धितार्थेति समासे उपो ऽध्यर्द्धेति लुकि लुक्तद्धितेति ङीप्रत्ययलुकि पञ्चक्रोष्टृ इत्यत्र तृज्वत्त्वम्। तदुक्तं भाष्ये तृज्वदिति सूत्रे न चापरं निमित्तमाश्रीयते किं तर्ह्यङ्गस्य क्रोष्टुस्तृज्वदिति भसञ्ज्ञा च भवति प्रत्ययलक्षणेनेति। न चान्तरङ्गत्वात् तृज्वत्त्वेऽपि परनिमित्ताश्रयणमिति पञ्चक्रोष्टृइत्यस्यासिद्धिरिति वाच्यम्। ऋरादित्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेऽपि अङ्गसञ्ज्ञाद्वारेदत्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव लिट्यभ्यासस्येति सूत्रस्थभाष्यप्रामाण्यात्। नियमतः परबुद्धेः पूर्वव्याप्तितया परनिमित्तत्वात्। अत एव चर्करीत्यजर्घा इत्यादौ तत्प्रवृत्तिः। आचिक्षुइत्यादावजादिप्रत्ययइत्यर्थस्तु अङ्गस्येति पञ्चम्या निमित्ते इत्यध्याहारेण तस्य विशेषतया यथाकथञ्चिदुपपाद्यः। आकडाराधिकारस्थेषु कार्यकालत्वस्याभावाच्च। एतेन कार्यकालपक्षेऽपि क्रोष्टु-

---

विधानार्थे स प्रतिषेधः प्रवर्तते न चाङ्गमधाऽङ्गस्य कार्यमिति प्रतिषेधाभाव इति। अत्र कैयटइत्यनेनारुचिः सूचिता। नलुमता तस्मिन्निति यान्त्रिकरीत्याङ्गपदं पूर्वत्वोपलक्षणमित्यङ्गसञ्ज्ञायामपि प्रतिषेधः प्राप्नोतीति तस्मान्नलुमतेति निषेधानित्यत्वेनाङ्गसञ्ज्ञा भवतीति भाष्याशय वक्तव्य। * अत एव *। न लुमतेतिनिषेधानित्यत्वादेव। *ङीप्रत्ययलुकीति*। न चात्र स्ते तृज्वत्त्वे ऋदन्तत्वविरहात् ङीप्रत्यय एव कथमिति शङ्क्यम्॥ पिप्पल्यादिगण पृथिवीक्रोष्टुमातामहपितामहेति निपाठात्तृज्वद्भावात्पूर्वमपि ङीप्रत्ययप्रवृत्ते। ननु तृज्वत्सूत्रस्थभाष्योक्तरीत्या सञ्ज्ञाकृत्येत्यस्योपस्थितिस्तस्य परनिमित्तकत्वञ्च स्यात्। एवञ्चोरदत्वस्य परनिमित्तकत्वाभावात्स्थानिवद्भावस्याप्राप्तया ययश्चेत्यत्र यकारस्य न सम्प्रसारणं इति सम्प्रसारणनिषेधो न स्यादिति तस्यावश्यं परनिमित्तकत्वमाश्रयणीयमिति पञ्चक्रोष्टृ इत्यस्यासिद्धिरित्याशयेन शङ्कते। * न चेति। * अङ्गसञ्ज्ञाद्वारेति *। अङ्गस्येत्यनेन सह तस्य सूत्रस्यैकवाक्यतयाङ्गत्वज्ञानस्य वाक्यार्थज्ञाने कारणतयाङ्गत्वज्ञानस्य परप्रत्ययज्ञानप्रयोज्यत्वाददत्वस्यापि परप्रयोज्यत्वेन स्थानिवद्भावप्रवृत्तिरित्येव भाष्यप्रामाण्यात्कल्प्यते न तृज्वत्त्वस्य परनिमित्तकत्वं साक्षादिति भाष्ययोरविरोध इति भाव। एतन्मते च यस्मात्प्रत्यये परतो य पूर्वा तदाङ्गसञ्ज्ञक इत्यर्थो न किन्तु तादृशप्रत्ययपूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तस्मिन् कार्ये निषेध इत्येव विवक्षितम्। * अत एव *। अनित्यत्वान्नलुमतेतिनिषेधाप्रवृत्त्याऽङ्गसञ्ज्ञासत्वादेव। * यथाकथञ्चिदिति। * शब्दाध्याहारेणोपपादनाक्लेश। अत्र कार्यकालपक्षमाश्रित्य ययश्चेत्यस्य सिद्धि कैयटेनोक्ता सा नोचितेत्याशयेनाह। * आकडारादीति *। कार्यकाल

शब्दः प्रत्यये ऽङ्गसञ्ज्ञो भवति, अङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रियामित्येवार्थः । उरदित्यादौ तु आवृत्त्याऽत्वं प्रति निमित्ततापि वक्तव्येति लक्ष्यानुरोधान्न तथा प्रकृते लक्ष्यानुरोधादेवेति तदाशयः । पदैकवाक्यतयान्वयस्तु सञ्ज्ञासूत्राणान्दुर्लभ इत्यन्यत्र निरूपितम् । चर्करीत्यजर्घा इत्यादौ तु न लुमतेति निषेधानित्यत्वादप्रत्यात्तिसृपो इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु भ्रूवे हित भ्रूहितमित्यादावुवङापत्त्या चिन्त्यमित्यपास्तम् ॥ त्रिपुसरूपा इति । ङेप्रथमयोरिति सूत्रे युष्मानित्यादौ तस्माच्छसो न इत्युपन्यासपरेण भाष्येण स्वमोर्नपुंसकादिति सूत्रे शिशीनुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन तद्भाष्येण च न पठितेति निषेधेन च लिङ्गसत्तावोधनेपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । साम आकमिति सूत्रस्थस्यालिङ्गे युष्मदस्मदी इति भाष्यस्य पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयतइत्यर्थ इति दिक् ।

त्रेस्त्रयः ॥ अत्र न सान्तो निजान्त्रयाणामिति निर्देशात् । त्रेस्त्रयङ् न कृतः । त्रयङ् यीत्यादाविवोच्चारणार्थत्वशङ्कावारणाय । के चिदिति । आ

---

स्वमभ्युपेत्याप्याह । * वस्तुतस्त्विति * । एतेन पदैकवाक्यतयाऽन्वयासम्भवेन । * आवृत्त्या * । अङ्गस्येत्यस्यावृत्त्या । * प्रकृते * । युवोरनाकौ तृज्वत्क्रोष्टुरित्यत्र च । *लक्ष्यानुरोधात्* । रुन्दनदाधि । कारकदाधि । पञ्चक्रोष्टृ इत्यादिलक्ष्यानुरोधादित्यर्थः । * तदाशय * । युवोरित्यादिसूत्रस्थभाष्याशय । ननूकारीत्योरन्त्यस्य परनिमित्तकत्वे चर्करीतीत्यादावत्र कथमत आह । * चर्करीत्यत्रेति * । चर्करीति । अजर्घा इत्यस्य सिध्यर्थमन्यकल्पितमप्यस्तीत्यर्थः । * अङ्गाक्षिप्तेति * । पदैकवाक्यताऽन्वयो न सम्भवतीत्याशयेनाह । * अपास्तमिति * । किञ्चाङ्गसञ्ज्ञाकारकपरम्परयोरदित्यस्य परनिमित्तकतया भाष्योक्तप्रयोजननिर्वाहाद्भाष्यानुक्ताङ्गाक्षिप्तकल्पनङ्गौरवग्रस्तमित्यपि बोध्यम् । युष्मदादीनान्त्रिषु सारूप्यमात्रमुक्तं न स्वलिङ्गत्वमत एवालिङ्गाव्ययसन्निधानं एवैषाभिरूपणञ्च कृतमित्याशयेनाह । * ङेप्रथमयोरमिति सूत्रइत्यादि * । साम आकमितिसूत्रस्थभाष्यविरोधम्परिहरति । * साम आकमितीति * ।

* शङ्कावारणायेति * । न च निजान्त्रयाणामितिनिर्देशात्सकारान्तत्वशङ्काया इवास्या अप्याशङ्काया वारणम्भविष्यतीति वाच्यम् । अस्य ग्रन्थस्य दोषोपलक्षणत्वात् । तेन परमत्रिशब्दादाख्यानार्थे णिचि टिलोपे तत क्वौ णिलोपे च कृते क्वौ लुप्तमिति स्थानिवत्त्वनिषेधे निर्दिश्यमानावयवत्रशब्दस्य त्रयादेशे परमत्रयाणामित्यत्रान्त्यरेफस्यादेशापत्तिर्दोषो बोध्य । * केचिदितीति * ।

मि सर्वनाम्न इतिसाहचर्यादिति भाव । वस्तुतस्त्विति । साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावाच्चेति भावः । न च गौणमुख्यन्यायेनात्र नेति वाच्यम् । अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतररूपगौणत्वाभावात् । अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता इतरविशेषणतामात्रेण तत्त्वाभावात् । पदकार्यएव तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः । द्विशब्दो नित्यन्द्विवचनान्त इति । सङ्ख्यापरत्वेपीत्यर्थः । अत एव कस्य द्वित्वे इत्यर्थे कस्य द्वयोरिति भाष्ये बहुष्विति सूत्रे प्रयुक्तम् ।

त्यदादी ॥ अष्टन इत्यतो विभक्तावित्यनुवर्त्तते, तत्फलं तत्कुलम् । सोर्लुक्यत्व न । इष्टिरिति । भाष्यकारस्येति भावः । द्विपर्यन्तानां किमिति । युष्मदस्मदोरात्त्वयत्वलोपैर्बाधात्किम' कादेशविधानाच्च प्रश्नः । भवान्भवन्तावित्यभ्युच्चयाय । डौ तु सवर्णदीर्घ इति । इद संभावनामात्रेण । एषा डौ ईदूतौ च सप्तम्यर्थे इति सूत्रस्थभाष्यप्रामाण्येनानभिधानात् । क्विबन्तवातेति । ईत्वमकारादाविति वार्त्तिकस्य पावान इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च फलैक्यायेदृशेभ्यः क्विपो ऽन-

---

प्रसादकारादय इत्यर्थ । तेषामेव शङ्कान्तरान्निरस्यति । * न चेति * । अत एव * । गौणमुख्यपरिभाषायास्तादृशस्यैव गौणत्वस्य गौणपदार्थत्वादेव । त चैयोपपादयति । * इतरेति * । एतच्च गौणमुख्यपरिभाषाप्रवृत्तिमनभ्युपेत्य वस्तुतस्तु तस्या सम्भव एव नेत्याह । *पदकार्य एवेति* । *अत एव* । नित्यद्विवचनान्तत्वादेव । अत नित्यपदोपादानेन द्विशब्दप्रकृतिकसुपो द्वित्वार्थद्वित्वानुवादकत्वमेवेति नियमो बोध्यते तत्र द्वित्वमप्रधानम्प्रधान वेत्यन्यदेतत् ।

* अभ्युच्चयायेति * । सम्भावितदोषाणामानारूपत्वसूचनाय । तेन भवानित्यस्य द्विपर्यन्तानामिति नियमास्वीकारेपि व्याप्तिपक्षेऽत्वसन्तेति सूत्रे प्रथच्छदोषस्थितिसामर्थ्यात्सौ त्यदाद्यत्वाप्रवृत्तिकल्पनेन सिद्धिसम्भवेपि न प्रन्थासङ्गति । अत एवास्वरसादाह । * भवन्ताविति * । भाष्यप्रामाण्येनेति* । तथापि सरसी यदीत्यनेन कथनेन । * ईदृशेभ्य * । आदन्तेभ्य । * क्विपोऽनभिधानमिति * । अयम्भाव । जनसनखनामिति सूत्रे धियो धिय पियो पिय इत्यादावियडादेशो कर्त्तव्ये ईत्वस्यासिद्धत्वम्प्राप्नोतीत्याशङ्क्य नैतदीत्वङ्क्विन्ताहि व्याप्यो सम्प्रसारणमेतदित्युक्तम् । अभ्युपेत्यापीत्व व्याश्रयत्वादसिद्धत्वन्न भविष्यतीति तु परत्रोक्तम् । घुमास्थेतिसूत्रे च धृतपायान । वसापावान इत्यत्र पा पातो क्वनिपि सतीत्वम्प्राप्तमिति तत्प्राप्त्यर्थमीत्वे पकारप्रतिषेधो वक्तव्य इत्युक्त्वा यदीत्वे पकारप्रतिषेध इत्युच्यते कथन्धीवरी पीवरीत्याशङ्क्य नैतदीत्वं

भिधानमावश्यकमिति धीवरीपीवरीत्यादि ध्याप्योः समसारणञ्च क्विप् ध्वनिप् च नेत्यर्थकाञ्जनसनखनासञ्जलोर्घुमास्थागापेति सूत्रभाष्यपर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धन्धीध्र्यायतेर्दधातेर्वेति क्विप्चीति वार्त्तिकस्थभाष्ये दधातेर्वेत्युक्तिरेकदेशिन'। शस्था इत्यत्र विजेवेति न दोषः। मीङ् माने इतीकारान्तात् क्विबित्येके । वातममीर्नि'शृङ्गी मृगाकृतिर्जन्तुविशेषः। बहुश्रेयसीति। ईयसो बहुव्रीहेर्नेति निषेधान्नोपसर्जनहस्वः।

यूरुया ॥ दीर्घयोरेव ग्रहणं व्याख्यानात् । वाछन्दसीति पूर्वसवर्ण-

---

किन्तर्हि ध्याप्यो सम्प्रसारणमेतदित्युक्तम। एतस्मिन्वार्त्तिके यदीत्वे वकारप्रतिषेध इति एतस्य प्रत्याख्यानस्य तत्प्रयोजनस्य धृतपावान इत्यादेर्वनिपा साधनरूपस्य भाष्यस्य च फलैक्यायानभिधानङ्कल्पनीयम्। ईत्वे वकारप्रतिषेध इति सामान्यत एवोक्त तत्सत्वे वकारादिप्रत्ययसामान्ये प्रतिषेधे क्विप्यपि प्रतिषेध प्राप्नोति। वनिपा तत्साध्यप्रयोजनसाधनरूपप्रत्याख्यानपक्षे क्विपीत्यम्प्राप्नोतीति फलभेद स्यादिति। अन्येय रीत्या धीवर्यादीनामप्यनभिधानम्प्राप्नोतीत्यत आह। * धीवरी पीवरीत्यादीति * । आदिना धीरित्यादिसंग्रह । अत एव क्विप्च क्वनिप्च वेनेतिसङ्गच्छते। पर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धमिति। अत्र पर्यालोचनया सिद्धादित्यनेनैतादृगानुपूर्वीकवार्त्तिकानुपलम्भेपि न क्षतिरिति ध्वनितम्। जनसनेति सूत्रे धियौ धिय इत्यत्रेयङादेशे कर्त्तव्ये धाधातो क्विपि यदीत्यन्तस्यासिद्धत्वम्प्राप्नोतीत्याशङ्क्य नैतदीत्वाङ्किन्तर्हि ध्याप्यो सम्प्रसारणमेतदित्युक्तम्। एवङ् घुमास्थेतिसूत्रे पावान इत्यत्रेत्वव्यावृत्त्यर्थमवकारादावितिवार्त्तिकस्वीकारे कथन्धीवरी पीवरीति प्रश्ने नैतदीत्वमित्युक्त्वा ध्याप्यो सम्प्रसारणमेतदित्युक्त तेन सिद्धादित्यर्थ । सूत्रभाष्य इत्यस्य सूत्रयोर्भाष्य इत्यर्थ । * वार्त्तिकादिति * । ध्याप्यो सम्प्रसारणञ्चेत्यत । ननु धीर्ध्यायतेर्दधातेरिति भाष्यविरोध इत्यत आह । * धीर्ध्यायतेरित्यादि *। ननु शास्थ शब्दे स्थ च चेतिसूत्रस्थचकारेण क्विपि श्ते ईत्वमवकारादावितिवार्त्तिकप्रत्याख्यानपक्षे इत्त्वापत्तिरित्यत आह । * शस्था इत्यत्रेति *। एवञ्च तत्रत्य क्विप्पद क्विविनाचरतीति क्विप् विजित्यर्थकमिति भाव । सध्येष्टा इत्यत्राप्येवमेव। यदि वातप्रमीशब्दोऽपि प्रामाणिकस्तर्हि सोऽन्यथा साधनीय इति मनसि निधायाह। * मीङ् मान इति *।

* व्याख्यानादिति * । किम्पुनरिदन्दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोरिति विकल्प्य दीर्घग्रहणपक्षे भ्रू इत्यत्र पूर्वसवर्णदीर्घस्य ङितिह्रस्वश्चेति सूत्रे सामानाधिकरण्यस्य चानुपपत्तिमुद्भाव्य ह्रस्वग्रहणे शकटियन्धुरित्यत्र नदी बन्धुर्नीति पूर्वपदान्तोदात्तस्य बहुशकटिरित्यत्र नद्यृतश्चेति कप-प्रसिञ्चोक्त्वा दीर्घयोर्ग्रहण

दीर्घः । यू किम् । मात्रे । आण्नद्या इति न । स्त्रियमाचक्षाते स्त्र्याख्यौ भ्रूल-
विभुजादित्वात् कः । स्त्र्याख्यावित्युपस्थितस्त्रीवाचकशब्दस्य विशेषणत्वा-
त्तदन्तविधिरित्याह, ईदूदन्ताविति । आच्छीनद्योरित्यादौ नदीशब्दस्य
तदवयवे लक्षणा बोध्या । आख्याग्रहणान्नित्यत्वलाभस्तदाह नित्यस्त्रीलि-
ङ्गाविति । तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः । नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तैक्ये
लिङ्गान्तरविशिष्टार्थानभिधायकत्वम् । ङ्यन्तकुमार्यादीनाङ्क्वापि निर्दिष्टेन नि
लिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय प्रवृत्तिनिमित्तैक्ये इति ।
नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यात्, अत आह । प्रथमेति । अर्था
न्तरसंक्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमे ऽपि नदी
त्वं वक्तव्यमित्यर्थः । यथोद्देशे पूर्वमदृष्टसत्तामादायैव कार्यं कार्यकालपक्षेपि

---

मिति सिद्धान्तितम् । पूर्वसवर्णदीर्घस्तु दीर्घाज्जसि चेत्यत्र वा च्छन्दसीत्यनुवृत्त्या
साधित । ङिति ह्रस्वश्चेति सूत्रे तु य्वो वा ह्रस्वावित्येव वैयधिकरण्या न्वयेन साधि
त इत्यवरूपाख्यया गादित्यर्थ । *मात्र इति* । जननीवाचकोऽयम् । कर्मण्य-
णुपदाद्याद्यारणायाह । * भ्रूलविभुजादित्वात्क इति * । तत्पदादिघटकेकाराद्वेर
वाचकत्वाभ्युपगमादिघटकस्यापि द्योतकतया तस्याप्यवाचकतया वर्णसंज्ञापक्षो
न युक्त इत्यपि बोध्यम् । तदन्तसंज्ञायामाच्छीनद्योरित्यत्र भाष्यामनुपपत्तिस्परि-
हरति । * आच्छीनद्योरित्यादाविति * । * ग्रामण्यादेर्व्यावृत्तिरिति * । एत
स्य प्रवृत्तिनिमित्तस्य ग्रामकर्मकनयनकर्तृत्वस्य पुंसाधारणत्वेन लिङ्गान्तरविशिष्टा-
र्थानभिधायकत्वाभावात् । * प्रवृत्तिनिमित्तैक्ये सतीति * । इदञ्च लिङ्गान्तर-
विशिष्टार्थानभिधायकत्वपदार्थकुक्षिप्रवृत्तिप्रतियोगिविशेषणम् । तथा च लिङ्गा
न्तरविशिष्टार्थस्य येन रूपेणाभिधायकं तेनैव रूपेण स्त्र्यभिधायकं यत्तस्य न नि
त्यस्त्रीलिङ्गत्व व्यवहार । स्वजन्यबोधीयलिङ्गान्तरविशिष्टार्थनिष्ठविशेष्यताव
च्छेदकावच्छिन्नस्त्रीनिष्ठविशेष्यताशालिशाब्दबोधजनकं यत्ताद्दृशशब्दत्वं नित्य-
स्त्रीलिङ्गत्वमिति फलितम् । * क्वचित् निर्दिष्टेनेति * । यदा केन चित्पुरुषेण
स्त्रीमात्रविषयकबोधेच्छया खलपूशब्दः प्रयुक्तस्तेन च सामग्रीविशेषात्त मात्र
विषयक एव बोधो जनितस्तस्य च लिङ्गान्तरविशिष्टार्थानभिधायकत्वान्नदी
त्ववारणाय लिङ्गान्तरविशिष्टार्थाभिधायकतावच्छेदकधर्मशून्यत्वं वक्तव्यमेवञ्च
ङ्यन्तकुमार्यादीनां क्यङन्तसमानानुपूर्वीकत्वान्नदीत्वं न स्यादतः प्रवृत्तिनिमि
त्तैक्य इत्युपात्तमिति भावः * नन्वेवमिति * । एतादृशस्य नित्यस्त्रीत्वस्य स्वी
कारे बहुश्रेयस्यादिघटकसकलपदानामन्यपदार्थबोधकतया एतस्य लिङ्गान्तरविशिष्टा
र्थाभिधायकत्वात् । * तत्र * । श्रेयसीशब्दस्य । * यथोद्देश इति * । भ-

कुमारीत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा । समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः । तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम् । तदुक्तं भाष्ये अवयवस्त्रीविषयत्वात्सिद्धमवयवो, ऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यतीति आकडारस्थसञ्ज्ञानां कार्यकालत्वाभावाद् अन्यथा तत्तद्विध्येकवाक्यत्वापत्त्या तयोः कथं बाध्यबाधकभावः स्यादिति बोध्यमित्यपि केचित् ।

---

विष्यतिकिञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेण सञ्ज्ञाप्रवृत्ते स्तस्मिन्पक्षे स्वीकारात् कुमारीत्यादौ । कुमारीमिच्छन्कुमारीवाचरन्नित्येवसिद्धकुमारीशब्दादौ । * अवयवस्त्रीविषयत्वादिति * । अत्रावयवशब्दो वृत्तिप्रकृतिशब्दपरः । तेन क्यजन्ते न दोषः । केचित्तु एवं सत्यग्न्यादिशब्दानामाचारक्विप्प्रकृतिकर्तृविशेषणतया स्त्रियां वृत्तौ तस्माच्छसो न इति नत्वापत्तिस्तथा शकट्यादिस्त्रीलिङ्गशब्दानामुक्तरीत्या पुंवृत्तावाडो नाभावस्याप्रियामिति निषेधादनापत्तिरिति चिन्त्यमेतदित्याहुः । तन्न । तस्माच्छस इति सूत्रस्य पुमर्थप्रतिपादकशब्दस्य शस्प्रकृतित्वे शसः तस्य पूर्वसवर्णदीर्घात्परस्य नत्वमित्यर्थादत्र नत्वप्राप्तेरभावात् । एवमाङो नेत्यस्यापि आङो यतो विधानं तच्छब्देरस्त्रियां विद्यमाना परस्य नाभाव इत्यर्थः स्यात्तथा चोक्तरीत्या शकटीशब्दस्य पुंवृत्तौ नाभावोऽपीष्ट एवेति दिक् । यदुक्तं कार्यकालपक्षेऽपीति तद् दूषयति । *आकडारस्थसञ्ज्ञानामिति * * कथं बाध्यबाधकभाव इति । तत्पक्षे विधिप्रदेशरूपैकदेशगतत्वेन समानाश्रयौर्वापर्याभावेन बाध्यबाधकभावो न स्यादिति भावः । * केचिदिति * । अनारब्धविधीजन्तु न तेन ग्रन्थेन नदीसञ्ज्ञाविधायकशास्त्रस्य तत्कार्यविधायकशास्त्रैकवाक्यताऽभिप्रेता किन्तु यदा नदीत्वप्रयुक्तकार्यप्रवृत्तिश्चिकीर्षिता तस्मिन्काले नदीसञ्ज्ञा त्वरया सा कल्पनीया न तु भविष्यति किञ्चिदितिन्यायेन पूर्वं नदीत्वप्रवृत्तिरेतावतापि नद्यन्तकार्यस्य प्रवृत्तिर्भविष्यतीति नानुपपत्तिरिति । यत्तु केचिदितिप्रतीकमुपादाय सञ्ज्ञायाः कार्यार्थमन्यदेशगमनेऽपि न स्वदेशीयस्वत्यागो व्यवहारार्थं तत्तद्देशगतानां व्यवहर्तृणामित्यस्यास्वरस इति । तन्न अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयतीति भाष्यपङ्क्तिव्याख्यानावसरे कश्चित्प्रदीपवत् इति कैयटव्याख्यानेन परिभाषाविषय एव स्वदेशात्यागेन कार्यसम्पादनमिति कल्पना । सञ्ज्ञाविषये तु कार्यकालपक्षेऽपाद्रिश्य परेव प्रगृह्यसञ्ज्ञेति प्रगृह्यसञ्ज्ञायाः परत्वमप्यादसो मादिति सूत्रभाष्यप्रामाण्येन सञ्ज्ञाविषये स्वदेशत्यागेन व्यवस्थाया भाष्यसम्मतत्वात् ।

हे बहुश्रेयसीति । ह्रस्वे कृते गुणस्तु न । प्रक्रियालाघवायाम्बार्थानां ह्रस्वः, ह्रस्वनद्योर्गुण, इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात् । जसिचेत्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम् । अम्बार्थानामपि गुणस्तु वक्तुमशक्यः । "अनः क्लीबञ्जले शोके मातृस्यन्दनयोरपी"ति रभसादुक्तानःशब्दस्याम्बार्थत्वेन गुणापत्तेः । ह्रस्वग्रहणे त्वच इत्युपस्थित्याजन्ताम्बार्थग्रहणान्न दोषः, तस्य नपुंसकत्वेपि हे वारे इतिवत्

---

यत्तु बहुश्रेयसीत्यत्र ह्रस्वे गुणः स्यादिति कश्चिदाह । तद्दूषयति । * ह्रस्वे कृत इति* । *ह्रस्वविधानसामर्थ्यादिति*। एवञ्च ह्रस्वपदं स्वाभाविकह्रस्वपरं न भविष्यतीति भावः । * भाष्ये स्पष्टमिति * । एकदेशस्यापि क्व चिदनुवृत्तिर्भवतीति भाष्ये स्पष्टम । यथा ग्रामहायनान्ताच्चेति सूत्रे सङ्ख्यादेरित्यनुवर्तते न त्वव्ययादेरिति निवृत्तमित्युक्तम । ननु मातृवाचकस्याप्यनःशब्दस्य नपुंसकलिङ्गत्वात्स्वमोर्लुका लुप्तत्वेन न गुणापत्तिरित्यत आह । * तस्य नपुंसकत्वेपीति * । ननु ह्रस्वपदस्य स्वाभाविकह्रस्वपरत्वे पर्जन्यवल्लक्षणन्यायेन मातृशब्देऽपि तस्य प्रवृत्तिः स्यात् । तथा च हे मातरित्यत्र गुणानापत्तिरत आह ।*भयमिति*। अन्ये तु नलुमताङ्गस्येतिनिषेधस्यानित्यत्वेऽप्यनित्यवचनस्यौत्सर्गिकी प्रवृत्तिर्लक्ष्यानुसारादप्रवृत्तिरित्येव व्यवस्था सर्वजनसम्मता सा च लक्ष्यस्य सम्प्रतिपन्नत्वे भवति । प्रकृते तु गुणादर्शनेनानित्यस्याप्यप्रवृत्तौ न मानमिति चिन्त्यमेतत् । एवङ्गुणश्रुत्यैकपरिभाषाप्रवृत्तिरित्यपि चिन्त्यम् । अम्बार्थनद्यो । क्रमादसम्भवव्यभिचारयोरभावेनैकपरिभाषाया इहानुपस्थापनादित्याहु । अत्रेदं वक्तव्यम् । पक्षे गुणः स्यादेवेति यत्तदनित्यस्य सामान्यतः प्रवृत्तिमभ्युपेत्य । यत्तु-तस्तु गुणइत्यनुक्त्वा ह्रस्वपदोपादानमिकपरिभाषानुपस्थित्यर्थमेव । यदुक्तमम्बार्थनद्यो सम्भवव्यभिचाराभाव इति । तच्चिन्त्यम् । हे देवीत्यत्राम्बार्थके सम्भवस्य हे अम्बेत्यत्र व्यभिचारस्य सम्भवात् । एवं सत्यम्बेति न सिध्यतीत्येव दूषणनिर्भर । न चेकपरिभाषोपस्थित्याम्बार्थकस्येगन्तस्यैव चेद् गुणः स्यात्तर्हि नदीपदोपादानमनर्थकं स्यादिति वाच्यम् । "अम्बार्थेभिन्ननद्यन्तस्य गुणविधायकत्वेन चारितार्थ्यात् । न चेकपरिभाषयेगन्ताम्बार्थकस्य ग्रहणं नदीपदोपादानेनैव सिद्धेऽम्बार्थग्रहणं व्यर्थमिति वाच्यम् । मातरमतिक्रान्तः कुलमतिमातृ तस्य सम्बोधनं हेऽतिमातरित्यत्रानःशब्दस्येव नलुमताङ्गस्येति निषेधानित्यत्वेन गुणसम्पादकत्वेनाम्बार्थग्रहणस्य चारितार्थ्यात् । यदपि नदीसाहचर्यात्स्त्रीलिङ्गस्यैवाम्बार्थस्य ग्रहणेनानःशब्दे क्लीबे न दोष इति तदपि न । साहचर्यपरिभाषाप्रवृत्तिर्यत्रकारे इगन्तत्वेनापि नदीसाहचर्यसम्भवान्मातृशब्देऽम्बार्थके एव स्या

पक्षे गुणः स्यादेव, गुणश्रुत्येत्परिभाषोपस्थितौ न्यम्येत्यादावप्यनापत्तेः । अथ ह्रस्वोऽनन्तरस्येति न्यायाद् ह्रस्वस्य गुण इत्यस्यैव बाधकत्वेन मातरि-त्यत्र ऋतोऽङीति गुणो भवत्येवेति चेत् ।

आद्य ॥ न माङ्योग इति सूत्रस्थभाष्योक्तेऽप्यथेति न्याये तु वृद्धिरेचीति बोध्यम् । अयाद् तु यत्तुमनाययः । अस्वपौहृताभित्यत्र वृद्धिवारणायादेश्चेत्यत्र धातोरित्यपकर्षेण वृद्ध्यनापत्तेः, । वृद्धिरेचीत्यस्य तु पररूपबाधकमिति बोध्यम् । ङेरिति सप्तम्येकवचन व्याख्यानात् । इह परत्वादिति । सकृद्गतिन्यायाश्रयणादिति भाव । स्पष्टञ्चेद ह्रस्वनद्याप इत्यत्र भाष्ये । यद्यपीह ऽपवादो नद्या सर्वथानवकाशत्वात् । अपवादो नुम्दीर्घत्वस्येति दीर्घोऽपित्विति सूत्रभाष्ये उक्तत्वेनागमादेशयोरपि तत्त्वसत्त्वात्, तथापि अनवकाशत्वेन बाधेऽपवादप्रवृत्त्यानन्तरमुत्सर्गप्रवृत्त्या न दोष. । अत एव न गणेरीत्वमपवादत्वाद्धलादिःशेष बाधते किं तर्ह्यनवकाशत्वादिति गुणो यङ्लुकोरिति सूत्रभाष्य उक्तम् । पाद पदिति सूत्रस्थ शब्दान्तर

---

प्रत्ययस्थेत्यादाविति साहचर्यपरिभाषया अनित्यत्वात्प्रकृतेऽप्रवृत्तिरित्येवाभिमतमिति दिक् । *गुणो भवत्येवेति* । इदञ्च ह्रस्वविधानस्य सामान्यापेक्षज्ञापकत्वाभिप्रायेण । यदि तु सम्बुद्धिनिमित्तकगुणस्यैवाप्रवृत्तिकल्पन तदा तु न दोष इति दिगित्यनेन सूचितम् ।

* अम्यर्पो ह्रस्वस्त्रियत्रेति* । स्यपेर्लङ् । सिप् । बहुगार्ग्यगालवयोरित्यद् । शप्लुक् । तस्य सत्वम् । ह्रदि चेत्युत्वम् । अथाद्गुणस्याधिरत्र ऽन्धेति वृद्धिप्राप्नोति । न चान्तरङ्गाया वृद्धौ बहिरङ्गत्वोत्वस्यासिद्धत्वं शङ्क्यम् । नाजानन्तर्यपरिभाषया निषेधात् । * पररूपमिति * । अतो गुण इत्यनेन । न चाङ्विधानसामर्थ्यान्न पररूपमिति वाच्यम् । ङेराम्नि कृते नुड्बाधकतयाऽस्य चरितार्थत्वात् । यत्तु ह्रस्वनद्याप इतिसूत्रानन्तर ङेर्नित्येव वक्तव्यादिति चिन्त्यमेतदिति । तदेव चिन्त्यम् । एव सति षट्चतुर्भ्य इत्यत्रापि नकारसम्बन्धापत्तौ विधिनिषेधोभयसामर्थ्याद्विकल्पापत्ते । विधिप्रकरणान्तरस्य तथा पाठे ग्रामण्योरित्यस्यापि निषेधसम्भावना स्यात् । * व्याख्यानादिति * । व्यवस्थायामित्यादिर्निर्देशमूलत्वात् । नद्याम आडपवादत्वेन तस्मिन्कृते पश्चमाडिति कस्य चिच्छङ्काया व्यवस्थापमाह । *यद्यपीत्यादि* । *सर्वथाऽनवकाशत्वादिति* । आटि कृते निर्दिश्यमानस्याटो व्यवधानादिति भाव । आगमादेशयोरपि बाध्यबाधकभावे दृष्टान्तमाह । *अपवाद * । इति । अत एव । येन नाप्राप्तन्यायेन बाधस्थलीयव्यवस्थाविलक्षणव्यवस्थास्वीकारादेव । * गुणो यङ्लुकोरितिसूत्रभाष्य इति* ।

इत्यस्येति । इत्यन्तस्येत्यर्थ ।तेन सुध्युवाविति सिद्धम् । आन्तरेति । स्थानत इति भावः । य्वोरिति किम् । वव्रे । अचि किम् । युयात् । इतीयङी ति । सुधीशब्द यण्निषेधारम्भादत्र प्रकरणे धातोः स्वरूपग्रहणे इति परिभाषाया अप्रवृत्तिरिति भावः ।

एरनेकाचो ॥ धात्ववयवसंयोगापूर्वो न भवतीति । धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः ।तद्भिन्नश्च धात्ववयवपूर्व एवेति उदियावित्यादौ न दोषः। असंयोगादित्यत्र धात्ववयवसंयोगभिन्नात्परस्येत्यर्थेन सिद्धे पूर्वग्रहण स्पष्टार्थम् । एः किम् । असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद् अङ्गविशेषण मा भूदिति । तेन यवक्रियावित्यादौ नातिप्रसङ्गः । लुलुवतुरित्यादौ तु नातिप्रसङ्गः ओः सुपीति नियमात् । विपरीतनियमस्तु न, सुधीशब्देऽपि सुपि यण्निषेधारम्भात् । कुमार्याविति । अन्तर्वर्तिविभक्त्या पदत्वाच्छाकल्यत्वत्र न । नः क्ये इति निषेधात् । प्रधीरिति । प्रकृष्ट ध्यायतीति

---

ङो ङित्वस्य वैयर्थ्यञ्च स्यादिति भाव । * इत्यन्तस्येति * । आङ्गत्वात्तदन्तविधिर्न्याय्य । ऋकारशब्दे तदन्तविधेर्ग्रहणवतेत्यनेन निषेध स्यादिति न शङ्क्यम् । तस्याः परिभाषाया प्रत्ययविधिविषयत्वात् ॥ * अत्र प्रकरण इति * । क्वियो दीर्घादिति निर्देशेन सामान्यापेक्षज्ञापकमाश्रीयते इति भाव ॥

पर्युदासपरतया व्याख्याने फलमाह । * उदियावित्यादाविति * । इङ्गताविति धातो' क्विबन्तस्य रूपम् । न चैवमपि लिङियावित्यादौ दोष एवेति वाच्यम् । प्रत्यासत्त्या यद्धात्वन्तस्य कार्यिता तद्धात्ववयवपूर्वत्वस्य विवक्षितत्वात् । * स्पष्टार्थमिति * । पूर्वोक्तप्रत्यासत्ते स्पष्टप्रतिपत्त्यर्थमित्यर्थ । अत्र धातुग्रहणन्त्ववच्छिन्यति सूत्रादेकदेशे स्वरितत्वादनुवर्त्तते । ननु सूत्रे पूर्वशब्द सत्त्वे धात्ववयवसंयोगपूर्वत्वावच्छिन्नप्रतियोगिताकभेदस्य लाभेन सुधियावित्यादाविकारे तादृशभेदाभावदतिप्रसङ्गो वारयितु शक्यते । धात्ववयवसंयोग भिन्नादित्यर्थे तु रेफे संयोगभेदसत्त्वेन तत परत्वाद्यणादेशो दुर्वार इति पूर्वग्रहणस्यावश्यकतया पूर्वग्रहणस्य स्पष्टार्थत्वकथनासङ्गतिरिति चेन्न । असंयोगादित्येनदुपादानसामर्थ्यात्संयोगपदस्य संयोगघटकाविषयकप्रतीत्यविषयपरतयातत्त्वस्य संयोगावयवसंयोगोभयसाधारणत्वात् । * यथा स्यादिति * । श्रुतत्वात्तस्यैव विशेषण यथा स्यादित्यर्थ । ननु लूधात्ववयवोकारेऽतिप्रसङ्गवारणाय एरित्युपात्तमिति कुतो नोक्तमित्यत आह । *लुलुवतुरित्यादाविति*। नियमादिति * । उवर्णान्तस्य चेत्सुप्येवेतिनियमादित्यर्थ । सुपि चेदुवर्णान्तस्यैवेतिनियमवारणायाह । * विपरीतेति * । नदीत्वम् । प्रत्ययस्य धीशब्दस्येति शेषः । * प्रकृष्ट इति । * एतेन प्रकृष्टन्ध्यायतीत्यर्थे नित्यस्त्रीत्वाभावात्प्रध्यै

धः। सुपीति चानुवर्त्तते तदाह सुपीति। लोपाविति। अतो लोपः, लोपोव्योर्वलीति आभ्यामिति भावः। यलोपे निषेधाद्वलोपो न स्थानिवत्। येरपृक्तलोपात्पूर्वं वलिलोप इष्यते। स्थानिवत्त्वादिति। एवञ्च यणादेशे यल्लोपे सत्त इति स्यादिति भाव.। अन्तर्वर्त्तिविभक्त्या पदत्वान्नपदान्तेति निषेधस्तु न। स्थानिवत्त्वस्य न'क्ये इति सामान्यापेक्षानियमेनास्यापदत्वात्। परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च। क्विपेक्षक्यसबन्धियल्लोपस्य यणि वहिरङ्गासिद्धत्वन्तु नानित्यत्वात्। क्वौ लुप्तमिति भावे क्तः। लोप इत्यर्थः। गोमत्यतेर्ग्मत्यये गोमानिति भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकारः। क्वौ विधिं प्रति नेत्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः। अनडिति। अभिव्यक्तपदार्था ये इति न्यायस्तु गौणमुख्यन्यायवत्पदकार्यविषयएवेति भावः। दीर्घस्यापीति। प्रयोगस्थपकारान्तानुकरण सूत्रे ऽकारश्चोच्चारणार्थ इति भावः,। लूनीरित्यादि। ल्वादिभ्यः, क्षायोमः, प्रस्त्योन्यतरस्यामिति नत्वमत्वे। शुष' कः, पचो वः, इति कत्ववत्वे। व्याख्यानात् प्राधान्याच्च रूपातिदेशोयमित्याह। क्रोष्टृशब्द इति। तच्चोदात्तऋकारविशिष्टमतिदिश्यते तृज्वदिति चकारोच्चारणात्। तेन क्रोष्टृस्यादावुदात्तयण इति स्वरसिद्धिर्बोध्या। च पक्षादेस्त नातिदेशः। अर्थत

---

न्तरमप्याह *सुपीति चेति*।*अनित्यत्वादिति*। एतेन नाजानन्तर्यपरिभाषा विषयेऽनित्यत्वमेव स्वीकार्यं सा परिभाषा च न कर्त्तव्या। परिभाषासत्त्वे यत्र तयाऽन्तरङ्गेऽजानन्तर्यसत्त्वेऽसिद्धत्वनिषेधस्तत्रापि नित्यत्वाद्बहिरङ्गपरिभाषाया अप्रवृत्तिरिति भाव। *गोणमुख्यन्यायवदिति*। अत्र वतिप्रत्ययप्रयोगो गौणमुख्यन्यायादेतस्य भिन्नत्वमितिवादिमतेन। वस्तुतस्तु गोणमुख्यन्यायेनैव तदपि गतार्थम्।

*व्याख्यानादिति*। यद्यपि निमित्तादिभेदेनातिदेशस्य षड्विधत्वम्प्रसिद्धन्तथापि प्रकृते रूपातिदेशस्यैव सर्वकार्यसाधकता निमित्तातिदेशे व्यपदेशातिदेशे वा तृजन्तत्वप्रयुक्तकार्यलाभेपि ऋदन्तत्वप्रयुक्तकार्यं स्यात्। अर्थातिदेशस्य तु सम्भव एव न उभयोरप्येकार्थत्वात्। तादात्म्यातिदेशस्तूभयो सह प्रयोग एव। यथा परशुना वृश्चिमित्यत्र सहप्रयोगे सुबामन्त्रित इति वर्त्तते न तथा प्रकृते सम्भवति, एकार्थत्वादेव सहप्रयोगस्यासम्भवात्। शास्त्रातिदेशे कार्यातिदेशे वा तृजन्तस्य रेफात्मकयणादेशलाभेऽपि तस्योदात्तस्थानिकत्वाभावादुदात्तयणोहलपूर्वादिति स्वरो न स्यादिति परिशेषाद्रूपातिदेश एवोचित इत्येवरूपादित्यर्थः। *प्राधान्यादिति*। प्राधान्यञ्चात्र सत्रष्टसाधकत्वरूपम्। यस्यकस्यचिद्रूपस्य नातिदेश इत्याह। *पक्षादेरिति। *प्रयोगनियमार्थमिति*।

विग्रहे नित्यस्त्रीत्वाभावाच्च नदीत्व, प्रकृष्टा धीर्यस्येति विग्रहे तु नदीत्वम् । ग्रामणीरिति । नयतेरिति णत्वम् । गतिकारकपूर्वस्यैवेति भाष्ये पठ्यते स च नियमस्तेन गतिकारकपूर्वमभिसम्य नेति फलति । तद्भिन्नश्च तत्तदर्थं स पूर्वपदमेव तेन निम्पतुरित्यादौ यण् तदाह । गतिकारकेतरेति । यत्तत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वाद् गृह्यते इति । तन्न । भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषय-प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः । अत एव नदीसञ्ज्ञासूत्रस्थः प्रकृष्टा धीर्यस्या इति विग्रहाभिप्रायेण प्रवृत्तः प्रध्यै ब्राह्मण्यै इति भाष्यप्रयोगः स-ङ्गच्छते । शुद्धधियाविति । शुद्धा धीर्यस्येति विग्रहः । शुद्धं ध्यायतीति वि-ग्रहे यणेव । आद्ये सत्वभूतार्थविशेषणत्वात् । शुद्धत्वस्य कथमपि न कारकत्वमिति भाव । कथन्तर्हीति । दुर्ध्यायतीति दुष्टा धीर्ध्यानं येषामिति वृश्चिकादीरिति विग्रहाभिप्रायेण प्रश्न । दुस्थितेति । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः । प्रकृष्टा धीरित्यादौ प्रकर्ष प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमिति यण् भवत्येव । यत्क्रियेति । या चासौ क्रियेत्यर्थः । तं प्रति तद्वाचकं प्रति । यद्वा यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः । नेहेति । ततश्च सम्बन्धसामान्यषष्ठ्यन्तेन समास । भीत्रार्थानामिति हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थं विभक्तिप्रकरणे तु न कृत कारकत्वप्रयुक्तकार्यानापत्तेरिति भाव । किं च हेतुत्वाविवक्षायां सम्बन्धत्वेन विवक्षया सूत्रारम्भेपीति बोध्यम् । अभ्युच्चयेनाह । वृश्चिकसम्बन्धिनीति । । अत्र पूर्वपदान्तर्गतोत्तरपदलोप शाकपार्थिवादित्वात् ।

न भू ॥ अनन्तरस्येति न्यायेनैरनेकाच, ओः सुपीत्यनयोरेव निषे-

इत्यनुपपन्नमिति निरस्तम् । *दुर्ध्यायतीति* । अत्र दुरित्यस्य गतित्वम् । द्विती-ये दुरित्यस्य सत्वभूतार्थविशेषणत्वशङ्काव्युदासायाह । * धीर्ध्यानमिति । एते-न दुरितिधात्वर्थस्यैव विशेषणमिति सूचितम् । * तद्वाचकमिति * । तच्छ-ब्दस्य तद्वाचके लक्षणा । पतञ्जयाद्वेयाह । *यस्य धातोरिति* । यत्रत्र यत्क्रिये-त्यत्र षष्ठीतत्पुरुष । ननु भीत्रेति सूत्रे षष्ठीबाधनार्थमेवास्त्वित्यत आह । * भी-त्रार्थेति * । अन्योरिति खण्डयति । * विभक्तिप्रकरण इति * । भीत्रार्थानामिति सूत्रस्य प्रुद्धिष्टतापायमाश्रित्य प्रत्याख्यातुभाष्यकारमतेन वृश्चिकमिव इत्यत्र स-माधानमभिप्राय सूत्ररीत्या समाधानमाह । * किं चेति * । इत्यपि बोध्यमिति । पक्षद्वयं प्रकृते पर्यन्तं विवक्षितमिति भाव ।

एवमुरादेश इत्यादि यण्निषेधप्रसङ्गात् । *अनन्तरस्येनाति* । प्रकार

यथान्यासे नियमफलं विचिन्त्यम् । क्रोष्टेति । अनडि सर्वनामस्थाने चेति दीर्घः । प्रथमोपस्थितत्वात् । क्रोष्टारावित्याद्यर्थन्तु तल्लेखः । यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः ।

विभाषा तृ ॥ अयमपि नियम एव । तृतीयादावच्येवोभयमिति । तेन भ्यामादौ शसि क्रोष्टुपुत्र इत्यादौ च न दोषः । सर्वत्र विशिष्टाभावस्य सुलभत्वात् । तृज्वत्क्रोष्टुः, स्त्रियाञ्चेत्याभ्यां सर्वनामस्थाने स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति । एतेन तृज्वत्सर्वनामस्थाने एवेति नियमादिदं विध्यर्थमिति परास्तम् । न चैवमपि क्रोष्टूनित्याद्यसङ्गतम्, अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यम् । तृज्वत्क्रोष्टुरिति योगविभागस्यैव सति वैयर्थ्यापत्तेः । न च त-

---

चानिडार्थित्यनेन तृजिति कल्प्यम् । नयते पुक् च चात्तृन् । नेष्टा । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्च चात्तृन्निति हि तत्राभिहितम् । * नियमफलञ्चिन्त्यमिति * । मूले यन्नियमव्यावर्त्यत्वेनोक्तन्तेन पितृमातृप्रभृतीनामप्येति तदन्यथा सिद्धम् । तेषान्निरनुबन्धकतृप्रत्ययान्ततया तृजन्तत्वाभावेन दीर्घाप्राप्तेरिति भावः । *प्रथमोपस्थितत्वात्* । अष्टाध्याय्यां प्रथमोपस्थितत्वात् । *तल्लेख * अप्तृन्नित्यस्योल्लेखः । *विशेषविहितत्वात् * । तृन्तृचोः साक्षादुपादानेन प्रतिपदोक्तत्वात् । * स एव * । अप्तृन्नित्येव ॥

*तृतीयादावच्येवोभयमिति* । 'एवञ्च सामानाधिकरण्यसम्बन्धेन तृतीयादित्वविशिष्टं यदजादित्वं तदवच्छिन्नस्योभयोः प्रयोगे निमित्तता । तयोर्मध्ये तुन्नन्तस्य प्रयोगः प्राप्त एव । तृजन्तस्य प्रयोगः शास्त्रबोध्य इति तत्रैव विशिष्टधर्मावच्छिन्नस्य प्रयोजकत्वम् । यत्र तु तादृशधर्मावच्छिन्नाभावस्तत्र तृजन्तप्रयोगाभावः । शसि तृतीयादित्वाभावात् भ्यामादावजादित्वाभावात् क्रोष्टुपुत्र इत्यत्र तु विशेष्याभावादेव विशिष्टाभावः सुलभः । * प्रयोगनियमार्थमिति । * तृज्वदेव सर्वनामस्थाने स्त्रियाञ्च न तु तुन्नन्त इत्येवंविधोऽत्र नियमः । * फलतीति । * विधेयत्वेन प्रधानीभूतस्य तृज्वद्भावसङ्कोचकल्पनापेक्षया निमित्तत्वेनाभिमतस्य सर्वनामस्थानस्य तुन्नन्तनिरूपितपरत्वं यथा न भवति तथा कल्पनमुचितमिति भावः । * एतेन * । सर्वनामस्थाने स्त्रियाञ्च क्रोष्टृ शब्द एवेति नियमेन । *अपास्तमिति* । उक्तनियमे तृतीयादावच्युभयोः प्रयोगस्य सिद्धत्वादेतदपि नियमार्थमेवेति नियमस्य धर्णितत्वादिति भावः । एवमपि विभाषेत्यस्यानियामकत्वेन अन्यत्र तृजन्तस्यैवेति नियमफलकल्पनेन क्रोष्टूनित्यसङ्गतमिति भावः । * योगविभागेति * । तृतीयादवच्येवोभयमन्यत्र तृजन्तस्यैतेवं कल्पनाया सर्वनामस्थाने तृजन्तप्रयोगसिद्ध्या तृज्वत् क्रोष्टुः स्त्रियामित्येव प

आन्तर्याभावात् । इदं सूत्रं स्त्रियाश्चेति च प्रयोगनियमरूपफलकमिति बोध्यम् ।

अप्तृन् । ननु व्युत्पत्तिपक्षे तृजन्तत्वान्नृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थम्, अत आह । नियमार्थमिति । अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां नेति । नेष्ट्रादयोऽप्युणादय एवेति भावः । तेषां तृन्नितिसूत्रस्थवार्तिकेन व्युत्पादनात्।नप्त्रादीत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणमित्यन्ये । अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोध्यम् । भाष्यप्रयोगादिति। एवञ्चौणादिकत्वस्य व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजादिवद्योगरूढोयम् । ये त्वौणादिकत्वमेवास्य स्वीकृत्य भाष्यप्रयोगादेव दीर्घत्वमिच्छन्ति ते मान्याः । भाष्यकृतान्नप्रयोगस्योदाहरणत्वेन दानेप्यस्य भाष्यप्रयोगत्वाभावात् । ण्वुल्तृचाविति भाष्ये तु तृचश्चकारो व्यर्थः । न चाप्तृन्तृजित्यादौ विशेषणार्थः । तृ इत्येव सिद्धे । न च तृ इत्युच्यमाने मातरौ पितरावित्यादौ प्राप्नोति तत्र हि तृप्रत्ययो निरनुबन्धक इति वाच्यम् । नप्तृग्रहणस्य योनिसबन्धवाचिनाञ्चेदस्यैव नान्येषां योनिसंबन्धवाचिनामिति नियमादित्युक्तम् । नेष्टृत्वष्टृक्षत्तृहोतृपोतॄणान्तृजन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य तृन्निति सूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषाद्ग्रहणं प्रपञ्चार्थमेव । एवञ्च

---

असम्बुद्धौ सर्वनामस्थाने स्त्रियाश्च तृजन्तस्यैव प्रयोग इत्येवरूपप्रयोगनियम इत्यर्थः ॥ *व्युत्पत्तिपक्ष इति* । उणादीनामव्युत्पन्नानां संज्ञाशब्दानामेवैतेषामेव। एतेन यत्फलितन्तदाह । *अन्येषामिति* । *तेषामिति* । नेष्ट्रादीनामित्यर्थः । * वार्त्तिकेनेति * । क्त्विक्षु चानुपसर्गस्यानिट्त्वञ्चेत्यनेन । प्रशास्तृशब्दस्तु प अन्त एवौणादिव्युत्पन्नः । * अप्रामाणिकमिति * । एवञ्च नायन्नियमप्यावर्त्यं इति भावः । ननु नृशब्दस्य रूढत्वमस्ति उणादिभिश्चक्लृप्तव्युत्पन्नानान्तु यौगिकत्वमनुभयासिद्धमिति कथमेतदित्यत आह । * पङ्कजादिवदिति * । प्राचीनसम्मतरीत्या व्याख्याय भाष्यरीत्याह ।*ण्वुल्तृचाविति* । *तृइत्येवेति* । अप्तृन्निति सूत्रेपि तृ इत्येव वक्तव्यमिति भावः । * इत्युक्तमिति * । एवञ्चायन्नियमो योनिसम्बन्धवाचिविषयक इत्युद्गातृशब्दे दीर्घ अत एव सुलभ इति भाष्यप्रयोगाद्दीर्घ इति कथनाक्षेपफलमेव । भाष्यान्तरमप्याह । *नेष्टृ त्वष्टृ इति*। *भाष्यवार्त्तिकयोरिति * । तृन्विधौ क्त्विक्षु चानुपसर्गस्य । क्त्विक्षुधानुपसर्गस्येति वक्तव्यम् होता पोता । अनुपसर्गस्येति किमर्थम् । प्रशास्ता । प्रतिहर्ता । एतस्य प्रत्युदाहरणपरतया प्रदर्शनेन तृस्तृचौ शास्तिक्षदादिभ्यः संज्ञाया

यपोः पाठेन स्वशब्दादेश्चेदेतयोरेवेति नियमार्थकेनैजागमो न । पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह । यौगिक इति ।

इत्यूदन्ताः ।

वर्णैकदेशानां वर्णग्रहणे रेफाभावादाह ऋवर्णादिति । व्युत्पत्तिपक्षे ङ्यादिष्वपाठाद्दीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धकॄप्रत्ययान्ता एवेति ण्वुल्तृचाविति भाष्यस्वरसः ।

इत्यॄदन्ताः ।

वैकल्पिकेति । यत्तदेतेभ्य इत्यत्र त्यदाद्यत्वकरणादातिदेशस्य क्षिय इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भाव. । अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वम् अनुकार्यश्चानुकरणाद्भिन्नमेवेति मतौ छ इति सूत्रे भाष्ये स्पष्टम् ।ईपदानुपूर्व्यस्येपि वाचकसादृस्यादर्थोपस्थापकत्वमित्यत्र कैयटे प्राग्दीव्यतोणित्यत्र भाष्ये च स्पष्टम् । अत एव किर इत्यादित॰ कॄधातुरिति बोधः । भू सत्तायामित्यादौ त्यित एव निर्देशात्कदाचिदनुकरणाद्विभक्त्यभावोपि । स च सूत्रेष्वेवेति प्रामाणिका॰ । गवित्ययमाहेति वान्तस्यैवानुकार्यस्वरूपभङ्गभिया च न वलोपः । झलाञ्जशित्यादौ जश्त्वाभाववदित्याहु॰ । इरो इति । किरश्च पञ्चम्य इति निर्देशादधातुप्रत्ययेपि तत्प्रवृत्तिरिति भावः । कीरिति कॄधातुरित्यर्थ॰ । गुणो नेति । ऋत उदित्युत्वमप्यत एव न, अत एव प्रोयद्दीति सूत्रनिर्देश॰ सङ्गच्छते ।

इत्यॄदन्ताः ।

अनडिति ऋऌवर्णयो॰ सावर्ण्यादिति भावः । गमॄनिति । ऌवर्णस्य दीर्घाभावाद्दवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्यकृता ऋति ऋवेत्यादिविधेययो रेफद्वयगर्भलद्वयगर्भयोरस्त्वदीर्घत्वाद्दीकारेणात्र द्विलकार

---

ननु अनुकार्यानुकरणयोरभेद इति पक्षेऽर्थवत्त्वाभावात्कथ विभक्तिरत आह । * अनुकार्यश्चेति * । नन्वनुकरणे किञ्चिद्विकारे कथमर्थोपस्थितिरत आह । * ईषदिति * । अनुकरणेत्यर्थ । * अर्थ * । अनुकार्यम । तत्र दृष्टान्तमाह । * फिर इति * । ननु सूत्र एव विभक्त्यभावस्यैवरीत्या कल्पने गवित्ययमाहेत्यत्र पदान्तत्वाल्लोप स्यादत आह । *गवित्ययमाहेतीति* । *आहुरिति* । सिद्धान्तानुसारिण । * अत एव * । ऋत इति तपरत्वादेव । * अत एव* । उत्याप्रवृत्तेरेव ।

द्धितेष्वचामादेरिको गुणवृद्धी इति सूत्रयोः क्रौष्टुः क्रौष्टीया इति भाष्यप्रयोगासङ्गतिरिति वाच्यम् । ऋकारान्तस्यैव ऋषिवाचकत्वेनादोषात् । इदं सूत्रद्वयन्तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम् । तदुक्तं भाष्ये तृज्वद्भावविषये एतत् तृजन्तं मृगवाचीति च । अनेन हि अन्यत्र तु नान्तमेवेत्यपि सूचितमिति दिक् ।

ऋत उत् ॥ तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वारान्तर्यतो द्विमात्रनिवृत्त्यर्थम्, तनामृ इत्यादिसिद्धिरिति छ्वोरिति सूत्रे कैयटः । यत्तु तपरत्वं ढ्रलोपइति दीर्घबाधनार्थमिति तन्न ।

" सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ।

नैर्ऋतोरस्यभासन्त सवितूरश्मयो यथे"ति ॥

रामायणप्रयोगविरोधात् । उरण्रपर इति सूत्रे ऽण्ग्रहणाभावे रपर इति भाष्यप्रयोगविरोधाच्च । सस्यैवेति । संयोगान्तलोपेन सिद्धे नियमार्थम् । तेनोर्गित्यादौ नेति भावः । विपरीतनियमस्तु न, पुमान्स्त्रियेति निर्देशात् । एरनेकाच इति सूत्रमेरिति पदरहितं सानुवृत्त्याद्धृत्तविशेषणं सर्वार्धिकश्चानुवर्तत इत्याह धात्ववयवेत्यादि । गतीति च । सकृल्लावित्यत्र क्रियाविशेषणत्वेन कर्मत्वाद्यण् । न भूसुधियोरिति निषेधे प्राप्ते आह ।

वर्षाभ्वश्चेति । वर्षाभूर्दर्दुरे पुमान् । स्वार्थिक इति । स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भव इत्यर्थे ऽध्यात्मादित्वाट्ठञ् । द्वारादिषु स्वग्रामस्वाध्या-

---

देत् । पनश्चात्र तुन्नन्तमेवेति सिद्धम् । तत्र शङ्कते । * न चेति * । मृगशब्दोऽत्र पशुजातीयपरः । एतेन अत्रैवादावित्सूत्रद्वयन्तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्युक्तमिहतु मृगवाचीत्युक्तमिति पूर्वापरविरोध इत्यपास्तम् । तथाचोक्तं विश्वकोशे ।

मृग पशौ कुरङ्गेऽपि करिनक्षत्रभेदयोः ।

याञ्चायां मृगयायां च मृगी तु वनितान्तर इति ।

*तेन* भाव्यमानस्यापि क्वचित्सवर्णग्राहकत्वज्ञापनेन । कौस्तुभोक्तिं दूषयति । *वरिति* । तपरत्वेन प्रयोगे श्रूयमाणैकमात्रिक एवादेश स्यादित्यर्थकल्पनेनेति भावः । रादेव संयोगान्तस्य सस्य लोप इत्याकारकनियममभिप्रेस्यति । * विपरीतेति * । क्रियाविशेषणत्वादिति * । धात्वर्थफलाश्रयविशेषणत्वादित्यर्थः । द्वारादिषु स्वशब्दपाठेन तदादिग्रहणस्य चोदितत्वात् । स्वादेरिञिति ज्ञापकेन वा तदादेरैजागमस्येष्टत्वात्स्वार्थिक इत्यनुपपन्नमत आह । * द्वारादिष्विति * । अग्रहण इति * । इतिपक्षे इति शेषः ॥

ज्ञाद्यन्वय्यर्थप्रतिपादकत्वादव्ययमिति महाभाष्यप्रदीपोद्योतयोः स्पष्टम् । स्वादेशात्पूर्वमादुगुणस्तु न । नेन्द्रस्येति ज्ञापकेन पूर्वोत्तरादेनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः । न च नान्तः पादमिति सूत्रस्थेन न चेड्ः पदान्तात्परो रुरस्तीति भाष्येण विरोधात्सावीदृशानां प्रयोगो ऽनुचितः । सावपि पदत्वसत्त्वादिति वाच्यम् । योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात् । साक्षप्रयोग एवेत्यन्ये । सय इति । न चास्यान्तर्वर्तिविभक्त्या पदत्वादेङः पदान्तादित्यादि दुर्वारमिति वाच्यम् । भाष्ये स्वादिष्विति योग विभज्य स्वादिषु पूर्वं पदमित्यर्थः । ततोऽसर्वनामस्थाने ऽयचि । सुबन्तमिति अनुवर्तते । अयचीति प्रसज्यप्रतिषेधः । तेन यजादौ सर्वनामस्थाने पूर्वं पदं न मध्ये चेत्सुबन्तन्तदपि पदं नेति व्याख्यानेनादोषात् । आतिदेशिकस्याप्यय निषेध इति स्पष्टमेव । उत्तरपदत्वे चापदादिविधाविति प्रतिषेधाच्च । उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्तव्ये ऽन्तर्वर्तिवि-

---

स्यत्र लकारस्य लपरत्वेऽपि लोपेन विरोधाभावादिति । तत्र । भाष्यकारैर्लोपस्य शरोऽचीतिज्ञापकेन वैकल्पिकत्वस्य वर्णनात्तन्मते प्रकृते परेण णकारेणाण्ग्रहणे लत्वय भूयेताज्ग्रहणे तु नेतिवैषम्यस्य दुरपह्नवतयाण्ग्रहणस्य ज्ञापकत्ववर्णनासङ्गतिरिति यथोत्तरम्मुनीनाम्प्रामाण्यादीदृशानामनभिधानस्याप्यदयकत्वादिति दिक् । नन्वेवमन्तरङ्गत्वादादुगुणे तत सादेशोऽदन्तरूपापत्तिरत आह । * सादेशात्पूर्वमिति । * भाष्येण विरोधादिति * । तत्सूत्रभाष्ये कस्याय प्रतिषेध इतिशङ्काया सर्वप्रतिषेध इतिसमाधाने कृते यद्येवमन्यग्निरुपसाम प्रमक्षत् । प्रत्यग्निरुपसामप्रमत्यद्वित्यत्र यमादेशस्य प्रतिषेध प्राप्नोतीत्युक्ताप्य भाष्येड्ग्रहणसम्बन्ध स्यात्तथा चाग्नेरत्र वायोरग्नेत्यत्रेङ परस्योत्वम्प्राप्नोतीत्याशङ्क्य पदान्ताभिसम्बद्धमङ्ग्रहणमनुवर्तते न चेड् पदान्तात्परोतरस्ती ति तत्रोक्तत्वेन विरोधादित्यर्थः । * योगविभागसिद्धस्य * । उत्तर पदत्वे चापदादिविधाविति वार्तिकप्रत्याख्यानसमये स्वादिष्वितिसूत्रे स्वादिषु पूर्वस्य पदस्य योगविभागेन साधितन्तस्य । ननूत्तरपदस्योक्तरीत्या निषेधेऽपि पूर्वपदस्य पदत्वात्पूर्वान्तवद्भावेन सेऽस्यस्य पदत्व स्यादिति पूर्वरूपन्दुर्वारमित्यत आह । * आतिदेशिकस्यापीति । * यदि तु प्रत्याख्यानप्रकारस्य गुरुतया लाघवार्थमुत्तरपदत्वे चापदादिविधाविति वचनमारभ्यते तदाप्याह । * उत्तरपदस्य इति । * तद्घटितेति * । उत्तरपदघटितेत्यर्थः । उत्तरपदघटितत्वञ्चोत्तरपदाविषयक-प्रतीत्यविषय पन्तक स इत्यत्र समुदायावयवसाधारणमिति भावः । *णित्कार्य

ईषत्स्पृष्टो दुर्वारः । अपि च तथा धातॄणामित्यत्र रेफद्वयगर्भोऽपीति चेन्न । अकः सवर्णइति सूत्रे उक्तोत्तरत्वात् । गम्लेति । यत्तु लण्सूत्रे उरण्रपर इत्यत्राणिति वक्तव्येऽण्ग्रहणसामर्थ्येनाण्पूर्वेणैवेत्युक्तं भाष्ये ऌकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता, ऋकारस्य यणि तु रोरीति लोपेन न विशेष इति तन्न, ऋकारांशे हल्रूपाणि रोरीति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्यात् ऌकारांशेऽपि हल्रूपाण्यप्रवृत्तिरित्याशयात् । वस्तुत ईदृशानामभिधाने दृढं मानं चिन्त्यम् । ॥ इति । इना सहेत्यर्थः । चोपसर्जनस्येति सत्वम् । एकादेशस्य पूर्वान्तत्वेऽपि लि-

---

* ईषत्स्पृष्टो दुर्वार इति * । न च प्रथमयोरितिसूत्रस्य पूर्वसवर्णादेशविधायकत्वमस्य तु प्रयत्नभेदान्न सवर्ण इति कथमियमाशङ्केति वाच्यम् । तत्र सवर्णपदस्य सजातीयपरत्वेनास्वाच्यत्वात् । विशिष्टद्वन्द्वत्वेन सजातीयस्याप्राप्तिरित्यभिप्रायात् । तत्रत्य सवर्णपदं सवर्णसज्ञकपरमेवेति न तस्य प्राप्तिरिति दूषणस्य स्फुटत्वात्तदुपेक्ष्य दूषणान्तरं उक्तोत्तरत्वादिति । इत्थमृकारद्वयैकादेशे प्रथमस्य ऋकारऌकारस्थानिकैकादेशे द्वितीयस्य साधुत्वमिति प्रतिपादितत्वादित्यर्थः । के चित्तु लण्सूत्रस्थ भाष्यप्रामाण्येन ऌकारस्य यणादेशो दुर्लभ इति गम्लेत्यसङ्गतमिति यत्तद्दूषयितुम्मतमाह । * यत्त्विति । * भाष्येति * । इत्थं हि तत्र भाष्यम् । उरणित्यत्राणद्वे सन्देहः । अण्प्रत्याहारः पूर्वेण णकारेण परेण वा । असन्दिग्धं पूर्वेण न परेण । कुत एतत् । यणभावात् । नापि स्थाने परेऽण सन्ति । ननु चायमस्ति । क्लृप्तम् । इन्द्रेधर्मिति । यदि परेण स्यात्तर्हि यणोऽपि रपरत्वापत्तौ रेफद्वयश्रवणप्रसङ्गः । रो रीतिलोपेन सिद्धम् । एवन्तर्हि सामर्थ्यात्पूर्वेण न परेण यदि परेण स्यादण्ग्रहणमनर्थकं स्यादुरञ्जित्येव ब्रूयादिति । *तत्र* । गम्ला इत्यादौ । ऋकारस्याणि रपरत्वे यद्यपि लोपेन सिद्धिस्तथाप्यत्र लपरत्वे लश्रुतिः श्रूयेतेति सामर्थ्यवर्णनमयुक्तमिति भावः । * फलाभावेनाप्रवृत्त्या * । उरणपरेत्यस्याप्रवृत्त्या । *आशयादिति* भाष्यकारस्येत्यादिः । आशय इत्यनेन सूचिसामर्थ्यं सूचयन्नाह । *वस्तुत इति ईदृशानाम्* । ऌकारस्थानिकलादेशघटितानामार्षप्रयोगाणाम् । *चिन्त्यमिति* यत्तु सूत्रकारमते ऋकारऌकारयोस्सावर्ण्याभावेन ऋकारस्य ऌकारेऽप्यु स्थानेऽणोऽभावान्न लपरत्वप्राप्तिरिति णकारोच्चारणं पूर्वणकारेण प्रत्याहारे ज्ञापकमिति भाष्योक्तं युक्तमेव । वार्त्तिककारमते ऋकारऌकारयोः सवर्णसंज्ञासत्त्वात्तु स्थाने जातस्य ऌकारस्य लपरत्वार्थं परेण णकारेण प्रत्याहारो भविष्यतीत्यपि न । नाज्झलाविति सूत्रे परस्परातानीत्यत्र दोषवारणायाज्झलौ प्रतिषेधे णकारप्रतिषेधोऽज्झल्त्वादिति वार्त्तिकारम्भेण सम्मते लोपस्य झरो झरीति हलोयमामितिसूत्रविहितस्य यानित्यतया गम्ले-

मिति औतो ऽमित्यत्र भाष्ये उक्तमित्याहुः । सुद्यौरिति । केवलद्योशब्दस्य स्त्रीत्वाद् बहुव्रीहिरुदाहृतः । विहितमिति । यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोऽयं यत्नः । स्मृतोरिति । स्मृत उर्येनेत्यर्थः । यत्त्वयवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वायेति वार्तिकव्याख्यावसरे ऽवादेशे नास्त्युदाहरणमिति स्वरितो वेति सूत्रस्थभाष्यविरोधः । प्रकृते पूर्वपदप्रकृति-

---

स्वरेण गुरिति । नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति । स्थानिवद्भावात्प्राप्नोति । अत उत्तरं पठति । तपरकरणमनर्थकम् स्थानिवत्त्वप्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावः । गो पूर्वणित्त्वात्त्वस्वरेषु स्थानिवद्भावो न भवतीति । स चावश्यं प्रतिषेध आश्रयितव्यः । इतरथा हि सम्बुद्धिजसोः प्रतिषेधः । यो हि मन्यते तपरकरणसामर्थ्यादत्र न भविष्यतीति सम्बुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात् । हे चित्रगो । * हे चित्रगव इति । * अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे गुणे कृते कस्मादेवात्र न भवति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे एतया परिभाषया शक्यमुपस्थातुम् । नेत्याह । न हीदानीं किंचिदपि स्थानिवत्त्वादित्युक्तम् । एतच्च।ब्धे यत्तपरकरणप्रयोजनमुक्तं चित्रगुरिति तद्व्याख्यानावसरे तपरस्तत्कालस्येत्यत्राणिति नानुवर्तत इत्यनणोऽपि तत्कालस्य ग्रहणम् । * इतरथा हीति, * यदि स्थानिवत्त्वनिषेधो नाश्रीयते तदा सत्यपि तपरकरणे सम्बुद्धौ जसि गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्च णित्त्वं स्यात् । प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते गोरूपस्य लाक्षणिकत्वाण्णित्त्वाप्रसक्तिरित्युक्तं कैयटेन । एतेन स्थानिवत्त्वप्रतिषेध एव भाष्यकारस्य निर्भर इति कैयटस्यापि सम्मतम् । ओकारोपलक्षणत्वेन व्याख्यानमत्येपदेशयुक्तित्वसूचनायेति विभावनीयम् ॥ * उदाहृत इति * । आकृत्यात्तदन्तेऽपि प्रवृत्तिः । सिद्धान्तेऽपि गोत इति तपरकरणादोकारमात्रं विवक्षितमिति मते हे भानो इत्यत्र प्रसक्तामतिव्याप्तिं वारयितुं यद्विहितविशेषणतया व्याख्यानात्तत्प्रतिपदोक्तपरिभाषयापि सिद्धमित्याह । * यद्वि त्विति * । अत्र यदीति न पाक्षिकत्वसूचनाय किन्तु शास्त्राणि चेत्प्रमाणानीतिवत्सन्दिग्धे सन्दिग्धवचनम् विधेयस्यार्थस्य दार्ढ्यसूचकमेव । वर्णग्रहणेऽप्रवृत्तिसूचकं यदादेच उपदेशेऽशितीति सूत्रस्थमुपदेश इति पदं तदनित्यत्व एव ज्ञापकमिति भावः । * उरिति * । शम्भुरित्यर्थः ॥ केचित्तु स्मृतोशब्दस्वीकारे तृतीयैकवचनादावप्यस्य प्रयोगः स्यात्तथा च स्वरितो वेतिसूत्रस्थभाष्यविरोधः स्यादतोऽस्यानभिधानमेव युक्तमित्याहुस्तन्मतं खण्डयितुमाह । * यत्त्विति * । स्वरितो वेतिसूत्रस्थभाष्यविरोध इति * । एवं हि तत्रत्यम्भाष्यम् । एकादेशस्वरोऽन्तरङ्गः । एकादेश

क्तेः प्रत्ययलक्षण नेति तदर्थः, अतः, न योगविभागमूलकम्प्रत्याख्यानेन फलभेद इति केचित्।

इतोदित्यतो ऽनुवृत्तं सर्वनामस्थाने इति प्रथमया विपरिणम्यते णिदित्यनेन सामानाधिकरण्यादित्याह। सर्वनामस्थानमिति। तत्र णितः कार्यस्यासम्भवात् णिति यत्कार्यन्तदतिदिश्यते। शसेति। अचीत्यधिकाराद्धितशसो न ग्रहणमिति भावः। गामिति। परत्वादत्र वृद्धिस्तु न। अनवकाशत्वेनात्वस्यापवादत्वात्। तदाह। ओतो णिदिति। सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भाव.। तेन चित्रगुरित्यादौ न दोषः। अन्यथाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोन्तत्वद्दोषः,परे तु गोतो णिदिति सूत्रे भाष्यं तपरत्व प्रत्याख्यातम्। चित्रगुरित्यादौ तु न दोषः। गोः पूर्वत्वणित्वात्वस्वरेषु स्थानिवत्प्रतिषेधात्। हे चित्रगो इत्यादौ तु लाक्षणिकत्वान्न दोष इति अत्रैव सूत्रे भाष्ये स्पष्टम्। द्योः सर्वनामस्थाने णित्वं वक्तव्य

---

स्यासम्भवादिति*। प्राधान्यात्कार्यातिदेश इति भाव॥

ननु शसस्तद्धितस्यापि सम्भवाद्देतत्साहचर्यात्सुपेवेत्यनुपपन्नमत आह। *अचीत्यधिकारादिति *। यदुक्तमपवादत्वादात्वे न वृद्धिर्बाध इति तस्योपपत्तिमाह। *सूत्रे तपरकरणेनेति*। तद्धि चित्रगुशब्देऽतिप्रसङ्गवारणाय कृतम्। तपरसूत्रे चाण्ग्रहणानुवृत्त्या समुदायस्यानण्त्वात् परसूत्राप्रवृत्तेस्तपरत्व व्यर्थमितितद्काकारस्याविवक्षायान्तात्पर्यग्राहकमिति भाव । मूलोक्तमनूद्यमतसिद्धान्तमाह। * परे त्विति *। नन्वेव चित्रगुरित्यादौ दोष इत्यत आह *। चित्रगुरित्यादावीति *। अत्र स्थानिवन्न्यायेन णित्वस्य प्रतिषेध । * अत्रैव *। गोतोणिदिति सूत्र एव। न चैवकारस्य निवक्षितत्वे द्योशब्दे दोष एवेत्यत,आह। * द्यो सर्वनामेति *। तत्र हि अभ्युपसंख्यानम्। द्या पश्य। किम्पुन कारणन्न सिध्यति। वृद्धिर्बलीयस्त्यात्। परत्वाद्वृद्धि प्राप्नोति। न चाऽनवकाशत्वात्। अनवकाशमात्व वृद्धिम्बाधिष्यते। सावकाशम्। कोऽवकाश। द्या गच्छ। द्योश्च सर्वनामस्थाने वृद्धिर्विधेया। किम्प्रयोजनम्। य द्याव इन्द्र ते शत शत भूमीरुत स्यु। यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यते। अनवकाशमात्व वृद्धिम्बाधिष्यत इत्युक्तम। यद्यपि स्थानिवत्सूत्रभाष्ये णे पूर्वणित्त्वात्स्वरेषु स्थानिवद्भावप्रतिषेध इतिवचनस्थणित्वग्रहणन्तपरकरणात्सिद्धमित्यनेन प्रत्याख्यातम्। तदनुरोधेनैवौतोम्शसोरितिसूत्रे द्योश्च वृद्धिर्वक्तव्येतिवार्तिकव्याख्यानावसरे कैयटेन ओतो णिदिति सूत्र पठितव्यम्। गोत इत्योकारात्तोपलक्षणार्थं वा व्याख्येयम् वर्णनिर्देशे हि तपरत्वमप्रसिद्धमिति व्याख्यातम्। तथापि गोतो णिदितिसूत्रभाष्ये तपरकरण किमर्थमिद मा भूत् चित्रगु

मिति औतो ऽमित्यत्र भाष्ये उक्तमित्याहुः । सुद्यौरिति । केवलद्योशब्दस्य स्त्रीत्वाद् बहुव्रीहिरुदाहृतः । विहितमिति । यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोऽयं यत्नः । स्मृतोरिति । स्मृत उर्येनत्यर्थः । यत्त्वयवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वायेति वार्तिकव्याख्यावसरे ऽवादेशे नास्त्युदाहरणमिति स्वरितो वेति सूत्रस्थभाष्यविरोधः । प्रकृते पूर्वपदप्रकृति-

---

शबलगुरिति । नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति । स्थानिवद्भावात्प्राप्नोति । अत उत्तरम्पठति । तपरकरणमनर्थकम् स्थानिवत्त्वप्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भाव । गो पूर्वणित्वात्वस्वरेषु स्थानिवद्भावो न भवतीति । स चावश्यं प्रतिषेध आश्रयितव्य । इतरथा हि सम्बुद्धिजसो प्रतिषेध । यो हि मन्यते तपरकरणसामर्थ्यादत्र न भविष्यतीति सम्बुद्धिजसोस्तेन प्रतिषेधो वक्तव्य स्यात् । हे चित्रगो । * हे चित्रगव इति । * अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे गुणे कृते कस्मादेवात्र न भवति । लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे एतया परिभाषया शक्यमुपस्थातुम् । नेत्याह । न हीदानीं क्वचिदपि स्थानिवत्स्यादित्युक्तम् । एतद्भाष्ये यत्तपरकरणप्रयोजनमुक्तञ्चित्रगुरिति तद्व्याख्यानावसरे तपरस्तत्कालस्येत्यत्राणिति नानुवर्तत इत्यनणोऽपि तत्कालस्य ग्रहणम् । * इतरथा हीति, * यदि स्थानिवत्त्वनिषेधो नाश्रीयेत तदा सत्यपि तपरकरणे सम्बुद्धौ जसि गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्च णित्वं स्यात् । प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते गोरूपस्य लाक्षणिकत्वाण्णित्वाप्रसङ्ग इत्युक्तं कैयटेन । एतेन स्थानिवत्त्वप्रतिषेध एव भाष्यकारस्य निर्भर इति कैयटस्यापि सम्मतम् । ओकारोपलक्षणत्वेन व्याख्यानन्त्वेवदेश्युक्तिरवसूचनायेति विभावनीयम् ॥ * उदाहृत इति * । आकृत्यास्तु वन्तेऽपि प्रवृत्तिः । सिद्धान्तेऽपि गोत इतितपरकरणादोकारमात्र विवक्षितमितिम ते हे भानो इत्यत्र प्रसक्तामतिव्याप्तिं वारयितुं विहितविशेषणतया व्याख्यानात्तत्प्रतिपदोक्तपरिभाषयापि सिद्धमित्याह । * यदि त्विति * । अत्र यदीति न पाक्षिकत्वसूचनाय किन्तु शास्त्राणि वेत्प्रमाणानीतिवदसन्दिग्धे सन्दिग्धवचनम् विधेयस्यार्थस्य दार्ढ्यसूचकमेव । वर्णग्रहणेऽप्रवृत्तिसूचक यदादेच उपदेशेऽपिवीति सूत्रस्थमुपदेश इतिपदन्तदनित्यत्व एव ज्ञापकमिति भाव । * उरिति * । शम्भुरित्यर्थ ॥ केचित्तु स्मृतोशब्दस्वीकारे तृतीयैकवचनादावप्यस्य प्रयोग स्यात्तथा च स्वरितो वेतिसूत्रस्थभाष्यविरोध स्यादतोऽस्यानभिधानमेव युक्तमित्याहुस्तन्मत खण्डयितुमाह । * यत्त्विति * । स्वरितो वेतिसूत्रस्थभाष्यविरोध इति * । एव हि तत्रत्यम्भाष्यम् । एकादेशस्वरोऽन्तरङ्ग । एकादेशा-

स्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानुदात्तत्वात्तदेशस्यैकादे- श उदात्तेनेत्युदात्तत्वे स्मृतवेत्यादौ तदुदाहरणसम्भवादिति तन्न । तृतीया-

---

स्वरोऽन्तरङ्ग सिद्धो वक्तव्य । किम्प्रयोजनम् । अयवायावेकादेशादुस्वरैकान- नुदात्तसर्वानुदात्तार्थम् । अयभाव । उदात्तानुदात्तयोर्य आदेशस्तस्योभयान्त र्यात्स्वरितत्वे प्राप्ते एकादेशउदात्तेनोदात्त इत्यनेनोदात्तत्व विधीयते । अयञ्चोदा त्तत्व विधीयते । अयञ्चोदात्त एचोऽयवायाव इत्येतद्दृष्ट्याऽसिद्ध इत्यादेशे स्था- निस्वरेण स्वरितानुदात्तान्तरतम्यात्स्वरित स्यादिति । अय । वृक्ष इदम् । प्लक्ष इदम् । अयादेशो नास्ति । आय । कुमार्या इदम् । अत्र कुमारीशब्द उदात्तनि- वृत्तिस्वरेणान्तोदात्त । तत एकारस्यानुदात्तस्याडागमे यणादेशे चोदात्तयणो ह ल्पूर्वादित्याट उदात्तत्व आडेकारयोरुदात्तानुदात्तयोर्वृद्धिरेकादेश उदात्तस्तस्या यादेश । आव् । वृक्षावत्र । उदात्तानुदात्तयोरेकादेशस्तस्य एकादेश उदात्तेनो दात्त इत्येतन्न प्रतितस्य सिद्धत्व वक्तव्यम् उदात्त आयादेशो यथा स्यात् । एका- देशस्वर । गाङ्गेऽनूप इति । अत्र गाङ्गशब्दोऽणन्तत्वादन्तोदात्तस्ततः ङसे स्येकवचनस्यानुदात्तस्य पूर्वपरस्वरिति प्राप्ते एकादेश उदात्तेनेतिसूत्रेणोदात्त त्वमयति । असिद्धत्वे सति तु स्वरितानुदात्तयोरेकादेश आन्तरतम्यात्स्वरित एव स्यात् । शतृस्वर । तुदती । अत्र तास्यनुदात्तेदिति शतानुदात्त । शप्रत्यय उदात्तस्तयोरेकादेशस्योक्तरीत्योदात्तस्य सिद्धत्वे सति शतुरनुम इत्यनेन न द्या उदात्तत्वम् । अत्र ह्रस्वनुड्भ्यां मतुबित्यतो अन्तोदात्तादिति वर्त्तते । एकानुदात्त । तुदन्ति । लिख- न्ति । अत्र ह्येकानुदात्तशब्देनानुदात्तरूपमेकवर्जमित्येष स्वरोऽभिधीयते । अत्र वि करण उदात्त । लसार्वधातुकानुदात्तत्वम्तत एकादेशस्यायस्यानेन विधीयमान स्यानुदात्तरूपमित्येतद्दृष्ट्याऽसिद्धत्वे धातोरनुदात्तत्वश्च स्यात् । सर्वानुदात्तः । ब्राह्मणास्तुदन्ति । ब्राह्मणा लिखन्ति । अत्र विकरणैकादेशे कृते तिङ्ङतिङ इ ति निघाते कर्त्तव्ये एकादेश उदात्तेनेत्यस्यासिद्धत्वादान्तरतम्यात्प्राप्तस्वरित- स्याधिद्याततिङ्ङतिङ इत्यनुदात्ते कृते पश्चादेकादेश उदात्तेनेत्यस्य प्रवृत्तावुदा त्तश्रवणप्रसङ्गः । त्रिपाद्यामेतत्सूत्रपाठफलं तु । प्रपचतीति । सोमसुत्पचतीति । सोमसुत्पचतीति । आद्ये निपातस्याद्युदात्तेतिशब्दस्य च इकारस्तेन सह ति- शब्दस्यैकारस्यैकादेशे कृते पूर्वान्तवद्भावेन ईकारस्य तिङन्तावयवत्वेन यद्येका- देश उदात्तेनेत्यस्यासिद्धत्वम् स्यात्तदोदात्तवति तिङन्तपरत्वात् गतिनिघातप्रस- ङ्गः । द्वितीये तिङ्ङतिङ इति निघात इकारस्य न भवतीति सामान्यतोऽस्य शब्द स्यानभिधानमित्याहुस्तन्मतन्निरस्यति । * तृतीयादिष्विति * । यत्रायादेशप्र- सङ्गस्तस्यानभिधानकल्पनेन भाष्यस्योपपन्नत्वादिति भाव । *उपलक्षणतया*।

दिष्वनभिधानेपि अन्यत्र तरमत्त्वे बाधकाभावात् । न च गोत इति सूत्रे घोश्च वृद्धिर्वक्तव्येति वार्त्तिके घोशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम् । उपलक्षणतया व्याख्यानेनादोषात् । परे तु ईदृशानामनभिधानेपि न क्षतिरित्याहु ।

रायो हलि ॥ अष्टन आ इत्यत आ विभक्ताविस्यनुवर्त्तते ।

इत्यजन्ताः पुंल्लिङ्गाः ॥

श्रीः ॥ रमेति । रमयतेः पचाद्यच् टाप् । एकादेशस्य पूर्वान्तत्त्वेन प्रातिपादकत्वात्स्वादयः । वाचेत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते । आप इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते विशेषणेन तदन्तविधिरित्याह । आबन्तादिति । जसः शीत्यतः शीति व र्त्तते । रमे इति । यस्येति लोपो न, अभत्वात् ।

सम्बुद्धौ च ॥ बहुवचने झलीत्यत एदिति आङि चाप इत्यत आप इति चानुवर्त्तते । एङ्ह्रस्वादिति सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात् प्रथममेत्वे ऽनेन सम्बुद्धिलोप इति भावः । सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्त्तते ।

आङि चा ॥ चेन प्रकृतमोसि चेति परामृश्यते । घेर्ङितीत्यतोनुवृत्त ङितीत्याप इति पञ्चम्या षष्ठ्या विपरिणम्यतइत्याशयेनाह । ङिद्वचनस्येति ।

सर्वनाम्नः स्या ॥ आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः, तेन

---

घोश्चेत्योकारान्तसामान्यस्योपलक्षणमित्येतत्परतया । वस्तुतस्सामान्यत एव पूर्वोक्तभाष्यद्वयस्वारस्यादनभिधानमुचितमित्याशयेनाह । * परे त्वीदृशानामिति * । * इत्याहुरिति * । भाष्यस्वारस्यादिद इत्यादि ।

इत्यजन्ता पुंलिङ्गा ।

* रमेतीति * । ग्रन्थमध्ये मङ्गलार्थमस्यावावुल्लेख । ङयाब्ग्रहणस्यान्यार्थत्ववर्णनादाह । * एकादेशस्येति * । * वाचेत्यादाविति * । इदम्मूलरीत्या । एतेन व्यापकतया लिङ्गविशिष्टपरिभाषया सर्वत्र निर्वाह इति सूचितम् । * अभत्वात् * । सर्वनामस्थानत्वेनाभत्त्वादित्यर्थ ।

ननु सन्निपातपरिभाषया लोपो न स्यादत आह । * सन्निपातेति * ।

तृतीयासमास इति सप्तम्या प्रथमार्थत्वेनाव्ययस्य सर्वनामतया स्याट् स्यादत आह । * सर्वनाम्नो विहितस्येति * । * उद्देश्यत्वासम्भवादिति * । उद्देश्यस्य षष्ठ्यन्तपदयोग्यत्वस्य दर्शनेन प्रवृत्ते स्याट पञ्चम्यन्तपदयोग्यत्वाभा-

मासपूर्वायै इति सिद्धम् । अत्र ह्रस्वो न स्यात्, तस्य विधेयत्वेनोद्देश्यत्वा सम्भवात् । नापि द्विर्वचनस्य, व्याख्यानात् । अत आपो ह्रस्व इत्याह । आपश्चेति । आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह । एकादेशस्येति । ग्रहणादिति । सर्वनामशब्देनेत्यर्थः । न चैवमप्याबन्तत्वाभावः । एकादेशनिष्पन्नस्याप्यत्र भावात् । अत एव खट्वेत्यादौ परादिवद्भावेनाप्त्व माश्रित्याबन्तादिति सोर्लोप उक्तः । परादिवद्भावेन तत्र तु न लभ्यम् उभयत आश्रयणेऽन्तादिवत्त्वाभावादिति वाच्यम् । उभयत आश्रयणे तदभावस्य भाष्ये एकदेशुक्तत्वेऽपि सिद्धान्तिसमतत्वाभावात् । एतच्च तिङन्ते इण्धातौ वक्ष्यामः । परे तु लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम् आबन्तत्वन्तु परादिवद्भावेनेत्याहुः । सर्वस्यामिति । इह परत्वात्स्यादिकृते सकृद्गतिन्यायात्सुण्न ॥

प्रतिपदोक्तस्येति । द्विपच्छब्दमुच्चार्य विहितत्वादस्य तरपम् । योत्तरेति ॥ अनेकमन्यपदार्थे इति बहुव्रीहिः । सर्वनाम्नो वृत्तिमात्रइति मात्रग्रह-

---

यादावृत्त्या तथा कल्पने गौरवादिति भावः । * व्याख्यानादिति * । आगमापेक्षया ङितसप्तम्या अवयवावयविभावार्थकत्वङ्कल्पनीयमेवञ्च स्थानषष्ठ्याधिरूपितसम्बन्धबोधकत्वस्यादर्शनमूलकादिति भाव । * आपश्चेतीति * । वाक्यभेदस्यावश्यकतया पञ्चम्यन्तस्यापि षष्ठ्यन्तत्व वाक्यान्तरे कल्प्यत इति भाव * न चैवमप्याबन्तत्वाभाव इति * । यद्यपि सुडविधावाबन्तत्वस्य न निवेशस्तथापि तद्विधौ यथा पूर्वान्तत्वाभावेन सर्वनामत्वन्तथा तुल्यन्यायात्स्याडागमविधावपि वाच्यम् । एतञ्च पूर्वान्तवद्भावाश्रयणे आबन्तत्वालाभ इति भाव *अत एव* । एकादेशनिष्पन्नस्याप्यत्राभावादेव । * सिद्धान्तिसम्मतत्वाभावादिति * । एवञ्च पूर्वान्तवद्भावेन सर्वनामत्वन्तदवयवस्यैवाकारस्य श्रूयमाणस्य परादिवद्भावेनाप्त्वमिति समुदायस्याबन्तसर्वनामत्वमथसमाजग्रस्तमिति भाव । प्रकारान्तरेणाप्युपपत्तिमाह । * परेत्त्विति * । * सुट् नेति * । एतेन ह्रस्वमचाप इति सूत्रे नारशापण षष्ठीबहुवचनस्यैव ग्रहणमित्यस्य सिद्धिः ।

* तरपम् * । प्रतिपदोक्तत्वम् । * उत्तरपदस्य गुणवाचकत्वादिति * उत्तरात्वप्रकारकज्ञानविशेष्यस्य लक्षणया तद्बोधकत्वेन गुणस्योत्तरात्वप्रकारकज्ञानविशेष्यत्वरूपस्य बोध्यतावच्छेदकतया तदवच्छिन्नबोधकत्वादित्यर्थः । न च वाक्यादुद्देश्यविधेयभावस्य प्रतीतावपि समासात्तस्याबोधेन कथमस्य विग्रहस्य समाससमानार्थकत्वमिति वाच्यम् । समासादपि तादृशबोधस्य लोहितोष्णीषा इत्यादौ दर्शनात् । नन्वपुरीति वक्तव्यमित्यस्यान्तरायाम्पुरीति पूःशब्दसामानाधिकरण्य एव निषेधबोधकत्वमिति प्रतीयते एवञ्चान्तरायै नगर्यै

णात्संमत्यसर्वनामत्वेपि पुंवत्त्वम् । योत्तरेति । यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रतिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः । स्पष्टार्थमिति । दिङ्नामानीत्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः । अन्तरायै नगर्यै इति । अपुरीत्यस्य पूःशब्दार्थस्य विशेष्यत्वे इत्यर्थ इति भावः । अत्र मानमन्वेष्यम् । हे अम्बेति । ह्रस्वे कृते सम्बुद्धौ चेत्येत्व न आआनिति प्रश्लेषात् । द्व्यक्षर यदीति पठितत्वाद्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य डलकवतां ह्रस्वो नेत्यस्य भाष्ये प्रत्याख्यानात्फलाभेदाय सामान्यतोपि वार्त्तिकमसयुक्ताविषयमित्याशयेनाह असंयुक्ता इति । द्व्यक्षर यदीत्यस्याङ्गत्वाद् द्व्यक्षराम्बार्थकन्तस्य ह्रस्व इति नियमशरीराज्जगदम्बेत्यादौ ह्रस्वो भवत्येव । यद्यपि जरसादेशस्येति । एतच्चैतच्छीतुड्याडामां नित्यत्वात्पूर्वमेषु क चिदजादित्वाभावात्कचित्सन्निपातपरिभाषया जरसोऽनापत्तिरिति भावः । यद्यपि याडापोर्जरसपेक्ष्या परत्वात्तयोः कृतयोराद्येऽजादित्वविघातादन्त्ये सन्निपातपरिभाषया न जरसः प्राप्तिरेवमेत्वेपि, तथापि तत्र प्रश्लेषफलं दर्शयितुमाह । एवमिति । अत्र यद्वक्तव्यन्तन्निर्जरशब्दे उक्तम् । स्वाश्रयमिति । स्व श्रूयमाण आकार स्थानिवद्भावेनाप्तवमिति ।

---

इत्यत्र कथञ्चिदेव इत्यत आह । * पूःशब्दार्थस्येति * । * सामान्यतोऽपि वार्त्तिकमिति * । तत्र हि डलकवतीनाम्प्रतिषेधः । डलकवतीनाम्प्रतिषेधो वक्तव्य इत्युक्तम् । अम्बाल । अम्बिके । अत्र वार्तिके अर्थगतेन स्त्रीत्वेनाम्बार्था शब्दा निर्दिष्टा । इदञ्च वार्त्तिकमम्बार्थे द्व्यक्षर यदीत्यनेन प्रत्याख्यातम् । अम्बाक्षरपदमध्यपरम् प्रत्याख्यानपक्षे हे अक्क हे अल्लेत्यत्र द्व्यच्कत्वसत्त्वाद्ध्रस्वत्वम्भविष्यति । डलकवतीनामित्यस्यारम्भे तु नेति फलभेदपरिहाराय डलकवतीनामित्यस्यासंयुक्तडकारादिमद्विषयकत्वमिति भाव । अम्बार्थ द्व्यक्षरमित्यत्र द्व्यक्षरमिति तच्छब्दत्वादम्बार्थस्यैव विशेषणञ्च त्वङ्गस्येत्याह । * द्व्यक्षराम्बार्थकेति * । मूलोक्तयद्यपीतिशङ्कायास्तात्पर्यमाह । * एतच्चेति * । जरसादेशे कृते स्थानिवद्भावेनाप्तवादेत्वादीनाम्प्राप्तौ चेत्यर्थ । * नित्यत्वादिति * । उक्तरीत्या एत्वादीनाङ्कृताकृतप्रसङ्गित्वादित्यर्थ । * क्वचिदजादित्वाभावादिति * । सुड्याडा । * कचित्सन्निपातेति * । एत्वस्य सन्निपातलक्षणत्वे स निपातविघातकस्य जरसोऽनापत्तिरेवञ्चैतदर्थञ्च प्रश्लेष इति भाव । एवम्मूलोक्तरीत्या जरसादेशविषये स्थलद्वयेपि न प्रश्लेषफलमित्यभिप्रायेण शङ्कते । * यद्यपीति * । परत्वात्तत्कृते सकृद्गतिन्यायाच्च जरसादेशस्य प्रसङ्ग इति दोष । * अत्र यद्वक्तव्यमिति * । निर्भक्तयादेशस्यैव जरसादेशात्पूर्वम्प्रवृत्तिरित्यादि । स्थानिवद्भावेनाप्त्वामिति सम्

भाष्येऽपि अतिप्रसङ्गवार्त्तिकत्र स्थानिवत्त्वात् भावस्य यादः प्रतिषेधो वक्तव्य' न वक्तव्यो ङ्याप्ग्रहणे ऽदीर्घ इति स्थानिवत्त्वनिषेधात् । न च दीर्घत्वे आपत्तौ भूतपूर्व इति याड् प्राप्नोति लाक्षणिकत्वात् । स्थानिवत्त्वे तु तत्सामर्थ्यप्रितत्परिभाषाप्रवृत्तिरित्युक्तम् । यद्यपि स्थानिवत्सूत्रयाडापसूत्रस्थभाष्याभ्यां हलङ्याप्सूत्रयाडापसूत्रयोरेव प्रश्लेषो लभ्यते तथापि भाष्यमुपलक्षणमितरसूत्रविषयोदाहरणामभिधान नेत्यनयोर्युक्त सुधीभिर्विचार्य्यमित्याहु' ।

व्रश्च ॥ अत्र राजिसाहचर्याद् भ्राजि फणादिरेव तेनान्यस्य विभ्राडि त्येवेत्याहु' । छशौ वर्णौ ताभ्यां शब्दरूप विशेष्यमादाय तदन्तग्रहणमित्याह, छशान्तयोरिति । छशयोरित्युक्तेपि न क्षतिरिति चिन्त्यम् । पदस्येति तु पृष्टमित्यादिसिद्धये व्यधिकरणमेव । अन्तादेश इति । अलोन्त्यस्येति वचनात् । अत्र झलो झलीत्यतो झल्पीति पदस्येति स्कोरित्यतो ऽन्ते इति चानुवर्त्तते । छ्वोः शूडित्यत्र भिडतीत्यनुवृत्ते' प्रष्टेत्यादौ शादेशाभावात् अशान्तत्वेन षत्वाप्राप्तौ च्छग्रहणम् । अत्रापि सतुक्कनिर्देशो बोध्यः । तस्यासिद्धत्वादिति चयो द्वितीया इत्यस्य नादिन्येति सूत्रे भाष्ये पाठादिति भाव' । टतयोरिति । धुडभावे टस्य, धुटि तस्येत्यर्थ. । न भवतीति । जश्त्वात्प्राक् षस्य नेत्यर्थः । जश्त्वे तु प्राप्तिरेव नेति बोध्यम् । केचित्त्विति । एकाचइत्युत्तरसूत्रे ऽनुवृत्त्या मध्येपि सम्बन्ध एवोचित इति भाव. । जश्त्वेनेति । यत्तु जश् झशीति निर्देशात् षस्य न जश्त्वमिति तन्न । स्वाविकृतस्वरूपप्रतिपादने तात्पर्यादप्रत्ययादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायासिद्धायां ज्ञापकत्वायोगात् । उपदेशोजित्यादिनिर्देशै कुत्वाद्यनापत्तेश्च । अत्र मते

---

*भाष्येऽपीति* । * भाष्याभ्यामिति * । प्रथमे सूत्रद्वयोदाहरणविषये शङ्कासमाधानकरणादन्त्ये स्थतिप्रसङ्गवार्त्तिकत्रैव शङ्कासमाधानकरणात् । * सुधीभिर्विचार्यमिति * । अनभिधानकल्पने भाष्यान्तरानुप्रहाचिन्त्यमुपलक्षणत्वे तु सर्वत्रैवास्यैव निर्वाह इत्युपलक्षणत्व युक्तमिति केचित् ।

*व्रश्चेति* । प्रश्चेति सूत्रे इत्यर्थ । *आहुरिति* । भाष्यानुप्रहाभावोऽस्वारसिः । यत्तु पदस्य विशेष्यत्वेन तदन्तलाभ इति तन्न युक्तमित्याशयेनाह । * पदस्येतीति * । छग्रहणप्रयोजनमाह । * कद्भ्वो शाडित्यत्रेति । *अत्रापि* । प्रश्चेतिसूत्रेऽपि । * तन्न * । झलामिति सूत्रे । * तदप्राप्तौ * । जश्त्वाप्राप्तौ । सूत्रनिर्देशमात्रेण शास्त्रप्रासिकल्पनायाम्' प्रतिबन्दीमाह । * उपदेश इति * । अत्र मते * । केचिन्मते । कारणतावच्छेदकावच्छिन्नाभावस्यैव कार्याभावप्रयोज

भाष्यानुग्रहो विचार्यः । मांसपृतनेत्यस्य पद्दन्न इति सूत्रे उपसंख्यातत्वादा-
ह । शसादौ वेति । स्त्रीत्वादिति । पुंस्त्वाभावादित्यर्थः । नत्वा नेति ।
स्त्रीत्वादित्यनुकृष्यते । अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम् । न
हि पुंस्त्वाभावो नाभावे प्रतिबन्धकः । नपुंसकेपि तदङ्गीकारात् । -

ङिति ह ॥ अत्र वाक्यद्वयमाद्ये यू इति स्त्र्याख्यावित्यस्त्रीति इयङुव-
ङ्स्थानाविति नेति चानुवर्तते । अन्त्ये यू इति वेति स्त्रीवाचकावित्येत-
न्मात्रार्थकस्त्र्याख्याविति च । तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु नेयङिति निषे-
धादप्राप्ते विभाषा । इत्यादिष्वप्राप्तिमाशङ्क्य ङिति ह्रस्वश्चेत्यत्र नित्यस्त्रीलिङ्गा-
वित्येवंविधो नियमो नाश्रीयतइति कैयटस्तु ह्रस्वांशमात्रविषय इत्याशयेनाह ।
नित्यस्त्रीलिङ्गाविति । अत एवास्य दीर्घांशे निषेधविकल्पत्वं भाष्ये उक्तं यू
स्त्र्याख्याविति सूत्रे तत्फलं कटप्वे ब्राह्मण्यै इति । लिङ्गान्तरविशिष्टार्था-
भिधायकत्वेन तत्त्वाभावात् । परे त्वत्र विकल्पो भवत्येव आख्याग्रहणरहि-
तस्यैवात्र सम्बन्धात् । यद्वा स्त्र्याविल्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र
शब्दाधिकारात् । तच्च ङिदाशिशष्टाङ्गस्य विशेषणम् । अत एव प्रथमलिङ्गग्र-
हणं चेत्यस्यानामप्रवृत्त्यन्वाख्यायके ह्रस्वौ चेयङुवङ्स्थानौ च प्राक् च प्रवृ-
त्तौ स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यमिति वा-
र्तिके शकट्यै ब्राह्मण्यै क्व मा भूत् अतिशकटये ब्राह्मणाय अतिश्रियै ब्राह्म-
ण्यै श्रियै ब्राह्मण्यै क्व माभूत् अतिश्रिये ब्राह्मणाय श्रिये ब्राह्मणायेति यू-

---

क्ता इष्टेति स्त्रीत्यादित्युक्तमत आह । *पुंस्त्वाभावेति * । * अत एव * । पर्यु-
दासप्रतियोगिसूचनाभिप्रायादेव ।

*अत एव * । आद्यवाक्ये स्त्र्याख्यपदस्य नित्यस्त्रीलिङ्गावित्यर्थकत्वादेव ।
कटप्व इति * । अस्य लिङ्गान्तरविशिष्टार्थाभिधायकत्वं स्पष्टमेव । सिद्धान्त-
माह । * परे त्विति * । अत्र कटप्वे ब्राह्मण्यैइत्यत्र । अत्र ङिति ह्रस्वश्चेतिसू-
त्रे । एवञ्च वाक्यद्वयेऽपि स्त्र्याख्यपदं स्त्रीवाचकावित्येतन्मात्रार्थकमेव । एवञ्च
ङित्परं यदङ्गं स्त्रीबोधकन्तद्वा नदीसञ्ज्ञकमित्यर्थं एवमस्य । * अत एव* ।
एवंविधवाक्यार्थनिष्पत्तेरेव । * अप्रवृत्त्यन्वाख्यायकेति * । अस्य इति वार्तिक
इत्यत्रान्वयः । * प्रवृत्तौ * । अर्थान्तरोपसङ्क्रान्तौ । *अतिश्रियै* । श्रियमति-
क्रान्तायै । अतिशकट्यै । शकटीमतिक्रान्तायै । श्रिये । श्रीशब्दवाचके । ननु नित्य
स्त्रीत्वाभावात् स्त्र्याख्यावित्ति सूत्रस्याविषये सूत्रस्याप्राप्तौ प्रथमलिङ्गग्रहणञ्चेत्य-
स्य वा प्राप्तिः साऽनेन वार्तिकेन निराक्रियते । ङिति ह्रस्वश्चेत्यनेन तु विक-
ल्पो भवति । दीर्घघटितवाक्ये चाभिन्नेऽन्त स्त्रिया वर्तमानावित्यर्थकस्त्र्याख्यपदस्य
सम्बन्धः स्यात्तदा प्रकृतसूत्रस्याप्यप्रवृत्तौ रूपासिद्धिः स्फुटैव । *निषेधविकल्प

स्त्र्याख्याविति सूत्रशेषे भाष्ये उक्तम् । एवञ्चास्य निषेधविकल्पत्वमसम्भवि। समुदायस्य केनापि प्राप्त्यभावात् । अवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावात् । ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पात् । एतच्च प्रवृत्तौ स्त्रीवचनाविल्यनेन सूचितम् । अत एवात्र वाक्यद्वयेपि विधिविकल्प एव दर्शितः । एवञ्चात्र नियमो नाश्रीयत इति कैयटो वाक्यद्वयपर एवोचितः । उपक्रमे निषेधपरतया व्याख्यानन्तु स्त्र्याख्याविल्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो यू इति ह्रस्वयोर्ग्रहणमिति पक्षोपपादने युक्तिभूतमिति तन्नादरणीयम् । यत्तु दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषण पुनरङ्गेन तदन्तविधिः । अङ्गस्य च केवलस्त्रीत्व विशेषणमेव ह्रस्वघटितवाक्येपि स्त्रियामित्येतन्मात्रमुभयोर्विशेषणमिति तत्तु चिन्त्यम् । भाष्यात्तदलाभात् । नेयङुवङित्यत्र तु नेयङाद्याक्षिप्ताङ्गविशेषण स्त्रीत्वम् । तदाक्षिप्तस्येयङा-

---

ह्यमसम्भवीति * । निषेधस्य प्राप्तिपूर्वकत्वात्प्रवृत्ते च प्राप्तेरेवाभावादिति भाव । * एतच्च * । अप्राप्तविभाषात्वञ्च । * अत एव * । निषेधविकल्पत्वास म्भवादेव । न चेयमुपक्रमे निषेधविकल्पपरतया कृत व्याख्यान विरुध्येतेत्यत आह । * उपक्रमे इति * । * ह्रस्वयोर्ग्रहणमितिपक्षोपपादन इति * । तत्र हि किम्पुनरिदन्दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयो किञ्चात । यदि दीर्घयोर्यू इति निर्देशो नोपपद्यते । अथ ह्रस्वयो । हे शकटे अत्रापि प्रसज्येत । नैष दोष । अवश्यमत्र विभाषा नदीसंज्ञैषितव्या । दीर्घग्रहणपक्षे ह्रस्वान्तस्याप्राप्ता विधेया ह्रस्वग्रहणपक्षे नित्यम्प्राप्ता पक्षे बाध्या वचनेनेत्याशयेनोक्तमयद्वयमिति । उभय थीष्यते हे शकटि हे शकटे इति च । इह तर्हि शकटिबन्धुरिति नदीबन्धुनीत्येष स्वर प्राप्नोति । अत्र पूर्वपदान्तोदात्तत्व स्यात् । सिद्धान्ते तु शकटिशकट्योरिति फिट्सूत्रेण त्रयाणाम्पर्यायर्णोदात्तत्वात्पूर्वपदप्रकृतिस्वरेण त्रयोप्यच उदात्ता भवन्ति । इह च बहुशकटिरिति नद्यृतश्चेति कप् प्रसज्येतेत्याशङ्क्य यू स्त्र्याख्यौ नदी । नेयङुवङ् स्थानावस्त्री । वाऽऽमि । ततो ङिति । ङिति चेयङुवङ् स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवत । ततो ह्रस्वौ । ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवत । इयङुवङ्स्थानौ वा नेति निवृत्तमित्युक्तम् । इदञ्च नियमार्थम् । ङित्येव ह्रस्वौ यू नदीसंज्ञावित्येव नियम इत्यभिप्राय । एतेन तस्य पक्षस्योपपादनम्भवति । न च यू स्त्र्याख्याविति सूत्रस्यैव सति लिङ्गद्वये प्रवृत्तिर्न स्यादिति वाच्यम् । तत्राणुदित्सूत्रसहायेन दीर्घग्रहणसम्भवेन यूग्रहणचारितार्थ्यसम्भवात् । यद्यप्यूकालोऽज्झ्रस्वेति सूत्रे उक्तमशब्दसंज्ञेत्यनुवर्तनाच्छब्दस्य संज्ञायां सवर्णग्रहणमिति ततश्चात्र दीर्घग्रहणासम्भव प्राप्नोति । तथापि नेयङुवङ् स्थानाविति ज्ञापकादस्त्रीतिपर्युदासाच्च सवर्णग्रहणसम्भव । न चास्मिन्पक्षे नित्यनदीसंज्ञाया विसञ्ज्ञाबाधनाज्ज्ञस्ये इत्यत्र गुणो न स्यादिति वाच्यम् । ङि

द्विविशेषणतया एवौचित्यात् । यस्याङ्गस्येयुवाविति भाष्योक्तेः स्त्र्याख्या-वितस्य नित्यस्त्रीलिङ्गावित्यर्थकस्य यू इत्यनेनैव क्लृप्तसम्बन्धत्वाच्च । अत एवातिश्रये ब्राह्मणायेत्यत्रानेन निषेधाद्वयवनदीत्वमप्रयुक्तमपि नदीकार्यं न । ननु यथा खरकुट्यै ब्राह्मणायेत्यादौ लुबन्तस्य त्रिलिङ्गत्वेपि प्रथमलिङ्गग्रहणान्नित्यनदीत्वं भवतीति भाष्ये उक्तम् । चञ्चाब्राह्मणान्पश्येत्यादौ पुंवद्भावेन स्त्रीलिङ्गप्रयुक्तकार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिः । स्पष्टश्चेदं स्त्रियामिति सूत्रे भाष्ये । पुंवद्भावादिमत्याख्यानेपि यथा दारा-दिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति न नदत्वम् । पुंस्त्वे वाच्ये नत्वमित्यर्थात् । नन्वेवं खरकुट्यै इत्यत्रापि युक्त-वद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम् । स्त्र्याख्यावित्यस्य स्त्री-त्वविशिष्टमेव य आहेत्यर्थात् । न चायं तथा । स्त्रीत्वेन रूपेण वस्तुतः पुं-स्त्वविशिष्टस्याभिधानात् । यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति तथापि व्यक्तिवस्तुपदार्थाभिनोद्भूतत्वकाले तत्तल्लिङ्गोपजननेपि स्त्रीपदादिबोध्यत्व-

---

योगो विभज्यते । स्त्र्याख्यौ यू ह्रस्वौ ङिनीत्यनुवर्तते घिसंज्ञा भवत । स्त्र्याख्यौ ङिनीति च निवृत्तम् । तत्राप्रदोषाभाव ॥ अथ त्रा नदीसंज्ञाया परत्वाद्धि-संज्ञा पुम्पुंसकयोश्चारितार्था बाधिका भविष्यति । परन्तु योगविभागनियमक-ल्पनापाङ्कार्यामिति यू स्त्र्याख्यौ नित्यम् दीर्घयोग्रहणमिति शिष्टव्याख्यातम् । * भाष्योक्तस्तलाभादिति * । भाष्ये हि प्रवृत्तो न प्राक् च प्रवृत्ते स्त्रीवचनायेय स्येतावदुक्तेर्नित्यस्त्रीलिङ्गावित्यनुक्तश्च तदलाभ ।

ननु नेयङुवङ्स्थानावितिसूत्र्ये समय स्त्र्य स्यादिति तल्लाभ इत्यत आह । * नेयङुवङिति * । अत्रार्थे भाष्यसम्मतिमाह । * यस्याङ्गस्येति * । एतादृशव्याख्यानकृत्माह । * अत एवाति * । तादृशव्याख्यानादेव । सिद्धान्ते शङ्कते । * नन्विति * । ननु लुबन्तस्य त्रिलिङ्गत्वे पुंस्त्वप्रयुक्तनदीत्वञ्चञ्चा ब्राह्मणान्पश्येत्यत्रापि स्यादत आह । * चञ्चा ब्राह्मणानिति * । स्त्रीलिङ्गप्रयुक्तकार्याभावस्येति । अतिदेशप्राधर्मोत्रपद स्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्तादृशकार्याभावस्याप्य-तिदेशस्वीकार । तादृशातिदेशस्वभावेनैव सिद्धौ स्त्रीलिङ्गप्रयुक्तकार्याभावातिदेशे गौरवादाह । * यद्वेति * । * कार्याप्रवृत्तिरिति * । अस्य स्वभावसिद्धैवेति शेषः । * युक्तवद्भावादिति * । आदिना लुब्योगसङ्ग्रह । * पुंस्त्वे वाच्य इति * । सूत्रे पुंसीति घमरवमिति भाव । * सूत्रेणैवेति * । यू स्त्र्याख्याविति सूत्रेणैवेत्यर्थ । एवञ्च प्रथमलिङ्गग्रहणादितिभाष्यमसङ्गत स्यादिति भाव । * स्त्रीत्वविशिष्टमेव य इति * । पूर्वोक्तभाष्यबलादयमर्थः कल्प्यते । स्त्रीत्वविशिष्टमेवेति नियमासम्भवमाशङ्कते । * यद्यपीति * । * तत्तदिति * । लिङ्ग

दशायान्तत्सत्त्वे मानाभावात् । प्रकृते तु ब्राह्मणायेत्यादिविशेषदर्शनेन तत्सत्तानुमानात् । स्पष्टं चेदं भाष्यकैयटयोरेव । श्रीसन्दातकानि लुपि श्रिये ब्राह्मणायेत्यादौ विकल्पापत्तिः, युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तमानात् । अत्र सूत्रे नित्यस्त्रीत्वानिवेशाच्चेति चेन्न । सत्यभिधाने इष्टापत्तेः । भाष्ये दृश्यमाने श्रिये ब्राह्मणायेत्यादि तु क्यजन्तात्क्विपि बोध्यम् । विपरीतनित्यस्त्रीत्वनिवेशनादिना लुगन्तानि तु ब्राह्मणायेत्यादौ तदनापत्तिर्दोष इत्याहुः । यू किम् । मात्रे । यद्यपि यू इति दीर्घपरं तथापि विभक्तिविपरिणामेन य्वोर्ह्रस्वावित्यन्वयो बोध्यः । एतत्सर्वं नामीत्यत्रापि बोध्यम् ।

इदुद्भ्यामौदच्चघेरिति सूत्रं योगविभागेन व्याचष्टे, इदुद्भ्यामिति । अनदीसञ्ज्ञकेषु अच्चघेरौदित्याभ्यां बाधात् । ङेराम्नीति सूत्रान्नदीग्रहणानुवृत्तेश्चाह । नदीसञ्ज्ञकाभ्यामिति । मत्यामिति । सन्निपातपरिभाषाया अनित्यत्वान्नुडागम् ।

त्रिचतुरोः ॥ अष्टन आ इत्यतो विभक्ताविति वर्त्तते । तत्फलं त्रिभार्य । तृतीयान्तेन समासः । भार्यया भरणीयः ।

अचि र ॥ अलोन्त्यपरिभाषयैव सिद्धे ऋत इति अनुवर्त्तमानतिसृचतसृ इत्यस्य षष्ठ्यन्ततरकल्पनयान्यथा त्रिचतुरोरित्यस्यैव चानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्नाशापत्तिरिति दिक् । नुमचिरेति । अत्रापि निरासे न तिस्त्रि

---

न्तरपरत्वे । * तन्मध्येति * । पुन्वत्सत्त्वेऽर्थः । एवञ्च खग्पुरुषैः ब्राह्मणायत्यत्र न सूत्रेण सिद्धिरिति भावः । * एतम् * । दाक्कुटे इतिवत् । * अत्र सूत्र इति * । वान्यद्वयेऽपीति शेषः । वैनहमतेऽयमपि दोष इत्यर्थः । * तदनापत्ति * । विकल्पाभावापत्तिः । * य्वोर्ह्रस्वाविति * । वाचकं नयोः षष्ठ्यर्थः । * योगविभागेनेति * । एतेन त्रिणा भिन्नान्येवैतानीति कस्यचिदुक्तिः प्रत्युक्ता ।

ननु मत्यामित्यत्रेत्सन्निधौ नाभादेशस्तस्मिन्नपि कर्त्तव्ये सन्निपातविघातः स्यादत आह । * सन्निपातेति * ।

* त्रिभार्य इति * । अत्र तिस्रादेशो लक्षणापत्तिः । ननु तथापि पृथक्षार्थेन सिद्धमत आह । * तृतीयान्तेनेति * । * तिसृभिर्भार्य इति * । ननु भार्याशब्दस्य समासान्तत्वेन क्रियायोगाभावात्कर्तृकरणे कृदन्तस्य कथं प्राप्तिरत आह । * भार्या भरणीय इति * । कर्तृत्वेऽण्यत् । न च भृञोऽसञ्ज्ञायामिति क्यपा भाव्यम् । भार्यशब्दस्य क्षत्रिय रूढतयाऽसञ्ज्ञायामिति पर्युदासात् । न चैवं तिसृभिरित्यनापत्तिमिति तु न तिसृभिर्युक्त इत्यर्थकस्य वाक्यैकदेशन्यायेन प्रयुक्तस्य त्रिशब्दस्य शक्त्यर्थस्य समासाङ्गीकारात् । इह त्रिभरणीय इत्यपि प्रत्युदाहरणम् ।

* त्रिचतुरोरित्यस्यापि * । उद्देश्यतावच्छेदकत्वात् । ऋत इत्युपादाने त्वयोग्यत्वान्न तयोरनुवृत्तिः । * रादेशेनेति * । अत्रापि विभक्तावित्यादि त्ति

प्रसज्यप्रतिषेधस्तु न वाक्यभेदापत्तेः । नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह । दीर्घस्यायामिति । तत्र ह्रस्वपदाभावादिति भावः । अयमन्त्येनामिति श्रीः क्विब्वचीत्यादिना वागित्यत्रेव कर्मणि क्विब्दीर्घौ अड्यन्तत्वान्न सुलोपः ।

नेयङ् ॥ ङद्वयोच्चारणं स्पष्टार्थम् । स्थानशब्दो भावल्युडन्तः । इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः । सा च बाधकाविषये एव । तेन प्रकृष्टा धीः प्रधीः प्रध्ये इत्यादौ न निषेधः । सा चोपलक्षणं व्याख्यानात् । तेन हे श्रीरित्यादौ निषेधासिद्धिः । श्रियामित्यादौ तत्स्थितिसत्त्वात् । यत्र नदीकार्याश्रये ऽङ्गे बाधकाभावे इयङादिस्थितिः क्वचित् दृष्टा तस्य तदवयवस्य च निषेध इति फलितम्, अत एव प्रकृष्टा धीर्यस्याः यस्य वा प्रधीरित्यवयवधीशब्दस्य नदीत्वं भवत्येव । तदुक्तं भाष्ये, अवयवे स्त्रीविषयत्वादसिद्धमिति चोदियङ्स्थानप्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात् । आध्यै प्रध्यै सिद्धन्त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम् । न चैतस्याङ्गस्येयङुवङौ भवत इति । श्रिये इति । ङिति ह्रस्वश्चेति विकल्पः ।

वामि ॥ आमीति च्छेदः । प्रधीशब्दस्येति । प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः । वृत्तिकारादीनामिति । अयं भावः । भाष्ये आध्यै प्रध्यै इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयाङ्ग इत्युक्तरीत्या समाहितं तत्र न बहुव्रीहिः कबापत्तेः । किं तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत् । तत्र कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासङ्गतिः, अत. स्त्रीविष-

---

* इति बहुव्रीहिरिति * । व्यधिकरणबहुव्रीहेरपि सप्तमीविशेषणे इतिज्ञापकात्साधुत्वम् । एतेन मूलोक्तार्थस्य वाच्यार्थपरतयैवोपपत्तेरस्याधिकरणल्युडन्तस्थानशब्दस्येयङुवङो स्थानावितिषष्ठीसमासं कृत्वा फलितार्थपरतया वर्णनमयुक्तमिति सूचितम् । अत्रेयङुवङोरित्यस्य षष्ठ्यन्तस्य गृहत्येतद्विशेषणतयोपपत्ते स्थानशब्दोपादानसामर्थ्याल्लब्धं तदाह । * सा च बाधकाविषय इति * । अत्रातद्गुणसंविज्ञानबहुव्रीहिलभ्यार्थमाह । * सा चोपलक्षणमिति * । पूर्वोक्तमर्थं प्रमाणयति । * तदुक्तमिति * । प्रथमलिङ्गेत्यस्य प्रत्याख्यानावसरे यू स्त्र्याख्याविति सूत्र ॥

* प्रकृष्टं ध्यायतीत्यर्थकस्येति । * प्रकृष्टाध्ययनकर्तृत्वप्रवृत्तिनिमित्तकस्येत्यर्थ । एतावता विना स्त्रियां वर्तमानस्य नित्यस्त्रीत्वमित्यस्य वृत्तिकारादिसम्मतस्य खण्डनप्रकारमाह । * अयं भाव इति कैयटोक्तेति * । पूर्वोक्तेन प्रवृत्तिनि

ऋन्नेभ्य इति । तदन्तशब्दानां बहुत्वाद् बहुवचनं प्रातिपदिकविशेषणत्वात्तदन्तविधिः । रामविलापोयं विधिना त्वया हापितस्त्याजितः स हे सुभ्रु क्वासीत्येवं बहु विललापेत्यर्थः । नेयङिरत्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः । प्रमाद इति । विरहपीडितत्वेनानवधानलक्षणोत्र प्रमादः स च विरहपोषकत्वात्काव्ये गुणः ।

एकाजुत्तर ॥ एकोच् यस्मिन् तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदे इत्यनेनास्य वाक्यस्य समासपदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्य इत्याह । तस्मिन्समासे इति । आरम्भेति । प्रातिपदिकान्तेत्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः । पुनरिति । णग्रहणे ऽनुवर्त्तमाने इत्यर्थः । यणमिति । रुन्रूरेति यणमित्यर्थः । भेकजाताविति । शिली गण्डूपदा भेकी वर्षाभ्वी कमठी डुलिरित्यमरादस्य बह्वादित्वेन वा ङीषिति भावः । अन्ये त्वस्य गौरादिपाठान्नित्यमेव ङीष् । भेक्या पुनर्नवाया स्त्रीति यादवस्य सुतः पुनः स्त्रियान्त्वमी आहुर्दुहितरमितिवन्नित्यङ्यन्तत्वेप्युपपत्तेरित्याहुः । गौरादिकल्पने मानाभावात् । अमरे वर्षाभूः कमठी डुलिरित्येव पाठ इति सुबोधिनीकार इति माधव । तदनुसारेण मूलं बोध्यम् ।

टाप्ङीपौ न स्त इति । स्त्रिया यत्प्राप्नोति तन्नेति व्याख्यानादिति भावः । स्वस्रादिषु मातृशब्दस्य ननान्दादिसाहचर्यात्प्रसिद्धत्वाच्च ससबन्धिकजननीवाचकस्यैव ग्रहणम् । सन्निपातपरिभाषयैव तिसृचतस्रोर्ङीन्भावे सिद्धे तदानित्यत्वज्ञापनार्थन्तयोर्ग्रहणमिति केचित् । स्वस्रादिषु ति-

मित्यर्थः । ऋन्नाभ्यामितिद्विवचननिर्देशो गार्ग्यवञ्चत्यपि बोध्यम् । विरहपोषकत्वात् । विरहे सति विरहिणोऽनवधानम्भवतीति हि लोकप्रसिद्धम् ॥

समास इत्येतल्लाभप्रकारमाह । * उत्तरपद इत्यनेनेति * । * अस्य । वर्षाभूशब्दस्य । अमरात्स्त्रीप्रत्ययोऽस्माद्भवतीति ज्ञानेऽपि यादवकोशोपपत्त्यर्थम्बह्वादि नकल्पनमिति भाव । अमरसम्मत्याह । * अन्ये त्विति * । * गौरादिपाठादिति * । तस्याकृतिगणत्वकल्पनया । यादवकोशोपपत्तिमाह । * भेक्यामिति * । * इतियदीति * । तत्रचात्रापि स्त्रीप्रत्ययप्रकृतिमात्रप्रतिपादनेन कोशतात्पर्यङ्कल्प्यते इति भावः । मूलासङ्गतिम्परिहरन्तात्पर्यमाह । * गौरादित्वादीति * । * तदनुसारेण * । माधवमतानुसारेण ।

अनन्तरस्येतिन्यायेन ङीप एव निषेधः स्यादत आह । * स्त्रिया यत्प्राप्नोतीति * । केचिदित्यनेन सूचितामरुचिम्प्रकाशयन्नाह । * स्वस्रादिष्विति * । * भाष्यस्वरस इति * । तत्र हि सन्निपातपरिभाषाया प्रयोजननिरूपणावसरे

सूचतस्रो. पाठो ऽनार्ष इति कुन्मेजन्तसूत्रस्थभाष्यस्वरसः ।

इत्यजन्ताः स्त्रीलिङ्गाः ॥

अतोम् ॥ अत इत्येतदधिकृतस्याङ्गस्य विशेषणम् । स्वमोर्नपुंसकादिति चानुवर्तते । अम् लुग्बाधको येनानाप्राप्तइति न्यायात् । अमिति च्छेदो न तु मिति । ज्ञानमित्यादौ सुपि चेति दीर्घपक्षे । सन्निपातपरिभाषया दीर्घ-

---

तिसृचे त्यत्र ङीब्विधेरनिमित्तम् । तिस्रस्तिष्ठन्ति । तिसृचतसृभावे कृते ऋ न्नेभ्यो ङीबिति ङीप्प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । इत्युक्त्वा नास्त्येतत्प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न तिसृच तसृभावे ङीप् भवति । यदयं तिसृचतसृ इति नामि दीर्घत्वस्य प्रतिषेधं शास्तीत्युक्तम् । यदि स्वस्रादिष्वनयोः पाठः स्यात्तदा तेनैव निषेधे सिद्धे ज्ञापकानुसरणक्लेशो व्यर्थः स्यादिति भावः ॥

इत्यजन्ताः स्त्रीलिङ्गाः ॥

* येन नाप्राप्त इति न्यायादिति * । उत्सर्गप्रतियोग्यविषये ऽचारितार्थ्यं ह्येतन्न्यायप्रवृत्तौ बीजं तत्प्रकृतेऽस्त्येव । न चोत्सर्गशास्त्रस्य प्रवृत्त्युत्तरं यत्रापवाद-त्वेनाभिमतस्य प्राप्तिस्तत्रापवादत्वव्यवहारो भवति । प्रकृते तूत्सर्गस्य लुकः प्रवृत्त्युत्तरं नाम्भावस्य प्राप्तिः स्थान्यभावादिति कथमपवादत्वव्यवहार इति कथ-ममम्भावे लुगभावार्थं तद्य नोचितं सन्निपातपरिभाषयैव लुगभावस्य सिद्धेरिति । तन्न । लुकः पूर्वमम्भावस्य निरवकाशत्वेन प्रवृत्तिरित्यत्रैव तात्पर्यात् कृते त्वम्भावे सन्निपातपरिभाषया लुगभावस्य सिद्धिरिति त्वन्यत् । यत्तु ला-घवादतोमित्यत्र म् इत्येव छेदः । द्वितीयैकवचने आदेः परस्येत्यकारस्य मकारे द्वितीयमकारस्य संयोगान्तलोपेन सिद्धम् । यद्यपि संयोगान्तस्य लोपे यण प्रतिषेध इति वार्त्तिकारम्भपक्षे संयोगान्तलोपः प्राप्नोति । झल्ग्रहणापकर्षपक्षे तु नेति फ-लभेद आपतति । तथापि संयोगान्तलोपसूत्रे झल्ग्रहणस्य वाक्यभेदेन सम्बन्धं क-ल्पयित्वा फलभेदः परिहरणीय इतिमतं तद्दूषयति । * अमिति छेद इति * । अ-त एव * । अमिति छेदस्य सूत्रकाराभिप्रायविषयत्वादेव * न तु म् इति छेद उक्त इति * । यदि म् इतिछेदोऽभिमतः स्यात्तदा वर्णग्रहणे च सर्वत्रेति तदन्त-विध्यर्थमङ्गाक्षेपमात्रङ्कुर्त्तव्यम् । येन यदाक्षिप्तं तत्तस्य विशेषणमिति न्यायेन ता-दृगाक्षेपरायां सम्बुद्धिरित्येव लाघवाद्वदेत् । वैयधिकरण्येनान्वयो हल्पदानुवृत्तिश्च न कार्येति भावः । केचित्तु सन्निपातपरिभाषया ज्ञानमित्यत्र दीर्घवारणमयु

वारणे तु हे ज्ञानेत्यादौ सम्बुद्धिलोपस्यानापत्तिः। मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात्। अत एवैङ्ह्रस्वादिति सूत्रे ज्ञानेत्यादौ मलोपाय कतरदित्यादौ लोपाभावाय चाक्षाक्षेपण्याधिकरणान्वयहल्पदानुवृत्तय आस्थिता भाष्ये न तु मिति च्छेद उक्त इत्यलं भाष्यविरुद्धकल्पनयेति दिक्।

जसः शी. औङ आप इत्याभ्या शी औङ इति चानुवर्तते तदाह क्लीबादित्यादि।

यस्येति च॥ इआश्रयन्तस्येत्यर्थो व्याख्यानात्। भस्येत्यधिकारश्चेन नस्ताद्धितइत्यतस्तद्धितोनुकृष्यते तदाह। भस्येत्यादि। भस्येति किम्। गर्गरूप्यम्। औङः श्यामिति। इत एव निर्देशादस्य नित्यक्लीत्व बोद्धव्यम्। औङ इति स्वरूपकथनं सर्वे इत्यस्य भाधिकारेण सिद्धेः।

जश्शसोः। शसत्र सुबेव व्याख्यानात्।

नपुंसकस्य॥ इदितो नुमिति सर्वनामस्थानइति चानुवर्तते अङ्गस्येति च प्रकृतम्। तच्च झलन्भ्यां विशेष्यते। नपुंसकस्येति श्रूयमाणस्याभावादङ्गस्यैव विशेषणम्। आस्थिदधीत्यादौ तु श्रूयमाणस्यैव प्रकरणात् श्रुतबलवत्त्वात्। अत एव त्रिचतुरोरित्यत्र स्त्रियामिति तयोरेव विशेषणमित्याकर।

---

क्तम्। यथा एङ्ह्रस्वात्सम्बुद्धेरिति सूत्रे हल्ग्रहणानुवृत्त्यभावे कुण्डशब्दात्सम्बुद्धौ अमादेशो आदे परस्येत्यकारलोपे सुपि चेति दीर्घे हे कुण्डामिति प्राप्नोति सन्निपातपरिभाषाया अनित्यत्वाभिप्रायेणोक्तन्तथेह म् इति छेदपक्षेपि दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिर्भविष्यतीत्याहु। अत्रेदमवधेयम्। अमिति छेदपक्षेऽन्तसन्निपातनिमित्तकस्यामादेशस्य न साक्षात्सन्निपातविघातकत्वं घन्प्राति निमित्त नेति सन्निपातपरिभाषाया अप्रवृत्तिस्तस्मिन्पक्षे सम्भवति। म् इति छेदपक्षे तु सन्निपातलक्षणविधेर्मकारादेशस्य सन्निपातविघातकदीर्घनिमित्तत्व समुचितमेवेति॥

ननु यस्येति चेतिसूत्रेण यकारमात्रस्यैव लोपविधानमस्त्वित्यत आह। *व्याख्यानादिति*। सूर्येतिष्येत्युत्तरसूत्रे यग्रहणोपादानमूलकव्याख्यानादित्यर्थः। *स्वरूपकथनमिति*। अस्य न तु व्यावर्तकमिति शेषः। सर्वे इत्यत्रातिप्रसक्तं तर्हि स्यादत आह। *सर्वे इति*। *व्याख्यानादिति*। अस्मादुक्तार्थमूलकात्। अत एव तानीति सूत्रे एकदा इति प्रयोगसङ्गतिः।

*बलवत्त्वात्*। प्रकरणापेक्षयेति धातिस्तदपेक्षया श्रुतार्थस्य शीघ्रोपस्थितिकत्व-

उपधादीर्घ इति । सर्वनामस्थाने चासम्बुद्धावित्यनेनेति भावः । शेपमिति कर्मणि घञ् । घञन्तः पुंसीति मायोवादः ।

अङ्ग । दुद्धेति पाठः । दस्य प्लुत्वं ढस्य सयोगान्तलापश्चादेशस्वरूपभङ्गभिया न कृत इति कैयटः । पञ्चभ्य इति । अधिकन्यवच्छेदाय अस्य सर्वाद्यन्तर्गणत्वात् । परे तु डतरादिभ्य इति विरुद्धविभक्तिपञ्चम्यन्तत्वाददृस्येत्यनेनान्वयानर्हमिति डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ इति भाष्ये सर्वादिसूत्रे स्पष्टम् । एवञ्च परमकतरं कुलमित्यादौ नादड् । यत्तु कैयटेनार्थद्वारकं विधानमाश्रयितव्यम्, तेन परमकतरदित्युक्तं तन्न । तस्य यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थमतीत्यसम्भवः । यदि षष्ठ्यर्थे पञ्चमी तदा विरुद्धविभक्तिर्नादिति भाष्यासङ्गतिर्विधानस्य सर्वथानाश्रयणेनार्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतिश्च । न चैतदर्थे उपसर्जनमतिषेधारम्भो व्यर्थः स्यादिति वाच्यम् । तत्मत्याख्यानायैवैतद्भाष्यप्रवृत्तेः । परमकतरादिभ्याद्वृत्तये ऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादिभ्यावृत्तौ स व्यर्थ इति तदाशयः । त्यदादीनाम इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणम् । अस्थिदधि इत्यादावङ्ग तथा तद्विशेषणं व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः । डित्वफलमाह ।

टे ॥ तिविंशतेरित्यतो डितीति वर्तते भस्येति चाधिकृतम् । पञ्चम इति । डतो मति भत्वाभाव इति भावः । अन्यतमस्येति । डतरादिष्वपाठादिति भावः । एकतरमिति । एकाच्च प्राचामिति डतरच् एकतमस्य त्वेकतममित्येव । परत्वादिति । नुमपेक्षयेति शेषः । शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः । के चित्तु शिभावात्परत्वाज्जरसि

न बलवत्वात् ॥ * अत एव * । श्रुतानुमितयोरितिपरिभाषास्त्वादेव । भावे घञि प्रस्तुनार्थासङ्गतेराह । *कर्मणीति*। *प्रायो वाद इति* । लिङ्गानुशासनस्य लौकिकत्वात् । अत एव सम्बन्धमनुवर्तिष्यत इति भाष्यस्य सम्बध्यत इति सम्बन्धमिति व्याख्या कैयटेन कृता ।

* स्वरूपभङ्गभिया न कृत इति * । यद्यञ्च नित्यस्यापि शास्त्रस्य सूत्रेषु छन्दोवत्सूत्राणीतिवचनेन छन्दस्त्वातिदेशेनाप्रवृत्तिरिति भावः । * विधानस्य सर्वथेति * । डतराद्यर्थगतसंख्याभिधायिन इत्यर्थे विधानक्रियाया अनन्तर्भावात् । * अङ्गन्तयेति * । अर्थद्वारकं विभक्तिविशेषणमित्यर्थः । * व्याख्यानादिति * लक्ष्यानुसारिव्याख्यानादित्यर्थः ।

ततः शौ श्लन्तत्वान्नुमित्यर्थमाहुः । अत्र यद्वक्तव्यं तद् निर्जरशब्दे उक्तम्।

सान्तमहत' ॥ ग्मन्तेति लुप्तषष्ठीक पृथक् पदम् । सयोगस्येत्यनेन सामानाधिकरणम् । नोपधाया', सर्वनामस्थाने चासम्बुद्धावित्यनुवर्त्तते तदाह । सान्तसयोगस्येत्यादि । उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम् । पारिभाषिकार्थस्येहासभवात् । सर्वनामस्थान इति सान्तसयोगस्य विशेषणम् । अत एव हसशिरासीत्यादौ न दोषः । यद्वा ऽनन्त्यविकारे ऽन्त्यसदेशस्येति न दोषः । मासपचन्या इति । मासस्य पचनीत्यर्थः । मांसस्य पचियुड्घञो-रित्यप्येतत्सिद्धार्थानुवाद एव । शब्दत्वेन च सादृश्य नलुमतेत्यस्य च नि-

---

अजरासीतिप्रयोगसाधनाय प्रक्रियामाह । * परत्वादितीति * । नुमप्यनित्य इति * । अपिना जरसादेशग्रहणम् । तस्य च नुमागमे कृते नुम समुदाय भक्ततया तदवयवजराशब्दस्य नुमागमेन व्यवधानादनित्यत्वमिति बोध्यम् । * * अत्र यद्वक्तव्यमिति * । शीभावात्परत्वाज्जसस्शिर्यसङ्गतम् विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वादित्याद्युक्तम् ।

*असभवादिति*।सान्तसयोगावसर्वनामस्थान इत्यस्य सान्तसयोगविशेषणत्वादेव । अङ्गविशेषणत्वे हसशब्दावयवाकारस्यापि स्यादिति भाव । तस्या शङ्काशे उत्थिताकाङ्क्षत्वेऽप्याह । * यद्वेति * । न चान्त्यविकार इतिपरिभाषाया-प्रकृतेऽतिप्रसङ्गनिवारकतया स्वीकारे षमहत इत्येव सूत्र कर्त्तव्यम् । नोपधाया-इति वर्त्तते अङ्गस्येति प्रकृतम् । तच्च विशेष्यम् । स्महत इत्यस्य विशेषणतया सान्तमहच्छब्दान्तञ्च यदङ्ग तदवयवो यो नकारस्तत पूर्वस्याचो दीर्घ इत्यर्थ-स्वीकारेण सर्वेष्टसिद्धौ सयोग्रहणमन्तग्रहणञ्च व्यर्थमिति वाच्यम् । अन्ततीत्यन्। त्सरतीतित्सर। अन् च त्सर् च अन्त्सरौ । तावाचष्टेऽन्त्सयति। तत क्विपि अन्त्स इति प्रातिपादिकन्तत सुपि प्रातिना समासे अत्यन्त्सशब्दात्सुप्यौजसादावुदीर्घे सयोगग्रहणस्यावश्यकत्वात् । सयोगग्रहणे तु प्रत्यासत्त्या नकाराव्यवहितसान्तो य सयोग इत्यर्थाश्रयणेन दोषपरिहारसम्भवात् । एतादृशप्रत्यासत्ति-विवक्षया दोषाभावसूचनार्थमेव बहुना सयोगसङ्ग्रोक्तिर्भाष्यीया सङ्गच्छते । णिलोपस्य स्थानिवत्त्वन्तु न । क्वौ लुप्तत्वात् । सूत्रे सयोगग्रहणाभावे प्रकृतोदाहरणेऽन्त्यवर्णतद्वर्णयोरितराव्यवधानाभावेनानन्त्यविकार इति परिभाषाया अप्राप्त्या आद्याकारेऽतिप्रसङ्गश्च तद्वर्णविशेषणभिन्नत्वस्यानिवेशेऽपि भेदत्रयविशिष्टेन तकारेण व्यवधानात् । यदि स्वन्त्यवर्णतद्वर्णभिन्नो योऽन्त्यपर्याप्त्यधिकरणाविषयकप्रतीत्यविषयस्तद्व्यवधानाभावो निवेश्यते तदा नायन्दोष इत्यवधेयम् । मांसस्य पचि युड्घञोरित्यप्येतदिति । युड्घञो प्रकृतिभूतोऽय पच्धातुस्तस्मिन्मासस्यान्त लुपेदिति तदर्थ । प्रभृतिग्रहणस्य प्रकारार्थत्वेन तयोरपि पद्घ

स्यत्वामित्यभिमानः । ऋचाविति । भाष्यस्तरसस्त्वननुवृत्त्याविति भावः । मासश्छन्दसीति । मासस्तकारः स्याद्भादौ प्रत्यये छन्दसीत्यर्थः । माद्भिः शरद्भिर्दुरोदर तत्र इत्युदाहरणम् ।

ह्रस्वो नपुंसके ॥ क्लीबवदर्थे वर्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे प्रातिपदिकस्येत्येतत्सत्त्वप्रधानस्येत्यर्थकम् । तेन काण्डे इत्यादौ अन्तवद्भावेन प्रातिपदिकत्वेपि न ह्रस्वः । विभक्त्यर्थस्य संसर्गत्वेपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव । प्रथमाया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम् । काण्डे तिष्ठत इत्यादावाख्यातार्थकर्तुः कर्तृक्रियाभावेन क्रियायामन्वये तदभिन्नप्रथमान्तार्थस्यापि तेन सम्बन्धेनान्वयात्तस्य प्राधान्यम् । स्पष्टं चेदं भाष्ये । ज्ञानवदिति । दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । श्रीपाणीत्यादावेकाजुत्तरप देति णत्व भवत्येवेति बोध्यम् ।

इकोचि ॥ सुपीति वक्तव्ये विभक्ताविति चिन्त्यप्रयोजनम् । विभक्तौ

---

इतिसूत्रेणैवादेशो भविष्यतीति भावः । * अभिमान इति * । एतद्वीजम्प्रागभिहितम् । मूले पद्दन इतिसूत्रे छन्दसीत्यनुवृत्त ऋचावित्युक्तान्तस्वाचितामयं सूचयन्नाह । * भाष्यस्तरस इति * । पदादौनान्मद्वत्यन्तरेत्यस्य तत्सिद्धात्तसिद्धत्वात् ।

* क्लीबवदर्थे इति * । न च नपुंसकशब्दस्य सूत्रापात्तस्य गुणिवाचकतया क्लीबवदर्थ इत्यनुपपन्नमिति वाच्यम् । नपुंसकशब्दस्यार्शआद्यजन्तत्वात् । ननु विभक्त्यर्थस्य संसर्गतया भानाभ्युपगमात्प्रकृत्यर्थस्य द्रव्यस्य प्राधान्यमस्त्येवेत्यत आह । * विभक्त्यर्थस्येति । काण्डे कुण्डे इति विभक्त्यर्थप्रधानमिति भाष्याद्विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतायास्तत्र स्वीकारे बाधकाभावात् । शब्देन प्रतिपादितेऽर्थे विशेष्यत्वस्वीकारः सर्वसम्मतः । संसर्गताख्यविषयताया प्रकारत्वविशेष्यत्वविरुद्धत्वे साधकाभावः । अत एव वह्निर्नास्तीत्यत्र घटश्च वह्निपदार्थस्य वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वये तदि तदवच्छिन्नत्वम्प्रतियोगित्वञ्चेति मित यमेव विशेषणविशेष्यभावापन्न इत्युक्तं परैः । न केवलं सप्तम्यन्तस्थल एव विभक्त्यर्थस्य प्राधान्यं किं तु प्रथमाद्यन्तेऽपीति सूचयन्नाह । * प्रथमाया अपीति * । ननु श्रीप ज्ञानपावित्युपपन्नम् । श्रीपाणीत्यत्रैव विशेषसद्भावादत आह । * दीर्घान्तत्वप्रयुक्त इति * ।

* माधवमिति * । यद्यत्र नुम् स्यात्तदा नलोपः स्यात् । अनित्यस्य वच-

किम् । मधुन इद माधवम् । हे वारे हे वारीति। अत एवेकोचीति सूत्रस्थमिह क्विब्वृत्तपो इति एङ्ह्रस्वादिति सूत्रस्थं हे त्रपु इति च भाष्य सङ्गच्छते । वृद्धौत्वेति । वृद्ध्यादीनां क्रमेण गावौ हरौ क्रोष्टा हरये इत्यवकाशा', नुमो वारिणी इति ।

तृतीयादिषु ॥ भाषितः पुमान् येन शब्देनेत्यर्थे पीलुशब्दे ऽतिप्रसङ्गस्तस्माद्भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाक्षिप्तशब्दश्च क्लीवेन समानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेः । ततो ऽर्शआद्यच् । तत्फलितमाह । प्रवृत्तिनिमित्तैक्ये इति । इकोचीति नपुंसकस्येति चानुवर्त्तते । तेच तत्र षष्ठ्यन्ते अत्रार्थात्प्रथमान्ते । इक इति किम् । श्रीपेण । टादौ किम् । अनादिनी । अयञ्च ह्रस्वनुमोरभावातिदेशः क्लीबत्वविशिष्टार्थवाचकस्य पुंविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तेरित्यन्यत्र विस्तरः ।

---

नस्य पाक्षिकप्रवृत्तौ भाष्यसम्मतिमाह । * अत एवेति * । * पीलुशब्देऽतिप्रसङ्ग इति * । अर्थभेदेपि शब्दैक्यामितिमतेनेदम् । न च येन शब्देन पुमान् भाषित इत्यस्य वाचकतासम्बन्धेन पुमर्थविशिष्टस्य पुंवद्भाव इत्यर्थो वाच्यस्स च न सम्भवति पुमर्थविशिष्टस्य नपुंसकवृत्तित्वासम्भवादिति वाच्यम् । असम्भवपरिहारायातद्गुणसंविज्ञानबहुव्रीहिसमासाश्रयणेन पुमर्थोपलक्षितस्य पुंवद्भाव इत्यर्थो वाच्यस्तथासत्यप्ययमतिप्रसङ्ग इति भावः ।

* यस्मिन् प्रवृत्तिनिमित्त इति * । सत्सप्तम्याश्रयणेन यस्मिन्प्रवृत्तिनिमित्ते सतीत्यनेन यत्प्रवृत्तिनिमित्तप्रकारिका पुमर्थविशेष्यिका प्रतीतिर्भवति तत्प्रवृत्तिनिमित्तमन्यपदार्थ इति पर्यवसितम् । ततोऽर्शआद्यचा समानप्रवृत्तिनिमित्तकत्व लभ्यते । एवमपि यदि शब्दस्यार्थभेदेप्यैक्यन्तदाऽतिप्रसङ्ग पीलुशब्दे तदवस्थ इति विशेष्यार्थभेदाच्छब्दभेद स्वीकार्यस्तथा सति येन शब्देन यस्मिन् प्रवृत्तिनिमित्ते सति पुमान् भाषितो भवति तत्प्रवृत्तिनिमित्तवत्त्वन्तत्प्रवृत्तिनिमित्तस्य फत्वे नपुंसकवृत्ते सम्भवतीत्याशयेनाह । * भाषणक्रिययेति * । विनिगमनाविरहादाह । * समानानुपूर्वीक इत्यादि * । अत्र समानानुपूर्वीकत्वोपादानम्प्रशब्देऽतिप्रसङ्गवारणाय। समानार्थ इत्यत्रार्थः प्रवृत्तिनिमित्तरूप । अतिदेशफलमाह । * अयञ्चेति । * तत्प्रयुक्तेति * । क्लीबत्वविशिष्टार्थवृत्तित्वप्रयुक्तेत्यर्थ । न चैवं नञ्विषयस्येतिविहितस्वरस्याप्यतिदेशापत्ति । भिन्नप्रकृतिकत्वात् ।

ननु यद्युदात्तादिशब्दैरनुपात्तस्याविवक्षा ज्ञाप्यते तदा चतस्र पश्येत्यत्र चतुर शसीत्यस्याप्रवृत्तिसिद्ध्यर्थं चतसर्याद्युदात्तनिपातनङ्करिष्यते सनिपातनङ्क

अस्थिदधि ॥ नकारादकार उच्चारणार्थः । अनङ उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणम् असति यत्ने उदात्तादिशब्दैरनुपात्तो गुणो ऽविवक्षितइति ज्ञापनार्थम् । त्रिचतुरोरिति सूत्रे तिसृचतस्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये आद्युदात्तनिपातन विवक्षार्थम् । निपातन सामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणम् । वधादेशेपि हन्त्यनुरूपेऽन्तोदात्ते ऽनुदात्ते चोच्चारणीये आद्युदात्तोच्चारण विवक्षार्थं तदुक्तमसति यत्ने इति । परमास्थिशब्दादावन्तोदात्त उदात्तगुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम् । उदात्तत्वे फल दध्नेत्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वम् । दधनीत्यादौ श्रवणञ्च । ज्ञापनफलन्तु वृन्तृजन्ताना भिन्नस्वरकान्ताना ऋदुशनेत्यनेन तत्स्वरकानङ्सिद्धिरिति दिक् । तदन्तेति । आङ्गत्वादिति भावः । अत्रापि नपुंसकस्येति सम्बध्यते । तेन धात्र आदृगमहनेति किप्रत्यये दधिनेत्यादौ न । एतच्च गृह्यमाणस्यैव विशेषणम् । तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम् । सुधियेति। शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात्पुंवत् । प्रधीशब्दे प्रकृष्ट ज्ञानवत्त्वमेक तत् । मध्विति । मकरन्दमद्यमाक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम् । मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न ॥ स च माध्वीक मधु न

---

रिष्यते निपातनस्वरश्चतुर शसीत्यस्य बाधको भविष्यतीत्युक्तभाष्ये तत्र सङ्गच्छेत प्रकृतेप्यविवक्षा स्यादत आह । * त्रिचतुरोरितीति * । एवञ्चैतादृशे विषये विवक्षार्थमेवासति यत्न इत्युक्तम् । अन्यत्रापि तत्फलमाह । * वधादेशेपीति । * अन्तोदात्तेऽनुदात्ते चोच्चारणीय इति * । हन्तेर्धातुस्वरेणान्तोदात्तत्वात् । अनुनासिकलोपार्थमनुदात्तत्वप्रतिज्ञानादुपदेशेऽनुदात्तस्येति भाव । नन्वेवमनुदात्तस्येतिसूत्रेणास्थिशब्दस्याद्युदात्ततया तस्येकारस्यानुदात्ततया तदनुरूपेऽनुदात्ते उच्चारणीये उदात्तोच्चारणेनैव विवक्षासिद्धौ उदात्तशब्दोच्चारण व्यर्थमित्यत आह । * परमास्थिशब्देति * । अत्र प्रथमादिशब्देन केवलास्थिशब्दस्य द्वितीयेनानुदात्तस्य सङ्ग्रहः । * उदात्तनिवृत्तिस्वरेण * । अनुदात्तलोप इति सूत्रविहितेन । लोपाभावे आह । * दधनीत्यादाविति * । तत्स्वरकेति * । उदात्तस्वरकेत्यर्थः । *अत्रापि* । अस्थिदधीतिसूत्रेऽपि । * तच्च* । नपुंसकपदञ्च । * पुंनपुंसकयो सत्त्वादिति * ।

मकरन्दस्य मद्यस्य माक्षिकस्य च वाचक ।
अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधु ॥

द्वयोरित्यमरेणोक्त' । भाष्ये मधोस्तृप्ता इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु माध्वीर्गावो भवन्तु न इति लिङ्गासिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक् । स्नुनेति । मांसपृत्स्नूनां पदादिषूपसंख्यानमिति वार्त्तिकेनेति स्नुभावः । पूर्वविप्रतिषेधेनेति । न च नित्यत्वादेव नुम्सिद्ध' कि पूर्वविप्रतिषेधेनेति वाच्यम् । तदन्ते नुमि कृते ऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन यदागमा इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात्, सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेन तृज्वत्त्वमाप्तेः सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम् । नन्वय क्रुशक्रोष्टुनेत्यस्यैव भाष्ये उदाहरणात्तृतीयादिष्वचीत्येतद्विषयक एव । अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे बीजानापत्तिरिति चेन्न । उदाहरणस्य सङ्कोचकत्वे मानाभावात् । तदुक्त न चोदाहरणमादरणीयमिति । उदाहृतातिरिक्तोदाहरणाभाव इत्येवम्परतया नादरणीयमिति तदर्थ इत्याहुः । सुल्वेति । अत्र शोभनलवनकर्तृत्व प्रवृत्तिनिमित्तम् । पुवत्त्वे ह्रस्वाभावेनाघित्वान्नाभावो न । नुमभावाच्च यण् । धातृइति । अनङ् न । नलुमतेति निषेधात् । धारणादिकर्तृत्व चास्यैक प्रवृत्तिनिमित्तम् । हेधातरिति । ह्रस्वस्य गुण इति गुणः ।

एच इक् ॥ आदेश इति कर्मणि घञ् । ह्रस्वपदेन कर्मधारयः । निर्द्धा-

---

इत्यभियुक्तोक्ते । * नित्यनपुंसकेति * । पूर्वोक्तभाषितपुंस्कत्वाभावात् । ननु यदि मकरन्दादिवाचकस्योभयलिङ्गत्वन्तदा मधोस्तृप्ता इत्यस्य विनापि व्यत्ययमुपपत्तौ लिङ्गव्यत्ययोदाहरणपरभाष्यविरोध इत्यत आह । * भाष्य इति * । * क्षीरवाचीति * । पुंसि प्रवृत्तौ यन्निमित्तम्मकरन्दत्वादि तस्य नपुंसकप्रवृत्तौ निमित्तत्वन्नास्तीति भाव ।*नित्यत्वादेवेति*। तृज्वद्भावे कृताऽकृते च नुम प्राप्तेर्नुम्नित्य ।तृज्वद्भावस्यापि नित्यतयोभयो समत्वात् तदेवोपपादयति । * तदन्ते नुमि कृतेपीति * । नुम्विशिष्टस्येति * । अङ्गस्येति शेष । * तद्ग्रहणेन * । क्रोष्टुग्रहणेन । ननु निर्दिश्यमानस्य विभक्तिपरत्वाभावात्कथम्प्राप्तिस्तृज्वद्भावस्येत्यत आह । * सूत्रे षष्ठीनिर्देशाभावादिति * । निर्दिश्यमानपरिभाषाया षष्ठीस्थानयोगेतिसूत्रसिद्धत्वात् । प्रकृते तु तृज्वत्क्रोष्टुरितिप्रथमानिर्देशस्य सत्त्वेन परिभाषाया अयमविषय इति भाव । नन्वेवन्नुमागमोत्तरम्पुनस्तृज्वत्त्वम्प्राप्नोतीत्यत आह । * सकृद्गतीति* । सकृद्गतिन्यायानङ्गीकारे पूर्वविप्रतिषेधारम्भो व्यर्थ एव स्यात् । *अयम् । पूर्वविप्रतिषेध' । *सङ्कोचकत्वे*।विभाषा तृतीयादिष्वचीतिसूत्रमात्रविषयकत्वे । निर्धारणस्यानेकविषये सम्भवाद्बहुवचनापत्तेराह । * सौत्रमेकवचनमिति ।

रणे सप्तमी सौत्रमेकवचन तदाह । आदिश्येत्यादि । मद्धये इत्यपपाठः । तद्योगे पञ्च्या एवौचित्यात् । एषा पूर्वभागो ऽवर्णसदृशः उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमहूस्वाभावात्पर्यायेणावर्णादेः प्राप्तावर्णाभावार्थेन्दतदाह इगेवेति । यथाप्राप्तमेव नियम्यतइति न यथासंख्यं ह्रस्व एच्तु नास्त्येव । एओङित्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये । न चार्द्धमात्राव र्णस्याद्धयर्द्धमात्रेवर्णोवर्णयोरिति उत्तरभूयस्त्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम् । अद्धयर्द्धमात्रावर्णस्यार्द्धमात्रेवर्णोवर्णयोरित्यस्यापि पक्षस्य प्लुतावैच इति सूत्रे विनिगमनाविरहाश्रयेण भाष्ये उक्ततया समप्रविभागपक्षस्यैव भाष्यकृत्समतत्वादित्याहु । मरीणामिति । न च

---

समप्रविभागपक्षाभिप्रायेणाह । * एषा पूर्वभाग इति * । प्रत्याहारनिर्देशो जातिपक्षस्यैव सिद्धान्तितत्वाद्यथासंख्यप्राप्नोतीत्यत आह । * यथा प्राप्तमेवेति । ननु सुजाने अद्यसूत्रेन इत्यत्रैकमात्रिकस्यैकारस्य प्रसिद्धत्वात्तस्य एव ह्रस्व प्राप्तावैकारस्य स्यादत आह । * ह्रस्व एच् तु नास्त्येवेति * । पूर्वोक्तोदाहरणे प्रसिद्धस्तु सात्यमुग्रिराणायनीयविहितः स तच्छाखामात्रविषय इति भाव । ऐचोश्चोत्तरभूयस्त्वादिति प्रत्याख्यानवार्त्तिकानुसारेणाशङ्कते । * न चेति ॥ प्लुतावितिसूत्र इति *तत्र हि । ऐ३तिकायन इत्यत्र मात्राऽवर्णस्य मात्रा इवर्णोवर्णयोरिति तत्रोभयो शाखान्तरेण प्लुतविधाने उभयोर्विवृद्धि प्राप्नोति तद्व्यावृत्त्यर्थमिदुतो र्प्लुतवचनमितिरीत्या प्रयोजनमादाुक्तम् । अय च दोषो यथा गभा वियद्धमान सवाङ्गपरिपूर्णो वियर्द्धते तथेहाप्यैच शाखान्तरेण प्लुत उभयावयवविवृद्धिरूप प्राप्नोतीति मत्वा कृत । ततश्चावयवस्य प्लुते सत्यैक एवाय वर्णश्चतुर्मात्र स्यात् । तन सिद्धान्तिवदुतोर्दीर्घवचनात् । सिद्धमेतत्कथमिदुतोर्दाघा भवतीति वक्तव्यम् । तदेतत्कथङ्कृत्वा सिद्धम्भवति । यदि समप्रविभाग । मात्राऽवर्णस्य मात्रा इवर्णोवर्णयो । एतेन भाष्यकृता ऐचोश्चोत्तरभूयस्त्वादिति यद् वार्त्तिककृतोक्तन्तत्र युक्तम्पूर्वापरविरोधादित्याशयेन पर्यनुयोग कृत । तदेवोपपादयति । अय हि अर्द्धमात्रा अवर्णस्य अध्यर्द्धमात्रा इवर्णोवर्णयो अर्द्धतृतीयमात्र प्राप्नोति । अय हि अध्यर्द्धमात्राऽवर्णस्य अर्द्धमात्रा इवर्णोवर्णयोरर्द्धचतुर्थमात्र प्राप्नोति । सूत्रञ्च भिद्यते । यथान्यासमेवास्तु । ननु चोक्त तत्र यथेष्टप्रसङ्ग इति । तत्र सौर्यभगवतोक्तम् । अनिर्दिष्टो हि वाडव पठति । इष्यत एव चतुर्मात्र प्लुत । अत्र भाष्ये पूर्वोत्तरपक्षयोर्विरुद्धयो कथनेन निष्मविभागो विनिगमकाभावान्न युक्त किन्तु समप्रविभाग एवेति द्रढीकृतम् । * सौर्यभगवतेति । * सौर्यनाम नगर तत्रत्येनाचार्येणैतदुक्तम् । किम् । वाडव पठतीति । * इष्यत एवेति * । इदञ्चतुर्मात्रिक न समप्रविभागपक्ष एवोपपद्य

रायो हलीति विषयसप्तमीति प्रागेवात्त्वम् । निर्दिष्टपरिभाषाबाधे मानाभावात् । आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च । केचित्तु नुटो निमित्तस्य सान्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न । नामीति दीर्घस्तु सुपि चेति दीर्घं नित्यत्वाद्बाधते इति माधवाशयमाहुः । ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे ह्रस्वस्य पितीति तुग्न । समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमात्राश्रये ऽन्तरङ्गे तुकि असिद्धत्वात् । ये तु षत्वतुकोरसिद्ध इति वचनान्नलोप इति सूत्रे कृति तुग्ग्रहणाच्च ह्रस्वस्य पितीति सूत्रे ऽन्तरङ्गपरिभा-

---

त इति बोध्यम् ॥ *प्रागेवात्वमिति* । नह्येषा शङ्का प्रशाणामितिरूपसाधनाभिप्रायेण किन्तु नुड्घटित रूपमसङ्गतमित्यभिप्रायेण । * मानाभावादिति * । एवञ्च पूर्वमात्वाप्रवृत्तौ नुटि सति सन्निपातपरिभाषया पुनरात्वप्रतिबन्धे दीर्घो युक्त एवेति विषयसप्तमीत्वभ्युपगते वक्तुमप्यशक्यमित्याह । * आत्वे कृत इति । * निमित्तस्य सन्निपातस्य * । ह्रस्वसन्निपातस्य । * तद्विषये * । नुड्विषये । * सन्निपातपरिभाषाविषय एव नेति* । परिभाषाघटकस्य सन्निपातलक्षणविधिपदस्य नुड्भिन्नपरत्वादिति तद्भावः । अत्र विषयशब्दो भावप्रधाननिर्देशेन विषयत्वपरः । नन्वेवमदन्ते षष्ठीबहुवचने परे दीर्घसाधनाय नामीतिसूत्रस्य प्रवृत्तिकल्पनमसङ्गतम् । सुपि चेत्येव तस्य सिद्धत्वादित्यत आह * नामीति दीर्घस्त्विति * । माधवाशयमाहुरिति * । अत्रारुचिबीजन्तु कष्टायेतिनिर्देशेनानित्याया परिभाषाया दीर्घे कर्तव्येऽप्रवृत्तिकल्पनेऽपि रायो हलीतिसूत्रविहिताकारे कर्तव्येऽप्रवृत्तौ पूर्वोक्तार्थकल्पनायाश्च साधकाभाव इति । नपुंसकविशेषे प्रसक्तातिप्रसङ्गं वारयति । * ग्रामणीति । * समुदितप्रातिपदिकेति * । सम्प्रति प्रातिपदिकसंज्ञा कृदन्तस्येति ह्रस्वत्वम्बहिरङ्गम् । तुक्तु ह्रस्वक्रियायैव निमित्तत्वेनापेक्षत इत्यन्तरङ्ग इति भावः । न च पित्कृत प्रत्ययत्वात्तेन यस्माद्विहितस्तदादेरित्यस्योपस्थितौ सौत्रह्रस्वग्रहणस्य तद्विशेषणतया पित्कृद्यस्माद्विधीयते तदादेर्ह्रस्वान्तस्य पिति कृति तुगित्यर्थे तुगागमोऽपि समुदायापेक्ष इति वाच्यम् । इको झल्सूत्रभाष्ये सन्निपातपरिभाषाया प्रयोजननिरूपणावसरे ह्रस्वस्यन्तुग्विधेर्ग्रामणि कुलमित्युक्तम् । अत्र हौत्तरपादिके ह्रस्वत्वे कृते यदि ह्रस्वस्य तुक् स्यात्तदोत्तरपदसन्निपातविघात स्पष्ट एव । व्याख्यातञ्चोपाध्यायैर्यदा वर्णमात्रस्य तुगागमोऽवयवावयवश्च समुदायावयवो न भवति तदेदम्प्रयोजनमिति । तद्भाष्यप्रामाण्येन यथात्र तुकोऽन्तरङ्गत्वन्तथैव कल्पमुचितमिति प्रकृतेपित्कृत्प्रत्ययेनाक्षिप्तस्यापि तदाद्यशस्य विशेषणत्वमेव कार्यं त्वन्तु वर्णमात्रस्येत्याशयात् । वस्तुतोऽत्रान्तरङ्गपरिभाषा न प्रवर्तते ज्ञापकादित्याशयेनाह । * ये त्विति * ।

षाया अप्रवृत्तिं वदन्ति तेषामुपजीव्यविरोधान्न तुक्। अनन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः। न चैवं सन्निपातपरिभाषा व्यर्था तस्या अप्युपजीव्यविरोधमूलकत्वात्। किं च तस्या अपि स पदार्थः। अत एव सन्निपातपरिभाषादोषनिरूपणावसरे वर्णाश्रयः प्रत्ययो वर्णविकारस्यानिमित्तं स्यादित्युक्तम्। न च न प्रत्ययः सन्निपातलक्षणः अङ्गसंज्ञा तर्ह्यनिमित्तं स्यादित्यपि प्रभाष्यविरोध इति वाच्यम्। तस्यैकदेश्युक्तित्वात्। अन्यथा शैव इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम्। ग्रामणिपुत्रो ग्रामणिकुलमित्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि सिद्धयर्थतया न्यायेन कृन्मेजन्त इति सूत्रे ह्रस्वस्यपितीत्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम्॥

इत्यजन्ता नपुंसकलिङ्गाः॥

---

स पदार्थ इति *। उभयोर्भेदमभिप्रेत्येदम्। वस्तुतस्तूभयोरैक्यमेवेत्याह। *किं च तस्या अपीति*। अत एव *। उभयोरप्यैक्यादेव। *अनिमित्तं स्यादिति *। यथा शाक्षि ग्लाक्षिरित्यत्र यथा। यदुपजीव्यविरोधस्यान्याय्यत्वमिति परिभाषा तद स्यास्त्वपदाऽनित्यत्वेन सन्निपातपरिभाषाया अप्रवृत्तिं स्त्रीरिस्य लोपाभावे साधिते ऽपि द्वितीयया वर्णविकालो न स्यादिति दोषस्तदवस्थ एव स्यात्। तत्र दा इते। * नचेति। प्रत्ययः *। इञ्प्रत्ययः। सन्निपातलक्षणो न। अकारान्तप्र कृतेर्विधीयमानः प्रत्ययो न प्रकृतिप्रत्ययसन्निपातलक्षण। * अङ्गसंज्ञा तर्हीति।* अकारान्तप्रकृतीञ्प्रत्ययसन्निपातनिमित्ताङ्गसंज्ञाऽल्लोपे निमित्तम स्यादित्यपिम भाष्यतात्पर्यार्थः। यदुपजीव्यविरोधस्यान्याय्यत्वमितिपरिभाषैकवाक्यतापन्ना सन्निपातपरिभाषा तदा यत्रोपजीव्यविरोधप्रसङ्गस्तत्रैव सन्निपातपरिभाषाप्रवृ त्तिर्वाच्या। अङ्गसंज्ञाविषये चोपजीव्यविरोधाभावेन तत्र सन्निपातपरिभाषास ञ्चारे भाष्यविरोध इति भावः। * तस्यैकेति *। अङ्गसंज्ञा तर्हीत्यस्य। * अन्य था *। एकदेश्युक्तित्वास्वीकारे। *सा*। अङ्गसंज्ञा। मन्वेवं कृन्मेजन्त इतिसूत्र स्थभाष्ये लुग्विषये बहिरङ्गपरिभाषोपन्यासविरोध इत्यत आह। * ग्रामणिपुत्र इति *। अत्र षष्ठीतत्पुरुषः। *पूर्वोत्तरपदनिमित्त इति *। एतेन ह्रस्वत्वस्य ब हिरङ्गत्व सूचितम्। * एकदेशिन इति। *तत्त्वञ्च पूर्वोक्तज्ञापककबलेन कल्प्यते॥

॥ इत्यजन्ता नपुंसकलिङ्गाः॥

हो ढः ॥ झलो झलीत्यतो झलीति पदस्येति स्कोरित्यतो ऽन्तइत्यनुवर्तते । झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्येत्यर्थः । ढस्तु न विहितः, धुडित्याद्यसिद्धेः ।

दादेर्घः ॥ दादिग्रहणमौपदेशिकदादित्वविशिष्टलक्षकं व्याख्यानादित्यभिप्रेत्य फलितार्थमाह । उपदेशे इति । एतच्च प्रकृतसूत्रे भाष्ये ध्वनितम् । तत्र हि घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधाय अथवा एवं वक्ष्यामि होढो ऽदादेरिति ततो धातोरिति दादेरिति वर्तते नेति निवृत्तमित्युक्तम् । द्रुहेस्तु वा द्रुहेत्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति तदाशयः । तत्र धातोरिति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशग्रहादिलक्षक सामर्थ्यात् । अथाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेप्येवम् । अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ । एवञ्च तदेकवाक्यतया ऽपवादत्वपक्षे ऽपि दादिपदस्योपदेशका-

---

झलीति यथोपश्लेषिकाधारे सप्तमी पदान्त इत्यपि तथा स्यादितिभ्रमवारणायाह । * पदान्ते विद्यमानस्येति * । अत्रान्तशब्दस्य चरमावयववाचकतया हस्य तद्वृत्तित्व व्यपदेशिवद्भावेन बोध्यम् । पदचरमावयवस्य हस्येति तु फलितम् । प्रक्रियालाघवमात्रेण कृता कस्य विच्छिन्नाशिरस्येति । * ढस्त्विति * । * असिद्धेरिति * । झयन्तत्वाभावात् ।

* व्याख्यानादिति * । एतच्चाग्रे स्पष्टम् । * एतच्च * । दादित्वस्यौपदेशिकदादित्ववति वर्तनञ्च । ध्वनन व्युत्पादयति । * तत्र हीति * । * अदादेरितीति * । एवञ्च धुगित्यत्र ढत्वस्याप्राप्तिरेव । * नेति निवृत्तमिति * । समासघटकनञ्पदमत्र विवक्षितम् । अत्र भाष्येनेतिनिवृत्तमित्युक्तत्वेऽपीति तेन निषेधार्थकोऽशब्दो नास्तीति लभ्यते । ननु यद्यदादेरित्युच्यते तदा वा द्रुहेत्यनेन घत्वाभावे ढत्वं स्यादत आह । * द्रुहेस्त्विति * । तत्र समुच्चयार्थो वाशब्द इति भावः । *फलान्तरेति*। लक्षणाप्रयोज्यशब्दबोधफलातिरिक्तफलान्तरेत्यर्थः । दादिपदाभावेऽपि धातुसामान्ये प्राप्तघत्वस्यादादिधातौ विधीयमानढत्वेन बाधे परिशेषाद्दादेरेव घत्वम्भविष्यतीति भावः ।

*सामर्थ्यादिति*। अनुवृत्तिसामर्थ्यादित्यर्थः । * अत एव * । दादिपदस्यौपदेशिकदादित्ववल्लक्षकत्वादेव । प्रत्यक्षमाख्यानमुपदेश इति लक्षणलक्षितोपदेशाविषयत्वाधिदोहदादित्ववत्पदस्य द्रुग्लिडित्यत्र सत्त्वेन ढत्वस्य घत्वाभावस्य च सिद्धिरित्यर्थः । *तदेकवाक्यतया* । उत्तरपक्षैकवाक्यतया । यत्रैकवाक्यत्वं समानफलकत्वमेव । न चोद्देश्योपदेशयोः सङ्करेण व्यवहारो लोके दृश्यते इति वाच्यम् । उत्तरत्र दादिपदानुवृत्तिसामर्थ्येनात्र तयोर्भेदाशङ्काकारात् । एवञ्चोभयोः

लिफदादित्ववल्लक्ष्यतोचिता । तदनन्तर दादेरिति वर्त्तते इति भाष्यस्योक्ताशयमजानतो घोदादेरित्युच्यते कथमधोगिति शङ्कायामेकाच इति सूत्रार्थमपि प्रसङ्गान्निर्णेतु धातोरवयवो यो दादिरित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्द्धवित्यादौ भष्भावायोत्तरसूत्रे आवश्यक वैयधिकरण्यमुक्त्वा दोग्धेति व्यपदेशिवद्भावात्सिद्धमिति भाष्ये उक्तम् । तत्रोत्तरार्थ वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्व सूचित, तेन च दादेरित्यस्योक्तार्थकत्व सूचितमित्यन्यत्र विस्तर । धुगित्यादिसिद्धये गो नोक्त । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमिति परिभाषा तु तत्र तत्रोपदेशग्रहण कुर्वत्सूत्रविरोधेन तरप्तमपौघो ऽत्वसन्तस्येत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी । तत्र हि भाष्ये इदमुक्तम् । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिक प्रयोग तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीय प्रयोग उपास्यते को सावुपदेशो नामेति । अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तम् । न्यायस्यान्यत्रापि तुल्यत्वादिति बोध्यम् ।

एकाचो ॥ झष् झषन्तस्येति वक्तु युक्तम् । भष्पदाशक्तिकल्पनेन लाघवात् । निवृत्तमिति । धुग्भ्यामित्यादौ पदान्तत्वादेव सिद्धिरिति भाव । सामर्थ्यादिति । स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भाव । धातोः किम् । तद्घाडित्यादि । ननु दुहेर्घत्वे धात्ववयवमेकाज्रूप दुइति उघिति च तत्राद्यो न झषन्तो ऽन्त्ये न बश् दुघिति तु नावयव इति

पक्षयोर्यथा न विसयादस्तथैव व्याख्यानमुचितम् । न चैवमेवाधोगित्यत्राडागमे कृते दादित्वाभावेऽप्युपदेशे दादित्वस्य सत्वादत्व सिद्धमेवेत्युत्तरभाष्यासङ्गतिरत आह । * तदनन्तरमिति * । अजानत इत्यस्य शङ्कायामित्यत्रान्वय । एकाच इतिसूत्रार्थमिति* । दादेरितिसूत्रे वैयधिकरण्येनान्वयस्य दृष्टत्वात्तद्वदेवैकाच इति सूत्रेऽपि भविष्यतीति भाव । * इहानावश्यकत्वमिति * । दादिपदलक्षणाया सूचितत्वात् । यत्तु सीरदेवादयस्तु । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमितिपरिभाषया प्रवृत्ते उपदेशे दादिरित्यर्थलाभ इत्याहुस्तेषाम्मतन्दूषयति । *औपदेशिकत्यादि* ।

* इति वक्तु युक्तमिति * । यथासख्यन्तु न । अस्वरितत्वात् । ननु स्ध्वोर्ग्रहणमितरव्यावृत्त्यर्थम्भविष्यतीत्यत आह । * स्ध्वोर्ग्रहणस्येतरेति * । यथा दद्ध्धातोर्यङ्लुकि द्वौ दादद्धि अत्र हेर्धादेशे कृते भष्भाव प्राप्नोति तद्व्यावृत्त्यर्थम् । * तद्घाडित्यादीति * । तद्वहतीति तद्घाट् । ननु भातुरवयवशरीरघटकक्रियाया प्रधानाभूताया ग्रहणस्योचितत्वेन कथमत्र धा

कथं भत्भावः, अत आह व्यपदेशिवदिति । विशिष्टोपदेशो मुख्यव्यवहारः सोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः । इदमाद्यन्तवत्सूत्रे भाष्ये स्पष्टम् । एकाचः किम् । दामलिट् । बशः किम् । क्रोत्स्यति । झषन्तस्य किम् । दास्यति । धुगिति । अत्वसन्तस्येति सूत्रे ऽधातोरिति निषेधेन कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः । नच धातोरुच्यमानङ्कार्यन्तत्प्रत्यये भवतीति परिभाषया कथमत्र धत्वादि तत्प्रत्ययो धातुसंशब्देनेन विहितः प्रत्यय इति वाच्यम् । अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात् । अत एवाप्रशानिति चरितार्थम् । अन्यथा मो नो धातोरित्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तदसङ्गतिः स्पष्टैव ।

वा द्रुह ॥ द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम् ।

इग्यणः ॥ यणः स्थान इति । नन्वेवमदुहितरामित्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणत्वाद्धल इति दीर्घापत्तिः । न च यथासंख्यसम्बन्धाददोषः ऋलृक्सूत्रे लृकारोपदेशः किमर्थ इत्यादिभाष्यविरोधादिति चेन्न । विधिप्रदेशेषु यण इगित्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन तज्ज्ञापित पक्षाश्रयणान्न दोषः । वाक्यस्य सञ्ज्ञेति पक्षे भाष्ये सम्प्रसारणस्येत्यादौ स-

---

तुल्यमत आह । * अत्वसन्तस्येतीति * । * अत्र * । धुगित्यादौ । * प्रत्ययनिमित्तत्वाभावादिति * । दाण्डिनायनेति सूत्रेण भ्रौणहत्येत्यत्र तत्वनिपातनेन एषा परिभाषा ज्ञापिता । एवञ्च ज्ञापकस्य प्रत्ययनिमित्तकादन्यत्र इत्येव सिद्धे तत्वनिपातन व्यर्थमित्येवमेवोपपादनार्हतया प्रत्ययनिमित्तककार्यस्थल एव प्रवृत्तिरिति भाव । एतदर्थे ज्ञापकमप्याह । * अत एवेति * । तस्या परिभाषाया प्रत्ययनिमित्तककार्यस्थल एव प्रवृत्तिस्वीकारादेव । न च पदसंज्ञाया प्रत्ययनिमित्तकत्वम्भत्भावस्याप्यस्त्येवेति वाच्यम् । ज्ञापकसाजात्यात्साक्षात्प्रत्ययनिमित्तककार्यस्थल एव प्रवृत्ते । अत एव प्रणड्भ्यामित्यत्र कुत्वम् सुधियावित्यादावियङ् प्रध्यावित्यादौ यण् च न भूसुधियोरिति निषेधेन परिभाषाया अनित्यतया साधनीयः । यत्तु धातोरुच्यमानमित्यस्य धातुविशेषानुपूर्वीपुरस्कारेणोक्तन्तु धातुसशब्देनोच्यमानन्तदप्यत एवाचिश्नुधात्वेरनेकाच इत्येतद्विषये न प्रवृत्तमिति । तन्न । एव सति प्रसङ्भिरित्यत्रानुदात्तस्य चर्दुपधेत्यनेनामागमापत्तेर्भाष्योक्तायास्तदवस्थत्वापत्ते ।

* नन्वेवमिति * । यण स्थाने प्रयुज्यमान इति व्याख्याने ॥ * भाष्यविरोधादिति * । यच्चदुहितरामित्यत्र यथासङ्ख्येन सम्बन्धमाश्रित्य दोषो वार्यते सदा लृकारोपदेशाभावे यथासङ्ख्यस्य वक्तुमशक्यतया लृकारोपदेशस्य प्रयोजनशङ्कासमाधानयोर्निर्बलतया तद्विरोधापत्तेरित्यर्थ । * तज्ज्ञापितेति । तन्त्र

ल्पिकदादित्वपक्षस्वीकृतोचिता । तदनन्तरं दादेरिति वर्तते इति भाष्यस्या-क्ताशयमजानतो योदादेरित्युच्यते कथमधोगिति शङ्कायामेकाच इति सूत्रार्थमपि प्रसङ्गान्निर्णेतुं धातोरवयवो यो दादिरित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्द्धवित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा दोग्धेति व्यपदेशिवद्भावात्सिद्धमिति भाष्ये उक्तम् । तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितं, तेन च दादेरित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः । धुगित्यादिसिद्धये गो नोक्तः । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमिति परिभाषा तु तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन तरप्तमपौ घो ञ्वसन्तस्येत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी । तत्र हि भाष्ये इदमुक्तम् । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते को ह्यसावुपदेशो नामेति । अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तम् । न्यायस्यान्यत्रापि तुल्यत्वादिति बोध्यम् ।

एकाचो ॥ झष् झषन्तस्येति यद्यत्तु युक्तम् । भष्पदाशक्तिकल्पनेन लाघवात् । निवृत्तमिति । धुग्भ्यामित्यादौ पदान्तत्वादेव सिद्धिरिति भावः । सामर्थ्यादिति । स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः । धातोः किम् । दद्धादित्यादि । ननु दुहेर्धत्वे धात्ववयवमेकाज्झष दुहिति दुघिति च तत्राद्यो न झषन्तोऽन्त्ये न बश् दुघिति तु नावयव इति

---

पक्षयोर्यथा न विसंवादस्तथैव व्याख्यानमुचितम् । न चैवमेवाधोगित्यत्राडागमे कृते दादित्वाभावेऽप्युपदेशे दादित्वस्य सत्त्वात्तत्र सिद्धमेवेत्युत्तरभाष्यासङ्गतिरत आह । * तदनन्तरमिति * । अजानत इत्यस्य शङ्कायामित्यत्रान्वयः । * एकाच इतिसूत्रार्थमिति *। दादेरितिसूत्रे वैयधिकरण्येनान्वयस्य दृष्टत्वात्तद्वदेवैकाच इति सूत्रेऽपि भविष्यतीति भावः । * इहानावश्यकत्वमिति * । दादिपदलक्षणायाः सूचितत्वात् । यत्तु सीरदेवादयः । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमितिपरिभाषया प्रवृत्ते उपदेशे दादिरित्यर्थलाभ इत्याहुस्तेषामेतद्दूषयति । * औपदेशिकेत्यादि * ।

* इति यद्यत्तु युक्तमिति * । यथासङ्ख्यन्तु न । अस्वरितत्वात् । ननु स्ध्वोर्ग्रहणमितरव्यावृत्त्यर्थम्भविष्यतीत्यत आह । * स्ध्वोर्ग्रहणस्येतरेति * । यथा दद्घधातोर्यङ्लुकि द्वौ दादद्धि अत्र हेर्ध्यादेशे कृते भष्भावः प्राप्नोति तद्व्यावृत्त्यर्थम् । * दद्धादित्यादीति * । दद्धहतीति दद्धाद् । ननु धातुत्वशरीरघटनक्रियाया प्रधानाभूताया ग्रहणस्योचितत्वेन कथमत्र धा

र्थं भम्भावः, अत आह व्यपदेशिवदिति । विशिष्टापदेशो मुख्यव्यवहारः
ोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः । इदमाद्यन्तवत्सूत्रे भाष्ये स्प-
म् । एकाचः किम् । दामलिट् । वशः किम् । क्रोत्स्यति । झषन्तस्य
किम् । दास्यति । धुगिति । अत्वसन्तस्येति सूत्रे ऽधातोरिति निषेधेन का-
क प्रत्ययप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः । नच धातो-
रुच्यमानङ्कार्यन्तत्प्रत्यये भवतीति परिभाषया कथमत्र षत्वादि तत्प्रत्ययो
धातुसंशब्दनेन विहितः प्रत्यय इति वाच्यम् । अस्य पदान्तनिमित्तत्वेन प्र-
त्ययनिमित्तत्वाभावात् । अत एवामशानिति चरितार्थम् । अन्यथा मो नो
धातोरित्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तदसङ्गतिः स्पष्टैव ।

वाद्रुह ॥ द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम् ।

इग्यणः ॥ यण स्थान इति । नन्वेवमदुहितरामित्यादौ लस्योत्तमैक-
वचने इटि तस्य सम्प्रसारणत्वाद्धल इति दीर्घापत्तिः । न च यथासंख्यस-
म्बन्धाददोषः ऋलृक्सूत्रे लृकारोपदेशः किमर्थं इत्यादिभाष्यविरोधादिति
चेन्न । विधिप्रदेशेषु यण इगित्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन तद्भावित-
पक्षाश्रयणान्न दोषः । वाक्यस्य सञ्ज्ञेति पक्षे भाष्ये सम्प्रसारणस्येत्यादौ स-

---

त्त्वमत आह । * अत्वसन्तस्येतीति * । * अत्र * । धुगित्यादौ । * प्रत्यय निमित्तत्वाभावादिति * । दाण्डिनायनेति सूत्रेण भ्रौणहत्येत्यत्र तत्वनिपातनेन इय पा परिभाषा ज्ञापिता । एवञ्च ज्ञापकस्य प्रत्ययनिमित्तकादनस्त इत्येव सिद्धे त- त्वनिपातन व्यर्थमित्येवमेवोपपादनार्हतया प्रत्ययनिमित्तककार्यस्थल एव प्रवृ त्तिरिति भाव । एतदर्थे ज्ञापकमप्याह । * अत एवेति * । तस्या परिभाषाया प्रत्ययनिमित्तककार्यस्थल एव प्रवृत्तिस्वीकारादेव । न च पदसंज्ञाया प्रत्यय निमित्तकत्वसम्भावस्यास्त्येवेति वाच्यम् । ज्ञापकसाजात्यात्साक्षात्प्रत्ययनिमि त्तककार्यस्थल एव प्रवृत्ते । अत एव प्रणड्क्ष्यामित्यत्र कुत्वम् सुधियावित्या दावियङ् प्रध्यावित्यादौ यण् च न भूसुधियोरिति निषेधेन परिभाषाया अनि त्यतया साधनीयः । यत्तु धातोरुच्यमानमित्यस्य धातुविशेषानुपूर्वीपुरस्कारे णोक्तस्य तु धातुसशब्देनोच्यमानन्तदप्यत एवाचिश्नुधात्वेरनेकाच इत्येतद्विषये न प्रवृत्तमिति । तन्न । एव सति प्रतृड्भिरित्यत्रानुदात्तस्य चर्दुपधेत्यनेनामा- गमापत्तेर्भाष्योक्तायास्तद्वस्थत्वापत्ते ॥

* न चैवमिति * । यणः स्थाने प्रयुज्यमान इति व्याख्याने ॥ * भाष्यविरो- धादिति * । यदुहितरामित्यत्र यथासंख्येन सम्बन्धमाश्रित्य दोषो वार्यते तदा लृकारोपदेशाभावे यथासंख्यस्य वक्तुमशक्यतया लृकारोपदेशस्य प्रयो जनशङ्कासमाधानयोर्निष्फलतया तद्विरोधापत्तेरित्यर्थ । * तद्भावितेति । तन्त्र

काम्यच्सूत्रोक्तविहितविशेषणपक्षतदितरपक्षयोर्न फलभेदः। वस्तुतो विभाषापूर्वाह्णापराह्णाभ्यामितिसूत्रे मघोनि आगते मघवद्रूपमिति भाष्ये लौकिकविग्रहवाक्ये मघोनि इति प्रयोगादन्यत्रापि ण्वि०। तदुक्तमिति पक्षे इति।

चतुरनडुहो ॥ इतोत्सर्वनामस्थाने इत्यतः सर्वनामस्थाने इति वर्त्तते।

सावन ॥ आच्छीनद्योरित्यतो नुमनुवर्तते आदिति च तदाह। आदित्यधीति। विशेषविहितेनेति। यासुटा सीयुडिवेत्यर्थः। न बाध्यते इति। उपजीव्यत्वादिति भाव। अमा चेति। अम्सम्बुद्धाविति विशेषविहितेनामेत्यर्थः। नुम उपजीवकत्वेन विरोधाभावात्ततः प्राक् तस्याप्राप्तेश्चेति भाव०। क्व चित्तु आमा च नुम्न बाध्यत इति पाठः। तत्रायमर्थः। बह्वनड्वाहीत्यादौ नपुंसकस्येति नुम् परत्वादामा बाध्यते पुनः प्र-

---

सङ्गमुद्यार्थे विधीयमानकार्यविधायकशास्त्रे कर्त्तव्य इत्यर्थकरणेन। * काम्यच्सूत्रोक्त इति *। तत्र हि यत सुबन्तादयं विहितोऽत फलाभावात्ककारस्य नैरर्थक्यमिति व्युत्पाद्य इदन्तर्हि प्रयोजनमुपयट् काम्यति किरतीति सम्प्रसारणं यथा स्यात्। एतदपि नास्ति प्रयोजनम्। यजादिभिरत्र कित विशेषयिष्याम। यजादिभ्यो विहित इति। अय सुबन्ताद्विहित इति नात्र सम्प्रसारणप्राप्ति। अथापि कथञ्चिदिदं कार्यं स्यादेवमपि न दोष। क्रियते तन्यास एव। सुप आत्मन क्यच काम्यचेति। एतश्च प्रत्ययाद्विककारस्तस्य चुटू इत्यनेनेत्संज्ञा अथापीति। यजादिभि। किन्न विशेष्यते कार्यित्वेनैव यजादयो निर्दिश्यन्त इति भाव.। यद्यपि वाक्काम्यतीत्यादौ द्वितीयपक्षे सम्प्रसारणप्राप्नोति। तथापि धातो कार्यमुच्यमानन्तरप्रत्यय इतिपरिभाषया समाधेयम्। *न फलभेद इति*। यदि किशब्द मुद्यार्थेत्यर्थो न स्यात्तदा प्रकृते किनिमित्तकसम्प्रसारणे कर्त्तव्य इयाननैयङ्न्यायनिषेधात्सम्प्रसारणं द्वितीयपक्षे प्राप्नोति। प्रथमपक्षे तु नेति फलभेद, स्पष्ट एव ॥ वस्तुतस्तु छन्दसि सह वहश्चेतियोगविभागकरणाद्वहश्चेतिसूत्रे छन्दसीति च सम्बध्यते। न च योगविभाग कव्येतिसूत्रे वहमात्रसम्बन्धार्थ इति वाच्यम्। एकयोगनिर्दिष्टानामेकदेशोऽप्यनुवर्त्तेत इतिपरिभाषया तावन्मात्रस्याप्यनुवृत्तिसम्भवात्। किन्त्वस्मिन्पक्षे मण्डूकप्लुत्या छन्दसीत्यस्य कव्येतिसूत्रे सम्बन्धो वाच्य। अस्माकन्तु मघोनीत्यादिभाष्यप्रयोग एवेत्याशयेनाह। * वस्तुत इति * ॥

अनडुहशब्दस्यान्त्याचः परदेश एवामो नुमश्चोत्पत्तिर्वाच्या सा च विरोधान्न सम्भवतीति विशेषविहितेन नुमा बाध आम स्यादत आह। * मूले विशेषविहितेनेति।*नुम उपजीवकत्वेनेति*।आदित्यधिकारादामोऽमश्च सद्भाव एव नु

सङ्गविज्ञानात्तु न बाध्यत इति । दत्वं नेति । अनड्वास्तत्रेत्यत्र रुत्वं भवत्येव । तत्रोपदेशवैयर्थ्याभावात् । संयोगान्तलोपस्येति । रुस्थानिकस्येत्यर्थः । एवञ्च नस्य प्रातिपदिकान्तत्वाभाव इति भावः । अनड्वानिति । अनः शकटं वहतीत्यर्थे वहेः क्विबनसि अनसो डश्च यजादित्वात्सम्प्रसारणम् । ननु हे ऽनड्वन् इत्यत्र सम्बुद्धिलोपे ऽन्तस्य प्राप्ते अम आरम्भादमोपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः । विषयभेदेप्यचि रादेशस्य नुडपवादत्वमाशङ्क्य सप्तमे भाष्य इति चेन्न । प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासम्भवात् । ध्वनितश्चेदं प्रत्ययलक्षणसूत्रे भाष्यकैयटयोः । एवमेवातृणेडनड्वन्नित्यादेस्तत्सूत्रोदाहरणत्वमुपपद्यते

---

म प्राप्तया नानेन सयोर्बाध ।*वैयर्थ्याभावादिति*।य विधिम्प्रतीति न्यायात्।*विषयभेदेऽपीति।*तदप्राप्तियोग्ये विषये ह्यचारितार्थ्यमपवादत्वे बीजन्तदत्राप्यस्तीति भाव । * अपवादत्वस्यैवासम्भवादिति * । उभयोरपूर्वत्वेऽध्यत्व एव बाध्यबाधकभावो युक्तो नैवम्प्रकृते सम्भवतीति भाव । * ध्वनितश्चेदमिति * । तत्र ह्याद्यप्रत्ययशब्दस्य प्रयोजनमुक्तं सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणेन यथा स्याल्लोपोत्तरं यत्प्राप्नोति तत्प्रत्ययलक्षणेन मा भूदिति किम्प्रयोजनम् । ग्रामणि कुलम् । सेनानि कुलम् । औत्तरपदिके ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुङ्मा भूदिति । आद्यप्रत्ययग्रहणसत्त्वे यथैतादृशार्थलाभस्तथोक्तं कैयटेन । प्रत्ययशब्दोत्र लुप्तसप्तमीको निर्दिश्यते । तेन प्रत्यये सति यत्कार्यन्दृष्टं तल्लोपेऽपि भवतीति । न च ग्रामणीरित्यत्र क्विपि सति तुग् दृष्टो ह्रस्वाभावात् । कृते क्विपो लोपे ह्रस्वत्वे च तुक्प्राप्तिः ततो भगवता यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति लोपोत्तरं यत्प्राप्नोति तन्न भवति । जगत् जनगत् इत्यत्र तुङ् न प्राप्नोति । लोपोत्तरं ह्यत्र तुगागम इत्युक्तम् ॥ अत्र विलोपात्पूर्वमपि गमः क्वावित्यस्य प्राप्तिसत्त्वादनुनासिकलोपे क्विपि सति तुकः प्राप्तिरिति चेदत्र कैयटः श्रुतिगमिजुहोतीनां द्वे चेति गमः क्विप् । अन्तरङ्गत्वात्पूर्वं विलोपः । गमः क्वावित्यस्य लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्ग । विलोपस्यापरनिमित्तकत्वेनान्तरङ्गत्वमिति भाव ॥ भिन्नविषयत्वाच्चेन नाप्राप्तिन्यायो न भवति ॥ सति चास्मिन्न्याये नैव विलोपः स्यादिति । एतच्चासम्भवे एवापवादत्वमिति वार्त्तिकरीत्या ॥ वस्तुतस्त्वचि रादेशस्य नुडपवादत्वमाशङ्क्य न तिस्रिति ज्ञापकेन भाष्यकृता नुट् साधितस्तद्रीत्या विषयभेदेऽपि गमः क्वावित्यस्यापवादत्वं स्यादेवञ्च पूर्वमनुनासिकलोपे तुकः प्राप्तिमत्त्वेन तुगभावप्रतिपादनपरम्भाष्यमसङ्गतं स्यादेतेन लोपेनानुत्पत्तेरेवान्वाख्यानेन प्रत्ययलोपस्याभावरूपस्य पूर्वकालसिद्धतयाऽनुनासिकलोपस्यापवादत्वमित्याशय कल्प्यास्तेनेदं ध्वनितमित्यर्थः ।*ए

इति दिक् ।

सहेः सा ॥ अपदान्तस्य मूर्द्धन्य इत्यधिक्रियते लोके त्विति । एतेन तुराषाण्मेघवाहन इति व्याख्यातम् । नहि ढूलोपेत्यनेन क्विबन्तसहावेव दीर्घ विधानादाह । अन्येषामपीति ।

दिव औत् ॥ ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञोचिता । अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः । ध्वनितञ्चेदमदेङ्सूत्रे भाष्ये । तत्र हि डित्त्वाभावे ऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितम् । न तूच्चारणार्थत्वादिति । किञ्च । द्वितीयवर्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव हलन्त्यसूत्रामवृत्तौ मानाभावः । अत एव तस्य लोप इति सूत्रे ऽनुबन्धानामेकान्तत्वपक्षे दिव औदित्यादीनां सर्वादेशत्वापादनं भाष्ये कृतं तित्स्वरितमिति सूत्रे च भाष्ये तितीति प्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकस्य तुभ्यामित्यादौ तदभावे फलमित्युक्तम् । दित्वमाश्रित्य च प्रत्याख्यातन्तदित्यन्यत् । किं चादेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाभावाच्चिति प्रत्ययग्रहणं व्यर्थमेव स्यात् । तथा विधेयविषये उच्चारणार्थानामप्यनुनासिकत्वेनेत्संज्ञा । अत एव वेरपृक्तस्येत्यत्रापृक्तग्रहणाभावे दर्विरित्यत्र लोपमाशङ्क्यानुनासिकपरस्य वेर्ग्रहणमिति भाष्ये उक्तम् । अत एवेदितो नुमिति सूत्रे भाष्ये धातोरित्यस्याभावे

---

घमेन * । शास्त्रेणानुत्पत्तयन्वाख्यानस्थले प्रत्ययलोपव्यवहारादेव ॥ तत्सूत्रोदाहरणत्वम् ॥ प्रत्ययलोपे प्रत्ययलक्षणमितिसूत्रोदाहरणत्वमित्यर्थः ॥

अनुवादस्थल इव विधेयविषयेऽपि इत्संज्ञा विनैवोच्चारणार्थानां निवृत्तिरित्यादि मतमसङ्गतमिति सूचयितुं शङ्कते ॥ * नन्विति * ॥ विधेयविषय इति * ॥ एतेनानुवादस्थले लक्षणया निर्वाहेपि न विधौ परः शब्दार्थ इतिन्यायेन विधेयविषये लक्षणाया असम्भवः सूचितः ॥ ननूच्चारणार्थत्वमुत्तरवर्णस्य पूर्ववर्णोच्चारणे साहायकत्वरूपमन्यत्र हयवरडित्यादौ दृष्टम् तु पूर्ववर्णस्य तथात्वं न दृष्टमित्यस्वरसादाह ॥ * किञ्चेति * ॥ द्वितीयवर्ण इति ॥ * स च प्रकृते औकार ॥ पूर्वोक्तार्थे भाष्यान्तरसंवादमप्याह ॥ * अत एवेति * ॥ उच्चारणार्थानामित्संज्ञां विना निवृत्त्यभावादेव । विधेयबोधकशब्दघटकतयोच्चारितहल्विषये व्यवस्था सूत्राऽज्विषयेऽप्याह । * तथा विधेति * । अनुनासिकपरस्येति * । अनुनासिकः परोऽवयवो यस्येत्यर्थः । तादृशश्च क्विबादिरेव वेर्विकारस्योच्चारणार्थमुच्चा-

सिच इदित्वादभैत्सीदित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितम् । ननु सिच इकारस्योच्चारणार्थत्वादित्त्वाभावेन ल्युडादावुकारस्यानकाभ्यामेव निवृत्तिरिति न तस्येत्संज्ञा अनुनासिकत्वाभावात् । अत एव नन्द्यादिभ्यो ल्युप्रत्यये नन्दनेति टावन्तप्रयोगो गाङ् लिटीति सूत्रे भाष्ये । ल्युः कर्त्तरि पुंसीति त्वमरस्य प्रमादः । अनुवादविषये तु हलन्त्यसूत्रभाष्योक्तरीत्या तेषां व्यवसितान्त्यत्वाभावेन फलाभावेन चेत्संज्ञा शास्त्राप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्गृहीते लक्षणा । विधौ तु नोचिता सा । न विधौ

---

रिति स्यानुनासिकत्वात्तुपदेशेऽजित्यनेनेत्संज्ञया निवृत्तिरित्युक्तम्भवति । * अत एव * । उच्चारणार्थानामित्संज्ञासत्त्वादेव । * सजादेशकरणेनेति * । अमस्ते त्यत्रानिदितामितिनलोपापत्तिस्तु हन सिजिति नलोपार्थं कित्त्वविधानेन ज्ञापकेन वारयितुं शक्या । ननु मुज्यु शयुरित्यादौ युवोरनाकावित्यस्यातिप्रसङ्गमाशङ्क्यानुनासिकपरस्य स्थानित्वेन निर्देशः स्वीकृत । एवञ्च ल्युडादावपि तादृशस्यैवानुवाद आवश्यकस्तथा सति तदादेशस्य स्थानिवद्भावेनोगित्त्वाद्नुगित्कार्यम्प्राप्नोतीत्याशङ्क्याह । * ल्युडादावुकारस्येति * ॥ नन्वेवमुकारस्यानुनासिकत्वाभावे कथमतिप्रसङ्गवारणमिति चेन्न ॥ युवोर्यवाश एवानुनासिकत्वं स्वीकृत्य तादृशानामेव स्थानित्वेनाश्रयणात् । * अत एव * ॥ अनुनासिकत्वाभावादेव ॥ * टावन्तप्रयोग इति * ॥ उगित्त्वे तु ङीप्स्यात् ।* अमरस्य प्रमाद इति * । यदि तु ण्यन्तप्रकृतिकयुजन्तमेतदित्युच्यते तदा तु न दोष । परन्तु तदर्थपरत्वसम्पादने क्लेश । यदुक्तम्पूर्वत्र विधेयेति तत्फलमाह ॥ * अनुवादविषये त्विति । यथा आतो धातोरित्यादौ ।*व्यवसितान्त्यत्वाभावेन * ॥ धातुप्रातिपदिकप्रत्ययनिपातागमादेशानामेव व्यवसितपदार्थत्वेन भाष्ये उक्तत्वात् ॥न चात इति विभक्तिदर्शनेन प्रकृतिभागस्य प्रातिपदिकत्वमस्त्येवेति वाच्यम्॥ धात्वादिसाहचर्येण स्वस्वरूपातिरिक्तार्थबोधकानामेव तत्र प्रातिपदिकपदेन ग्रहणात् ॥न च नमोवरिवश्चित्रङ इति सूत्रपठितचित्रङ्शब्दस्य स्वेतरबोधकताया प्रातिपदिकपदेन तदसङ्ग्रह स्यादिति वाच्यम्॥सर्वस्यापि शब्दस्य स्वस्वरूपबोधकतया स्वस्वरूपातिरिक्तलौकिकार्थस्य विवक्षिततया चित्रङ्शब्दस्य तथात्वात्॥ शब्दार्थयोर्भेदाभेदो स्वमतसिद्धावेवेति नाप्रसिद्धि ।विभक्त्युत्पत्तिप्रयोजकप्रातिपदिकत्वमभ्युपेत्याप्याह।*फलाभावेन चेति*।यद्यप्यात इति तकारस्य फल लाक्षणिकस्याप्याकारस्य ग्रहण वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्ते सिद्धान्तिसम्मतत्वात्तथापि तच्छुद्धस्यैव तकारस्य न तु इत्सञ्ज्ञकस्य तकारस्येतीत्संज्ञाया' फलाभावोऽस्त्येव । सदृतिथोरित्यादावविकारादेरुच्चारणातिरिक्तफलाभावोऽस्त्येव । * तद्गृहिते लक्षणेति * । उच्चारणार्थवर्णघटितसमुदायस्य स्वरूप-

परः शब्दार्थ इति न्यायात् । णौ गमिन्यादीनां नुम् तु न स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वङ्गृहीत्वेकः सत्त्वात् । गमेरिडितिवच्च नोपधालोप, अत एव सुगुत्पत्ति, अन्यथा हनो वध लिङीतिवत् सा न स्यात् । अस्ते र्भूरित्यत्रापि निर्विसर्ग एव पाठ इति केचित् । एवञ्चात्र तित्स्वरितमिति स्वरितापत्तिरिति चेन्न । दिव इकारस्योदात्तत्वेन समनधार्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वेनेकारस्य यण्युदात्तस्वरितयोर्यण इति स्वरितसिद्ध्या फलाभावात् । तिति प्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकेन पदमात्रेश्च अन्तोदात्तं द्योरिति तु द्योशब्दस्य बोद्धव्यम् । अल्विधित्वेनेति । अनल्विधावित्यत्र पञ्चमी समासस्याप्याश्रयणादिति भावः ।

पदान्तइति । एङः पदान्तादित्यनुवृत्तस्य विभक्तिविपरिणाम इति

---

मितिसूत्रबलाच्छकत्वेन कल्पितस्य तादृशवर्णरहिते लक्षणा ॥ लक्षणाप्रयोजक सम्बन्धश्च स्वघटकसाजात्यम् । * सा * । लक्षणा । * न विधावित्ति * । विधौ विधेयबोधकपदे परः शाक्यादन्यो लक्ष्यार्थः स्वबोधकस्वसम्बन्धेन नास्तीत्यर्थः । यथश्चौक्षादिपदे विधेयत्वेन विवक्षिते तकारादेरित्संज्ञैव निवृत्तिः । न चैतेषु प्रातिपदिकानामगतिपथोऽष्टतद्धितान्तानामितीत्संज्ञाप्रतिषेधः स्यादिति वाच्यम् । चित इत्याद्यनुवादसामर्थ्येन निषेधाप्रवृत्तेः । ननु यदीकानिर्देशस्तदा गम हनेतिसूत्रेणोपधालोपः स्यादत आह । * गमेरिडितिवदिति * । अनेन निर्देशेनेक् कित्पदेनाऽग्रहणं कल्प्यत इतिभावः । * अत एव * । इक् इत्यनेन तदन्तस्य प्रतिपादकत्वादेव । सनादिप्रत्ययानुकरणे तु प्रकृतिवदित्यतिदेशान्नित्यत्वेन प्रातिपदिकत्वं सुलभम् । अत एवेत्यारभ्य केचिदित्यन्तेनान्यमतानुवादः । अत्रारुचिबीजन्तु प्रकृतिवदित्यतिदेशान् यस्यनैवसकलप्रयोगासिद्धेः कार्याः । अन्यथा भुवोवुगित्यादावुपपत्तिर्न स्यादिति । नचातिशङ्कया पर्यवसानमाह । * एवञ्चेति * । * स्वरितापत्ति * । द्यौरित्यत्रौकारस्य स्वरितापत्ति । स्वरितत्वप्रकारान्तरेण प्राप्तमभ्युपेत्य समाधत्ते । * दिव इति * । समनधर्मण । अनुदात्तत्वधर्मवत । * फलाभावादिति * । तित्स्वरितमितिसूत्रप्रवृत्तिफलाभावात् । प्रकारान्तरेणापि तदप्रवृत्तिं साधयति । * तिति प्रत्ययेति * । न च धम्पृथिवी उत द्यौरित्यत्र पठ्यमानमन्तोदात्तत्वञ्चोपपद्येतेत्यत आह । * अन्तोदात्तमिति * । सुद्योरित्यत्र स्थानिवद्भावेन हल्ङ्यादिलोपो यथा न भवति तथोपपादयति । * अल्विधावित्यत्रापि * । पदान्तादित्यनुवृत्तस्य । एङः पदान्तादिति सूत्रात् ।

*अन्तोदात्तो निपात्यत इति* । अन्तस्य द्विपशब्दान्तस्य षकारस्य स्थाने प्रा

भावः। अयमुकारो ऽन्तोदात्तो निपात्यते तेन द्युभिरक्तुभिरित्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम्। अत्र यथा हल इति दीर्घो न तथोक्तम्। उत-स्तपरत्वन्तु भाव्यमानोऽप्युकारः सवर्णग्राहक इत्यर्थज्ञापनार्थमिति तित्स्वरितमिति सूत्रे भाष्ये उक्तम्। द्युभ्यामित्यत्रोद् न विडतीत्यनुवृत्तेः। यत्त्व-स्मात्तपरत्वात्कुरुत इत्यादावुदिति तपरत्वाद्गुणाभावो यथा स्थानिवत्सूत्रे भाष्ये उक्तस्तथा प्रकृते दीर्घाभाव इति कैयटस्तदेतेन परास्तम्। दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च। अत एव ऋत इद्धातोरिति तपरत्वेन चि-कीर्षतीत्यादौ हलि चेति दीर्घस्य न व्यावृत्तिः। अत एव घूच इत्यादौ चाविति दीर्घसिद्धिः।

पड्वतु॥ रेफान्तस्य परसञ्ज्ञैव तु न कृता। चत्वार इत्यत्र लुगापत्तेः। तत्र रो नेत्युक्तौ तु पदलाघवाभावः। केचित्तु षडित्यादि पदाद्यर्थपरम्।

---

प्लुषन्नुदात्तो निपात्यते इत्यर्थं। तत्फलमाह। * तेन द्युभिरिति *। अत्र दिव शब्दोकारस्योदात्ततया क्षसनधमणो वकारस्य स्थाने जायमान उकारोऽनुदात्त स्याच्चतश्चैकारस्य यणुदात्तस्वरित इत्यनेनोकार स्वरित स्यादित्युकारस्योदात्तत्वनिपातनमुदात्तस्य श्रवणार्थम्। न चानेन निपातनस्वरेणऊडिदमिति सूत्रेण प्राप्तविभक्तिस्वरस्यापि बाधो भविष्यतीति दिवो झलिति तन्निषेधो व्यर्थ इति वाच्यम्। अहर्विमलद्यु इत्यत्र पूर्वपदप्रकृतिस्वरबाधनेन दिवउत्सूत्रस्थ निपातनस्वरस्य चरितार्थतया द्युभिरित्यत्र विभक्तिस्वरस्य परत्वात्प्राप्तस्य निषेधार्थंन्दिवोझलितिसूत्रस्यावश्यकत्वात्। प्रकृते तु उदात्तस्वरितयोरित्यस्यासिद्धत्वान्निपातनस्वरेणोकारस्योदात्तत्वमेव भवति। *तथोक्तमिति *। सम्प्रसारणजातत्वाभावात्। कैयटायुक्तिं खण्डयति। * यत्त्विति *। * एतेन *। प्रागुक्तरीत्या प्रकारान्तरेणैव दीर्घाभावस्य सिद्धत्वेन। बह्वपेक्षस्य बहिरङ्गत्वम्प्राचीनमतसिद्धान्तरीत्या दूषणान्तरमाह। *दीर्घस्य बहिरङ्गतयेति*। *अत एव*। दीर्घस्य बहिरङ्गत्वादेव। तस्य दीर्घस्य तु जुघूर्षतीत्यादिरवकाशः स्यात्। * अत एव *। बहिरङ्गत्वादेव। अत्र दीर्घस्य परनिमित्तकत्वेनापि बहिरङ्गत्वम्।

ष्णान्ता षडिति सूत्रे रेफग्रहणे षणैवेष्टसिद्धावत्र चतुर्ग्रहणञ्च कार्यमित्यभिप्रायेण कृतामाशङ्कामिरस्यति। *रेफान्तस्यापीति*। तिस्रश्चतस्र इत्यत्र प्राप्तातिप्रसङ्गस्य सन्निपातपरिभाषया वारणेऽपि चतुरशब्देतिप्रसङ्गमाह। * चत्वार इत्यत्रेति *। *तत्र *। पड्भ्य इति सूत्रे। * पदलाघवाभाव इति *। न च पड्चतुर्भ्यो हलादिरिति सूत्रेप्येव सति चतुर्ग्रहणञ्च कार्यमिति लाघवमस्त्येवेति वाच्यम्। एवमपि पदलाघवाभावस्य तदवस्थत्वात्। न च चतसृणामित्यत्र

अर्थात्परत्वञ्चायः शब्दद्वारक स चार्थः प्रधान एवेति न गौणे ऽतिप्रसङ्ग इति तत्त्व। शब्दद्वारकमित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वा अर्थे आरोप इत्यर्थः। एवञ्च गौणत्वात्तत्र सम्बन्धे तन्निरूपितसम्बन्धे च न विभक्तिः। परम्परासम्बन्धेनान्वय इत्यपि न। प्रकृतिप्रत्ययार्थयोः साक्षात्सम्बन्धेन क्लृप्तस्यान्वयस्य भङ्गापत्तेः। अत एव गङ्गायां घोष इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता। अत एवेदृशस्थले षष्ठ्यपि न। अत एव स्त्रिया पुंवदिति सूत्रे स्त्रिया इत्यर्थग्रहणमिति पक्षे भाष्यकृतोक्त भाषितपुंस्कानुपपत्तिश्च न

---

रात्रत्वमादेशे कृते नास्ति, स्थानिवद्भावस्तु यवतुमदावयोऽलविधित्वादिति कथं परिहरणेन विमक्त्युदात्तत्वमिति वाच्यम्। लक्ष्यानुरोधात्प्रवृत्ते यथोद्देशपक्षस्यैवाश्रयणेनादेशात्पूर्वं आतपरत्वस्य तदादेशे स्थानिवद्भावेन सौलभ्यात्। प्राचीनोक्तिं खण्डयति। * केचित्त्विति *। * अर्थपरमिति *। द्विवचनेन निर्देशो कर्तव्ये बहुवचननिर्देशसामर्थ्यात्। *शब्दद्वारकमिति*। स्वघटकशब्दात्परत्वमेवार्थात्परत्वम्। न यथात्परत्वाश्रयणेऽपि प्रियपञ्चन्शब्दात्परस्याम शब्दात्परत्वमस्त्येवेत्यत आह। *सचार्थः प्रधान एवेति*। तदुक्तिं खण्डयति। *तन्नेति*। प्रथमभाव। प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्व व्युत्पत्तिसिद्धमिति यदत्र पदार्थ प्रकृत्यर्थं स्यात्तदा तेषु प्रत्ययार्थान्वयो वाच्यः स च न सम्भवतीति लाघवादाह। * परत्वस्येति *। अवधित्वसम्बन्धेनेत्यादि। * एव च *। आरोपे सति च। प्रथमपक्षाभिप्रायेणाह। * तत्र सम्बन्ध इति *। द्वितीयपक्षाभिप्रायेणाह। *तन्निरूपितेति*। आरोपितपरत्वनिरूपितेऽवधित्वरूपसम्बन्ध इत्यर्थः। क्रियाकारयो सम्बन्धस्य विभक्त्यर्थत्वेतिसिद्धान्तात्। ननु प्रत्ययार्थस्यावधित्वस्य स्वाश्रयवाच्यत्वसम्बन्धेन पञ्चाद्यर्थेऽन्वयो भविष्यतीत्यत आह। * परम्परासम्बन्धेनेति *। साक्षात्सम्बन्धेन। यत्रैकस्मिन्नेव पदार्थेऽत्मकसम्बन्धे द्वयो सम्बन्धिनो प्रतियोगित्वानुयोगित्वयो सम्भव स साक्षात्सम्बन्ध इत्युच्यते। न च तयोरेकस्मिन्परम्परासम्बन्धघटके सम्भव। ननु तथात्वाभावेऽपि प्रकृते तथास्त्वित्यत आह। * अत एवेति * प्रकृतिप्रत्ययार्थयोः परम्परासम्बन्धेनान्वयाभावादेव। * गौणाधारादावित्ति *। गङ्गायाङ्घोष। कूपे गर्गकुलमित्यादौ। स्वरितत्वप्रतिज्ञानादिति स्वरितेनाधिकार अधिकार्थमित्यर्थात्। गङ्गाया मत्स्य इत्यादौ मुख्ये आधारे चरितार्था सप्तमी गौणेऽपि भवति। यदि परम्परासम्बन्धेन प्रकृत्यर्थप्रत्ययार्थयोरन्वयोपि व्युत्पन्न स्यात्तदा गङ्गायाञ्च इत्यादौ मुख्ये आधारे सप्तमीं विधाय तत्र प्रकृत्यर्थस्य परम्परासम्बन्धेनान्वयोपपत्तौ स्वरितत्वकल्पनाक्लेशो व्यर्थ स्यादिति। * अत एव *। उक्तरीत्या परत्वस्यासम्भवादेव। * अर्थग्रहणमितिपक्षे इति *। तत्र

ह्यर्थेन पौर्वापर्यमस्तीति । दिक्शब्दयोगे इत्यस्य दिक्शब्दार्थान्वयभूते ऽवधित्वादौ सम्बन्धे पञ्चमीत्यर्थः । स च सम्बन्धो मुख्य एव साक्षात्सम्बन्ध एव च ग्रहीतुमुचित इति दिक् । णत्वान्द्वित्वमिति । ननु पूर्वत्रासिद्धीयमद्वित्व इति णत्वात्पूर्वमेव द्वित्वं युक्तम् । वाक् वाक्क् इति भाष्योदाहरणसि-

---

हि स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणमुत स्त्रीशब्दग्रहणमाहोस्विदर्थग्रहणमिति पक्षत्रय-सम्भावना कृता । तेषु प्रथमपक्षे स्त्रीप्रत्ययस्य प्रतिषेधो विज्ञायते एव सति दृषेतमार्यं । एतभार्य इत्यत्रार्थस्यानिवृत्तत्वाभयारश्रवणप्रसङ्ग । स्थानियद्भाव प्रसङ्गेन पटुभार्य इत्यत्र यणादेशप्रसङ्गेन चायम्पक्षो निराकृत । स्त्रीशब्दग्रहण मिति द्वितीयपक्षे स्त्रीरूपार्थवाचकस्य शब्दस्य पुमर्थवाचकशब्दातिदेश इत्यर्थके अङ्गारका नाम शकुनय तेषां कालिका स्त्रिय कालिका वृन्दारिका अङ्गारकवृ-न्दारिका प्राप्नुवन्ति । हंसस्य वरटा कच्छपस्य डुली । तत्र वरटावृन्दारिका हंसवृन्दारिका डुलीवृन्दारिका कच्छपवृन्दारिका प्राप्नुवन्तीति दोष उक्त । अर्थग्रहणमितितृतीयपक्षेऽपि अङ्गारकवृन्दारिका इत्यादिदोषमभिधाय शङ्कि तम् । भाषितपुंस्कादिरयुच्यते तेनैतेषु न भविष्यतीति । तत एवमभिहितम् । भाषितपुंस्कानुपपत्तिश्च । न ह्यर्थेन पौर्वापर्यमस्तीति । तत सिद्धान्तितम् । तस्मादस्तु मध्यम पक्ष इति । व्याख्यातञ्चोपाध्यायै । शब्दग्रहणपक्षे साक्षादु-त्तरपदेन पौर्वापर्यसम्भवादिति । अधिकन्तत्रैव स्पष्टम् । केचित्तु शब्दावधिक-पत्वस्यार्थावधिकत्वेन बाधकम् शब्दार्थयोस्तादात्म्यात् । न ह्यर्थेनेतिभाष्यन्तु तयोरौपाधिकभेदाभ्युपगमेनेति वदन्ति । अत्रेदं वक्तव्यम् । शब्दार्थयोस्तादा त्म्यमिति यद्यपि *सिद्धान्तिसम्मतम्* । *तथापि प्रक्रियादशायाम्भेदेनैव सर्वा क* ल्पना । अत एव स्वरूपशब्दस्येतिसूत्रभाष्ये तत्सूत्रप्रयोजनकथनावसरे शब्दे नोच्चारितेनार्थो गम्यते । अर्थे कार्यस्यासम्भवादिह च व्याकरणे अर्थे कार्यस्या सम्भव अग्नेर्ढगिति न शक्यते अङ्गारादिभ्य परो ढक्कर्तुमितिरीत्योक्तम् । यदि तादात्म्याभिप्रायेण व्याक्रिया भाष्यसम्मता स्यात्तर्ह्ययमुक्तिर्विरुध्येत । नन्वेव न्दिक्शब्दयोगे पञ्चमीतिव्यवहारानुपपत्ति । तत्राप्यर्थगतसम्बन्धमादायैव श ब्दसम्बन्धस्य वक्तव्यत्वादत आह । * दिक्शब्दयोग इति * । पूर्वत्रासिद्धमि तिवचनस्य द्वित्वविषये पूर्वत्रासिद्धत्वबोधनेत्यर्थेन द्वित्वमपि पूर्वत्र कर्तव्येऽसिद्धमे त्यर्थोऽपि सम्भाव्यते तदभिप्रायेण शङ्कते । * नन्विति * । * णत्वात्पूर्वमेव द्वि त्वमिति * । परत्वादिति शेष । ननु पदान्तस्य एव तस्य वचनस्य प्रवृत्तेराह । * वाक्क् वाक् इति * । * तत्प्रवृत्तेरिति * । पूर्वत्रासिद्धमितिवचनप्रवृत्तेरित्यर्थः ।

द्धये वर्णद्वित्वे ऽपि तत्प्रवृत्तेरावश्यकत्वात् । अन्यथा चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वे ऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः । अवसाने चर्त्वस्यासिद्धत्वात् । खर्परत्वाभावेन तस्य चर्त्वसम्भावनापि न । न च कस्य द्वित्वेऽपि अवसाने चर्त्वस्यासिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवण दुर्वारमिति वाच्यम् । न मु ने इतिवत्पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कृते ऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्त्तव्ये ऽसिद्धत्व नेत्यर्थ इति न दोषः । एतेन द्वित्वे परसवर्णत्र सिद्ध वक्तव्यम् । सय्यन्तेत्यत्र त्रियकारकत्वार्थमिति वचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिरित्यपास्तम् । एतदवयुत्या ऽनुवादरूपत्वादिति चेन्न । पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्ये ऽन्यदसिद्ध नेत्येवार्थो न तु द्वित्वस्याप्यसिद्धत्व नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भाव ।

रो' सुपि ॥ अत्र खरीत्यनुवर्त्तते । तेन सप्तमी बहुवचनमेवात्र सुप् । एतञ्च खरवसानयोरिति सिद्धे इतरानिवृत्तिफलक एवैष विधिरित्याह रोरे-

---

भाष्यीयोदाहरणे वावसान इतिचर्त्वम् । * अन्यथा * । तद्वचनप्रवृत्त्यभावे । * गस्यैव द्वित्व इति * । न च वावसानइतिचर्त्वस्य जश्त्वापवादतया चर्त्वाभावपक्षे एव गकार इति कथमेतदिति वाच्यम् । णान्ता षट् इतिनिर्देशे क्वचिदपवादारपूर्वमप्युत्सर्गप्रवृत्तिरित्याशयात् । अत्रार्थ भाष्यीयोदाहरणमपि मानम् । अन्त्यस्य चर्त्वे । वावसान इत्यनेन । ननु खरि चेति पूर्वगकारस्यापि चर्त्वंभविष्यतीत्यत आह । * अवसान इति * । वर्णद्वित्वविषये परिभाषाप्रवृत्तावपि * न चेति * । अत्रावसान जायमानचर्त्वशास्त्रस्यासिद्धत्वे तेन निष्पन्नकायस्याप्रवृत्तिबुद्धौ ककार एव गकारबुद्धि । * गकारे * । गकारबुद्धौ । * उक्तरीत्या * । अवसाने चर्त्वासिद्धत्वेन । * गश्रवणम् * । झलाम्जश्झशीतिविहितगश्रवणापत्ति । * इत्यप्यर्थ इति * । एव सति झलाजशिति जश्त्वे चर्त्वस्यासिद्धमिति भाव' । * एतेन * । वक्ष्यमाणप्रकारेण । तमेव प्रकारमाह । * एतद्वैवेति * । सामान्यतो द्वित्वविषये प्राप्तस्यासिद्धत्वाभावस्यैकदेशानुवादरूपत्व द्वित्व इतिवचनस्येत्यथ । पूर्वपक्ष खण्डयति । * पूर्वेति * । पूर्वत्रासिद्धीयमित्यस्य पूर्वत्रासिद्धमित्यधिकारमयशास्त्रमित्यर्थ । तत्र उपतिष्ठत इत्यध्याहार । एवञ्च रषाभ्यामिति सूत्रे पूर्वत्रासिद्धमित्यस्याद्वित्व इत्यस्य चोपस्थितौ रषाभ्याम्परस्य नो णो भवति । अयञ्च द्वित्वभिपूर्वत्रासिद्धो भवतीत्यर्थ । एतेन यत्फलित तदाह । * पूर्वत्रासिद्धीयमद्वित्व इति * ॥

रो सुपीति सूत्रे सुपीत्यनेन प्रत्याहारग्रहणकुतो नेत्याशङ्कानिवारणायाह । * अत्र खरीति * । रोयदि विसर्गस्तर्हि सुप्येवेति नियमो भवत्वित्यत आह । * वि-

वेति । विपरीतनियमस्तु न । हलो ऽनन्तराः सयोग इति निर्देशात् । द्वित्वे इति । अचोरहाभ्यामित्यनेन । अचोरहेत्यतो द्वे इति नादिनीत्यतो नेति च वर्त्तते तदाह । न द्वे स्त इति । झरो झरीति लोपस्तु वैकल्पिकः । प्रियचत्वार इति । आङ्गत्वाचदन्तस्यापि चतुरनडुहोरित्याम् । गौणत्वे त्विति । अत्र यद्वक्तव्य तन्नामीत्यत्रोक्तम् । यत्तु ष्णान्तेत्यत्र सङ्ख्यापदानुवृत्तेः तस्य च सङ्ख्याबोधकशब्दपरत्वात्प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न सङ्ख्यापदेन च सङ्ख्येयमुच्यते, अतः सङ्ख्येयपरमपञ्चादौ तस्य प्राधान्यात् सञ्ज्ञा सिद्धा । यद्वा षडित्यन्वर्थसञ्ज्ञेति न गौणे सेति । तन्न । प्रियपञ्चा द्रौपदीत्यत्र न षडिति डाप्निषेधानापत्तेः । आकडारसूत्रे भाष्ये ऽस्य डुसञ्ज्ञया व्यवहाराच्च । सर्वनामसञ्ज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च । सर्वनामसञ्ज्ञासूत्रस्थेन षड्भ्य इति सूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम् । कमलिति । तदाचष्टइति णिचीष्ठवद्भावाट्टिलोपे कर्त्तरि क्विपि णेरनिटीति णिलोप । वस्तुतो लण्सूत्रे न हि पदान्ताः परे ऽणः सन्ति ननु चायमस्ति कर्तृ हर्तृ इति भाष्यात्, भोभगो इति सूत्रे वृक्षवृ करोति इति भाष्यस्यैकदेश्युक्तित्वात्, कमल् वृक्षावित्यादेरनभिधान-

---

परीतेति * । ननु चतुष्वित्यादौ सत्यपि द्वित्वे क्षतिविरह । झरोझरीतिलोपेन रूपसिद्धेरत आह । * झरोझरीतीति * । * प्रधानन्यायेनेति * । प्रधाना प्रधानयो प्रधाने कार्यसम्प्रत्यय इतिन्यायेनेत्यर्थ । ननु पञ्च ब्राह्मणा इत्यादा वपि पञ्चत्वसङ्ख्याया आश्रयान्वे विशेषणतया प्राधान्याभावेन तन्न्यायविषयता प्रकृते न सम्भवति उभयसत्त्वे हि स न्याय इत्यत आह । * सङ्ख्यापदेनेति * । न्यायानाश्रयणेनापि गौणव्यावृत्तिमाह । * अन्वर्थेति * । षड् ब्राह्मणा इत्यत्र यथा षट्शब्दे प्रयुक्तेऽन्यव्यवच्छेदो भवति सङ्ख्येयस्य प्राधान्येन प्रतीतिर्भवति तथा प्रकृतेपि । षडिवाचरतीत्यर्थोऽत्र विवक्षित इति भाव । * अस्या * । षट् सञ्ज्ञाया । * डुसञ्ज्ञयेति * । न हि तदा निरुक्तार्थकत्वमस्य सम्भवतीति भाव । ननु डुसञ्ज्ञापक्षे तादृशार्थकत्वाभावेऽपि षट्सञ्ज्ञापक्षे तु सम्भवोऽस्त्येवेत्यत आह । * सर्वनामेत्यादि * । मुख्य समाधानमाह । * सर्वनामसञ्ज्ञासूत्रस्थेनेति * । अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीतिभाष्येणेत्यर्थ । तस्माद्गौणे षट्त्वसत्त्वे लुड्व्यावृत्तिरेव सम्पादनीयेति तत्त्वम् । नन्वयमस्ति कर्तृ हर्तृ इतिभाष्यादिति । आदौ न हि पदान्ता परेण इतिसमान्यतोऽभिहितन्ततो नन्वयमस्तीत्यनेन पराेऽण् अज्रूप एव दर्शितो न तु हल्रूप इति परस्याणोऽनुनासिकत्वयोग्यस्याज्रूपस्य स्वीकार सम्भवति न तु हल । अत्रानुनासिकत्व योग्येत्यभिधानात्स्वर् अ तस्थातमित्यस्य लिह इत्यस्य सत्त्वेऽपि न क्षति । ते

विभक्ताविति । अष्टन आ इत्यतो ऽनुवृत्तेरिति भावः । अकच्सहित-स्यापीति । तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात् । अङ्गानपेक्षत्वेना-न्तरङ्गत्वादादेशात्पूर्वमकच् । यद्यपि निर्दिश्यमानपरिभाषया न प्राप्नोति । अत एव भिन्यकीत्यत्राकचि थित्वन्न प्राप्नोतीति भाष्ये पूर्वपक्षं कृत्वान्तर-ङ्गत्वाद्वित्वे ऽकजित्याद्युक्तम्, तथापि आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटः ।

---

यो धर्मस्तदवच्छिन्ने शक्तिः । यथा द्रव्यङ्किमस्तीत्यादौ । यत्र सर्वनामसञ्ज्ञ-कः किंशब्दः प्रयुज्यते तत्र पूर्वोक्तदिशा बोधः कल्पनीयः । वितर्कबो-धककिंशब्दस्य त्वव्ययसञ्ज्ञकस्य प्रयोक्तृसमवेतसम्भावनात्मकज्ञानबोधकता । यथा किमिन्दुः किम्पद्मं किमु मुकुरबिम्बं किमुमुखमित्यादौ । तादृशज्ञाने च प्र-कारतासम्बन्धेनेन्द्वादिपदार्थस्यान्वयः । तादृशज्ञानस्य तु विशेष्यतया प्रथमा-न्तार्थेऽन्वय इति ॥ यत्र तु कति घटाः सन्तीति प्रयुज्यते तत्रापि जिज्ञासित एव किम्पदार्थः । डतिप्रत्ययार्थः सङ्ख्यात्वावच्छिन्नः । एवञ्च सङ्ख्यात्वन्यूनवृत्तिध-र्मत्वव्याप्यवच्छिन्नोद्देश्यतावच्छेदकताकज्ञानं जायतामित्याकारेच्छाविषयाभि-न्नसङ्ख्याविशिष्टाः सन्तीति बोधः । दश घटाः सन्तीतिवाक्यात्सा आकाङ्क्षा निवर्तते । यत्र कस्य राजा पटुरित्यादावुद्देश्यतावच्छेदकीभूतषष्ठ्यर्थे किंशब्दा-र्थान्वयस्तत्र यादृशधर्मविशिष्टसम्बन्धे येन सम्बन्धेन जिज्ञासितान्वयस्तत्र ते-नैव सम्बन्धेन विशेषधर्मावच्छिन्नान्वितवादृशसम्बन्धधर्मितावच्छेदककबोधः । एवं सर्वत्रोहनीयम् ।

नन्वव्ययसर्वनाम्नामितिसूत्रेण किंशब्दादकचि कृते शब्दान्तरत्वादादेशो न स्यादत आह । * तन्मध्येति * । ननु स्वार्थे परिपूर्णस्य कुत्साद्यर्थसम्बन्ध इत्यन्तरङ्गत्वात्पूर्वङ्कादेशेऽकचि ककः इति स्यादत आह । *अङ्गानपेक्षत्वेनेति* । अङ्गसञ्ज्ञापेक्षप्रत्ययानपेक्षेत्यर्थः । यद्यपि प्रियकुत्सनादियोगः सुबन्तस्यास्ति तथापि सुप शब्दतो निमित्तत्वेनानुपादानादन्तरङ्गत्वमकचः । कादेशे तु विभ-क्तेः शब्दतो निमित्तत्वेनाश्रयणाद्बहिरङ्गत्वमिति भावः ॥ * अत एव * । तन्म-ध्यपतितन्यायविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तिस्वीकारादेव । * अन्तर-ङ्गत्वादिति * । अकच कुत्साद्विषयतिङन्ताद्विधानेन बहिरङ्गत्व व्यादेशस्य तु त-दन्तर्गतहल्सञ्ज्ञलपेक्षत्वेनान्तरङ्गत्वमितिभावः । * कैयट इति * । एतेनान्यदपि सू-चिता । यथा स्थानिवद्भावविषये स्थानि तु येन कार्यप्रवृत्तेस्तत्र निर्दिश्यमानप-रिभाषाया अप्रवृत्तिस्तथा तन्मध्यपतितन्यायेनापि तद्बुद्ध्यैव कार्यप्रवृत्तेरेतद्वि-षयेऽपि निर्दिश्यमानपरिभाषाया अप्रवृत्तिकल्पनेनैवसाकच्कस्यादेशसिद्धावावृ-त्त्याश्रयणं व्यर्थमिति । एतेन निर्दिश्यमानपरिभाषाया व्याख्यानावसरे परिभा

इदमो मः ॥ तदोः सस्सावित्यतोऽनुवृत्तेराह सावीति ।

इदोऽय् । यः सावित्यतः सावीति वर्त्तते ।

दश्च ॥ इहाष्टन इत्यतो विभक्तावित्यनुवर्त्तते साविदमो दस्यासम्भवात् तदाह । विभक्ताविति ।

हलादाविति । आपीति वर्त्तते । हल्याशिति वक्तु युक्तम् । अक इति पर्युदासादिद गौणे न प्रवर्त्तते इत्याहुः । नन्विदोऽन्त्यस्य लोपः स्यादत आह नानर्थके इति । इयमुपधासञ्ज्ञा सूत्रे भाष्ये स्पष्टा । फलानामन्यथोपपादनेन भाष्ये प्रत्याख्याता च । प्रत्याख्याने ऽनापीत्यतो ऽनित्यनुवर्त्त्य हलीति सप्तम्या षष्ठीं प्रकल्प्यान एवालोऽन्त्यस्येति लोपे पररूपे चेष्टसिद्धिर्बोध्या ।

---

पेन्दुशेखरेऽकच्प्रिपये निर्दिश्यमानपरिभाषाप्रवृत्ति स्वीकृत्य समाधानं कृतमिति विरोध इतितदेतत् प्रत्युक्तम् ।

* इदमो म * । यद्यपि ।

इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम् ।

अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति ॥

अभियुक्तोक्तवचनेन सन्निकृष्टसामान्ये शक्तिरिदंशब्दस्येति लभ्यते सन्निकर्षश्च परमाण्वादिसाधारण इत्ययम्परमाणुरित्यादिव्यवहारापत्ति । तथापि सन्निकर्षप्रयोज्या या लौकिकविषयता तच्छालिनी या बुद्धिस्तद्विषये इदंशब्दस्य ताहशबुद्धिविषये समीपतरपदार्थे चैतदः शक्ति ।

मात्रालाघवानुरोधेनाह । * हल्यशितीति * । शित्वात्सर्वादेशोऽयम् । गोणोऽनादेशाप्रवृत्त्यर्थ त्यदादीनामिति केचिदनुवर्त्तयन्ति तदयुक्तमिति सूचयन्नाह । * अक इति पर्युदासादिति * । सयोगवाद्विप्रयोगस्य विदायागतिहेतुत्वादयत्सा धेनुरानीयतामित्यत्र सम्भवद्वत्ससम्बन्धवती या गौः सैवानीयते तथेहाप्यक इत्यनेन ककारयोग्यतावान् व्यावर्त्यत इति भाव । नानर्थक इतिपरिभाषाया अभावेऽपि हल्लिलोप इत्यत्र यथा दोषाभावस्तथाह ।*प्रत्याख्यान इति*। आद्यन्तशब्दयोरवयवबोधकतयाऽवयवस्य चावयविनम्प्रति नित्यसाकाङ्क्षत्वेनाह । * विशिष्टशक्ततयेति * । आदिशब्दस्य स्वाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वघटितसमुदायघटकवर्णाभावविशिष्ट यत्ताहशसमुदायघटकवर्णस्य स्वपूर्वत्वसम्बन्धेन वैशिष्ट्यन्तद्विशिष्टे शक्ति । अन्तशब्दस्य [illegible] स्वपूर्वत्वसम्बन्धावच्छिन्नताहशसमुदायघटकवर्णस्य योऽभावस्ताहशसम्बन्धेन ताहशसमुदायघटकवर्णविशिष्टस्तत्र शक्ति । उभयत्र वैशिष्ट्य सामानाधिकर

ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे अ भ्यामिति स्थिते ऽङ्गस्याकाररूपत्वेनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह । आद्यन्तवदिति । आदिरन्त्येनेति सूत्रोक्तरीत्याद्य तशब्दयोर्विशिष्टशक्ततया तत्प्रयुक्तकार्य्याण्यसहाये न स्युरित्ययमारम्भः । एकस्मिन्निति । असहाये इत्यर्थः । तदादितदन्तयोः । क्रियमाणं कार्यन्तदादौ तदन्तइवासहाये ऽपि स्यादित्यन्वयः । उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह । आदाविवेति । एकस्मिन्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽन । आदिवत्त्वफलमौपगवे ऽण आद्युदात्तत्वम् । कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव तदाह । कार्यमिति । नन्विद ए इति स्थिते स्मैभावात्परत्वादनादेशे सकृद्गताविति न्यायेन स्मै न स्यादत आह नित्यत्वादिति । स्मै आदेशे तु न अनादेशो हलि लोपेन बाधात् । लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्र ग्रहणात् । अकोरित्यनयोः फलमाह । ककारयोगे त्विति । अव्ययसर्वनाम्नामित्यकचीति भावः । अस्यानवयवत्वे ऽपि तन्मध्यपतितन्यायात्तद्विशिष्टे प्राप्तिरिति बोध्यम् ।

इदमोन्वा ॥ अनुदात्तत्वन्त्वाभ्यामित्यादावूडिदमिति सावेकाच् इति वा विभक्त्युदात्तत्वाभावायोभयत्राप्यनुवृत्त्यपकर्षाभ्यामन्तोदात्तादित्यस्य सम्बन्धात् । एवञ्चाभ्यामित्यादि सर्वानुदात्त एभिरग्ने भ्रेगान्तदेषामित्यादौ तथा श्रवणात् । नन्वेवमप्यत्वे हलि लोपेनाभ्यामित्यादेरनुदात्तत्वेनैव सिद्धावश्विधानं व्यर्थमत आह । साकन्कार्थमिति । शित्वात्सर्वादेश इति भावः । सञ्ज्ञोपसर्जनयोस्तु नेदम् । एतदस्त्रतसोरित्युत्तरसूत्रसाहचर्यात् ।

---

प्यसम्बन्धेन असहाये न स्युरिति । सर्वत्र विशिष्टाभावसत्त्वात् ।

* उपमेय इति * । एकस्मिन्निति सप्तमीदर्शनादित्यर्थः । मथुरावत्पाटलिपुत्रे प्राकार इतिवाक्यात्पाटलिपुत्राधिकरणकप्राकारसत्त्वप्रतीतेरेवानुभवसिद्धत्वादिति भावः । * इति स्थित इति * । अस्य त्यदाद्यत्वे कृत इति शेषः । ननु स्मै आदेशे कृतेऽपि अनादेशस्य प्राप्त्याऽनादेशस्यापि स्मैभावतुल्यतया नित्यत्वान्ऽडेस्मै इत्यनुपपन्नमत आह।*स्मैआदेशे त्विति*।*अकोकोरित्यनयोरिति*। अनाप्यक इत्यस्य नेदमदसोरकोरित्यस्य चेत्यर्थः ।

*उभयथापीति*। सावेकाच इति सूत्रेऽपकर्षणान्तोदात्तादित्यस्योडिदमितिसूत्रे चानुवृत्त्याऽन्तोदात्तादित्यस्य सम्बन्धादित्यर्थः । * सर्वानुदात्तमिति* । प्रकृतिरनेन प्रत्ययस्त्वनुदात्तौ सुप्पितावित्यनेनानुदात्त इति भावः । अथार्थं साधकमाह । * एभिरग्न इति * । यथास्य साकच्कार्थत्वन्तदाह । * शित्वादिति * । तदुदाहरणमिमकाभ्या सुष्ठु कृतम् । * आभ्यामित्यकमिति ।* *उत्तरसूत्रेति *।

न च त्यदाद्यत्वेन सिद्धे ऽकारविधानमेव ज्ञापकमिति सर्वादेशार्थं भविष्यति किं शित्त्वेनेति वाच्यम् । अन्यार्थतापत्तेः ।

द्वितीयाटौ ॥ पूर्वसूत्रादिदम इति एतदस्त्रतसोरित्यत एतद् इति चानुवर्त्तते अनुदात्त इति च । विधातुमिति । विधानमत्राज्ञातज्ञापनमेव न तु प्रवर्त्तनाविषयत्वं, तथेदम एवेति नाग्रहः । स्पष्टञ्चेदं भाष्ये ॥ सुगणुट्त्विति । ङ्णोरिति ङुट् तस्यासिद्धत्वाच्च जश्त्वम् । लोपे इति । नकारलोप इत्यर्थः । न चात्र प्रत्ययान्तत्वाद्प्रत्यय इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यम् । पर्युदासे यथोद्देशेन सिद्धेः । न च कार्यकाल पक्षे दोषः । व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्धया पक्षान्तरेण दोषप्रदानस्य काप्यदृष्टत्वात् । ध्वनितञ्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये । न च प्रसज्यप्रतिषेधे दोषः । तत्पक्षे लोपेनैव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वादिति वाच्यम् । नङिसम्बुद्ध्योरिति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात् । स्पष्टञ्चेदमर्थवत्सूत्रे भाष्ये ।

---

तत्र हि प्रत्ययौ निमित्तत्वेनोपात्तौ तयोश्च सञ्ज्ञोपसर्जनयोरसम्भवात्सर्वनामसञ्ज्ञकस्यैव स्थानित्वमित्युत्तरसूत्रेण जायमानादेशस्य सञ्ज्ञोपसर्जनभिन्नस्यैव बोध्यत्वमित्यर्थाधिकारानुरोधात्पूर्वसूत्रस्थमग्रहणमपि सञ्ज्ञोपसर्जनभिन्नस्यैव बोधकमिति भाव । * अन्यार्थत्वापत्तेरिति * । अन्त्यस्य त्यदाद्यत्वेन सिद्धावने नाकारादेशविधानमनन्त्यार्थं स्यात्तथा चानन्त्यविकार इतिपरिभाषया त्यदाद्यत्वोत्तरमनेन दकारस्य स्यात्तदर्थम्मोराजीतिवद्विकारमात्रबाधनार्थं वा एत त्स्यादित्यर्थः ।

स्पष्टञ्चेदम्भाष्य इति * । तत्र हि अन्वादेशश्च कथितानुकथनमात्रन्द्रष्टव्यम् । यद्यदय विजानीयादिदमा कथितमिदमैव यदानुकथ्यत इति तदाचार्यसुहृद्भूत्वान्वाचष्टे अन्वादेशश्च कथितानुकथनमात्र मिति । मूले नलोप इत्युपास तस्य लोपो नेत्यर्थोऽपि सम्भाव्यत इत्यतो व्याचष्टे । * नकारलोप इति * । कार्यकालपक्षाभिप्रायेण शङ्कते । * न चात्रेति * । *पर्युदास इति * । यद्यपप्रसज्यप्रतिषेध स्यात्तदा प्रकल्प्यापवादन्यायेन पूर्वस्मात्प्रातिपदिकसञ्ज्ञाया अप्रवृत्तिसम्भावना स्यादिति भाव । * ध्वनितञ्चेदमिति * । तत्र हि कार्यकालपक्षाभिप्रायेणाम्नी इत्यत्राप्रगृह्यस्येत्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वाद्विमात्रत्वाभावात्प्रगृह्यसञ्ज्ञा ईदूदेदितिविधीयमाना न प्राप्नोतीत्याशयेन एवमपि यस्ति प्रगृह्यकार्यन्तत्प्लुतस्य न प्राप्नोतीत्याशङ्क्य यथोद्देशपक्षमाश्रित्येद समाहितम् । यथोद्देशेऽपि शङ्कते । * न चेति । * निषेधाप्रवृत्त्येति * । अप्रत्यय इति निषेधाप्रवृत्त्येत्यर्थ ।

न ङि ॥ ङौ तु छन्दसीति । राजनीत्यादौ भत्वान्नलोपाप्राप्तेः । राजनीव चरतीत्यर्थेऽधिकारणाच्चेति क्यच् तु लोके नास्त्येव, अनभिधानात् । अत एव परमे व्योमन्नित्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यान भाष्योक्तं सङ्गच्छते इति भावः । सामर्थ्यादिति । नलुमतेति निषेधानित्यत्वप्रतिपादनद्वारेत्यर्थः । एतदनित्यत्वबललब्धमेव वानपुंसकानामिति बोध्यम् । न च परमेव्योमन्नित्यत्र घोषत्वाल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे स्वादिष्विति पूर्वस्यपदत्वात्प्राप्तनलोपनिषेधेनेद चरितार्थमिति वाच्यम् । अन्तरङ्गानपीति न्यायेन संयोगान्तलोपस्यासिद्धत्वेन च पूर्वसवर्णेऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात् स्पष्टश्चेद भाष्ये । ङावुत्तरपद इति । एतद्बललब्धमेव ङौ तु छन्दस्युदाहरणमित्युक्तम् । न चेति । पञ्चमीसमासेन प्राप्तिः । पाष्ठीमिति । वाहऊङित्यत्र ज्ञापितत्वेन तदेवास्यत्वादिति भावः । कार्यकालपक्षेऽपि त्रिपाद्यान्तदप्रवृत्तिः प्रागुक्ता । जश्योर्ह इति । जश्योगे लोकवेदसिद्धताहशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचन न त्विद वर्णान्तर शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अत एव तज्ज्ञानमित्यादौ श्चुत्वसिद्धिः ।

सुब्विधाविति । सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम् । विधिशब्दो भावसाधनः कर्मसाधनश्च । तत्र स्वरादिविषये भावसाधनः ।

---

यदुक्त छन्दसीति तदुपपादयति । * राजनीत्यादाविति * । *अत एव *। अनभिधानादेव । नलुमतेतिनिषेधानित्यत्वे लाघवमप्याह । * एतदनित्यत्वेति * अल्पप्राणत्वादीति * । अत्रादिना निरनुनासिकत्वपरिग्रह । * लुक एवौचित्यादिति * । एवञ्च पूर्वोक्तरीत्या नलुमतेतिनिषेधानित्यत्वकल्पनमेव वरम् । * एतद्बललब्धमेवेति * । ङौ निषेधस्योत्तरपदे छन्दसि यत्र सुपामिति डेर्लुक् तत्र वा सम्भवस्तयोर्मध्ये उत्तरपदे प्रतिषेधात्परिशेषाच्छन्दस्येवोदाहरणम् ।*वाहऊडित्यत्र ज्ञापितत्वेनेति*। इदमन्यत्र निरूपितम् । ननु जश्योर्ह इत्याकारकं वचनममुनिश्रयानुक्तमित्यप्रामाण्यशङ्कायामाह । * जश्योग इति * । शिक्षादाविति * । त्रिषष्टिश्चतु षष्टिर्वा वर्णा शम्भुमते मता इति तत्रोक्ते । * अत एव * । वर्णान्तराभावादेव ।

* सर्वविभक्त्यन्तेति * । अत्र सर्वशब्दो यथासम्भवमनेकार्थक । तत्राप्येकस्मादनेकविभक्त्यसम्भवादनेकविभक्त्यन्तावयवाय षष्ठीतत्वा समास कार्य इति भाव । * भावसाधन इति * । अत्र भावो धात्वर्थ तस्मिन् बुद्धिस्थे सति विधिशब्दः क्रियतेऽतो भावसाधन इत्युक्तम् । धात्वर्थस्य प्रथममुपस्थितत्वात्तदनुसारेणाह । * तत्र स्वरादीति । * यद्यपि सूत्रे सुप्शब्द प्रथममुच्चारि

सुब्विधये कर्मसाधनः । कृतीत्येतत्सामर्थ्याल्लुक एव विशेषणमित्याह कृति लुगिति । पूर्वत्रासिद्धमित्येव सिद्धेऽन्यनिवृत्तिफलकोऽयं तदाह । नान्यत्रेति । अन्यनिवृत्तिफलकसिद्धविषयकारित्वमेव नियमत्वम् । अत एव पस्पशायां भाष्ये पञ्च पञ्चनखा भक्ष्या इत्यत्र भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यत इत्युक्तं तदाह । इत्यसिद्धत्वादिति । इत्यन्यत्र विस्तरः । सुब्विधिशब्देन सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणम् । एतेन दण्डिभ्यामित्यादौ

---

तत्तथापि भावसाधनस्य प्रथमोक्तत्वात्तदनुरोधेनादौ स्वरादीत्युक्तम् । स्वरो दाहरणम् । पञ्चानाम् । अत्र नलोपस्यासिद्धत्वे सत्यमैवाघणं(?)ष्वप्रत्ययोऽति स्वरो न । कर्मसाधन । विधीयमान इत्यर्थः । सुब्विधौ यथा । राजभिरित्यादि । ऐस्भावो न । सुब्विधिशब्देऽनकविभक्त्यर्थो तमोगाद्राजभ्यां राजस्वित्यादि सिद्धम् । अत्र तुप्शब्दस्य पृथङ्निमित्तत्व दृष्टत्वस्यत्रम् । भ्रूणहच्छायेत्यत्र तुङ् न स्यादिति कृति तुगिति । न चैवं कृतीत्युपादानं सफलमेवेति सामर्थ्यात्तुक एव विशेषणमित्युक्त्यसङ्गतिरिति वाच्यम् । सामर्थ्यादित्यस्य स्वार्थान्वययोग्यतावच्छेदकधर्मवत्त्वादित्यर्थात् । * अन्यनिवृत्तिफलक इति * । एवमभिधानेनान्यनिवृत्तेरशाब्दत्वं सूचितम् । *सिद्धविषयकेति*। सिद्ध शास्त्रान्तरासिद्धो विषयो यस्येत्यर्थः । * अत एव * । नियमस्थलेऽन्यनिवृत्तेः फलितत्वादेव । * भक्ष्यनियम इति * । अत्र नियमपदोपादानेन परिसङ्ख्यापि नियम एवेति भगवता ध्वनितम् । तदाह । तदेव स्वयमाह । * यच्छब्दोद्देश्यकेनि * । अथोद्देश्यत्वं स्थानित्वनिमित्तत्वान्यतरस्वरूपम् । निमित्तत्वञ्च यद्बुद्धिर्यत्कार्यप्रयोजिका तत्त्वम् । अत एव दण्डिभ्यामित्यत्र विधायकत्वशङ्का सङ्गच्छते । तथा देशविधायकस्यादेशप्रत्यययोरित्यस्य प्रवृत्तौ प्रत्ययत्वावच्छिन्नस्य बुद्धिनिमित्तप्रत्ययत्वञ्च नैतादृशमिति भावः । *इदमिति* । सुब्विधिपदमित्यर्थः । न च भिस्त्वस्य सुप्त्वव्याप्यत्वाभावेन तदवच्छिन्नोद्देश्यके ऐसादेशेऽपि नियमानुपपत्तिरिति वाच्यम् । केवलभिस्त्वस्य सुप्त्वव्याप्यत्वाभावेऽपि निमित्ततावच्छेदकस्याङ्गसंज्ञाप्रयोजकत्वविशिष्टभिस्त्वस्य सुप्त्वव्याप्यतया तदवच्छिन्नोद्देश्यकादेशस्यापि सङ्ग्रहसम्भवात् । *वैरूप्यापत्तेः * । किञ्चिदंशे विधायकत्वं किञ्चिदंशे नियामकत्वमिति स्वीकारे विभिन्नस्वभावत्वापत्तेरित्यर्थः । यद्यपि संज्ञाविधावित्यस्य पञ्चेत्यत्र नलोपे कृतेऽपि षट्संज्ञाप्राप्तिः नलोपस्यासिद्धत्वाद्दापो निषेधरूपप्रयोजनमूले एव स्फुटं तथापि तत्र षट्संज्ञां विना लुकोऽप्राप्त्या न लोपस्यैवाप्राप्तिः स्यादतः प्रथमं षट्संज्ञाप्रवृत्तिवाच्या तामादाय यथोद्देशपक्षाश्रयणेन तत्प्रयोजनमन्यथा सिद्धम् । न च पञ्चभिः सप्तभिरित्यत्र नलोपासिद्धत्वेन षट्त्वे झल्युपोत्तममितिसूत्रप्रवृत्तिः प्रयोजनमिति वाच्यम् । स्वरविधावित्येव सिद्धेरत आह । *संज्ञाविधावित्यादि* । दण्डिदत्तौ । दत्तदण्डिनाविति । एवं

पत्वरूपसुब्विधौ अमासामिद्धत्वविधानार्थमिदमित्यपास्तम् । वैरूप्यापत्तेश्च । सज्ञाविधौ दण्डिदत्तौ दत्तदण्डिनौ अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः । इष्यते त्वनियम । असिद्धत्वे तु अघित्वात्सिद्ध्यति । न च पूर्वनिपाते नलोपो नलोप वा घित्वे पूर्वनिपाते इत्ययुक्तम् । यस्य पूर्वपदत्वे घित्व भवति तत्पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थान्न दोष. । न च घित्वे वहिरङ्गतया नलोपो ऽसिद्ध इति वाच्यम् । सज्ञाकृतवहिरङ्गत्वस्यानाश्रयणात् कृति तुग्विधौ वृत्रहभिः । कृतीति किम् । वृत्रहच्छत्रम् । अस्मादेव सज्ञाकृत वहिर्भूतनिमित्तकसज्ञाकृतश्च वहिरङ्गत्व परिभाषाया नाश्रीयते । अन्यथा वृत्रहभिरित्यादौ वहिर्भूतभिस्निमित्तकपदत्वनिमित्तो नलोपोसिद्धः स्यादिति तद्वैयर्थ्यं स्यात् । भाष्ये तु सन्निपातपरिभाषया वृत्रहभिरित्यादौ तुक व्यावर्त्यैद मत्याख्यातम् । पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात् । सन्निपातनिमित्तकनलोपविषयाणा वृत्रहघनमित्यादीनामनभिधानमिति तदाशयः । तदभावे कृतीत्यपि व्यर्थमेव । न च सन्निपातपरिभाषया तुग्मात्र-

---

रूपौ ह्यापि शब्दौ भाष्येऽत्रैव सज्ञाविधावित्यस्य प्रयोजनकथनादिष्टावित निर्धीयते । * अत एवोक्तमिष्यते त्वनियम इति * । पूर्वनिपाते नलोप इति * । परनिपाते तूत्तरपदत्वे चापदादिविधाविति निषेध पदसज्ञाया स्यादिति भाव । इति सूत्रार्थात् । एतादृशार्थ प्रकृतोदाहरणे प्रयोजनकथनपरभाष्यमेव मानम् । * कृति तुग्विधाविति * । अत्र गमकत्वाद्वृत्ति । * अस्मादेवेति * । कृत्तुग्ग्रहणादित्यर्थ । यदि सज्ञाकृत वहिरङ्गत्वमप्याश्रीयते तदाऽन्तरङ्गे तुकि कर्त्तव्ये पदसज्ञासापेक्षनलोपस्यासिद्धत्वात्तुगभावे सिद्धे कृतितुग्ग्रहण व्यर्थं स्यात् । न चल्पापेक्षमन्तरङ्गम्बह्वपेक्ष वहिरङ्गमित्याश्रित्य सज्ञाया अधिकाया आश्रयणाद्वहिरङ्गत्वमिति न वदाम । किन्तु वहिर्भूतभिस्निमित्तकपदत्वनिमित्तकत्वेन नलोपस्य वहिरङ्गत्व वदाम इति चेत्तत्राह । * वहिर्भूतनिमित्तकेति * । * सन्निपातपरिभाषयेति * । अवयवावयवस्य समुदायावयवतया वृत्रहभिरित्यत्र तुकि सति भिस्सन्निपातविघात स्पष्ट एव । वस्तुतस्तु नान्तभिस्सन्निपातनिमित्तको नलोपस्तादृशसन्निपातविघातकतुकोऽनिमित्तमिति भाष्याशय । ननु य त्रान्तर्वर्तिविभक्त्याश्रितो नलोपस्तत्रैव वृत्रहघनमित्यादौ तुक व्यावर्त्तयितुन्तदस्त्वित्यत आह । * सन्निपातानिमित्तकेति । * तदभावे * । तुग्ग्रहणाभावे । सन्निपातपरिभाषया छनिमित्तकतुकोऽपि व्यावृत्ति स्यादिति नियमार्थं कृति तुग्ग्रहणमास्त्वित्यभिप्रायेणाशङ्कते । * न च सन्निपातेति * । केचित्तु-

व्यावृत्तौ भाषायां नियमार्थं कृतीति कृति तुगेव नान्यस्तु भवत्येवेति वाच्यम् । वृत्रहच्छत्रमित्यत्र नलोपस्य सन्निपातलक्षणत्वाभावात् इति दिक् । राजनीति । विभाषा ङिश्योरित्यल्लोपविकल्पः । मतिदिवेति । कनिनन्तम् ।

---

द्वन्द्वेघीतिसूत्रस्थघिशब्दस्य पूर्वोक्तान्योन्याश्रयपरिहाराय भाविघित्वाश्रये लक्षणामाश्रित्यानियमस्य वृण्डिदत्तौ दत्तदण्डिनावित्यत्र सिद्ध्यर्थं प्रकृत सूत्रे सञ्ज्ञाग्रहणकरणापेक्षया द्वन्द्वसञ्ज्ञाप्रवृत्तिकाले यस्य घित्वन्तत्पूर्वं प्रयोज्यमित्येवार्थोऽस्तु ॥ प्रकृते द्वन्द्वसञ्ज्ञाप्रवृत्तिकाले नलोपस्यासिद्धत्वाऽनियम सिद्ध एवेति प्रकृते सूत्रे सञ्ज्ञाग्रहणमकर्त्तव्यमिति लाघवम् । किञ्च यदि द्वन्द्वेघीतिसूत्रस्थघिपदस्य भाविघित्वाश्रय लक्षणाऽश्रीयते तदाभानुच्छत्रे छत्रभानू इत्यानियम प्राप्नोति । भानुशब्दस्य पूर्वपदत्वे लुका भवितव्यमिति भाविघित्वस्याभावात् । द्वन्द्वसञ्ज्ञाप्रवृत्तिकालिकघित्वस्य पूर्वनिपातप्रयोजकत्वे तु नियम सिद्ध्यतीत्याहु ।तत्रेदञ्चिन्त्यम् । द्वन्द्वसञ्ज्ञाप्रवृत्तिकालिकघित्वस्पूर्वनिपातप्रयोजकमाश्रित्य पूर्वोक्तानियमसिद्धिमाश्रित्य प्रकृतसूत्रस्थसञ्ज्ञाग्रहणाकरणोपपादनमशक्यम् । ग्रामणिदेवदत्तौ वातप्रमिवृषावित्यादौ पूर्वनिपातो यदिगन्तस्य स्यात्तदा इको ह्रस्वोऽङ्यो गालवस्येतिसूत्रेण ह्रस्वे कृते घिसञ्ज्ञास्यात्तत्क्षेण तस्यैव पूर्वनिपात इत्येवञ्चियम सिध्यति । ह्रस्वत्वस्य बहिरङ्गासिद्धत्वन्नतु न बहिरङ्गपरिभाषाया अनित्यत्वात् । प्रकृते च तस्या अप्रवृत्तौ दत्तदण्डिनौ दण्डिदत्तावितिभाष्यमेव मानम् । एवञ्च घिपदस्य भाविघित्वाश्रये लक्षणाया आवश्यकत्वे दण्डिदत्तौ दत्तदण्डिनावित्यादावनियमसिद्ध्यर्थम्प्रकृत सूत्रे सञ्ज्ञाग्रहणस्यावश्यकत्वात् । अत एव प्रकृतसूत्रभाष्ये सञ्ज्ञाग्रहणस्येदम्प्रयोजन दत्तम् । न च घिपदस्य भाविघित्वाश्रये चेल्लक्षणा तदा द्वन्द्वे घीतिसूत्रस्य हरिहरावित्यत्र हरिशब्दस्य पूर्वनिपातसिद्धि प्रयोजनत्वेनोक्ता सा न सङ्गच्छेत । हरिशब्दस्य घिसञ्ज्ञायाम्पूर्वनिपातस्याप्रयोजकत्वादिति वाच्यम् । द्वन्द्वेघीति सूत्रस्थघिपदस्य तन्त्रेण शक्यलक्ष्योभयबोधकत्वात् । यदि तु लक्षणहेत्वोरिति सूत्रे हेतुशब्दस्य परनिपातकरणेन पूर्वनिपातप्रकरणमनित्यमिति विभाव्यते तदा दण्डिदत्तौ दत्तदण्डिनावित्याद्यनायासेन निर्वहतीति प्रकृतसूत्रस्य सञ्ज्ञाग्रहणमकर्त्तुं शक्यम् ।*इदमिति* । तुग्ग्रहणमित्यर्थ *तदभावे *। तुग्ग्रहणाभावे ।*व्यधिकरणमिति*। तेन पदावयवस्येव इत्यर्थ पर्यवसन्न । *तेनेति* । सर्वनामस्थानग्रहणासम्बन्धेन । यदि चात्र सर्वनामस्थानग्रहणसम्बन्ध स्यात्तदा सर्वनामस्थाने परे यदि दीर्घ इनादीना तदा शावेवेति नियम स्यात्तदा वृत्रहणी इत्यादौ दोष स्यादिति ॥

ननु नियमशास्त्राणा विधिरूपेण प्रवृत्ते सिद्धान्तितत्वादिति निषेधे प्राप्ते

हलि च ॥ र्वोरुपधाया इति सूत्र सिपि धातोरित्यतो धातोरिति चानुवर्त्तते । र्वोरिति च धातोर्विशेषणम् । पदस्येति सम्बद्ध्यमानमपीक एव व्यधिकरण विशेषण तद्ध्वनयन्नाह । प्रतिदीव्न इति । अत्र वान्तस्य भत्वाभावान्नभकुर्च्छुरामिति निषेधो न । धतोः किम् । अग्निः करोति ।

न सयोगा ॥ अन्तग्रहण स्पष्टार्थम् । सयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् ।

सर्वनामस्थानेचासम्बुद्धावित्येव सिद्धे नियमोयमित्याह । शावेवेति । उपधाया इति । तेनानुनासिकस्येत्यस्यापि नियम इति भावः । अत्र सर्वनामस्थानग्रहण न सम्बद्ध्यते । तेन वृत्रहणी वृत्रघ्नः वृत्रघ्नीत्यादौ नानुनासिकस्येति दीर्घः । इति निषेधे इति । एतत्फलभूते निषेधे इत्यर्थः । शिस्योरिति वक्तव्ये सौ चेति योगविभाग उत्तरार्थः ।

हो हन्ते ॥ ञ्णिन्नकारा हस्यैव विशेषणम् । तत्र ञ्णिद्विषये येननाव्यवधानन्यायेन द्वाभ्या व्यवाये घातक इत्यादावेव न तु हननीयते ण्वुल्यनेकव्यवधाने ।

इद धातोः कार्यमुच्यमानमिति परिभाषया धातुसशब्दनेन विहितमत्ययएव । तेन वृत्रहणमाचष्टे वृत्रहयतीत्यादौ न । नस्तु परे वृत्रघ्नइत्यादावेव स्थानिवत्त्वकृतव्यवधानेपि श्रौताव्यवधानसत्वात् । न तु हननमित्यादौ श्रौतव्यवधाने इति स्पष्ट भाष्ये ।

वृत्रघ्न इत्यादौ णत्ववारणाय हन्तेरत्पूर्वस्येति विभज्य व्याचष्टे । हन्तेरिति । उपसर्गादसमासेपीत्यतउपसर्गादिति वर्त्तते रषाभ्यामिति च तात्स्थ्यात्ताच्छब्द्यम् इत्याह । उपसर्गस्थादिति । प्रकृतोपयुक्तमाह ।

अत्पूर्वस्येति । अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम् । अत्रोपसर्गादित्य-

---

इत्यनुपपन्नमित्यत आह । * एतत्फलभूत इति । * नियमस्येतरनिवृत्तिफलकत्वात् ॥ यद्यपि शिस्योरितिन्यासेन मात्रालाघवन्तथापि पदलाघवाभिप्रायेण कृतामाशङ्कान्निराचष्टे । * शिस्योरिति वक्तव्य इति * । *उत्तरार्थ इति * । अत्वसन्तस्येति सूत्रार्थ । * तत्र* । तेषु मध्ये ।

ननु येन नाव्यवधानन्यायप्रदर्शनमसङ्गतम् । वृत्रहयतीत्यादौ व्यवधानाभावेपि णिति प्राप्तिसत्त्वादित्यत आह । * इदमिति * । * श्रौताव्यवधानसत्त्वादिति * । नकारे परे कुत्वविधानसामर्थ्याच्छ्रौताव्यवधानस्य निमित्तत्वमाश्रीयत इति भाव ।

* णत्ववारणाय * । कुमति चेतिप्राप्तणत्ववारणायेत्यर्थ । * प्रकृतोपयुक्तम् * । वृत्रघ्न इत्यत्रातिव्याप्तिवारकम् ।

स्य निवृत्त्या णत्वमात्रस्यायं नियम इत्याह । एकाजुत्तरेति । णत्वमपीति । अपिना प्रातिपदिकान्तेत्यस्य कुमतिचेत्यस्य च सङ्ग्रहः । वाक्यसामान्य-चिन्ताश्रयणात्सर्वबाधः । इदमत्पूर्वग्रहणं हन्त्यानेककार्याभाववद्धन्तेरुपल-क्षणम् । अतो बहुवृत्रहाणीत्यत्र माघानि मघनाघ्न इत्यत्र च न दोष इत्यन्यत्र विस्तरः । यत्तु कार्यकालपक्षे बहिरङ्गदीर्घासिद्धत्वाद्बहुवृत्रहाणी-त्यादौ न दोषः माघानीत्यादौ यथोद्देश एव लक्ष्यानुरोधात् इति तन्न । तत्पक्षेपि त्रिपाद्यन्तपरिभाषाया अप्रवृत्तेरुक्तत्वात् । मघनाघन इत्यत्र दोषाच्च । माधवेनोक्तमिति । वृत्रघ्नो वृत्रघ्न इति रूपद्वयं तेनोक्तम् । तन्ना-प्येति । कुत्व्यत्राये हादेशेषु प्रतिषेधो वक्तव्य । वृत्रघ्नः स्रुघ्नः माघानि हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवतीति भाष्ये इत्यर्थ । अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः । अनिनिति । एतच्च येन येन विधिरिति सूत्रे भाष्ये स्पष्टम् । अन्यत्र तु अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेनेति हन्ग्रहणे प्लीहन्ग्रहणं न ।

मघवा ॥ षष्ठ्यर्थे प्रथमा तृ इति च वर्त्तते । ऋइडिति । तेनानेका-ल्त्वाभावान्न सर्वादेशः ।

अगिदचाम् ॥ अचामित्यञ्चुधातोर्ग्रहणं व्याख्यानात् । नलोपिन

---

* कुमति चेत्यस्य चेति * । तेन वृत्रघ्न इत्यादौ नातिप्रसङ्गः । यद्यपीदृक्प्रयोजनं सन्निपातपरिभाषया गतार्थम् । तथापि मघनाघ्न माघानीत्यर्थमुपायान्तरस्यावश्यकत्वात् नेह नोक्तः । हादेशे कुत्वप्रत्याय इति भाषितमत्पूर्वग्रहणस्योपलक्षणस्योपलक्षणत्वेनैव गतार्थमिति केचित् तन्मतानुसारेणाह । * इदमत्पूर्वग्रहणमिति * । अत्पूर्वस्येत्यस्य यथाश्रुतार्थत्वे तु बहुवृत्रहाणीत्यत्र माघानि स्यादिति भावः । * बहिरङ्गदीर्घासिद्धत्वादिति * । प्रत्ययमात्रापेक्षत्वेन दीर्घस्य बहिरङ्गत्वम् । * यथोद्देश एवेति * । यथोद्देशपक्षे अत्पूर्वस्यासिद्धतया बहिरङ्गपरिभाषाया अप्रवृत्तिरिति भावः । * तत्पक्षेपि * । कार्यकालपक्षेऽपि । * इत्यत्र दोषाच्चेति * । अत्र स्पष्टम् । अत्परश्रवणादिति भाष्ये तु मेति पञ्चमेद इति तत्परिहाराय पृथग्ग्रहणं योगविभाग उपलक्षणमापद्यते म । वस्तुतस्तु योगविभागस्यात्पूर्वग्रहणस्योपलक्षणत्वस्य चाश्रयणापेक्षया पाणिनेरपि प्रयोजित इति । * कुत्वप्रत्याये हादेशेष्विति * । अत्र पूर्वापरपक्षोपपादनं निमित्तकार्यिभावाश्रयणम् परस्परपक्षोऽप्य च स्वतन्त्रः । हादेशेष्विति तेषु सत्सु प्राप्तयो कुत्वयोः तद्विधिरत्र पूर्वपक्षे हादेशापेक्षत्वे प्रतिषेधः । बहुवचनमाद्यन्तानां स्वरूपार्थं वा बहुत्वात् ।

* अञ्चुधातोरिति * । अन्यथा तत्रापि दोष । * व्याख्यानादिति * । प्र-

इति। अकारलोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादिति भावः। अत्रोगित् झलन्त एव व्याख्यानात्। तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति युवोरनाकौ इत्यत्र भाष्ये स्पष्टम्। उपधादीर्घ इति। सर्वनामस्थाने चेत्यनेन। असिद्धत्वाभावकल्पने मानमाह। तथा चेति। निपातनादिति। वनो र चेति सूत्रे भाष्ये तु मघवन्शब्दो ऽव्युत्पन्न प्रातिपदिकमित्युक्तम्। मघशब्दादिति। धनार्थादित्यर्थः। भाषायामपीति। अपिना च्छन्दसि मघवानमीमहे इति मध्योदात्त च नेति बोध्यम्। अकारे इति। केशाद्व इति सूत्रे कैयटे इत्यर्थः। एवञ्च मतुप्यत्वसन्तस्येति दीर्घसत्वेन आदेशे तदभावे फलभेदे प्रत्याख्यानासभव इति भावः। नन्वेवमप्यन्तोदात्तस्य आदेशे व काराकारस्योदात्तत्वं मतुपि तु ह्रस्वनुड्भ्यामिति प्राप्तस्य मतुबुदात्तत्वस्य नगोऽश्विति प्रतिषेधेन पित्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदोऽस्त्येवेति चेन्न। आदेशपक्षे दीर्घवत् बहुलग्रहणेन घकारोदात्तत्वस्याप्य-

---

त्यय इत्यादिनिर्देशमूलकात्। * विवक्षार्थत्वादिति *। नन्वेतादृशविलक्षणार्थबोधतयाऽचामिति चरितार्थमित्यस्य नियामकत्वकथनासङ्गतिरिति वाच्यम्। अचामित्यस्य नियमार्थत्वम्भाष्य एव प्रतिपादितमिति तत्प्रामाण्येन द्विविधो नियम आवृत्त्या कल्पनीय। एकश्च मूल एवोक्त। अञ्चतेश्चोपधालोपिन एवेति द्वितीयोऽप्यभिप्रेत। अत्र मानमचामिति निर्देश एव। * व्याख्यानादिति *। नपुंसकस्येतिसूत्राज्झलग्रहणापकर्षणाच्चाभित्येतत्साहचर्येण चेति व्याख्यानादित्यर्थ। * भाष्ये स्पष्टमिति *। तत्र हि युवोरनाकाविति चेद्धातुप्रतिषेध। युत्वा। युतवान्। एतच्छङ्कायामनुनासिकपरयोर्युवोर्ग्रहणमिति समाहितम्। अनुनासिक परावयवो ययोरित्यर्थ। ततो यद्यनुनासिकपरयोर्ग्रहणन्तदेत्सज्ञा प्राप्नोतीत्याशङ्क्याह तत्र को दोष। नुमागमप्रसङ्ग। तत्प्रतिषेधो वक्तव्य। अन्यथा नन्दन कारक इत्यत्र नुम्प्राप्नोति। नुम्विधौ झल्ग्रहणम्। झलन्तस्य उगित इष्यते इत्युक्तम्। मूले निपातनादिति। महे कनिप्रत्यय ह्रस्य घ। अनुगागमश्चेत्येवन्निपातनेनाश्रीयते इति भाव। वस्तुत इदकपरमतेनेति सूचयन्नाह। * वनो र चेति सूत्र इति *। एतेन मघोनीत्यत्र वनोरचेत्यस्य प्राप्तिशङ्कापि निरस्ता॥ ननु धनार्थान्मघशब्दादन्तोदात्तान्मतुपि ह्रस्वनुड्भ्यामिति मतुप उदात्तत्वे मध्योदात्तत्वासिद्धिरत आह। * मघवानमीमह इति *। * कैयट इति *। एतेन।

अर्वणस्तृमघोनश्च न शिष्यञ्छान्दस हि तत्।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादिति॥

भाष्यविरोधरूपाऽरुचि सूचिता। * व्यक्तीकारादिति *। अन्यथा

ङीकारात् । तत्रैव मानान्तरमाह । हविरिति । मघवान्ङीपीत्यस्याप्युपलक्षणमिदम् ।

अवणस्तृ मघोनश्च न शिष्यञ्छान्दस हि तत् ।
मतुब्वन्योर्विधानाच्च च्छन्दस्युभयदर्शनात् ।

इत्यत्र वार्त्तिकरीत्या मघवन्शब्दस्य लोके ऽसाधुत्वं लभ्यते । तथा च तृज्वत्सूत्रे भाष्यम् । अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्त इत्यन्यत्र विस्तरः । छन्दस्येवेति । न च वनिवन्तस्य सम्प्रसारणे यस्येति लोपे मघोन इत्यसिद्धिः । व्याश्रयत्वाद्भाभीयासिद्धत्व लोपे सम्प्रसारणस्य नापि बहिरङ्गासिद्धत्वम् । तस्या वाह ऊठ्सूत्रस्यतयाभीयत्त्वेनाभीयान्तरङ्गस्य तद्दृष्ट्यां ऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतमिति वाच्यम् । निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धे. । एकादेश उदात्तेनोदात्त इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाद्यरूपाभावान्नानिष्टापादनम् । आन्तोदात्त त्विति । कन्यन्तत्वादव्युत्पन्नत्वाद्वा तत्त्वम् ।

अश्नन्तनामिति । अल्लोपोन इत्यपकृष्यते तत्र नकार प्रश्लिष्य नान्ताश्नन्तानामित्यर्थः । तेन मघवत इत्यादौ नाल्लोपसम्प्रसारणे । धीवरीत्यादौ च नाल्लोप. । स्पष्टश्चेद ऋलृक् सूत्रे भाष्ये । परे नकारप्रश्लेषाभावे ऽपि न दोष. । अलो ऽन्त्यस्येत्यस्य सत्वेनानः स्थानित्वाभावेन स्थानिवत्सूत्रेणाश्नन्तत्वालाभात् । सर्वे सर्वपदादेशा इत्यनेनापि मघवन्शब्दस्यैव स्थानित्व नान' । अर्द्धविकारे प्रत्यभिज्ञाभावाच्चैकदेशविकृतन्यायावसरः, ध्वं-

---

फलभेद प्रत्याख्यानासङ्गति स्यात् । काव्यप्रयोगस्य दृढतरमानत्वाभावादाह । * मघवान्ङीपीत्यस्यापीति * । *लोकेऽसाधुत्वमिति * । छान्दसमिति तत्रोक्ते । रूपे वैलक्षण्याभावेऽपि स्वरे वैलक्षण्यमस्त्येवेत्यभिप्रायेण शङ्कते । * न चेत्यादि * । ननु निपातितान्तोदात्तमघवन्शब्दस्य मघोन इति रूप यद्यपि सिद्धन्तथापि वनिब्वन्तस्य विपरीत प्राप्नोतीत्यत आह । * छन्दस्यापाद्येति * । एवञ्च विभाषा छन्दसीत्यनेन यष्टिगुरु(?)श्छन्दसीति सूत्रे छन्दसीतियोगविभागसिद्धेन सर्वविधीना वैकल्पिकत्वाच्च वनिबन्तस्य लोपेन विपरीतमिति भाव' । *नाल्लोपसम्प्रसारणे इति* । नित्यत्वात्तृभादेशे कृते इत्यादि ।

ननु स्थानिवद्भावेनाश्नन्तत्वमाश्रित्य स्यादल्लोप इति चेत्तत्राह । * अलोऽन्त्यस्येति * । * मघवन्शब्दस्येव स्थानित्वमिति * । धीवन्शब्दस्यैव च स्थानित्वमित्यपि बोध्यम् । * एकदेशविकृतन्यायेनेति * । अन्शब्दैकदेशो नकार-

नितश्चेदं श्वयुवेत्यत्र भाष्ये इत्याहुः । मघवतीति । पुंयोगेन स्त्रियां वृत्ता-वुगितश्चेति ङीप् । विभक्तौ लिङ्गविशिष्टग्रहणान्नुम्न । शुन इति । ननु सम्प्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वत्वं बाधित्वाऽल्लोपोन इति लोपे शुनेति सर्वानुदात्तः स्यात् । उदात्तनिवृत्तिस्वरेणान्तोदात्त वा स्यात् । पूर्वरूपेणाद्युदात्तमिष्यते । तत्र हि वकारस्थानिकोकारस्य स्रसनधर्मेहल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततया ऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात् । किं च लोपे स्थानिवत्त्वेन यण्प्रसङ्गः। अतः शुन इत्यादिनिर्देशैस्तद्धारणे तु बहुशुन्वा बहुमघवा बहुयुवेत्यत्रान उपधालोपिन इति ङीप्विकल्पापत्ति । मघोन इत्यादावन्तोदात्तप्रकृतिक उदात्तनिवृत्तस्वरापत्तिश्चेति चेन्न । वार्णपरिभाषाया अनित्यत्वेन क्व चिदप्रवृत्त्या ऽदोषात् । इवन्शब्दे आभीयतया सम्प्रसारणासिद्धत्वेन न सयोगादिति निषेधाद्य ।

न सम्प्रसारणे ॥ अनुवृत्त्यैव निषेध्यसमर्पके लब्धे पुनः सम्प्रसारणग्रहणसामर्थ्यात्तन्मात्रनिषेध इति दूरस्थस्यास्य व्यथो लिटीत्यस्य च निषेधः। न च व्यथिव्यच्योदावस्य चारितार्थ्येन यून इत्यादौ पूर्वं सवर्णदीर्घरूपैकादेशे तस्याचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणत्वे ऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथ निषेध इति वाच्यम् । व्यथ इति सूत्रे यग्रहणेनैव सम्प्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्य-

---

स्योत्र विहृत इति सम्भाव्यते तन्न्यायप्रवृत्ति' सा च न सम्भवति अर्द्धधिकारत्वादित्याह । * अद्धाति * । अत्रार्द्धत्वम्भागमादाय । व्यनितामिति * । तत्र हि श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमितिवार्त्तिकप्रत्याख्यानाय श्वयुवेति सूत्रानन्तरमल्लोपोऽन इत्यत्राल्लोप इति विभज्यान इत्युक्तम् । उक्तव्याख्यानञ्चेन्नाद्रियते तदाऽन इत्यस्योभयशेषत्वेऽपि दोषतादवस्थ्यमेवेति तथत्कथनेनैवं व्याख्यानन्ध्वनितमित्यर्थ । * सर्वानुदात्तमिति * । इवन् शब्दे य उदात्तस्तस्य लोपेन निवृत्तावित्यादि' । * उदात्तनिवृत्तिस्वरेण * । अनुदात्तस्य च यत्रेत्यनेन । बहुदन्वेति * । बहव दानो यस्यामित्यर्थं । अत्रश्वन् शब्दस्योपसर्जनतया श्वन्शब्दस्य गौरादिपाठेपि न ङीप प्राप्ति । * वार्णपरिभाषाया इति * । अत्र मान सनुकनिर्देश । स हि विभ्न' अदन इत्यत्र नुको ऽश्रवणाय ।

वहितेऽपि प्रवृत्तेर्यूनस्तिवारिति निर्देशाधेत्याशयेनाह इति यकारस्येति। न च कार्यकालपक्षे इग्यण इत्युपस्थितस्य पदैकवाक्यतयान्वये निमित्तस्य यणान्वयेन येननाप्राप्तिन्यायेन पूर्वस्य सम्प्रसारणमात्रेऽरिट सूत्रं व्यर्थमिति वाच्यम्, तत्पक्षेऽपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव समन्वयस्योक्ततया निधायकेषु यण इत्यस्याभावात्। अत्र चेदमपि ज्ञापकं बोध्यम्। ननु सकृत्प्रवृत्त्यैवोभयोः सम्प्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह। अत एव ज्ञापकादिति। तदुक्तं भाष्ये इङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते। एतदेव ज्ञापयति परस्य पूर्वं भविष्यतीति। लक्ष्ये लक्षणस्येति न्यायस्य तु नायं विषयः। कार्याश्रयवर्णभेदेन लक्ष्यभेदात्।

---

* अनुवृत्त्यैवेति *। सम्प्रसारणमित्यतोऽनुवृत्त्येत्यर्थः *। तन्मात्रनिषेध इति। *अनन्तरस्येतिन्यायाप्रवृत्तिकल्पनेनेत्यर्थः *। स्थानिवत्त्वेन सम्प्रसारणत्वेऽपीति। *हल इति सूत्रारम्भसामर्थ्यादनल्विधाविति निषेधाप्रवृत्तौ पूर्वरूपनिष्पन्नस्य सम्प्रसारणत्वात्। * यग्रहणेनैव सिद्धेति *। एतेन तदर्थप्रवृत्तसूत्रे सम्प्रसारणाभावसाधकतया नसम्प्रसारण इत्यस्य सार्थक्येऽपि सम्प्रसारणग्रहणस्य युवन्शब्दे यकारस्य सम्प्रसारणाभावसाधकतयेत्यर्थः। तथा च प्रकृते निर्दिष्टग्रहणविकला तस्मिन्निति परिभाषाप्रवृत्तिराश्रीयत इति भावः। * अत्र चेदमपीति *। निषेधसूत्रमपीत्यर्थः। अपि ना भस्येत्युपस्थितमिदम्मघाति यचिभमित्यादिभाष्यमत्र ग्राह्यम्। *लक्ष्यभेदादिति*। यं धर्ममुद्देश्यतावच्छेदकमुद्दिश्य कृत्वा यत्कार्यम्प्रथमं कृतं तद्धर्मावच्छिन्ननिमित्तकं तदेव कार्यं तस्मिन् लक्ष्ये पुनर्न प्रवर्तते इति लक्ष्ये लक्षणं सकृदेवेत्यस्यार्थः। एवञ्च प्रकृते युव शब्दावयव एव युद्दिश्य कृत्वा सम्प्रसारणे कृते पुनस्तदवच्छिन्ननिमित्तकं सम्प्रसारणम्प्राप्त्येव। एतेन कार्याश्रयवर्णभेदेन लक्ष्यभेदाश्रयणे उदवोढामित्यत्र सहिवहोरोदिति सूत्रेणौकारे कृते पुनर्लक्ष्ये लक्षणस्येति न्यायेन वृद्धिवारणपरम्भाष्यं विरुध्येत। अत्रापि पूर्वमकारस्य पश्चादोकारस्येति वर्णभेदोऽस्त्येवेति निरस्तम्। हलन्तधात्ववयववाचकस्य प्राथमिकप्रवृत्तिनिमित्ततावच्छेदकतया तद्धर्मावच्छिन्ननिमित्तिका वृद्धिर्नत्यस्य सुवचत्वात्॥ * उचित इति *। लाघवात्। आर्वतम्पदमित्यादौ तद्धिते प्रवृत्तये आह। * प्रत्ययत्वेनेति *। बहुव्रीहिरिति *। न विद्यते नञ् यस्य सोऽनञ् ॥ अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकनञभाववानित्यर्थः। *अत्र न स्यादिति *। न चैतद्वाक्यघटकाद्याजमितिपदान्नञ्विघातपरत्वमस्त्येवेति वाच्यम्। पदविभागेन पाठकालेऽर्वेत्स्वित्यत्र न स्यादित्याशयात्। * प्रथमैकवचनमिति *। अनुनासिकौकारस्यान्तरतम्याज्जातस्य पाठात्।

अवणस्तृ ॥ न तु सावितिं पर्युदास एव तूचितः प्रत्ययत्वेन च सादृश्यम्। अनञ इति बहुव्रीहिर्वाजमर्वेत्स्रिति प्रयोगात् । तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थे ऽत्र न स्यात् । सुरत्र प्रथमैकवचनम् । अनञः किमिति । अनञ इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः । उत्तरमनर्वेति । यज्वन्शब्दसदृशो ऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः ।

नन्विह निरनुनासिकोच्चारणे ऽपि तपरसूत्रस्यानणीव विधीयमाने ऽपि विकृत्यर्थत्वान्नस्यान्तरतम्यादनुनासिकः स्यात्, तपरसूत्रे ऽप्रत्ययग्रहणानुवृत्तौ च मानाभावादत आह । आआदिति । विशेष्यविशेषणभावेनान्वयान्न सर्वादेश इति भावः। भाष्ये त्वनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणात् शुद्धस्यैव विधानमित्युक्तम् । के चित्तु इह सर्वेङ्गुणा भेदका इति पक्षे वृद्धिरादैच्सूत्रभाष्यसमते सिद्धान्तभूते गुणा अभेदका इति पक्षे जातिपक्षे च तत्प्राप्तस्यापि सवर्णग्रहणस्याप्रत्ययग्रहणेन निषेधेनादोषात् । अत एव भाष्ये तपरस्तत्कालस्येति प्राप्नोतीत्युक्तम् । अ

---

ननु मूलोक्तमनञित्यस्यानर्वेतिप्रत्युदाहरणमसङ्गतम् सुपरत्वादत आह * । अनञित्यस्येति * । *यज्वशब्दसदृश इति* । एतेन यदागमपरिभाषया नुड्विशिष्टस्यार्वन्ग्रहणेन ग्रहणम्भवतीति बोधितम् । न चैवमपीहागमविशिष्टस्यैवार्थवत्त्वमित्यर्थवत्परिभाषया केवलस्य ग्रहणङ्कथमिति वाच्यम् । अर्थतोवयवस्य निर्दिश्यमानस्येत्यर्थेन प्रतिष्ठापयतीत्यत्र पत्ववत् आदेश स्यादित्याशयात्।

* इह* । पथिमथ्यृभुक्षोतिसूत्रे । नन्वाआदितिप्रश्लेषेण विधानेऽनेकाल्त्वात्सर्वादेशत्वापत्तिरत आह । * विशेष्यविशेषणभावेनेति * । एवञ्च प्रकृतसूत्रे स्थानिवदादेश इतिसूत्रादादेशपदमाकृष्य सम्बध्यमानमादेशत्वपर्याप्त्यधिकरणपरम्प्रकृते चादेशत्वपर्याप्तिरेकस्मिन्नेवाकारेऽपरत्र त्वाकारे आदेशतावच्छेदकत्वमिति भाव ।ननु नकारस्यानुनासिकस्यान्तरतम्यादनुनासिक एव स्यात्प्रश्लेषे तु सर्वाकार इत्येव प्रश्लेषफल किन्न स्यादत आह । * भाष्ये त्वनुनासिकेति * । तदुक्तमष्टन आ विभक्ताविति सूत्रे । अष्टनजनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिक प्राप्नोति । अष्टाभि । अष्टाभ्य । जात । जातवान् । पन्था । मन्था । सिद्धमनण्त्वात् । अण् सवर्णान् गृह्णातीत्युच्यते । न च आकार अण् । उच्चारणसामर्थ्याद्वा । अथ वा शुद्धोच्चारणसामर्थ्याद्भविष्यतीति । ततस्तपरस्तत्कालस्येति प्राप्नोतीति शङ्कायामप्युच्चारणसामर्थ्यादित्येवोक्तम् । * इद सर्वमिति * । पूर्वपक्षसमाधानरूपम् । * तत्प्राप्तस्य * । पक्षद्वयप्राप्तस्य । * *अत एव * । गुणानामभेदकत्वमितिपक्षाभिप्रायकत्वादेव । * तपरस्तत्काल

प्रत्यय इति वाक्यभेदेन सर्वप्रतिषेधकम् अणू ग्रहणस्य च तत्रासम्बन्ध इति तदाशयः । अत एव भाष्ये भाष्यमानेन सवर्णानाङ्ग्रहण नेत्येव पठित न त्वणेति ।, एतदेवाभिप्रेत्याणुदित्सूत्रेऽनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम् । तेन च तस्यावश्यकत्व सूचितम् । अप्रत्यययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम् । तेन जातिग्रहणप्राप्तस्य गुणाभेदकत्वपक्षप्राप्तस्यानया ऽणनण्साधारण्येन निषेध इति सूचितम् । वस्तुतो ऽणुदित्सूत्रस्याप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्यैकदेशानुमतिद्वारा परिभाषा बोद्ध्यत इत्यर्थः। प्रतीयत इत्यस्य निर्धीयतइत्यर्थाप्रसिद्ध्या कैयटोक्तव्याख्या चिन्त्या । परिभाषाया सवर्णपदेन समानजातीयो भिन्नधर्मी उच्यते । तेन जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः । एतेन पथियते, किपि पन्था इत्यादीत्यपास्तम् । अत्र शुद्धार्थन्तदनुधारणस्यावश्यकत्वेन भाष्यासङ्गते । तस्मात्तदनभिधानमेवोचितम् । न च आदित्येवास्तु नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धिः, पररूप तु न । पथिमथ्यृभुक्षा लोपः, भस्य टेः, इतोत्सर्वनामस्थाने इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्यादिति वाच्यम्, ज्ञान गौरवपरिहारेण स्पष्टार्थमाकारोच्चारात् ।

इतोत् ॥ आदित्यनुवृत्त्यैव सिद्धे ऽद्वचन ऋभुक्षणमित्यादौ घा पपूर्व-

---

स्येतीति * । ननु गुणाभेदकत्वेत्युक्तम् । न चाप्रत्यय इति त्वणुदित्सूत्रप्राप्तस्यैव निषेधकमत आह ।* अप्रत्यय इति चेति * । *अत एव * । अण्ग्रहणस्य तत्रासम्बन्धादेव ।* तत्परिभाषेति * । भाष्यमानेनेति परिभाषेत्यर्थः । *तस्याव्यापकत्वमिति *। अप्रत्ययग्रहणस्याव्यापकत्वामित्यर्थः ।*मदुक्तरीत्येति *। प्रत्ययसञ्ज्ञकपरत्वेन व्याख्यानमित्यर्थः ।*तेन *। भाष्यमानेनातिवचनेन ।*समानजातीयो भिन्नधर्मेति *। सूत्रोच्चारितशब्दबोध्यतावच्छेदकसामान्यधर्मस्य व्याप्यो यस्तद्व्यक्तिव्याप्यधर्मस्तद्वान् उच्यते इत्यर्थः ।सूत्रोच्चारितशब्दबोध्यतावच्छेदकत्वविशेषणाज्जात्यस्य सामान्यधर्मगुणत्वव्याप्यत्वेऽपि न क्षतिः । * एतेन * । वक्ष्यमाणदूषणेन । तदेवाह ॥ * अत्र शुद्धार्थमिति * । * भाष्येति * । शुद्धोच्चारणसामर्थ्यादिति पूर्वलिखितभाष्येत्यर्थः । तेषामनभिधानाभिप्रायेणैव दाङ्कते । * न चेति * । *ज्ञानगौरवेति * । पररूपापत्तिशङ्काया ह्रेशेन धारणे ज्ञानगौरवेत्यर्थः ।

ननु इकारोकारानन्तरआर्हार्थस्तदा आद्ग्रहणानुवृत्त्यैव सिद्धेऽभिधान व्यर्थमत आह ।*आदित्यनुवृत्त्यैवेति * ।*अन्यथा * । तपरकरणस्य फलान्तरमाह भस्य टेः । केचित्तु भिद्धादित्येव सूत्रमस्तु भसञ्ज्ञकपरो य प्रत्ययस्तस्य

स्येति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम् । इत इत्यादिति च तपरत्वं मुखसुखार्थम् । एरदित्युक्तौ ततो लाघवाभावात् । अन्यथा विधेयेपि तपरकरणात्कुरुतइत्यादौ गुणाभाववत्पन्थानावित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः ।

थो न्थः ॥ थो नुडिति नोक्तम् । इत्संज्ञाया आद्यन्तावित्यस्य चानुसन्धाने प्रक्रियागौरवात् ।

भस्य टेः ॥ भस्य किम् । पथिभ्याम् । संबुद्धौ नपुंसकानामिति । इद नलुमतेति निषेधानित्यत्वमूलकमित्युक्तम् । यद्यपि भाष्ये वानपुंसकानामित्येव पठितं तथापि सूत्रे ङिग्रहणस्य प्रत्याख्यातत्वेन हे चर्मन् हे चर्मेति संबुद्धावेवोदाहरणत्वेन तावन्मात्रविषयतास्येति भावः ।

ष्णान्ता ॥ विशेष्यसाकाङ्क्षात् स्त्रीलिङ्गनिर्देशात् प्रकृतं संख्येत्याकृष्यते । संख्याशब्देन च संख्याप्रकारकबोधजनका पञ्चादयो गृह्यन्ते ॥ संख्येतिशब्दे बहुगणडतिषु च तदन्तरङ्गासंभवात्तदाह । संख्येति । सन्निपातेति । बहिरङ्गासिद्धत्व न । संज्ञायाः कार्यापेक्षत्वेन समत्वात् । स्पष्टश्चेदं भाष्ये ।

नोपधा ॥ नलोपस्यासिद्धत्वान्नामीति दीर्घाप्राप्तेरयमारम्भः । नामीत्यस्याङ्गविशेषणतैव न्याय्या नाम. प्रत्ययत्वादेवञ्च पञ्चानामित्यादौ पकाराकारस्य दीर्घवारणायोपधाग्रहणम् । नेति किम् चतुर्णाम् । नामि कि-

---

ङित्वातिदेशो टेरित्येव सिद्धमित्याहु । अत्रेदमूहनीयम् । ङित्वातिदेशायोग्यस्य प्रत्ययस्येहानुपस्थितेरतिदेशासम्भवात् । भसंज्ञया तस्याक्षेपं कल्पयित्वा आक्षिप्तस्य शाब्दबोधे भानं स्वीकृत्यैव कल्पने टेरितिसूत्रान्तरानुसन्धाने गौरवमिति । * संख्येत्याकृष्यत इति * । तच्च पूर्वत्र यद्यपि शब्दपरम् ॥ तथापि प्रकृते लौकिकार्थपरम् ।*नलोपस्यासिद्धत्वादिति*।नामत्वस्य सुप्त्वव्याप्यत्वात्तत्रासिद्धत्वस्य नियमेनाव्यावृत्ते । * पकाराकारस्य दीर्घवारणायेति *। ननु पकाराकारस्य दीर्घव्यावृत्तिरनन्त्यविकार इतिपरिभाषयैव भविष्यतीत्युपधाग्रहणं व्यर्थमिति चेन्न । अप्नृन्निति सूत्रार्थमिनहन्निति सूत्रार्थञ्च तत्सत्त्वात् । आद्ये उपधापदासम्बन्धेऽयन्दीर्घो येन नाप्राप्तिन्यायेन तृन्तृजन्ते कृतो ङीति गुणस्य बाधकः स्यात्तथा च कर्त्तारौ नप्तारावित्यादिरूपासिद्धिप्रसङ्ग । द्वितीये उपधापदासम्बन्धे तु नियम उपधादीर्घस्यैवेति नियतो न स्यात्तथा च वृत्रहायत इत्यादावकृत्सार्वधातुकयोरिति दीर्घोपि न स्यादिति बोध्यम् ।

ननु पञ्चानामित्यत्र नान्तसन्निपातेन नुटि कृते नदादि निमित्तकपदत्वे सन्नि-

म् । चर्मणाम् । नलोप इति । युवः पञ्चानामिति लिङ्गान्न सन्निपातपरिभाषाविरोधः ।

अष्टन आ ॥ अनण्त्वान्नानुनासिक इति भाष्ये स्पष्टम् । जातिग्रहणेन गुणाभेदकत्वेन तु न सः । भाव्यमानत्वात् । शुद्धोच्चारणादिति तु नात्र वक्तुं शक्यम् । रायो हलीत्युत्तरार्थन्तस्य चारितार्थ्यात् । प्रश्लेषेणापि न निर्वाहः । वान्यवृत्त्यानुनासिकव्यावृत्तेस्तेनालाभात् । प्रत्युत तत्रापि गुणाभेदकत्वादेर्दुर्वारत्वेनान्तरतम्यादनुनासिकस्यैव प्राप्तेः प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात् । एवमन्यत्रापि बोध्यम् । रायो हलि इत्यतो हलीत्यपकृष्यते ।

अष्टाभ्य औश् ॥ उडिति तु नोक्तम् । सकारस्योकारे अष्टा अ उ इति स्थिते इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वादिति न्यायेनान्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणे ऽष्टारित्यस्यासिद्ध्यापत्तेः । हलीत्यपकर्षे कृताकारादित्यनुपपन्नमत आह । कृतात्वेति । कृतात्वानुकरणमित्यर्थः । लक्षणवशसम्पन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेत् इति भावः ।

---

पातपरिभाषया नलोपो न स्यादत आह । * युव पञ्चानामिति * ।

ग्रहणकशास्त्रानिषयत्व सूचयन्नाह । * अनण्त्वादिति * । * न स इति * । अनुनासिक इत्यर्थः । पथिमथ्यृभुक्षामित्यत्रेवात्र न निर्वाह इत्याह । *प्रश्लेषेणापीति* । * वाच्यवृत्त्या * । वाच्यानिष्ठया वृत्त्या । शक्त्येतियावत् ।

अष्टाभ्य औशित्यत्राष्टभ्य उडित्येवास्तु ङित्वाद् त्यादेशोऽकारोकारयोरेकादेशे वृद्धिरेचीति वृद्धावष्टाविति भविष्यतीति यस्य चिच्छङ्कासिरस्यति ॥ * उडिति तु नोक्तमिति * । * इतिन्यायेनेति * । अयजे इन्द्रम् । प्रामे इह । सर्व इत्यमित्यत्र यथा पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादाय सवर्णदीर्घम्बाधित्वा गुण प्रवर्तते तथात्रापि अकारोकारयो प्राप्तगुणम्बाधित्वा तरङ्गत्वात्सवर्णदीर्घ पश्चाद्गुणे रूपासिद्ध्यापत्ते । यदि चायजे इन्द्रमित्यादेरित्थितौ सवर्णदीर्घस्य पदान्तरसम्बन्धिवर्णापेक्षत्वेन बहिरङ्गत्वङ्गुणस्य तु तत्पदसम्बन्धिवर्णापेक्षत्वेनान्तरङ्गत्वमिति युक्तस्तत्र गुणेन दीर्घबाध प्रकृते तु जश्शसोरकारसकारस्थानिकोकारस्य च एकादेशस्य प्रत्ययमात्रसम्बन्धिवर्णापेक्षत्वादन्तरङ्ग प्रत्ययावयवप्रकृत्यवयवसम्बन्ध्येकादेश एव तु बहिरङ्ग इतीण्ङिशीतिन्यायवैषम्यमिति विभाव्यते तदा उडिति न्यासे यद्यपि मात्रालाघवन्तथापि प्रक्रियागौरव दूषणमस्मिन्न्यासे बोध्यम् । * तस्य * । लक्षणसम्पन्नाकारस्य । अष्टाभ्य इति निर्देशस्यैवापूर्वार्थकल्पकत्वे हल्येव तथा कल्पनापत्तिरत आह । * अयम्भा

ज्ञापयतीति । अत्र भाव. । हलीत्यपकृष्यमाण वाक्यभेदेन पुनर्विधानार्थम् । तेनाष्टन इत्यस्य क चिद्दस्यापि प्रवृत्तिरिति । आत्वमिति । आत्वमात्रमित्यर्थः । सूत्रे इति । दीर्घान्तादष्टनः परा ऽसर्वनामस्थानविभक्तिरुदात्तेति तदर्थः । ज्ञापकादिति । तद्धि अष्टभिरिति ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थम् । एवञ्च ह्रस्वव्यावृत्त्यर्थत्वे क्रियमाण दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम् । न चाष्टाभिरित्यत्र सावकाशस्याष्टन इति सूत्रस्याष्टभिरित्यत्र परत्वात् झल्युपोत्तममित्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेतत् न ह्यष्टाभिरित्यत्र झल्युपोत्तममिति प्राप्नोति । कार्यकालपक्षे ऽनान्तत्वेन पदत्वाभावात् । अल्विधित्वेन स्थानिवत्त्वाभावाच्चेति वाच्यम् । पुनः प्रसङ्गविज्ञानबोधनद्वारैतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा तद्विकल्पे ज्ञापकत्वमित्याशयादित्यन्यत्र विस्तरः । अष्टानामिति । हलीत्युक्तेरादौ नुट् तत आत्वम् । न तु सन्निपातपरिभाषया ऽत्र नात्वं किन्तु नोपधाया इति दीर्घे नलोपः । अन्तोदात्तत्वन्तु षट्त्रीत्येव सिद्धम् । नलोपे तु न सन्निपातपरिभाषा नलोपस्यासिद्धत्वादिति । तन्न । पूर्वत्र कर्त्तव्ये नलोपासिद्धत्वेपि

---

घ इति * । इदम सन्निकृष्टार्थबोधकतया ज्ञापकसिद्धस्यैव वैकल्पिकत्वस्य प्रतीयते तथानुपयुक्तमत आह । * आत्वमात्रमिति * । * आत्ववैकल्पिकत्वे ज्ञापकमिति * । आत्वस्य नित्यत्वे हि ह्रस्वस्यैवाभावात्तद्व्यर्थमिति भाव । * सावकाशस्येति * । अनान्तत्वेन पदत्वाभावात् । झल्युपोत्तममिति तु पञ्चभिरित्यत्र चरितार्थम् । ननु स्थानिवद्भावेन नान्तत्वमस्तीत्यत आह । * अल्विधित्वेन ति * । * पुन प्रसङ्गविज्ञानेति * । तस्य न्यायस्य प्रवृत्ते प्रवृत्तिबोधनद्वारेत्यर्थ । सकृद्गतिन्यायपक्षेऽप्याह । * यथोद्देशेति * । अयम्भाव । भविष्यति किञ्चित्प्रयोजनमित्यभिसन्धिमात्रेण विभक्त्युत्पत्ते प्रागेवान्तरङ्गत्वात् पदसंज्ञाया विभक्तौ नान्तसव्यापायावयवत्वसमानाधिकरणधर्मविशेषरूपपदत्वस्य स्थानिवद्भावेनातिदेशोऽष्टाभिरित्यत्रापि झल्युपोत्तममित्यस्य प्राप्तिरित्यष्टन्स्वरो नित्यत्वाभावात्तया झल्युपोत्तममित्यस्य बाधकस्तथा चाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि स्यादित्येतद्व्यावृत्त्यर्थं क्रियमाण ज्ञापकमिति । * सन्निपातपरिभाषयेति * । नान्तसन्निपातेन जायमानस्य नुटस्तद्विघातकारनिमित्तत्वञ्चेत्यर्थ । ननु यदि नात्वन्तर्हि अष्टनो दीर्घादित्यस्याप्राप्तेर्विभक्त्युदात्तत्वञ्च स्यादत आह । * अन्तोदात्तत्वमिति * । * नलोपस्यासिद्धत्वादिति * । नलोप प्रातिपदिकान्तस्येतिसूत्रे सम्बध्यमान यत्पूर्वत्रेति तस्य पूर्वसम्बन्धिकार्ये इत्यर्थ । पूर्वशास्त्रञ्चात्र नुड्विधायकमपि तत्सम्बन्धि कार्यन्नुट्तत्सबन्धि नान्तसन्निपातोऽपीति परम्परया पूर्वसम्बन्धिसन्निपातस्तस्मिन् कर्त्तव्ये नलोपस्यासिद्धत्वम् । न च सन्निपातस्य

तत्र कृते ऽसिद्धत्वे मानाभावात् । सन्निपातस्याशास्त्रीयत्वेन तस्य नलोपासिद्धत्वेनालाभाच्च । आरोपितासिद्धत्वेपि वस्तुतो नलोपे तद्विघातस्याजायमानत्वेन नलोपे ऽपि तस्या दुर्वारत्वाच्च । अत एव गार्ग्यिता नार्ग्यितेत्यादौ सन्निपातपरिभाषया यलोपो न । अन्यथा यस्य हल इति यलोपस्य बहिर्भूततृजनिमित्तकत्वेन बहिरङ्गतयान्तरङ्गावादेश प्रत्यासिद्धतया निमित्तविघाताभावः स्पष्ट एव । तस्मान्नलोपस्यापि परिभाषानित्यत्वेनैव साध्व तया तस्यासिद्धत्वादात्वमेव युक्तन्तदनित्यत्वेन । किं च षट्सन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम् । स्थानिवद्भावेन कृतात्वेपि षट्त्वसत्त्वात् । कार्यकालपक्षे तत्रादिष्टेऽकारान्ततापन्नषट्त्वस्य बहिरङ्गत्वेन कृते ऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति हलीत्यपकर्षः । दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्संज्ञाश्रयणे ऽत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात् पूर्वं षट्त्वे नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे च प्रतिपत्तिगौरवमिति बोध्यम् । वृत्त्याद्यनुसारेणाह । गौणत्वे त्वित्यादि । स्थानिवद्भावादिति । पूर्वत्रासिद्धे इति तु तस्य दोष इत्यनेन निषिद्धमिति भावः । कार्यकालपक्षे इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । प्राधान्य एवेति । बहुवचननिर्देशात् । एवञ्च गौणे आदेशप्रवृत्तौ तज्ज्ञाप्यात्वमपि नेति भावः । परे तु ष्णान्तेति सूत्रे भाष्ये अष्टानामित्येतत्सिद्धये हलीत्यपकर्षमु-

---

नलोप सुप्स्वरेत्यनापाठात्तस्यान्तत्रासिद्धत्वमिति वाच्यम् । नुट सुप्त्वया प्यधमावच्छिन्नसम्बन्धितया परम्परया तत्सम्बन्धिसन्निपातस्यापि सुप्त्वव्याप्य धर्मावच्छिन्नसम्बन्धित्वादित्यभिमान । तमभिमानमिराचष्टे ।* पूर्वत्रेति *। * तत्र * । नुटि । अभ्युपेत्याह । * सन्निपातस्येति * । शास्त्रासिद्धत्वस्य सिद्धान्ति सम्मततया शास्त्रीयकार्ये यथासिद्धत्वमुचितमिति भाव । * तस्या * । सन्नि पातपरिभाषाया । * अत एव * । वास्तविकसन्निपातविघातमादाय सन्निपातप रिभाषाया प्रवृत्तिस्वीकारादेव । * परिभाषानित्यत्वेन * । सन्निपातपरिभाषाया अनित्यत्वेन । * तस्यासिद्धत्वात् * । नलोपस्यासिद्धत्वात् । सन्निपातविघात मभ्युपेत्य दोषपरिहृत्य वस्तुत सन्निपातविघात एव नास्तीत्यभिप्रायेणाह । * किं चेति * । * कृतात्वेऽपीति * । अपिना नलोपसङ्ग्रह । नन्वेव कृतात्वे ऽपि चेत् षट्त्वमाश्रीयते तदा हलीत्यपकर्षो व्यर्थ इत्यत आह । * कार्यकालपक्षे इति * । प्रतिपत्तिगौरवम् । हलीत्यस्यापकर्षेण व्याख्यानापेक्षयेत्यर्थ । प्राचामनुरोधेन । निपातो सर्वथा बहिरङ्गपरिभाषाया अप्रवृत्ते ॥ * प्राधान्येति *।

यत्वा तत्र पक्षे प्रियाष्टौ इति न सिद्ध्यति प्रियाष्टानो प्रियाष्टान इति प्राप्नोति इति शङ्किते यथालक्षणमप्रयुक्ते इति समाहितम् तत्र यथालक्षणमिति प्रतीकमुपादाय यस्य विशिष्टप्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिस्तद्यथालक्षणमनुगन्तव्यन्तदत्र मा भूदात्वमित्यर्थ इत्येकमर्थमुक्त्वा नैव वा लक्षणमप्रयुक्ते वर्त्तते। प्रयुक्तानामेव लक्षणेनान्वाख्यानादिति व्याख्यान्तरमुक्तम्। तत्रान्त्यव्याख्यानमेव ज्यायः। अप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः। आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः प्रयुक्तेपि लक्षणानतिक्रमात्। प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च। किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इत्थमेव व्याख्योचिता। एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोस्तिरस्काराच्च। अत एव हलङ्यादिसूत्रादावस्याप्रयुक्ते लक्षणाभाव इत्येव व्याख्याहता कैयटेन। नाम्रेडितस्येति सूत्रेपि कैयटः प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावेन प्रवृत्तिरिति। एवञ्चैषामनभिधानमेवोचितम्। अत एवाष्टाभ्य औशिति सूत्रे भाष्ये विभाषा आत्त्व यदयमात्वभूतस्य ग्रहणङ्करोति अष्टाभ्य इति अन्यथा अष्टन इत्येव ब्रूयादित्युक्तम्। कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव। एवञ्च तत्प्रयोगविचारः सर्वोपि निष्फल एवेत्याहुः।

निरुपपदादिति। असमासएव विधानेन सोपपदे चोः कुरिति कुत्वेनैव

---

औत्वादेशेत्यर्थ। * विशिष्ट *। आनुपूर्वीप्रकारकनिश्चयविषय। अस्मिन्पक्षे यथालक्षणमित्यस्य कार्यङ्कर्त्तव्यमिति शेषपूरणेन पदार्थानतिवृत्तो समासङ्कृत्वा लक्षणमनतिक्रम्य कार्यङ्कर्त्तव्यमित्यर्थः कार्य। द्वितीयपक्षे तु नञ्समासेन लक्षणाभावप्रतिपादकस्यालक्षणशब्दस्य योग्यतार्थकयथाशब्दस्य समास। एव सति यत्र लक्षणाभावस्य योग्यता तस्य शास्त्राविषयतयाऽनभिधानमेव लभ्यते। तथा चास्यासाधुत्वम्। प्रथमपक्षे चात्वाभावयुक्तस्य साधुत्वमित्येव विरुद्धार्थप्रतिपादनञ्च युक्तमित्याह। * किञ्चेति *। * अत एव * अन्त्यव्याख्यानस्य युक्तत्वादेव। * कैयटेनेति *। एवञ्च कैयटस्याप्यनभिधान एव तात्पर्यमिति भाव। * अत एव *। एतादृशानामनभिधानादेव। के चित्तु वस्तुतस्तु सर्वविभक्तिपरस्य प्रियाष्टन्शब्दस्य नानभिधानङ्किन्त्वजादिविभक्तिपरस्येत्याहु। तन्न। एवमप्यष्टन इत्येव ब्रूयादितिग्रन्थस्वारस्यभङ्गापत्तेः।

यन्मूले निरुपपदादित्युक्तन्तल्लाभप्रकारमाह। *नुमोऽसमास एवेति *। असमास एव क्विन्प्रत्ययस्येत्यस्य प्रवृत्ते फलमिति निरुपपदादेवानेन क्विनो विधान

गित्त्वेन क्ङिति किति च निषेधाभावादिति भावः । कुत्वाविति । इदमुपलक्ष-णं उच्चारणार्थेकारस्यापीकारो गुणप्रतिषेधार्थः । नकारः क्विन्प्रत्ययस्येत्य-त्र विशेषणार्थं इति भाष्ये स्पष्टम् । सन्निहित इति । तत्फलन्तु णिजादीनां संज्ञा-भावः । अतिदृङ्क्ष्म् । ऋत्विगित्यादौ नेड्वशिकृतीति निषेधो मा भूत् इति । ज्ञापकेन निर्वाहस्तु व्याख्यानाद्दूरकरणमिति न्यायादुपेक्षित इति सूत्राशयः ।

युजेर॥ उगिदचामित्यतः सर्वनामस्थान इदितो नुमित्यतो नुमिति चानुवर्तते ।

क्विन्प्रत्यय ॥ प्रत्ययग्रहणसामर्थ्यात्तद्गुणसंविज्ञानो बहुव्रीहिः । न च तदभावे रस्य कुत्वापत्तिः । तथा सति क्विनौ च इत्येव वदेत् नर्थवरस्य

---

मिति भावः । * उच्चारणार्थेकारस्यापीति * । उच्चारणार्थमुच्चारितेनानेन विधेयवि-षये इत्संज्ञां विना निवृत्त्यभावस्य पूर्वमुपपादितत्वात् । * क्विन्प्रत्ययस्येत्यत्रे-ति * । एवञ्च नकारोच्चारणस्य चारितार्थ्यं यावत्कारोच्चारणसामर्थ्यात्क्विगित्यत्रा-गमस्यागमानुशासनस्य बाधित्वा आद्युदात्तत्वमित्येव सामर्थ्यवर्णनमसङ्गतमिति सूचितम् । इत्वमकारोच्चारणफलं तदनुबन्धकग्रहणे नातदनुबन्धकस्येति परिभा-षामनाश्रित्य । तदाश्रयणे तु क्विन्प्रत्ययस्येत्युक्तावप्यदोष इत्यवधेयम् । * ऋत्विगि-ति * । अत्र प्राप्तस्य यस्यादिभ्य इतोऽनु प्रतिषेधः स्यादिति भावः । केचित्तु यङ्-द्वेषीति पाठः । न चात्र नेड्वशीति प्राप्तस्यापि प्रतिषेधस्य यस्यादिनियमेन निवृ-त्त्या रूपसिद्धिर्निर्बाधैवेति वाच्यम् । क्र्यादिनियमो हि मध्येऽपवादन्यायेनैकाच उपदेश इति श्युक् क्ङितीति सूत्रेण वा प्राप्तस्य निवर्तको न तु नेड्वशीति सू-त्रप्राप्तस्येत्याशयात् । परन्त्वेवं सति बभूविथेति रूपस्य पुरः स्फूर्तिकस्याशस्या-गम्य निर्बीजत्वापत्तेः । अशोकवनिकान्यायेन योजनन्तु क्लिष्टम् । ननु तिङः कृ-त्संज्ञाभावेऽकृत्सार्वधातुकेति सूत्रे सार्वधातुकग्रहणमेव ज्ञापकं तद्धि चिनुया-दित्यादौ दीर्घाभावाय । यदि तिङः कृत्संज्ञा स्यात्तदा कृत्पर्युदासेनैव दीर्घाभावे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । किञ्च तिङः कृत्संज्ञायाङ्कृदन्तत्वात्प्रातिपदिकसंज्ञाया-मतिशायन इति सूत्रेणैवातिशायनिकप्रत्ययस्य सिद्धौ तिङश्चेति सूत्रमपि व्यर्थं ज्ञापकमभविष्यदित्यत आह । * ज्ञापकेनेति * । दूरकरणमिति * । तादृशा-र्थबोधकशब्दोपादाने शब्दात्तदर्थोपस्थितिः । व्याख्यानेन कल्पने विवक्षितार्थ-स्यानुमितिर्वाच्या । अनुमितिसामग्री च गुरुतरव्याप्तिज्ञानादिघटितेति भावः

* धस्यैव कुत्वापत्तिरिति * । न च धस्य कुत्वलोपयोः प्राप्तौ कुत्वस्य पूर्वं प्रत्यसिद्धत्वाद्धलोपस्यैव प्राप्तिरिति वाच्यम् । एवं सति सूत्रारम्भसामर्थ्यात्किञ्च-न्तस्येत्यथापि सम्भाव्येत स चानिष्ट इत्याशयात् । सूत्रारम्भसामर्थ्येन पूर्वत्रा-सिद्धत्वबाधेऽप्याह । * तथा सतीति * । न च घोषस्याल्पप्राणस्य च चकारस्य ता-दृशो गकार एव वक्तुमुचित इति वाच्यम् । वर्गाणां तृतीयचतुर्थान्तःस्था ह

घानुवृत्तावप्यदोषादिति बोद्धव्यम् ।

चोः कुः ॥ स्कोरित्यतोऽन्तइति झलो झलीत्यतो झलीति चानुवर्त्तते, पदस्येति चाधिकारः । कुत्वस्यासिद्धत्वादिति । अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः । सुयुगिति । सत्सूद्विषेति क्विप् । धातुपाठेति । व्याख्यानादिति भावः । युगिति । क्विप् चेति क्विप् । इहेति । ऋत्विग्दधृगिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्काम्यच्सूत्रे भाष्य उपयट्काम्यतीति प्रयोगात्किम्प्रत्ययस्येति कुत्वं नेत्यर्थः । परिमृडिति । धातोरुच्यमानं कार्य्यन्तत्प्रत्यये इति परिभाषया ऽत्र सुबन्तनिमित्तिका मृजेर्वृद्धिर्न । क्विन्निमित्तिका तु कडिति चेति निषेधान्न । परौ व्रजेः । क्विब्वचीत्युणादिपठितमिति मते ततः क्विप्दीर्घावनुवर्त्तेते व्याख्यानाच्च ताभ्यां पदान्तइत्यस्यासम्बन्धः किन्तु षेणैवेत्याह। क्विबित्यादि ।

विश्वस्य ॥ ढ्लोपइत्यतो दीर्घ इति वर्त्तते । ननु षत्वादीनामसिद्धत्वेन राड्शब्दपरत्वाभावः, अत आह । पदान्तेति । तेन विश्वराजावित्यादौ न, विश्वाराड्भ्यामित्यत्र च भवति । आदित्याविश्ववसव इत्यत्र तु न दीर्घः । नरे संज्ञायामित्यतः संज्ञापदापकर्षणात् ।

स्कोः सं॥झलो लोपः सयोगान्तलोप इति भाष्योक्तेरेव झल इत्यस्या-

---

कारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना अघोषा इति शिक्षाया घकारयकारयोः समानधर्मत्वप्रतिपादनेनास्य ग्रन्थस्य तच्छिक्षानुसारित्वात् । एवं दन्त्योष्ठ्यवस्यापि महाप्राणता तथोक्ता मूलोक्तरीत्या तु क्विनो ग इत्येवोचितम् । उत्तरार्थत्वमपि न कुग्रहणस्येत्याह । * मत्वेर्थेस्यत्रेति * ।

ननु निरुपपदाद्युजेर्यिति पूर्वमुक्तन्तेनात्र क्विनोऽभावात्कथन्तस्य प्राप्तिरत आह । * अतद्गुणेति * ।

* धातुपाठेतीति * । तस्य प्रथमोपस्थितत्वात् । *व्याख्यानादिति* । शीघ्रोपस्थितिमूलकाद् व्याख्यानादित्यर्थः । * इति मत इति * । एतेनेदमपूर्वङ्किन्तु अन्येभ्योऽपि दृश्यत इतिसूत्रस्थदृशिग्रहणस्यैवेदम्फलमिति सिद्धान्त सूचित । * व्याख्यानादिति * । परियाजावित्यादिलक्ष्यदर्शनमूलकाद्व्याख्यानात्।

* संज्ञापदानुकर्षणादिति * । एवञ्च यत्र पूर्वोत्तरपदघटिता संज्ञा तत्रैव दीर्घ कोटराघटकपदानि तु प्रत्येकं संज्ञास्वरूपबोधकानि न तूभयघटिता संज्ञा तत्रोपास्तेति भावः ।

स्कोरितिसूत्रस्य मूलोक्तयथाश्रुतार्थ पृथङ् स्थातेस्यादावतिप्रसङ्ग प्राप्तो

सम्बन्धः । तेन झल्परयोः स्कोर्लोप इति नार्थ इत्यन्यत्र प्रपञ्चितम् । झली-त्यनुवर्त्तमानं झलादिप्रत्ययपरं झलोझलीत्यत्रोद्.स्थादित्यारम्भेण तदर्थ-कतयार्थाधिकारात् । तेन पृथक्स्थाता पयः स्थितिरित्यादौ न दोषः । सडीति वार्त्तिकाच्च सनस्सकारमारभ्याहिडो ढकारात्साडिति प्रत्याहारे भूयास्तामित्यादौ न व्यञ्जनपरस्येति न्यायेन लोपाभावेऽपि न क्षतिः । के चिच्चप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितम् सडीति वक्तव्य काष्ठशक्स्थातेति वार्त्तिकस्य प्रत्याख्यानपरेण काष्ठशगेव नास्ति कुतः काष्ठशक्स्थातेति भाष्येण तथैव बोधनादित्याहुः । प्रत्याख्यानमेकदेशयुक्तिः सडीति वक्तव्यमेवेति परे । चो' कुरित्येतत् पत्वेनापवादत्वाद्-बाध्यते क्विन्प्रत्ययस्येत्यस्य तु क्विनविधानसामर्थ्यादेव न बाध इत्याह । क्विन्नन्तत्वादिति । ऋत्विक्शब्दो यज्ञसम्बन्धिपुरुषविशेषे रूढः ।

त्यदादीनामित्यनुवृत्तेराह । त्यदादीनामिति । तेनातप इत्यादौ न । तदोः किम् । या । तोरिति तु नोक्तम् । अनेपेत्यादौ नस्याप्यापत्तेः । न

ति तत्परिहारायाह । * झलीत्यनुवर्त्तमानामिति * । * सडीतिवार्त्तिकाच्चेति * । इद ञ्च नापूर्वं वार्त्तिकङ्किन्तु परेश्च वाञ्छ्योरितिसूत्रभाष्ये सडि रुत्वसलोपसंयोगा-दिलोपकुत्वदीर्घत्वानि वक्तव्यानि । गिरौ गिर इत्यत्र रुत्वम् । पयो धावतीत्य त्र धियेति सलोप । काष्ठशक्स्थातेत्यत्र स्कोरिति कलोप । कुञ्चेत्यत्र चो कु रिति कुत्वम् । धुर्यं इत्यत्र हलि चेतिदीर्घत्वञ्चैतद्वार्त्तिकस्यार्थमुक्तम् । त देकदेशोऽयम् । * के चिदिति * । वार्त्तिकप्रत्याख्यानवादिमतमेवाहेति स्पष्ट मेव । स्वमतमाह । * प्रत्याख्यानमेकेति * । पृथक् स्थाता । पय स्थितिरित्या दिप्रयोगाणां लोकप्रसिद्धत्वादनभिधानकल्पनायाम्मानाभावादिति भाव ।

तदो स सौ । अत्रानुवर्त्तमानत्यदादीनामित्यस्यावयवाधेयषष्ठ्या त्यदाद्य वयवतकारदकारयोरित्यर्थः । त्यदतच्छब्दयोर्बुद्धिविषयचैत्रत्वाद्यवच्छिन्ने शक्ति । न चात्र बुद्धिविषयस्य चैत्रत्वस्य तदाश्रयस्य वा विशेषणं वाच्यमथ सति बु द्धिविषयत्वस्योक्तविशेष्यांशे प्रकारतया शाब्दबोधे भानापत्तिरिति वाच्यम् । चैत्रत्वमैत्रत्वावच्छिन्ने त्यदादीनां शक्तिस्वीकारे शक्यतावच्छेदकानामानन्त्याच्छ क्त्यानन्त्यस्य यदा चैत्रत्वावच्छिन्नविषयको बोधस्तदा मैत्रत्वावच्छिन्नविषयक बोधस्य चापत्तिरिति स्वविषयतावच्छेदकत्वसम्बन्धेन बुद्धिविशेषोपलक्षित धर्मावच्छिन्ने शक्ति स्वीक्रियते । बुद्धिविशेषश्चोपलक्षणीभूय शक्यतावच्छेदक तया अनुगमक इति न तेन रूपेण शक्यतावच्छेदकस्य शाब्दबोधे भानापत्ति । अनुगतधर्मावच्छिन्ना शक्यतावच्छेदकता चैकेति न नानार्थत्वापत्तिश्च । तच्छ ब्द वाचिरप्रक्रम्यमाणपरामर्शक । स देवदत्तो यस्तत्र स्थित इत्यादौ । एतस्यैव ।

च नुटो बहिरङ्गत्वेनासिद्धत्वम् । बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्गत्वात् । इदञ्च तस्मान्नुडचीति सूत्रे भाष्ये ध्वनितम् । सौ किम् । तौ । अत्रसत्त्वे

---

तत्पदस्य यत्पदेनार्थप्रत्यायननियमेनापेक्षा । तत्पदसमभिव्याहारज्ञानं विना य-त्पदस्यापि तादृशानुगमकधर्मप्रहाभावेन शक्तिग्रहासम्भवाच्छाब्दबोधाजनकत्व-स्योपपत्तेः । अत एव तमानय य इहास्तीतिवाक्यस्य वक्तृबुद्धिस्थघटकर्मका-नयनबोधकत्वम् । अत्रैव यत्तदोर्नित्यसम्बन्ध इति व्यवहारः । यत्र तु प्रक्रान्तप-रामर्शकस्तत्र यत्पदाभावेऽप्यर्थबोधो भवत्येव । यथा समृद्धपुरे राजास्तीत्या-दिकथनानन्तरं तमभिगच्छेत्युच्यते तत्र यत्पदाभावेऽप्यर्थबोधो भवति । एवं यच्छब्दस्य तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितो यो ध-र्मस्तदवच्छिन्ने शक्तिः । अत एव नियमेन तत्पदापेक्षा ॥ लाघवमूलिका कस्य चिच्छङ्कां निरस्यति । * सोरिति दिवति * । अनेप इत्यत्रैतच्छब्दस्य नञा समा-से नलोपे तस्मान्नुडचीतिनुटि नकारस्यैतच्छब्दावयवतया सस्यापत्तेः । स्पष्ट-ञ्चेदन्तस्मान्नुडचीतिसूत्रे भाष्ये । तत्र हि तस्मादित्यस्याभावे नञ एव नुट-प्राप्तिमाशङ्क्य एवन्तर्हि पूर्वान्तं करिष्यते । तत्रायमप्यर्थः । तदो सः सावितिसूत्रे तदोर्ग्रहणञ्च कर्त्तव्यम्भवति । तवर्गनिर्देशे इह प्राप्नोति । अनेष करोति । न चात्र निर्दिश्यमानपरिभाषया न भविष्यतीति वाच्यम् । अर्थवत्परिभाषैकवाक्य-तया निर्दिश्यमानपरिभाषया प्रवृत्तो तकारस्यादिति तादृशरूपप्रदर्शनपरभा-ष्यप्रामाण्येन द्वयोरपि परिभाषयोस्त्यागात् यावता पूर्वान्तं । एव दोषो न भव-ति । ततः पूर्वान्तत्वेऽनेष इत्यत्र नलोपमाशङ्क्य नुग्विधानसामर्थ्येन तं वारयित्वा ङमुटः प्राप्तिमुद्भाव्य परादित्वपक्ष एव स्थापितः । न चाजादिपदसन्निपातेन जा-तस्य नुटः कथन्तद्विघातकङमुट्सम्प्रति निमित्तत्वमिति नायन्दोष इति वाच्यम् । नञोऽकावि चित्वादन्तोदात्तत्वे च कृतेऽर्मशब्देन नकशब्दस्य समासेऽकन-र्मेमित्यत्रामे चावर्णद्व्यच्त्र्यजितिपूर्वपदाद्युदात्तत्वाभावापत्तेरतः परादित्व स्यावश्यकत्वात् ॥ अत्र कैयटः । परादावपि नुटि तस्यासिद्धत्वात्तदोः सस्सावित्यपि क्रियमाणे सत्वञ्च भविष्यतीति चिन्त्यमेतदिति तद्दूषयितु-मुपक्रमते । * न चेति * । *अस्येव* । मत्वस्यैव । नुटो यद्यपि पूर्वोत्तरपदसापे-क्षत्वन्तथाप्यङ्गसञ्ज्ञानिमित्तबहिर्भूतसुबनपेक्षत्वे चान्तरङ्गत्व सत्त्वस्य तु त-दपेक्षत्वाद्बहिरङ्गत्वमिति भावः । सत्वन्तर्भूतसुबपेक्षत्वेन सत्वमन्तरङ्गमिति तन्न । अन्तर्भूतसुपः प्रत्ययलक्षणेनापेक्षा वाच्या । सा च न सम्भवति । न लुम-ताङ्गस्येति प्रतिषेधात् ॥ वस्तुतस्तूत्तरपदाधिकारस्थबहिरङ्गस्य परिभाषाया अनित्यत्वाद्वासिद्धत्वमित्यवश्य वाच्यम् । अत एवास्मान् धियम्मन्यते यस्तस्मै

नेति । गणकार्यत्वादिति भावः ।

ङे प्रथम ॥ युस्मदस्मद्भ्यां ङसोऽशित्यतो युष्मदस्मद्भ्यामिति वर्त्तते । ङ इति पृथक्पदम् । अत एव प्रथमयोरित्युच्यते कयोः प्रथमयोः विभक्त्योः, वचनयोस्तु न ग्रहणं शसोनेति लिङ्गादिति भाष्य सङ्गच्छते ।

त्वाहौ ॥ यद्यपि युस्मदस्त्वादेशस्त्वमावेकवचनइति सिद्धः तथापि

---

शब्दस्य नपुंसकवृत्तित्वन्तु मद्वादीना पुंयोग्यात्स्त्रियामिव श्रीशब्दस्य परित्य क्तस्य लिङ्गस्य स्वीक्रियते अत एव ह्रस्वत्वस्य सिद्धि । युष्मच्छब्दस्य त्वस म्बोध्यतावच्छेदकत्वोपलक्षितचैत्रत्वाद्यवच्छिन्ने शक्ति । स्व युष्मच्छब्दोच्चार यिता । सबोध्यत्वञ्चोच्चारितशब्दजन्यबोधाश्रयत्वेनेच्छाविषयत्वम् । इच्छापि प्रत्यासत्त्या स्वसम्बन्धिनी विवक्षिता । एवञ्चोच्चारणकर्तृसम्बन्धिनी योच्चारित- वाक्यजन्यशाब्दबोधाश्रयत्वप्रकारिकेच्छा तद्विशेष्यतावच्छेदकत्वोपलक्षितध र्मावच्छिन्ने युष्मच्छब्दस्य शक्ति । अस्मच्छब्दस्य तु स्वोच्चारणकर्तृतावच्छेदक- त्वोपलक्षितधर्मावच्छिन्न शक्ति ।अत्र स्वपदमस्मच्छब्दपरम् ।न चैवन्देव्युवाच।

गर्ज गर्ज क्षणम्मूढ मधु यावत्पिबाम्यहम् ।
मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवता ॥

इतिवाक्यस्य युष्मदस्मच्छब्दाभ्यान्देवीमहिषासुरयोर्बोधानुपपत्ति । देव्या एतद्वाक्योच्चारणकर्तृत्वाभावादिति वाच्यम् ।अस्मिन्वाक्ये देव्युच्चारितत्वस्य म- हिषासुरे च सम्बोध्यत्वस्य प्रमाच्छ्रोतुर्व्यासादिप्रतीतिर्न तु तत्रैतद्वाक्यघटका स्मच्छब्दस्य शक्तिरित्यभ्युपगमात् । यद्वा तादृशानुपूर्वीज्ञानरूपसामान्यलक्षणया देवीवाक्यस्यापि ज्ञाने तस्मिन्देव्युच्चारितत्व मानसज्ञानेन गृह्यते । एवमस्मच्छ ब्दार्थघटकोच्चारणांशे स्वातन्त्र्यविशेषणदानेनाकरणादिस्थले नानुवादकादि- बोध । स्वातन्त्र्यञ्च स्वार्थतात्पर्यकान्यदीयोच्चारणानधीनत्वमिति दिक् ।

* पृथक् पदमिति * । लुप्तषष्ठीकम् । * अत एव * । पृथक् पदत्वादेव । ङेप्रथमयोरित्यस्यैकपदत्वप्रथमयोरितिद्विवचनस्याङ्गस्येनोपपत्तिसम्भवेपि कयो प्रथमयोरितिशङ्काया असङ्गतिस्स्फुटैव । * लिङ्गादिति भाष्यमिति * । तत्र हि ङेप्रथमयोरितिप्राप्तस्य निषेधोऽयम् । नत्वं तु द्वितीयायाञ्चेत्यात्वे पूर्वसवर्णदीर्घे तस्माच्छस इत्येव सिद्धमित्याशङ्कितम् । नकारादेशविधायकत्वे हि न इत्येव वदेदिति तदाशय । युष्मान्ब्राह्मणोरित्यादौ णत्वविधानार्थमिति त्वन्यत् । यद्वा वि- भक्त्योर्ग्रहणमित्यत्र द्वितीयायाञ्चेतिसूत्रं ज्ञापकम् । यदि प्रत्ययोर्ग्रहण स्यात्तदा द्वितीयायाञ्चेत्यस्याभावेप्यात्वं युष्मदस्मदोरित्यनेनानादेशत्वात्सिद्धमेवेति त द्व्यर्थमेव । न च योऽचीत्येतद्बाधनार्थमस्त्विति वाच्यम् । योऽचीतिसूत्रेऽनमोटो रितिकरणेनैतेषु यत्वे प्रतिषिद्धे आत्वस्य भावात् । युष्मानस्मान् इत्यत्रापि शसो नेत्यत्र नादेशेनकारे शेष सुपिचेतिदीर्घत्वे संयोगान्त्यलोपेन सिद्धम् ।

युष्मानतिक्रान्तो ऽतित्वमित्यर्थमत्र विधानम्। न चैव तत्रास्य चारिताार्थ्या-त्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यम्। त्वमावपि प्रवाधन्ते पूर्वविप्रतिषेधत इत्यस्य वक्ष्यमाणत्वात्।

युष्मदस्मदोरनादेशइत्यतो युष्मदस्मदोरिति वर्त्तते। शेषे आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह।आत्वयत्वेत्यादि। स्पष्टञ्चेदं युष्मदस्मद्भ्यां ङस इत्यत्र प्रकृतसूत्रे च भाष्ये। अत एव साम आकमिति ससुट्कनिर्देशः सङ्गच्छते। एवञ्च शेषग्रहणं स्पष्टार्थम्। विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसंभवात्। अन्त्यस्येति। अलोऽन्त्यपरिभाषयेति भावः। त्वाहादयो ऽकारान्ता इति वृत्त्याद्यनुसारेणाह। अतो गुण इति। त्यदादीनाम इति सूत्रभाष्यकैयटाभ्यां हलन्ता एवादेशा इति लभ्यते तदा पररूपस्य प्राप्तिरेव न। यद्यप्युच्चारणार्थानामपीत्सञ्ज्ञालोपाभ्यां निवृत्तिः कार्या तथाप्यतो गुणे इत्यस्यामवर्त्तनेन प्रक्रियालाघवमत्र पक्षे इत्सञ्ज्ञालोपयोस्तु सूत्रएव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौरवम्। त्वाहौ साविति गुरुनिर्देशस्तु श्वेतवहादीनामुपसंख्यानमिति ज्ञापकः। णिजन्तादिकिप युष्मअस्मिति प्रातिपदिकयोरादेशा एव नेति तदाशयो मपर्यन्तस्येति भाष्यसम्मतश्चायमर्थ इत्यनुपदं स्फुटीभविष्यति। अन्तरङ्गत्वादिति। परानिमित्तानपेक्षत्वेन तत्त्वमिति भावः। अलिङ्गे इति। एवञ्च स्त्रियामनयोरवृत्तेर्न टाबिति भावः। इदं साम आकमित्यत्र भाष्ये स्पष्टम्। यद्वेति। इदन्त्यदादीनाम इति सूत्रे भाष्ये स्पष्टम्, सामआकमित्यत्र च। मपर्यन्ताच्छेषस्येति। इदमुपलक्षणं, तेन त्वामित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेपि न क्षतिः। ननु अदन्तत्वे आदेशानां वार्णादाङ्गमिति परिभाषया पररूपा-

---

* अतित्वमित्यर्थमिति *। अत्र युष्मद् एकार्थबोधकत्वाभावेन त्वादेशाप्राप्तिरिति भाव।

* अत एव *। अन्त्यलोपस्वीकारादेव। * निर्देशः सङ्गच्छत इति *। अन्त्यलोपे हि सुट् प्राप्तेरिति शेष।*वृत्त्याद्यनुसारेणेति*। वक्ष्यमाणोऽभिप्राय। तमेवाह। * त्यदादीनामिति *। ननु हलन्तत्वेऽपि त्वाद्यवयवाकारस्योच्चारणार्थकस्येत्सञ्ज्ञालोपाभ्यान्निवृत्तिर्वाच्येति नात्र पक्षे लाघवमत आह। * यद्यप्युच्चारणार्थानामिति *। ननु हलन्तादन्तपक्षयोर्णिजन्तेनैकरूपधाचकत्वमत आह। * णिजन्तादिति *। * न टाबितीति *। स्त्रियामित्यस्य प्रकृतिविशेषणताया फलत्वादिति भाव। * इदम् *। अन्त्यस्य लोप इत्येतत्। * उपलक्षणमिति *। तेन दृष्ट इत्यस्याध्याहारेण सुआर्थ कार्य इति भाव। उपलक्षणत्वे मानाभाव इति चेत्। शेषग्रहणमेवेत्यवधेहि। अन्यथा टिग्रहणमेव कुर्यात्।

त्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः अकारस्य कार्यद्वयेपि स्था-
नित्वेन समानस्थानिकत्वमस्तीति चेन्न । हलन्ता एवादेशा इति कैयटेना-
त्रैवोक्तत्वेनादोषात् । शेषइत्यस्य सामर्थ्याच्चान्यायामप्रवृत्तिरत्रेत्यन्ये । तन्न ।
युष्मभ्यं युष्मत् युष्माकमित्यादौ टाब्निवृत्त्या चारितार्थ्यात् । तस्मादनित्य-
त्वात्प्रवृत्तिरित्येके तदाह । अतो गुणे कृते इति । अत्र वदन्ति । तत्त-
द्भाष्यप्रामाण्याच्छेषग्रहणसमुदायनिर्देशाभ्यामस्य सूत्रस्याद्वयार्थद्वये तात्प-
र्यम् । तच्च लक्ष्यानुरोधाद् व्यवस्थितम्, तेन भ्यमि टिलोपे युष्मभ्यामिति
न । अत एव भ्यसोभ्यमिति सूत्रे यदि भ्यमादेशः शेषेलोपोऽन्त्यलोप इति
एत्वं प्राप्नोति । अथाभ्यमादेशः शेषे लोपाट्टिलोप इत्यन्तस्योदात्तनिवृत्ति-
स्वरः प्राप्नोतीति यथेच्छसि तथास्तु इत्येवोक्तं न तु भ्यमादेशे टिलोपमा-
दाय फलभेद उक्तः । वस्तुतस्तु टिलोपो व्यर्थः । अत एव लिङ्गाभावाट्टि-
लोपवचनानर्थक्यमिति साम आकमित्यत्र भाष्ये उक्तम् । अत्र लिङ्गाभा-
वादित्युपलक्षणम् । शीषीलिङ्गुणवृद्धिविधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्र
तिषेधेनेति नेतराच्छन्दसीति सूत्रस्थभाष्यवार्त्तिकबलेन लिङ्गसत्त्वेपि सन्नि-
पातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वम् । अत एव सन्निपातपरि-
भाषया युष्मदीत्यत्र टाबभावः कृन्मेजन्तसूत्रे भाष्ये उक्तः । शेषग्रहणन्तु
भाष्ये प्रत्याख्यातमेव । त्यदादीनाम इति सूत्रस्थं टिलोपटाबभावार्थं इति
तु वार्त्तिकैकदेशिवचनमिति न दोषः । एतच्च भाष्यप्रदीपोद्द्योते निरूपि-
तम् । अभ्यम्सूत्रे यथेच्छसि तथास्त्विति प्रौढोक्त्या भ्यमिति निर्देशस्य

---

आदेशविधौ यस्योपयोगस्तद्भिन्नभाग एव शेषपदार्थः । ननु यत्र न मपर्यन्त-
स्यादेशस्तत्र का गतिरिति चेत् । स्थान्यादेशभावविधायकोद्देश्यतावच्छेदिका या आ-
नुपूर्वी तदवच्छिन्नभिन्नत्वस्य विवक्षितत्वात् । वार्णादाङ्गमिति परिभाषाप्रवृत्तिमु-
पपादयति । * अवारस्येति * । परोक्तं खण्डयति । शेष इत्यस्येति । * तन्न
वृत्तिरिति * । वार्णादाङ्गमिति न्यायाप्रवृत्तिरित्यर्थः । अन्यथा टिलोपान्त्यलोप-
योरन्यतरपक्षस्यैवाश्रयणे युष्मभ्यमित्यादौ टिलोपपक्षे हलन्तत्वमेव स्यादित्यापत्ति-
रत आह । * अत्र वदन्तीति * । * उदात्तनिवृत्तिस्वर इति * । मद्विपप्रत्यया-
न्त्यस्यानुदात्तत्वाभावात् । स्वसिद्धान्तमाह । * वस्तुतस्त्विति * । ननु लिङ्गाभा-
वादित्युपपन्नं लिङ्गयोगस्य सत्त्वादत आह । * अत्र लिङ्गाभावादिति * । ननु स्व-
माप्रत्ययनादिविधेरित्यनेन टापि कर्तव्ये यथा सन्निपातपरिभाषया प्रवृत्तौ भाष्य-
विशिष्य साधकं तथा न प्रकृते साधकमत आह । * अत एवेति * । टा-
पि कर्तव्येऽपि सन्निपातपरिभाषया प्रवृत्तिरित्यभिप्रायेणेत्यर्थः । न-
न्वेवं भ्यसोभ्यमिति सूत्रस्थपक्षद्वयाभ्युपगमसूचकभाष्यविरोध इत्यत आह ।

प्रौढिवादत्व भगवतैव सूचित यथेच्छसि तथास्तु तत्र दोषोद्धारो मया सुकर इति तत्तात्पर्यात् । अभ्यमित्येव तु च्छेदो न्याय्यः । अत एव युष्मदस्मदोरनादेशइति सूत्रे न चादेशो हलादिरस्तीति भाष्योक्तिः सङ्गच्छत-इति ॥ परमत्वमिति ॥ आङ्गत्वात्तदन्तविधिरिति भावः । गौणेऽप्रवृत्तौ बीजाभावादाहातित्वमिति ।

युवावौ ॥ द्विवचनशब्दोत्र योगिको व्याख्यानात् । द्वयोर्वचन बोधन तत्र समर्थयोर्युष्मदस्मदोरित्यर्थो भाष्यप्रामाण्याच्च तद्गृह्यमाणयुष्मदस्मदोरेव विशेषण न तदन्तस्याङ्गाधिकाराद्धि तदन्तग्रहणमित्याशयेनाह । द्वयोरुक्तानिति । एतत्फलङ्गौणोदाहरणेषु मूलएव स्फुटम् ।

मपर्यन्तस्य किमिति । अधिकारसूत्रे किमर्थमिति प्रश्नः । ननु समुदायादेशत्वेप्योकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र तु सुबन्तस्य टेः प्रागिति व्यवस्थाया युष्मदस्मद्विषये त्वयकेत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद्युवामित्येतत्सिद्धमुत्तरमकजिति युवकामित्यत्र न दोषः, अत आह । त्वयेति । नन्वत्राप्यच्ये इति न्यासेनैकारादेशे च सिद्धेराह । युवकाभ्यामिति । हलन्ता आदेशा इति पक्षे तु त्वयेत्पादेरसिद्धिः, एव-

---

* अभ्यस्तून इति * । न्याय्य इत्येतदेवोपपादयति । * अत एवेति * । अभ्यमितिच्छेदादेव ।

* व्याख्यानादिति * । वचनशब्दोपादानमूलक व्याख्यानादित्यर्थ । अन्यथा द्वित्वे इत्येव वदेत् । नन्वेवमपि द्विवचने इत्यस्य ससम्बन्धिकतया कस्य विशेषणमित्यत आह । * तत्र * । समर्थयोरित्यर्थ । * गृह्यमाणयुष्मदस्मदोरेवेति * ।

ननु तथाप्यङ्गाधिकारपठितेषु अङ्गस्येत्यस्य यथाऽधिकारवशाल्लाभस्तथा युष्मदस्मदोरित्यस्याप्यनुवृत्त्यैव लाभ इत्यनयोः को विशेष इति चेत् । अवान्तरवाक्यार्थबोधपूर्वको महावाक्यार्थबोध इति हि सुप्रसिद्धम् । प्रकृते च युष्मदस्मदोरित्यारभ्यावान्तरवाक्यार्थबोधो युष्मदस्मदोरित्येतत्पदार्थोपस्थितिजन्य. फलम इति युवावावित्येतत्सूत्रघटकपदाभ्याभियताकाङ्क्षया युष्मदस्मदोरित्येतच्छीघ्रोपस्थितिकतयावाऽपेक्ष्यते । अङ्गस्येत्यस्य तु पश्चादपेक्षेत्याभिप्रायेण गृह्यमाणयुष्मदस्मदोरित्युक्तमिति गृहाण । यत्पदार्थं विनाऽवान्तरवाक्यार्थबोधो निराकाङ्क्षो न भवति तस्मिन्पदार्थे गृह्यमाणत्वव्यवहार ,। अधिकारस्य मपर्यन्तस्येत्यस्याभावेऽपि युवकामावकामित्यस्य सिद्धिरिति शङ्कते नन्विति । * त्वयकेत्यादिसिद्धय इति * । अनुपदोक्तव्यवस्थाया अभावे,त्वयकेत्यादिप्रकृते स्यादिति भावः । मपर्यन्तस्येत्यस्याभावे समुदायस्य त्वमादेशोऽपि, अच्यइति न्यासेनाकारस्यैकारादेशे त्वया मयेत्यस्य सिद्धिरित्याह । * नन्वत्रेति* । *यु-

मादेशस्य सर्वादेशत्वञ्च न स्यादिति बोध्यम् । नन्वेवमपि मान्तस्येत्येवोच्यतां किं परिग्रहणेनेति चेन्न । युष्मयत्यादेः क्विपि सुप्यादेशाभावार्थन्त्वस्सत्त्वात्पर्यन्तशब्देन मान्तापेक्षया शेषस्य लाभात् । कटिपर्यन्तं वास इत्युक्तेऽग्रे किञ्चिदस्तीति नियमेन प्रतीतेः । एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टन्तत्रैव युष्मदस्मदोरादेशाः । अत एव भाष्ये ऽवधिद्योतनार्थं परिग्रहणं कर्त्तव्यं, मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः क्व च मान्ते युष्मयतेरस्मयतेश्चाप्रत्यये इति उक्तम् । अवधिद्योतनार्थमित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः । पर्यन्तशब्दस्य लोके तथैव प्रयोगात् । अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च । तत्रैवेत्यस्यानिष्ट एवेत्यर्थः । परिग्रहणाभावे तु यतः पूर्वोस्ति परश्च नास्ति सोऽन्त्य इति भाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायात्रैव स्यात् । णौ लुप्तमित्यस्य प्रवृत्तिश्च स्यात् । अभिव्यक्तपदार्था इति न्यायश्च पदकार्यविषय इति तदाशयः । अत एव भाष्ये प्रयोगदर्शनं न कृतम् । यत्तु परिग्रहणाभावे यान्ते यत्र ते तत्रैव स्यात् सामानाधिकरण्येनान्वयस्यौचित्यात्सति तु त-

---

यकाभ्यामितीति * । अत्र प्रकारादिविभक्तिपरत्वेन पूर्वमेवाकर्षि मपर्यन्तस्येत्यस्याभावे समुदायस्य युवावादेशोऽकच श्रवणापत्तिरिति भावः । अकचि कृते तन्मध्यपतितन्यायेन स्थानिपुरुषीय स्थानिवद्भाव इव समुदायस्यादेशापत्तिः । एतादृशे विषयेऽकजघटिते निर्दिश्यमानभिन्नत्वयुक्तसम्भवेन निर्दिश्यमानपरिभाषया युवकाभ्यामित्यस्यासिद्धिरिति नागाङ्कुरीयम् । * स्येत्यादेरसिद्धिरिति * । अधिकाराभावे समुदायस्य त्वादेशोऽव्यवहितन्यासेऽपि यकारस्यान्त्यस्यैकारादेशे यश्रवणापत्तिरिति भावः । न च स्येगिति न्यासः कार्यस्तेन हलन्तादेशोऽप्येगागमविधानेनेष्टसिद्धिर्भविष्यतीति चेन्न । अतियुष्मया अत्यस्मयेत्यस्य वक्ष्यमाणस्य रूपस्यासिद्ध्यापत्तेः । * न स्यादिति * । एवं सति प्रये इत्यस्यासिद्धिरेव प्रति स्यादिति भावः । * तत्सत्त्वादिति * । पर्यन्तशब्दसत्त्वादित्यर्थः । पर्यन्तशब्दसत्त्वे यथा न दोषस्तदुपपादयति । *पर्यन्तशब्देनेति* । * अत एव * । एतादृशस्थले आदेशाभावस्येष्टत्वादेव । * अत्रैव स्यादिति * युष्मयत्यादिविषय एव स्यादित्यर्थः । ननु णिलोपस्याच परस्मिन्निति स्थानिवद्भावेन नायन्दोष इत्यत आह । * णौ लुप्तमिति * । * प्रवृत्तिश्च स्यादिति * । सुधोदाहरणसिद्ध्य इत्यस्यादि । नन्वभिव्यक्तेतिन्यायेन नायन्दोष इत्यत आह । * अभिव्यक्तेति * । * अत एव * । तत्रादेशाभावस्येष्टत्वादेव । के चित्तु णिजन्तप्रकृतिकक्विबन्तेऽप्यादेश इत्याभिप्रायेण व्याचक्षते तन्मतमुपन्यस्यति । *यत्त्विति * । * तत्रैव स्यादिति * । न चैवन्मतेऽभिव्यक्तेतिन्यायस्य प्रातिपदिक-

स्मिन् सामर्थ्याद्युष्मदस्मदोर्या मपर्यन्ताविति व्याख्यानात् दान्ते व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि च सिद्ध्यति। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति तु प्रत्ययविधिविषयमिति तत्र परिग्रहणस्य वैयधिकरण्यान्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात्। तत्र हि सामानाधिकरण्यासम्भवाद्वैयधिकरण्यान्वय इत्यन्यत्। किं चात्र व्याख्याने ऽवधिद्योतनार्थमिति भाष्याक्षरास्वारस्यम्। मपर्यन्तस्येति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक्। अङ्गकार्ये इति। अङ्गाधिकारस्थे इत्यर्थः। मकारान्तरमिति। शसोनेत्यनेन सहितया पाठे इति शेषः॥ परे तु शेषावि-

---

कार्येऽपि प्रवृत्ते कथमेतादिति वाच्यम्। सूत्रारम्भसामर्थ्येन तन्न्यायाप्रवृत्ते। * सति तु तस्मिन्निति *। परिशब्दोपादानसामर्थ्यादित्यर्थः। *दान्त इति *। तत्र मपर्यन्तशब्दार्थस्य मुख्यस्य सम्भवात्। * क्विपि च सिध्यतीति *। न च कटिपर्यन्तमितिप्रागुपपादितार्थस्य जागरूकत्वात्कथमेतादिति वाच्यम्। मस्तकप्रभृतिपादाङ्गुष्ठपर्यन्तपटेनाच्छादितेयमित्यादावङ्गुष्ठात्परस्य भागस्याभावेऽपि तादृशव्यवहारदर्शनेन निरुक्तनियमाभाव इत्याशय। * मणिमन्त्रादिन्यायेनेति *। यद्यग्रिमभागाभावेऽपि पर्यन्तशब्दप्रयोगस्तथा परिशब्दसत्त्वेऽपि सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सामानाधिकरण्येनान्वयस्यात्तत्प्रतिबन्धाय मणिमन्त्रन्यायावलम्बनमेव तै कर्तव्यमिति भाव। किञ्च य कटिपर्यन्त वास इत्युक्तेऽर्थं प्रतीयते स एव पादाङ्गुष्ठपर्यन्त वास इत्यत्रार्थो न प्रतीयतेऽपि तु ततो विलक्षण इति पर्यन्तशब्दस्य स्वावधिकपरभावसत्ताविशिष्टावधिवाचकत्व वक्तव्यम्। अङ्गुष्ठपर्यन्तमित्यत्र त्वङ्गुष्ठान्तमित्यतो विलक्षणार्थानवगते पर्यन्तशब्दस्तत्र लाक्षणिको वाच्य इति मणिमन्त्रन्याय एव पर्यवसानम्। * सामानाधिकरण्यासम्भवादिति *। वाच्यार्थेन सामानाधिकरण्यासम्भवादित्यर्थः। तादृशव्याख्यानकर्तृमते भाष्यविसवाद-मप्याह। *किञ्चेति*। *तद्गुणसंविज्ञान इति*। अतद्गुणसंविज्ञानस्य स्वीकारे मकारस्परित्यज्येवादेश स्यादिति भाव। अङ्गकार्य पुनर्नाङ्गकार्यमित्यत्राङ्गस्य कार्यमिति न षष्ठीतत्पुरुष। अतिरिच्छत्रमित्यत्र ह्रस्वत्वे कृते तुगनापत्ते। किन्तु परिभाषायामङ्गशब्दोऽङ्गाधिकारपर। सप्तम्यन्तेन सुप्सुपेतिसमासस्तथा च यत्फलितन्तदाह। * अङ्गाधिकारस्थ इति *। अत्र च ज्ञापकम्स्यादादीयस्य इत्यादिविधानम् यथा यहोर्लोप इत्यतो लोपग्रहणानुवृत्त्या आर्द्ध परस्येत्यादेर्लोपे ऽङ्गत्सार्वधातुकेति दीर्घे ज्यायानित्यस्य सिद्धौ तद्यर्थम्। एषा च परिभाषा इयोरेकस्येतिनिर्देशादनित्येति स्पष्टमन्यत्र। ननु मकारान्तरग्रहणे तच्छ्रवणापत्ति। न च संयोगान्तलोपप्राप्ति। मकाररूपविशेषणबोधकतया तस्य पदान्त

भक्तिभूतामादियुष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्व नेति सन्निपातपरिभाषयैव श्याद्यभावः ॥ सुडस्त्वाकमन्त्रयवत्त्वाच्च तेन सन्निपातविघात इति सकारानिर्देशः साम अत एव कन्मेजन्तसूत्रे ह्रस्वत्वनुग्विधेर्ग्रामणिकुलमिति सन्निपातपरिभाषाप्रयोजनव्याख्यावसरे यदा ह्रस्वमात्रस्य तुगागमो न तदन्तस्य तदिदं प्रयोजनमिति व्याख्यातं कैयटेन । मूलोक्तं तु न युक्तं भाष्यानुक्तेः ॥ अत एव नेतराच्छन्दसीति सूत्रे नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेनेति वार्तिकं व्याख्याय तेषु पुनः प्रसङ्गाच्छिशीलुग्विषयः कस्मान्न भवन्ति सकृद्गतिन्यायादित्युक्तम् । त्वद्रीत्या पुनः प्रसङ्गस्यैवाभावेन तदसङ्गतिः स्पष्टैव । अत एव च तत्र युष्मदादेर्विभक्त्यादेशस्य यूयं ब्राह्मणा इत्याद्यवकाशप्रदर्शनं कृतम् । अन्यथा तत्रापि जसः शीभाव्स्या तदसङ्गतिः । यूयमित्यादिप्रयोगकरणेन तत्र श्यादिशङ्कासमाधानाकरणेन च भाष्यकृतात्र सन्निपातपरिभाषाविषयत्व सूचितम् । अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यम् । तस्या अङ्गसम्बन्धिकार्यविषयत्वात् सूत्रभाष्यस्वरसोऽप्येवमेव । वस्तुतो नैषा लक्ष्यसंस्कारिका । द्वयोरित्यादिनिर्देशासङ्गतेः । अत एव भाष्ये किमेतस्या ज्ञापने प्रयोजनमिति प्रश्ने पिबेर्गुणप्रतिषेधो वक्तव्य इत्येव प्रयोजनमुक्तं न तु प्रयोगसिद्धिः प्रयोजनमुक्तमित्याहुः ।

---

त्वेन तदप्रासेरत्र आह । * शसो नेत्यननेति * । अत्र मानन्तु त्यदादीनाम इतिसूत्रस्थभाष्यमेव । तत्र "टिलोपष्टावभावार्थः शेषे लोप इति स्मृत । लुप्त शिष्टे हि तन्याहु कार्यसिद्धिम्मनीषिण" इत्यत्र टाबभावस्यैव टिलोपफलत्वमुक्तं न त्यादेशाभावस्य । * लुप्तशिष्ट इति * । लुप्ते सति य शिष्टस्तस्मिन्सति कार्यस्य टाबभावस्य सिद्धिरित्यर्थ । तत्र सन्निपातपरिभाषया टाबभावोपपादने तु प्रवृत्तेऽपि सन्निपातपरिभाषयैव टाबभावसम्भव इत्याशयेनाह । *परे त्विति * । सन्निपातपरिभाषाप्रवृत्तिस्वीकारे ससुट्कनिर्देशस्य वैयर्थ्यस्परिहार इति । * सुट इति * । * अत एव * । आगमस्यागमिसम्बन्धिसन्निपातविघातकत्वाभावादेव । मकारप्रश्लेषे भाष्यान्तरविरोधमप्याह । * अत एवेत्यादिना * । * अत एव * । मकारप्रश्लेषाभावादेव । * तदसङ्गति * । भाष्यासङ्गति । * अत एव * । सन्निपातपरिभाषया श्यादेशप्रतिबन्धादेव । * अङ्गसम्बन्धिकार्यविषयत्वादिति * । ज्ञापकसाजात्यादङ्गाधिकारीयकार्ये कृते पुनरङ्गाधिकारीयाङ्गसम्बन्धिकार्यो तत्प्रागविधिरिति तस्यार्थ इति भाव । * नैषेति * । अङ्गवृत्तपरिभाषेत्यर्थ । * अत एव * । तस्या अनन्यथासिद्धप्रयोजनसाधकत्वाभावादेव । न च परिभाषाभावे पिबतीत्यत्र गुण स्यादिति शङ्क्यं

त्वमाविति। अत्रापि विभक्ताविति संबध्यते। अन्यथा प्रत्ययोत्तरपदयोश्चेति व्यर्थं स्यात्। तत्फलन्तु त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहौ नादेश इति। अत्रैकवचनशब्दो यौगिको व्याख्यानात्। तदाहैकस्येति। अविभक्तिकमिति। व्याख्यानात्।

यो ऽचि॥ अनादेशइति किम्। त्वत् मत्। पञ्चम्या अदित्यदादेशः। आत्वविधायके च भ्यम् व्यावर्त्यः। वस्तुत उत्तरार्थमेव तदभ्यमित्येव च्छेदादिति भाष्ये स्पष्टम्।

हलादाविति। पारिशेष्यलभ्य हलीत्यनुवृत्तौ तु योचीत्यज्ग्रहणं मास्तु।

भ्यसोभ्य॥ अत्र यद्वक्तव्यं तदुक्तम्। पक्षद्वयेपीति। तत्राभ्यलोपे द्वयोरकारयोः पररूपे एकादेश उदात्तेनेत्यभ्यम आद्याकार उदात्तः। टिलोपेपि यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेनानुदात्तस्य च यत्रेत्यनेन स उदात्त एवेति न विशेष इति भावः।

नन्वाकमः पूर्वं लोपाभावेनादन्तत्वाभावात्सुडागमाप्रसक्तेःससुट्कनिर्देशो व्यर्थः सूत्रासङ्गतिश्चेत्यत आह। भाविन इति। आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः। अय भावः। साम: प्रसङ्गे आकमित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते। स्थान्यादेशभावविषये सर्वत्रैवमेव यथार्द्धधातुकाविषयेऽस्तेरप्रयोगो भूप्रयोगश्चास्तेर्भूरित्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः। शब्दानित्यत्वप्रसङ्गात्। किं तु प्रसक्तबुद्धेरेव निवृत्तिः, सकारबुद्धिप्रसक्तेश्च प्रकृते साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणं सकारोच्चारणसामर्थ्यादिति प्रथमप्रवृत्तस्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम्। तन्नि-

यम्। पित्रादेशस्यादन्ततया लघूपधत्वाभावेन गुणाप्राप्ते।

* व्यर्थं स्यादिति *। तस्यापि सूत्रस्यैकार्थत्व एव प्रवृत्ते। * तत्फलमिति *। विभक्तावित्येतत्सम्बन्धफलमित्यर्थः। प्रत्ययइतिसूत्रस्य तु न प्राप्तिरुत्तरपदपरत्वाभावात्। * व्याख्यानादिति *। अत्र भाष्ये ङेप्रथमयोरित्यिप्रसक्त्याम प्रतिषेधोऽयमित्याशङ्कितन्तद्दर्शनमूलकादित्यर्थः।

* परिशेषलभ्यमिति *। अस्याजादौ यत्वेन बाधादित्यादिः। * हलीत्यनुवृत्ताविति *। आत्वविधायक इत्यादि।

* तदुक्तमिति *। अभ्यमित्येव तु छेदो न्याय्य इत्यादिना।

ससुट्कनिर्देशफलमुपदर्शयितुमाशङ्कते। *नन्वाकम इति*। अत्र ससुट्कनिर्देशसामर्थ्यादाकमि कृतेऽपि सुट्नेति केचिद्वदन्ति तद्युक्तमित्याशयेनाह। * अयम्भाव इति। * एवमेव *। आदेशस्य प्रयोग स्थानिनोऽप्रयोग इतिरीत्यैव। यद्धर्मावच्छिन्नविषयकबुद्धिप्रसङ्गे आदेशबुद्धि कर्त्तव्यत्वेन शास्त्रेणबोध्यते

प्रवृत्तिश्चायोगाभावात् । अत्र साम: स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वम् उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः सैवाप्रसक्तिः ससुट्कनिर्देशेन बोध्यते इति बोध्यम् । अत एवातित्वाकमित्यादौ प्रत्ययोत्तरपदयोरिति भाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणादेशः । आदेशस्याम्त्वाभावाच्च न नुट् । न च यत्र साम्भावी तत्रैवाद्य सामो भावित्वस्य सर्वथा दुरुपपादत्वात्सामत्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक् । ह्रस्वादिरकम्तु न कृतः । अन्त्यलोपे प्यकारस्यैत्वानिष्टत्या चारितार्थ्येन पररूपापत्तौ युष्माकमित्यसिद्ध्यापत्तेः । द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फल दर्शयति । द्व्येकत्वेति । द्वित्वैकत्वविशिष्टवाचिनी इत्यर्थः । समासार्थो मुख्यविशेष्यम् । अन्यसंख्यः । युष्मदाद्यर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थ । स्त इति । अर्थपरत्वाश्रयणादिति भावः । एते इति कर्तृपदम् । युवावाविति कर्मपदम् । एवन्त्वमावित्यपि । पूर्वविप्रतिषेधत्त इति । विप्रतिषेधे पूर्वमिति सुप्सुपेति समासः । अत एव प्रत्ययोत्तरपदयोश्चेति सूत्रभाष्ये त्वमाविति सूत्रे शेष इत्यनुवर्त्य सुजस्ङेङस्व्यतिरिक्तविभक्तावेताविति व्याख्यातम् । त्वमौ न चेति । अर्थपरत्वाश्रयणादेवेति भावः ॥ इति विग्रहे इति । एव यादृग्रूपाणि तानि वक्ष्यन्त इति शेष. । अतित्वाकमिति । अत्र यथाकम्नुडभावौ तथोक्तम् ।

---

कृते आदेशे तस्मिन् स्थानिवद्भावेन तद्धर्मावच्छिन्नबुद्धिरत्र भवतीति प्रदर्शने आकमादेशे कृते साम्त्वबुद्धिरेव भवति न त्वाम्त्वावच्छिन्ना बुद्धिरित्युद्देश्यतावच्छेदकावच्छिन्नाभावाच्च नुट् प्रसक्तिरिति भाव । न स्थानिवद्भावप्रसक्ति । न स्थानिवद्भावेनाम्त्वप्रसक्ति । ननु यत्राकमादेशोत्तर स्थानिवद्भावे नाम्त्वबुद्ध्या नुट् प्राप्तिस्तत्राकमि कृते ससुट्कनिर्देशसामर्थ्यात्सुडेव न भवतात्येव किम स्यादत आह । * अत एवेति * । साम्त्वावच्छिन्नबुद्धौ वादेशप्रवृत्तिरर्थात्सिद्धेव । सा बुद्धिश्च सर्वथाकमादेशात्पूर्वमाहार्यैव वाच्या अम् च नुडभावश्चेति द्वन्द्व । प्राचीनोक्त खण्डयति । * न च यत्रेति * । * भाष्यविरुद्धेति * । अतित्वाकमिति प्रयोगासाधनेन भाष्योक्तरूपासाधकतया भाष्यविरुद्धेत्यर्थ । * एत्वानिष्टत्येति * । अकारोच्चारणाभावे बहुवचने झल्येदित्यनेन प्राप्तस्यैत्वस्य निवृत्त्येत्यर्थ । नन्वन यो द्वेकत्वद्वित्वैकत्ववाचकत्वमनुपपन्नमिति द्व्येकत्वाविनीत्यनुपपन्नमत आह । * द्वित्वैकत्वविशिष्टेत्यर्थ * । मुख्यविशेष्य । अप्रकारतानात्मकविशेष्यतावान् । * त्वमावित्यपीति * । कर्मपदमिति शेष । * अतएव * । पूर्वविप्रतिषेधाश्रयणादेव । * शेष इत्यनुवर्त्येति * । एतेन पूर्वविप्रतिषेधाश्रयणापेक्षया शेषइत्यनुव-

पदस्य॥अपदान्तस्य मूर्द्धन्य इत्यतः प्रागयमधिकारः, तत्फलन्तु राजानावित्यादौ नलोपाभावः।इयं क्वचित्स्थानषष्ठी क्वचिदवयवषष्ठी, होढ इत्यादावाद्या, मादुपधाया इत्यादावन्त्या। तेन वृक्षवन्तावित्यादौ वत्वसिद्धिः। अन्यथा मतन्तपदत्वाभावान्न स्यात्। अत एव नलोप इति सूत्रे ऽन्तग्रहणं चरितार्थमिति स्पष्टं भाष्ये। त्रेः सङ्ख्याया इत्यत्र नलोपाभावस्तु झलाञ्जशू झशीत्यत्र जश्त्वाभाववद् बोध्यः।

पदा॥ कुत्सने च सुपीत्यतः प्रागयमधिकारः।
अनुदात्तं सर्वमित्यादिपदत्रयमापादसमाप्तेः। सर्वग्रहणन्तु तिङ्ङतिङ इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेति स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम्। आदे' परस्यालोन्त्यस्येत्यनयोस्तु न प्राप्तिः। पदस्येत्यस्यानुदात्तन्तिङित्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थानषष्ठ्यभावात् तत्र पादशब्देन ऋक्पादः श्लोकपादश्चाविशेषात् गृह्यते अपदादिशब्देन पादान्तपादमध्यस्थवत् छन्दोहीनवाक्यस्थस्यापि ग्रहणद्ग्रामे कम्बलो मे स्वमिति भाष्यात्।

षष्ठ्यादीति। सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादिदं लभ्यत इत्य-

---

र्थे व्याख्यानमेव युक्तम्। लघु चेति सूचितम्।

*अवयवेति*। अवयवषष्ठीत्यर्थ। तेन पदावयवस्य मवणावर्णात्परस्येत्यर्थे सम्पद्यते। तत्फलमाह। *वृक्षवन्ताविति*। *अत एव*। अवयवषष्ठीत्व स्वीकारादेव। अन्तपदाभावे प्रातिपदिकाभिन्नपदावयवस्येत्यर्थे नमतमित्यत्र न लोपापत्ति। यदि तु पदस्येति विशेष्य प्रातिपदिकेति नेति च तद्विशेषणमिति प्रातिपदिकाभिन्नान्तं यत्पदमिति व्याख्यायते तदा सौत्रमन्तग्रहणं स्पष्टार्थम्। ननु मुख्यस्य प्रातिपदिकान्तस्य लाभार्थमन्तग्रहणमस्तु व्यपदेशिवद्भावेन पदप्रातिपदिकान्त्यन्तस्य मा भूत् तेन त्रेः सङ्ख्याया इत्यत्र तदभावसिद्धिरत आह। *त्रेः सङ्ख्याया इत्यत्रेति*। *कुत्सने च सुपीति*। सगतिरपि तिङित्यनुवर्त्तते। कुत्सने चागोत्रादौ सुबन्ते परे सगतिरपि तिङन्तमनुदात्तमित्यर्थ। पचति पूति प्रपचति पूति।

*अत प्रागिति*। अत्रापि पदादित्यधिकारश्चेदेवदत्त पचति पूति इत्यत्रैव निघात स्यान्न तु पचति पूतीत्यादावित्यत प्रागित्युक्तम्।

*तल्लाभेति*।सर्वानुदात्तत्वलाभेत्यर्थ। नन्वादे परस्येत्यादिनिवृत्त्यर्थमेवे सर्वग्रहणङ्कुतो नेत्यत आह। *आदेरिति*। *स्थानषष्ठ्यभावादिति*। स्थानषष्ठीनिर्देशे ह्यलोन्त्यपरिभाषायास्तदपवादभूताया आदे' परस्येति प्रवृत्ति। *छन्दोहीनवाक्यस्थस्यापीति*। अत्र मानमाह। *ग्रामे कम्बल इति*।

ननु तौ चानुदात्तावित्यनेन विहितादेशानुवादेनानुदात्तत्वविधानमिति प्र

न्यत्र विस्तरः ॥ तौ चानुदात्ताविति। अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः। उक्तविषयेोरिति। पदात्परयोरपादादौ स्थितयोरित्यर्थः। द्वितीयायान्त्वामयोरपवादत्वादाह। पष्ठीचतुर्थ्येकेति ॥ विभक्तिक्रमनल्पष्टद्वितीयादिक्रमेणोदाहरति। श्रीश इति। दद्यादित्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम्। सवेघोस्मानिति। नन्वत्र सन्ध्यभावे नवाक्षरत्वेनानुष्टुप्पादत्वानापत्तिः सन्धौ तु उभयत आश्रयणे ऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेन्न। सवेघो इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात्। स्मानित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात्। सन्धिशास्त्रासिद्धत्वादादेशात्पूर्वमेव। आदेशे सति नः कृष्णः सर्वदा ऽवत्विति पादादित्वापत्त्योपजीव्यविरोधाभादेश इत्यन्ये। उभयत आश्रयणेपि तस्य स्वीकार इति इण्धातौ निरूपयिष्याम इति परे। ननूक्तरीत्या पष्ठ्याद्यन्तानामेवादेशा भविष्यन्ति किं स्यग्रहणेनात आह। स्येति। अहानौ स्यशब्द इति भावः। युष्मत्पुत्र इति। युवयोर्युष्माकं वा पुत्र इत्यर्थः। यद्यपि वृत्तौ सङ्ख्याया विशेषानवगम इति भाष्ये स्पष्टं तथापि संम्बोद्ध्यत्वेनैवानेकत्वावगतिर्न तु द्वित्वादेर्भानं नाप्येकत्वस्येति त्वमौ न कृतौ, विग्रहे तु सङ्ख्याविशेषभानात् द्विवचनादि भवत्येव। तस्य लुक्यपि प्रत्ययलक्षणेन

---

तीयते तद्यायुक्तम् याक्यमेवापत्तेरत आह। * गुणविशिष्टयोरिति *। अनुदात्ताभिन्नौ वाम्नावौ भवत इत्यादिक्रमेणार्थात्। षष्ट्या युष्मदस्मदोरितिसूत्रे प्रथमनुपादानेपि प्रसिद्धक्रममादायोदाहरणम्। *श्रीश इत्यादि*। *उभयत आश्रयण इति*। पदात्परत्वस्य सिउअर्थकपूर्वान्तवद्भावस्य षष्ठ्यादिविशिष्टस्यसिद्धपर्थ्परादिवद्भावस्य चाश्रयणादिति भाव। * आदेशे सतीति *। सन्धे पूर्वंनवाक्षरत्वेनापादादित्वात्। पूर्वपक्षिणं उक्तिं खण्डयति। * उभयत आश्रयणेऽपीति*। *उक्तरीत्येति *। सर्वस्य पदस्येत्यधिकारात् श्रूयमाणविभक्तिकस्यैवस्य लाभो यथा तदाह। * अहानौ स्यशब्दे इति *। * त्वमयोरप्राप्तावाह। * युवयोरिति *। वृत्तावित्युक्तन्तस्य फलमाह। * विग्रहे त्विति *। सङ्ख्याविशेषभानादिति *। तत्र बहुत्वव्याप्यतावच्छेदकधर्मावच्छिन्नवाचकतत्तच्छब्दसत्त्वादिति शेष। अयम्भाव। उच्चारित शब्द प्रत्यायक इतिरीत्या यत्र विशेषधर्मावच्छिन्नवाचकविभक्तिश्रवणन्तत्रतत्तद्धर्मावच्छिन्नविषयक शाब्दबोधो भवति। यथा सरसिजमित्यादौ। यदि तु तादृशेषु रूढिस्वीकारादेतद्घटकसर पदादिशब्दस्यार्थभानञ्चेत्तदा तत्तद्विभक्त्यर्थसङ्ख्याभानेऽपीष्टापत्तिः। पदान्तरार्थस्याभानञ्चेदनुभवसिद्ध तदा विभक्त्यर्थस्याप्यभान भविष्यतीति म

द्विवचनाद्यन्तत्वम् । अत एव वध्वोरगारं वध्वगारमिति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम् । वचनद्वयाविषयसूत्रप्रत्युदाहरणलाभायेति त्वत्पुत्र इति न प्रत्युदाहृतम् । समानवाक्ये इति । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थके समानवाक्ये इति प्रकृत्यविधेया इत्यर्थः । निघातो नामानुदात्तः । एकतिङिति । बहुव्रीहिरेकतिङन्तघटितमित्यर्थः । तेन पचतीत्येतन्मात्रस्य न वाक्यत्वम्, इदं स्वशास्त्रकार्योपयोग्येकवाक्यत्वलक्षणम्, तेन पश्य मृगो धावतीत्यादौ लौकिकैकवाक्यत्ववत्यपि नाव्याप्तिः । समर्थसूत्रे भाष्ये स्पष्टमेतत् । अत एव तिङ्ङतिङः इत्यत्रैतदाश्रित्यातिङ इति प्रत्याख्यातं भाष्ये । लौकिकवाक्यत्वञ्च सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्वितेत्यमरेणोक्तं । वाशब्दश्चेदर्थे कारकान्विता क्रिया चेद्बोध्येति शेषः । तेन निरर्थकशब्दसमुदायव्याप्तिः । सुप् च तिङन्तञ्च सुप्तिङन्तं सुब्विशिष्टन्तिङन्तं

---

मन्यते तदा स्तोकान्मुक्त इत्यादौ तस्य भानम्बोध्यम् । यत्र तु न विभक्तिश्रवणन्तत्र न सङ्ख्याविशेषभानम् । किन्त्वभेदैकत्वसङ्ख्याया भानम् । अजहत्स्वार्था वृत्तिरितिपक्षेऽपि पूर्वपदस्य सङ्ख्याविशेषबोधकत्वे यत्र गमकसद्भावस्तत्र तस्या अपि प्रतीतिः । यथा द्विपुत्रो मौद्गिको मासजातस्तावकीन इत्यादौ । प्रथमे द्विशब्द एव बोधकः द्वितीये एकेन मुद्गेन क्रयणाभावाद्बहुत्वावगतिर्न तु तद्वाच्य सङ्ख्याया । तृतीये कालविशेषबोधनाय मासपदप्रयोगादस्यैव सङ्ख्याविशेषभानम् । चतुर्थे तवकादेशकरणादेकत्वागतिः युष्मत्पुत्र इत्यत्र तु तादृशप्रमकाभावान्न द्वित्वस्य नाप्येकत्वस्य भानमिति । न च विग्रहवाक्यजन्यशाब्दबोधे यदि सङ्ख्याविशेषभानन्तादृशविग्रहसम्बन्धिवृत्तौ चदत्त भानन्तदा वृत्तिविग्रहयोः समानार्थत्वभङ्ग इति वाच्यम् । विग्रहवाक्यजन्यशाब्दबोधीया या विभक्त्यर्थसङ्ख्यावृत्तिविषयताभिन्ना प्रकारता तदवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपिता या तादृशविशेष्यतावच्छेदकावच्छिन्नविशेष्यता तच्छालि शाब्दबोधजनकत्वमेव वृत्तिविग्रहयोः समानार्थत्वमिति स्वीकारादिति ॥ * अत एव * । विग्रहवाक्यजन्यशाब्दबोधे सङ्ख्याविशेषभानादेव । प्रथमत्यागे बीजमाह । * वचनद्वयेति * । बहुव्रीहिरिति * । एकं तिङ् यस्मिन्नित्यर्थः । नन्वेकपदस्य स्वसजातीयद्वितीयरहितार्थकतया पश्य मृगो धावतीत्यस्यैकवाक्यत्वन्न स्यादत आह । * इदंस्वशास्त्रेति * । लौकिकेति * । लोकविदितमेकवाक्यत्वमित्यर्थः । * अत एव * । अस्यैवैकतिङ्त्वस्य स्वशास्त्रोपयोगित्वादेव । * निरर्थकशब्दसमुदायेति * । दश दाडिमानीत्यादि । * सुप् च तिङन्तञ्चेति * । अत्र सुप्पदं सुपन्तपरम् । सुप्तिङन्तयोश्चय इति समासः । द्वन्द्वान्ते श्रूयमाणस्य चयशब्दस्य प्रत्येकं सम्बन्धात्सुबन्तचयतिङन्तचयलाभः । सुबन्ततिङन्तचयला

सुप्तिङन्त तेषामेकशेषस्तेन कारकान्वितक्रियाबोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानान्त्रयाणामपि वाक्यत्वलाभः । तत्र सुबन्तचयो देवदत्तेन शयितव्यम् । द्वितीयं पचति भवतीत्यादि । तृतीयश्चैत्रः पचतीत्यादि ओदनं पचेत्यादि । समर्थपरिभाषा त्वत्र न प्रवर्त्तते एकार्थीभावविषये एव तत्प्रवृत्तेरिति भावः । एते वानावादय इति । इदञ्च सपूर्वाया इत्यत्र भाष्ये स्पष्टम् ।

न चवा ॥ चादयः समुच्चयविकल्पाद्भुतखेदावधारणार्थास्तेषामन्यतमेन योगइत्यर्थः । ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह ।

---

भावाह । * सुप्तिङविशिष्टमिति । * कारकान्वितेति * । अस्य सविशेषणेत्यादि । तेन नीलमुत्पलस्पश्येत्यस्य सङ्ग्रहः । एवञ्च साक्षात्परम्परया वा कारकनिष्ठविषयतानिरूपिता या क्रियानिष्ठा विषयता तच्छालिशाब्दबोधजनकतत्तत्समुदायत्वं यत्र तत्रैकवाक्यत्वमिति ॥ यदुक्तं समानवाक्य इत्यत्र स्वशास्त्रमात्रोपयोग्येकवाक्यत्वमिति तेन वाक्सिद्धन्तदाह । * ओदनम्पचेत्यादीति * । अत्र तवेत्यस्य नादेशः । समानवाक्यस्थत्वाभावात् । समर्थपरिभाषोपस्थित्या यत्र तादृशं सामर्थ्यं तत्रैवादेशेन भाव्यमिति शङ्कावारणायाह । * समर्थपरिभाषा त्वत्रेति * । ननु पदस्य पदादित्यधिकारसत्त्वेन पदत्वेनोद्देश्यतासत्त्वात्समर्थपरिभाषोपस्थितिः स्यादेवेति चेन्न । एवमपि साक्षात्तत्त्वविध्युद्देश्ययोरुद्देश्यविधेययोर्वा सामर्थ्यस्य समर्थपरिभाषायामाश्रयणे व्यन्येन सामर्थ्यस्य तदाश्रयणे प्रमाणाभावात् । न च पूर्वोक्तैकवाक्यत्वस्वीकारे देवदत्तेन शयितव्यमित्यस्याप्येकवाक्यत्वं लभ्यते । आख्यातं साव्ययकारकविशेषणं वाक्यमित्यनेन तु नेति विरोध इति वाच्यम् । तत्राख्यातपदस्य धातुपरत्वात् । कारकान्वितक्रियाबोधकत्वमात्रोक्तौ पचतीत्येतन्मात्रस्य वाक्यत्वापत्तिरतस्तादृशसमुदायनिवेशः । * इदञ्च सपूर्वाया इत्यत्रेति * । तत्र हि युष्मदस्मदोरन्यतरस्यामनन्वादेश इति वक्तव्यम् । ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलो मे स्वम् । कम्बलो मम स्वम् । एतादुदाहरणदर्शनेन तेमयावेकवचनस्येत्यस्यैव वैकल्पिकत्वमिति प्राप्ते अपर आह । सर्व एव वाम्नावादय अनन्वादेशे वा वक्तव्या । न तर्हीदानीमिदं वक्तव्यम् सपूर्वाया विभाषेति ॥ वक्तव्यञ्च । किं प्रयोजनम् । अन्वादेशार्थम् । अन्वादेशे विभाषा यथा स्यादित्युक्तम् । एतेन प्रथमकेनान्वादेशे युष्मदस्मदोरित्यारभ्य ये आदेशा विहितास्तेषाञ्चित्यत्वं लभ्यते तदेतदशोकमन्वादेशे नित्यमिति ॥

न च वाहाहैव । एतत्सूत्रोपात्ते सर्वैर्योगे एकस्मिन् प्रयोगेऽर्थद्वारको न सम्भवतीति तेषामन्यतमेनेति । चादीनामवाचकत्वादाह । * समुच्चयादिद्योतकस्य इति * । साक्षाद्योगश्च हरिस्त्वा मां च रक्षत्वित्यत्र सुप्रसिद्ध एव । अत्र च

युक्तग्रहणादिति । साक्षादिति । युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । परम्परेति । स्वार्थाश्रयान्वय्यन्वयित्वादिरूपे इत्यर्थः ।

चेतसेति । अनालोचनार्थैरित्येव पर्युदासेन सिद्धे पश्यार्थैरित्येतदिन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः । परम्परेति । स्वान्वितान्वयित्वादिरूपे इत्यर्थः । तदुक्तं भाष्ये पश्यार्थैश्च प्रतिषेधः समानवाक्यइति प्रकृत्य वक्तव्यः, इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात् । ग्रामस्त्वा समीक्ष्य गत इति । इह न स्यात् ग्रामस्तव स्वं समीक्ष्य गत इति । समानवाक्ये इति करणेन समानवाक्ये पश्यार्थयुक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति कैयटः । एवञ्च नचवेति सूत्रे युक्तग्रहणं स्पष्टार्थमेव, तदभावेपि प्रकृतसूत्रस्येव तस्यापि साक्षात्संबन्धएव प्रवृत्तिः स्यात् । समानवाक्ये इत्येतत्सम्बन्धात्तु अस्य युक्तयुक्तेपि प्रवृत्तिरित्यन्यत् । अत एव देवदत्तस्य पुत्रात् यज्ञदत्तः पृथगित्यादौ देवदत्तशब्दान्न पञ्चमीत्याहुः । भक्तस्तवेति । इह तवेत्यस्य रूपेण सम्बन्धो न तु साक्षाद्ध्यायतिनेति भावः ।

सपूर्वा ॥ सहशब्दो विद्यमानवाची । अवधेरपि सबन्धत्वेन विवक्षाया षष्ठ्यर्थेन्यपदार्थेऽनेकमिति समासो वोपसर्जनस्येति सः तदाह । विद्यमानपूर्वादिति । प्रत्ययग्रहणे तदन्तग्रहणमित्याह । प्रथमान्तादिति । नन्वेते वांनावादय इत्यनेनैव विकल्पसिद्धेः किमेतेनेत्यत आह । अन्वादेशेपीति । अत्र नेति निवृत्तं तदाह । आदेशा वेति । तेनेति । भक्तत्वेनेत्यर्थः । भक्तान्तार्थत्वान्न यच्छब्दोपादानापेक्षेति भावः । स्पष्टञ्चेदं सप्तमोल्लासे काव्यप्र-

---

कारद्योत्यसमुच्चये युष्मदस्मदर्थयोरन्वयात् । हरो हरिश्च मे स्वामीत्यत्र तु स्वार्थहरिहरान्वितस्वामिपदार्थान्वयित्वमस्मदर्थस्य न तु साक्षात्तदन्वयित्वमतो न निषेध ॥

पदयाथरीतिसूत्रे अनालोचन इतिपर्युदासेन वाहेरिन्द्रियजन्यज्ञानार्थकधातुयोग एव स्यादत आह।*अनालोचनेति*। इन्द्रियाशे वहिष्ठम्पर्युदासेन न विवक्षितमिति भाव । * स्वान्वितान्वयित्वेति * । भक्तस्तव रूपन्ध्यायतीत्यत्रेन्द्रियजन्य यन्मानस ज्ञानन्धात्वर्थस्तेन युक्तस्य रूपपदार्थस्य युष्मदर्थान्वय । उक्तार्थे प्रमाणमाह । * तदुक्तमिति । * अत एव * । तच्छब्दयोगे विधीयमानकार्यस्य साक्षाद्योग एव प्रवृत्तेरेव ।

भक्तस्त्वमितिवाक्ये यच्छब्दोपादानाभावात्कथमित्याशङ्काप्रतिपत्तिरत्रा ९ । * भक्तान्तार्थत्वादिति । * तेनेति * । मध्यमाणि यायेन न्यायत इत्यस्योभ

इति शेषः, तत्र यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति, शुतुद्रीत्यस्य तु न, पादादिस्थत्वात् । एतेनादिभ्यः सर्वेषामिति बहुवचनमसङ्गतमित्यपास्तम् । अग्नतेजस्विन्निति । अनुदात्त सर्वमित्यनयोः सम्बन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणापादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्तिरितिभावः ।

आमन्त्रिते किम् । देव करोषि । सामान्यवचन किम् । अघ्न्ये देवि सरस्वति इडे काव्ये इत्यादौ पर्यायेषु परेषु निषेधो मा भूत्, सामानाधिकरण्यञ्चैकार्थविशेष्यकबोधजनकत्वमेव न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ॥ सुपादिति । शोभनौ पादावस्येति बहुव्रीहिः । सङ्ख्यासुपूर्वस्येत्यकारलोपः समासान्तः, अङ्गेः सुपीति निपातनं' साहचर्यादिति भावः ।

अनिदिताम् ॥ इत्सञ्ज्ञेकारवद्भिन्नानामित्यर्थः । अङ्गस्येत्यधिकारः । अञ्चतेर्भस्येति । अल्लोपान इतिवद् अस्यापि प्रत्यञ्चमञ्चति तेन प्रत्यञ्चेत्यादौ पूर्वाकारे न प्रवृत्तिः । अच इत्यञ्चतेर्लुप्तनस्य ग्रहण व्याख्यानात् ।

---

मचग्ने तेजस्विन्नित्यस्य पादादिस्थत्वेनापादादाविति निषेधो भविष्यतीति मूलासङ्गतिरत आह । * अनुदात्तमित्यादि * । *सम्बन्धानर्हत्वेनेति * । अस्य सूत्रस्याविद्यमानवद्भावनिषेधकत्वादनुदात्तपदस्यासम्बन्ध' । न चानुदात्तत्वविधानार्थमेन तस्य सम्बन्धोऽस्त्विति वाच्यम् । वाक्यभेदापत्तेश्चकारस्य तदर्थम नुपादानाच्च । सर्वमिति तु व्यर्थत्वान्न सम्बध्यत इति भाव ।

* देव करोषीति * । अत्र देवेत्यस्याविद्यमानवद्भावनिषेधे करोषीत्यस्य निघात स्यात् । न च भावप्रधानमाख्यातमितिसिद्धान्तादत्र करोषीत्यस्य क्रियाविशेष्यकबोधजनकतया न देवेत्यनेन समानविशेष्यकबोधजनकत्वमिति सामानाधिकरण्याभावादेव निषेधाप्राप्तिरिति वाच्यम् । 'प्रकृतिप्रत्ययौ सहार्थं ब्रूत-स्तयो प्रत्ययार्थं प्रधानमित्यौत्सर्गिकनियमाभिप्रायेणास्योपादानात् । यद्वा देवाक्षिक माम्पाहीतिवाक्यार्थव्युत्पादक यद्दीव्यत्यक्षैर्भवानिति वाक्यन्तदेकदेशस्य देव दीव्यतीत्यस्योपलक्षणमिदम् । तत्र गुणप्रधानभावविपर्यय स्पष्ट एव । * पर्यायेष्विति * । नन्वत्र प्रवृत्तिनिमित्तभेदाभावात्कथ सामानाधिकरण्यमत आह । * सामेति * । ननु ऋत्विगादिसूत्रे उपपदानुपादानादञ्चे सुपीत्यनुपपन्नमत आह । * निपातनसाहचर्यादिति * । ऋत्विक्शब्दसाहचर्यादित्यर्थः । अत एव सुपीतिप्रकरणावाध ॥

नन्वनिदितामित्यत्र यदि नञ्समासङ्कृत्वा बहुव्रीहिस्तदा न धातोरित्यत्र न लोपापत्तिरत आह * । इत्सञ्ज्ञेकार इति * । एवञ्च बहुव्रीहिगर्भो नञ्तत्पुरुष एवाय इति भाव । * न प्रवृत्तिरिति * । भसञ्ज्ञाक्षिप्तप्रत्ययस्याञ्चतिविशेषणत्व

भस्य किम् । प्रत्यञ्चौ । लुप्तनस्येति किम् । पूजायां प्रत्यञ्चा ।

चौ ॥ नेद वर्गग्रहण व्याख्यानात् । तदाह लुप्तेत्यादि । अण इति । कर्तृच इत्यादीनामनभिधानमिति भावः । एवञ्चाण्ग्रहणमुत्तरत्र सम्प्रसारणस्येत्यत्र तृतीय इत्येतद्व्यावृत्त्यर्थमावश्यकमिहापि सम्बध्यते न त्वत्रास्य व्यावर्त्यमस्ति इत्याकरे स्पष्टम् । अकृतेति । तत्परिभाषाभावे तु चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्य इति वचनमेव भाष्योक्तं शरणम् ।

विष्वग्दे ॥ चादासर्वनाम्न इत्यतः सर्वनाम्न इत्याकृष्यते । सामर्थ्यादुपसर्जने प्रवृत्तिः । अप्रत्यये इति पाठे ऽविद्यमानः प्रत्ययः क्विवादिरित्यर्थः । वप्रत्ययइति पाठेप्यकारस्याविवक्षितत्वात्स एवार्थः । अद्र्यादेशसध्र्यादेशावन्तोदात्तौ निपातनादिति स्पष्टं भाष्ये ।

अदसो ॥ असेरितीकार उच्चारणार्थः । अदस इत्यवयवषष्ठी । सद्र-

---

मिति भाव ।

न यच इतिप्रत्याहारमेवास्त्विवत्यत आह । * व्याख्यानादिति * । आतो धातोरितिलोपविधानसामर्थ्याच्च प्रत्याहारस्य मिदचोन्त्यादितिनिर्देशाच्च तादृशशब्दसामान्यस्य यचोऽशब्देतिनिर्देशाच्च तादृशानुपूर्वीकानर्थकशब्दस्य ग्रहण मित्येवरूपादित्यर्थ ।*प्रत्यञ्चाविति* । यद्यप्यत्र नुम् तथापि पूर्वकालिकस्य नस्य लोपोस्त्येवेति लुप्तनकारत्वस्याविघात । * नेद वर्गग्रहणमिति * । चवर्गग्रहणमित्यर्थ । * व्याख्यानादिति * । अजादी गुणवचनादेवेतिनिर्देशमूलकादित्यर्थ । ननु चायितिसूत्रेण इत्यस्य सम्बन्धे कर्तृच इत्यादिरूपासिद्धिरत आह । *कर्तृ इत्यादीनामिति * । तदुक्त हल इतिसूत्रे । इह कस्माच्च भवति तृतीय । अण्प्रकरणादृकारस्याप्राप्ति । अण इति वर्त्तते । ■ प्रकृतम् । ढ्रलोपे पूर्वस्य दीर्घोण इति । तद्वै इक काशा इत्यनेनेग्ग्रहणेन व्यवच्छिन्नत्र शक्यमनुवर्त्तयितुम । इग्ग्रहणस्य चाण्विशेषणत्वात् अणविशेषणमिग्ग्रहणम् । अण इक इति । यदि तर्हि अण्विशेषणमिग्ग्रहणञ्चो दीर्घो भवतीतीह न प्राप्नोति । अवाचाअवाचे । नैष दोष । अण्ग्रहणमनुवर्त्तते इग्ग्रहणान्निवृत्तम् । एवमपि कर्तृच' कर्तृचा अत्र न प्राप्नोति । यथालक्षणमप्रयुक्ते । मा भूद्दीर्घत्वमिति कैयट । अथ वोभयन्निवृत्तम् । कस्माच्च भवति तृतीय इति ।

* निपातनात् * । द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्यामिति । * प्रत्यङ्गस्येति* । अन्तरङ्गस्येत्यर्थ । * सर्वनाम्न इत्याकृष्यत इति * । अदसोद्रेरितिवार्तिकमत एव सङ्गच्छते।उपसर्जनत्वेऽप्यस्य यथा प्रवृत्तिस्तदाह।*सामर्थ्यादिति।*

* अवयवषष्ठीति * । तेनादसो दात्परस्य तदवयवस्योकारो दश्च म इति

हण तत्स्थानिकोकाररेफयोरप्युपलक्षणं, तेनादस्यति अदोऽस्माद् इत्यादौ न दोषः । दादिति किम् । अमुयोरित्यत्रान्त्यस्य मा भूदिति । समाहारद्वन्द्व इति । इदमर्वाचामनुरोधेन । वस्तुतो ऽयुक्तमेतत् । उत्रूऊत्इति द्वन्द्वे गुणाभावे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्या ऽनित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घेऊ इति रूपासिद्धेः, अत एवोकाल इत्यत्र काल इति न कृतन्तस्मादिव उत् ऊत् उदिति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वासिद्धमिति बोध्यम् । ष्यङः सम्प्रसारणमिति सूत्रे भाष्ये ऽनन्त्यविकारेऽन्त्यसदेशस्येति परिभाषापठितान्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । अनन्त्यविकारइति लिङ्गं तामर्थतः पठति । अन्त्यबाधे इति । अन्त्यस्य बाधे कार्यप्राप्त्यर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः । अन्यथा णो न इत्यादि नेतेत्यादावेव स्यान्नतु नमतीत्यादावपि इति भाष्ये स्पष्टम् । अल्लोपोनोचः सान्तेत्यादावनेककल्पनापेक्षयेय न्याय्या । किं च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम् परत्वेन पद संज्ञाबाधकत्वानुपपत्तेः । राज्ञ इत्यादौ नलोपस्यासिद्धत्वात्पूर्वमल्लोपोन इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगादल्लोपापत्तेश्च । तस्मादाकडारस्यसंज्ञासु यथोद्देशाश्रयणमेवाव-

---

भाव । * उपलक्षणमिति * । अदोनुपदेश इति निर्देशात् । * इदमिति * । स माहारऽव्यद्दतिभ्याख्यानमित्यर्थ । *नित्यत्वादिति* । इताऽन्तरप्रसक्तिरत्वात् । न नु ह्रस्वत्वमपि शब्दान्तरस्येतिन्यायेनानित्यमत आह । * अपरनिमित्तकत्वेनेति * ॥ यथाश्रुतमूलमन्यथावन्त्यबाधइत्येव परिभाषायाः स्वरूपमिति प्रतीयते त च ष्यङ इतिसूत्रविरुद्धमत आह । * ष्यङः सम्प्रसारणमितिसूत्र इति* ।*अनन्त्यविकार इति * । अनन्त्यस्य विकारो येन शास्त्रेणतत्रान्त्यसदेशस्येत्युपतिष्ठ त इतिपरिभाषार्थं स्यादेवञ्च णो नः धात्वादेः षः स इतिसूत्रयोरन्त्यसदेशस्ये त्यस्योपस्थितौ णोन इतिसूत्रेण नकारादेशो नेतेत्यादिष्वेव स्यात्तथा धात्वादे रिति सत्व सोतेत्यादावेव स्यान्न तु नमति सिञ्चतीत्यादौ । न चेष्टापत्तिः । नेर्ग दनदेति सूत्रे नदेत्यस्योपसर्गात्सुनोतीति सूत्रे स्तौतिसेधेत्यादिनिर्देशस्यानुप पत्तिप्रसङ्गादतोऽन्त्यसदेशानन्त्यसदेशयोरित्येतत्पूरणेन व्याचष्टे ।*अन्त्यसदेशानन्त्यसदेशयोरिति*। एतस्या परिभाषाया आवश्यकत्वमाह ।*अल्लोपोऽनइत्यादि * । या कृदेनान्यथासिद्धिरुद्भाविता सापि कार्यकालपक्षे न तु यथोद्देशे । आकडारीयभसंज्ञाविषये तु यथोद्देशपक्ष एव न तु कार्यकाल इत्याशयेनाह । * किञ्चेति * ।* एतदेकेति *। अल्लोपैकवाक्यतापन्नेत्यर्थः । नन्वेव भाष्यविरो

श्यकमिति यजादिस्त्रादिपरो योऽनित्यर्थस्य न तत्र लाभः। ष्यङः सम्प्रसारणमिति सूत्रस्य कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति। यचि भमिति तत्र यजादिपरतया ऽन्कारं विशेषयिष्यामः अनाकारमिति भाष्यन्तेकदेशयुक्तिः। यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तेनानो विशेषणायोगाच्च। अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि तस्माद्धान्येतस्याः परिभाषयाः प्रयोजनानि तदर्थमेषा कर्तव्येति उपसंहृतं भाष्ये इति भावः। अन्त्यसदेशस्येति। अन्त्येन समानो देशो यस्येत्यर्थः। तत्रश्चान्त्यवर्णतद्वर्णयोरितराव्यवधाने भवति। चलीक्लृप्यत इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशसम्भव इति न तत्रैतस्परिभाषाप्रवृत्तिः, अत एव न सम्प्रसारणइत्युदाहरणीभूतस्य विद्ध इत्यादेर्नानया सिद्धिः। अत एव न सम्प्रसारणइति सूत्रं सार्थकम्। नैतस्याः परिभाषायाः प्रयोजनानीति तत्सूत्रस्यभाष्यस्य त्वयमर्थः। एतत्सूत्रसाध्यानि विद्ध इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति अन्त्यसदेशत्वाभावादिति च तद्भावः॥ परस्यैवेति। इशब्दस्यैवेत्यर्थः। अः सेरिति। अत्र अकारेण आकारस्यापि ग्रहणं, तेनामूहगित्यादिसिद्धिः। तत्र ह्यासर्वनाम्न इति पूर्वपदान्तस्यात्वम्। त्यदाद्यत्वेति। त्यदादीनामत्वविषयइत्यर्थः। पक्षे इति। अत्र तन्त्रेणार्थद्वयेपि सूत्रतात्पर्यन्तत्र लक्ष्यानुरो-

---

ध इत्यत आह। * ष्यङः सम्प्रसारणमितीति *। एवञ्च परिभाषैव भाष्यकाराभिप्रेता न प्रत्याख्यानमित्याशयेनाह। * अत एवेति *। अस्या परिभाषाया न्याय्यत्वादेवेत्यर्थः। केचित्तु यदत्रोक्तं कार्यकालपक्षे नलोपैकवाक्यतापन्नपदत्वस्य भत्वेन बाधो न स्यादिति तन्न युक्तम्। आकडारादेकेत्येव सिद्धे सञ्ज्ञापादानेन सम्यक् ज्ञायमानेत्यर्थेन कार्यार्थप्रधानदेशे यमनेऽप्युपदेशादेशीयत्वव्यवहारश्च त्यजतीत्यर्थो विवक्षितः। तथा च भसञ्ज्ञया पदसञ्ज्ञाबाध सुघट एवेति वदन्ति। तन्न। उपदेशादेशीयत्वव्यवहारत्यागेपि समानकालप्राप्तिकयोर्भत्वपदत्वयोर्बाध्यबाधकभावो युक्त। यत्रादौ भसञ्ज्ञाप्रान्तप्रयुक्तकार्यं च कृते पश्चात्पदसञ्ज्ञा प्राप्ता सा पूर्वंजातभसञ्ज्ञया बाधयितुम् शक्यते भसञ्ज्ञाया पूर्वजातत्वात्। एवञ्च प्रकृते नलोपापादनं युक्तमेव। किञ्च सञ्ज्ञाया कार्यार्थतया यत्र न भसञ्ज्ञया स्वीयङ्क्षिञ्छित्छाखीयत्कार्यं साधनीयमस्ति तत्र तस्या प्रवृत्तिर्न स्यात्तथा च पदसञ्ज्ञाया स्वादिष्वितिविधीयमानाया प्रवृत्तिः, स्यादेव। एवं सति श्वलिहा गोदुहा षाचेत्यादौ ढत्वघत्वकुत्वादिकार्याणामापत्तिः स्यादेवेति दिक्। परिभाषार्थं विवृणोति। * अन्त्यसदेशस्येतीति *। तत्त्वञ्च। अन्त्यसमानदेशत्वञ्च। * तद्वर्णेति *। अन्त्यसमानदेशत्वेनाभिमतवर्णेत्यर्थः। इतराव्य

धाद्यचस्था । अत्र प्रमाणमुपन्यस्यति । उक्तश्चेति । लत्ववदिति । चली-
क्लृप्यते इत्यत्र यथा लत्व रीगृकारयोर्भवति तथेत्यर्थः । अत्रादमुयङिति
रूपवादिमत न्याययुतम् । लत्व उक्तरीत्यैतन्न्यायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ
मानाभावात् । अत एव भाष्ये ऽदसोनोसेरिति वार्त्तिकप्रत्याख्यानाया-
थवा ऽसेरिति पक्षमुक्त्वा यद्येवममुमुयङिति न सिद्ध्यति । अदम्यङिति
प्राप्नोति, अदमुयङिति भवितव्यम् । अनन्त्यविकारइति उक्तम् । अत्रेति
प्राप्नोतीत्युक्त्या च तत्रासंमतिरुक्ता इति भवितव्यमित्यनेन पृथक् श्रुत्यमिति
पक्षसमत्यभावो दर्शितः । इति भवितव्यमित्युक्त्या च तत्र शब्देऽप्रयुक्तत्व
सूचितमित्याहुः । विष्वग्देवयोः किमिति । चस्याप्युपलक्षणमिदम् । ननु-

---

धानियमस्य फलमाह । * चलीक्लृप्यत इति * । न च हल-
शिरासीत्यत्राप्यन्त्यवर्ण सकारस्तद्वर्णा रकाराकारस्तयोर्नकारो व्यव
धायकोऽस्तीति व्यवधानाभावघटितायाः परिभाषाया अप्रवृत्त्यापत्तौ ह-
लाकारस्यापि दीर्घत्व स्यादिति वाच्यम् । तत्तत्कार्यविधायकशास्त्रोद्दे
श्यघटको योऽन्त्यो वर्णो यश्च तत्समानदेशत्वेनाभिमतो वर्णस्तदितरोचत्वपर्या-
प्त्यधिकरणाविषयो विवक्षित । एव सति नकारस्याच्त्वपर्याप्त्यधिकरणावि
षयतया तादृशो यो वर्णोऽकारादिस्तद्व्यवधानस्य प्रकृते सत्त्वान्नानुपपत्ति ।
* अत एव * । इतराव्यवधाननियमादेव । * अनया * । अनन्त्यविकारइति
परिभाषया । * अत एव * । तदुदाहरणस्यानयाऽसिद्धेरेव । परिभाषास्वीकारे
भाष्यविरोधम्परिहरति । *नैतस्या इति*। * सेरित्यत्राकारजातीयवर्णपरसका
रग्रहणम । नन्वेवमन्त्यसदादेर्त्यविषय इत्यनुपपन्नमत आह । * त्यदादीनामिति * ।
ननु सकृदुच्चारितादसेरितिपदात्कथमर्थद्वयलाभइत्यत आह ।*अत्र तन्त्रेणेति* ।
वार्त्तिकोक्तमतद्वयान्यतमस्य यस्य युक्तत्वन्तदाह । * अत्रादमुयङितीति । * ।
अत्र । अदम्यद्शब्दे । * लत्वेउक्तरीत्येति * । चलीक्लृप्यत इत्यत्रान्त्यवर्णतद्व-
र्णयोरितरव्यवधानसत्त्वात् ।*अत्र* । अदम्यङ्शब्दे । न्याययुक्तत्वमुपपादयति ।
* अत्र एवेति । * नोसेरिति * । ओकारसकाररेफा तावभिन्नस्यादस इति तस्या
र्थे । * स सेरितिपक्षमिति * । तृतीयपक्षमित्यर्थ । नन्वेतावता न्याययुतत्व
कथमत आह । * अप्रेति प्राप्नोतीति * । अत्र । भाष्ये । * इति भवितव्यमिति*
एतेन न्याययुतत्व स्पष्टमेवोक्तम् । परन्तु तदग्रे इदमेवेष्यते इत्येवप्रोक्त किन्तु
भवितव्यमित्येवोक्त तेन सम्प्रत्यभाव उक्तोऽतोऽप्रयुक्तत्वलाभ । ननु विष्वक्देव-
योरित्यस्याभावेऽपि चकारसमुच्चेयसर्वनाम्न ,उपस्थितत्वात्कथमदद्र्यचीत्यत्राति
प्रसङ्ग उक्तोऽत आह । * चस्याप्युपलक्षणमिति * । तथा चोत्तरपदेन पूर्वपद-
स्याक्षेपेऽप्रत्यान्तेऽञ्चतौ परे यत्पूर्वपदन्तस्यादेश इत्यर्थापत्त्याऽतिप्रसङ्ग स्यादि-

चैरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यादेर्व्याप्तौ व्यर्थ-ममत्ययग्रहणमत आह । अमत्ययेति । तेनेति । अन्यथातःकृ इत्यत्र नित्य-समास इत्यतोनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्य-र्थापत्तावयस्कृदित्यादावेव स्यादिति भावः ॥

उद ईत् ॥ अत्राच इत्यनुवर्त्तते ।

समः सम् ॥ समो मिडिति सम इगीति वा न कृतम् । परिभाषाज्ञान-कृतगौरवापत्तेः ।

तिरसस्ति ॥ अलोपइत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते अस्य अलोपो लोपाभावो यस्मिन्नञ्चतावित्यर्थस्तदाह । अलुप्ताकारेति । तिरश्चेति । श्चुत्वेऽलोपस्य स्थानिवत्त्वन्तु न पूर्वत्रासिद्धीये तन्निषेधात् ।

पूजार्थस्येति । पूजारूपार्थस्य गम्यत्वे इत्यर्थः । अत एवाव्याकुलं ग-च्छतीत्यर्थकेऽञ्चित गच्छतीत्यादौ नलोपो न । अव्याकुलगमनेन च पूजा गम्यते न त्वञ्चतेरेव सोर्थ इति स्पष्टमञ्चोनपादाने इति सूत्रे भाष्यकैयट-

---

ति भाव । अत्र ज्ञाप्यांशो धातुग्रहणे तदादिविधिरित्येव । एतद्वचनफलमन्यत्रे त्यभिप्रायेण मूलेऽयत्रेत्युक्तम् । प्रकृतसूत्रे तु न फलममत्ययग्रहणसत्त्वात् । * अ-न्यथा * । ज्ञाप्यस्य वचनस्याभावे ।

* परिभाषाज्ञानेति * । न च सम सम्मिरितिन्यासेऽप्यनेकालितिपरिभाषाया ज्ञानस्यापेक्षाऽस्त्येवेति साम्यमिति वाच्यम् । भवन्मते इत्संज्ञाया डिच्चेत्यस्य चापेक्षा मन्मते त्वनेकालित्यस्यैवेति लाघवम् । इगीतिन्यासे चाद्यन्तावित्यस्या-पेक्षेति गौरवमिति भाव । नन्वव्ययसर्वनाम्नामिति समोऽकचि कृते सम्यादेशपक्षे ककाराश्रवणम्भवति मिडादेशे इगागमपक्षे वा ककारस्य श्रवणमिति रूपेऽपि विशेषस्य स्पष्टतया कथम्परिभाषाज्ञानकृतगौरवस्यैवाभिधानमिति चेन्न । प्रवृत्त सूत्रभाष्येऽकचि कृतेऽपि ककाराश्रवण सम्मिरितिसमुदायरूपादेशस्य फलमिति नोक्तमिति न्यूनतापरिहाराय यत्र कुत्साविवक्षा तत्रापि प्रथममुत्तरपदनिमित्त कादेशस्ततोऽकजिति स्वीकारात् । अथ वोत्तरपदार्थ सम्शब्दसमभिव्याहारेण प्रकर्षप्रतीत्यैतादृशविषये कुत्सादिविवक्षैव नेति । यदुक्तमलुप्ताकारेऽञ्चताविति तल्लाभप्रकारमाह । * अलोप इत्यत्रेति * । न लोपो यस्येतिव्याख्यानेऽवयवा-पचस्येत्यस्य यच्चवयवस्येत्यर्थकरणे गतो नलोपविषये तिर्यादेशाभावापत्तेरत एव व्याख्यातश्च । मूलोक्तसामानाधिकरण्येन व्याख्याने वक्ष्यमाणानुपपत्तेरत आह । * पूजारूपार्थस्येति * ।

* पूजा गम्यत इति * । वर्त्तुरित्यादि । ननु प्राच इति प्रयोगो यत्र तत्र चेत्पूजा विवक्षिता तदा नलोपो न स्याद्यदि तु न पूजावि

योः । प्राच इत्यादि चिरन्तनादिरूढस्येति बोद्धव्यम् । एतेनाञ्चेर्गतावेति नियमेनैव सिद्धौ नाञ्चेः पूजायामिति व्यर्थमित्यपास्तम् । नन्लोपाभाव इति । ओपधत्वनाशनद्वारेत्यर्थः । स्पष्टश्चेदं परेश्चेति सूत्रे भाष्ये । अपिना च समवधाने चोः कुरिति कुत्वाभावो निरुपपदात्क्विन्नेति च निपात्यत इति बोद्धव्यम् । सडीति वचनाद्वा कुत्वाभावः । षत्वं स्कोरितीति । सलोपे षत्व स्यासिद्धत्वात्सलोपे कृते षत्वम् । प्रच्छेः क्विपि ग्रहिज्येति सम्प्रसारणं पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः । सुगन्स्त्विति । चर्त्वस्यासिद्धत्वाद् ट सीति वा धुट् । निपात्यन्त इति । अतिप्रत्ययान्ता इति शेषः । तत्र पृषद्बृहतो- र्गुणाभावश्च गमेर्जगादेशश्च महेः कर्मणि प्रत्ययश्च निपातनात् । शतृवदिति । प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः । शतुरनुम इति सूत्रे बृह- न्महतोरुपसंख्यानमिति तु पृषदादिभ्यो व्यावृत्तये नियमार्थमिति बोद्धव्यम् ।

---

यदा तदाऽल्लोपस्यापि प्रवृत्तिः स्यात्तथा चोदात्तनिवृत्तिस्वरस्याप्रसिद्धत आह ॥* प्राच इत्यादीति *। अत्र हि प्रकरणाश्रतीतिशब्दसाधुत्वाय व्युत्पत्तिमात्रं न त्वर्थाः प्रत्यययोर्विवक्षित । प्राचामधृष्णादित्यादिनिर्देशाच्चेतादृशेऽप्यल्लोपो न । यदि तु स स्यात्तदा शतुत्तरपदप्रकृतिस्वरेण तीदात्तस्य प्राक्शब्दस्यावयवो लुप्येत इत्यु दात्तनिवृत्तिस्वरः स्यादेव । * एतेन * । प्रागुक्तस्याञ्चितप्रत्यत्तरीयस्य प्राच इत्यादिरूपाणाञ्चासाधनेन । ननु कुडित्यत्र नलोपाभावोऽपि निपात्यत इति यथाश्रुतमूलोक्तं स्पष्टं न स्याद्वेतिसूत्रभाष्यविरुद्धमत आह ।*ओपधत्वेति*।* सूत्रे- भाष्य इति* । तत्र हि सडीतिवचनस्य मुञ्चा इत्यत्र चो कुरिति कुत्वाभाव फलमित्युक्ता निपातनादेतत्सिद्धम् । क्विन्निपातनम् । ऋत्विग्दधृक्स्रग्दिगुष्णि- गञ्चुयुजिक्रुञ्चां चेत्युक्तम् । यद्ययं स्वतो नकारोपध स्यात्तदा कुत्वस्याप्राप्ते र्भाष्यमसङ्गतमेव स्यात् । अत एव कुञ्चयादित्यत्र लोपो न । यदुक्तं मूले नलो पाभावोऽपीति तत्रापिशब्दार्थमाह । * अपिनेति * । सडीतिवचनस्य प्रत्याख्या नपक्षे इदम् । * कुत्वाभाव इति * । अस्यत्यादि । * तदारम्भपक्षे आह । * सडीति * । ननु षत्वे स्कोरिति सलोप इति क्रमेणाभिधानमयुक्तं सलोपे षत्व स्यासिद्धत्वादत आह । *सलोप इति*। एवञ्च मूलकारस्यापि तादृशः क्रमो न विवक्षितः किन्तु लक्षणयोः प्राप्तिमात्रमिति भावः । ननु नात्र सकार इति कथं सलोप इत्यभिधानमत आह । * प्रच्छेः क्विपीति * । ननु यदि शतृवद्भावस्तदा शतुरनुम इतिसूत्रे बृहन्महत इति वार्त्तिकं व्यर्थमत आह । *शतुरनुम इतीति*। शतृवदित्यत्र तृतीया तादर्थ्ये न तु सप्तम्यन्ताच्चेन महतीतिरेत्यप्रोगितश्चेति ह्रस्व विकल्पः सिध्यति ॥ अत एव । अधातोरित्यस्यानुपदार्थाविशेषणत्वाभावाच्च ॥

अत्वसन्त ॥ चम्त्वर्थे अतु इतिलुप्तषष्ठीकं पृथक् पदम् । अधातोरित्य-
सन्तस्यैव विशेषणन्तुशब्दात्तदाह । धातुभिन्नेति । अत एवोगिदचामिति-
सूत्रे गोमत्यतेरप्रत्यये गोमानिति प्रयोगो भाष्ये सङ्गच्छते । अङ्गविशेषण-
तया ऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम् । परमिति । वचनसामर्थ्या-

---

नन्वतुशब्दस्य पृथक्पदत्वेऽपि तस्याङ्गविशेषणत्वेन यथाऽत्वन्तस्येत्यर्थलाभस्तथा
ऽसन्तस्येत्यस्यापि लाभे सौत्रमन्तग्रहणं व्यर्थमत आह । * अङ्गविशेषणत्वेति* ।
अत्रेदमवधेयम् । सूत्रेऽत्विति भवतुक्तवतुमतुप्वतुप्डवतुड्मतुपामवयवानां सामा-
न्येनानुकरणम् । अत एव भवान् कृतवान् घटवान्तावान्‌ कुमुद्वानित्यादिसिद्धिः ।
नन्वत्वन्तरधमङ्गविशेषणमुत प्रत्ययस्य विशेषणम् । नाद्य । दीर्घप्रवृत्तिसमये
तस्यात्वन्तत्वाभावात् । भवानित्यत्रापि सर्वादिपठितभवतुशब्दावयवोकारस्यो
पदेशेऽजनुनासिक इतिसूत्रेणेत्संज्ञायान्तस्य लोपेऽनुबन्धरहितस्यैव सत्त्वात् । स
र्वेष्वपि सानुबन्धकनिर्देशेषु रूपमाश्रीयते रूपनिर्ग्रहश्च नान्तरेण लौकिकम्प्रयो
गं तस्मिंश्च सानुबन्धकानामप्रयोगो नास्तीति कृत्वा द्वितीय प्रयोग उपास्यते
कोसावुपदेशो नामेति घसक्षासूत्रीयभाष्योक्तरीत्योपदेशे योऽत्वन्तस्तस्य ग्रहण-
मिति विवक्ष्यत इति चेत् । एवं सति सर्वादिपठिताव्युत्पन्नभवतुशब्दस्य भ-
वानिति यद्यपि सिध्यति तथापि भातेर्डवतुरिति व्युत्पन्नस्योपदेशाभावाद्दीर्घो
न स्यात् व्युत्पत्तिपक्षेऽवयवावयवस्य समुदायावयवत्वेनात्र सिध्यत्येवेति चेत् ।
एवमपि मतुप्वतुप् तेन सिध्यति । अत एव न द्वितीय । प्रत्ययस्याप्रकृतत्वा
च्च । शब्दस्वरूपस्याध्याहारेण वाक्यार्थबोधसम्भवेऽप्युपदेशेऽत्वाभावाद्दोष एवे
ति चेत् । अत्राहुर्वार्त्तिककाराः ।अत्वन्तस्य दीर्घत्वे पित उपसंख्यानमिति । तर्हि
उपसंख्यानं कर्त्तव्य न कर्त्तव्यम पकारलोपे कृते नात्वन्तमेतद्भवति अत्वन्तमेव ।
यथैव तर्हि पकारलोपे कृते नात्वन्तमेवमुकारलोपे नात्वन्तम् । ननु च भूतपूर्वग-
त्याऽत्वन्तम् । सूत्रेऽत्वन्तस्योपादानात्तदंशे भूतपूर्वगतिः । अनुबन्धस्य त्वनुपा
दानान्न भूतपूर्वगतिस्तदंश इति भाव । तत उक्तयुक्त्या भूतपूर्वगतिस्तदंश इति
भाव । तत उक्तयुक्त्या भूतपूर्वगतिर्व्यवस्थापिता । तदनुबन्धकपरिभाषया त्व
त्वन्तादीनामग्रहणमप्राप्नोतीति तु नाशङ्कनीयम् । उकारपकारयो समुदायानुब
न्धत्वेन तस्या परिभाषाया इह विषयाभावात् । एतेन प्रकृतसूत्रे सत्यन्तग्रहणे
ऽतोरन्तोऽत्वन्त इति समासकृत्वा तस्यात्वन्त शब्दस्याङ्गविशेषणत्वेनात्वन्ता-
न्त यदङ्गमित्यर्थस्यावश्यकतया मतुब न्ते भुप्यस्य तस्य सत्वेन भवतुशब्दे च
व्यपदेशिवद्भावेन तस्य सत्त्वमुपपाद्य सौत्रान्तशब्दस्य सार्थक्योपपादनम्परा
स्तम् । ननु परमित्यसङ्गतन्दीर्घस्य नुमोप्राप्तिविषये चारितार्थ्याभावादत आह ।
* वचनसामर्थ्यादिति * ॥ वस्तुत एवम्प्रकारेण चारितार्थ्यमयोग्यमित्याशये-

दुपधापदासम्बन्धेन चारितार्थ्यादित्यभिमानः । अयमभ्युच्चय इत्याह । नित्यमिति । कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः । सामर्थ्यादिति । वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भाव. । धीमानिति । न चैकानुबन्धकपरिभाषया मतुपोऽत्राग्रहण, सूत्रन्तु सर्वादिपठितेऽनुनासिकोकारविशिष्टे भवतुशब्दे चरितार्थमिति वाच्यम् । पकारादेः समुदायानुबन्धत्वेऽप्यतोऽननुबन्धकत्वाभावात् । अवयवानां नान्तरीयकतया समुदायोपदेश एव ऋषितात्पर्यमित्यर्थस्यादेच उपदेश इति सूत्रस्थभाष्यसमतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धताया एव स्वीकारात् । न चोकारलोपे ऽत्वन्तत्वस्याप्यभावः । उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात् । एतेन तदाश्रयणे ऽतुबन्तमेतत्रात्वन्तामित्यपास्तम् । तदाश्रयणाभावात् । तस्मादनुनासिकोकारविशिष्टो य उपदेशोऽत् तदन्तस्य प्रयोगस्य दीर्घ इति सूत्रार्थ इति न दोषः । नियमार्थमिति । धातोश्चेदुगित्कार्यन्तर्हि नलोपिनोऽञ्चतेरेवेति नियम इति भावः । तेनोखास्रत् ब्राह्मणीत्यादौ नुमूङीपौ न । न्यायमाप्ताल्लोपाकरणपूर्वक नलोपकरणस्य विवक्षार्थत्वमित्याशयः । यद्यपि अञ्चतेश्चेन्नलोपिन एवेति नियमेऽप्यञ्चतिग्रहणं चरितार्थं तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्त नियमो युक्त इति बोध्यम् । नन्वत्र धातुत्वात्कथं नुम्, अत आह । धातोरिति । नचौपदेशिकधातुविषयक एव नियमोऽस्तु किमनेनेति वाच्यम् । औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात्, तत्फलं वर्णध्वदित्यादाविव गोमानित्यादिनामधातावुगितश्चेति ङीबभाव इति दिक् । ययचूपक्षेऽल्लोपो न स्थानिवत् क्वौ लुप्तत्वात् । अत्राचारक्विबर्वाचीनमतेन । वस्तुतो हलन्तेभ्यस्तदभाव इति ह्रस्वनद्याप इत्यत्र भाष्ये स्पष्टम् ।

---

माह । * अभिमान इति । सत्यपि सम्भवे बाधनमितिभाष्यकारमताभिप्रायेणाह । * अभ्युच्चय इति * । उक्तमेवार्थमाशङ्कासमाधानाभ्यामाह । * न चेत्या विना * । उपसंहरति । * तस्मादिति * । अनुनासिकोकारविशिष्ट इति * । अनुनासिकोकारोपलक्षित इत्यर्थः ॥ * नलोपिनोऽञ्चतेरेवेति * । तेन प्राङ् मुखीत्यादौ पूजायामुगिदश्चेति ङीप् नेति बोध्यम् । * तेन* । उक्तनियमाश्रयणेन । उक्तनियमलाभे बीजमाह । * न्यायेति* । *अञ्चतेश्चेन्नलोपिन एवेति* । एतादृशनियमस्य फलम्पूर्वोक्तमेव । अत्र गोमन्तमिच्छतीत्यर्थकगोमानित्यत्र धातुत्वात्कथन्नुमिति । सनाद्यन्तत्वेन धातुत्वात् । * औपदेशिकधातुविषयक इति * । ज्ञापकसाजात्यात् ।

उभे अभ्य ॥ लक्ष्यानुसारेण गर्गदण्डनन्यायादेव समुदाये वाक्यसमाप्तिरित्याह । उभे समुदिते इति । द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम् । यत्तूभेग्रहण सामर्थ्यात्सहभावोपसर्जनद्वित्वाविशिष्टार्थक, तेन समुदिते इत्यर्थलाभ इति तन्न, अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतोपहसितत्वाच्च । ध्वनितश्चेदन्तदसति प्रयोजने उभेग्रहण सहार्थं विज्ञास्यते इति ग्रन्थेन भाष्ये । अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य सहग्रहण कर्त्तव्यमिति वार्तिक प्रत्याख्यातन्तुल्यन्यायात् । तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्यातमेवेति सुधियो विभावयन्तु । तत्र श्यादिशब्दानामेकापाये ऽप्रद्युचैर्त्सेत्रित्यादावभ्यासलोपे कार्यकालपक्षे न सञ्ज्ञेति न जुस् । एकादेशात्पूर्वमाद्यन्तादिपूपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशेपि सर्वे सर्वपदादेशा इति न्यायेन स्थानिवद्भावात् क्षित्वेन जुसापत्तिः, किं चैकादेशे जुसोपवादविषयस्य जायमानत्वेन प्रकल्प्य चापवादविषयमिति न्यायेन पूर्वमन्तिभावाप्रवृत्तौ एकादेशे जुसापत्तिः । यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेऽभ्यासलोपे सत्वेपि पञ्चमीसमासेनैकादेशस्य स्थानिवत्वान्न तत्प्रवृत्तिः, अत एव प्रत्यैपिपाम्नित्यादौ

---

* द्वे इत्यनुवृत्त्यैवेति * । यद्यप्येकाच इतिसूत्रे द्वे इतिविधेयसमर्पकन्तथापि तस्य तत्याग पूर्वोऽभ्यासइत्यत्र फलत इत्यत्रानुवादसमर्पकत्वे बाधकाभाव इति भाव । * द्वित्वविशिष्टार्थकमिति * । उभेग्रहणसामर्थ्यात्प्रकृते द्वित्वस्य पर्याप्तिसम्बन्धेनाभ्यस्तसञ्ज्ञोद्देश्यतावच्छेदकत्व विवक्षितम् अन्यथा आश्रयतया तस्योद्देश्यतावच्छेदकत्व स्यात् । एकाचो द्वे इतिसूत्रे द्वित्वाश्रयस्य द्वितीयोच्चारणविषयस्य विधेयत्ववत् । * अशब्दार्थत्वादिति * । लक्ष्यानुसारिगर्गदण्डनन्यायेनैव पर्याप्तिसम्बन्धस्योद्देश्यतावच्छेदकतावच्छेदकत्वलाभे तदर्थमधिकोपादानङ्गौरवग्रस्तमिति । एतच्च भाष्येऽसति प्रयोजन इत्येवमभिधानेन सूचितम् । * विभावयन्त्विति * । यथा वार्त्तिककृदुक्त सहग्रहणम्प्रत्याख्यातन्तथा पराभिप्रेत सहग्रहणमपि प्रत्याख्यातमेव येत्सेत्रित्यत्राभ्यासलोपे जुसभावार्थन्तथा ईर्त्सेत्रित्यत्र नाभ्यस्तादिति जुम्निषेधश्च स्यादिति तदभावार्थञ्चोभेग्रहणमिति कस्यचिन्मतन्तन्निराकरणायाह । * तत्रेति * । ननु शपा सहैकादेशोऽप्युभयत आश्रयणेन न जुस प्राप्तिरत आह । *एकादेशात्पूर्वमिति * । सनकारदायकार्योरित्यर्थ । * अन्तादेशोऽपीति * । तत एकादेशो इति शेष । न प्रकृते स्थानिवद्भावोपयोग इत्याशयेनाह । * किञ्चेति * । यदुक्त जुसिति तत्र हेतु सूचयति । * यथोद्देश इत्यादिना * । अस्मदुक्तप्रकार एवावश्यक इति दर्शय-

न दोष इत्यलम् ।

नाभ्यस्ता ॥ बहुयोगव्यवच्छिन्नोऽपि नुमिहानुवर्तते सामर्थ्यात्तदाह नुम्नेति । दाधः शतरि शपः श्लौ श्लाविति द्वित्वे ऽभ्यासह्रस्वत्वे श्नाभ्यस्तयोरित्यालोपे ददादिति ।

त्यदादिषु ॥ आलोचनमिह ज्ञानमात्रम् ।

आस ॥ इग्दृशवतुप्विति सूत्रमनुवर्तते । पत्वापवादत्वादिति । क्वः किन्यत इति न्यासेन हृष्ट इत्याद्युदाहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थोऽत्र धीष्मागर्भेबहुव्रीहिणा स्पृशन्तादृशादिकिनन्तविषयं लक्षणमचरितार्थमिति भावः । खकार इति । अघोषमहाप्राणतुल्यत्वादिति भाव.। कैयटेति । क्विन्प्रत्ययस्येति सूत्रस्येत्यादि । असिद्धत्वादिति । यद्यपि जश्त्वापवादोऽपि कुत्व तथापि शस्थानिकजश्त्वस्यैव न तु खस्थानिकस्यापीति भाव. । वस्तुत इदं चिन्त्य, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः । तस्मादृत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च अस्य चारितार्थ्येन ज-

---

ति । * अत एवेति * । पञ्चमीसमासाश्रयणादेव ।

* सामर्थ्यादिति * । सूत्रारम्भसामर्थ्यात् । न त्वनन्तरस्यानियद्धीतिसूत्रस्यानड इति शप । तस्यात्राप्राप्ते ।

* ज्ञानमात्रमिति * । न तु चक्षुरर्थैरितिसूत्र इव चाक्षुष ज्ञान विवक्षित, साधकाभावादिति भाव ।

ननु पत्वापवादत्वादित्यसङ्गतम् । कुत्वस्य पत्वाप्राप्तिविषये चारितार्थ्यादिति सर्वाधकत्वणामाशयमाह । * किन्यत इत्यादि * । *जश्त्वापवादोऽपीति* । कुत्वविषये जश्त्वस्याप्यप्राप्ते । *इदङ्क्ष्यामिति* । जश्त्वापवादत्वकथनमित्यर्थ । *भाष्यकृतोक्तेरिति* । एव हि क्विन्प्रत्ययेतिसूत्रभाष्यउक्तम् । प्रत्ययग्रहण किमर्थम् । न क्विन कुरित्येवोच्येत । क्विन कुरितीयत्युच्यमाने वकारस्यैव कुत्वम्प्रसज्येत । ननु च लोपे कृते न भविष्यति । अनवकाशकुत्व लोप बाधेत । साव काश कुत्वम् । कोऽवकाश । अनन्त्य । अनन्त्य इति । क्विन्प्रत्ययापेक्षया अनन्त्यः । पदस्य त्वन्त्य इति कैयट । कथम्पुन सत्यन्त्येऽनन्त्यस्य कुत्व स्यात् । सत्यपि सम्भवे बाधन भवतीति न्यायेन लोपम्बाधित्वा कुत्व स्यादिति भाव । आचार्यप्रवृत्तिर्ज्ञापयति नान्त्यस्य कुत्वम्भवति । यदय क्विन कुरितिकवर्गनिर्देश करोति । इतरथा हि तद्गुणमेवाय निर्दिशेत् । तद्गुणम् । वकारगुणम् । इदन्तर्हि प्रयोजनम् । येभ्य क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्व यथा स्यात् । मा नो अघ्राक् । मा नो अद्राक् इति । स्पृजिदृशिभ्यां माङि लुङ् । तिप्सिच् । बहुलञ्छन्दसीति इडभाव । हल्ङ्याब्भ्यो दीर्घादिति लोप । सृजिदृशोरित्यमा-

त्वपत्वापवादता न युक्तेति तन्मतइति वदता सूचितमिति दिक् ।

नगिति ॥ पडगकाः प्राग्वत् । नड्भ्यामिति । मस्जिनशोरिति नुम्तु न धातुप्रत्यये तद्विधानात् ।

स्पृशो ऽनु ॥ अनुदके किम् । उदकस्पर्शः । अन्तोदात्तत्वमिति । नित्त्वादाद्युदात्तत्वं प्राप्तम् । कुत्वस्य जश्त्व प्रत्यसिद्धत्वादाह । कुत्वात्पूर्वमिति ।

र्वोरु ॥ सिपि धातोरित्यतो धातोरिति वर्त्तते तच्च वाभ्यां विशेष्यते पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वे ऽल्लोपो न स्थानिवत् पूर्वत्रासिद्धे तन्निषेधात् ।

नुम्वि ॥ इण्कोरिति वर्तते व्यवधाने ऽप्राप्तेरिदम् । अयमप्यधिकारः । अत एव निंस्स्वेत्यत्र धातोः सस्य नानेन षत्वम् । व्यवायशब्दस्य प्रत्येकं सम्बन्धो व्याख्यानात्तदाह । प्रत्येकमिति । अपिना ऽव्यवधानेपि । नु-

---

गम । यदभ्रजेति वृद्धि । बहुलञ्छन्दस्यामाडित्यत्रबहुलग्रहणादडागम । संयोगान्तलोप । भ्रश्चेतिषत्वे प्राप्ते कुत्वम् । जस्य ग शस्य ख । वावसान इति चर्त्वम् । अत्र सृजेर्विशेषविहितेन षत्वेन पदान्ते रज्जुसृड्भ्यामित्यत्रैव कुत्वस्याप्रसक्त्याबाध्येतेति कैयटेनोक्तम्पूर्वत्रासिद्धमित्यासिद्धत्व कुत्वस्य नास्ति प्रत्ययग्रहणसामर्थ्यात्षत्वात्कुत्वस्येति । अत्रापवादत्वं वीप्सागर्भबहुव्रीह्याश्रयणेनोपपादनीयम् । तच्च भाष्योक्तप्रयोगदर्शनमात्रेण न युक्त प्रयोगद्वयस्यापि छान्दसतया छन्दसि सर्वविधीनां वैकल्पिकतयाऽसिद्धत्वस्याप्यभावकल्पनेन प्रयोगद्वयस्याप्युपपत्तेरिति भाव ।

* उदकस्पर्श इति * । कर्मण्यण् ।

* पूर्वत्रासिद्धे तन्निषेधादिति * । न च न पदान्तसूत्रस्थभाष्ये वैतस्यानित्यत्र रुत्वस्य प्राप्तिनिरूपणावसरे पदचरमावधिविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणमिति व्यवस्थापितमिति रुत्वस्य पदचरमावयवतया तस्मिन्कर्त्तव्ये कथन्निषेधप्रवृत्तिरिति वाच्यम् । प्रत्यासत्त्या लोपनिमित्तनिमित्तकपदत्वचरमावयवविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणमित्यर्थकल्पनयापि तस्य भाष्यस्योपपत्ते ।

* इदम् * । नुम्विसर्जनीयेतिसूत्रम् । * अत एव * । अधिकारत्वादेव । एवञ्चैतदेकवाक्यतयाऽऽदेशविधायकमादेशप्रत्यययोरितिसूत्रमेव । तस्य त्वत्र न प्राप्तिर्धातुसकारस्यादेशप्रत्ययावयवभिन्नत्वादिति भाव । * प्रत्येक सम्बन्ध इति * । द्वन्द्वान्ते श्रूयमाणत्वात् । * व्याख्यानादिति * । अत्रैव सूत्रे निसे प्रतिषेधो वक्तव्य इत्येतद्वार्त्तिकप्रत्याख्यानपरभाष्ये निंस्से निंस्स्वेत्यत्र षत्व प्रत्ययसकारस्य प्राप्त तद्वारणाय व्यवायशब्दस्य प्रत्येक सम्बन्ध उक्तस्तन्मूलकादित्यर्थ ॥

न्स्यानिकेति । अकृतव्यूहस्यं हयवरट्सूत्रस्थञ्च भाष्यमत्र मानम् ॥ ग्रसेति प इति । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायान्त्रिपादीस्थस्याप्रवृत्तेर्ह्-ल्ङ्यादिलोपोत्तर विवश्चम् इत्यवस्थायां षत्वस्यासिद्धत्वात्संयोगान्तलोपे प इत्यर्थः । कलोपे इति । पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वा-द्रिति भावः । तडिति तक्ष्णोतेः क्विप् । ण्यन्ताभ्यामिति । णिलोपस्य स्था-निवत्त्वाद्वत्रस्थातेत्यादौ संयोगादिलोपाप्राप्तेः काष्ठतक्षेत्र नास्ति कुतः काष्ठ-काष्ठशस्थातेति परेश्चयाङ्गयोरिति सूत्रस्थभाष्येण न विरोधः । तत्र ह-ल्परसंयोगादिलोपमाशङ्क्य तथोक्तम् । तस्य दोष इति क्रौ लुप्तमिति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः । कुत्वस्यासिद्धत्वादिति । पिपच्-सिरयवस्थायाङ्कुत्वस्यासिद्धत्वात्तदभावे स्कोरित्यस्याप्राप्तेः संयोगान्तलोप इति भावः । दिधगिति । दादेरिति घ । एकाच इति भष्भावः । विद्वा-निति । विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्वाद्गुणाभावे उगित्वा-न्नुम् सान्तेति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न ।

वसोः ॥ प्रत्ययग्रहणे तदन्तग्रहण भस्येत्यधिकारस्तदाह । वस्वन्तस्ये-त्यादि । न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैवात्र ग्रहणं स्यान्न लि-डादेशक्वसोरिति वाच्यम् । वसुमादेशेऽ तस्यापि अनुबन्धत्वात् इति भाष्ये

---

* हयवरट्सूत्रस्थमिति * । नुमो योऽनुस्वारइतिव्याख्यानेन शरग्रहणेन गता र्थत्वाभावस्तत्रोक्तः ॥ विधिविडित्यत्र शास्त्राणां यथा प्रवृत्तिस्तथा दृष्टान्तपरतया शिष्यबुद्धिवैशद्याय प्रक्रियामाह । * सपादसप्तेत्यादि तक्ष्णोते क्विपिति * । ए-तेन षत्वे कलोपाप्राप्तावपि न क्षतिरिति सूचितम् । न च परेश्चेतिसूत्रस्थभाष्य रीत्या षत्वस्य विधेय नास्तीति कथमेतदिति वाच्यम् । तस्य भाष्यस्य विशेष विषयत्वात् । तदेवाह । * णिलोपस्येति * । एवञ्चाण्यन्त एव तदभावो न तु ण्यन्त इति भाव । * इत्यन्यत्र विस्तर इति * । यथा स्वरितो वेतिसूत्रे कैयटे गोकम्मधुश्चुतमाचष्टे मधुगितीष्यते इति । एतच्च संयोगादिलोप एव सङ्गच्छ-ते । अत्र हि पूर्वत्रासिद्धे न स्थानिवदित्यस्य तस्यदोषइतिवचनेन निवारणे णिलोपस्य स्थानिवत्त्वात्संयोगादिलोपो दुर्लभ । सकारोच्चारणन्तु संयोगान्त लोपेऽपि सकारस्य रुत्वविसर्गयोश्चरितार्थम् । परन्तु क्वौ लुप्तमिति वचनसत्वे तेन स्थानिवत्त्वनिषेधे सति सिध्यति । एतदभिप्रायेणोक्त क्वौ लुप्तमिति तु न सार्वत्रिकम् । न तु तद्वचनमेव नास्तीति । अधिकमन्यत्र स्पष्टम् । * तदभाव इति * । षकाराभाव इत्यर्थ ।

* वसुसादेश इति * । न चैवमपि वसु स्तम्भ इतिधातोरप्येकानुबन्धकत्वा द्ग्रहण स्यादिति वाच्यम् । सामान्यग्रहणार्थेन वसुसादेशस्य सकारेणैव ग्राम

स्पष्टम् । विदुष इति । सम्प्रसारणपूर्वत्वस्य षत्वतुकोरित्यसिद्धत्वन्तु न । पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वात् । सेदिवानिति । षद्लृधातोर्भाषायां सदेति लिटः क्वसौ द्वित्वे ऽत एकेत्येत्वाभ्यासलोपयोर्वस्वेकाजादितीट् । अकृतेति । परे तु पदावधिकेऽन्वाख्याने सेद्वस् असिति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वा-

---

द्वेयाद्वृपङ्क्त्यावितिसूत्रज्ञापितपरिभाषाया इहाप्रवृत्ते । किञ्च शासादेशवसो स्थानिवद्भावेनैकानुबन्धत्वलाभे वस्वादेशो उकारोच्चारणन्तदनुबन्धकपरिभाषाया अप्रवृत्त्यर्थमिति वसोर्ग्रहणस्य सिद्धि । धातोरपि तर्हि ग्रहणं स्यादिति चेत् । वस्तुसादेशो सकारोच्चारणेन द्व्यनुबन्धयोर्ग्रहणमित्याशयात् । * पदान्तपदाद्योरेकादेशस्येति * ॥ तदुक्तम्भाष्ये । शकन्ध्वादिषु । वृक्षेच्छत्रम् अपचेच्छत्रमित्यादावसिद्धत्वमाशङ्क्य सम्प्रसारणङीप्सु सिद्ध एकादेश । कुत । पदान्तपदाद्योरेकादेशस्यासिद्धत्ववचनात् ॥ अत्र कैयट । पदस्येति वर्तते । अन्तादिग्रहणञ्च पूर्वसूत्रादनुवर्तते तेन पदादिपदान्तयोरेकादेशो ऽसिद्धो भवतीत्यर्थो लभ्यत इति । अत्र धात्वादेरित्यत आदिग्रहणम्पदान्ताद्वेत्यतोऽन्तग्रहणमनुवर्त्तत इति बोध्यम् । * वस्वेकाजादितीडिति * । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरितिसिद्धान्ताभिप्रायेणेदम् ॥ मूलन्दूषयन् स्वसिद्धान्तमाह । * परे तु पदावधिकेऽन्वाख्यान इति * । पदसंज्ञाप्रयोजकविभक्तिपर्यन्तविभागेन प्रकृतिप्रत्यययो स्थापनकृत्वाऽन्वाख्यान इत्यर्थ । * प्रतिपदविधित्वेनेति * । न च वस्वेकेतिसूत्रेऽपि वसोरित्यस्योच्चारणात्प्रतिपदविधित्वं समानमिति वाच्यम् । वस्वेकेतिसूत्रज पदवाक्यार्थबोधस्य एकाजाद्यर्थापेक्षत्वेन तदपेक्षया वसोरितिसूत्रजन्यवाक्यार्थबोधस्य पूर्वं सम्भवात् । वस्तुतस्तु प्रतिपदेत्यत्र पदशब्दो न वाचकपर । किन्तु पदसंज्ञायोग्यपर । एवञ्च पदसंज्ञाप्रयोजकविभक्तिप्रकृतिबोधकशब्दविशेषमुच्चार्य तदुद्देशेन विहितत्वम्प्रतिपदविधित्वम् । यथा स्वाम्पीत्यत्र नित्यात्परादपि नुम प्राक् प्रतिपदोक्तत्वेनाम्पूर्वमिति दीर्घो भवति । न च सेदुष पपुष इत्यादौ विभक्तौ न प्रकृतिभागस्य पदसंज्ञा भसंज्ञया बाधादिति वाच्यम् । तथात्वेऽपि प्रकृते पदत्वयोग्यताऽक्षतैव । योग्यताप्रयोजकत्वस्यैव विवक्षितत्वात् । एवञ्च वस्वेकाजादितिसूत्रस्य वसो परवलाद्यार्द्धधातुकस्येड्विधायकत्वन्न तु विभक्तिप्रकृतिबोधकशब्दविशेषोद्देश्यकविधित्वमिति नैतस्य तादृशप्रतिपदविधित्वम् । वसोरितिसूत्रस्थवसुशब्दस्तु आत्मान्तस्य संज्ञेति तादृशविभक्तिप्रकृतिबोधकत्वमस्त्येवेति प्रतिपदविधित्वेन सम्प्रसारणस्य पूर्वं प्रवृत्तिर्युक्तैव । न च पूर्वं सम्प्रसारणेऽपि जातस्य सम्प्रसारणस्यासिद्धत्वादिट् स्यादिति वाच्यम् । तस्या परिभाषाया अनित्यतया लक्ष्यानुरोधेनाप्रवृत्तिस्वी-

भावादिदः प्राप्तिरेव नेति सेदुषः इत्यादिसिद्धिरित्यकृतव्यूहपरिभाषा निष्फला लक्ष्यानुरोधात् पदावधिकमेवान्वाख्यानमित्याहुः । साहचर्यादिति । न च महत्यतेः क्विपि महतोपि धातुत्वसंभव इति वाच्यम् । औपदेशिकधातुत्वासंभवेन तत्साहचर्येणौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । सुहिनिति नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न । हिंसीत्यस्येदित्वादनिदितामिति नलोपो न । ध्वदिति । स्रंसु ध्वंसु अवस्रंसने क्विप् । अनिदितामिति नलोपः । वस्विति वत्वम् । विवक्षितइति ।

भाष्ये असुङ्ग्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादित्युक्तेरिति भावः । वस्तुतो वचनमेव न्याय्यं । विवक्षितसप्तम्यामपि विभक्तिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं परमपुमानित्यादौ स्वरप्रवृत्तौ दोषात् ।

बहुपुंसीति । विभक्तौ लिङ्गविशिष्टाग्रहणान्नासुङ् । विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः । पूज इति । पातेरि-

---

कारेपि लक्ष्यसिद्धिसम्भवात् । *निष्फलेति*। नन्वकृत व्यूहपरिभाषाया न कृतो व्यूहो निमित्तविनाशेपि कार्यस्थितिरूपो येरित्यधिकाया अस्वीकारे तस्थाविव त्यादौ पूर्वप्रवृत्तस्य दुत्वस्यानिवृत्ता रूपासिद्धिरिति चेन्न । स्तौतिस्तोभतीत्यादिनिर्देशेन सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये त्रैपादिकस्य पूर्वमप्रवृत्तिरिति ध्वननात् । ननु पदावधिकेऽन्वाख्याने यद्यपि परिभाषा विनापि सिध्यति तथापि क्रमेणान्वाख्यानपक्षेऽकृतेतिपरिभाषा स्वीकार्यैवेत्यत आह । * लक्ष्यानुरोधादिति* । *औपदेशिकेति* । महत इत्यादि । *भिन्नसान्तसंयोग इति*। औपदेशिकधातुसम्बन्धिभिन्नो यः सान्तसंयोग इत्यर्थः । विवक्षितइत्यस्य यथा लाभस्तत्प्रकारन्दर्शयति ।

* भाष्य इति * । * स्वरसिद्ध्यर्थमिति * । परमपुमानित्यत्र परत्वादेव सति पूर्वमसुङि कृते समासान्तोदात्तत्वस्य बाधकसुङ्‌ परः यथा स्यादित्येवमर्थमित्यर्थः । यदि सर्वनामस्थान इति विषयसप्तमी न स्यात्तदाऽन्तरङ्गत्वादादौ पुंशब्दोकारस्योदात्तत्वे सकारस्य स्वसनधर्मणो हलः स्थाने जायमानस्यादेशस्यान्तरतम्यादनुदात्तत्वम्प्रसज्येत । न चासुङि कृते उकारस्यान्तत्वहतामित्यसुङः पुनः स्वरः स्यादिति वाच्यम् । अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वात् । * इति भाव इति * । यदुपदेशिवद्भावेन साध्यन्तद्विषयसप्तम्यापि साधयितव्यमिति भावः । * वचनमेव * । असुङ्युपदेशिवद्वचनमिति वचनमित्यर्थः । * ततः पूर्वम् * । विभक्तिबुद्धिनिमित्तत्वेनबहिरङ्गादसुङः पूर्वमित्यर्थः । * स्वरप्रवृत्तौ * । समासान्तोदात्तत्वप्रवृत्तौ । * दोषात् * । परमपुमानित्यत्र

ठान्तरम् । स्त्रियामिति सूत्रे भाष्ये तु सूतेः सस्य पः ह्रस्वः म्सुन्प्रत्य-
त्क्रम् । वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला ।
नेति । सान्तेति दीर्घः । उशनेति । वशेः कनसि ग्रहिज्येति सम्प्रसार-
। अस्य सम्बुद्धाविति । एतच्च वृत्तौ वाचनिक पठित वश्धातौ । माध-
" संबोधने तूशनसस्त्रिरूपं सान्त तथा नान्तमथाप्यदन्त " मिति श्लो-
र्त्तिकमित्याह । भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रामाणिकाः । उशना
। अनेहा कालः । नञिहन एहचेत्यसुन् हन एहादेशश्च । सुव इति ।
तोरित्यस्य धात्ववयवाभिन्नासन्तस्येत्यर्थ इति भावः । अन्यथा समु-
स्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम् ।
अदसऔ ।अदस इति षष्ठी । तदोः स इत्यतः साविति वर्त्तते। औत्वं
ात्वापवाद. । ननु सौडौ इत्येवास्तु इति चेन्न । असावित्यत्र टिलोपे
नित्यत्वात्सत्व बाधित्वा त्यदाद्यत्वे ऽसावित्यसिद्धेः । असुक इति ।

---

समासान्तोदात्तत्वप्रवृत्तौ मकाराकारस्योदात्तस्याश्रयणप्रसङ्गात् । * स्त्रिया-
। * । *सूत्रभाष्ये स्थिति* । एतेन डुमसुन्प्रत्ययेनास्य साधनम्भाष्यविरुद्ध-
: सूचितम् । * निष्फलेति * । उच्चारणार्थत्वस्वीकारेऽपि लाघवाभावात् ।
सुव इत्यत्र मूले यथोक्तन्धातुभिन्नस्यासन्तस्येति तथा व्याख्याने धातुभि-
समुदायस्यासन्तत्वाद्दीर्घ स्यादेवेत्यत आह । * अधातोरित्यस्येति * ।
तत्यधातोरित्यत्र धातुपदन्धात्ववयवलाक्षणिकन्तत्र नञा समस्तमसो वि-
ाम तपदेन चासमर्थसमास सौत्रत्वाद् द्रष्टव्य ।
* षष्ठीति * । एवञ्चालोऽन्त्यपरिभाषयोपस्थितस्येद विशेषणमित्यदसो
धस्यान्त्यस्यौकार स्यात् सुलोपश्चेति सूत्रार्थ ।एव सति येन नाप्राप्तिन्या
त्यदादीनाम इत्यस्य बाधकन्तदाह । * औत्वन्त्यदाद्यत्वापवाद इति * ।
अदस इति * । पञ्चम्येवास्तु । तदो स इतिसूत्रादनुवर्त्तमानस्य सावि-
र अदस पञ्चम्या पञ्चम्यन्तत्वकल्पनया सोरेव डौआदेशो विधेय । विभक्ति-
रिणामक्लेशपरिहाराद्गुरोयेन तु सोडौ इत्येवास्त्वित्युक्तमित्याशयेन शङ्कते ।
तु सोरिति * । * टिलोप इति * । नित्यत्वादित्यादि । डित्वसामर्थ्याद्वि-
स्यादिः । * नित्यत्वात्सत्वम्बाधित्वेति * । न च त्यदादीनामिति सङ्ग्रा-
द्भ्यादसद इत्यस्य पार्थक्येन कल्पनायामदसो दः स इत्यशो न चरितार्थ-
तत्सामर्थ्यादिदमेव बाधन्त्यदाद्यत्वस्य बाधक भविष्यतीति वाच्यम् ।
त्वकेऽस्य चारितार्थ्यात् । ननु डौआदेश सत्यपि सम्भवे बाधनम्भवती-
ायेन त्यदाद्यत्वापवाद इति प्रथम डौआदेशे कृते परत्वाच्छब्दान्तरप्राप्त्या-
नित्य टिलोप बाधित्वा सत्वे पुनःप्रसङ्गविज्ञानन्यायेन टिलोपेऽसाविति सि-

अमुक इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायो ऽमुकशब्द इत्याहुः ।

एत ईद् ॥ बहुवचनशब्दो यौगिक इत्याह । बह्वर्थेति । तेनामी इति सिद्धम् । पश्चादुत्वेति । उत्वेत्युपलक्षणमीत्वस्यापि ।

ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह । नमुने इति । कर्त्तव्ये कृते चेति । एवञ्च न इति विषयसप्तमीति भावः । भाष्ये तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोप्याक्षिप्त इति व्याख्यातम् । मु इति समाहारद्वन्द्वः कृते चेत्युक्तेर्मुत्वे सुपि सुपिचेति दीर्घो न । अमीभिरिति । नेदमदसोरित्यैस्न ॥

इति हलन्ताः पुंलिङ्गाः ॥

---

द्धम् । न च सकृद्गतिन्यायाङ्गीकारे कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाट्टिलोपप्रवृत्ते स्वीकारेऽपि वा दोष एवेति वाच्यम् । प्रकृतसूत्रेऽदस इति योगं विभज्य तदो स इत्यनुवर्त्यादस एव दकारस्य सत्वं नान्यस्य दकारस्येतिनियमेनानन्त्यग्रहणप्रत्याख्यानरीत्याऽधुनापि विभक्तस्यादस इत्यस्यारम्भसामर्थ्यात्त्यदाद्यत्वबाधकतयेष्टसिद्धेरिति चेन्न । अनन्त्यग्रहणप्रत्याख्यानरीत्या दोषाभावेऽपि योगविभागादिक्लेशेन प्रत्याख्याने गौरवमित्यनन्त्यग्रहणमत्यावश्यकमिति सूत्रकारमतम् । तन्मते टिलोपे पूर्वोक्तरीत्या पूर्वप्रवृत्तेऽन्त्यस्यास्सत्वाप्राप्तौ रूपासिद्धिप्रसङ्ग इत्याशयात् ।

एत ईदितिसूत्रे बहुवचनइत्यस्य बहुवचने पर इत्यर्थकरणे पूर्वपरयोरेकादेशे दात्परैकारस्य बहुवचनपरत्वाभावादसङ्गतिः स्यादत आह । * बहुवचनशब्द इति * । एवञ्च मूले विभक्तिकार्यप्रागित्यस्य मध्यमणिन्यायेन पूर्वपराभ्यां वितथं द्रष्टव्यम् ।

एकवचनोपपत्तये आह । मु इतिसमाहार इति । * ऐस्नेति * । किन्तु बहुवचने हल्येदित्येत्वे एत ईदितीकार इति शेषः ॥

इति हलन्ताः पुंलिङ्गाः ॥

नहो धः ॥ झलोझलीति पदस्येति स्कोरित्यतोन्त इति चानुवर्त्तते झलि परे पदान्ते विद्यमानस्येत्यर्थः । अलोन्त्यस्येत्येतल्लभ्य हस्येति । उपपूर्वाण्णहबन्धनइत्यतः क्विप् । नहिवृतीति पूर्वपदस्य दीर्घः । सोर्हल्ङ्यादिलोपे धत्वजश्त्वचर्त्वादि । दलोपधत्वे इति । पूर्वपदान्तस्य लोपो धातोः सस्य षत्वम् । आदेशप्रत्यययोरिति तु न, षत्वे पदादादिरिति पक्षे सात्पदाद्योरिति निषेधात् । हस्य घ इति कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः। उष्णिगञ्च्वति निर्देशात्कुत्वस्य जश्त्वे नासिद्धत्वं स्वरीत्या तु ढडगका इति बोद्धव्यम् । द्यौरिति । दिव औदित्यौत्व यण् । चतस्र इति परत्वादाम बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनराम्नेति स्थानिवत्सूत्रे भाष्ये । चतसृणामिति । नतिसृति दीर्घनिषेधः । सर्वाशब्दवदित्यर्थः । अत एव सर्वनाम्नो वृत्तिमात्रइति न पुंवत्त्वम् । शब्दपरस्य कदापि सर्वनामत्वाभावादिति भावः ।

यः सौ ॥ पुंस्यपबाधात्क्लीबे सोर्लुका लोपात् स्त्रियामिदम्॥ वागिति वचः क्विब्वचीत्यादिना क्विप् दीर्घोऽसम्प्रसारणञ्च ।

अपोभि ॥ अच उपसर्गात्त इत्यनुवर्त्तते । अनिति न प्रत्ययो व्याख्यानात् । दिगिति । दिश् अतिसर्जने क्विप् जश्त्वचर्त्वे । जुषीभीतीत्यतः क्विप् । सहस्य सभावे सजूः । अमूभिरिति । अदन्तत्वाभावादेत्वाभावेनैत ईदित्यस्याभावे मुत्वमेव ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

---

* पदान्ते विद्यमानस्येति * । न च हस्यैव पदान्तत्वच तु तस्य पदान्ते विद्यमानत्वमिति वाच्यम् । पदचरमावयवस्यैव व्यपदेशिवद्भावेन पदान्ते विद्यमानत्वसम्भवात् । * पदादादिरिति पक्ष इति * । एवञ्च यन्मूलकता षत्वादो निपातनमाश्रित तत्सिद्धान्तरीत्या॥*कैयटादिमत इति*। यथा वीप्सागर्भबहुव्रीह्याश्रयणात् कुत्व षत्वस्य बाधकन्तथा ढत्वस्यापि बाधकमिति भाव ।

* व्याख्यानादिति * । अद्भि सस्कृतमितिनिर्देशस्य दर्शनमूलकादित्यर्थ । यथा अणो प्रगृह्य इत्यत्राण इत्युपात्तन्तादृशाण्शब्द प्रयोगे नास्तीति द्वितीयस्यौपदेशिकस्य ग्रहणन्तथा सानुबन्धकस्य ग्रहणञ्चेत्प्रकृतेऽपि विवक्षित स्यात्तदपि निर्गतानुबन्धकस्य पकारोपलक्षिताकारस्योद्देश्यता स्यादिति प्रकृते पकारविशिष्टस्य प्रयोगे उपलम्भादद्भिरिति सूत्रे निर्देशो नोपपद्येतेति न प्रत्ययग्रहणम् । * सजूरिति * । षत्वस्यासिद्धत्वाद्रुत्वम् । र्वोरितिदीर्घ । * मुत्वमेवेति * । इदम भिस्येव किन्तु यद्भिमर्को पुंस्येत्व तस्यां सर्वत्र ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

दत्वमिति । वसुस्रंसुध्वंस्वित्यस्य पदाधिकारस्थत्वात्तदन्तेपि दत्वमेवमाङ्-त्वादावपि। पूर्वपदस्यैवेति । प्रत्ययलक्षणेनेति भावः। अत एव राजपुरुषादौ नलोपादिसिद्धिः । उत्तरपदत्वे चेति । उत्तरशब्देनोत्तरपदं लक्ष्यते उत्तर-पदशब्दश्च समासचरमावयवे रूढः । तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न पदादिविधौ त्वयं निषेधो नेत्यर्थः । तेन पर-मवाचेत्यादौ न कुत्वं दधिसेचावित्यादौ सात्पदाद्योरिति षत्वनिषेधश्च निरु-पपदादेव विचि षष्ठीसमासोऽत्र सोपपदाद्विचोऽनभिधानमिति कैयटः । सेचयतेः क्विबित्यन्ये । पदादिविधिश्च प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव । तेन परमधुधावित्यादौ भष्भावो न । उत्तरपदादिः कर्णो वर्णलक्षणादित्यादौ तूत्तरपदशब्दस्य समासचरमावयवमात्रे रूढेर्न दोषः । अयञ्च निषेध उत्तर-पदस्य कार्यित्व एवेति हरदत्तेनोक्तम् । बहुच्पूर्वके बहुवाचौ बहुसेचावि-त्यादावपि न दोषः । बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणमिति वचनान्तरात् पूर्ववार्तिकमपि उत्तरपदत्वे च पदादिविधावित्येव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितः, प्रत्या-ख्यानोत्तरं पुनर्नञ्घटितैतद्वचनपाठेनेति न सु लिखितः । उत्तरपदशब्देन

---

विमलदिवीत्यत्रोत्पन्नाशङ्काव्यावृत्तये मूले आह । * अन्तर्वर्तिनीमित्यादि * । * अत एव * । पूर्वपदस्य पदत्वादेव । * दधिसेचाविति * । निरुपपदात्सि-चेर्विचि सुप्सुपेत्यनन्तरं समास इति पक्ष इदम् । * भष्भाव इति * । तस्य च स्तुत पदान्ते कार्यविधायकत्वेपि पदादिशब्दानुवादेन विधायकत्वाभाव इति भावः । ननु सुकुर्ण दाक्षकर्ण इत्यादौ कर्णो वर्णलक्षणादित्यनेन वर्णलक्षण-वाचकात्परो यः कर्णशब्द उत्तरपदभूतस्तस्य आद्युदात्तो भवतीत्यर्थकेनाद्युदात्त-त्वञ्च प्राप्नोतीत्यत आह ।* उत्तरपदादिरिति * । एवञ्च परिभाषायामुत्तरपदशब्दः केवलयौगिक एव विवक्षित इति भावः ।*उत्तरपदस्य कार्यित्व एवेति*।तत्फलं स्नापकुम्भवापेनेत्यत्र पदव्यवायेपीतिसूत्रेण निषेधसिद्धिः अधिकमन्यत्रोक्तम् । नन्वेवं बहुच्पूर्वके बहुवाचावित्यादौ दोष एवेत्यत आह । *बहुच्पूर्वक इति*। * इत्येवमेव पठितमिति * । इदञ्चैतादृशनियमेन प्रलुप्य तदेवोत्तरपदत्वे चा-पदादिविधावित्यनेन प्रदर्शितम् । नन्वेतावता वार्तिकेनारम्भपक्ष एव लब्धो न प्रत्याख्यानपक्ष इत्यत आह । * एतत्प्रत्याख्यान इति * ।*गुरुतर इति * । स च शब्दरत्ने विवेचितः । * नञ्घटितैतद्वचनपाठेनेति * । पदादिविधावेव प्र-त्ययलक्षणञ्च पदान्तविधाविति नियमार्थेनोत्तरपदत्वे चापदादिविधावितिवच-नेनेत्यर्थः । * न सु इति*। प्रत्याख्यानप्रकार इत्यर्थः ।नन्वेवमपि पूर्वदण्डिप्रिय-इत्यत्र त्रिपदे बहुव्रीहाववान्तरतत्पुरुषे दण्डिशब्दस्योत्तरपदत्वात्प्रत्ययलक्षणप्रति-

मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहण व्याख्यानात् । तेन पूर्वदण्डिभिय इत्यादाववान्तरतत्पुरुषोत्तरपदेपि नलोपासिद्धिः । कादेशोनेति । इदम्शब्दे यः साविति च नेत्यपि बोद्धम् । वक्तव्य इति । द्वितीयाटौस्स्विति अत्र संबध्यते । अयश्च सामर्थ्याल्लुका लुप्तेऽपि भवति । एनादेशोपिएनादित्यादिसिद्ध्यर्थं वक्तव्यः येननाप्राप्तिन्यायेनैतदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेः।अत एव भाष्ये नपुंसकैकवचने एनद्वक्तव्यः कुण्डमानय प्रक्षालयैनदित्युक्तम् । अत्र नपुंसकैकवचने इत्युक्त्वा ऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो यद्येनदित्यादिरुक्तिर्यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फल्गुत्वामात्रोत्तरमुक्तम्।सिद्धान्ती तु किमुच्यते नपुंसकैकवचनइति सर्वत्र एनदेव वक्तव्य इत्येवशब्दैः प्रत्याख्यान कुर्यात् । अनयोरप्यादेशयोरेतद-

---

षेधे पदत्वाभावान्नलोपो न स्यादत आह ।*उत्तरपदशब्देनेति * । व्याख्यानादिति * । वार्तिकप्रत्याख्यानपक्षेऽसर्वनामस्थाने यचीत्यत्र सुपित्यनुवर्त्य यकाराद्यजादौ सर्वनामस्थाने पूर्वम्पदम् मध्ये चेत्तत्परक सुबन्तमस्ति तदपि पदमेतिरीत्या व्याख्याने निर्दिष्टपरिभाषयाऽव्यवहितसुबन्तस्यैव पदत्वनिषेधो लभ्यते तदेकवाक्यतया वार्त्तिकारम्भपक्षेऽपि तथैव युक्तमित्यभिप्रायकात् । एवञ्च त त्समासप्रयोजनैकार्थीभावप्रयोज्यसमासीयचरमपदाव्यवहितपूर्वत्वानाक्रान्तस्य पदत्वव्यपदेशो कर्त्तव्ये तस्य कार्यित्वे च प्रत्ययलक्षणप्रतिषेध इति बोध्यम् । *अयश्चेति* । एनदादेशश्चेत्यर्थ । * सामर्थ्यादिति * । द्वितीयापदोपस्थापिते अमि एनदित्येतद्वाक्यबोधितस्यादेशस्य विधानम्प्रति यन्निमित्तत्वाद्द्वितीयैकवचनस्य तत्सामर्थ्यादित्यर्थं । * एनादेशोपीति * । पुंसीति शेष । ननु सूत्र एवैनत्कर्त्तव्य एनमिति तु त्यदाद्यत्वेन न सिद्धमित्यत आह । * येन नेति * । * अत एव * । एनादेशस्यावश्यकत्वादेव ।* अन्यत्रैनो वक्तव्य इतीति *। अन्यथा एनादेशस्य श्रवणमेव न स्यात् । ननु त्यदाद्यत्वस्यैनदादेशो यद्यपवादस्तदा भाष्ये यद्येनत्क्रियते एनो न वक्तव्यस्त्यदाद्यत्वेन सिद्धमित्युक्तन्तद्विरुध्येतेत्यत आह । * अपवादत्वमजानत इति * । तर्ह्यग्रे भाष्ये एनादेशस्यावश्यकत्व कुतो नोक्तमत आह । * भाष्यकृतात्विति * । * अत्र * । एकदेश्युक्तौ । अत्र विशेषमाह । * अनयोरिति * ।*एतदस्त्रतसोरिति* ।ननु सूत्रान्तरसाहचर्याश्रयण सूत्रान्तरस्य व्यवस्थापकमित्येतत्सिद्धा तद्विरुद्धमिति चेन्न । तस्मिन्सूत्रे त्रतसोरित्युपादानेन तयोश्च सर्वनामत्वसम्भवनमित्युपसर्जने तेन सूत्रेणादेशाभाव एव किन्तु प्राधान्येन प्रसिद्धस्यैवसर्वार्थवाचकस्यैतच्छब्दस्य तस्मि

स्त्रतसोरित्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः त्यदाद्यत्वेन सिद्धमिति भाष्याशङ्कतिश्च । एनतमादायैनादेशप्रत्याख्यानपरं यद्येनत्क्रियतइत्यादि भाष्यस्त्वेकदेश्युक्तिरिति भाष्यप्रदीपोद्द्योते निरूपितम् । अन्वादेशविषयेदमेतदोः समासस्यानभिधानमेव । यद्येनत्क्रियते एनो न वक्तव्यः कथमेनमित्यादि त्यदाद्यत्वेन सिद्धं यद्येवमेतच्छ्रितको न सिद्ध्यति । एनच्छ्रितक इति प्राप्नोति । यथालक्षणमप्रयुक्ते इति भाष्यात् । ब्रह्मणी इति । न सयोगादिति निषेधादल्लोपो न । रोसुप्यहर्भातीति । अहामिति रुत्वे ऽहो भातीति स्यादिति भाव. । नलोपे प्राप्तइति । न च नलोपे ऽकारस्य रोरेवाविशेषाभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम् । सम्बुद्धौ नलोपनिषेधेनाहर्गच्छेत्यादावुत्वाभावेन दीर्घाहो निदाघेत्यादावुत्वसम्पादनेन चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुकरणेन नान्तस्याहन्शब्दस्येति व्याख्यानान्नलोपोनेति वाच्यम् । दीर्घाहो निदाघेत्यादौ सम्बुद्धौ प्रवृत्त्या ऽ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः । आवर्त्येति । आवृत्तौ मानं च रूपरात्रीति वार्तिकमेव । अन्यथा नलोपे ऽकारस्य रेफादेशेनैव सिद्धे

---

न्सूत्रस्थानित्येन ग्रहणमित्यर्थाधिकारानुरोधेन प्रकृतसूत्रेऽपि सर्वनाम्न एवैतच्छब्दस्य ग्रहणमित्येव साहचर्यपदेन विवक्षितमित्याशयात् । * न प्रवृत्तिरिति * । एतेनोपसर्जने एनदादेशस्य चारितार्थ्येन त्यदाद्यत्वादपवादत्वोक्तिर्विरुद्धेति दूषणस्य नावकाश इति सूचितम् । तत्रार्थे भाष्यमपि साधकमित्याशयेनाह । * त्यदाद्यत्वेनेति * । एतमादायेति इत आरभ्य पूर्वोक्तमेवार्थस्तस्यैव दृढीकरणाय निरूपितमित्यन्तेन पुनराह यद्यप्येनत्त्यदाद्यत्वापवादत्वेनेत्यनेनदो दान्तत्वमुक्तमिह तु ता तमुक्तमिति विरुद्धमाभाति । तथापि समाने दान्तेपि चर्त्वे सति रूपे न विशेष इत्याशयेन तान्तोल्लेख । ननु यद्युपसर्जनेऽस्यादेशस्याप्रवृत्तिस्तदा यद्येवमेनश्रितको न सिध्यति एनच्छ्रितक इति प्राप्नोतीतिभाष्यविरोध । तत्रादेशोच्चारणन्तु सामर्थ्याल्लुप्ता लुप्तेपि भवतीतिपूर्वमुक्तन्तदभिप्रायेणेत्यत आह । * अन्वादेश इति * । * विशेषाभावेनेति * । नकारस्य रुत्वे सति यदुत्वम्भवति तस्याधुनाऽप्राप्ते । * नकारोच्चारणसामर्थ्येनेति * । अह्न इति वक्तव्ये विभक्तिलोपङ्कृत्वाऽकारोत्तरनकारे प्राप्तस्यापि लोपस्याकरणनेत्यर्थ । * स्यामादौ व्यावृत्त्येति * । नकारोच्चारणेन यत्र न नकारस्य श्रवणं तत्र रुत्वस्याप्रवृत्तिरितिकल्पनेनेत्यर्थः । पूर्वपक्षिमते स्यामि नलोपस्य सत्त्वेन तत्र रुत्वव्यावृत्तिस्तन्मते स्यादिति भाव । * अन्यथा * । आवृत्त्यभावे । ननु आगच्छाहो रूपन्द्रक्ष्यामि आग-

तद्वैयर्थ्यं स्पष्टमेव । भाष्यप्रामाण्याच्च तस्य सम्बुद्धावप्रवृत्तिः । तज्ज्ञापकसिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः । आवृत्तस्य पदान्तेऽहन्निति निपात्यत इत्यर्थः । इदमसम्भव एवापवादत्वमिति वार्त्तिकमते ऽहन्नित्यस्य नलोपोत्तरञ्चारितार्थ्याभिमानेन । वस्तुतः सत्यपि सम्भवे बाधनं भवतीति भाष्यसिद्धान्तात् रुत्वरत्वे नलोपापवादभूते एव । निषेधविषयेपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वान्निषेधेनापि तस्य बाध इत्यन्यत् । एतेन सम्बुद्धौ चारितार्थ्यमित्यपास्तम् । ध्वनितञ्चेदमपवादो रुर्नलोपं बाधिष्यतइत्यर्थकभाष्येण । एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्का तत्समाधानादि वार्त्तिकानुसारिणोरित्यलम् । तदन्तस्यापीति । पदाधिकारस्थत्वात् । ग्रहणवतेति निषेधस्तु प्रत्ययविधिविषय इत्यसमासे निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः । तस्यासिद्धत्वादिति । अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम् । दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोध्यः । सम्बुद्धौ त्विति । सुपोत्र हल्ङ्यादिलोपादसम्बुद्धावित्युक्तेर्दीर्घाभावे रुत्वे हशि चेत्युत्वे आद्गुणः । स्रग्वीणीति । इन्ग्रहणेऽनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः । बहुवृत्रहाणीति । अत्र यद्वक्तव्यन्तदुक्तम् । पदान्ते कुत्वमिति । किन्प्रत्ययस्येत्यसिद्धत्वाद् व्रश्चेति षत्वे कुत्वमित्यर्थः । षत्वन्तु स्पृष्टमित्यादौ सावकाशमिति भावः । भाष्यप्रयोगादिति । अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यते ते-

---

च्छाहो रात्रिरेषा गतेत्यादौ रुत्वकृतो विशेष स्पष्ट एवेत्यत आह । * भाष्यप्रामाण्याच्चेति * । वार्त्तिकस्य ज्ञापकतापरं यद्भाष्यन्तत्प्रामाण्यादित्यर्थः । ननु तद्भाष्यप्राण्यात्र नलोपो नेत्येव कल्पनमस्त्वित्यत आह । * तज्ज्ञापकेति * । आवृत्तेन तेन सूत्रेण यथा नलोपाभावलाभस्तत्प्रकारमाह । * आवृत्तस्येति * । मूलकारोल्लिखिताशङ्कासमाधानविषये विशेषमाह । * इदमिति । * नलोपापवाद एवेति * । येन नाप्राप्तिन्यायेनेत्यादि । ननु सम्बुद्धौ नलोपाप्राप्तिविषये तयोश्चारितार्थ्यात्कथं येन नाप्राप्तिन्यायप्रवृत्तिरत आह । * निषेधविषय इति * । ध्वनितञ्चेदमिति * । येन नाप्राप्तन्यायविषयत्वमित्यर्थ । * प्रत्ययविधिविषय इति * । ज्ञापकसाजात्यादित्यादि । * तस्य * । रुत्वस्य । ननु यदि रुत्वरत्वयोरसिद्धत्वन्तदा पूर्वन्दीर्घ एव स्यादिति कथमेतदित्यत आह । * अकृतेति * । ननु बहुवृत्रहाणीत्यत्रात्पूर्वत्वाभावात्कथं णत्वमत आह । * अत्र यदिति । * अत्पूर्वग्रहणं ह्रस्वानिकवर्गाभाववस्त्वन्तेरुपलक्षणमित्यादि । सृज्धातुविषये षत्वस्य अपवादत्वात्कथमसिद्धत्वमतस्तस्य चारितार्थ्यमाह । * षत्वन्त्विति * । भाष्यप्रयोगस्य विशेषविषयत्वमुपपादयति । * अनेनेति * । * अनव्ययेति * । भा

नासृगित्यत्र न दोषः । कुत्वापवाद इति । सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेपि विशिष्य षत्वसाधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एवोपयद्भिकाम्यतीति काम्यच्सूत्रस्थो भाष्यप्रयोगः सङ्गच्छते । निपातनादेवेति । निपातनेन त्वनयोरुपधावादामन्त्रत्विमात्रतयोरत्वं, कुत्वन्तु शास्त्रेणैव । एतेन निपातनादपदान्तेपि कुत्वापत्तिरिति निरस्तम् । असृक्शब्दास्त्विति । इदमेव न्याय्यम् । ऊर्गिति । अयं पुलिङ्गोपि नपुंसकस्येति सूत्रे बहुवचने ऊर्ज्जि इति कैयटात् । नरजानामिति । बहूर्जिनुम्प्रतिषेध इति वार्त्तिकरीत्येदम् । अच परो यो झल् तदन्तस्य नुमिति तत्रत्याख्यानात्भाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोद्ध्यम् । न चैव कुण्डानीत्यसिद्धिः । इकोचीति सूत्रे ऽच' सर्वनामस्थाने इत्यनुवृत्त्या ऽनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच सर्वनामस्थाने इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टम् । काष्ठतक्षीत्यादौ दिव औदिति सूत्रभाष्योदाहृतेऽच' परझल्त्वे जातेराश्रयणान्न दोष' । अन्त्यादिति । इद वा-

---

घ्योश्च प्रयोगसाजात्यात् । ननु सृष्टमित्यादौ झलि षत्वस्य सावकाशत्वमुचितमिति कथङ्कृत्वापवादत्वमत आह । * सृजियज्योरिति * । अत एव * । पदान्तस्य पूर्वम्प्रवृत्तिस्वीकारादेव । ननु ऋत्विक्शब्दयोर्निपातनेन कुत्वस्वीकारे निपातनस्याच्यपि कुत्वसाधकत्वापत्तिरत आह । * निपातनेनेति * ।* अनयो *। ऋत्विग्दधृक्शब्दयो ।* इदमेव न्याय्यमिति *। परत्वप्राप्तिशङ्काप्येव सति न भवतीति भावः । ननु पूर्वोक्तरीत्याऽसृक्शब्दसाधनेऽव्ययपूर्वपदप्रकृतिस्वर अनुपदोक्तरीत्या साधने त्वन्तोदात्तत्वापत्तिरिति स्वरभेदापत्तिरिति चेन्न । लोके यथाद्युदात्तोऽयमिष्टस्तद्रोणादयो बहुलमिति बहुलवचनेन साध्य । वेदे तु बहुलञ्छन्दसीत्यस्तत्वेनेत्याशयात् ।*वार्त्तिकरीत्येति *। तस्मिन्बहूर्जीति पाठन केवल ऊर्जशब्दे तत्प्रवृत्ति सम्भतेव । * न चैवमिति * । अच परो यो झल् इतिव्याख्यानेन । * इत्यनुवृत्त्येति * । अचपदम् पञ्चम्यन्तमेवेह सर्वनामस्थान इति सप्तमीबलात् षष्ठ्यन्तम्भविष्यति । नन्वच इति पञ्चमी नपुंसकस्येतिसूत्रे कृतार्थो । सर्वनामस्थान इति सप्तम्यपि सर्वनामस्थाने परत उगितो नुम्विधायकत्वेनोगिदचामिति सूत्रे युजेरसमासइति सूत्रे च चरितार्थेति प्रकृतसूत्रे उभयनिर्देशे पञ्चमीनिर्देशो बलीयानितिपरिभाषया सर्वनामस्थान इतिसप्तम्य तस्यैव षष्ठ्यन्तत्वम्भविष्यतीति चेन्न । सर्वादीनीति सर्वनामानीतिनिर्देशेन पञ्चम्यन्तस्यैव षष्ठ्यन्तत्वकल्पनात् । युक्त्यन्तरमाह । * अनुवृत्तिसामर्थ्यादिति * । नन्वेवं काष्ठतक्षीत्यत्र नुम्न स्यादच परस्य झलोऽभावादत आह । * काष्ठेति * । झल्त्वजातेरिति * । वर्णग्रहणे जातिग्रहणमितिपरिभाषाया सत्त्वात् । * बहूर्जे

चनिकमेव बहूर्जशब्दमात्रविषयकम् । बहूर्जीति । श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोध्यः । स्थानिवत्त्वादिति । कौ लुप्त नेति स्वसार्वत्रिकमिति भावः । स्पष्टश्चेद् दीर्घीवेवीटामिति सूत्रे कैयटे ।

जायन्ते नव सौ तथाऽमि च नव भ्यामिस्भ्यसा सङ्गमे
पद्मसंख्यानि नैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि त—
ज्जानन्तु प्रतिभास्ति चेन्निगदितु षाण्मासिकोत्रावधि"रिति

प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह । गवाक्शब्दस्येति । शब्दपरत्वेनापूजार्थकत्वान्नस्य लोपः । भेदत इति । आद्यादित्वात्तसिः । भेदेनेत्यर्थः । नवेति । द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः । अग्रेपि प्रत्येकमेव संख्यान्वयः । गवागिति । सोर्लुका लुप्तत्वान्नुम्न । षण्णा-

---

शब्दमात्रेति * । बहूर्जि नुम्प्रतिषेध इति वार्त्तिकानन्तरमस्य पाठादिति । * अङ्लोपस्येति * । यङोऽकारलोपस्येत्यर्थः । * जायन्त इति * । अस्य नव स्वादिस्यादौ प्रत्येकं सम्बन्ध । * द्वन्द्वान्ते श्रूयमाणस्येति * । ननु द्वन्द्वान्ते श्रूयमाणस्य द्वन्द्वघटितसमासघटकस्य प्रत्येकं सम्बन्धोऽन्यत्र दृष्ट इदन्तु न तथेति कथमेतदिति चेन्न । नेदन्द्वन्द्वान्त इत्यपूर्वं वचनङ्किन्तु साहित्यविशिष्टानान्द्वन्द्वविधानात्साहित्यस्य चैकधर्मावच्छिन्नान्वयित्वरूपतयाऽन्वयितावच्छेदकावच्छिन्नस्य च समासाघटकपदोपस्थापितस्यापि धवखदिरौ छिन्धीत्यादिवाक्यजन्य शाब्दबोधे भानात्तद्वत्र विभक्तिव्यवधानेऽपि नवपदार्थेन्वयो भविष्यतीति भाव । * प्रत्येकमेवेति * । प्रत्येकान्वितनवपदसाहचर्यात् । सोर्लुका लुप्तत्वान्नुम प्राप्तेरेवाभावाच्चिन्त्यमेतदिति । अत्राहु । यथा पुंसि हल्ङ्यादिलोपेपि प्रत्ययलक्षणेन नुमागमो भवति तथात्रापि कुतो नेत्याशङ्कावारणायाह । * लुका लुप्तेति * । एतेन लुका लोपो नपुंसके भवतीति पक्षस्य तेनास्य नपुंसकत्वादिति स्मारितन्तन्नु लुका लोपेन न नुमभावे हेतुत्वेनोपात्त । एवञ्च नपुंसकत्वान्न पुंसके च सर्वनामस्थानत्वाभावादिति विशेषो बोध्य इति । अपरे तु गवाक्शब्दस्येतिपदस्य गवाक्शब्दस्य शब्दसामानाधिकरण्येन पुंलिङ्गतया तत्रैव प्रत्ययलक्षणे नुमाशङ्कायामेवमुक्तप्रत्ययलक्षणनिवृत्त्यर्थमिति समगदिरे । अन्ये तु गवाक्शब्दौ द्वौ । एक सुबन्ते गोशब्दे उपपदे अञ्चते क्विबन्त । अपरो निरुपपदाञ्चे क्विनि कृते तदन्तात्सुबुत्पत्त्यनन्तरं सुबन्तस्याच्शब्दस्य गोशब्देन सह समासे कृते निष्पन्न । तयोर्मध्ये प्रथमस्य नपुंसकत्वेपि द्वितीयगवाक्शब्दे उत्तरपदस्य पुंलिङ्गतया तत्र उत्पन्नो य सुप् समाससंज्ञाप्रयोजक प्रत्ययलक्षणेन तमाश्रित्य नुमाशङ्कानिवारणायोक्तमत्र लुका लुप्तत्वादितीति वदन्ति । वस्तु-

नाश्वगित्यत्र न दोषः । कुत्वापवाद इति । स्रुजियुज्योः पूर्वोत्तरसाहचर्येण पदान्तेपि विशिष्य पदनाधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एवोपपद्रक्काम्यतीति काम्यच्प्रत्ययो भाष्यप्रयोगः सङ्गच्छते । निपातनादेवेति । निपातनेन त्वनयोरपवादादप्रवृत्तिमात्रबोधनं, कुत्वन्तु शास्त्रेणैव । एतेन निपातनादपदान्तेपि कुत्वापत्तिरिति निरस्तम् । अश्नरशब्दस्त्विति । इदमेव न्याय्यम् । ऊर्गिति । अथ पुलिङ्गोपि नपुंसकस्येति सूत्रे बहुवचने ऊर्ञ्जि इति कैयटात् । नरजानामिति । बहूर्जिनुम्प्रतिषेध इति वार्त्तिकरीत्येदम् । अचः परो यो झल् तदन्तस्य नुमिति तत्प्रत्याख्यानभाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोध्यम् । न चैवं कुण्डानीत्यसिद्धिः । इकोचीति सूत्रे ऽचः सर्वनामस्थाने इत्यनुवृत्त्या ऽनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च सर्वनामस्थाने इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टम् । काष्ठतक्षीत्यादौ दिव औदिति सूत्रभाष्योदाहृतेऽचः परझल्त्वे जातेराश्रयणान्न दोष । अन्त्यादिति । इद वा-

---

ख्योक्तप्रयोगसाजात्यात् । ननु सृष्टमित्यादौ झलि परस्य न्यायप्राप्तत्वमुचितमिति कथं कुत्वापवादत्वमत आह । * स्रुजियुज्योरिति * । अत एव * । परस्य पूर्वस्मिन्प्रवृत्तिस्वीकारादेव । ननु ऋत्विग्दधृक्शब्दयोर्निपातनेन कुत्वस्वीकारे निपातनस्यान्यपि कुत्वसाधकत्वापत्तिरत आह । * निपातनेनेति * । * अनयोः * । ऋत्विग्दधृक्शब्दयोः । * इदमेव न्याय्यमिति * । पदप्राप्तिशङ्काप्येवं सति न भवतीति भावात् । ननु युवाचरीत्याऽयुव्शब्दसाधने ययपूजयेत्प्रस्तुतिस्वर अनुपदोक्तरीत्या साधने त्वन्तोदात्तत्वापत्तिरिति स्वरभेदापत्तिरिति चेन्न । लोके यथायुद्ध सोऽयमिष्टस्तदोणाद्यो बहुलमिति बहुलवचनेन साध्य । वेदे तु बहुलं छन्दसीत्यस्त्वेवेत्याशयात् । * वार्त्तिकरीत्येति * । तस्मिन्बहूर्जीति पाठेन केवलऊर्ज्शब्दे तत्प्रवृत्तिः सम्भवत्येव । * न चैवमिति * । अच परो यो झल् इति व्याख्यानेन । * इत्यनुवर्त्यैवेति * । अच्पदम् पञ्चम्यन्तमेवेह सर्वनामस्थाने इति सप्तमी बलात् षष्ठ्यन्तं भविष्यति । नन्वच इति पञ्चमी नपुंसकस्येति सूत्रे कृतार्था । सर्वनामस्थाने इति सप्तम्यपि सर्वनामस्थाने परत उगितो नुम्विधायकत्वेनो गिदचामिति सूत्रे युजेरसमासइति सूत्रे च चरितार्थेति प्रकृतसूत्रे उभयनिर्देशे पञ्चमीनिर्देशो बलीयानितिपरिभाषया सर्वनामस्थाने इतिसप्तम्यन्तस्यैव षष्ठ्य न्तत्वम्भविष्यतीति चेन्न । सर्वाणीनीति सर्वनामानीतिनिर्देशेन पञ्चम्या तस्यैव षष्ठ्यन्तत्वकल्पनात् । युक्त्यन्तरमाह । * अनुवृत्तिसामर्थ्यादिति * । नन्वेवं काष्ठतक्षीत्यत्र नुम्न स्यादच परस्य झलोऽभावादत आह । * काष्ठेति * । झ ल्त्वजातेरिति * । वर्णग्रहणे जातिग्रहणमितिपरिभाषाया सत्वात् । * बहूर्ज

चनिक्रमेण यद्गूर्जशब्दमात्रविषयकम् । बहूर्ज्जीति । श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोद्ध्यः । स्थानिवत्त्वादिति । कौ लुप्तं नेति त्वसार्वत्रिकमिति भावः । स्पष्टञ्चेदं दीर्घाविचीटामिति सूत्रे कैयटे ।

जायन्ते नव सौ तथाऽमि च नव भ्यामिस्भ्यसा सङ्गमे
षट्सङ्ख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि त-
ज्जानन्तु प्रतिभास्ति चेन्निगदितु पाण्मासिकोत्रावधि"रिति

प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह । गवाक्शब्दस्येति । शब्दपरत्वेनापूजार्थकत्वान्नस्य लोपः । भेदत इति । आद्यादित्वात्तसि. । भेदेनेत्यर्थ. । नवेति । द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येक नवेत्यर्थः । अग्रेपि प्रत्येकमेव सङ्ख्यान्वयः । गवागिति । सोर्लुका लुप्तत्वान्नुम्न । षण्णा-

---

शब्दमात्रेति * । यहार्जि नुम्प्रतिषेधइति वार्त्तिकानन्तरमस्य पाठादिति । * अल्लोपस्येति * । यङोऽकारलोपस्येत्यर्थ । * जायन्त इति * । अस्य नव साविस्यादौ प्रत्येक सम्बन्ध । * द्वन्द्वान्ते श्रूयमाणस्येति * । ननु द्वन्द्वान्ते श्रूयमाणस्य द्वन्द्वघटितसमासघटकस्य प्रत्येक सम्बन्धोऽन्यत्र दृष्ट इदन्तु न तथेति कथमेतदिति चेन्न । नेदं द्वन्द्वान्त इत्यपूर्व वचनङ्किन्तु साहित्यविशिष्टानान्द्वन्द्वविधानात्साहित्यस्य चैकधर्मावच्छिन्नान्वयित्वरूपतयाऽन्वयितावच्छेदकावच्छिन्नस्य च समासाघटकपदोपस्थापितस्यापि धवखदिरौ छिन्धीत्यादिवाक्यजन्यशाब्दबोधे भानात्तद्वदत्र विभक्तिव्यवधानेऽपि नवपदार्थेन्वयो भविष्यतीति भाव । * प्रत्येकमेवेति * । प्रत्येकान्वितनवपदसाहचर्यात् । सोर्लुका लुप्तत्वान्नुम प्राप्तेरेवाभावाच्चिन्त्यमेतदिति । अत्राहु । यथा पुंसि हल्ङ्याब्भ्यो लोपेपि प्रत्ययलक्षणेन नुमागमो भवति तथाऽत्रापि कुतो नेत्याशङ्कावारणायाह । * लुका लुप्तेति * । एतेन लुका लोपो नपुंसके भवतीति पञ्चम्य तेनास्य नपुंसकत्वा, दिति स्मारितन्तनु लुका लोपे नव नुमभावे हेतुत्वेनोपात्त । एवञ्च नपुंसकत्वान्न पुंसके च सर्वनामस्थानत्वाभावादितिदोषो वोध्य इति । अपरे तु गवाक्शब्दस्ये तिपदस्यगवाक्शब्दस्य शब्दसामानाधिकरण्येन पुंल्लिङ्गतया तत्रैव प्रत्ययलक्षणे नुमाशङ्कायामेवमुक्तम्प्रत्ययलक्षणनिवृत्त्यर्थमिति सङ्जगदिरे । अन्ये तु गवाक्शब्दौ द्वौ । एक. सुबन्ते गोशब्दे उपपदे अञ्चते क्विन्नन्त । अपरो निरुपपदाञ्चेः क्विनि कृते तदन्तात्सुबुत्पत्त्यनन्तर सुबन्तस्याच्शब्दस्य गोशब्देन सह समासे कृते निष्पन्न । तयोर्मध्ये प्रथमस्य नपुंसकत्वेपि द्वितीयगवाक्शब्दे उत्तरपदस्य पुंल्लिङ्गतया तत उत्पन्नो य सुप समाससंज्ञाप्रयोजक प्रत्ययलक्षणेन तमाश्रित्य नुमाशङ्कानिवारणायोक्तमत्र लुका लुप्तत्वादितीति वदन्ति । वस्तु-

मिति । तुन्पक्षे अयाणा गतौ अयाणामित्यर्थः । वर्त्तस्येति । तेन गतौ अयाणामाधिस्य नेत्यर्थः । तुक्पक्षे इति । पूजायामित्यर्थः । अस्त्वासीति । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । यः शतेति । शतृप्रत्यय इत्यर्थः ।

आच्छीन ॥ वेति वर्त्तते उत्तरसूत्रे नित्यग्रहणात् । नाभ्यस्ताच्छतुरित्यतो नेति तु नानुवर्त्तते निषेधस्य प्राप्तिपूर्वकत्वात्, अत्र च प्राप्त्यभावात् । नुम्ग्रहणन्तु स्पष्टार्थम् । शतुरवयव इति । परो य शतेति तु नोक्तन्तुदन्ती-

---

तस्तु कारणाभावस्य कार्याभावप्रयोजकता सुप्रसिद्धैव । कारणाभावश्च न कारणप्रतियोगिकाभावः । किन्तु कारणतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव । अन्यथा कारणाधिकरणेपि कारणगगोमयाभावसत्त्वात्कार्याभावस्यापत्तेः । प्रकृते च न प्रत्ययमात्रस्य नुमागमकारणत्वङ्किन्तु सर्वनामस्थानसत्तापरत्वोभयविशिष्टस्यैव । अन्यतरविशेषणाभावे च विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य सम्भव इति परत्वात्मकविशेषणाभावप्रयुक्तो य कारणतावच्छेदकावच्छिन्नाभावः सैवात्र तुदा तुस इत्यनेन दर्शित । सर्वनामस्थानसत्ताभावश्च न दर्शितः । सत्तित्वे हि सत्त्वया भवितव्यम् । सत्ता च तुदा नुमत्याश्वास्तीति न वाधिदेवमुक्तं क्षतिरिति चिन्त्यमेव चिन्त्यम् ।

वा नपुंसकेतिसूत्रे नाभ्यस्ताच्छतुरिति सूत्राच्छतुरित्यनुवर्त्तते तस्याभ्यस्तात्परत्व वदन्ति ददतीत्यत्र सम्भवति अतो मूले व्याख्यात शता इति तदर्थमाह । * शतृप्रत्यय इत्यर्थ इति * । * वेतिवर्त्तत इति * । न चेह वाग्रहणानुवृत्तिर्मास्तु वचनमस्त्विति स्यादेवाऽनेनैव सिद्धे शप्श्यनोरिति सूत्र व्यर्थमेव स्यादित्युत्तरसूत्रारम्भादस्य वैकल्पिकत्वमुत्तरसूत्रस्य च नित्यत्वमिति व्यवस्था सम्भवादुत्तरसूत्रे नित्यग्रहणञ्च न कार्यमिति वाच्यम् । वैपरीत्यस्याप्यापत्तेः । एवं तर्ह्युत्तरसूत्रे नित्यग्रहणमस्तु तद्घटितोत्तरसूत्रसामर्थ्येङ्कल्पयाम इति चेत् । सामर्थ्यकल्पनापेक्षया एतस्यैव वाशब्दस्यानुवृत्तौ लाघवमित्याशयः । * नुम्ग्रहणन्तु स्पष्टार्थमिति * । इदितो नुमितिसूत्रान्नुम्ग्रहणानुवृत्त्यैव सिद्धेः । न चानुवर्त्तमानन्नुम्ग्रहण वाशब्दसम्बद्ध वा नपुंसकेतिसूत्रे इतीह नित्यार्थम्पुनर्नुम्ग्रहणमिति वाच्यम् । उत्तरसूत्रे नित्यग्रहणादिह वाशब्दानुवृत्तेरिष्टत्वात् । उत्तरसूत्रे तु नित्यग्रहणसत्त्वाद्व्याख्यार्थाविरोधेन केवलनुम्शब्दस्यैव सम्बन्धो भविष्यतीतीह नुम्ग्रहणन्निष्प्रयोजनमेव । यद्यस्मिन्नपि सूत्रे वाशब्द सम्बध्यते तदाऽनुवर्त्तमानानुम्शब्दस्यैककार्यनियुक्तानां सहैव प्रवृत्तिरितिन्यायेन केवलनुम्शब्दस्य शप्श्यनोरितिसूत्रे सम्बन्धो न स्यादिति चेदेककार्यनियुक्तानां क्वचिदेकदेशोऽप्यनुवर्त्तते इतिन्यायेन केवलस्य नुम सम्बन्धो भविष्यतीत्यस्तु । एतादृशार्थस्य यद्यपि लाभस्तथापि स्पष्टार्थन्नुम्ग्रहणमिति भाव । उभयत आश्रयण इति-

यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन तेन व्यपवर्गालाभेन च नुमभावापत्तेः। अवर्णश्च शतृभिन्नावयव एव गृह्यते श्यन्नकारेणाव्यभिचारात्।

शप्श्यनोः॥ आदिति किम्। भातीत्यादौ नित्यनुमभावाय। अन्यथा प्रत्ययलक्षणेन स्यात्। आदित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम्, न लुमतेति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्ये एवेति भावः। पचन्तीत्यादि बहुवचने नपुंसकस्य झलच इति नुम्। निरवकाशत्वमिति॥

---

वचनस्य स्वमतेऽभावादाह। * तेन व्यपवर्गलाभेनेति *। व्यपवर्गो व्यपवृक्तभेद इति यावत्। * अन्यथा *। आदित्यस्यानुक्तौ। अत्र क्वचिद्भान्तीति पाठः स तु युक्तः। भाषाभाष्ययोर्मध्ये भाष्यानुष्ठानस्य युक्तत्वात्। * अङ्गस्य कार्यं इति *। तस्मिन्सूत्रेऽङ्गग्रहणात्।

ननु पचन्तीत्यत्र शीनद्यीपरत्वाभावात्कथन्नुमित्यत आह। * पचन्तीत्यादीति *। * स्वमिति *। निरवकाशत्वम्प्रतिपदोक्तत्वमित्येतत्। * छादिरुपधीति * अत्र उगवादिभ्य इतिसूत्रे इति वक्तु युक्तम्। अथ वा छादिरुपधिवल्लेर्ढञिति सूत्र इत्यत्र बहुव्रीहिसमासेन छादिरुपधीतिसूत्र यत्सूत्रव्याख्यानावसरे व्याख्यातन्तत्सूत्र इत्यर्थः। तत्र हि यञ्ज्यावत्र पूर्वविप्रतिषिद्धम्। सनङ्गूपानहौ प्रयोजनम्। यञ्ज्या भवतोऽत्र पूर्वविप्रतिषेधेन। किम्प्रयोजनम्। सनङ्गूपानहौ प्रयोजनम्। यतोऽनवकाशः। शङ्कव्यन्दारु। पिचव्य कर्पासः। अञोऽयवकाशः वार्धम्। वारत्रम्। अत्र नद्धीवर्ध्रीशब्दाभ्यां वरत्रापर्यायाभ्यामञ्। सनङ्गुर्नाम चर्मविकारस्तस्मादुभयम्प्राप्नोति। सनङ्गव्यं चर्म। ज्यस्यावकाशः। औपानह्यो दारु। अत्र स एव। उपानन्नाम चर्मविकारस्तस्मादुभयम्प्राप्नोति। औपानह्यं चर्म॥ ढञ् च। ढञ् च भवत्यत्र पूर्वविप्रतिषेधः। ढञोऽवकाशः। छादिषेयन्तृणम्। अत्र स एव। छदिर्नाम चर्मविकारः। तस्मादुभयम्प्राप्नोति। छादिषेयञ्चर्म। ढञ् भवति पूर्वविप्रतिषेधेनेति। छदिर्नामेति। छादनं छदिः तच्च चर्मविकारोऽपि सम्भवति। छादनमित्यत्र करणे ल्युट्। तच्च तृणविकारः। क्वचिच्चर्मविकारोऽपि। अत्र कैयटः। अत्राहुः छदिरुपानहोः प्रतिपदम्प्रत्ययविधानादयुक्तो यम्प्रतिषेधः। तथा चोक्तम्। परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथः प्रसङ्गे परबलीयस्त्वमिति चिन्त्यमेतदिति। अत्राहुरित्यस्वरसबीजन्तु निरवकाशत्वे सत्येव प्रतिपदविधित्वम्बाधकत्वे प्रयोजकन्नान्यथेति। एतादृशकल्पनायामत्रत्य विप्रतिषेधपरम्भाष्यमेव मानम्। * शेषादिति *। तत्र हि शेषग्रहणमनर्थकम्। ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्युक्तम्। स्व

इदन्ङदिरुपधिवलेर्दन्विति सूत्रे शेपाद्विभापेति सूत्रे च भाष्ये स्पष्टम् । परे तु निरवकाशत्वरूपमतिपदोक्तत्वस्य बाधकतामयोजकत्व मकृते तदभावेनाबाधकत्वेपि मतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि स्वाम्पीत्येनेत्याहुः । धनुरिति । वॉरिति दीर्घस्तु न रेफान्तस्याधातुत्वात् । श्रेयासीत्यादौ युगपद्द्वयोरन्त्यादचः परत्वायोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न सकृद्गतिन्यायात् । किं च अन्त्यादचः परो मित्प्रयोक्तव्य इति मिदचइत्यस्यार्थेन द्वयोर्मिलितयोरन्त्यादचः परप्रयोगासम्भवेन नात्र नुम्द्वयप्रसक्तिः पुनः प्रसङ्गविज्ञानेपि । किंच सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति नपुंसकस्येति सूत्रे भाष्ये स्पष्टम् ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

---

सिद्धान्तमाह । * परे त्विति * । * सकृद्गतिन्यायादिति * । वस्तुतस्त्वेतन्न्यायस्य प्रकृतेऽनुपयोग एव । एकस्मिन्नुमि कृते द्वितीयस्य नुमो वाक्यार्थविरोधादप्रवृत्तेन नुम्द्वयप्रसङ्ग किन्त्वनयोर्यत्परन्तदेव पूर्वम्प्रवर्त्तते इत्याशयेनाह । * किञ्चान्त्यादच इति * । अपरोक्तमभ्युपेत्याह । *किञ्च सत्यपीति* । *झल्ग्रहणेनेति * । अयोगवाहानामुपदेशात् ॥

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

स्वरादि ॥ स्वरादीनामपि निपातसञ्ज्ञैव तु न कृता स्वरादौ निपाता आद्युदात्ता इत्यापत्तेः । एतेन चादीनामप्यव्ययसञ्ज्ञैव कार्येत्यपास्तमित्यन्यत्र विस्तरः । स्वरित्यादि । अनुकरणान्येतानि तत्रैत एव निर्देशान्न स्वाद्युत्पत्तिस्तेन विसर्गादिकं न । स्वरादीनामनेकशक्तिप्रधानता । स्वरागतः स्वःस्थितः स्वः पश्येत्यादिदर्शनात् । गणे च तन्त्रेण सर्वेषामुच्चारणम् । उच्चैरित्यादीन्यधिकरणशक्तिप्रधानानि शब्दशक्तिस्वभावात् । हिरुगादीनि क्रियाप्रधानानि । क्रियाप्राधान्यञ्चैषाङ्क्रियायामेव विशेषणत्वेन । स्पष्टञ्चेदन्ताद्धितश्चेति सूत्रे कैयटे । सायञ्चिरं मान्ते अव्यये सायञ्चिरमिति सूत्रस्थभाष्यप्रामाण्याच्चिरमित्यस्याव्ययत्वमप्रामाणिकमिति परे । वदिति । तेन तुल्यन्तत्र तस्येव तदर्हमिति विहितः । उपसर्गाच्छन्दसीति विहितस्य च्छा-

---

* निपातसञ्ज्ञैवेति * । प्राग्रीश्वरान्निपाता इतिसूत्रानन्तर स्वरादीतीत्यादि अव्ययीभावश्चेत्यन्तम्पठित्वा चादय इति पठनीयमित्यभिप्राय' । यत्राव्ययग्रहण न्तत्र निपातग्रहणमेवास्तु । * इत्यापत्तेरिति * । ननु तत्रापि चादय आद्युदात्ता इतिपठनीयमिति चेन्न । येषा कृञादियोगे निपातसञ्ज्ञा तेषान्तद्योगाभावेऽप्याद्युदात्तत्वापत्ते । यद्यपि न्यङ्स्वरौ स्वरितावितिफिट्सूत्रेण विशिष्य स्वरितत्व विधानेन निपाता आद्युदात्ता इत्यस्य बाधो वक्तु शक्यस्तथापि स्वरादावित्या दिपदग्राह्ये प्रातरादावयमतिप्रसङ्गो बोध्य । * एतेन * । इष्टव्यवस्थाया अलाभेन । * अन्यत्र * । उद्योतादौ । * अनुकरणेति * । प्रयोगस्थानामित्यादि । * सर्वेषामिति * । अपादानत्वाधिकरणत्वकर्मत्वशक्तिप्रधानानाम । * अधिकरणशक्तिप्रधानानीति * । अत एव वृत्त्यघटकानामेषा क्रियायामेवान्वय । ननु क्रियाप्रधानमाख्यातमितिवन्न हिरुगित्यस्य स्वार्थक्रियाविशेष्यकबोधजनकत्व स्पष्टमत आह । * क्रियाप्राधान्यमिति * । * भाष्यप्रामाण्यादिति * । तत्र हि स्यतेर्घञन्तस्य प्रत्ययसन्नियोगेन मान्तत्व सूत्रे निपात्यते एव चिरशब्दोऽपि काल विप्रकर्षाभिधानो चिरेण तवागमनमहम्पश्यामि स्वश्चिरात्तस्माद्देशादागतो ऽसीत्यादावकारान्तो दृश्यते तस्यापि मान्तत्व प्रत्ययसन्नियोगेन निपात्यते इत्य र्थकवाक्यान्युक्तानि । इद त्वत्रबोध्यम् । सायशब्दस्य घञन्तस्य सख्याविसा यपूर्वस्येतिनिर्देशादकारान्तस्य प्रामाणिकत्वेपि मान्तोऽव्ययसञ्ज्ञकोऽप्ययमस्ति । अत एव प्रात सन्ध्या सनक्षत्रा सायसध्या सभास्करेतिप्रयोगस्योपपत्ति । चिर शब्दस्त्वनव्ययमेव । स च शब्दशक्तिस्वभावादेकवचनान्त एव । तस्य तावदेवाचिरम् यावन्न विमोक्ष्ये चिरम्भुङ्क्ष्व इत्यादौ परिदृश्यमानस्तु क्रियाविशेषणम । यत्र तु क्रियावाचकम्पदन्न श्रूयते तत्र तदन्वययोग्यक्रियावाचकशब्दाध्याहारो बोध्य इति । * इतिविहित इति * । विनिगमनाविरहात्सर्वेषाङ्ग्रहणम् । ननु यदुक्त

न्दसत्त्वादेव न संज्ञा । वस्तुतस्तद्धितश्चेत्येव सिद्धेर्वद्ग्रहणं व्यर्थम् । अन्तरान्तरेणेति । अन्तरान्तरेण युक्ते इति सूत्रे भाष्ये ऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्तः । अस्तीति । धनवानित्यर्थके अस्तिमानित्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठ । विनिगमनाविरहेण विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात् । तेनैव सिद्धिरिति तु मतुप्सूत्रे भाष्यकैयटयोः । सत्ताकर्तृत्वेनैव धनवोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भाव । एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम् । नमसिति । महसां नमसामिति प्रयोगस्तु सत्त्ववाचकत्वे बोद्धव्यः । प्रताम् प्रशामिति । प्रतानिति नान्ताव्ययस्य पृथक् पाठसामर्थ्याद पदान्तत्वाभावाद्स्य नत्वाभावः । प्रशानिति नान्तपाठो ऽसाम्प्रदायिकः । मान्तानुकरणे नत्वाप्राप्तेः स्वरादौ रुत्वादिवत् । कृन्मेजन्तसूत्रस्थभाष्यस्वरसोऽप्येवमेव । नञ् स्वरादिष्वप्रामाणिकः पाठः । अव्यये नञ्कुनिपातानां

---

सो निमत इत्यादिप्रयोगविरोध इत्यत आह । * उपसर्गेति * ।*वद्ग्रहणं व्यर्थमिति * । अत एव परिगणनसमये तसिवतीति वत्प्रत्ययोरपि पठित । * निपातत्वोक्तेरिति * । तत्र हि परस्परसाहचर्येण निपातयोरेव ग्रहणमित्युक्तम् । नन्वस्तीत्यस्य विभक्तिप्रतिरूपकत्वादेवाव्ययत्वे सिद्धे पृथक्पाठो व्यर्थ इत्यत आह । * धनवानित्यर्थकमिति* । * सत्त्ववचनस्येति * । एतेन विभक्तिप्रतिरूपकत्वाभावो ध्वनित । * न सिद्धिरिति * । अस्ति नास्ति दिष्टमितिसूत्रनिर्दिष्टस्य तेनाव्ययत्वसिद्धावपि धनवाचिनो न सिद्धिरित्यर्थः । स्वसिद्धान्तमाह ।* तेनैवेति * । यथाऽधिकरणशक्तिप्रधानस्यापि प्रातरादेर्वृत्तिविषये शक्तिमत्प्राधान्यं तथाऽस्यापि अस्तिमानित्यादिवृत्तिविषये सत्त्ववाचित्वकल्पनेन सत्ताकर्तृबोधकत्वं न विरुध्यते । * धनबोधादिति * । न तु सत्ताकर्तृसामान्याभिधायकत्वम् । शब्दशक्तिस्वभावात् । * कथञ्चिदिति * । विशेषार्थाभिधायकत्वे नियतस्य कस्य चित्तात्पर्यग्राहकस्य कल्पनेन । * सत्त्ववाचकत्वेबोध्य इति * । असत्त्ववाचकस्यैवाव्ययत्वमिति भाव । न च स्वरादिषु सत्त्ववाचकानामपि दर्शनेनेदमसङ्गतमिति वाच्यम् । प्रयोगदर्शनवशादन्यत्र तथा कल्पनेऽप्यस्य सत्त्ववचनस्याव्ययत्वे प्रमाणाभाव इति भाव । अत एव विधेम चास्मै नमसा सह त्वयेतिप्रयोगस्याप्युपपत्ति । केचित्तु एतादृशानां विभक्तिप्रतिरूपकत्वमिच्छन्ति । ते बहुषु स्थलेषु क्लेशसहनेन नमान्याः । ननु प्रपूर्वकात्तम्धातो क्विपि सति प्रताम्शब्दावयवस्य धातुत्वान्नत्वापत्तिरत आह । * प्रतानितीति * । * अपदान्तत्वादिति * । तादृशानाम्प्रयोगस्थानामिदमनुकरणमिति भाव । *अस्य* । प्रतामादे ।*भाष्यस्वरसोऽप्येवमिति*।न च तस्मिन्नेव भाष्ये यदव्ययप्रशानशब्द स्वरादिषु पठतीत्युक्तन्तद्विरोध इति वाच्यम् । तस्य भाष्यस्याव्य

मित्यत्र पृथक् नञ्ग्रहणन्त्वकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थ-मित्याकर'। एवं माङोपि स्वरादौ प्रक्षिप्तः पाठः। यावत्तावच्छब्दाव-व्युत्पन्नौ। उपसर्गविभक्ति। अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते। "गेये केन विनीतौ वा" मित्यत्रापि वामित्यस्य युष्म-

---

थैवोपपत्ते। तथाहि। कृदन्तं यन्मकारान्तमिति पाठे प्रतामौ प्रताम इत्यत्राति प्रसङ्गमाशङ्क्याचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवति। यद्वयम्प्र-शान्शब्दं स्वरादिषु पठतीत्युक्तम्। अत्र प्रशामौ प्रशाम इति शान्तिमद्वाचक-स्य। गणे तु शान्त्यर्थकस्य लिङ्गाद्यनन्वय्यर्थकस्य पाठ'। तत्र यथा स्वरादीनां स्प्रयोग एव विसर्गो न तु गणे तथाऽस्यापि प्रयोगे नत्वम्। अत्र यद्यपि कैयटेन मो नो धातोरितिनत्वस्यासिद्धत्वात्सिद्धमव्ययत्वमिति व्याख्यातम्। तथापि स्वरादित्ववादेन गणे विकाराभावकल्पनेऽफलत्व प्रकल्पना नेति। *अप्रामाणिक पाठ इति *। निपातत्वादेव सिद्धे। नन्वव्यये नञ्कुनिपातानामित्यत्र पृथक् पाठवैयर्थ्यमस्य निपातत्वे स्यादत आह। * अव्यये नञिति*। *अकरणिरिति *। अत्र समासस्वरबाधकाव्ययपूर्वपदप्रकृतिस्वरबाधककृदुत्तरपदप्रकृतिस्वरेण र-काराकारस्योदात्तत्वे प्राप्ते पुनर्नञ्पृथक्पाठात्पूर्वपदप्रकृतिस्वर एव भवति। अय ह्याक्रोशे नञ्यनिरित्यनिप्रत्ययान्त। * प्रक्षिप्त पाठ इति *। चादिगणे पा ठेनाव्ययत्वसिद्धे। न चैवमसत्वार्थकस्यैवाव्ययत्वं स्यान्न तु सत्वार्थकस्येति सत्त्वार्थकस्य लक्ष्मीवाचकतया तस्य ङकारेत्संज्ञकत्वाभावात्। निरनुबन्धको नि षेधार्थकमाशब्दोऽसत्त्वार्थस्तु पठित एव। माङि लुङिति सूत्रे ङकारोच्चारणात्त स्मिन्नुपपदे लुङन्तस्यैव साधुत्वम्। एतेन मास्त्वित्यादिप्रयोगाणामवैदिका नामसाधुत्वमबोध्यम्। मा निषाद प्रतिष्ठान्त्वमगमः शाश्वती समा इति रामा यणस्थपद्ये माङो न प्रयोग किन्तु निरनुबन्धकस्य अत एवाटो निषेधाभाव। * अव्युत्पन्नाविति *। वतुबन्तयो सत्त्वार्थकतया निपातसंज्ञाया अप्राप्ते। *अ त्र *। उपसर्गविभक्तिविषये। प्रतिरूपकत्व सादृश्यम्। *अर्थत शब्दतश्चेति *। शब्दत एव सादृश्यविवक्षायां विप्रशब्दावयवप्रशब्दस्याप्यव्ययत्वं स्यात्। अर्थत एव सादृश्यस्य ग्रहणे वाशब्दसमानार्थकस्य विकल्पशब्दस्यापि स्यात्। न च विकल्पशब्दस्य सत्वार्थकतया न वाशब्दसमानार्थकत्वमिति वाच्यम्। आराच्छब्दसमानार्थकस्य समीपशब्दस्याव्ययत्ववारणाय शब्दत साम्यस्या प्यावश्यकत्वात्। * विनीतौ वामिति *। अयम् युष्मदस्मदोरितिसूत्रेण व्युत्पन्न। षष्ठ्य तत्वाभावात्। न च तत्समानार्थत्वाभाव। सम्बोध्यार्थबोधकतयाऽर्थतः साम्यमस्ति शब्दतस्त्वस्त्येव। यत्र यत्र सदृशग्रहणन्तत्र किञ्चिन्न्यूनत्वमस्त्य व। अन्यथा तत्त्वमेव स्यात्। * एतेन *। अर्थतोऽपि सादृश्यस्य विवक्षणेन।

व्युत्पन्नानाञ्चादिस्वरादिपठितानां भवति तर्हि च्व्यन्तानामेवेति तदर्थः। अन्यथा च्व्यन्तानां निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। स्वरादिनिपात मित्यत्र निपातपदे गौणमुख्यन्यायाप्रवृत्तिरनित्यत्वात्। अन्यथाऽऽदिति प्रगृ-ह्यत्वमिदेदमपि न स्यात्। एवमतिशयेन साधुरित्यर्थे साधीय इत्यपि।

सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवद् अवयवकात्स्न्ये इत्याशयेनाह। यस्मात्सर्वेति। वचनत्रयात्मिकेत्यर्थः। नेति। किन्त्वेकवचनमेवेत्यर्थः। ननु संख्याकारकबोधकैरेकवाक्यतया सुपां विधानमिति पक्षे ऽव्ययार्थे संख्याकारकयोरभावात्कथं विभक्तिः। अव्ययादाप्सुप इति ज्ञापकाश्रयणे च सर्वापि। किञ्च, विहितानां नियमपक्षेऽपि नास्योपपत्तिः, तत्पक्षे सर्वे-ष्वर्थेषु विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्ववि-भक्त्युत्पत्तौ लोपेनैव जातस्य निवृत्तिः। तन्निवृत्तौ च कल्पितगुणस्वरूप स्वत एव निवर्त्तते। नियमश्च द्विविधः, अर्थनियमः प्रत्ययनियमो वा। अन्त्योऽपि द्विविधः, प्रकृतार्थापेक्षः सामान्यापेक्षो वा। तत्र कर्माद्यर्थयोग्य-

---

शयेनाह। * शुचादीत्यादि *। ननु ऊर्यादिच्व्यन्तामिति सूत्रस्य नियमार्थत्वमनुप पन्नमदोषमनादित्यत्र च्व्यन्तामपि गौणत्वेनाग्रहणसम्भवात्तस्य विधायकत्वमेव समुचितमत आह। * स्वरादिनिपातमित्यत्रेति *। *अनित्यत्वादिति *। अस्या अथयद्ग्रहणपरिभाषामूलकत्वाद्यथयद्ग्रहणपरिभाषायाश्च पौर्वामितिसूत्रस्था ग्रहणेनानित्यत्वस्य ज्ञापनात्तदनित्यत्वेनैवेयमप्यनित्येति भाव। * साधीय इत्यपीति *। अत्रेदमन्यदपि बोध्यम्। नन्वेतदीयसुन्नन्तम्। पटीयानितिवत्प्रक र्षस्य तत्राप्रतीते। अत एव कथमत्र साधीय इति प्रयोग सङ्गच्छते।

तद्धितश्चेतिसूत्रे सर्वशब्दो न प्रकारकात्स्न्ये सर्वोऽसौ भिक्षुरितिवद्वर्त्तते। अव्ययेभ्य सप्तानामपि विभक्तीनामेकवचनान्युत्पद्यन्त इतिपक्षे सूत्रस्यासम्भ वदुक्तिकतापत्ते। किन्तु सर्व पटो दग्ध इत्यत्रेवावयवकात्स्न्ये वर्त्तते तेन य त्फलितन्तदाह। * वचनत्रयात्मिकेति *। अवयवकात्स्न्यार्थकसर्वशब्दस्वी-कारेऽपि नोपपत्तिरित्याशङ्क्यते। * नन्विति *। *सुपां विधानमिति *। स्वौ-जसेतिसूत्रेणेति शेष। ननु सर्वासां सामान्यसूत्रेण जातानाङ्कर्मणि द्वितीयेत्या दिसूत्रेण नियम क्रियत इति पक्षेऽस्य सूत्रस्योपपत्तिर्भविष्यतीत्यत आह। * किञ्च,विहितानामिति *। न ह्येकस्मात्प्रातिपदिकात्सर्वथा विधानमेवानुपपन्न प्रत्ययविधौ निर्दिष्टपरिभाषया प्रातिपदिकाव्यवधानेनैवोत्पत्तिर्भवति अव्यय त्र नश्चैकत्रैव सम्भवति न सर्वत्रेति चेन्न। प्रकृतिभेदकल्पनेन तत्तत्प्रकृतिसम्बन्धस्य तत्र तत्र प्रत्यये सम्भवादित्याह। * प्रधानप्रत्ययानुरोधेनेत्यादि *। *तत्र *। तेषु नियमेषु। अर्थनियममुपपादयति। * कर्माद्यर्थयोग्येति *। कर्मणि द्वितीये-

प्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव । कर्मादिरहिते तद्योग्यप्राति-
पदिकात्प्रथमैवेत्यादिरर्थनियमः । अत्र पक्षे सर्वाः सप्तापि विभक्तयो
ऽव्ययेभ्यो विभक्तीनामनियतत्वात् कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया
तदा कर्मण्येव न करणादौ । कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा
न कर्मादौ सङ्ख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि न द्वित्वा
दावित्यादिः प्रकृतार्थापेक्षप्रत्ययनियम । अत्रापि पक्षे सर्वाः सप्तापि वि-
भक्तयो ऽव्ययेभ्यो लभ्यन्ते । अथ प्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव
नान्यत्र । प्रातिपदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियो-
ग्यतद्रहितप्रातिपदिकार्थे एवेत्यादि सामान्यापेक्षः प्रत्ययनियमस्तदाव्यये-
भ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव प्रति सर्वापि । यद्यपि सुप्प्रा-
न्तिङा सङ्ख्याकर्मोभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्य तथापि
कर्मण्येव न तु तदभावे इत्याकारो वक्तुं शक्य । स्पष्टञ्चेदं सर्वं बहुषु
स्यादिसूत्रेषु भाष्ये । तत्र हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि
विभक्तयः संपूर्णा उक्ताः । सामान्यापेक्षप्रत्ययनियमे च सुपो ऽप्राप्तिरेवो-
क्ता । अव्ययादाप्सुपः इति सूत्रे भाष्ये ऽपि स्फुटमिदमिति चेदत्र तद्धि-
तश्चेति सूत्रे भाष्यकृतः एकवचनमित्येव सूत्रं कार्यम्, एकग्रहणञ्च न कार्यं
विभक्तिविधायुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गस्तस्य द्वित्वबहु-
त्वयोरितरे बाधके भविष्यतः, एवञ्चैकत्ववत्यपि भविष्यति । अलिङ्गास-

येति नियमेन हि यत्र कर्मादिसम्भवस्तत्रैवान्यासामिति सम्भाव्यत इति मत्वा
तस्या कर्माद्यर्थयोग्येत्यस्य लाभ । आदिपदादेकत्वाद्यर्थयोग्यप्रातिपदिकाच्चेदे
कत्वादौ विभक्तिस्तदैकवचनाद्येवेत्येवरूप । * अनियतत्वादिति * । अन्यथा
नाङ्कर्माद्यर्थयोग्यत्वाभावेन तत्तदर्थे विभक्त्यन्तरव्यवच्छेदेन नियतानान्तासाँ
मर्वासामनियमादित्यर्थः । प्रातिपदिकार्थेतिसूत्रस्यापि नियामकतया तद्विषये य
था नियमसम्भवस्तथाह । * कर्मादिरहित इत्यादि * । मात्रपदव्यवच्छेद्यार्थं
कथमेतत् । * अत्र पक्षे * । एवंविधार्थनियमपक्षे ॥ अथ प्रत्ययनियममाह ।*
कर्माद्यर्थयोग्येति * । अत्रापि पक्षे । प्रकृतार्थापेक्षप्रत्ययनियमपक्षे । * अव्यये
भ्यो लभ्यन्त इति * । कर्मादौ विहितानां तृतीयादीनाङ्करणादावेव व्यावृत्ते ।
सामान्यापेक्षप्रत्ययनियममाह । * अथेति * । पूर्वोक्तज्ञापकादेवेति * । अव्य
यादाप्सुप इति ज्ञापकादेवेत्यर्थ ॥ * वक्तुमशक्यमिति * । यत्र कस्मिन्नर्थे निय
ताया विभक्तेरर्थव्यबोधकताया वक्तुमशक्यत्वात् । न तु तदभावे ॥ कर्मत्वा
द्यभाव इत्यर्थः । सुप्तिङ्साधारण्येनास्य प्रवृत्तिम्बोधयितुं सामान्येनार्थमाह ।
*विभक्तिविधायुद्देश्यतावच्छेदकेति*॥*इतरे*।द्विवचनबहुवचने।*एवञ्च*।सामा

रूपेभ्यो ऽव्ययेभ्यश्चैकवचनम्, द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्या-न्महासंज्ञाबोध्यैकत्वाभावेपि तत्प्रवृत्तेः। द्विबहुत्वयोर्द्विवचनबहुवचनेनोक्ताव-र्थादेकवचनस्यैकवचनमित्येतद्वचनं विनापि द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन सामर्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेप्येतत्प्रवर्त्तते इति विनिगमनावि-रहात्सर्वविभक्त्येकवचनमनेन। अत एवाव्ययादाप्सुप इति प्रत्याहारग्रहणं चरितार्थं तृतीयासप्तम्योरिति च। प्रथमापि मात्रग्रहणाद्यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसंभावना तत्रैवेति तस्या ऽप्यप्राप्तिरव्ययेभ्यः। पचतिकल्प-मित्यादौ तु नानेन सर्वैकवचनम्। सर्वथा ऽप्राप्तावेव तस्य विध्यर्थत्वात्। अत्र च न तथा कर्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोध्यम्। यत्तु कैयटेन प्रथमातिक्रमे कारणाभावादने-कानियमबाधे गौरवाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोध्यते इति तद्धित-श्चेति सूत्रे रूपप्सूत्रे चोक्तम्। तन्न। स्वादिसूत्रे प्रथमायाः प्राथम्येपि निय-

न्यसूत्रासिद्धौ च। नन्वेकस्य वचनमेकवचनमिति व्युत्पत्त्या एकवचनमितिसूत्रे णैकवचनमव्ययेभ्यो न प्राप्नोतीत्यत आह। * द्विबहुग्रहणसामर्थ्यादिति *। अ-यम्भावः। यद्यप्येता महासंज्ञा इत्यासामन्वर्थत्वं सम्भाव्यते तथापि सूत्रे द्विबहु ग्रहणसामर्थ्यादन्वर्थत्वं त्यज्यते। अधुनास्य सूत्रस्यौत्सर्गिकत्वमुपपादयति। * द्वित्वबहुत्वयोरिति *। नन्वेतावतापि प्रथमोपस्थितं सुपैवैतादृशे विषये स्या दत आह। * विनिगमनाविरहेणेति *। ननु प्रथमोपस्थितत्वमेव विनिगमकमत आह। * अत एव *। सर्वविभक्त्येकवचनस्वीकारादेव। * चरितार्थमिति *। सोरेवोत्पत्तौ तस्यैव निवृत्तिः स्यादिति प्रत्याहारनिर्देशो व्यर्थः स्यात्। नन्वव्य यार्थे कर्मत्वाद्यभावाद्द्वितीयैकवचनादीनामप्राप्तावपि प्रथमा तु स्यादेवेति कथमेत दप्राप्तप्रापणार्थमित्युक्तमत प्रथमाया अप्राप्तिमुपपादयति। * प्रथमापीति *। नानेन *। एकवचनमित्युत्सर्गसूत्रेण। कर्तृत्वकर्मत्वसत्त्वेन। एतेन कर्त्तरि कर्म णि या या विभक्तयो विहितास्तासामुत्पत्तिरुक्ता। तद्यथा। पचतिकल्पम्भवति। पचतिकल्पस्य भवनम्। पचतिकल्पेन स्थीयते। पचतिकल्पम्पश्य पचतिकल्प-स्य दर्शनम्पचतिकल्पाय गच्छतीति। स्वत एकत्वेन। एका क्रियेतिसाध्यावस्थाप्र वृत्तभेदाया क्रियायास्तिङन्तेभ्यः प्राधान्येन प्रतीयमानाया एकत्वात्तदनुरोधेन तत्र कल्पप्रत्ययान्तादेकवचनस्यैवोत्पादेन। न चास्याप्राप्तप्रापणार्थत्वेऽव्ययेभ्यस्ति-ङन्तेभ्योऽप्येकवचनापत्तिरितिवाच्यम्। सुब्विधायकशास्त्रैकवाक्यतयाऽस्य विधा यकत्वात्। * अनेकानियमेति *। कर्मणि द्वितीयेत्यादिनियमेत्यर्थः। यदि द्विती यादीनामप्येकवचनं स्यात्तदा द्वितीया कर्मण्येवेत्यादिसामान्यापेक्षनियमबाध स्पष्ट एव। ननु नियमस्य विधिमूलकत्वाद्विधेरुपजीव्यत्वेनाभ्यर्हितत्वात्तत्र

मशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वेन तस्याविनिगमकत्वात् । निजा-
न्त्रयाणामित्यत्र त्रयाणाङ्ग्रहणेनाद्युदात्तश्चेति सूत्र आदिग्रहणेन पाणिनिना
स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च । अत्र प्रथमा सपूर्णाव्ययेभ्य. प्रथमाया
एवैकवचनमित्यादि पक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते तान्यसङ्गतानि
उक्तरीत्या तेषामुक्तिसंभवाभावात् । घट इत्युक्त एकत्वनिश्चयस्तु द्विवचनाद्य-
भावेन द्वित्वाद्यप्रतीतौ सख्यावदर्थत्वेन सत्त्वभूतत्वात् प्रकरणाच्च । बहुष्वि-
त्यादिसूत्रभाष्योक्तपक्षास्त्वेकदेशिनो न सिद्धान्तिन इति तत्त्वम् । असर्ववि-
भक्तिरिति । बहुव्रीहिलभ्यो विशेष्य इत्याह । तद्धितान्त इति । केवलस्य
तस्य तद्धितस्य प्रयोगाभावेन फलाभावात्संज्ञाविधानेपि तदन्तविधिरिति
भावः । नन्वेवमपि पचतिकल्पमित्यादावतिव्याप्तिः । उक्तरीत्या तेषामतर्थ-

---

मेव प्राधान्य प्रतीयत इत्यत आह । * निजामिति * । अत्रस्य बहुवचनेन बहुत्व-
स्योपपस्थितौ तस्य बहुत्वस्य स्वव्यापकसंख्याद्वारैव सङ्ख्येयपरिच्छेदकतया
प्रथमोपस्थितत्वेन त्रित्वस्य विषयपरिच्छेदकत्वं स्यात्तथा च त्रयाणां लाभ सि
द्ध एवेति त्रयाणामिति व्यर्थं स्यादिति भाव । *अत्र* । अव्ययविषये । इत्यादि-
पक्षान्तराणि । प्रथमादिना सप्तानामपि विभक्तीनामेकवचनानीत्यस्य सङ्ग्रह ।
असङ्गतानीतिबहुवचन समुदायापेक्षया बोध्यम् । तेन सर्वविभक्त्येकवचनमिति
पूर्वोक्तौ विरोधो न । नन्वेकत्वे एकवचनमिति यदुच्यते तदा घट इत्यादिशब्दो-
च्चारणे सति तत एकत्वप्रकारकनिश्चयस्सम्भवति । तेनैवैकत्वसंशयप्रतिबन्धो
निर्वहति । एकमित्यस्याभावे तु कथमेकत्वनिश्चयश्शाब्दिग्राहकाभावात्तत्र आ
ह । * घट इत्युक्ते इति । * सख्यावदर्थत्वेनेति * । एतेन सत्त्वभूतत्वात्मकस्य
विशेष्यस्य लाभ । तथा च घट एकत्ववान् द्वित्वाद्यभावविशिष्टत्वे सति स
सख्यादित्याकारको न्यायो बोधित । अत्र चाक्षुषविषय घट एव दृष्टान्त । य
द्वा सत्त्वरूपत्वेनाखिलसख्योपस्थितौ द्वित्वाद्यभावनिश्चये सति स्मृतैकत्वप्रका-
रकोपनीतमानम्भवतीत्याशयेनाह । * प्रकरणेति * । यथा सम्पन्नो व्रीहिरि-
त्यत्र जातावेकत्वान्वय पशुना यजेतेत्यत्र व्यक्तौ तदन्वय प्रकरणात्तथेति भा-
व । यत्र तु स्वपदार्थे कर्मत्वाद्यन्वययोग्यता तत्र द्वितीयाद्येकवचनम्भवत्येव । द्विती-
यादीनान्तेषु नियतत्वात् अव्ययीभावात्तु नाव्ययीभावादित्युक्ते सर्वविभक्त्येकव-
चनम् ॥ न च तेभ्यो द्वितीयादीनान्द्विवचनबहुवचने तेन ज्ञापकेन कथन्न स्या
तामिति वाच्यम् । असर्वविभक्तिरव्ययमिति न्यासपक्षे सर्वथानेनाव्ययसंज्ञासिद्धौ
पञ्चसूत्री न कार्येति भाष्येण द्विवचनानुत्पत्तिबोधनात् । *भाष्योक्तपक्षा इति* ।
अव्ययेभ्य समानामपि विभक्तीना त्रीण्यपि वचनानीत्यादय । *तत्र* । आख्या-
पालादित्यत्र पठितो य आम् तेनेण आसिरिति सूत्रविहित आसिर्गृह्यत इति शे-

विभक्तित्वात् । उभयशब्दे चातिव्याप्तिस्ततो द्विवचनानुत्पादादत आह । परिगणनमिति । एवञ्च सूत्रं न कार्य्यमिति भावः । तसिलादय इति । पञ्चम्यास्तसिलित्यारभ्य द्वित्र्योश्च धमुञित्यन्ता इत्यर्थः । शस्प्रभृतय इति । बह्वल्पार्थाच्छसित्यारभ्याव्यक्तानुकरणादिति डाजन्ताः । यस्त्विवेमतिकृतावित्यधिकारे प्रत्नपूर्वविश्वेमात्थाल्छन्दसीति थाल् तस्य स्वरादावास्थालाविति पाठेनाव्ययत्वं तत्रेण आसिरित्युणादिसूत्रविहितआहि अया इत्युदाहरणम् आसिविधायके छन्दसीति नानुवर्त्तते । एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम् । अत्र च स्वरादावासिपाठ एव लिङ्गम् । अयासावयसेति तु च्छान्दसम् । अम् आमिति । अमु च छन्दसि किमेत्तिङिति विहितौ । कृत्वोर्था इति कृत्वसुच्सुच्धाः । तसिवतीति । तेनैकदिक् तसिश्च तेन तुल्यमित्यादिना विहितौ । एवञ्च स्वरादिषु वादिति पाठे फलं चिन्त्यम् । नानाञाविति । विनञ्भ्यां नानाञौ न सहेति विहितौ ।

कृन्मेजन्तः ॥ कृञो मान्त इति । कारयामित्यामन्ते आम इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद्विशेषणं गणे प्रशाम्शब्दपाठात् । अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन प्रतामौ लवमाचक्षाणो लौरित्यादौ नातिप्रसङ्गः । न चाधये हे आधे कुम्भकारेभ्य इत्यादौ गुणे एत्वे च कृते कृत एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात् लिङ्गसङ्ख्याद्यन्वयित्वेप्यव्ययीभावादावत्राप्यापत्तेरिति वाच्यम् । सन्निपातपरिभाषया बाधात् ।

---

प । * नानुवर्त्तत इति * । बहिर्बाधाभ्यश्छन्दसीत्यत इत्यादि । * अत्र च * । छन्दसीत्यस्याननुवृत्तौ च । छान्दसत्वे तु सुपां सुलुगित्येव लुकः सिद्धे ।

ननु मेजन्तशब्दस्य कृद्विशेषणत्वे कारयामित्यादौ सुपो लुङ् न स्यादत आह । * आम इतीति * । * तेन * । कृदन्तविशेषणत्वाभावेन ॥ * कृत एजन्तत्वेनेति * । स्थानिवद्भावेन कृत्त्वम् । एजन्तत्वन्तु व्यपदेशिवद्भावेन यथा चात्र नल्लिधाविति निषेधाप्रवृत्तिस्तथान्यत्र प्रतिपादितम् । यथोद्देशपक्षाभिप्रायेणाह । न च बहिरङ्गत्वमिति । लुग्विधायकसूत्रैकवाक्यतया सञ्ज्ञाशास्त्रस्य कार्यकालपक्षे प्रवृत्त्यङ्गीकारात्समत्वमित्याशयेनाह । *सञ्ज्ञाया कार्यार्थत्वादिति * । * सञ्ज्ञाकार्यस्य * । लुक । * तत्त्वेन * । सुप्सम्बन्धित्वेन । * तत्त्वात् * । बहिरङ्गत्वात् । ननु महासञ्ज्ञाकरणेन लिङ्गाद्यनन्वयिन एवैषाव्ययसञ्ज्ञा प्रवर्त्तत इत्याशय इत्यस्य कथमव्ययसंज्ञाप्रसक्तिरत आह । * लिङ्गसङ्ख्येति * । * बाधादिति * ।

न च तया सन्निपातविघातकलुको बाधेपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम् । एज्विषये सन्निपातनिमित्तकस्वीयसन्निपातविघातकस्य क्ङिति चेति निषेधस्य तया निवृत्तावपि उपाद्रास्तेत्यत्र किच्वापत्तेः । किच्वफलन्तु तत्सन्नियोगशिष्टे स्वसिद्धिरेवञ्चोपादास्तेति स्यात् । तत्र हि किदिति व्यपदेशातिदेशएवेत्वप्रवृत्तिकाले कित्कार्यस्यातिदेशस्याभावात् । तस्मादनया सन्निपातविघातकशास्त्रस्येव तत्तच्छास्त्रप्रवृत्तिनिमित्तातिदेशसञ्ज्ञानामपि निवृत्तिरवश्य वाच्या । साक्षात्परम्परया वा स्वसान्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषार्थः । एतेनानाकजादि स्यादित्यपास्तम् । अकजाद्येकवाक्यतापन्नाव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च । लुगेकवाक्यतापन्ना

---

अव्ययसञ्ज्ञाया इत्यादि । * मानाभाव इति * ॥ सञ्ज्ञामात्रेण सन्निपातविघाताभावात् । * एज्विषयेति * । एज्विषयसन्निपातनिमित्तक यदात्वन्तत्स्वीयो यः सन्निपातः एज्विषयत्वरूप एव तद्विघातकस्य क्ङिति चेति निषेधस्य निवृत्तावपीत्यर्थः । क्ङिति चेतिनिषेधसूत्रस्य यत्र प्रवृत्तिस्तत्र नैच प्रवृत्तिरित्यैज्विषयत्वनिषेधविषयत्वयोः परस्परं विरोध इत्यतो निषेधशास्त्रस्य परम्परया सन्निपातलक्षणात्वसम्बन्धिसन्निपातविघातकन्तस्य निवृत्तिरांस्त्विति समुदायार्थः । ननु किदिति कार्यातिदेशः अतिदिश्यमानञ्च कार्यन्निषेधरूपमेव तस्य सन्निपातपरिभाषया निवृत्तौ तत्सन्नियोगशिष्टेत्वमपि न भविष्यतीत्यत आह । * तत्र हीति * । व्यपदेशातिदेशः । व्यवहारातिदेशः । कार्यातिदेश वारयति* । इत्वप्रवृत्तिकाल इति । यदीत्वमसमानकालिकभवनप्रकृतिकित्कार्यङ्किञ्चित्प्रसिद्धं स्यात्तदा स्यात्कार्यातिदेशस्तथाऽत्र नास्तीति भावः । *तस्मात्* । अनन्यगतिकत्वात् । * अनया * । सन्निपातपरिभाषया । * अतिदेशसञ्ज्ञानामपीति * । अत्र बहुवचनं लक्ष्यभेदाभिप्रायेण । * साक्षात्परम्परयेति * । साक्षाद्यथा । ग्रामणिकुलमित्यत्रोत्तरपदसन्निपातनिमित्तकं ह्रस्वत्वन्तादृशसन्निपातविघातकस्य नुकोऽनिमित्तम् । अतिदेशविषये परम्परया यथा । उपादास्तेत्यत्रैज्विषयसन्निपातनिमित्तमात्वं स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो य एज्विषयसन्निपातस्तद्विरोधित्वे न विघातकं किद्व्यपदेशस्तन्निमित्तकप्रवृत्तिको यो निषेधस्तस्यानिमित्तं यथा भवति तथा तादृशव्यपदेशस्याप्यनिमित्तम् । सञ्ज्ञाविषये परम्परया यथा आधये चिकीर्षवे कुम्भकारेभ्य इत्यत्र विभक्तिसन्निपातनिमित्तकं यद्गुणैत्वरूपं कार्यन्तत्स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातकलुक्प्रयोजकाव्ययसञ्ज्ञाया अप्यनिमित्तम् *एतेन* । पूर्वोक्तार्थकल्पनेन । अव्ययसञ्ज्ञाया अप्रवृत्तौ समाधानान्तरमाह । * अकजाद्येति * । नन्वेवमेव लुगेकवाक्यतापन्नाया अव्ययसञ्ज्ञाया वारणसिद्धौ सन्निपातपरिभाषया वारणपरभाष्यविरोधमात्रेवाभावादित्यत आह । * लुगे-

तु न गुणादितो ऽन्तरङ्गा उभयोरपि शब्दतः सुनाश्रयत्वात् ।

अव्ययादा ॥ ण्यक्षत्रियेत्यतो लुगनुवर्तते । विहितेति । अङ्गसञ्ज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः । आप्सुप्भ्या-माक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः । तेन कुम्भकारे-भ्य इत्यादौ सन्निपातपरिभाषया ऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुग्निवृत्तिपर-भाष्येण न विरोधः । अत्युच्चसाविति । अत्राधिकरणशक्तिप्रधानस्याप्युच्चै-श्शब्दस्य शक्तिविषये शक्तिमत्प्रधानत्वाद् द्वितीयान्ततया ऽत्यादयः क्रा-न्ताद्यर्थे इति समासे अवयवभूतोच्चैःशब्दादव्ययात्परत्वेन लुक् स्यात्, स-मुदायस्य तु नाऽव्ययत्वं लिङ्गाद्यन्वयित्वादित्यभिमानः । समुदायस्यापि

---

केति * । * शब्दत * । शब्दरूपस्य निमित्तस्य सत्त्वेन । न च निमित्तपदेन सप्तम्याद्यन्तमेव निमित्तं गृह्यते । लुकि तु सुप स्थानित्वेनाश्रयणम् सप्तम्यन्त शब्दोपात्तत्वेनेति वाच्यम् । अव्ययादाप्सुप इति सूत्रे सुप स्थानित्वेनाश्रयणेऽपि सुप प्रत्ययतया प्रत्ययग्रहणपरिभाषैकदेशस्य सुप् यस्माद्विधीयते तदादेरित्यस्यो-पस्थितौ कृन्मेजन्तसूत्रैकवाक्यतया सुब्भिन्ने प्रत्यये परे यदव्ययहितपूर्वं कृद-न्तम्मेजन्तन्तत परस्य सुपो लुगित्यर्थादेकनिमित्तकत्वङ्गुणेत्यलुकामस्त्येवेत्या शयात् । वस्तुतस्तु आधय इत्यादावप्यसिद्धत्वेन निर्वाहः सम्भवति । साक्षा त्सुप षष्ठ्यन्तशब्दोपात्तत्वानिमित्तत्वेनाग्रहणाल्लुगेकवाक्यतापन्नसञ्ज्ञाया अ-न्तरङ्गत्वात् । भाष्यकृता तूपायस्योपायान्तरादूषकत्वादिति न्यायेन प्रयोजनान्त रफलकपरिभाषयापि लक्ष्यसिद्धिर्भवतीत्याशयेन परिभाषैव दोषवारकतयोप न्यस्ता ।

नन्वत्युच्चैसावित्यादौ लुग्व्यावृत्तये विहितविशेषणत्वमवश्यं वक्तव्यम् । त-थाधय इत्यादावपि लुङ् न भविष्यतीति तेष्वतिप्रसङ्गमाशङ्क्य सन्निपातपरिभा-षया समाधानपरम्भाष्यमनुपपन्नमत आह । * अङ्गसञ्ज्ञायामिति । * अङ्गसञ्ज्ञाविधाय कसूत्रे इत्यर्थः । यद्यपि लुग्विधायकसूत्रमङ्गाधिकारीयन्न भवति तथापि सुप प्रत्यय त्वात्प्रत्ययग्रहणपरिभाषया सुपो यस्माद्विधानन्तदादेरव्ययाव्यवरस्येति सूत्रार्थो भविष्यति । एवञ्चात्युच्चैसावित्यादौ यस्मात्सुपो विधान तदादेर्नाव्ययत्वमाधय इत्यादौ तु विधानकाले यद्यपि नाव्ययत्वन्तथापि यस्माद्विधानन्तदादेरुत्तरकाल्कि काव्ययत्वमाश्रित्य प्राप्तस्य लुक सन्निपातपरिभाषया वारणमुचितमेवेति भाव । ननु स्वरादीना यद्यपि स्व पश्येत्यादौ कर्मार्थकत्वसम्भवेन द्वितीयैक वचनान्तत्वं सम्भवति । तथाप्यधिकरणशक्तिप्रधानाव्ययस्य न कर्मार्थकत्वसम्भव इत्यत्युच्चै-सावित्यादौ समासानुपपत्तिरत आह । * अधिकरणेति * । * अव्ययत्वमिति * । * तदन्तविधिना प्राप्तमपीति शेष । * अभिमान इति * । वक्ष्यमाणोऽभिप्राय ।

लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य नाप्यवयवस्य सञ्ज्ञा । अत एव भाष्ये सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्यात्युच्चैसावित्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम्, एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव, अव्ययात्परत्वस्याप्यभावात् । उच्चैरौ उच्चैराभ्यामित्यादेरभिधाने तु न मानम् । अत एव भाष्ये एतन्नोक्तम् । अलिङ्गत्वादिति । नान्विद् सदृशान्त्रिष्विति विरुद्धमत आह लिङ्गेत्यादि । अय भावः । यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अप्यस्याः श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारस्तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरतापीति विभक्तिवचनशब्दौ कारकसंख्यापरौ प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गेष्वित्यादिविषयसप्तमी । तच्चाद्विषये सादृश्यञ्च लिङ्गाद्यभावाश्रयत्वेन । लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषये तस्य लिङ्गयोगसत्त्वात्संख्याभावस्तु सर्वसाधारणः । तदभावादिसादृश्यादेव यद्विविधं रूपं तन्न प्राप्नोतीत्यर्थः । प्रसङ्गादाह । वष्टीति । वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः । भागुरिराचार्यः । अपिसाहचर्यादवेऽप्यादेरकारस्यैव लोपः । इदं भाष्ये न दृश्यते । निम्रिदशोरिगुपधलक्षणे के ऽदन्तत्वादेव टाप् । क्तिनि दिगित्यपि । अत एव क्याप्या-

---

मित्यत्रातिप्रसङ्गमाशङ्क्याह । * उच्चैरायित्यादि * । अततेर्डप्रत्यये टिलोपे प्रथमे अशब्दस्य द्विवचनेन सहैकादेशे परादिवद्भावात्सुप्त्वेन तस्य द्वितीये तादृशावशब्दाङ्गापि तथैव आप्त्वाल्लुक् प्राप्नोति । अथवा प्रथमे वासुदेववाचकावशब्दाद् द्विवचने द्वितीये इदशब्दस्याभ्यां ब्राह्मणीभ्यामित्यस्यैकदेशे आभ्यामित्यस्मिन्नतिप्रसङ्गशङ्का । * अत एव * । मानाभावादेव । * नन्विदमिति * । अलिङ्गत्वमित्यर्थं । * अत्रोपसंहार इति * । अव्यय उपसंहार इत्यर्थः । * प्रत्ययपरत्वे * । विभक्तिसङ्क्रप्रत्ययपरत्वे कारकशब्दश्च कारकशक्तिपरः । यद्वा कारकस्य तादात्म्येनाभावोऽत्र विवक्षितः । * अन्यतरेति * । विभक्तिवचनशब्दयोरन्यतरेत्यर्थः । * तद्विषय इति * । लिङ्गविषय इत्यर्थः । स्वरादीनामत्र लिङ्गाभावत्वेन सादृश्योक्तिर्न सर्वत्रादिपदबोध्ये किं त्वव्ययीभावातिरिक्ते तत्र नपुंसकत्वस्य विशिष्य विधानादित्याह । * लिङ्गाभावेनेत्यादि * । * तदभावादिसादृश्यादिति * । तदभावादिकृतसादृश्यादित्यर्थः । * यद्विविधं रूपमिति * । अस्य लिङ्गसम्बन्धकृतमित्यादिः । * प्रसङ्गादिति * । अव्ययनिरूपणस्य प्रक्रान्तत्वात्तेषु अवाप्योः प्रवेशादेतयोः स्मरणे सति निरूपणमेतयोरावश्यकमिति स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गनिर्वाहः । * चिन्त्य इति * । केचित्तु छान्दसा अपि क्वचिद्भाषायाम्भवन्तीत्याश्रित्य समादधुः । ननु कथं वाचेत्यादिप्रयोगाणां सिद्धिरत आह । * निम्रिदशोरिति * । * अत एव * । एतद्वचनसाध्यहान्तप्रभृति

तच्चमाशङ्क्य समाधत्ते । यद्यपीति । तदन्तेति । शब्दस्य विशेष्यत्वात्प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वाचनिकस्तदन्तविधिरिति भावः । न गौणे इति । अथ भावः । सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदघटितत्वेन अव्ययपदं बोधकमिति तादृशमहासंज्ञाकरणात्तादृशार्थानां गणे ऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति भावः । वस्तुतो ऽन्वर्थस्य प्रधानाप्रधानन्यायेन सर्वनामसंज्ञासाहचर्येण च प्रसिद्धान्तरङ्गपदान्तरानपेक्षानुपसर्जनीभूतस्यैव

---

*वाचनिक इति*। विशेष्यस्याप्रसिद्धत्वेऽपि प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वचनबलाच्छब्दस्वरूपस्य विशेष्यत्वेऽपि तदन्तविधिर्भवतीति भावः । *तादृशार्थानामिति* । लिङ्गाद्यनन्वय्यर्थानामित्यर्थः । *आवश्यकत्व इति* । यदि सर्वस्याप्यनुकरणमेतावतापि सर्वेषु विवेचितावाभेदस्य विरहाच्छब्दस्य विपर्यासरूपाप्रामितिजनकत्वं स्यात्तथापि उचितमिति भावः । यदुक्तमाभिमान इति तत्सूचितकथयन्नसिद्धान्तमाह । *वस्तुत इति* । *अन्वर्थस्य* । महासंज्ञाबललब्धस्य । ननु प्रधानाप्रधानन्यायो ह्यर्थनिर्देशविषयः । यथा पुमान् स्त्रियेत्यत्र पुंशब्दस्य स्त्र्यर्थकस्य च निर्देशे । अत्र हि ब्राह्मणवत्सा ब्राह्मणीवत्स इत्येवं महाकौ प्रधानाप्रधानन्यायेन प्रधानस्त्रीपुंसभिन्नाप्रधानस्त्रीपुंसस्तस्यापि विशेषस्य सत्त्वादेकशेषो न भवति । प्रकृते तु स्वरादिनिपातेतिशब्दपरत्वमेवपरमिति न प्रधानाप्रधानन्यायावसर इत्यत आह । *सर्वनामसंज्ञासाहचर्येणेति* । साहचर्यमत्र सादृश्यम् । तत्र यथा सर्वनामेतिमहासंज्ञाकरणेन विलक्षणोऽर्थः कल्प्यते तथाऽत्राप्यव्ययमितिमहासंज्ञाकरणेनान्योऽर्थः कल्प्यत इति भावः । *प्रसिद्धान्तरङ्गेति* । प्रसिद्धञ्चान्तरङ्गञ्चेति समासं कृत्वा प्रसिद्धमित्यादिव्याख्याभूतपदान्तरानपेक्षानुपसर्जनीभूतमिति तेन कर्मधारयः । अत्र प्रसिद्धमित्यनेन संज्ञाशब्दव्यावृत्तिः । संज्ञाशब्दो हि यदा संज्ञिबोधनाय प्रयुज्यते तदा चैत्रनामकोयमित्येवंरीत्या प्रयोगो भवति तथात्रापि स्वरनामक इत्येव प्रयोग इति पदान्तरसापेक्षता स्फुटैव । अन्तरङ्गमित्यस्य व्याख्यानमनुपसर्जनीभूतमिति । उच्चैः शब्दो हि केवलं प्रयुक्त ऊर्ध्वदेशनिष्ठाधिकरणतां प्रतिपादयति तस्य स्वार्थमात्रप्रतिपादकतयाऽन्तरङ्गत्वम् । अत्युच्चैसावित्यादौ तु यथा वृत्तिघटकस्य राजपुरुष इतिसमासावयवस्यैकार्थीभावबलाद्राजशब्दस्य राजसम्बन्धिपुरुषप्रतिपादकता पुरुषशब्दस्य च राजसम्बन्धिपुरुषप्रतिपादकता तथोच्चैः शब्दस्याप्यूर्ध्वदेशाभिन्नाधिकरणकर्मकातिक्रमणकर्तृप्रतिपादकतया बहिरङ्गत्वमिति भावः । एतेन प्रसिद्धानुपसर्जनीभूतेत्येव सिद्धेऽधिकविशेषणद्वयोपादानमनर्थकमिति शङ्काया निरासः । अव्ययात्परयोरप्सुपोरित्यर्थे उच्चैराभ्या

लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य नाप्यवयवस्य सञ्ज्ञा । अत एव भाष्ये सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्यात्युचैसावित्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम्, एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव, अव्ययात्परत्वस्याप्यभावात् । उच्चैरौ उच्चैराभ्यामित्यादेरभिधाने तु न मानम् । अत एव भाष्ये एतन्नोक्तम् । अलिङ्गत्वादिति । नन्विद सदृशन्त्रिष्विति विरुद्धमत आह लिङ्गेत्यादि । अय भावः । यथोपक्रमोपसंहाराभ्यां ब्रह्मपरायां अप्यस्याः श्रुतेर्भाष्यमामाण्यादत्रोपसंहारस्तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरतापीति विभक्तिवचनशब्दौ कारकसंख्यापरौ प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गेष्वित्यादिविषयसप्तमी । तचद्विषये सादृश्यञ्च लिङ्गाद्यभावाश्रयत्वेन । लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषये तस्य लिङ्गयोगसत्त्वात्संख्याभावस्तु सर्वधारणः । तदभावादिसादृश्यादेव यद्विविध रूप तन्न प्राप्नोतीत्यर्थः । प्रसङ्गादाह । वष्टीति । वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः । भागुरिराचार्यः । अपिसाहचर्यादवेऽप्यादेरकारस्यैव लोपः । इद भाष्ये न दृश्यते । निरिदिशोरिगुपधलक्षणे के ऽदन्तत्वादेव टाप् । किनि दिगित्यपि । अत एव दृचाप्रा-

---

मित्यत्रातिप्रसङ्गमाशङ्क्याह । * उच्चैरावित्यादि * । अतत्सेर्डप्रत्यये टिलोपे प्रथमे अशब्दस्य द्विवचनेन सहैकादेशो परादिवद्भावात्सुप्त्वेन तस्य द्वितीये तादृशावशब्दाट्टापि तथैव आप्त्याल्लुक् प्राप्नोति । अथवा प्रथमे वासुदेववाचकादशब्दाद् द्विवचने द्वितीये इदशब्दस्याभ्यां ब्राह्मणीभ्यामित्यस्यैकदेशो आभ्यामित्यस्मिन्न तिप्रसङ्गशङ्का । * अत एव * । मानाभावादेव । * नन्विदमिति * । अलिङ्गत्वमित्यर्थं । * अत्रोपसंहार इति * । अव्यय उपसंहार इत्यर्थ । * प्रत्ययपरत्वे * । विभक्तिसंज्ञकप्रत्ययपरत्वे कारकशब्दश्च कारकशक्तिपर । यद्वा कारकस्य तादात्म्येनाभावोऽत्र विवक्षित । * अन्यतरेति * । विभक्तिवचनशब्दयोरन्यतरेत्यर्थं । * तद्विषय इति * । लिङ्गविषय इत्यर्थं । स्वरादीनामत्र लिङ्गाभावत्त्वेन सादृश्योक्तिर्न सर्वत्रादिपदबोध्ये किं त्वव्ययीभावातिरिक्ते तत्र नपुंसकत्वस्य विशिष्य विधानादित्याह । * लिङ्गाभावेनेत्यादि * । * तदभावादिसादृश्यादिति * । तदभावादिकृतसादृश्यादित्यर्थं । * यद्विविध रूपमिति * । अस्य लिङ्गसम्बन्धकृतमित्यादि । * प्रसङ्गादिति * । अव्ययनिरूपणस्य प्रक्रान्तत्वात्तेपु अवाप्यो प्रवेशादेतयो स्मरणे सति निरूपणमेतयोरावश्यकमिति स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गनिर्वाह । * चिन्त्य इति * । केचित्तु छान्दसा अपि च चिन्ह्नापायाम्भवन्तीत्याश्रित्य समादधु । ननु कथ वाचेत्यादिप्रयोगाणा [illegible] आह । * निरिदिशोरिति * । * अत एव * । एतद्वचनस[illegible]

तिपदिकादिति सूत्रे अग्रहणं न कार्यमकारान्ताट्टाप् तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धं यस्तर्ह्यनकारान्तात् कुञ्चा उष्णिहा देवविशेति, अत्राप्यकारान्तादेव कुञ्चानालभते उष्णिहककुभौ देवविशामिति। अन्त्ये कप्प्रत्यय एव विषय इत्युक्त्वा यद्दुराजेति डाबन्तार्थमाप्ग्रहणमिति भाष्ये उक्तं सङ्गच्छते तस्माद्वाचेत्यसाध्वेवेति शिवम्।

इति अव्ययानि ॥

---

कटाबन्तस्य प्रयोगाभावादेव । अस्य भाष्योक्तमित्यत्रान्वयः । * अन्त्ये * । देवविशामित्यत्र । * एवविषय इति * । तत्रैव भाष्ये यस्तर्ह्यनकारान्तात्कुञ्चा उष्णिहा देवविशेति तत्र हलन्ताट्टापि कृते सुबुत्पत्तिराब्ग्रहणप्रयोजनमित्युक्त्वा । अत्राप्यकारान्तात्प्रवृत्तिर्लक्ष्यते । * कुञ्चानालभेति * । उष्णिहककुभौ । देवविशाश्च मनुष्यविशश्चेति । तत शङ्कितश्चास्ति विशेष अकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति स्वरे विशेष । यदि क्विबन्तोऽयं तदा कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तात्परविभक्तेरनुदात्तत्वं भवति । यदा तु मूलविभुजादित्वात्कान्तत्वात् थाथादिस्वरेणान्तोदात्तात्परविभक्त्या सहैकादेशो पदमन्तोदात्तमिति । तस्मात्क एव एव विषय । * तस्मादिति * । पूर्वोक्तानामन्यथासिद्धत्वात् ॥

---

इत्यव्ययप्रकरणम् ॥

श्रीगणेशाय नम ।

स्त्रियाम् ॥ अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यमेकार्थे शब्दान्यत्वादृष्ट

---

नमस्कुर्वे जगद्वन्द्यं सीतापतिमजं विभुम् ॥
यद्ध्यात्वा सिद्धिमखिलाम्प्राप्नुवन्ति महर्षय ॥ १ ॥

*स्त्रियाम्*। एतत्सूत्रं व्याख्यातुं भाष्ये शङ्कितम् स्त्रियामित्युच्यते का स्त्री नामेति । अयमभिप्राय । अयं शब्दो न कञ्चिदर्थविशेषेऽत्र शास्त्रे सङ्केतितोऽत पारिभाषिकमर्थमभिधातुमलम् । नाप्ययं जातिशब्द । रमा मानुषी खट्वाम घादिसाधारण्येन प्रयोगदर्शनात्सर्वसाधारणस्यानुगतसंस्थानस्याभावेन तद्व्यञ्ज्यत्वस्य तत्रासम्भवात् । नापि लोके यत्प्रसिद्धं शेफस्ययव्ये समवेतत्वे सति प्राणित्वम् । योनिसमवेतत्वे सति प्राणित्वम् । तदुभयासमवेतत्वे सति प्राणित्वं क्रमेण पुंस्त्वं स्त्रीत्वं नपुंसकत्वमिति घटखट्वाखानादिसाधारणस्य पुंस्त्वादिसाधारणस्य पुंस्त्वादिव्यवहारस्यानुपपत्तेरत आह।*अचेतनखट्वावृक्षादिसाधारणमिति*।*सत्त्वादीनामिति*।सत्त्वरजस्तमसां गुणानामुपचयः पुंस्त्वम् ।तेषामपचयः स्त्रीत्वम् । साम्यञ्च क्लीबत्वमित्यर्थः । साम्यमेव च स्थितिपदेनोच्यते । तदुक्तम्भाष्ये । तटे सर्वेलिङ्गानि दृष्ट्वा कोऽध्यवस्यति । अयम्पुमान् । इयं स्त्री । इदन्नपुंसकमिति । तस्मान्न वैयाकरणै शक्यं लौकिकं लिङ्गमास्थातुम् । अवश्यं कश्चित्स्वकृतान्त आस्थेय । कोसौ स्वकृतान्त । संस्त्यानप्रसवौ लिङ्गमास्थेयौ। किमिदं संस्त्यानप्रसवाविति । संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूते सप् प्रसवे पुमानिति ॥ अत्र सांख्यमतावष्टम्भेन स्वकृतान्त इत्युक्त्या सांख्यशास्त्रानुसारित्वं व्याकरणस्येति सूचितवान् । अत्र संस्त्यानप्रसवशब्दाभ्यान्तृतीयाऽवस्थापि लक्ष्यते । संस्त्यानन्तिरोभाव । एतदेवापचयशब्देनोच्यते । यद्यपि संस्त्यान सध स्त्यायेते शुक्रशोणिते यस्यामितिव्युत्पत्त्या लोकेऽपि स्त्रीशब्दो ड्रट्प्रत्ययान्त एत स्यैवार्थस्य प्रतिपादक ।तथापि स्त्रीत्वस्य खट्वादिसाधारण्योपपत्तये तिरोभावपरत्वमेव तस्य स्वीकृतम् ।एवं सूते सावित्यनेन सूङ्धातोरौणादिकोम्सुन्प्रत्ययः सस्य प् इत्यादेशो ह्रस्वश्चेत्येवंरीत्या पुमस्शब्दो व्युत्पादित सूतेऽपत्यञ्जनयतीत्यर्थेन यद्यपि प्राणिनि पुरुष एव पुमस्शब्दस्य शक्तिर्लभ्यते तथापि तस्य वृक्षादिसाधारण्योपपत्तये प्रवृत्तिराविर्भावरूपा पुमानित्यनेनोच्यते । एवं यदा न तिरोभावो न वा प्रवृत्ति किन्तु साम्यावस्था सैव स्थितिर्नपुंसकशब्देनोच्यते । ततः पुनः शङ्कितम् कस्य पुन संस्त्यान स्त्री प्रवृत्तिर्वा पुमानिति । गुणानाम् । केषाम् । शब्दस्पर्शरूपरसगन्धानाम् । सत्त्वरजस्तमांसि गुणा तेषां परिणामरूपा एव तेभ्योऽभिन्नाः शब्दादय पञ्च गुणा । सर्वाः पुनर्मूर्त्तय एवमात्मिकाः । गुणसमुदायो द्रव्यम् । सर्वस्य जगत सुखदुःखमोहरूपतया तत्कारणत्वेन सत्त्वादिरू-

लिङ्गान्यत्वमिति भाष्योक्तेरर्थनिष्ठं केवलान्वयि । इयं व्यक्तिरिदं वस्त्वयं पदार्थ इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात् यत्तु केनचिच्छब्देन किञ्चिद्वस्तु एकैकविशिष्टमेव येन केनचित्पर्यायेण लिङ्गद्वयविशिष्टं येन केनचिल्लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनादिति निर्णयम् । तत्र " स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः " इत्यादि लौकिकलिङ्गसम्भवे शास्त्रीय कार्ये शास्त्रीये उक्त एव । तदसम्भवे तु शास्त्रीयविशिष्टे लौकिके शास्त्रीयमपि शब्दतो बुध्यते तथाऽनुभवात् । उपचयापचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां सामान्ये नपुंसकमिति प्रवाद इत्यन्यत्र विस्तरः ।

अत इति वर्णग्रहणात्तदन्तविधिरित्याह । अकारान्तस्य चेति । वाच्ये

---

पञ्चाङ्गल्पते । सत्त्व सर्वपदार्थव्यापित्व पुरस्ताद्दर्शितम् । प्रवृत्तिरप्यपि नित्या । अत्र प्रवृत्तिरित्यनेन लिङ्गसामान्यलक्षणं निदर्शितम् । नित्या । सार्वदि-कत्वात्स्वार्थत्रिकत्वाच्च । सत्त्वादीनां गुणानामाविर्भावतिरोभावरूपः प्रवृत्तिशब्दवाच्यो नित्य परिणाम इति कैयटः । यद्यपि पुरुष आत्मपदवाच्यपदार्थो नित्योऽपरिणामी तथापि भोक्तृत्वात्प्रकृतिधर्मोपेत इव भवति । अत एव पुरुषश्चेतित्येतव्यमिति लिङ्गप्रयोगः । भोक्तृत्वावस्थायाम्भोग्यवस्तुतादात्म्यमेव चैतन्यप्रतीयते तदेव शब्दगोचरम् । यथा गच्छति पुरुष इति क्रियायोगस्तद्वत् । न हीह कर्मिण्यपि स्वस्मिन्नात्मनि शुद्धसम्बन्धमवतिष्ठते वर्तते वा वाचकेन वर्जितव्यम् । अपायेन वा युज्यते । शब्दोऽपि सदा । वस्तुनः कुतो व्यवस्था । विवक्षातः । स्त्रीत्वविवक्षायां स्त्री प्रसवविवक्षायां पुमान् उभयोरविवक्षायां नपुंसकमिति । एतेन प्रपञ्चेन शा-स्त्रीयलिङ्गस्य केवलान्वयित्वमिदर्शितम्भवति । * अर्थनिष्ठमिति * । अत एव स्वमोर्नपुंसकादिति सूत्रभाष्ये नपुंसकादित्यनेनाभिधेयनपुंसकग्रहणेन भवितव्यम् न हि नपुंसकं नाम शब्दोऽस्ति इत्युक्तम् । अर्थनिष्ठस्य च तादात्म्येन । यद्यपि शा-ब्दार्थयोरपि तादात्म्येन तदभिन्नाभिन्नस्येतिन्यायेन शब्दनिष्ठत्वमपि सम्भाव्यते तथापि तादात्म्यस्य भेदाभेदरूपतयाऽर्थाभेदेन प्रतीयमानत्वमेवोक्तं भाष्यात् च लभ्यते । पुल्लिङ्गः शब्द इत्यादिव्यवहारस्तु वाच्यवाचकयोरभेदाध्यवसायात् । अथ वा मतुप्प्रत्ययलुका गुणवचनेभ्य इति लुक् । * केवलान्वयीति * । अत्र केवलान्वयित्वमन्योन्याभावप्रतियोगितानवच्छेदकत्वम् । तदेवोपपादयति । * इयमित्यादिना * । नु त्रयाणामपि लिङ्गानाङ्केवलान्वयित्वे दारशब्देन स्त्रीत्वस्य पुंशब्देन पुंस्त्वस्य ज्ञानशब्देन स्त्रीत्वस्यापि प्रतिपादनापत्तिरत आह । * येन केनचिच्छब्देनेति * । * तदसम्भवे स्थिति * । यथा पशुना यजेतेत्यत्र लौकिकपुंस्त्वविशिष्टस्य शास्त्रीयलिङ्गस्य शब्दसंस्कारकत्वमिति न स्त्रिया यागाङ्गत्वम् । पशुशब्दो हि स्त्रीलिङ्गोऽपि । पञ्चावदानात्पशुमिति निषेधे दर्शनात् ।

अजादिशब्दवाच्ये स्त्रीत्वे टाबितिमूलोक्तार्थस्यैव स्वीकारे तुरगीत्यत्र टाप्प्राप्नोति । अजादिष्वश्वशब्दस्य पाठेनाश्वशब्दवाच्यस्त्रीत्वस्य तुरगशब्दार्थे सत्त्वा

मद् स्त्रीत्वमिति । तद्वाच्यार्थगतं यत्तद्वाच्य स्त्रीत्वमित्यर्थः । एवं व्याख्याने फलमग्रे स्फुटम् । तत्र द्योत्येइति । प्रत्ययार्थत्वे हि तस्य विशेष्यतापत्तिः । द्योत्यस्य तु विशेषणत्वमेवेति स्पष्टमाकरे । वागादिषु विनापि टावादिक तस्य बोधाच्च । अत एव व्यावक्रोशीत्यादौ कर्मव्यतिहारे णच् स्त्रियामिति णचि णचः स्त्रियामित्यञि च ङीप्सिद्धिः । व्यतिलुनीतइत्यादौ द्विवद्ध

---

दत आह । * तद्वाच्यार्थगतमिति * । एवमुक्तौ तद्वाच्यार्थस्य यादृशविशेषण विशिष्टस्य तच्छब्दजन्योपस्थितिविषयता तादृशविशेषणावच्छिन्नतद्विषयतावि-शिष्ट यत्स्त्रीत्वमिति विवक्षितम् । शब्दाद्युपस्थितिश्चार्थस्य शब्दप्रकारिकाऽर्थवि-शेष्यिका जायते । अश्वशब्दजन्योपस्थितिविषयताविशिष्ट यत्स्त्रीत्वन्तदश्वश ब्दसामानाधिकरण्येन भासते न तु तुरगशब्दसामानाधिकरण्येन । तथा च तत्त च्छब्दसामानाधिकरण्येन भासमान यत्तच्छब्दवाच्यस्त्रीत्वन्तस्मिन्द्योत्ये तत्तच्छ ब्दाट्टाबितिफलितम् । * अग्रे * । मूले । * तस्य * । स्त्रीत्वस्य । * विशेष्यत्वा-पत्तिरिति * । प्रकृतिप्रत्ययौ सहार्थंब्रूतस्तयो प्रत्ययार्थं प्रधानमितिन्यायात् । द्योत्यत्वे तु न विशेष्यत्वापत्ति प्रकृतिप्रत्ययावितिन्यायस्य वाचकविषयकत्वा-त् । लिङ्गस्य द्योत्यत्वे युक्तिमाह । * वागादिष्विति * । * अत एव * । स्त्रीत्व त्वादेव । ननु द्योतकविषयेऽप्युक्तार्थानामितिन्यायसञ्चार कुतो नेत्यत आह । * व्यतिलुनीत इति * । स्त्र्यादिशब्दा धर्मपरा धर्मिपरा अपि । अत स्त्रियामित्य-धिकारेऽपि स्त्रीत्वे द्योत्य इत्युक्तिर्न विरुध्यते । तदुक्तम्भाष्ये । *स्त्रियामिति* । स्त्र्यर्थाभिधाने चेट्टाबादयो भवन्ति द्विवचनबहुवचनयोरनुपपत्ति । कुमार्यौ कु-मार्य । किङ्कारणमकत्वात्स्त्रीत्वस्य । यद्यपि तत्तदर्थभेदेन तत्तत्सम्बन्धिविशिष्ट स्त्रीत्वमपि भिद्यते तथापि शब्दभेद एव स्त्रीत्वस्य भेदक इत्यभिप्रायेणेदम् । अनेकप्रत्ययानुपपत्तिश्च गार्ग्यायणी कारीषगन्ध्या इत्यादौ । एकोऽयमर्थ स्त्रीत्व नाम तस्यैकेन प्रत्ययेनोक्तत्वाद्द्वितीयस्य प्रयोगेण न भवितव्यमुक्तार्थाना-मप्रयोग इति । तत सिद्धान्तितम् । स्त्रिया प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादय इति । ननु ये नित्य टावन्ता एव प्रयुज्यन्ते तेषामप्यनेनैव सा-धुत्वमन्वाख्येयम् । तत्र चेदकारान्तस्य क्वचिच्छक्तिनिर्णय स्यात्तदा टाप्समभिव्याहारेऽधिकस्य स्त्रीत्वस्याभिव्यक्त्या टापो द्योतकत्वनिर्णयो भ वेत् । न तथा खट्वामालादिष्ववधारयितु शक्यते । न चातिखट्व अ तिमाल इत्यत्र तथा दृश्यते एवेति वाच्यम् । तत्राप्याकारान्तस्यैव ह्रस्वत्वप्र न स्वतोऽदन्तत्वन्तस्येति चेन्न । सर्वेषा स्वरवर्णानुपूर्वीज्ञानार्थ उपदेश कर्त व्य शश षष इति मा भूत् । मञ्चको मञ्चक इति मा भूत् तस्मात्सिद्धमेतद्भव ति भाष्येण क्वचिद्गुणविशेषे खट्वमालयो पाठकल्पनेन समाधानात् । सर्वेषाम

सुवद्भ् भवतीति न्यायेन द्योतकसमुच्चयस्य दृष्टत्वात् । टाप्स्यादिति । स चाधिकारात्प्रातिपदिकादेव, तच्च सन्निधानादजादिरूपमेव । नन्वजादिष्वकारान्तपाठो व्यर्थोऽत इत्येव सिद्धेरत आह । अजाद्युक्तेरिति । येन नाप्राप्तिन्यायादिति भावः । एतेन ङीपि कृतेऽपि लिङ्गविशिष्टपरिभाषया टाप् चरितार्थ इत्यपास्तम् । ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप्स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः । स्त्रीत्वञ्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह । अजादिभिरिति । व्याख्यानादेतत् षष्ठ्यन्तमिति भावः । अन्यत्र तु स्त्रियामिति तदन्तस्यापि विशेषण व्याख्यानादेव । एवञ्च पञ्च सुत्वानो यस्यां सा पञ्चसुत्वरीत्येव । पञ्चाजीति । पञ्चानामजानां समाहार इति द्विगावकारान्तोत्तरपद इति स्त्रीत्वे द्विगोरिति ङीप् । अजादिभ्य इति व्याख्याने ऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च वनोरचेत्यनेनवात्रापि तदन्तविधिसम्भव इति भाव॰ । न च तदन्तविधावपि श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम् । अनुपसर्जनाधिकारेण तदन्तग्रहणस्यैव स्त्रियामित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात् । अत्र हीति । समासे ऽजशब्दसत्त्वेपि समाहारनिष्ठ स्त्रीत्व समुदायवाच्य नाजशब्दमात्रवा-

---

धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकमिति भाष्यान्तरेण समाधानात्। घचरूपश्चमि ससाभि मति पट पञ्चपद्व इत्यादौ टापो लुक्यन्ततया दर्शनाचेति । नन्वजादीनामुक्तिर्ङीपो ङीपश्च बाधनायेत्युक्त तमजादिशब्दोपादानेन विधीयमानस्य टापो ङीपि कृतेऽपि चारितार्थ्यादत आह । * येन नेति * । ननु वक्ष्यमाणज्ञापकेन तदन्तविधावजादिभ्यस्तदन्ताच्च टाप् स्त्रीत्वे द्योत्य इत्यर्थः स्यात्तथा च पञ्चाजीत्यत्र दोष स्यादत आह । * व्याख्यानादिति * । एवञ्च प्रकृतसूत्रे स्त्रियामित्येतदजादीत्यस्यैव विशेषणम् । * अन्यत्र * । वनो र चेत्यादौ । * व्याख्यानादिति * । वक्ष्यमाणज्ञापकमूलकादित्यादि । तत्फलमाह । *एवञ्चेति*। *पञ्चसुत्वरीति*। सुयजोर्ङ्वनिप् । वनो र चेति सूत्रेण विहितयोर्ङीप्रयोर्विकल्पेन विधायकम्बहुव्रीहौ चेतिवार्त्तिकमिति केषाञ्चिन्मतेनेदम् । वस्तुतो वक्ष्यमाणरीत्याऽनुपधालोपित्वाच्च तेन ङीप् । एवञ्च बहुधीवरीत्यस्योपलक्षणमिदम् । नन्वजादीत्यस्य पञ्चम्यन्तत्वेऽपि पञ्चाजीत्यत्र टाप्न प्राप्नोति । समासप्रत्ययविधाविति ग्रहणवतेति परिभाषया वा तदन्तविधिनिषेधादत आह। * अजादिभ्य इतीति * । वनोरचेत्यत्रैवेति । अत एवातिधीवरी सिध्यति। * अजादीनामेवेति * । एव सति स्त्रियां यदजादि तस्मात्तदन्ताच्चेत्यर्थेऽपि नात्र टाप्प्राप्तिरिति भाव । * अनुपसर्जनाधिकारेणेति * तद्धि बहुकुरुचरेत्यत्र ङीपोऽनुत्पत्तये क्रियते । यदि स्त्रियामित्युपात्तस्यैव विशेषण स्यात्तदा टितस्तत्र

च्यम् । सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः । चटकेति। क्षिपकादित्वादित्व न। ह्रस्व इति । असञ्ज्ञायान्तु भस्राफलेत्येव। सम्भस्त्रेति सदजिति मूलान्नञ इति च पाककर्णेति भासस्य ङीपो बाधनार्थम् । एवञ्च श्वेतफला त्रिफलेत्यप्यत्र बोध्यम् । शूद्रा चेति । जातिलक्षणङीपोपवादः । जातिश्चेद्वाच्येत्यर्थः । पञ्चशूद्रीति समाहारे जातिवाचकत्वाभावात्, शूद्रशब्दार्थगतस्त्रीत्वाभावाच्च न दोषः । जातिश्चेदित्यस्य कृत्यमाह । पुंयोगे त्विति । न चात्र गौणत्वम् । सदृशलाक्षणिकस्यैव गौणत्वात् । गौणमुख्यन्यायस्य पदकार्यविषयत्वाच्चेति भावः । अमहत्पूर्वेत्यत्रापि जातिश्चेदिति सबध्यते । महत्पूर्वो न टाप लभते जातिश्चेद्वाच्येति तदर्थः । तत्फलन्तु जात्य-

---

स्त्रिया वृत्त्यभावात्सोऽनर्थक स्यादिति भाव । * सामर्थ्येनेति * । अजादिशब्दवाच्य यत्स्त्रीत्वमितिव्याख्यानसामर्थ्येनेत्यर्थ । तदुक्तम्भाष्ये । तदन्तविधिज्ञापनानन्तर यद्येतज्ज्ञाप्यते पञ्चाजी दशाजी अत्रापि प्रप्नोति । नैष दोष । अजादिभिरत्र स्त्रिय विशेषयिष्याम । अजादीना या स्त्रीति । अत्र कैयट । अजादिप्रातिपदिकाभिधेयसमवेतस्त्रीत्वमिह गृह्यते इति । ये तु अनुपसर्जनाधिकारे ये उपात्तास्तेषामेव विशेषण स्त्रियामिति । एव सति बहुकुरुचरेत्यत्र प्राप्तेरेवाभावेनानुपसर्जनाधिकारो न कार्य । एवमजाद्यत इति सूत्रे स्त्रियामित्यस्याजादीत्यस्य पञ्चम्यन्तत्वेऽप्येतद्विशेषणत्वमिति पञ्चाजीत्यत्र न प्राप्ति । धनोरवेत्यत्र तु तदन्तविशेषणत्वमपीति वदन्ति । तेषामर्द्धजरतीयत्वस्वीकार स्पष्ट एव । शूद्रा चामहत्पूर्वेत्यत्र महच्छब्दस्यानुकरणत्वाल्लौकिकार्थानभिधायकत्वास्वम्।*जातिश्चेदिति*।टाप्प्रवृत्तिनिमित्तभूता जातिश्चेदित्यर्थ । एतत्फलमाह। * पञ्चशूद्रीतीति * । * जातिवाचकत्वाभावादिति * । पञ्चव्यक्तिविवक्षायामेव समासविधानात् । एवञ्च यत्र शूद्रत्वजातिप्रवृत्तिनिमित्तीकृत्य शूद्रशब्दस्य वाच्यार्थे प्रवृत्तिस्तत्रैव टाप् । * पुंयोगे त्विताति * । आरोपितशूद्रत्वपुरस्कारेण स्त्रिया योगेऽपि न शूद्रत्वजातेर्मुख्य सम्बन्धोऽत्र विवक्षित इति भाव । *न चात्र गौणत्वमिति* । न च पदकार्येऽप्ययन्न्याय इत्योत्सूत्रे सिद्धान्तितमिति कथमियमाशङ्केति वाच्यम् । यत्र प्रातिपदिकावस्थायामेव गौणत्वप्रतीतिस्तत्र प्रातिपदिककार्येष्वपि तत्रत्यपदशब्दस्य गौणवृत्त्याश्रयत्वोपलक्षणत्वादिति गौणमुख्यन्यायप्रवृत्तिरिति भाव । सिद्धान्तितार्थमाश्रित्य दूषयति । * सदृशेति * । परिभाषास्थपदशब्द पदसञ्ज्ञकपर एवेति भाव । अमहत्पूर्वाशब्देऽसमर्थसमासोऽसूर्यम्पश्येतिवत्तेन यत्फलितन्तदाह । * महत्पूर्वा न टापमिति । * महाशूद्रशब्द समुदाय एवाभीरजातिवचन गोरक्षेन्द्रगोपादिशब्दवत् । तत्र समुदायव्युत्पादनायाऽवयवार्थे स्त्रीत्वमविवक्षितमेव समास क्रियते तत समुदाया

ऽन्तरनिवृत्तिपरत्वे पूर्वस्त्रातिमात्रविवक्षया महच्छब्दस्य शूद्रशब्देन मृगक्षीर-कुक्कुटाण्डवत्समासे ततः स्त्रीत्वविवक्षाया महती शूद्रेत्यर्थे महाशूद्रेति टाबेव अमहत्पूर्वेत्यत्र जातिरित्यस्यासम्बन्धेऽनुपसर्जनाधिकारेण प्रधानेन तदन्त-विधिसत्त्वाज्जातेरिति ङीप् स्यात् । शूद्रशब्दे जातिवाचकत्वस्य स्त्रीत्वे शूद्र-शब्दार्थसमवेतत्वस्यापि सत्त्वेनात्र टाप् निर्बाध इति भाष्यप्रदीपोद्द्योते निरूपितम् । महाशूद्रीति । "आभीरी तु महाशूद्री" त्यमरः । ब्राह्मणादुग्र कन्यायामाभीर' । नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या । अत्रानुलोमसङ्कराणां मातृजातिप्राप्तिरिवात्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्यत शूद्रशब्दोर्थ वानेनेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति तदर्थसमवेतस्त्रीत्वेऽपि शूद्रश-

---

थे स्त्रीत्वविवक्षायां समुदायस्य जात्यन्तरबोधकत्वादनेन टापो निषेधे जातेरि-ति ङीप् । अनेन यदा समुदायस्य जातिप्रवृत्तिनिमित्तवत्त्वविवक्षा तदा प्रतिषे-ध यदा तु महत्त्वविशिष्टा शूद्रा न त्वन्यजातीयेति विवक्षा तदा महाशूद्रा इ-त्येव । ननु जातेरित्यस्याभावेऽपि नायं दोष । अन्तरङ्गत्वात्सुबुत्पत्ते प्राक् टापि तत समासे जातस्य टापो निवृत्त्ययोगान्निषेधो जातावेव पर्यवस्यतीत्य सो दोष मुपपादयति । * तत्फलमिति * । * जातिमात्रेति * । अत्र मात्र पदेन स्त्रीत्व व्यवच्छेद । जातिपरत्वे दृष्टान्तो मृगक्षीरकुक्कुटाण्डवदिति । एतन यथा कुक्कुटस्यादीनामण्डाद्विप्रतिपत्तिवचनस्य कुक्कुटस्याण्डमितिविवक्षया समा सङ्ख्या प्रत्याख्यानन्तथाऽत्रापि समास इति निदर्शितम् । * तत स्त्रीत्व विवक्षेति * । एतेन पूर्वं टाबुत्पत्तिशङ्काव्युदास । * जातिरित्यस्यासम्बन्ध इति* । अमहत्पूर्वेत्यनेन टापो निषेध सतीति शेष । ननु समुदायस्य जातिवाच कत्वाभावात्कथ ङीप प्राप्तिरत आह । * अनुपसर्जनाधिकारेणेत्यादि * । एव ञ्च जातिवाचकात्तदन्तादिति तत्राप्यर्थ स्यादिति भाव । जातिरित्यस्योभयत्र-सम्बन्धश्च भाष्यकारीय व्याख्यानेन लभ्यते । तत्र हि । शूद्रा चामहत्पूर्वा । शूद्रा चामहत्पूर्वेति वक्तव्यम् शूद्रा । अमहत्पूर्वेति किमर्थम् । महाशूद्रा । जाति । जातिरितिवक्तव्यम् या हि महती शूद्रा महाशूद्रा सा हि भवतीति । महाशूद्रे ति समुदायस्य जातिवाचकत्व व्युत्पादयति ।*आभीरी त्विति*। अभीरी तु म हाशूद्री जातिपुंयोगयो समेत्यमर ।

वैश्यात्तु शूद्रोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते ॥

*मातृजातिवृत्तित्वामिति*।प्रतिपादकनासम्बन्धेनेत्यादि ।तेन शूद्रत्वावच्छि न्नविषयताशालिबोधजनकत्वम्फलितम् । तत्र शूद्रत्वमारोपित मुख्या तु सा जाति । * अत्रास्तीति * । तथा चास्त्येव टाप प्रसङ्ग । नन्वेवन्तदन्तवि

ब्दादेव टाप्स्यान्न तदन्तात्, ग्रहणवतेति निषेधादिति तदन्तविधिज्ञापकता नासङ्गता । अत एव शङ्खस्मृतौ ब्राह्मणक्षत्रियवैश्यः क्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्तीत्युक्तमिति भावः । यत्तु शूद्राभीरमित्यादौ सामान्यविशेषवाचित्वात् द्वन्द्वाभावमाशङ्क्याभीराजात्यन्तराणीति रथकारादीनीति सूत्रे भाष्ये उक्तं तत्त्वनारोपाभिप्रायेणेति न तद्विरोधः । अजादिराकृतिगणः । तेन न मु नइति सूत्रे टायामादेश इति भाष्यप्रयोगः सिद्धः । प्रथमाध्यायचतुर्थपादे चमसवदविशेषादिति सूत्रे शाङ्करभाष्यव्याचस्पत्योरजायाञ्छागेति टाबन्तप्रयोगो दृश्यते ऽतश्छागशब्दोऽप्यजादिष्विति केचित् ।

उगितश्च ॥ उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः । प्रत्ययविधाविति निषेधस्तु न । उगिद्वर्णग्रहणवर्जमित्युक्तेस्तदाह । उगिदन्तादिति । भवतीति । व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषय एवेति भाव । भवतु इति उगित प्रातिपदिकस्यापि सत्त्वात् प्रत्ययमात्रग्रहणाभावेन प्रत्ययग्रहणइति परिभाषाया अप्रवृत्त्या निषेधमतीत्यादौ न दोष । अञ्चतेश्चेति । नलोपिनोऽञ्चतेरित्यर्थः । नियमोपि नलोप्यञ्चतिविषय एवेति निरूपितम् ।

व्यपदेशिवद्भावलभ्यमर्थं स्पष्टप्रतिपत्तये आह । वन्नन्तादिति । नन्वेव

---

धिज्ञापक यत्कथमत आह । * तदर्थसमवेतेत्यादि * । अनुलोमसङ्कराणाम्मातृजातिप्रवृत्तित्वे मानमाह । * अत एवेति * । आरोपितमातृजातिप्रवृत्तित्वादेवेत्यर्थ । पूर्वोक्तार्थे प्रसक्तभाष्यविरोधमुद्धर्तुमाह । * यत्त्विति * । अनत्यशङ्काग्रन्थेन मातृजातिप्रवृत्तित्वं स्पष्टमेव लभ्यते । *केचिदिति* । अनाकचिवीजन्तु यदि छागशब्दस्याजादौ पाठस्तदा छागीतिप्रयोगस्योच्छेद एव स्यादिति यदि छान्दसस्तादृश प्रयोगस्तदा व्यत्ययेन साधनीयो नो चेदसाधुरेवेति ।

नन्वेवमपि प्रत्ययग्रहणपरिभाषया निर्यवमतीत्यत्र न स्यादत आह । * भवत्विति * । अत्र मानन्तु कथमिदं विज्ञायते उगित प्रातिपदिकादिति आहोस्विदुगिदन्तात्प्रातिपदिकादिति यदि विज्ञायते उगित प्रातिपदिकादिति सिद्धम् भवती महती अतिभवती अतिमहतीति न सिध्यतीति भाष्यमेव ।

वनो र चेतिसूत्रे उपात्तस्य वन प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तपरन्तस्य पुन प्रातिपदिकविशेषणत्वेन वन्नन्तान्तादित्यर्थ बहुधीवरीत्यस्य सिद्धावपि धीवरी सुत्वरीत्यस्यासिद्धिरत आह । * व्यपदेशिवद्भावेति * । येन विधिस्तदन्तस्येतिसूत्रस्थन्तस्य चेतिवक्तव्यमिति वार्त्तिकपर्यालोचनया तु तदन्तविधिलभ्य एवायमर्थ । ---पर्यालोचनायेदम् । ननु तदनुबन्धक---

प्रत्ययग्रहणपरिभाषया बहुधीवरी न सिद्ध्येदत आह तदन्ताच्चेति । तत्परिभाषाऽनभ्युपगमे तेन प्रातिपदिकस्य विशेषणादिति भावः । सामान्येति । सूत्रे ऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषाया विषयो नेति भावः । इद मतुव- सोर्जाग्रोरीति सूत्रेषु भाष्यकैयटयोः स्पष्टम् । इदं सूत्रं न ङीब्विधायकं किं तु ऋन्नेभ्य इति प्राप्तङीपमनुवादेन तत्संनियोगशिष्टरभावमात्रविधायक- मुभयविधौ गौरवात् । शर्वरीति शृधातोरन्येभ्योऽपि दृश्यन्त इति वनिप् । एतत्सिद्ध्यर्थमाह । हशन्ताद्विहित इति । अर्थवतो ग्रहणान्नेह मघोनी । कनिन्प्रत्ययान्तनिपातितस्येदम् ।

बहुव्रीहौ वा ॥ अनो बहुव्रीहेरिति प्रतिषेधे प्राप्ते इदम् । एतच्च वार्त्तिकमन उपधेति सिद्धङीपमनुवादेन रादेशविधायकम् । अत एवेदमनुपधालोपिनि सुपर्वेत्यादौ नेति विकल्पोऽर्थसिद्धः । वनोर चेत्येतत्तु ऋन्नेभ्य इत्येतन्ङीप्विषयमेवेत्युक्तम् । पक्षे डाबिति । तेन द्विवचने रूपत्रयम् ।

कृतसमासान्त इति । उत्तरसूत्रे कुम्भाभिधेयायां तस्यैव संभवेनार्थाधिकारानुरोधादिति भावः । तेन पादयते क्विबन्तस्य ग्रहणं न । द्विपदीति द्वौ पादावस्या इति बहुव्रीहौ संख्यासुपूर्वस्येति पादशब्दान्तलोपस्ततो ङीपि

---

भाषया वनिप एव ग्रहणमुचितमतमत आह । * नखुत्र इति * । अन्यतरानुबन्धकपरिभाषाप्रवृत्तिरिति भाव । न चैव ह्यन्कयाश्च ह्यश्च प्रोद्विश्वन्योरिति सूत्रे सामान्यग्रहणार्थं इतिग्रन्थविरोध इति वाच्यम् । तस्य ग्रन्थस्य गस्यन्त- सुखत्त इति पूर्वोत्तरसाहचर्यादेकानुबन्धकस्यैव ग्रहणं स्यादिति सामान्य- णार्थ ककार इत्येतत्परत्वात् । * एतत्सिद्ध्य [illegible] शार्वरीत्यस्य [illegible] मित्यर्थः । परविशेषणत्वे तु न स्यादिति भाव [illegible] इति * । [illegible] ऽनिदिष्टस्य ग्रहणमिति भाव । ननु एवं र [illegible]

पादः पत् ।

टाबृचि ॥ पूर्वसूत्रशास्त्रङीपोपवाद इति भाष्यस्तच्चिन्त्यम् । शेषाद्विभाषेति सूत्रस्थभाष्यविरोधात् । तत्र हि प्रतिपदविहितसमासान्तानाङ्कपो वैकल्पिकत्वेन कवभावे सावकाशत्वमुक्तन्तद्रीत्या ऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । बहुव्रीहेरूधस इत्यत्रापि भाष्ये स्पष्टमेतत् । अत एव ङ्याप्प्रातिपदिकादिति सूत्रे पादशब्दसमानार्थमकारान्त पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यातम् । श्रूयते च छन्दसि तस्याः सप्ताक्षरमेक पदमेकः पाद इत्यर्थ इति च भाष्योक्त सङ्गच्छते । तदा हि ऋच्यपि एकपदी एकपादितीष्यतएव । एवञ्चैकपादगित्यस्य सूत्रमते सिद्धये टाबृचीत्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम् । पादन्तस्य ऋच्यमभिधानमिति तु न

---

का भविष्यन्तीति शङ्कायामित्यादि ।

* सावकाशत्वादिति * । एवञ्चापवादत्वोक्तिर्विरुद्धेति भाव । * बहुव्रीहेरूधस इत्यत्रापि भाष्य इति * । तत्र हि ऊधसो नकारो लिङ्गाधिकारे इति वार्त्तिकम् । बहुव्रीहेरूधस इतिसूत्रानन्तरञ्चेति कर्त्तव्यम । समासान्तप्रकरणे ऊधसो नङिति सूत्रञ्च कार्यम् । बहुव्रीहेरूधस इति सूत्र एव नश्चेत्यपि वाच्यम् । अलोऽन्त्यपरिभाषया नकारादेशे कुण्डोध्नीति भविष्यति । समासान्तेषु धनुषोऽनङिति वाच्यमिति भाव । तेन कुण्डोधा पर्जन्यः कुण्डोधो धैनुकमित्यत्र पुष्पपुस्तकयोर्नानङ् । न वा समासान्ताधिकारे स्त्रीग्रहणात् । समासान्ताधिकार एव स्त्रीग्रहणङ्कर्त्तव्यम् । ऊधसो नङितिसूत्रानन्तरं स्त्रियामिति वक्तव्यम् । इतरथा हि कपविधिप्रसङ्ग । ङीपुत्पत्ते प्राक् शेषाद्विभाषेति कप् स्यात् । तत्रैवा वक्तव्यमूधसो नेङिति वाच्यम् । समासान्तस्य कपो बाधनार्थमिति भाव । क स्यात्पुनरवस्थाया कप्प्राप्नोति । प्राक् ङीपुत्पत्तेः । प्राक् तावत्प्राप्नोति । किङ्कारणम् न हि ङीप् विभाषा यद्यत्र कप् स्यात्तदा ङीप्विधानमनवकाश स्यादितिकैयट । ततो न हि ङीप् विभाषा । कप् तु विभाषा कपोऽवकाश । अन्यो बहुव्रीहि । अयवक । अव्रीहिक । ङीपोऽवकाश विभाषा कप् । यदा न कप् सोऽवकाश । कुण्डोध्नी घटोध्नी । कप्प्रसक्ते उभय प्राप्नोति परत्वात्कप् स्यात् । तस्मात्सुष्ठूच्यते न वा समासान्ताधिकारे स्त्रीग्रहणादितरथा हि कप्विधिप्रसङ्ग इत्येवमुक्तम् । * अत एव * । टाबृचीत्यस्य तदपवादत्वादेव । पादशब्दसमानार्थं कत्यन्ङ्गदयति । * श्रूयते चेति * । प्रत्याख्यानैकवाक्यतया तात्पर्यवस्यति तदाह । * तदा हीति * । * कृतसमासान्तस्यैकपदीति * । अकारान्तस्य तु एकपदेति । ङीपो वैकल्पिकत्वेन तदभावे एकपादिति । * एवञ्चेति * । प्रत्याख्या

ऋच्यनभिधाने ऽप्येकवाक्यता कुतो

भाष्याशयः । टीवन्तप्रयोगस्य सूत्रशीन्येष्टस्यासिद्धापत्तेरिति बोध्यम् । केवलपाञ्छब्दस्य स्त्रियां ऋचि वा ऽसम्भवेनात्र तदन्तविधिः । असिद्धत्वादिति । आपः परिगणितेष्वभावाञ्च तत्र नलोपासिद्धत्वम् । इदञ्च कार्यकालपक्षे । अयं निषेधः प्रियपञ्चा द्रौपदीत्यादौ नान्तेऽपि स्त्रियां यत्प्राप्नोति तन्नेत्यर्थादन उपधेति टीबपि नेति बोध्यम् । ध्वनितञ्चेदं भाष्ये । परे त्वत्र बहिरङ्गासिद्धत्वामाप्तिः । नलोपस्य तत्राभावात् । संज्ञाकृतबहिरङ्गत्वानाश्रयणात्पञ्चेत्यत्र तु स्त्रियां यत्प्राप्नोति तन्नेत्यर्थाश्रयणबलाद्भूतपूर्वपदत्वाश्रयो निषेधः । अत एव पदसंज्ञायां न लोपासिद्धत्वस्य न फलमिति न लोपः सुपीत्यत्र भाष्ये उक्तमित्याहुः ।

मन. ॥ नडीश्विति । अयमन इति चोक्तरीत्या टाब्डीपोरुभयोरपि निषेधः । एतेन सीमभ्यां बहुयज्वभ्यां बहुधीवभ्यामित्यत्र डाब्डीपोरभावे नलोपे टाप् दुर्वार इत्यपास्तम् ।

---

नेत्यत आह । * पादन्तस्येति * । * सूत्रशीत्येति * । एतत्सूत्रस्य विकल्पेन ङीब्विधायकतया टाब्ङीति सूत्रारम्भेऽपि तत्रान्यतरस्यांग्रहणानुवृत्त्या सत्सा धनीयमत एव भाष्यकृता पक्षान्तराट्टाबुत्पत्तिर्भविष्यतीत्युपपादितम् तु पादन्तस्यानभिधानेन पादो यतरस्यामित्यस्याऽप्रवृत्तिरुक्ताविता । ननु पञ्चेत्यत्र टापि कर्तव्ये पूर्वत्रासिद्धमित्यसिद्धत्वे सिद्ध पदसंज्ञामाश्रित्य नलोपासिद्धत्ववर्णनमनुपयुक्तमत आह । * आप एवेति * । नान्ययमपि नलोपासिद्धत्वस्य न फलम् । पूर्वकालजातपदत्वस्य समुदायाश्रितस्य स्थानिवद्भावेन सिद्धेरत आह । * इदामिति * । * तदन्तेष्वीति * । अधिकारलब्धस्य प्रातिपदिकादित्यस्य विशेष्यस्य षडादि विशेषणमिति तदन्तविधिप्रवृत्तः । न बहुवचननिर्देशादप्रवृत्ति । तस्य व्यक्ति बहुत्वाभिप्रायकत्वात् । * ध्वनितमिति * । एतत्सूत्रभाष्ये कस्यायं प्रतिषेध इति प्रश्न आचार्यदेशीयेन ङीबनन्तरस्य प्रतिषेध इत्युत्तरिते टाप् कस्मान्नेति शङ्कायां नलोपासिद्धत्वे नाचार्यदेशीयेनैव समाहितम् । तत पुन परिगणितेष्वेव नलोपस्यासिद्धत्वशङ्कायां शिष्यबुद्धिपरीक्षार्थं नलोप सुपीति न प्रत्ययग्रहणाद्धितर्हि स्वौजसेति सुशब्दमारभ्य चाप पकारेण प्रत्याहारे इत्युत्तर बहुधर्मिकेत्यत्रेन्ने दोषे शिष्येणोद्भाविते स्त्रियां यत्प्राप्नोतीति व्याख्यानेन सिद्धान्तिना सर्वनिषेध इत्युक्तेनान उपधेति ङीपोऽपि निषेध इति ध्वनितमित्यर्थः । मूलकारादूयुक्त दूषयति । * परे त्विति * । अन्योक्तम्बहिरङ्गासिद्धत्वन्दूषयति * अत्र बहिरङ्गासिद्धत्वमाप्तिरिति * । * अत एव * भूतपूर्वगत्याश्रयणादेव । एवञ्च लक्ष्यसिद्धये यथोद्देशपक्ष एव प्रकृते आश्रीयत इति कथितम्भवति ।

* अयम् * । मन इतियोग । उक्तरीत्या स्त्रियां यत्प्राप्नोतीति व्याख्यानेन ।

डाबुभा ॥ उभाभ्यां ग्रहणाभावे संनिहितस्यान एवानुवृत्तिः सम्भाव्येत। वचनसामर्थ्यात् डाङ्निषेधयोः पर्याये सिद्धे ऽन्यतरस्यामिति स्पष्टार्थम्। भाष्ये त्वन्यतरस्याङ्ग्रहणं वाक्यभेदेनानो बहुव्रीहेरित्यनुवर्त्य ततः पक्षे ऋन्नेभ्य इति ङीनर्थम्। एवञ्चान उपधेति सूत्रं नियमार्थमिति बहुधीवरीत्यत्र ऋन्नेभ्य इति ङीनिति तत्सन्नियोगेन रेफादेशः सिद्ध्यतीति बहुव्रीहौ चेति वचनं प्रत्याख्यातम्। अनउपधेति ऋन्नेभ्य इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः।

अन उपधेति। बहुव्रीहेरूधस इत्यतो बहुव्रीहेरिति संख्याव्ययादेरित्यतो ङीबिति चानुवर्त्तते। अनुपसर्जनादित्यनुवृत्तमप्यत्र न सम्बध्यते तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चाऽन्तवहुव्रीहावनुपसर्जनस्यासम्भवात्। ध्वनितञ्चेद वनोर चेति सूत्रे भाष्ये। तत्र ह्यनो बहुव्रीहेरित्यनन्तरमुपधा-

* वचनसामर्थ्यात् *। यदि नित्यो डाप् तदाऽनो बहुव्रीहेर्मनश्च डाबित्येव सूत्रद्वैध्यमिति भाव। *वाक्यभेदेति*। योगविभागद्वारेत्यादि। एवञ्चाऽनन्तात्प्रासस्यैव ङीप उज्जीवनमिति फलितम्। * नियमार्थमिति *। अनो योऽसौ विकल्प स उपधालोपिन एवेति नियमार्थमित्यर्थ। एव सति बहुधीवराद्यत्रेतरप्रकरणस्य एव ङीप्। ननु नियमशास्त्राणान्निषेधरूपेण प्रवृत्तिरितिपक्षे यद्यप्युक्ता व्यवस्था तथापि विधिरूपेण प्रवृत्तिरितिसिद्धान्ते बहुधीवरीत्यत्र प्रकरणान्तरस्य एव ङीप्स्यादत आह। * अन उपधेति चेति *। अन उपधा।

यद्यपीद सूत्रमष्टाध्याय्याम्प्रकरणान्तरे पठितन्तथापि भाष्ये वह्नो रचेति सूत्रे अनो बहुव्रीहेरुपधालोपिनो वेतिपाठित तत्तुल्यतया व्याख्यानयोग्यमितीह मूले व्याख्यात तदेतदभिप्रेत्याह। * न सम्बध्यत इति *। वाक्यार्थविरोधात्। * तदुपपादयति *। तस्य गृह्यमाणेति। * गृह्यमाणस्य *। अत्र तस्य। असम्बन्धे प्रमाणमाह। * ध्वनितञ्चेदमिति *। * इदमिति *। अनुपसर्जनादित्यस्यानेन सह मिलित्वा वाक्यार्थबोधाजननम्। * बहुव्रीहेरित्यनन्तरमुपधालोपिनो वेति *। वनो र चेति सूत्र एवाऽनो बहुव्रीहेरिति पठित्वा उपधालोपिनो वेति पठितम्। एव न्यासे उपधालोपिन इत्यत्रानुपसर्जनादित्यस्य सम्बन्धयोग्यतैव न अस्य योगस्य पूर्वत्वात्। न च बहूनि दामानि येषान्ते बहुदामानस्तानतिक्रान्ताऽतिबहुदामा इत्यत्र ङीयभावार्थमनुपसर्जनादित्यस्य सम्बन्ध आवश्यक इति वाच्यम्। स्त्रियामित्यस्य गृह्यमाणबहुव्रीहिविशेषणतयैवातिप्रसङ्गभङ्ग सम्भवत्येतदर्थमनुपसर्जनाधिकारो न कार्य इत्यभिप्रायात्। यत्तु मनोरमायां वनो बहुव्रीहेरित्यस्यानन्तरमुपधालोपिनो वेति सूत्रम

लोपिनो वेति न्यासो दर्शितः । विद्ध्यर्थमिदम् । अन्यतरस्याङ्ग्रहणन्त्वनुपधालोपि सुपर्वेत्यादौ सावकाशयोर्डाप्प्रतिषेधयोरुपधालोपिन्यवकाशेन ङीपा बाधो मा भूदिति। अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

फकारादिति । अनेन वर्णमात्रं विवक्षितमकार उच्चारणार्थ इति सूचयति । न च फारिकेत्यत्राकारेण व्यवधानादाप्परफकाराभावेनेत्वानाप्तिरेकादेशेऽप्यच' परस्मिन्निति स्थानिवद्भावाद्व्यवधानमेवापि परतो ऽकारस्य फात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषोपस्थिते व्यवहिते न प्राप्नोतीति वाच्यम् । आनन्तर्यांशोपस्थितावपि येन नाव्यवधानमिति न्यायेनाकारव्यवधानेऽपि प्रवृत्तेः । रथफल्यादौ च नातिप्रसङ्गः । केति सङ्घातग्रहणे स्वेतिका

---

स्त्रियत्युक्तम् तत्रत्यम् इत्यस्यानन्तरमितीति प्रतीकमुपादयोक्तमनो बहुव्रीहेर्डाबुभाभ्याम् । अनुपसर्जनात् । उपधालोपिनो वेतिपाठ्यमिति शब्देन्दौ । यथाश्रुतेऽनुपसर्जनादित्यस्य सम्बन्धो दुर्घट । अत एव बहुदामानि पुराण्यतिक्रान्ता नगरीत्यत्र ङीन्नेत्युक्तन्तेनास्य विरोध इति । तन्न । मनोरमाव्याख्यानपरशब्दरत्नग्रन्थस्य स्त्रियामितिप्रातिपदिकविशेषणमिति पक्षेऽनुपसर्जनादित्यस्यारम्भ इति पूर्वाभिप्रायकत्वात् । * विप्रत्यादिमामिति * । अत उपधेतिसूत्रमित्यर्थ । नन्वत्रापि विधानसामर्थ्यान्ङीन्निषेधडापां पर्यायसिद्धावन्यतरस्यामिति व्यर्थमत आह । * अन्यतरस्याङ्ग्रहणान्नियति * । केचित्तु डाबुभाभ्यामन्यतरस्याम् । अनुपसर्जनात् । उपधालोपिनो वा इति टीप्सूत्रे च योगविभागेनोक्तरीत्याऽनो बहुव्रीहेरित्यनुवर्त्यान्नन्ताद्बहुव्रीहेर्डाब्वा । एतेन टीपा सह विकल्पसिद्धिः । अत उपधालोपिन इतिसूत्रन्तूक्तरीत्या नियमार्थम् । * एतत्फलार्थमेव तत्र वेति * । अनुपसर्जनस्येत्यस्य प्रयोजनन्तूक्तमेव बहुराशीत्यादौ अन्नेभ्य इत्येव ङीप् । अत एव बहुधीवरीत्यस्य सिद्धिः । एतच्च बहुव्रीहौ वेति न कार्यमित्याहुः ।

*अनेन*।कारप्रत्ययकरणेनाथदि केति समुदायो विवक्षितः स्यात्तदाऽकचि न स्यात् ।*आपीत्यस्य*। ककारविशेषणत्व साक्षादुद्देश्यविशेषणत्वं वा । उभयथाऽनुपपत्तिरित्याशयेन शङ्कते । * न चेति * । ननु परेणाकारेणैकादेशे परादिवद्भावेन भविष्यतीत्यत आह । * एकादेशोऽप्यच' परेति * । साक्षादुद्देश्यविशेषणत्वकल्पेनेप्याह । *थापि परत इति* । ननु सूत्रारम्भसामर्थ्याद्व्यवधानेऽपि प्रवृत्तिरिति चेत्र । रथकल्यादावतिप्रसङ्गात् । समाधत्ते । * आनन्तर्यादाविति * । *अकारव्यवधानेऽपीति* । अनेनापीति ककारविशेषणमिति सूचितम् । ननु केतिसंघातग्रहणमिति पक्षेऽपि न यासयोरितिज्ञापकेन सौत्रमकारवैशिष्ट्यमादा

इत्याद्यसिद्धिः । अकन्यकारस्योच्चारणार्थतया कशब्दाभावात् । न यासयोरिति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते । अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्वमप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम् । तावतापि प्रत्ययस्थत्वाशानुपपत्तेश्च । न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्वाप्राप्तिः । द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात् । पुनः स्थानिवत्त्वन्तु न । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः । टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम् । तस्य टापैकादेशेनापहारेणादर्शनात् । अत एव न यासयोरिति निषेधसार्थक्यम् । स्थग्रहणन्तु स्पष्टार्थङ्केवलककारस्य प्रत्ययस्याभावात् । असुप इति बहुव्रीहिणा नाङ्गविशेषणं बहुचर्मिकेत्यादावित्वापत्तेः । प्रत्ययलक्षणेनाङ्गस्य सुबन्तत्वात् । नलुमतेति तु नात्र लुमता लुप्ते प्रत्यये यदङ्गन्तस्य कार्ये तन्निषेधप्रवृत्तेः । इदन्तु टाप्यङ्गमिति दिक् । सर्विकेति । अव्ययसर्वनाम्नामित्यकच् । कारिकेति । करोतेर्ण्वुल् । नौशब्दात्स्वार्थे कः । सुपः परो नेति प्रसज्य प्रतिषेधेन व्याख्याने फलमाह । बहुपरिव्राजकेति । पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन सुबन्तभिन्नत्वेन च

---

येत्वप्रवृत्तिर्भविष्यतीत्यत आह । * न यासयोरिति * । * प्रत्ययस्थत्वाशेति *। एतिकेत्यत्र लक्ष्ये केतिसंघातस्य प्रत्ययस्थत्वाशानुपपादनादित्यर्थः । प्रत्ययसंज्ञासूत्रोच्चारितशब्दबोध्यस्य न तु बोधकस्येत्सञ्ज्ञोत्तरकालमेव प्रत्ययसंज्ञाप्रवृत्तेः । वर्णग्रहणेऽपि येन नाव्यवधानन्यायेन सर्विकेत्यादावेव स्यान्न त्वेतिकेत्यादाविति शङ्कते । * न चेति * । * अपहारेणेति * । स्थानिवद्भावप्रवृत्तिकाले स्थितस्याप परनिमित्तोऽजादेश इति बुद्धिः सा तु न सम्भवति तस्य टापा सहैकादेशेनापहारादिति भावः । अत एव पूर्वोक्तरीत्या एकस्यैव स्थानिवद्भावस्य प्रवृत्तेरेव । * स्थग्रहणं तु स्पष्टार्थमिति* । प्रत्यये कादित्येव सिद्धेरिति भावः । न च कान्तात्प्रत्ययादित्यर्थापत्त्यात्रकव्येव स्यादिति वाच्यम् । क्षिपकादीनाञ्चेतिनिषेधवैयर्थ्यापत्तेः । * देविकाशिंशपेतिनिर्देशासंगतेश्चेति * । ननु तथापि कादौ प्रत्यय इत्येव किन्न स्यादिति वाच्यम् । न यासयोरितिसूत्रवैयर्थ्यापत्तेः । * बहुव्रीहिणेति * । न सुप्यस्येतिबहुव्रीहिणेत्यर्थः । * प्रसज्यप्रतिषेधेनेति * । स आप्सुप परो नेतिरीत्या । * पर्युदासेन व्याख्याने सुब्भिन्नात्सुबन्तभिन्नादित्यर्थो वा स्यात्तदाह । पर्युदासे हीति * । * उत्तरस्याकारस्येति * । पूर्वशब्दाभावे [illegible] त्यये दिग्वाचकशब्दाध्याहारप्रसङ्गे परशब्दाध्याहारेण [illegible] स्य स्यादिति भाव । न च सर्विका सिद्धिरेव [illegible] वाच्यम् । तेषु [illegible]

लोपिनो वेति न्यासो दर्शितः । सिद्ध्यर्थमिदम् । अन्यतरस्याङ्ग्रहणन्त्वनुप-धालोपि सुपर्वेत्यादौ सावकाशयोर्डाप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति । अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

फकारादिति । अनेन वर्णमात्रं विवक्षितमकार उच्चारणार्थ इति सूच-यति । न च फारिकेऽन्यत्राकारेण व्यवधानाद्राप्यरफकारादानेनेत्यनाप-त्तिरेकादेशेऽप्यच' परस्मिन्निति स्थानिवत्त्वाद्व्यवधानमेवापि परतो ऽकारस्य फात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषोपस्थिते व्यवहिते न प्राप्नोतीति वाच्य-म् । आनन्तर्यांशोपस्थितावपि येन नाव्यवधानमिति न्यायेनाकारव्यवधा-नेऽपि प्रवृत्ते' । रथफल्यादौ च नातिप्रसङ्गः । केति सङ्घातग्रहणे रथेतिवा

---

त्स्विदत्युक्तम् तथास्यम् इत्यस्यान तरमितीति अतीरुमुपाद्ययोऽमनो बहुमी ह्रेडोंधुभाभ्याम् । अनुपसर्जनात् । उपधालोपिनो वेतिपाठ्यमिति शाब्द एवो । यथाश्रुतेऽनुपसर्जनादित्यस्य सम्बन्धो दुर्घट । अत एव बहुदा मानि पुराण्यतिमान्ता नगरीत्यत्र ङीम्नेत्युक्तेनास्य विरोध इति । तत्र । मनोरमाव्याख्यानपरशब्दरत्नग्रन्थस्य त्रियामीतमासिपदिकविशेषणमिति पक्षे ऽनुपसर्जनादित्यस्यारम्भ इति पूर्वाभिप्रायकत्वात् । * सिद्ध्यर्थमिदमिति * । अत उपधेतिसूत्रमित्यर्थ । न यत्रापि विधानसामर्थ्यान्ङीप्निषेधडापां पर्याय सिद्धावन्यतरस्यामिति व्यर्थमत आह । * अन्यतरस्याङ्ग्रहणन्त्विति * । के चित्तु डाबुभाभ्यामन्यतरस्याम् । अनुपसर्जनात् । उपधालोपिनो वा इति ङी प्सूत्रे च योगविभागेनोक्तरीत्याऽमा बहुमीहरित्यनुवर्त्य तादृग्बहुव्रीहेर्डाब्वा । एतेन ङीपा सह विकल्पसिद्धिः । अत उपधालोपिन इतिसूत्रन्तु उक्तरीत्या निय मार्थम् । * एतत्फलार्थमेव तत्र वेति * । अनुपसर्जनस्येत्यस्य प्रयोजनं तूक्तमेव बहुराजेत्यादौ अन्नेभ्य इत्येव ङीप् । अत एव बहुधीवरीत्यस्य सिद्धि । एवञ्च बहुव्रीहेः वेति न कार्यमित्याहु ।

*अनेन*।कारप्रत्ययकरणेनायद्दि केति समुदायो विवक्षित स्यात्तदाऽक्वि ■ स्यात् ।*आपीत्यस्य* । फकारविशेषणत्वं साक्षादुद्देश्यविशेषणत्वस्या । उभ-यथाऽनुपपत्तिरित्याशयेन शङ्कते । * न चेति * । ननु परेणाकारेणैकादेशे परा दिवद्भावेन भविष्यतीत्यत आह । * एकादेशेऽप्यच परेति * । साक्षादुद्देश्यवि शेषणत्वकल्पेऽप्याह । *आपि परत इति* । ननु सूत्रारम्भसामर्थ्याद्व्यवधानेऽपि प्रवृत्तिरिति चेन्न । रथफल्यादावतिप्रसङ्गात् । समाधत्ते । * आन तर्येत्यादीति * । *अकारव्यवधानेऽपीति* । अनेनापीति फकारविशेषणमिति सूचितम् । ननु क-तिसङ्घातग्रहणमिति पक्षेऽपि न यासयोरितिज्ञापकेन सौत्रमकारवैशिष्ट्यमाद्र

इत्यायसिद्धिः । अकच्प्रकारस्योच्चारणार्थतया कशब्दाभावात् । न यासयोरिति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते । अकज्विधायकस्थमकारविशिष्टग्रहणमादायेत्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम् । तावतापि प्रत्ययस्थत्वांशानुपपत्तेश्च । न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्वाप्राप्तिः । द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात् । पुनः स्थानिवत्त्वन्तु न । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः । टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम् । तस्य टापैकादेशेनापहारेणादर्शनात् । अत एव न यासयोरिति निषेधसार्थक्यम् । स्वग्रहणन्तु स्पष्टार्थं केवलककारस्य प्रत्ययस्याभावात् । असुप इति बहुव्रीहिणा नाङ्गविशेषणं बहुचर्मिकेत्यादावित्वानापत्तेः । प्रत्ययलक्षणेनाङ्गस्य सुबन्तत्वात् । नलुमतेति तु नात्र लुमता लुप्ते प्रत्यये यदङ्गन्तस्य कार्ये तन्निषेधप्रवृत्तेः । इदन्तु टाप्यङ्गमिति दिक् । सर्विकेति । अव्ययसर्वनाम्नामित्यकच् । कारिकेति । करोतेर्ण्वुल् । नौशब्दात्स्वार्थे कः । सुपः परो नेति प्रसज्य प्रतिषेधेन व्याख्याने फलमाह । बहुपरिव्राजकेति । पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन सुबन्तभिन्नत्वेन च

---

येत्वप्रवृत्तिर्भविष्यतीत्यत आह । * न यासयोरिति * । * प्रत्ययस्थत्वांशेति * । एतिकेत्यत्र लक्ष्ये केतिसंघातस्य प्रत्ययस्थत्वांशानुपपादनादित्यर्थः । प्रत्ययसंज्ञासूत्रोच्चारितशब्दनोधस्य न तु बोधकस्येत्सञ्ज्ञोत्तरकालमेव प्रत्ययसंज्ञाप्रवृत्तेः । वर्णग्रहणेऽपि येन नाव्यवधानन्यायेन सर्विकेत्यादावेव स्यान्न त्वेतिकेत्यादाविति शङ्कते । * न चेति * । * अपहारेणेति * । स्थानिवद्भावप्रवृत्तिकाले स्थितस्याय परनिमित्तोऽजादेश इति बुद्धिः सा तु न सम्भवति तस्य टापा सहैकादेशेनापहारादिति भावः । अत एव पूर्वोक्तरीत्या एकस्यैव स्थानिवद्भावस्य प्रवृत्तेरेव । * स्वग्रहणं तु स्पष्टार्थमिति * । प्रत्यये कादित्येव सिद्धेरिति भावः । न च कान्तात्प्रत्ययादित्यर्थोपपत्तावकच्येव स्यादिति वाच्यम् । क्षिपकादीनाञ्चेति निषेधवैयर्थ्यापत्तेः । * देविकाशिंशपेतिनिर्देशास्तगतेश्चेति * । ननु तथापि कादौ प्रत्यय इत्येव किन्न स्यादिति वाच्यम् । न यासयोरितिसूत्रवैयर्थ्यापत्तेः । * बहुव्रीहिणेति * । न सुब्यस्येतिबहुव्रीहिणेत्यर्थः । * प्रसज्यप्रतिषेधेनेति * । स आप्सुप परो नेतिरीत्या । * पर्युदासेन व्याख्याने सुब्भिन्नात्सुबन्तभिन्नादित्यर्थो वा स्यात्तदाह । * पर्युदासे हीति * । * उत्तरस्याकारस्येति * । पूर्वशब्दाभावे कादितिपञ्चम्युपपत्तये दिग्वाचकशब्दाध्याहारमपेक्ष्य परशब्दाध्याहारेण कात्पूर्वस्येत्यत्रोत्तरस्याकारस्य स्यादिति भावः । न च सर्विका पूर्विकेति सिद्धिरेव कुतो नोद्भावितेति वाच्यम् । तेषु कृतानिष्टत्वं शब्दाध्याहारे

ततः परत्वादिन्त्वं दुर्वारमिति भावः । परिपूर्वाद्वृञ्जेर्ण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वं बोध्यम् । कटुकेति । आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्चान्यककारादुत्तरस्याकारस्यैवेत्त्वं स्यादिति भावः । मामकेति । कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे युष्मदस्मदोरन्यतरस्यामित्यणि तवकममकावेकवचने इति ममकादेशे आदिवृद्धिः । नरानिति । कै शब्दे इत्यस्मादेच उपदेशइत्यात्वे आतोनुपसर्गेइति के आतो लोप इटि चेत्यालोपः ।

न यासयोः ॥ प्रत्ययस्थादिति प्राप्ते निषेधोयम् । यकेति । यत्तदोरकच् त्यदाद्यत्वे टाप् । सन्निपातपरिभाषा ऽस्मादेव निषेधान्निर्देशाद्वाऽनित्येति तद्विरोधात्कथं टाबिति न शङ्क्यम् । त्यकनश्चेति । मृदस्तिकानिति इत्वभूतनिर्देशेन ज्ञापकेनास्येत्त्वं वारयितुं शक्यमिति भाष्यकृतः । पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे पञ्चमृत्तिक इत्यस्यानभिधानमिति तदाशयः । अत्र तिकानि कर्तव्ये ऽकारोच्चारणादित्त्वं नेति न तु शक्यम् । पञ्चापत्यको

---

सिध्यति तथापि तत्र पाक्षिको दोषः कटुकेत्यत्र तु सर्वथैवमनिष्टमेवेति तदेव निवर्तितम् । यदि चोदीचामिति सूत्रेऽनुवर्तमानं कादिति ककारनिष्ठपूर्वत्वनिरूपिताधेयत्ववाचकं यथा तदा त्यकत्यत्र यो यकारस्तत्पूर्वस्य कात्परत्वाभावः स्यात् । किञ्च य ककारस्तदुपादानं व्यर्थं स्यात् । ककारपूर्वस्य कात्परत्वाभावात् । नित्यं क्रीडाजीविकयोरितिनिर्देशाच्चेति कादिति पञ्चम्युक्तपरत्वनिरूपिताधेयत्वविशिष्टवाचकमिति विभाव्यते तदा पूर्वस्येति स्पष्टार्थम् । *आदिवृद्धिरिति* । केवलमामकेति सूत्रविहिता ङीप् तु न अत्रास्य यौगिकत्वात् । तस्य संज्ञाछन्दसोः प्रवृत्तेः ।

* तद्विरोधादिति * । सन्निपातपरिभाषाविरोधात् । विभक्तिसन्निपातनिमित्तकस्याऽत्वस्य तादृशसन्निपातविघातकटाब्निमित्तत्वञ्च स्यात् । इत्वभूतेति इत्वम्प्राप्तो यो निर्देशः इत्त्वघटित इति । * ज्ञापकेनेति * । तकारादेः प्रत्ययस्यावयवो यः ककारस्तस्मात्पूर्वस्य नेति निषेधेत्यर्थः । ननु यत्र टापो लुक्तत्रेत्वस्य श्रवणार्थमिकारादेशोऽस्त्विति कथमेतन्निषेधकमित्याशङ्कानिवारणायाह । *पञ्चभिरिति* । *तदाशय* । भाष्यकाराशयः । न चाच परस्मिन्निति स्थानिवत्त्वेन पञ्चमृत्तिक इत्यत्रेत्वस्य श्रवणं सुवचम् । लुका लुप्तस्य स्थानिवदिति निषेधात् । न चान्तरङ्गे इत्वे बहिर्भूततद्धितलुङ्निमित्तत्वेन टाब्लुको बहिरङ्गस्यासिद्धत्वेनेत्वम्भविष्यतीति वाच्यम् । अन्तरङ्गानपीतिपरिभाषया बहिरङ्गपरिभाषाया बाधात् । अत्र मृदस्तिकन्नितिवदुपाधिभ्यां त्यकन्निति सूत्रे त्यकनि कर्तव्ये ऽकारोच्चारणादित्त्वं भविष्यतीति प्राचोक्तं दूषयति । *अत्र तिकनीति* । *उभ

भाम इत्यादावकारश्रवणानापत्तेः । टापो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न, उभयोरपि नलुमतेत्यनेन निषेधात् । अत एव कतीत्यादौ वार्तिकमते ऽपि न गुण इत्यन्यत्र विस्तरः । आशिषि वु । आशिषि विहितस्य वुनोऽस्येत्वं नेत्यर्थः । जीवतादित्यर्थे आशिषि चेति वुन् । देवदत्तशब्दादनुकम्पायाङ्घन्यनजादौ च विभाषा लोपो वक्तव्य इति दत्तशब्दस्य लोपः । देवदत्तिकेत्युपन्यासस्तु दत्तलोपमभिव्यक्तम् । ध्रुवकेति । ध्रु स्थैर्ये पचाद्यचि कुट्यादित्वात् गुणाभावे उवङ् ततष्टाप्यज्ञाताद्यर्थे कः केण इति ह्रस्व॰ पुनष्टाप् । चटेः सञ्ज्ञायां रवुन् । वार्तिकोक्ता गणा आकृतिगणाः । तेन कन्यका ध्रुवका अलका इष्टकादयः साधवः । उदीचामित्विति । अत्रापि शकुनाविति सम्बद्ध्यते । तेनान्यत्र नित्यमेवेत्वम् । सूतका पुत्रि ॥ पुत्रकेत्यकार सहितः पाठो ऽपाठः कैयटाद्यसंमतेः । सूतशब्दात्स्वार्थे कन् । वृन्दशब्दाच्छृङ्गवृन्दाभ्यामारकन् इति मत्वर्थीय आरकन् । वृन्दारकशब्दो मुख्यवाची त्रिलिङ्ग इति भाव । ङीन इति । शार्ङ्गरवादित्वाज्जातस्येति भावः । अन्यत्र । सूतकादौ ।

उदीचाम् ॥ यकपूर्वत्वञ्चाव्यवहितमेव । एव प्रत्ययस्थादिति सूत्रे कात्पूर्वत्वमपि । उदात्तस्वरितयोरित्यादाविवानुवादे ऽपि निर्दिष्टपरिभाषा-

---

यो * । प्रत्ययलक्षणस्थानिवद्भावयो । अत एव प्रत्ययलोपसूत्रस्य नियमार्थत्वपरभाष्यसङ्गतिरन्यथैतादृशो विषये न लुमतेतिनिषेधात्प्रत्ययलक्षणाप्रवृत्तावपि स्थानिवद्भावेन तत्प्रयोज्यकार्यं स्यादिति नियमार्थत्ववर्णनमसङ्गतं स्यात् । * अत एव * । उभयनिषेधादेव । * वार्तिकमतेऽपीति * । तन्मते न लुमतेतिसूत्रेण प्रत्ययलोपइति सूत्रस्य विधायकस्य निषेधेऽपि स्थानिवत्त्वेन गुण स्यादेवति भाव । * न गुण इति * । एतञ्च नियामकत्वस्वीकर्तृभाष्यकारवचनप्रामाण्याल्लुमता शब्देन लोपे सति कथमपि प्रासन्ताश्रिमित्तककार्यंच भवतीति कल्प्यत इति भाव । देवकेत्यस्य साधुत्वमुपपादयति । * देवदत्तशब्दादिति * । मतभेदेनेत्वविकल्प शकुनावित्यत आह । * अत्रापीति * ।*अन्यत्र* । शकुनिभिन्ने । ननु वृन्दारका दैवतानीति कोशाद्वृन्दारकशब्दो नित्यपुल्लिङ्ग इत्यत आह । * मुख्यवाचीति * । अत एव भाष्ये वृन्दारका वृन्दारिकेत्युदाहृतम् । मुख्यवाचकस्य त्रिलिङ्गत्वे तु त्रिपूत्तर इत्युपक्रम्य वृन्दारकौ रूपिमुख्यावित्यमरसिंहोक्तिः प्रमाणम् ।

* उदीचामात स्थाने * । अत्रार्थगत स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिङ्गनिर्देश । यकपूर्वे त्यस्य यकौ पूर्वौ यस्या इत्यर्थं । * निर्दिष्टपरिभाषेति * । तस्मादिति परिभाषेत्यर्थः । [illegible]

लुकि ततोऽकचि वा पुनर्विशिष्टात्सुपि त्यदाद्यत्वे टापि समासात्पूर्वोत्पन्नसुपः पर एव टाविति भावः । बहुव्रीहौ तु प्रियैतत्का प्रियैतकत्का वा कबभावे प्रियैतकदित्येव सर्वथा नेत्वप्राप्तिः । अनेषकेति । अज्ञातैषका न एषकेति विग्रहः पूर्वं नञ् समासेऽज्ञाताऽनेषेति । असम्भवादिति । एषाद्वेति निर्देशात्सञ्ज्ञोपसर्जनयोरप्राप्तेरिति भावः । अकजई इति । एवञ्च तद्ककारस्यातः स्थानिकत्वाभाव इति भावः । अर्थान्तरे त्विति । आत्मज्ञातिधनेष्वित्यर्थः । "स्वो ज्ञातावात्मनि स्वान्त्रिष्वात्मीये स्वोऽस्त्रियान्धने" इति कोशादिति भावः । कप्रत्ययान्तत्वादिति । तत्र च नान्तर्वर्त्तिविभक्त्या सुपः परत्वं केन व्यवधानादिति भावः । संज्ञापूरण्योश्चेति निषेधेन संज्ञाया अपि भाषितपुंस्कत्वशो ग्नेन सञ्ज्ञाभूतेनाभाषितपुंस्काच्चेत्यनेन सिद्धिः । आत्मीयत्वपुरस्कारेणैव सञ्ज्ञाकरणादिति बोध्यम् । नित्यमेवेति । तत्र ह्यकचि कृते आतः स्थानिकत्वाभावः । एवमत्यन्तस्वार्थिककान्तेऽपि नित्यमेवेत्त्वम् । अकचोऽत्यन्तस्वार्थिकापवादत्वाभावात् । निःस्वकेति । स्वस्या निष्क्रान्तेति विग्रहः । उपसर्जनह्रस्वः टाप् अज्ञातादौ कः ।

अभाषित ॥ स्त्रीविषयाचेति नोक्त स्त्रीनपुंसकदामशब्दात् डाप्यज्ञाता दामा दामिका दामाका दामकेत्यसिद्ध्यापत्तेः । विहितस्येति व्याख्याने फलमाह । बहुव्रीहेरिति । अविद्यमाना खट्वा यस्या इति विग्रहे पाक्षिक कबभावे गोस्त्रियोरित्युपसर्जनह्रस्वे ऽखट्वाशब्दादापि सुप्यज्ञातादौ के सुब्लुकि केण इति ह्रस्वे पुनष्टाप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनैतद्विकल्पाभावादुत्सर्गेण नित्यमेवेत्व, परविशेषणत्वे तु तादृशखट्व-

---

* समुदायार्थगतकुत्साविवक्षायामित्यादि । * समासादिति * । प्रत्ययलक्षणेनेत्यादि । नञ्तत्पुरुषस्योत्तरपदार्थप्रधानतया सर्वनामत्वात्तद्विषये प्राक्टि यामुक्ता बहुव्रीहौ विशेष वक्तुमाह । * बहुव्रीहाविति * । प्रियैतत्केति * । न बहुव्रीहाविविति सूत्रारम्भवादिमतेन । प्रत्याख्यानरीत्याह।*प्रियैतकत्का चेति*।द्वापषा इत्येतद्विषयेऽसम्भवमुपपादयति । * एषा द्वेतीति अप्राप्तेरिति भाव इति *। एषञ्चानुपसर्जन एवानेन भवितव्यन्तथाकचि कृते आत स्थानिकत्वासम्भव इति सूचितम् । ननु सञ्ज्ञाभूतस्यैतत्सूत्रोदाहरणत्वकथनमयुक्तम् उत्तरसूत्रेण तत्रे त्वसिद्धेरत आह । * सञ्ज्ञापूरण्योरिति * । पुरुषधारणप्रवृत्तिनिमित्तमुपपादयति । * आत्मीयत्वपुरस्कार इति * । कान्तेऽपीति * । तेषां प्रातिपदिकं च मात्रापेक्षत्वेन स्त्रीप्रत्ययादपि प्रागुत्पत्ते ।

पदलाघवमूलिकामाशङ्कानिराकरोति । * स्त्रीविषयादिति * । मूलोक्तस्व-

प्रश्लेषेणानेन क्षत्राशब्दात्के ह्रस्वे इत्वविकल्पो न। नेत्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह इद्वेति। आत' किमिति। उदीचां यकपूर्वाया इत्येवास्तु। यकपूर्वस्त्रीबोधकाकारस्येत्यर्थः। साकाश्यके च नातिप्रसङ्ग'। प्रत्ययावयवत्वेनाकारस्य स्त्रीबोधकत्वाभावादिति प्रश्नः। बहुलक्ष्यसंस्कारानुरोधादवयवषष्ठ्यैव स्यात्। न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवात्र ग्रहणं विशिष्य तदनुपादानादित्युत्तरम्। स्त्रीप्रत्ययस्य किमिति। यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः। धात्वन्तेति। धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थ'। इत्वमिति शेषः।

भस्त्रैषा॥ अयमपि निषेधविकल्प इत्याह अत इति। अत्रातः स्थान इत्यनुवर्त्तते। तदन्तेति। येनविधिरिति सूत्रे त्यदादिविधिभस्त्रादिग्रहणञ्च प्रयोजनमिति भाष्यात्। अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः। नञ्पूर्वाणामपीति स्पष्टार्थम्। पदाङ्गाधिकारे तस्य चेति सिद्धे। उपसर्जनार्थमिति। एवञ्चानुपसर्जने आदाचार्याणामित्यात्वं भवत्येव, उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात्। अन्यस्य। अनुपसर्जनस्य। उत्तरसूत्रमभाषितपुंस्काच्चेति। अन्तर्वर्त्तिनीमिति। तेन एतद् सु इति स्थिते अकचि कृते अकृते वा नञ्तत्पुरुषे ऽन्तरङ्गानपीति न्यायेन त्यदाद्यत्वात्प्राक् सुपो

---

शापहितोपतिष्ठते। पञ्चमीनिर्देशाच्च यकौ पूर्वौ यस्या इति विग्रहे द्रष्टव्य। तत्र पूर्वशब्दसत्यासेन विरोधादुत्तरशब्दस्य नोपस्थितिः। फलितफलमाह। * तत्र क्षत्राशब्देति *। * नेत्यनुवृत्तावपीति *। अनुवृत्ते फलमित्यपिविधायकपूर्वसूत्रेण समाननिमित्तकत्वलाभ इति। अन्यथा पूर्वसूत्रस्य सम्पूर्णस्यानुवृत्तिं कृत्वा व्याख्यानस्यावश्यकतया गौरवापत्ते।*स्त्रीबोधकाकारस्येति*।* स्त्रीबोधकस्य यथाकारस्येत्यर्थ। * अवयवषष्ठीति *। स्त्रीबोधकस्याकारस्येत्यत्रावयवषष्ठ्यैव स्यादित्यर्थ। अत्र बहुलक्ष्यसंस्कारश्च साकाश्यकेत्यस्य सिद्धिरूप। * त दनुपादानादिति *। साक्षादुच्चारितत्वन्तत्तच्छब्दानुवादेन विहितत्व वा प्रति पदोक्तत्व तदुभयमप्यत्र नास्तीति भाव।

ननु स्त्रीप्रत्ययशब्दस्य मूलेऽभावात्स्त्रीप्रत्यय किमिति मूलोक्तप्रयुक्तमत स्तद्योजयति। * यकपूर्वेति *। पूर्वाक्ताभिप्रायेणाह। * अयमपीति *। भस्त्रैषेति योग इत्यर्थ। यत्तु नञ्पूर्वाणामपीति ज्ञापकादिह्रेत्त्वविधौ तदन्तविधि र्भाष्यसम्मत एवेति ध्वनितम्। *उपसर्जनेऽस्य चारितार्थ्येनेति *। निर्भस्त्रिके स्यादौ गोस्त्रियोरिति ह्रस्वत्वे पुनष्टापि कृतेऽस्याप्राप्तो भाषितपुंस्काद्विधानेनाभाषितपुंस्केत्यप्राप्तिरिति भाव। * अकचि कृत इति *। अवयवगतकुत्साविवक्षायामिदम्। समुदायगतकुत्साविवक्षायामाह। *। अकृते वेति। *ततोऽकचीति

प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप् लक्ष्येलक्षणस्येति न्यायात्। तस्माद् बहुकुरुचरेत्येव तद्व्यावर्त्यम्। तत्र च तदन्तविधिं विना प्राप्तिरेव न। ज्ञापिते तु तदन्तविधौ प्राधान्यादेतदारम्भाच्च स्त्रियामिति ङीप्प्रकृतिविशेषणमेव अत एव धीवानमतिक्रान्तातिधीवरीति सिद्धम्। एवञ्चापिशलेत्याद्यप्यस्यैव व्यावर्त्यम्। अनुपसर्जनादिति च सामर्थ्यात् गृह्यमाणविशेषणमेवेति भावः। तदन्तविधिमिति। अण्णन्तादे' प्रातिपदिकविशेषणत्वेनाण्णन्तान्त इत्येव रूपमित्यर्थः। अन्यथा प्रत्ययविधौ प्रतिषेधात्स दुर्लभः स्यात्। प्रत्ययग्रहणप-

---

परत्वेन लुकि लुकद्धितेति ङीपो लुकि श्रूयमाणस्याण अभ्येड्यामवर्त्तनादित्यर्थं। अण्णन्तसमुदायस्य तु य शिष्यत इतिन्यायेनाध्येड्या वृत्तेणाय् भवत्येवेति भाव। * तद्व्यावर्त्यमिति *। अनुपसर्जनाधिकार व्यावर्त्यमित्यर्थ प्रातिपदिकाधिकारस्थत्वेनाणमात्रस्याप्रातिपदिकत्वादण्णन्तादित्यर्थसम्भवेऽपि अण्णन्तान्तादित्यर्थो न स्यात्। एव सति बहुकुरुचरेतिसमुदायस्य न टिदन्तत्वमतो नास्मान्ङीप् प्राप्तिरिति भाव। ननु स्त्रियामित्यस्य गृह्यमाणविशेषणता पूर्वमुक्ता एवञ्च तदन्तविधौ ज्ञापितेऽपि कथम्बहुकुरुचरेत्यत्राधिकारव्यावर्त्यमत आह। * ज्ञापिते त्विति। * प्राधान्यात् विशेष्यत्वात *। एतेन न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायावसर सूचित। एतदारम्भात्। अनुपसर्जनादितिसूत्रारम्भात्। * ङीप्प्रकृतीति *। प्रातिपदिकमित्यर्थ। * अत एव *। स्त्रियामित्यस्य प्रातिपदिकविशेषणत्वादेव। * एवञ्च *। अनुपसर्जनादितिसूत्रे कृते च। अनुपसर्जनादित्यस्यापि प्रातिपदिकविशेषणत्वे भाक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायेनाधिकारसूत्रवैयर्थ्यमेव स्यादतस्तस्य गृह्यमाणविशेषणत्वमेव गुण कृतात्मसंस्कार इतिन्यायादिति भाव। * प्रत्ययविधौ प्रतिषेधादिति *। ननु येनविधिरितिसूत्रव्याख्यानावसरे समासप्रत्ययविधाविति प्रतिषेधवाक्यमुपक्रम्य उगिद्वर्णग्रहणेतिनिषेधवाक्यैकवाक्यतयाऽऽयन्निषेध प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये। प्रत्ययविधिविषयेण गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्तीत्यनेनैकवाक्यत्वलाभात्। उगिद्वर्णेति त्वेकदेशानुवाद'। अत एव घनोरच्चेत्यादौ प्रत्ययग्रहणे तदन्तग्रहणमित्यस्य नायन्निषेध इत्युक्तन्तेनास्य ग्रन्थस्य विरोध। टिड्ढेतिसूत्रे विशेषरूपेण प्रातिपदिकग्रहणाभावादिति चेन्न। अस्य ग्रन्थस्यानुपसर्जनादितिसूत्रस्थभाष्यीयोपक्रमानुसारित्वात्। तथाहि। अनुपसर्जनादिति किमर्थम्। बहुकुरुचरा। बहव कुरुचरा यस्यामिति बहुव्रीहि'। कुरुचरशब्द उपसर्जनमिति ङीन्न भवति। नैतदस्ति प्रयोजनम्। कुरुचरशब्दात्प्रत्ययो विधीयते तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्दात्स्यादेव प्राप्नोति नाथ प्रतिषेधेन। तदन्तविधिना प्राप्नोति। इत्यन्तग्रन्थेन बहुकुरुचरेत्येतदनुपसर्जनादित्यस्य प्रयोजनमुक्तम्। अत्र टिदन्तचरशब्दो न तु कुरुच

शब्दात्परत्वेन दोषः स्यादेवेति भावः । शेषिके कपीति न खट्वा स्वित्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञाया समासान्ता इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाभावात् गोस्त्रियोरिति ह्रस्वाभावे केण इति ह्रस्वे न कपीति निषिद्धे आपोऽन्यतरस्यामिति ह्रस्वे कप्प्राग्वर्त्तिनः खट्वशब्दात्परस्यापो ऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्याय विकल्पो ह्रस्वाभावे तु अखट्वाकेतीति भावः ।

अयमेवेति । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानमेव स्त्रियामेतद्भाष्यप्रामाण्यात् । पञ्च स्त्री गोव्यक्तयो धनं यस्य स पञ्चगवधन इत्यप्रार्थवत्सूत्रोक्तार्थवत्त्वाभावाट्टजन्तस्य प्रातिपदिकत्वाभावेन न ङीप् । आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणीत्यत्र तु न ङीप् । प्रोक्ताणः स्त्रियामवर्त्तनात् । अध्येत्रण्तु लुप्त' । अण्योकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात् । अध्येत्रर्थगतस्त्रीत्वमादाय तदण्निमित्तकस्य न प्राप्ति' । स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात्तदण एतन् स्त्रीत्वे ऽवर्त्तनात् । अत एव काशकृत्स्निप्रोक्ता मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यत्रापि न ङीप् ।

---

ह्यौहेरित्युपलक्षणन्ति स्थिकेति तत्पुरुषेऽपि नित्यमेवेदमिति बोध्यम् ।

यत्तु मूलोक्तमनुपसर्जनादितिसूत्रमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयतीति तद्युक्तमन्यत्रापि प्रयोजनसम्भवादिति यत्तद्दूषयितुमुपक्रमते । *आचारेति।* कर्तृक्विबन्तानामिति * । इदमनडुच्छब्दो गौरादिषु पठ्यते तस्मादाचारक्विबन्तप्रकृतिककर्तृक्विबन्तेऽनुपसर्जनाधिकारचारितार्थ्यशङ्कायाम्प्रदर्शनम् । एतेनादन्तस्याभावात् क्विब न्ते कथम्प्राप्तिरित्यपास्तम् । यद्यपि ह्रस्वनद्यापइतिसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विप्नास्तीति आचारक्विबन्तेऽनुपसर्जनाधिकारचारितार्थ्यशङ्केवायुक्ता । तथापि हलन्तात् क्विपस्तादृशस्य सत्त्वमभ्युपेत्य समाधानमाह । * एतद्भाष्येति * । उक्तार्थज्ञापकतापरेत्यर्थः ।*स्त्रीगोव्यक्तय इति *। इदमुत्तरकाले स्त्रीत्वसत्त्वात्स्त्रीप्रत्ययापादनाय । * गृह्यमाणेति * । स्त्रियामण् योऽकारस्तदन्तादित्यर्थस्य सम्मतत्वेन गृह्यमाणाण् विशेषणत्वात् । अत्र स्त्रियामण् योऽकार इत्यनेन यदणन्तात् स्त्रियाम्प्रत्ययविधानन्तस्याणो यत् स्त्रीत्वविशिष्टे उत्पत्तिस्तदेव स्त्रीत्वम्प्रत्यासत्त्या विवक्षितम् । * अत एव * । निरुक्तस्त्रीत्वस्य विवक्षितत्वादेव । * काशकृत्स्निनेति * । अत्र काशकृत्स्निना प्रोक्ता मीमांसा इत्यर्थे काशकृत्स्निशब्दादणि कृते तदन्तात्स्त्रियां ङीपि पुनरध्येत्र्यामणि तस्याणोऽध्येतृविशिष्टपरिभाषया प्रोक्तार्थकप्रत्ययान्त यन्ङीबन्त तत

तत्फलं कौम्भकारेयमिति सिद्धिः। अन्यथा कुम्भकारेय इत्यापद्येत कुम्भेन समासे ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्येर्थे तदयोगस्य वक्तुमशक्यत्वात्कदाचित्ततो ऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः। निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यम्। तद्धितार्थेत्युत्तरपदे समासविधानात्पुमुदायेनैकार्थीभावे ऽवयवेनापि तस्यैव सत्त्वात्। कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या न तथा विशिष्टादेव ङीपुत्पत्तिरित्याशा। न च तदन्तग्रहणे ऽपि कारशब्दस्य व्यपदेशिवद्भावेनाणन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि कुम्भकारेयो दुर्वारः। किं च समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि स दुर्वार इति वाच्यम्। एतदधिकारादेव ज्ञापकादसहाये एव व्यपदेशिवद्भावप्रवृत्तेः। अर्थवत्सूत्रो-

---

ते। कुरुचरेत्यत्र तु टित्त्वादेव ङीप्। तदुक्तम्भाष्ये। कुरुचरशब्दात्प्रत्ययो विधीयते तत्र क प्रसङ्गो यद्बहुकुरुचरशब्दात्स्यादिति। पूर्वोक्तभाष्ये यदुक्तम्पूर्वत्र तदन्ताप्रतिषेधस्येति तदनुपसर्जनादिति तदन्तविध्यभावसिद्धार्थानुवाद इत्याशयेन। अपरे तु गृह्यमाणप्रातिपदिकविषय इत्यस्य यदानुपूर्व्यवच्छिन्नस्य प्रातिपदिकसंज्ञा तदानुपूर्वीरूपेण यत्रोपादानन्तत्रेत्यर्थः। एवञ्च टिड्ढेति सूत्रे तादृशरूपेणोपादानाभावान्न तदन्तविधिनिषेधप्राप्तिरिति नानुपसर्जनादित्यस्य टिड्ढेति सूत्रे फलम्। किन्तु कौरव्यमाण्डूकाभ्याञ्चेत्यादिसूत्रेण विधीयमानस्त्रीप्रत्ययः प्रियकौरव्या प्रियमाण्डूकेत्यादावुपसर्जने न भवतीति बोध्यम्। प्रियकुरुचरेत्यादिभाष्यन्तूपलक्षणमित्याहुः। * तत्फलमिति *। तदन्तविधिफलमित्यर्थः। * अन्यथा *। तदन्तविध्यभावे। * इत्यापद्येत *। इत्यप्यापद्येत। प्रत्ययग्रहणपरिभाषया कुम्भकारशब्दस्यानणन्तत्वेनावयवात्कारशब्दात्स्त्रीप्रत्ययेऽवयवात्कारीशब्दाड्ढकि तन्निरूपिताङ्गत्वस्य विशिष्टेऽभावेन ककारोकारस्य वृद्धिर्न स्यात्। * ङीपि *। अवयवान्ङीपि। * कुम्भविशिष्टस्य *। कुम्भकारीशब्दार्थस्य। तदेतदुपपादयति। * कदाचिदिति *। एतेन यदा समुदायादुत्पत्तिस्तदा कौम्भकारेयसिद्धिः सूचिता। * निष्कृष्य *। अर्थद्वारकशब्दान्तसम्बन्धाभाव सम्पाद्य। * एकार्थीभाव *। विवक्षाविषयेन सहैकार्थीभावः। ननु कृद्ग्रहणपरिभाषया बहुकुरुचरेत्यादौ समुदायात्प्राप्नोतीत्यत आह। * कृद्ग्रहणपरिभाषेति *। ननु कुम्भकारेयनिवृत्त्यर्थञ्चेत्तदन्तविधिः स्वीक्रियते तदा ज्ञापितेपि तस्य दुर्वारतया ज्ञापनमयुक्तमित्याशयेन शङ्कते। * न चेति *। * व्यपदेशिवद्भावेनेति *। लौकिकेनेत्यर्थः। लोके यथा प्रधानीभूतो राजामात्यो राजानम्प्रति गुणीभूतोऽपि राजेति व्यपदिश्यते लोकैस्तथा समुदायार्थम्प्रति गुणीभूतो

रिभाषालभ्यस्य तु नायं निषेधः । प्रातिपदिकादित्यनेन सहानन्वयापत्तेः ।

---

चरशब्द इति कुरुचरशब्दादित्युपपन्नमित्याशङ्कानिराकरणायाह कैयटः । टिड्ढाणञित्यत्र टित्प्रातिपदिकं गृह्यते । तच्च किञ्चित् साक्षाट्टिद् भवति यथा नदट् चोरडिति । किञ्चित्त्ववयवद्वारेण । अवयवे हि यत्र टित्त्वमकिञ्चित्करन्तत्र समुदायार्थन्तद्विज्ञायते न चावयवं क्वचिद्धातुरपेक्षते । यथा स्तनन्धयीति । क्वचित् ट्युट्युलावित्याद्धितः । क्वचित्कृत् ल्युडादिः । तत्र च समुदायो ऽवयवो न व्यभिचरति तदर्थमवयवस्य टित्त्वमित्यभिप्रायेणोक्तं कुरुचरशब्दादिति । अत्र च समुदायमित्यनेन टप्रत्ययस्य टित्त्वेन कुरुचरशब्द एव टित् न तु बहुकुरुचरशब्द इति दर्शितम्भवति । अत उत्तरम्पठति । प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते । समासप्रत्ययविधौ प्रतिषेध इत्यनेन । ग्रहणवतेत्यपि वर्णग्रहणवर्जमित्येतदन्तार्थानुवाद एवेति भावः । ज्ञापकन्तु पूर्वत्र तदन्ताप्रतिषेधस्य । एवमुक्ते सति किमेतस्य ज्ञापने प्रयोजनमिति प्रश्ने बहुधीवरी बहुपीवरी अतिधीवरी अतिपीवरीति प्रयोजनमुक्तम् । अत्र कैयटः । वनो र चेत्यत्र वन्नन्तस्य प्रातिपदिकस्य ग्रहणात्तदन्तविधिर्न स्यादिति भावः । ननु प्रातिपदिकस्य विशेषरूपेण प्रकृतसूत्रेऽग्रहणाभावाद् ग्रहणवतेत्यनेन तदन्तविधिप्रतिषेधकथनमयुक्तमेवेति चेन्न । ग्रहणवतेत्यस्य प्रातिपदिकत्वव्याप्यधर्मविशिष्टं यत्रोपादीयते तत्र तदन्तस्य ग्रहणमित्यर्थस्य विवक्षितत्वात् । अस्ति च टित्पदं प्रातिपदिकत्वव्याप्यधर्मविशिष्टबोधकमिति स्यादत्र निषेध इत्याशयात् । तथाहि । टिदिति न प्रत्ययग्रहणपरिभाषया तदन्तपरम् । टित्त्वस्य नदट् देवट् चोरडितिसमुदाये दर्शनेन तस्य प्रत्ययाप्रत्ययसाधारणतया प्रत्ययमात्रग्रहणाभावात् । न च टितोऽकारस्तदन्तादित्यर्थोऽस्त्विति वाच्यम् । नदी देवी चोरी स्तनन्धयीतिरूपाणामसिद्ध्यापत्तेः । एतेषु हि समुदायस्य टित्त्वं न तु अकारस्येति । न चाधिकारप्राप्तप्रातिपदिकादित्यस्य टित्पदं विशेषणमिति येन विधिरित्यनेन तदन्तग्रहणमस्तु नदी देवीत्यादौ व्यपदेशिवद्भावेन सिद्धम् मुख्यव्यवहारस्य चिरन्तनीत्यत्र सत्त्वादिति वाच्यम् । स्तनन्धयीत्यस्यासिद्ध्यापत्तेः । अत्र हि धातोष्टित्त्वं चैतदन्तमतोऽन्यलक्षणया टित्पदम्पारिभाषिकम् इट्कारविषयताप्रयोज्या या प्रातिपदिकत्वसमानाधिकरणटिद्व्यवहारविषयता तदाश्रयपरम् । तत्त्वञ्च प्रवृत्तिनिमित्तम् । प्रयोज्यप्रयोजकभावस्स्वरूपसम्बन्धरूपः साक्षात्परम्परासाधारणः । साक्षाट्टिट्कारविषयताप्रयोज्यता टिद्व्यवहारे नद्यादौ । स्तनन्धयी चिरन्तनीत्यादिसमुदाये परम्परया । तदेतद्व्युत्पादितं कैयटग्रन्थसंवादेन टिड्ढाणञित्यत्रेत्यादिना । एवञ्चेट्कारविषयताप्रयोज्यप्रातिपदिकत्वसामानाधिकरण्यविशिष्टविषयताश्रयत्वम्प्रातिपदिकत्वसामानाधिकरण्यविशिष्टविषयताश्रयत्वम्प्रातिपदिकत्वव्याप्यो धर्मस्तद्विशिष्टबोधकस्य टित्पदस्य सूत्रे उपादानाद् गृह्यमाणप्रातिपदिकविषयतासत्त्वात्तदन्तविधिनिषेधाद्बहुकुरुचरेत्यत्र न प्राप्नोतीत्यनुपसर्जनाधिकारज्ञापकता सङ्गच्छ

वार्त्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति भाष्यप्रदीपोद्द्योते विस्तरः।

टिड्ढा ॥ डेरयेत्र सिद्धे ढक्ठञोरुपादानं ठन्ठिठञोर्व्यावृत्त्यर्थम्। अदन्तमिति। प्रत्यासत्त्या टिदाद्यवयवाकारान्तामित्यर्थः। तेन पञ्चाश्वेत्यादौ टन्निमित्तोऽपि न ङीप्। कुरुचरीति। कुरुषु चरतीत्यधिकरणे उपपदे चरेष्टः टितो ऽप्रत्ययस्यापि सत्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्यात्र टिदन्तत्वं कुरुचरशब्दस्येति बोद्ध्यम्। वक्ष्यमाणेति। पचेर्लृटः शानच्। टित्वादिति। स्थानिवत्त्वेनेत्यादिः। नल्यपीति लिङ्गाट्टित्वादेरशास्त्रीयस्याप्यतिदेशो ऽनुबन्धकार्ये ऽनल्विधाविति निषेधप्रवृत्तिश्चेति भावः। ङित्वेनेति। लिडादेशाना स्थानिवत्त्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। तद्धि अवयवे ऽचरितार्थतया समुदायोपकारकम्। न चेद ङित्त्व स्तुयादित्यादावनिग्लक्षणवृद्धिनिषेधार्थमिति वाच्यम्। विनिगमनाविरहात्। उत औदिति वक्तव्ये वृद्धिग्रहणेन

---

हि वार्त्तिकग्रन्थ अनुपसर्जनग्रहणमनर्थकम्। प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। आपिशलमधीते आपिशला ब्राह्मणीत्येतदर्थमपि न स्त्रिया योण् विहित इत्येव रीत्या गृह्यमाणविशेषणम् स्त्रीत्वम्। पूर्वत्र तदन्तस्य ग्रहण यथा स्यादित्यर्थमपि न अमहत्पूर्वग्रहणेन तत्र तस्य ज्ञापनादिति कुम्भकारीत्यादौ तु कारशब्दादेव ङीप् टक्तु स्त्रीप्रत्यये तदादिनियमाभावात्समुदायादेव नावयवाद्यनभिधानादिति तदाशय। वस्तुतस्तु सर्वादिसूत्रस्था प्रत्याख्यायत इत्युक्तिरत्रस्यवार्त्तिकग्रन्थममभिप्रेत्य। अत एव भाष्यकृता अत उत्तरं पठतीत्यनेन तस्य वार्त्तिककृत्सिद्धान्तत्व सूचितम्। उत्तरवाक्ये तु आचार्यदेशीयस्य। पूर्वत्र तदन्ताप्रतिषेधेऽप्युत्तरत्र चारितार्थ्यानुपपादनात्। सञ्ज्ञोपसर्जनप्रतिषेध इत्यस्य प्रत्याख्यानाय हि तत्रेद सूत्रमन्यथा व्याख्यातम्। सञ्ज्ञोपसर्जनव्यावृत्तिरन्यथा तत्र साधितेति तदर्थमपि नेति प्रकृतसूत्रस्याद्यवार्त्तिकतात्पर्यम्। इदन्तर्हि प्रयोजनमित्यारभ्य सिद्धान्त्युक्तिर्वार्त्तिकप्रत्याख्यानाभिप्रायेणेति विभावनीयम्।

यथाश्रुतार्थे पञ्चाश्वेत्यस्य वारणासम्भावादाह। * प्रत्यासत्त्येति *। प्रत्ययलक्षणेन ठगन्तत्वेपि वर्णाश्रये प्रत्ययलक्षणाभावाञ्च तदवयवादन्तत्वम्। ननु स्थानिवद्भावेन शास्त्रीयस्यैवातिदेशो भविष्यतीत्यत आह। * न ल्यपीति लिङ्गादित्यादि *। ननु वैयर्थ्यं सति ज्ञापकत्वन्तदेव तु नेत्याशयेन शङ्कते। * न चेति*।* वृद्धिरिति *।उतो वृद्धिरितिसूत्रविहितेत्यर्थः। विनिगमनाविरहादिति। ङित्वेत्यस्य चारितार्थ्यं वाच्यन्तदुक्तार्थज्ञापकतया वानिग्लक्षणवृद्धिनिषेधार्थत्वेन वा सम्भवति। एकत्रैव तु साधकमस्तीति भाव। शङ्कोक्तनल्यपीति सूत्रप्रयोजनमन्यथा सिद्धमपीत्याह ॥ * उत औदिति वक्तव्य इति *। न-

क्तार्थवत्त्वाभावेनाण्णन्तस्याप्रातिपदिकत्वाच्च तदादिनियमाभावेनाधिकस्य कार्यं वोद्ध्यते न तु न्यूनस्येत्यदोषाच्च । अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव । एतदेवाभिप्रेत्यात्र भाष्ये उक्तसमासे च कृते ऽवयवादुत्पत्त्यावयवस्य टाद्दिः स्यादिति । येनविधिरिति सूत्रे च प्रत्ययग्रहणे तदादितदन्तविधेः प्रयोजनं गार्ग्यायणः परमगार्ग्यायण इति उक्तं भाष्ये । तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गार्ग्यायण इति तदर्थो वाच्यस्तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात् । मम तु परमगार्ग्यस्यापत्यमित्यर्थेऽप्युक्तन्यायाद् गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्, तथा सति परमगार्ग्यायणः इति स्यादिति तत्प्रयोजनत्वोक्तिसङ्गतिः । कैयटोऽपि तदादिनियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायण इत्युपन्यास इत्युक्तवान् । यत्तु सर्वादिसूत्रे भाष्ये ऽनुपसर्जनादित्येष योगः प्रत्याख्यात इत्युक्तं तत्त्वत्र

ऽप्युत्तरपदार्थं पूर्वपदार्थनिरूपितप्राधान्यविशिष्ट इति तदर्थप्रतिपादकस्य तद्व्यवहारो भविष्यतीत्यभिमानः । परोक्तमथमदूषणमभ्युपेत्य समाधत्ते ।* एतदपीति *।* असहाय एवेति * । लौकिकोऽपि व्यपदेशिवद्भावोऽसहाय एवेष्यते न तु ससहाये । बहुषु पुत्रेषु स तु नैकस्मिन्नयमेव ज्येष्ठो मध्यमः कनीयानिति व्यवहार किन्त्वेकस्येन सत्ये तस्मिन्नयमेव मे ज्येष्ठो मध्यमः कनीयानिति व्यवहारः । अस्मिन्नेवार्थेऽयमधिकारोऽपि ज्ञापक इति भावः । भाष्येऽपि व्यपदेशिवदेकस्मिन् कार्यम्भवतीति वक्तव्यमित्युक्तम् । सिद्धान्तानुसारेणाह । * अथनत्सूत्रेति * । इदमेतत्सञ्ज्ञाफलभूतेत्यस्य यथाश्रुतार्थानुसारेण । एतत्सञ्ज्ञाफलभूतविभक्तिभिन्नस्योपपदस्यापेक्षासत्त्वेऽपि न पूर्वोक्तरीत्यानुपपत्तिरित्यत आह । * तदादिनियमाभावेनेति *।*न तु न्यूनति*। अयम्भावः । यथा प्रत्ययग्रहणपरिभाषयाऽधिकस्य प्रत्ययान्तत्व व्यावत्यते न तु न्यूनस्य । अत एव इरिणानित्यादौ तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वासिद्धिस्तथा प्रत्ययग्रहणपरिभाषापवादभूतस्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषयापि प्रत्ययग्रहणपरिभाषाव्यावर्त्यस्याधिकस्य स्त्रीप्रत्ययान्तत्वम्बोध्यते न तु न्यूनस्य स्त्रीप्रत्ययान्तत्व बोध्यत इत्यर्थः । किञ्च न तु न्यूनस्येति यदुक्तन्तत्रैतदधिकारस्यापि ज्ञापकत्वम्बोध्यम् । * अन्यथा * । उक्तप्रकारत्यानङ्गीकारे । * अवयवस्य * । कुम्भकारेत्यत्र कारेत्यस्य । यत्तु तदुक्तनिष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमित्युक्तमिति तमेवार्थन्द्रढीकर्त्तुमाह । * येनविधिरितीति । * उक्तन्यायादिति * । प्रत्ययग्रहण यस्मादिति न्यायादित्यर्थः । अत्रत्यभाष्येऽनुपसर्जनाधिकारस्य तदन्तविधिज्ञापकतोक्ता सर्वादिसूत्रभाष्ये तु प्रत्याख्यायत इत्युक्तमिति विरोधशङ्कानिवारणायाह । * यत्तु सर्वादीति * । * वाचिकमेतेति * । इत्थ

तदपि प्रयोजनाभावादित्यादिना भाष्ये दूषितमित्याहुः। निरनुबन्धकस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्य ढको ऽग्रहणमित्याह । सौपर्णेयीति। सुपर्णाशब्दादपत्ये स्त्रीभ्यो ढगिति ढक्। स्पष्टञ्चेदं भाष्ये। ऐन्द्रीति। सास्य देवतेत्यण्। ऊरुदघ्नीत्यादि। प्रमाणे द्वयसज्दघ्नञ्मात्रचः। सङ्ख्याया अवयवे तयप्। मात्रजिति मात्रशब्दादारभ्यायचश्चकारेण प्रत्याहार इत्युभयीति सिद्धिः। तत्र ह्ययच् प्रत्ययान्तरम्। अत एवोभयशब्दस्य जसि सर्वनामत्वविकल्पो नेति नवेतीत्यत्र भाष्ये स्पष्टम्। आक्षिकीति। तेन दीव्यतीति ठक् तदस्य पण्यमित्यधिकारे लवणाट्ठञ्। यादृशीति। त्यदादिषु दृश इति कञ्। इत्वरीति। इण्नशजीति क्वरप्। अनुबन्धद्वयोपादानं स्पष्टार्थम्। वरच्ख्यातृसेरन्यतरेणापि सिद्धेः। चौरीति। चुरा शीलमस्या इत्यर्थः। नञ्स्न। तरुणतलुनयोर्वयस्यचरमइति ङीपि सिद्धे ऽपि गौरादिपाठात्परत्वात्प्राप्तेन ङीषा बाधाभावाय पुनरत्र ग्रहणं तयोश्च स्वरे विशेषः। एतौ हि त्रोरश्चलो वेत्युनानन्तत्वादाद्युदात्तौ। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादित्यधि-

---

इतमत आह। * निरनुबन्धकस्येति *। पूर्वोक्तयो स्वभावतो नपुंसकत्वपुंस्त्वयो' सत्त्वादिति भाव। * स्पष्टञ्चेदमिति *। ननु चायमस्ति। शिलाया ढ इति। नैष' स्त्रिया वर्तते। अत्र कैयट। शिलेव शिलेयमिति नपुंसकलिङ्ग एव शिलेयशब्द स्वभावात्। अयन्तर्हि सभाया य ढश्छन्दसीति। एषोऽपि न स्त्रियां वर्तते। कथं स्त्री नाम सभाया साध्वी स्यात्। यज्ञसभाया विदुषामेव पुरुषाणां साधुत्वाधिकारात्। ननु सभाया साधुरियं ब्राह्मणपत्नि परिषद्वेति सम्भवति स्त्रिया साधुत्वम्। एतेन छन्दसि सभेयशब्दस्यैवविधाया स्त्रियामप्रयोगाभाव इति विज्ञायते। एतेन स्वभावत पुंस्त्वमिदर्शितम्। * अत एवेति *। अयच प्रत्ययान्तरत्वादेव। * अनुबन्धद्वयोपादानमिति *। अस्य प्रकृतसूत्र इति शेष'। * वरज्ख्यातृसेरिति *। अत एव तमीश्वरा साधु चचार सादरेति सिद्धम्। स्थेशभासेति वरच्। ईश्वरीति तु पुयोगे सिद्धम्। ईशधातोर्वनिपि वनो र चेति वा इत्यर्थ इति। यद्यप्यत्र छत्रादिभ्यो ण इति णस्तथापि ताच्छीलिके णेऽपीति परिभाषया ङीप्। *वयस्यचरम इति*। प्रथमवयोवाचित्वाभावाद्वयसि प्रथम इतियथाश्रुतसूत्रेण तु न सिद्धि'। * पुनरत्र ग्रहणम् *। वार्त्तिके ग्रहणमित्यर्थः। तयोः ङीबन्तङीषन्तयोः। यत्तु तरुणतलुनयोर्वार्त्तिके ग्रहणङ्गौरादिपाठोऽप्यनयोर्मास्तु किं तु बह्वादौ पाठोऽनयो' कार्यस्तेन बह्वादिभ्यश्चेति पक्षे ङीप्। तदभावे वयस्यचरम इति ङीप्भविष्यतीति स्वरस्यापि सिद्धिरिति। तन्न। नञ्स्नञीति प्रतीकमुपादाय तरुणतलुनशब्दयोरघयोऽर्थेद्ग्रहणम्। * तरुणी सुरेति *। प्राणिधर्मो हि वय इति कैयटेन समाधानस्य सूचनात्। वार्त्तिकेऽवयसि टाब त

स्थानिनिर्देशेऽपीत्परिभाषोपस्थित्या तस्या अपि उग्लक्षणत्वाच्च । नन्वेवं धूतादित्यत्र धूव ईट् प्राप्नोति । लाश्रयानुबन्धकार्यस्य तदादेशेष्वभावे ऽपि तिपः पित्त्वस्य तदादेशे तदाश्रयमात्रकल्पने मानाभावादत आह श्न इति । क्वचिदिति । लक्ष्यानुरोधेन च व्यवस्था । परे तु यासुटो ङित्त्वं न ज्ञापकम्पिदर्थं ङित्त्वमिति भाष्यात् । सार्वधातुकमिति सूत्रे ऽपिदित्यावर्त्यं प्रसज्यप्रतिषेधसिद्धेन ङिच्च पिन्न पिच्च ङिन्नेत्यनेन हलः श्न इति सूत्रभाष्योक्तेन पित्सु ङित्त्वाप्रसक्तेः । शानचः शित्वमपि तत्सूत्रे एवं भाष्ये प्रत्याख्यातम् । हेरपित्त्वस्य तातङो ङित्त्वस्य वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं भाष्ये । तस्माद्वक्ष्यमाणेत्यादौ सत्यभिधाने ऽजादिपाठाट्टाप् । यत्तु क्ङिति चेति सूत्रभाष्ये यासुटो ङिद्वचनस्य ङिदादेशानां ङित्त्वमित्यर्थज्ञापकतोक्ता तत्तु वार्त्तिकमते ङिच्च पिन्नेत्यादेस्तेनानुक्तेः । यदपि गाङ् लिटीति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशे ऽनुबन्धास्थानिवत्त्वस्य ज्ञापकत्वमुक्तं वार्त्तिककृता

---

न्येषम् लाश्रयानुबन्धकार्यस्यैवाभावकल्पने अव्यवस्थां वारयति । * लक्ष्यानुरोधेनेति * । हल श्नः शानज्झाविति सूत्रभाष्ये शानजादेशस्य शकारो ङित्त्वार्थः । तेन मुषाण पुषाणेति सिद्धम् । एतच्च स्थानिवद्भावेन सिद्धमित्युक्त्वा सार्वधातुकादेशे ऽनुबन्धास्थानिवत्त्वे तज्ज्ञापकमित्युक्तम् । तत्प्रयोजनं हेरपित्त्वम प्रतिषेत्स्यामीति । तथा तातङि ङकारो गोष्ठार्थ इति च । यद्येतज्ज्ञाप्यते ऽथ नियममनुबन्धकरणमि त्यमादेशस्य स्थानिवद्भावेन पित्त्वञ्च स्यात् तथा सति ङित्त्वात्गुणो न स्यादिति दूषणमभिधाय तस्मादाचार्योऽनेन ज्ञापकेन । यानि प्रयोजनानि क्रियते न्यास एव । एवमपि भवेत्पित्करणसामर्थ्यात्पित्कृत स्यात् ङित्करणसामर्थ्यान् ङित्कृतमपि प्राप्नोतीति शङ्कितम् । एवमपि तादित्यत्र स्थानिवद्भावेन पित्त्वादनुदात्तत्वम् । ध्रुव ईडितीडागमश्च । यत्तु पिति ङिति तत्प्राप्नोति टिति च पित्कृतमेव तत्र स्यात् । तस्मादुत्सर्गोऽपि ङिद्भवति ङिच्च पिन्न भवतीति । न वक्तव्यम् । एवं वक्ष्यामि सार्वधातुकं ङिद्भवति पिन्न । एवन्तावत्पितो ङित्त्वम्प्रतिषिद्धम् । ततो ङिच्च पिन्न भवतीति । एवं ङितः पित्त्वम्प्रतिषिद्धम् । तेन तातङः स्थानिवद्भावप्राप्तम्पित्त्वम्प्रतिषिद्धमितिरीत्योक्तं तदनुसारेणाह । * परे त्विति * । वक्ष्यमाणेत्यादौ तु गतिमाह । * तस्मादिति * । ननु यासुटो ङित्त्वस्य ङिदादेशानां ङित्त्वाभावे ज्ञापकतोक्ता सा न सङ्गच्छते तिप्सिप्मिप्सु चारितार्थ्यादत आह । * यत्त्विति * । ननु शानचः शित्त्वस्य प्रत्याख्यानमयुक्तम् । गाङ् लिटीति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशेऽनुबन्धास्थानिवत्त्वे ज्ञापकमिति गाङ् लिटीतिसूत्रभाष्यविरोधादत आह । * यदपीति * । ननु निरनुबन्धकस्य दिलायाढ समाप्यायः दम्भ दसीत्यस्य पुरस्फूर्तिकत्वात्सानुबन्धकद्विमित्युदा

चतण्डाचेतियञो लुक्स्त्रियामिति लुक् वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम्।

षः प्र ॥ आदिर्ञिटुडव इति सूत्रादादिरित्यनुवर्त्तते । प्रत्ययस्येति किम् । षोडश । षष उत्वमित्यत्र षष्शब्दस्य निपातनादुपदेशस्थोय षकारः। वस्तुत उपदेशे इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपितम् । आदिरिति तूत्तरत्रावश्यकमुपरञ्जकतयात्रापि सम्बन्धितम् ।

आयने ॥ आयनो नस्य नेत्वं फिनो नित्करणात् । तत्साहचर्यादिनोऽपि नस्य नेत्वम् । आदिग्रहण किम् । ऊरुदघ्नम् । प्रत्ययेति किम् । फक्कति खनति । खच्घञादौ घिण्णयोः खित्यनव्ययस्येत्यादिलिङ्गादित्संज्ञैव नादेशाः उणादीनां बहुलवचनाभादेशाः घचश्चित्त्वसामर्थ्यादेते प्रत्ययसम्बन्ध्यादेशा उपदेशसान्नियोगशिष्टकार्यादपि पूर्वमेव । तेनान्तोदात्तत्वाय

---

वस्तुतस्त्वेतदपि न । ष्फङितिन्यासेन सिद्धे । यत्तु गोकक्षशब्दाद्गर्गादित्वाद्यञि तत क्रौड्यादित्वेन ष्याङि चापि प्रकृतसूत्रेण ष्फप्रत्ययं चिकीर्षितं भस्याढ इति पुंवद्भावे गौकक्ष्यशब्दाद्यञन्तात्ष्फे गौकक्ष्यायणी सिध्यति । तद्धितसंज्ञाभावे तु पुंवद्भावाप्राप्त्या यञन्तत्वाभावेन ष्फो न स्यादिति । तदपि न । क्रौड्यादिषु गौकक्ष्याशब्दस्य पाठाभावेपि क्षत्यभावात् । चात्पुवाद्यञ्भाव यकव्य इत्येव सिद्ध उदीचाम्मते प्राचाम्मते, तु चापो बाधस्यापि विषये सर्वत्रग्रहणापकर्षात् ष्फ । तेन गौकक्ष्यायणीत्यस्य सिद्धिरिति । एतदपकर्ष बीजन्तु तत्सूत्रव्याख्यानावसरे स्फुटीभविष्यति ।

ननूपदेशग्रहणानुवृत्त्या षोडशशब्दे नातिप्रसङ्ग इत्यत आह । *षष उत्वमित्यत्रेति* । * इद प्राचामनुरोधेन* । स्वसिद्धान्तरीत्याह ।*वस्तुत इति*। ननु प्रत्ययान्त्यस्य षकारस्येत्संज्ञा हलन्त्यमितिसूत्रेणैवेति किमत्रादिग्रहणानुवृत्त्या। न चेष्टनोऽवयवस्य मध्यस्थस्यापि स्यादिति वाच्यम् । तस्य न स्वाभाविकत्वम् किन्तु तस्य सकारमध्यगत्वमेव कल्प्यते । तस्य सकारस्यादेशप्रत्यययोरिति सूत्रेण षकार इति स्वीक्रियते । षत्वस्य च ष प्रत्ययस्येति सूत्रदृष्ट्याऽसिद्धत्वात्रेत्वप्राप्तिरित्याशयादाह । * आदिरितीति *।*उपरञ्जकतयेति*। यद्यपि मध्यान्त्यस्थषकारयोरुक्तरीत्या नानेन सूत्रेणेत्संज्ञेति परिशेषादादेरेव भविष्यति । तथापि परिशेषात्तादृशार्थकल्पनापेक्षया आदिग्रहणसम्बन्धस्य स्वरूपानुवादकस्य स्वीकारेणैवेष्टसिद्धिरित्याशय । अविषी महिषीत्यादौ तु टिषादेव सिद्धम्। टिषप्रत्ययस्य षित्त्वेनाविषमहिषशब्दयोरन्तोदात्ततयोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमपि भविष्यति ।

प्रत्ययग्रहणे कृतेऽपि खञाद्यतिप्रसङ्ग वारयति । * खच्घञादाविति * ।

कारे शक्तियष्ट्योरीकक् । आढ्यसुभगेति ख्युन् ।

यञश्च ॥ प्राचां ष्फ इत्यत्र यञ एवानुवृत्तये योगविभागः ।

हलस्त ॥ हल इति पञ्चमी यस्येति सूर्यादीतीत्यनुवर्त्तते सूर्यतिष्येत्यतो य उपधाया इति च । यलोपे ऽल्लोपस्याभीयासिद्धत्वाद्यस्येकारपरत्वाभावा द्वचनसार्थक्यायोपधाग्रहणानुवृत्तिः । अनपत्याधिकारस्थादिति । अपत्याधिकारस्थभिन्नादित्यर्थः । यञ्शब्देन व्याख्यानादपत्याधिकारस्थस्यैव ग्रहणमिति भावः ।

प्राचां ष्फ ॥ नञ इति वर्त्तते । अत इति च यञो यो ऽकार इति चार्थः । तेन यतण्डीत्यत्रोदीचां मते सावकाशं शार्ङ्गरवादिङीनं बाधित्वा आवट्यायनीत्यादाविव सर्वत्र ग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न अत्र हि

---

प्रयोगनिवृत्त्यर्थमनयोरुपादानमावश्यकम् । न चैतावतान्तोदात्तस्य सिद्धिस्तदर्थं गौरादिषु बह्वादिषु वा पाठ इत्यत्र फलतो न विशेष ।

ननु यञोऽपि टिड्ढेतिसूत्र एवोपादानङ्कुतो न कृतमत आह । * प्राचां ष्फ इत्यत्रेति * । नन्वनपत्याधिकाराप्रसिद्ध्याऽनपत्याधिकारस्थादित्यनुपपन्नमत आह * अपत्याधिकारस्थभिन्नादिति * । * व्याख्यानादिति * । आपत्यग्रहणङ्कर्त्तव्यमिति वार्त्तिकमूलाद्व्याख्यानादित्यर्थ । नन्वापत्यग्रहणमितिवार्त्तिकस्यापत्ये भव इत्येवार्थे कर्त्तव्य स चार्थो द्वैप्येऽपि सम्भवति । या द्वीपे भवा सा कस्य चिदपत्यन्भवस्येवेति चेन्न । एतद्वार्त्तिकप्रत्याख्यानैकवाक्यतया प्रतिपदोक्तपरिभाषयाऽपत्यशब्दस्यापत्याधिकारपरतयापत्यशब्दस्य तदधिकारभवपरत्वात् । तथाहि । तर्हि वक्तव्यम् । न वक्तव्यम् । नैव विज्ञायते कम्बलप यञश्चेति । कथन्तर्हि कम्बलपोऽप्ययञश्चेति । अयमयञ्प्रत्ययो गर्गादिभ्यो विधीयते तत्राकारोऽनुनासिक इत्संज्ञक इह विशेषणार्थ इति यञो ग्रहणाभावाद् द्वैप्येनातिप्रसङ्ग । यस्कादिभ्यो गोत्रे यञोश्चेत्यत्राप्यकारप्रश्लेष । न च विच्छिद्य पाठेऽनुकरणे प्रकृतसूत्रघटकेऽकारश्रवणापत्तिरिति वाच्यम् । आर्षं संहितापाठ एव । व्याख्यातृकल्पित पृथक् पाठ । अनुकरणादुपास्थिते त्विरसङ्ख्याऽकारनिवृत्ति । * एतेन * । यञोऽकार इति व्याख्यानेन । * उदीचाम्मते सावकाशमिति * । एतेन शार्ङ्गरवादौ यतण्डपाठवैयर्थ्यशङ्का परिहृता ॥ ननु यञोयोऽकार इत्येव व्याख्यानाभावे यतण्डीत्यत्र ष्फप्रत्ययस्य ङीना परत्वाद्बाध एव स्यात् ङीनश्चारितार्थ्यस्याधुनैव दर्शितत्वादत आह * सर्वत्र ग्रहणादिति * । सर्वत्र ग्रहणापकर्षणादित्यर्थ । अत्रेदमवधेयम् । प्रकृतसूत्रे तद्धितग्रहणस्य फलम प्रातिपदिकसंज्ञाद्वारा ङीप्सिद्धि षित्वादेव सिद्धे । नापि यस्येति चेति लोप । सवर्णदीर्घेण सिद्धे । किन्त्व एतोऽप्ययमितिज्ञापनद्वारा यस्येति चेति लोपार्थं तेनासुरिशब्दादपीति ।

वयसि ॥ प्राणिना कालकृतावस्थाविशेषो वयः । वयसीत्यस्य वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थस्तदाह । प्रथमवयोवाचिन इति । तेनोत्तानशयेत्यादौ न । प्रकरणादिना वयःप्रतीतावपि नायन्तद्वाचक?, या ऽपि व्याध्यादिवशादुत्ताना शेते तस्या अपि प्रतीतेः । द्विवर्षेत्यादिरपि न वयोवाची, शालादावपि प्रयोगात् । कौमारयौवनवृद्धत्वभेदात् त्रीणि वयांसि आयुषश्चतुर्भागैश्चत्वारि वा ।

त्र्यनीका । समाहारे तद्धितार्थेति द्विगुः । अकारान्तोत्तरपदत्वात् स्त्रीत्वम् ।

अपरिमाण ॥ अत्र परिमाणशब्देन परिमाणन्तु सर्वत इति पारिभाषिकमेव गृह्यते । सुवर्णबिस्तौ हेम्नोऽक्षे कम्बल्यमूर्णापलशतमिति कोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणन्तु उन्मानस्य चेद्बिस्तकम्बल्ययोरेवेति नियमार्थम् । तेन द्विनिष्की सिद्धा । द्वे वर्षे भूता द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा द्विशता । तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः ।

---

नायन्तद्वाचक इति * । वयोरूपप्रवृत्तिनिमित्तवाचक । तत्र हेतुमाह । * या-पि व्याध्यादीति * ॥ * त्रीणि वयांसीति * । तदुक्तमभियुक्तै ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रास्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हतीति ।
* चत्वारि वेति * । तदप्युक्तम् ।
आद्ये वयसि नाधीतन्द्वितीये नार्जितन्धनम् ।
तृतीये न तपस्तप्तञ्चतुर्थे किङ्करिष्यतीति ।

उभयथापि यौवनवचनस्य वधूटचिरण्टशब्दस्य प्रथमवयोवाचित्वाभावाच्छा-र्त्तिकमावश्यकम । यत्र तु युवत्याङ् कुमारीधर्मोपलम्भेन प्रयोगस्तत्र तु कुमारीशब्दस्य लक्षणा । तत्र पुंसासम्प्रयोग प्रवृत्तिनिमित्त न तु प्रथम वय । अत एव वृद्धकुमारीति न मु न इतिसूत्रभाष्ये प्रयोगस्सोऽपि सिद्ध्यति ।

* सर्वत इति * । आरोहत परिणाहतश्च येन मीयते काष्ठादिनिर्मितेन । प्रस्थादिना तदेव गृह्यते । तत्रैव शक्तिग्रहात् नन्वेव बिस्तकम्बल्ययोरपरिमाणत्वादेव निषेधे सिद्धे सूत्रे पृथक् तयोरुपादान व्यर्थमत आह । * सुवर्णेत्यादि * । * उन्मानस्य चेदिति * । अपरिमाणपदेन ग्रहणमिति शेष । * द्विनिष्कीति * । अस्य निष्कस्योन्मानत्वेऽपि नात्र निषेध । उन्मानभिन्नस्य तु पारिभाषिकपरिमाणभिन्नत्वान्निषेधो भवत्येव तदाह । * द्वे वर्षे भूतेत्यादि * ।

नन्वेवङ्काण्डस्याप्यपरिमाणत्वादनेनैव निषेधे सिद्ध काण्डान्तादि

चिच्च सफलम्, अन्यथाप्युदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । ननु क्रियामेव ष्फविधानात् उक्तार्थानामप्रयोग इति ङीप् न स्यादत आह पित्त्वसामर्थ्यादिति । ष्फेणोक्तेऽपीति । द्योतितेऽपीत्यर्थः । द्विर्बद्धं सुबद्धं भवतीति न्यायेन क्वचित्समुच्चयस्य दृष्टत्वात् पित्त्वमपि तदाश्रयणे ज्ञापकम् ।

सर्वत्र ॥ सर्वेषां मते इत्यर्थस्तदाह । नित्यमिति । प्राचामित्यस्य निवृत्त्या सिद्धे ऽपि प्राचां ष्फ इत्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषये ऽपि प्रवृत्त्यर्थं तत् । तेनावट्यापनीत्यत्रावट्याश्चेति चापं बाधित्वा प्राचां मते ष्फ एव । अवटो गर्गादिः । चापस्तु उदीचां मते प्राप्तङीप्बाधनेन चरितार्थः सर्वत्रग्रहणात्तद्बाधकत्वमेव चापो न तु अनन्तरष्फबाधकत्वम् । कृते तु न ष्फमाप्तिरत इत्यधिकारात् । लोहितादिर्गर्गाद्यन्तर्गणः । यद्यपि तत्र कत शकल कण्वेति पाठात् शकलस्य लोहितादिकण्वादिबहिर्भूतत्वात् ष्फञौ न स्तः प्राप्नुतस्तथापि कतन्तेभ्यः कण्वादिभ्य इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण न दोषः । कतन्तशब्दे शकन्ध्वादित्वात्पररूपम् । तेन शाकल्यायनी शाकल्यस्य छात्राः शाकला इति सिद्धम् ।

टाब्ङीपोरिति । कौरव्यशब्दे योपधप्रतिषेधाट्टाप् माण्डूकशब्दे जातित्वान् ङीपिति भावः । टाब्ङीपोरपवाद इति पाठस्तु प्रामादिकः ।

---

द्योतितेऽपीत्यर्थ इति * । एतत्पक्षस्यैव सिद्धान्तित्वात् * पित्त्वस्थिरत्वसामर्थ्यादिति *। अप्रायत् । घच्छौ चेतिसूत्रविहितो घञ् । *क्वचिदिति*। द्वौ ब्राह्मणौ भवति हुनीत इत्यादौ । * तदाश्रयणे * । द्योतकसमुच्चयाश्रयणे ।

एतत्सूत्रे नित्यस्यार्थकं सर्वत्रग्रहणञ्च कार्यमित्याह । * प्राचामित्यस्येति *। सर्वत्रग्रहणापकर्षे सति प्रस्फलितन्तदाह । * तद्बाधकत्वमेवेति * । ङीब्बाधकत्वमेव । इदम्परिशेषसिद्धार्थकथनम् । एतेन चाप उभयबाधकत्वे स्यादनन्तरस्येतिन्यायाश्रयणे तु ष्फस्यैव बाधकन्तत् स्यादितिशङ्काया नावकाशः । ननु चापि कृतेऽप्येकादेशस्य पूर्वान्तत्वेन ष्फप्राप्त्या सर्वत्रग्रहणं व्यर्थमेवेत्यत आह।* चापि कृते त्विति * । एतत्सूत्रे सर्वत्रशब्दोपादानन्तु वैचित्र्याय । * ष्फञाविति * । तथा च शाकल्यायनी शाकल्यस्य छात्रा शाकला इत्येतन्न स्यात् । * षष्ठीतत्पुरुष इति * । कतस्यान्तः कतन्तः । कण्वस्यादिः कण्वादिरिति । अन्तशब्दः परसमीपस्यादिशब्दश्च पूर्वसमीपस्य वाचकः । बहुव्रीहिः शेषेण ।

*जातित्वादिति* । एतेन कौरव्यसाहचर्यान्मण्डूकशब्दोऽपत्यप्रत्ययान्त एवैतत्सूत्रे गृह्यते । तेन मण्डूकस्येयं भार्येत्यर्थे तस्येदमित्यणन्तस्य मण्डूकशब्दस्य सत्त्वेऽपि न ग्रहणन्तेन यथासौ कूपमाण्डूकि तवैतावानितिकः स्मय इति सिद्धमिति । * ध्वनितम् ॥

षणाल्लोकव्यवहाराच्च परिच्छेदकवाचित्वमपि । द्विपुरुषीति । द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे तदस्य परिमाणमिति प्रत्ययस्याद्ध्यर्द्धेति लुकि उदाहरणम् । तत्र हि परिमाणशब्देनोत्तरसूत्रानुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्तः ।

ऊधसो ॥ समासान्तोयम् । तत्र स्त्रियामित्युपसंख्यानादाह स्त्रियामिति । बहुव्रीहौ सक्थ्यक्ष्णोरित्यतो बहुव्रीहावित्यनुवर्त्तते । ङित्वाचास्यादेशत्वम् । डाब्ङीब्निषेधेष्विति । समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या पूर्वमनङ्घेषां प्राप्तिः ।

अन उपधालोपिन इत्यत्रास्यानुवृत्त्या ङीपो ऽपि बाधः । एतेन मध्येऽपवादन्यायाड्डाब्निषेधयोरिद बाधकमित्यपास्तमिति भावः । ङीपिति । ङीपि तु कुण्डोधन्शब्दे पूर्वपदप्रकृतिस्वरेण धकाराकारस्यानुदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्यान्तोदात्तत्वन्न सिद्ध्येत् । कुण्डमिवोधो यस्या इति विग्रहः । बहुव्रीहेः किम् । ऊध॰ प्राप्ता प्राप्तोधाः प्राप्तापन्ने चेति समासः । अव्ययग्रहणाननुवृत्तेरिति । अस्वरितत्वादिति भावः । निषेधावपीति । अपिना ऽन उपधेति ङीप् । अन्ग्रहणे ऽनर्थकस्यापि ग्रहणात् । द्विहायनी बालेति । द्विहायनी द्विवर्षा गौरिति प्रायोवाद इत्येके । बालेत्यस्य गौरित्यर्थ इत्यन्ये ।

नित्यं सञ्ज्ञा ॥ ननु सञ्ज्ञाशब्दा नियतानुपूर्वीका अनादयश्छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवादन उपधे-

---

तदस्य परिमाणमिति सूत्रे हीत्यर्थ । * उत्तरसूत्रेति * । सख्याया सद्यास्येति- सूत्रेत्यर्थ । अत एव षष्टिजीवितप्रमाणमस्येत्यर्थ षाष्टिक इति सिद्धम् । ऊधस इति सूत्रस्य समासान्तप्रकरणस्थत्वेप्यनङो न प्रत्ययत्वम । ङकारोच्चारणसामर्थ्यात् । किन्त्वादेशत्वम् । स्थानिद्वारेण चाय समासान्त । अत एव कप्न । * तत्र * । अनङ्ङो । * स्त्रियामित्युपेति * । ऊधसो नकारो लिङ्गाधिकार इति हि तत्रत्य वार्त्तिकम् ।

ननु बहुव्रीहेरूधस इति सूत्रमध्येऽपवादन्यायेन डाब्निषेधयोरेव बाधकं स्यान्न तु अन उपधालोपिन इति सूत्रविहितस्य ङीपस्तस्य परत्वादत आह । * अन उपधेति * । इत्यत्रेति * । वाक्यभेदेन तत्र ङीप्विधानमित्यपि ज्ञेयम् । * एतेन * । तत्रानुवर्त्तनेन । ङीप्विधान स्वरसिद्ध्यर्थं तेनान्तोदात्तत्व सिध्यति तदाह । * ङीपि त्विति * । यथाश्रुतमूलानुरोधे कोशवाक्यस्यान्यथानयनमत्र नोचितमित्याशयेनाह । * बालेत्यस्येति * ।

काण्डान्तादिति ॥ क्षेत्रे एवेति नियमार्थम् । तेन द्विकाण्डी रज्जुरित्यत्र न । द्वौ बिस्तौ पचतीति । पचेर्व्रीहिभारानुकूलो व्यापारोऽर्थः । अत्रोन्मानत्वाट्ठको लुक् । आचितः शकटो भर इत्युक्तेराचितः परिमाणमित्येके । आचितो दशभाराः स्युरित्युक्तेरुन्मानमेतदिति, एतदपि नियमार्थमित्यन्ये । प्रमाणे इति । षोडशहस्तप्रमाणदण्डद्वारा काण्डशब्दस्यायाममात्रपरिच्छेदकत्वेन प्रमाणत्वमिति भावः ।

पुरुषात्प्रमाणे ॥ पुरुषस्योर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वादुन्मानस्य चेद् बिस्तादेरेवेति नियमान्निषेधाप्राप्तौ नित्यं ङीपि प्राप्ते विकल्पार्थमिदम् । अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची । अत एव तस्य पुरुषविशेषणता नासङ्गता । जातिवचनस्यापि पुरुषशब्दस्य पञ्चारत्निः पुरुषः इति शुल्बसूत्रादत्र प्रमाण इति विशे-

---

ति निषेधसूत्रमनर्थकमत आह । * काण्डान्तादिति नियमि * । अत्र भाष्ये ङीप्रतिषेधानुक्ष्यते तत्रैव शक्योऽयं वक्तुम् । परिमाणात्तद्धितलुकि । इह नियमार्थं भविष्यति परिमाणान्तादेव तद्धितलुकि । न च समाहारे व्यावृत्त्यर्थं परिमाणान्तात्तद्धितलुक्येवेति नियमः पुनर्नेति वाच्यम् । लक्षणस्य लक्ष्यानुसारित्वात् तेन समाहारे द्व्याढकीति भवतीति कैयटः । ततो बिस्ताचितकम्बल्येभ्यो नेति । तद्धितलुकीति वर्तते पूर्वनियमेन सिद्धे इदमपि नियमार्थम् । उन्मानवाचकाद्येभ्य तद्धितेभ्य एवेति । एवम्प्रकारणैकस्य भङ्गानुपादानेन यद्यपि सिध्यति तथापि योगविभागनियमयोर्विपरीतनियमशङ्कायाश्च वारणस्य क्लेशेन कल्पनया करणे प्रयासाधिक्यमिति मूले तथा नोक्तम् ॥ केचित्तु अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धिते इत्येव सूत्रमस्तु लुग्ग्रहणञ्च मास्तु । द्विगोरित्यनुवर्तते । तद्धितपदस्य तद्धितार्थपरतया तद्धितार्थे योऽपरिमाणान्तो द्विगुस्तस्मान्न ङीबित्यर्थोऽस्तु । तेन समाहारे पञ्चाश्वीत्यादिद्विगौ निषेधो न भविष्यतीत्याहुः । तन्न । अपरिमाणाद्यन्ताद्द्विगोर्यस्तद्धितस्तदन्ताद् ङीप् न स्यादित्यर्थोऽपि सम्भाव्येत ततश्चाध्यर्धकार्षापणिकी अध्यर्धसाहस्री इत्यत्रापि निषेधः प्रसज्येत । अत्र हि विभाषा कार्षापणेतिविकल्पेन लुग्विधानम् । यत्र तु तद्धितस्य लुक्तत्रापि प्रत्ययलक्षणेन भविष्यतीति लुग्ग्रहणस्यावश्यकत्वात् ॥ पूर्वकालस्थितरूपरसादिपरावृत्तिलक्षणस्य पाकस्य द्वौ बिस्तौ पचतीत्यनासम्भवः सुवर्णे तादृशपाकासम्भवादाह । * पचेर्व्रीहिभारेति * । अन्यमतमाह । * आचित इति * । स्वमतमाह । * आचितो दशेति * ।

* अत एव * । प्रमाणशब्दस्य परिच्छेदकमात्रपरत्वादेव । * तत्र हीति * ।

विभाषा ॥ सहशब्दो विद्यमानवाची पूर्वशब्दोऽवयववाची, व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवादव्यभिचाराच्च पतिशब्देन तदन्तं गृह्यत इत्याह पतिशब्दान्तस्येत्यादि । न पत्युरिति । सपूर्वस्येत्यनेन पत्यन्तस्य गृह्यमाणत्वादिति भावः । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसंबन्ध इत्यन्ये । बहुव्रीहावित्युपसर्जनोपलक्षण तेन पतिमतिक्रान्ता ऽतिपत्नीत्यपि । व्यस्ते इति । विभाषा सपूर्वस्येत्यत्र यज्ञसंयोगइति न सम्बध्यते, भाष्ये कथन्तुपजकस्य पत्नीति व्यस्ते एव प्रश्नात् । वृषलत्वेन यज्ञसंयोगाभावात्पूर्वेणाप्राप्तेः सपूर्वत्वाभावाच्चैतदप्राप्तेरिति भावः । उपचारादिति । पाणिग्रहणाश्रयादिति भावः । यद्वेति । इदं मौढ्या तत्प्रकृतिककर्तृक्विपि दृढमानाभावात् । पूर्वसूत्रे यज्ञसंयोगइति तु वृषलस्य पतिः स्त्रीति प्रयोगसाधनार्थम् । सपूर्वस्य किमिति । अवयववाची पूर्वशब्दः किमर्थ इति प्रश्नः । गवां पतिरिति । स्वामिनीत्यर्थः ।

---

* अवयववाचीति * । न ॥ दिक्कालान्यतरावच्छिन्नवाची । तथात्वे स्वघटितप्रातिपदिकानवयवगतपूर्वत्वमादाय वाक्येऽतिप्रसङ्गः स्यात् । एव सति विद्यमान पूर्वावयवो यस्मिन्प्रातिपदिके तस्य प्रातिपदिकस्यावयवो य पतिशब्दस्तस्य नकारादेश इत्यर्थ । व्यपदेशिवद्भावेन सम्भवम्मत्वाह । * अव्यभिचारादिति * । एवञ्चाधिकारप्राप्तस्य प्रातिपदिकस्य पत्युरिति विशेषणमिति तदन्तविधि । ननु श्रुतानुमितयोरिति न्यायेन तस्य पतिशब्दविशेषणत्वमेवोचितमित्यत आह । * सपूर्वस्येत्यनेनेति * । एतच्च प्राचामनुरोधेन । वस्तुत इहार्थोऽप्यनुपसर्जनाधिकारस्तदाह । * बहव इति * । ननु विभाषा सपूर्वेतिवदस्यापि यज्ञसयोग एव प्रवृत्त्या वृषलपत्नीति समस्तेऽपि शङ्कासत्त्वाद्व्यस्त एव किमिति शङ्केत्यत आह । * विभाषा सपूर्वस्येत्यत्रेति * । व्यस्ते कथमिति शङ्काया बीजमाह । * वृषलत्वेनेति * । उपचारो लक्षणा सा च स्त्रीप्रत्ययान्तस्य शक्तिसम्बन्धेन प्रवृत्तिर्ब्राह्मण्याम् । अन्यत्र लक्षणया प्रवृत्तौ न किञ्चिद्बाधकम् । लक्षणाया निमित्तमाह । * पाणिग्रहणेति * । गृह्यते यस्मिन्तद् ग्रहणम् । पाणेर्ग्रहणम्पाणिग्रहणमिति व्युत्पत्त्या पाणिग्रहणशब्दो विवाहपर स्वीयविवाहवाचकपदप्रतिपाद्यविवाहसम्बन्धित्वमत्र शक्यसम्बन्ध इत्युक्तम् । * दृढमानाभावादिति * । प्रातिपदिकसामान्यादन्येभ्योऽपीत्यनेन धातुसामान्याच्च क्विपो विधानेऽपि भाष्ये कथ तुपजकस्य पत्नीति पूर्वपक्षङ्कृत्वा पत्नीतिसमाधानस्यैवोक्तत्वादिति भाव । नन्वेवम्पत्युर्नोतिसूत्रे यज्ञसयोग इति व्यर्थमत आह । पूर्वसूत्र इति * । * वृषलस्य पतिरिति * । अत्र पतिशब्दः स्वामिनीपर ।

त्येव सिद्धे इद व्यर्थमिति चेदुत्तरार्थत्वात् । योगविभागस्तु व्यर्थ एव । तदु ध्वनयन् लक्षणान्तरसिद्धिमुदाहरति वेदे पञ्चदाम्नीति । सव चित्तु शतमूर्ध्नीति पाठः ।

केवल मामक ॥ अस्मच्छब्दादणि तवकममकावेकवचनइति ममकादेशः । भागशब्दात्पुल्लिङ्गात्स्वार्थे ऽभिधेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्वास्त्रीत्वम् । पापशब्दो ऽर्शआद्यचा तद्वति वर्तमानः स्त्रियाम् । अपरः पञ्चगंमद्धो घृतादित्वादन्तोदात्तः । उतापर यसिदेवानित्यादौ उतापरीभ्यो मघवेत्यादौ चान्तोदात्तपाठात् । पूर्वमनयन्नापरमित्यादौ पठ्यमानमाद्युदात्तस्वमपि वृषादित्वात् । अपराः पूर्वामभ्येतीत्यादावजादिपाठादापि । आर्येण कृतेति प्राक् सुबुत्पत्तेः समासेऽदन्तत्वम् । भेषजशब्दोऽव्युत्पन्न औषधे रूढः । भिषज इदमित्यणि भैषजशब्दो ऽपि तत्र । सुमङ्गलीरिय वधूरिति तु मत्वर्थीये बोध्यम् ।

प्रकृतिभागाविति । तुकृतभियोगेनेति भावः । मतुनिति । वत्वन्तु मादुपधाया इति सिद्धम् ।

यज्ञेन सम्बन्ध इति । स्त्रिया इत्यर्थ । संयोगपद सम्बन्धोपलक्षणम् । सम्बन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वन्तदाह । तत्कर्तृकेति ।

---

* लक्षणान्तरसिद्धमिति * । अन उपधेतिलक्षणेन सिद्धमित्यर्थ ।

* सत्वात्स्त्रीत्वमिति * । स्वार्थिका प्रत्यया क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति न्यायात् । घृतादिपाठे साधकमाह । * उतापरमित्यादि * । * प्राक्सुबुत्पत्तेरिति * । स्त्रीप्रत्ययोत्पत्ते प्रागित्यपि बोध्यम् । * तत्र * । औषधे । रूढ इति शेष । ननु सुमङ्गलीरियमित्यनुपपन्नमनेन सूत्रेण ङीपि हल्ङ्यादिलोपस्य दुर्वारत्वादत आह । * सुमङ्गलीरियमिति * । * इप्रत्ययेति * । छन्दसीवनिपौ च वक्तव्याविति वार्तिकेन विहिते इप्रत्यये इत्यर्थ ।

नन्वप्राप्तस्य मतुपो निपातने शालाया वाच्यायामपि तादृशप्रयोगापत्तिरत आह । * नुगिति * ।

ननु यज्ञसंयोग इत्येतावन्मात्रेण पुंसो यज्ञसंयोग इत्यपि प्रतीयेतेत्यत आह । * स्त्रिया इत्यर्थ इति * । शब्दो यद्यपि पुल्लिङ्गस्तथापि स्ववाच्यकर्तृकयज्ञफलनिरूपितविलक्षणसम्बन्ध स्त्रियां यदा विवक्षितस्तदा पुवाचकेऽपि तकारोत्तरेकारस्थानिकनकारघटितोऽयमेव स्वपूर्वत्वसम्बन्धेन ङीप्विशिष्ट स्वाभावात्स्त्रियाम्प्रवर्तेत इति भाव । अत्र यज्ञसंयोग इत्यनुपपन्नम् । यज्ञस्य क्रियारूपतया तत्प्रतियोगिकसंयोगाप्रसिद्धेरत आह ।*संयोगपदमिति*।यज्ञेति यद्यत्कर्मणि दम्पत्यो सहाधिकारस्तस्य सर्वस्योपलक्षणम् ।

जैनलक्षण इकारोन प्राप्नोतीत्युक्तम् । त्र्येण्येत्यस्य त्रिपु स्थानेषु एन्येत्यर्थो बोद्ध्य इत्याहुः । आर्षमत्र णत्वम् । वर्णात्किम् । अकृता । गतिरनन्तर इत्याद्युदात्तः । अन्तोदात्त इति । श्वेतो वाजी जायते इत्यादौ तथा पाठादिति भावः । छन्दसि क्नमिति नादेशापवादः, तेन उत्सर्गसमानदेशा अपवादा इति न्यायात्तत्स्थानिकत्वं ङीप्सनियोगशिष्टत्वञ्चास्य बोद्ध्यम् । विशुद्धवाचीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः ।

अन्यतो ॥ सन्निधानाद्व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनान्वय इत्याह तोपधभिन्नादिति । वर्णात्किम् । खट्वा । आद्युदात्तः ।

नर्त्तकीति । शिल्पिनि ष्वुन् । गौरशब्दो वर्णवान्यप्यन्तोदात्त इतीह पाठः । अनड्वाहीति । आमनुडुहः स्त्रियां वेति वचनात्पक्षे ओम् ।

सूर्येति । स चेद इति सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु सौरी बलाकेति न सिद्ध्येत् । सूर्येणैकदिगित्यणन्तान् ङीपि अणन्तमङ्गं न सूर्यशब्द इति तदसिद्धिः । वचनन्तु सुरी कुन्तीत्यत्र चरितार्थम् । अणो लोपेऽप्याभीयत्वेन सो ऽसिद्धः, अण्निमित्तकाल्लोपस्तु व्याश्रयत्वान्नासिद्ध

---

स्याप्रधानत्वादुपसर्जनत्वमिति तद्भाव । * ईकारो न प्राप्नोतीति * । अत्रापि कुम्भकपाल लोहितमियेतिविग्रह कार्यस्तथा सत्युपसर्जनत्वाद्वर्णादनुदात्तादिति ईकारो न प्राप्नोतीत्यर्थः । * त्रिपु स्थानेष्विति * । सुप्सुपेतिसमास । आर्षमत्र णत्वमिति* । समानपदत्वाभावादट्कुप्वाङिति सञ्ज्ञात्वाभावात्पूर्वपदादित्यस्या प्राप्तिरिति भाव । श्वेतशब्दस्य घृतादिपाठे मानमाह । *श्वेतो वाजीति * । क्नादेशस्यानेकाल्त्वात्सर्वादेशत्वशङ्कायामाह । * नादेशापवाद इति । ङीप्सन्नियोगेति*।ङीष्विधायकसूत्र एव भाष्ये पाठात्।*तत्प्रवृत्तनिमित्तिक *.विशुद्धिप्रवृत्तनिमित्तिक' ।

न चैवमवदात सितो गौर इति कोशानुपपत्ति । विशुद्धत्वसाधर्म्यात्तत्राप्यवदातशब्दप्रवृत्तिसम्भवात् । वर्णादनुदात्तादितिसूत्रानन्तरमन्यत इत्यस्य पाठाद्विशेष्यभूतार्थवाचकस्य वर्णादित्यस्योपस्थितस्यान्यत्वे प्रतियोगितयाऽन्वये तित्तिरि कल्माषीति भाष्यप्रयोगानुपपत्तिरत आह । * अन्यत्य इति * ।* व्याख्यानादिति * । उक्तप्रयोगदर्शनमूलकादित्यर्थ । * आद्युदात्त इति * । घत्रन्तस्य यातत्वात् ।

* अन्तोदात्त इति * । प्रातिपादिकस्वरेणान्तोदात्त इत्यर्थ ।

निपात्यत इति। तेन चोदात्तसादेशस्यैव महत्त्वा सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम्। किं च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीन्नकारविशिष्टोच्चारणम्। अत एव समानस्वामिकदासीभूम्यादौ सपतिरित्येव। समानत्व चैकस्यैव तत्तत्पत्नीसंबन्धेन भेदमारोप्य बोध्यम्। मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोग इष्यते। त्रिसूत्रीति। व्याख्यानादिति भावः। सन्नियोगशिष्ट इति। तेन तदभावे ङीबपि नेति भावः। नितान्तानामित्यत्राकार उच्चारणार्थः। नितन्तानामिति पाठे जश्त्वाभावः सौत्रः।

त्रीण्येतानीति। अत्रैतशब्दस्योपसर्जनत्वे ऽपि तदन्तमनुपसर्जनमेवानुपसर्जनादिति चात्र तदन्तविशेषणम्। अत एव शृङ्गवृत्तिकृता नारायणेनात्र बहुव्रीहिं कृत्वा ऽनेन ङीबित्युक्तं तदनुसारेण चेदम्। परे तु उपमानानीति सूत्रस्थभाष्यस्वरसात् टिड्ढाणञित्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्तत्वाचात्रापि तथैवोचितम्। तत्र हि शस्त्रीश्यामेत्यादौ श्यामाशब्दः शस्त्र्यामेव, उपमेयन्तु समासवाच्यमिति पक्षे शस्त्रीश्यामो देवदत्त इत्यत्र ह्रस्वत्वञ्च सिद्ध्यति। यद्युपसर्जनस्येति ह्रस्वत्वन्तदा कुम्भकपाललोहिनीत्यत्रानुपस-

---

* तेन चेति *। निपातनेन चेत्यर्थः। * अत एव *। स्त्रीविशेषे रूढिस्वीकारादेव। ननु समानः पतिर्यस्या इत्यर्थोऽत्रानुपपन्नः। समानत्वस्य भेदघटिततया स्वस्मिन् स्वभेदासम्भवादाह। * समानत्वञ्चैकस्यैवेति *। * भेदमारोप्येति *। पत्नीगतस्य परस्परप्रतियोगिकभेदस्य तत्तत्सम्बन्धात्समारोपः। * व्याख्यानादिति *। पूतक्रत्वादीनां पुंयोगप्रकरणे वचनमितिवार्त्तिकमूलकात्। अस्मिन्वार्त्तिके बहुवचनोपादानेन कपिञ्जलाधिकरणन्यायेन त्रित्वस्य पुरस्स्फूर्त्तिकतया तत्रैव पर्यवसानमिति भावः। * तदभाव इति *। तयोरभाव इत्यर्थः। * सौत्र इति *। स चात्र तकारे एव न [illegible] दकारे इति स्पष्टं प्रतीयत इति शेषः।

* तदन्विति *। वृत्तिकारादिव्याख्यानानुरोधेनेत्यर्थः। मूलादि दूषयन् स्वसिद्धान्तमाह। *परे त्विति*। *अत्रापि*। वर्णादनुदात्तादिति सूत्रेऽपि। *तथैवोचितमिति*। गृह्यमाणविशेषणत्वमेवोचितमित्यर्थः। तत्र साधकमाह। * तत्र हीति *। * इति पक्ष इति *। अस्मिन्पक्षे शस्त्री श्यामा श्यायमिति लौकिकविग्रहः। अस्मिन्पक्षे दूषणमुक्तं शस्त्रीश्यामो देवदत्त इत्यत्र ह्रस्वत्वञ्च सिध्यति। शस्त्रीव श्याम इति चेद्विग्रहस्तदा स्वतोह्रस्वात्तस्यैव श्यामशब्दस्य प्रयोग इति तादृशप्रयोगनिर्वाहः। सम्प्रति तु शस्त्रीश्यामा देवदत्त इति स्यादिति भावः। * उपसर्जनस्येति ह्रस्वत्वमिति *। समासवाच्यमुपमेयम्प्रधानं श्यामाशब्दार्थ

जेनलक्षण इकारोन प्राप्नोतीत्युक्तम्। त्र्येण्येत्यस्य त्रिषु स्थानेषु एन्येत्यर्थो बोध्य इत्याहुः। आर्षमत्र णत्वम्। वर्णात्किम्। मकृता। गतिरनन्तर इत्याद्युदात्तः। अन्तोदात्त इति। श्वेतो वाजी जायते इत्यादौ तथा पाठादिति भावः। छन्दसि क्नमिति नादेशापवादः, तेन उत्सर्गसमानदेशा अपवादा इति न्यायाप्राप्तस्थानिकत्व ङीप्सन्नियोगशिष्टत्वञ्चास्य बोध्यम्। विशुद्धवाचीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः।

अन्यतो ॥ सन्निधानाद्व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनान्वय इत्याह तोपधभिन्नादिति। वर्णात्किम्। खट्वा। आद्युदात्तः।

नर्त्तकीति। शिल्पिनि ष्वुन्। गौरशब्दो वर्णवान्यप्यन्तोदात्त इतीह पाठः। अनड्वाहीति। आमनडुहः स्त्रियां वेति वचनात्पक्षे ओम्।

सूर्येति। स चेच इति सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु सौरी बलाकेति न सिद्ध्येत्। सूर्येणैकदिगित्यणन्तात् ङीपि अणन्तमङ्गं न सूर्यशब्द इति तदसिद्धिः। वचनन्तु सूरी कुन्तीत्यत्र चरितार्थम्। अणो लोपेऽप्याभीयत्वेन सो ऽसिद्धः, अण्निमित्तकाल्लोपस्तु व्याश्रयत्वान्नासिद्ध

---

स्याप्रधानत्वादुपसर्जनत्वमिति तद्भाव। * ईकारो न प्राप्नोतीति *। अत्रापि कुम्भकपाल लोहितामिवेतिविग्रह कार्यस्तथा सत्युपसर्जनत्वाद्वर्णादनुदात्तादिति ईकारो न प्राप्नोतीत्यर्थ। * त्रिषु स्थानेष्विति *। सुप्सुपेतिसमास। आर्षमत्र णत्वमिति*। समानपदत्वाभावादट्कुप्वाङिति सञ्ज्ञात्याभावात्पूर्वपदादित्यस्या प्राप्तिरिति भाव। श्वेतशब्दस्य घृतादिपाठे मानमाह। *श्वेतो वाजीति, *। क्नादेशस्यानेकाल्त्वात्सर्वादेशत्वशङ्कायामाह। * नादेशापवाद इति। ङीप्सन्नियोगेति*।ङीब्विधायकसूत्र एव भाष्ये पाठात्।*तत्प्रवृत्तिनिमित्तक * विशुद्धिप्रवृत्तनिमित्तक।

न चैवमवदात सितो गौर इति कोशानुपपत्ति। विशुद्धत्वसाधर्म्यात्तत्राप्यवदातशब्दप्रवृत्तिसम्भवात्। वर्णादनुदात्तादितिसूत्रानन्तरमन्यत इत्यस्य पाठाद्विदोष्यभूतार्थवाचकस्य वर्णादित्यस्योपस्थितस्यान्यत्वे प्रतियोगितयाऽन्वये तित्तिरि कल्माषीति भाष्यप्रयोगानुपपत्तिरत आह। * अन्यत्व इति *।* व्याख्यानादिति *। उक्तप्रयोगदर्शनमूलकादित्यर्थ। * आद्युदात्त इति *। क्नप्रत्ययान्तत्वात्।

* अन्तोदात्त इति *। प्रातिपदिकस्वरेणान्तोदात्त इत्यर्थ।

इति यस्योपधात्वम्। उपधाग्रहणादेव भाधिकारमभिव्याप्याभीयासिद्धत्वमिति बोध्यम्। यग्रहणन्तूत्तरार्थम्। ङ्यामिति निर्देशात्सप्तम्येकवचनाग्रहणम्। नक्षत्राणीति। नक्षत्रवाचकाद्यो ऽण् तत्रेत्यर्थः, तेन तिष्येण युक्तन्तैषमहस्तिष्ये भवस्तैष इत्यादि सिद्धम्। मातरि पिच्चेति। पितामहीसिद्ध्यर्थमिदम्। दंष्ट्रेति। दांशेदर्म्नीशसेति करणे ष्ट्रन्। अयमजादिषु पठ्यते। गौरादिषु मातामहीशब्दपाठो ऽनार्ष इत्यन्ये।

जानपदीति। जनपदे भवेत्यर्थः। उत्सादित्वादञ्, ङीष्याद्युदात्तत्वे प्राप्ते ऽन्तोदात्तार्थं वचनम्। वृत्तिरनुच्छेदा जीविका। अमत्रय इति। तथा च क्रियाशब्दोऽयमिति भावः। अमत्रे कमण्डलुरूपे। कुण्डी कमण्डलौ जारात्पतिपत्नीसुते पुमानिति मेदिनीकोशात्तु तत्र नित्यस्त्रीलिङ्ग इति भावः। यदि तु पिठरं तु नानाकुण्डमिति विश्वकोशे तस्य नपुंसकत्वमप्युक्तं पिठरामत्रशब्दौ च पर्यायौ। पिठरः स्थाल्युखा कुण्डमित्यमरे नपुंसकत्वमात्रोक्तिस्त्वप्युक्त्यानुवाद इत्युच्यते, तदानेकविधसंस्थानेषु अमत्रेषु कुण्डव्यवहारेण कुण्ड-

---

सचेत्सूर्यागस्त्ययोरिति व्याख्यानफलमाह। * सूर्यादीनामिति *। * सोऽसिद्ध *। एवञ्च न सूर्यशब्दस्याङ्गत्वमिति भावः। * उपधाग्रहणादेवेति *। अन्यथा सूर्यादीनां ङीनिरूपिताङ्गनामयपयस्य य इत्यर्थे सूर्यचरीत्यत्रैव सौरी बलाकेत्यत्रासिद्धिस्स्यादिति भावः। ननूपधापदसत्त्वे सूर्यादीनामुपधाभूतो यकार एव सम्भवतीति यग्रहणव्यर्थमत आह। * यग्रहणन्तूत्तरार्थमिति *। हलस्तद्धितस्येतिसूत्रार्थमित्यर्थः। * तेन *। नक्षत्रवाचकादिति व्याख्यानेन। नक्षत्रशब्दोच्चारणेन विहित इत्यर्थे तु सन्धिवेलेत्यादिसूत्रविहितस्यैव ग्रहणं स्यात्तथा चोक्तप्रयोगानुपपत्तिरिति भावः। * इदमिति *। पितृव्यमातुलेतिसूत्रविहितं वार्त्तिकमित्यर्थः।

* क्रियाशब्दोऽयमिति *। क्रियाप्रवृत्तिनिमित्तक इत्यर्थः। कुडिदाहे इत्यस्येदित्त्वेन नुमि गुणमस्यम्। अन्तर्भावितण्यर्थात्कर्तर्यकारप्रत्ययः। एतेन जातिवाचकत्वाभावो ध्वनितः। कुण्डशब्दस्य रूढत्वेऽप्याह। * यदि त्विति *। अनेकविधसंस्थानेष्विति *। एवञ्चानुगतसंस्थानव्यङ्ग्यत्वाभावान्न जातित्वमित्युक्तम्भवति। मतान्तरमाह। * कमण्डलुसंस्थानेति *। * नियमार्थमेवेति *। कुण्डशब्दाद्वेदमत्र एवेति नियमार्थम्। सूत्रन्त्वित्यस्यामत्रग्रहणन्त्वित्यर्थः।

त्वे जातित्वाभावादप्राप्तो ङीषिति बोद्ध्यम् । स्त्रीविषयत्वादित्युपलक्षणमिति वदन्तः । कमण्डलुसस्थानस्यानुगतत्वात्तद्रूपामत्रवाचिनो जातित्वमप्यस्ति, सूत्रन्तु नियमार्थमेव अमृते जारजाया कुण्डेत्येवेत्यपरे । आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीषो विधिः । आपवनमिति सामान्ये नपुंसकम् । गुणयोगादिति । गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः।विधित्वानुरोधाद् गौणएवास्य प्रवृत्तिः । वर्णश्चेदिति । तद्विशिष्टश्चेदित्यर्थः । अन्यथा गुणे शुक्लादयः पुंसीत्युक्त्या ऽसङ्गत स्यादिति बोद्ध्यम्।सूत्रे वर्णशब्दो ऽर्शआद्यजन्तः। कालान्येति । क्वार्यगुणयुक्तेत्यर्थः । नीलया अनितिं । वृत्त्यनुसारेणेदम् । प्रतिपदोक्तत्वादप्रकृतिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहण न त्वस्य लाक्षणिकत्वात् । आनाच्छादने इति नीलवर्णवती शाटीत्यर्थे नीलीति वारणाय चरितार्थ नील्या रक्ता गौरित्यर्थे नीलेत्येवोचितमिति परे । मैथुनेच्छाशब्दो ऽर्शआद्यजन्तस्तद्वतीत्यर्थः ।अन्येति । मैथुनादन्यदिच्छति। कमेर्लपपतेत्युकञ्

शोणशब्दो वर्णवाची वर्णानान्तणेत्याद्युदात्तः । अन्यत इति सिद्धे विकल्पार्थमिदम् ।

वोतो ॥ अत्र गुणवचनशब्देन समस्तकृदन्ततद्धितान्तसर्वनामजातिस

---

* विधित्वानुरोधादिति * । न तु जातिवाचकस्य नागशब्दस्यात्र सूत्र उपादानक्रियमार्थम् । विधिनियमसम्भवे विधिरेव ज्यायानिति न्यायात् । * असङ्गतं स्यादिति * । अस्य स्त्रीत्वमित्यादि । * इदमिति * । प्रत्युदाहरणभूतस्य नीलेत्यस्य कथनोत्तरकाल्या रक्तेत्यर्थकथनमित्यर्थ । एवमभिधानेनोदाहरणे नीली इत्यत्रापि वार्त्तिकनिष्पन्नस्य प्रकृतित्वमिति प्रतीयते तन्न युक्तमित्याशयेनाह । *प्रतिपदोक्तत्वादिति*।*नीलवर्णवती शाटीत्यर्थ इति * । एवङ्कथनेन गुणगुणिनोरभेदोपचारो दर्शित । ननु नील्या रक्ता गौर्नीलीति वृत्तिकारमते जायमानस्य भवन्मतेऽसिद्धिरित्यत आह । * नीलया रक्तेति * । * मैथुनादन्यदिति * । भूषणादिकमित्यर्थं ।

वोत इति सूत्रे गुणशब्दो न कृत्रिमाकृत्रिमन्यायेनादेङ्बोधक उत इत्यस्य विशेषणस्योपादानात् । नापि ससर्गिभेदक यद्यत्सव्यापार प्रतीयते । गुणत्वमपरतन्त्रत्वात्तस्य शास्त्रे उदाहृतमिति लक्षणलक्षितगुणशब्दयोध्यम् विशेषणमात्रस्य प्रथमलक्षणेन ससर्गिभेदकमित्यनेनोच्यते । सव्यापारमिति द्वितीय लक्षणन्तस्येतरव्यापाराधीनव्यापारकमित्यर्थ । आखुर्द्रव्यमित्यत्राखुशब्दस्य द्रव्यात्मकससर्गिभेदकतयाऽतिप्रसङ्गात् । क्रियार्थमितिप्रसङ्गाच्च । नापि नैयायिकपरिभाषाविषय । मृद्वी पट्वीत्याद्यसिद्ध्यापत्तेरत आह । * अत्र गुणवचनेति * । इत्थ हि तत्र भाष्यम् । अर्थवत्प्रातिपदिकम् । गुणवचनञ्च । समासकृत्तद्धिताव्ययसर्व

ख्यासञ्ज्ञाशब्दातिरिक्तशब्दो गृह्यते । आकडारसूत्रभाष्यपर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् । तत्र हि प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाग्रे तद्बाधकत्वेनैताः क्रमेण पठिताः । गुणवचनेत्यन्वर्थसञ्ज्ञाया गुणोपसर्जनगुणिवाचकानामेव तादृशानां सा सञ्ज्ञेति न रूपादीनां ग्रहणम् । जातिपदेनाकृतिग्रहणद्रव्यवृत्तिजातिवाचकानामेव तत्र ग्रहणात् । कथा-

---

नामाऽसर्वलिङ्गा जातिरिति । गुणवचनश्चेत्यत्रार्थवदित्यनुवर्त्तते । एवञ्च प्रातिपदिकसञ्ज्ञागुणवचनसञ्ज्ञयोरेकविषयत्वात्समावेशार्थश्चकारस्य करणाच्चोभयोः समावेशः । कृत्तद्धितपदञ्च तदन्तपरम् । उभयत्र प्रातिपदिकमित्यनुवर्त्तते । एवञ्च प्रातिपदिकसंज्ञापूर्विका कृदन्तसंज्ञा तद्धितान्तसंज्ञेति एताभ्यां प्रातिपदिकसञ्ज्ञया समावेशः । प्रातिपदिकसञ्ज्ञासामानाधिकरण्योपपत्तये कृत्तद्धितपदं तदन्तपरत्वेन व्याख्यातम् । गुणवचनसञ्ज्ञा ह्येताभ्यां बाध्यते । तेन कष्टात्यन्तपारवर्तीत्यमित्यत्र त्वतलोर्गुणवचनस्येति न पुंवत्त्वम् । न च गुणिपरशुक्लादीनां गुणवचनसञ्ज्ञा तद्धितान्तत्वान्न प्राप्नोति मतुपोऽत्र लोपादिति वाच्यम् । श्रूयमाणतद्धितान्तस्य सञ्ज्ञाविधानात् । अथ वा गुणगुणिनोरभेदोपचारादेव गुणिनि शुक्लादिशब्दानां प्रवृत्तिसम्भवेन मतुप एवानुत्पत्तेः । रूपादिशब्दानां तु न गुणवचनसञ्ज्ञा । जातिसञ्ज्ञया बाधात् । तेन तेभ्यः ष्यञ् न । जातिसञ्ज्ञा त्वसर्वलिङ्गत्वात्प्रवर्त्तते । एवमव्ययादिसञ्ज्ञाभिरपि प्रातिपदिकग्रहणानुवृत्त्या समावेशः । न च प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञा यदि तदा गुणवचनब्राह्मणादिभ्य इति सूत्रे ब्राह्मणादिग्रहणं व्यर्थमिति वाच्यम् । प्राणभृज्जातिलक्षणाञ्बाधनार्थत्वात् । जातिसञ्ज्ञया बाधाच्च । ऐक्यं राजपौरुष्यमित्यादौ ष्यञ् तु ब्राह्मणादित्वात् । एवं सङ्ख्यापदसञ्ज्ञा । एता सञ्ज्ञा अपि बाधिकाः । एकद्व्योपनिवेशिनी सञ्ज्ञा । रूपादिशब्दानां गुणवचनसञ्ज्ञा प्रकारान्तरेण वारयति । * गुणवचनेत्यन्वर्थेति * । *बहुविशेषणानां वैयर्थ्यादिति * । सत्त्वं द्रव्यगतमाश्रीयते तत एव पाकादिना पूर्वगुणस्य निवृत्तिरपि भवति । विभिन्नजातीयेषु घटपटादिषु दृश्यते । एतेन जातिनिरासः । द्रव्यत्वं विभिन्नजातीयेषु जलपृथिव्यादिषु यद्यपि दृश्यते तथापि कदापि नापैति । असत्त्वप्रकृतिरिति । अद्रव्यस्वभाव । तेन भिन्नजातीयतन्त्वारब्धस्यासमवायिकारणनाशजन्यनाशप्रतियोगिनः पटस्य निरासः । क्रियावारणायाह । * आधेय इति * । आधीयते उत्पाद्यते इत्यर्थः । एतेनानित्यत्वस्य लाभेऽक्रियाज इत्यनेन नित्यत्वस्य च लाभे नित्यानित्यवृत्तिजातिमानिति फलितम् । न चैवमपि तादृशसत्ताजातिमत्त्वस्य क्रियाया सत्त्वादतिव्याप्तिरेवेति वाच्यम् । द्रव्याश्रितत्वस्यापि जातिविशेषणत्वात् । एतेनैव सत्त्वगुणसङ्ग्रहे सत्त्वे निविशते इत्यादि व्यर्थमिति भावः ।

दिशाद्यान्येतृणाञ्च तद्धितान्तत्वादेव व्यावृत्तिः। एतत्सूत्रभाष्योक्तम्।

"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।

आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" ॥ इति।

गुणलक्षणं त्वेकदेशयुक्तिर्बहुविशेषणानां वैयर्थ्यात्। भाष्यकृताऽव्याख्यानाच्च। तस्मादाकडारसूत्रोक्तमेव भाष्यसंमतमिति भाष्यप्रदीपोद्योते निरूपितम्। शुचिरिति। शुचेरौणादिकः किदिन्। उतइत्यस्याभावेऽपि खरुसंयोगोपधान्नेत्येतत्सामर्थ्येनात इत्यस्यात्रासम्बन्धः। उणादीनामव्युत्पन्नत्वात्क्रुदिकारादित्यस्यात्राप्रवृत्तिरित्यभिमानः। शुक्लेति तु प्रत्युदाहरणमुचितम्। तपरः किम्। वधूः कामूः। वधूः स्नुषा नवोढा स्त्री कामूर्विकलवाचि स्यादिति कोशबलेन नवोढात्वस्य विकलत्वात्त्वस्य च प्रवृत्तिनिमित्तत्वेन खरुशब्दवद् गुणवचनत्वात्। पतिंवरेति। पतिलाभोत्कण्ठावतीत्यर्थः।

बह्वादि ॥ बहुशब्दस्योक्तरीत्या गुणवचनत्वाभावेन ग्रहणम्। कृदिकारादक्तिन इति सर्वत इति च गणसूत्रे। अक्तोऽपीत्यर्थः। व्यवस्थितविभाषाश्रयणात्क्वाचिन्न सुगन्धिः। प्रियकृतिर्नैश्येत्यादीति वृत्तिः। पुराणशब्दोऽत्र पठ्यते स

---

* निविदिनिति *। न चात्र कृदन्तसंज्ञया गुणवचनसंज्ञाया बाधादेव नातिप्रसङ्ग इति वाच्यम्। उणाद्यन्तानामव्युत्पन्नत्वस्यैव सिद्धान्तितत्वात्। नन्वत इत्यस्य सम्बन्धादेव शुचिरित्यत्र नातिप्रसङ्ग इति वाच्यम्। तस्यात्रासम्बन्धात्तदाह।* खरुसंयोगोपधान्नेति *। * अभिमान इति *। अत्रारुचिस्तूणादीनां व्युत्पन्नत्वस्यापि तन्मते सत्त्वेन वक्ष्यमाणस्य वृत्तिकारसम्मतस्य व्यवस्थितविभाषात्वस्य सत्त्वेन च तेनैव दोषनिरासे उत इति न कार्यमिति। * प्रत्युदाहरणमुचितमिति *। न चात्रापि संयोगोपधत्वात् संयोगोपधान्नेतिनिषेधो भविष्यतीति कथमेतत्प्रत्युदाहरणमिति वाच्यम्। खरुशब्दसाहचर्येण संयोगोपधस्यैव ग्रहणम्। अत एव पाण्डुरित्युदाहृतमित्याशयात्। नचात इत्यस्य सम्बन्धेन खरुसंयोगोपधान्नेति न कार्यमिति वाच्यम्। पट्वीत्यादीनामसिद्ध्यापत्तेः। * विकलवाचीति *। विकला वाच्यस्यास्तस्यामित्यर्थः।

*उक्तरीत्या गुणवचनत्वाभावेनेति*। सञ्ज्ञासंज्ञया गुणवचनसंज्ञाया बाधेन। सर्वत इत्यस्यार्थमाह। * अक्तोऽपि *। अपिना क्त। शोणात्प्राचामितिसूत्रात्प्राचामित्यनुवृत्त्यैव सिद्धे,वोत इतिसूत्रे वाशब्दोपादानं व्यवस्थितविभाषात्वसूचनाय तदाह। * व्यवस्थितेति *। * वृत्तिरिति *। देवदत्तइत्यादिगणस्य परिगणनाद्देवत्रादिष्वस्यापाठादिति व्यवस्थितविभाषात्वञ्च युक्तमित्यरुचि। तदुक्तप्रयोगसिद्धिस्तु लिङ्गस्य लोकाश्रयत्वात्तत्रार्थस्य स्त्रीत्वपरिहा-

यद्यपि 'अप पन्था अनुवित्तः पुराण' इत्यादावन्तोदात्तदर्शनेन घृतादिपाठाद-न्तोदात्त इत्युदात्तनिवृत्तिस्वरेण ततो ङीप्ङीषोः स्वरे विशेषाभावस्तथा-प्यत्र पाठसामर्थ्यात्पक्षे ङीबिति बोध्यम् । अजननिरिति । आक्रोशे नञ्य-निरिति जनेरनिः । अजन्शब्दोऽत्र पठ्यते सामर्थ्यादुपसर्जनाधिकारबाध । दीर्घाङ्गी मात्रादिति ङीष्यन्तोदात्तम् । बह्वादिराकृतिगण इति गणरत्नकृत् ॥

पुंयोगादा ॥ हेतौ पञ्चमी । आख्यायामिति पञ्चम्यर्थे सप्तमी । आ-ख्याशब्दो बोधकपरः । आख्या चोपस्थितत्वात्पुंस एव न स्त्रियाः । स्त्रियां वर्तमानस्य स्त्र्याख्यत्वाव्यभिचारादाख्यापदवैयर्थ्यापत्तेः । पुंस्त्वेन यः प्रसिद्धः शब्द इत्यर्थः । पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्तमा-नात्पुंबोधकाच्छब्दान्ङीषित्यर्थः । योगः सम्बन्धः । पुंयोगात्किम् देवदत्ता । आख्यायां किम् । प्रसूता । तदभावे हि स्त्रियां वर्तमानं यत्प्रातिपदिकं पुं-योगहेतुकप्रवृत्तिनिमित्तकमित्यर्थोऽपि सम्भाव्येत । अस्ति हि तत्प्रवृत्तिनि-मित्ते प्रसवे पुंयोगहेतुकत्वम् उक्तप्रमाख्या तु नैवेति भावः । पुंयोगोऽत्र दा-म्पत्यरूप एवेति भाष्यस्वरसः । यथैव भर्तृपापहृतान् बन्धादीन् लभते एवं तच्छब्दमपीति भाष्योक्तेः । देवकीत्यादि तु गौरादिषु बोध्यमिति केचित् ।

---

मात्रकल्पेन । चाग्रहणन्तु सर्वमसे विकल्पार्थम् । * ङीप्ङीषोरिति । * अप हि टघुल्न्तः पुराणप्रोक्तेति निपातनात्तुडभाव । एवञ्च डित्त्वात् ङीप् प्राप्त । * सामर्थ्यादिति * । केवलस्य स्त्रियां वृत्त्यसम्भवात्तस्मादुपसर्जन एव प्रवृत्ति

पुंयोगादिति सूत्रे पञ्चमी न सम्भवतीत्यत आह । * हेतौ पञ्चमीति * । एवं सति कस्मादनेन प्रत्ययविधानमित्याकाङ्क्षापूरणायाह । * आख्यायामिती-ति * । आख्याशब्दस्य ससम्बन्धिकत्वादाह । * उपस्थितत्वादिति * । एवञ्च यादृशो वाक्यार्थः सम्पन्नस्तमाह । * पुंयोगाद्धेतोरिति * । सर्वं वाक्यमसति बाधके सावधारणमिति न्यायेनैवकारलाभ । विनापि प्रत्ययमितियचनेन सशब्दलोपे सति योगशब्दस्य संयोगपरत्वभ्रमनिरा-सायाह । * योग सम्बन्ध इति * । देवदत्तेति * । किञ्चत्सौ चेतिसूत्रनिष्पन्नो-ऽयं स्वभावत स्त्रिया वर्तते न तु पुंयोगस्तत्र निमित्तमिति भाव । * आख्याया किमिति * । एतदभावेऽपि प्रातिपदिकादित्यधिकृत सम्बध्यत एव । एवं सति निष्पन्न वाक्यार्थमाह । * तदभावे हीति * । प्राचाम्मतं कटाक्षयति । * पुंयो-गोऽत्रेति * । एतेन अन्यजनकभावनिरास । तथा सति देवकीत्यादिप्रयोगाणा-ङ्का गतिरत आह । * देवकीत्यादि त्विति * । आदिना कैकेयी शूद्रीत्यादिप्रयो-गाणा सग्रह । गोपालिकेत्यत्र गवा पालिकेति न विग्रहस्तत्राह । * गां पालय-तीति * । इदम्प्राचाम्मतमनुरुध्य वस्तुतस्तादृशविग्रहेऽपि न क्षतिरित्याह । * य

गोपालिकेति । गाः पालयतीति गोपालः स एव गोपालकस्तस्य स्त्रीत्यर्थः। ण्वुलन्तस्य तु कारकषष्ठ्या समासनिषेधाच्छेषषष्ठ्या समासे आपः सुपः परत्वादित्वन्दुर्लभम्। वस्तुतः शेषषष्ठ्या अप्यत्र कारकत्वात्सुबुत्पत्तेः पूर्वमेव तत्रापि समासः। यथाकथं चित्कारकग्रहणेऽपि कथञ्चित्कारकत्वमादाय गतिकारकोपपदानामित्यस्य प्रवृत्तेरत्रत्यभाष्यात् उपपदमतिङिति सूत्रभाष्याच्च लाभात्। यद्वा तन्निषेधस्यानित्यत्वादप्रवृत्तौ कारकषष्ठ्या सुबुत्पत्तेः पूर्वं समासेन तत्रापीत्व सुलभम्। सूर्येति। सर्त्तेः क्यप्याद्युदात्तमूर्यब्दाद्याप्यन्तोदात्तमिदम्। एतेन ङीब्निषेधेन टापैव सिद्धिरित्यपास्तम्। सूरीति।

---

स्तुत इति *। ननु गतिकारकोपपदानामित्यत्र कारकपदोपादानेन कारकसञ्ज्ञासमानाधिकरणसञ्ज्ञानिमित्तकविभक्त्यन्तस्य समास इत्येव लभ्यत इति षष्ठ्यन्तस्य समास सुबुत्पत्ते प्रागिति कथ लभ्यते अत आह। *यथाकथञ्चिदिति *। कथञ्चित्कारकत्वमिति*।शेषत्वेनापि वस्तुत कर्मण एव ग्रहण मिति भाव ।*अत्रत्यभाष्यादिति *। एव हि भाष्ये उक्तम्। गोपालिकादीना प्रतिषेध । गोपालिकादीनामप्रतिषेधो वक्तव्य । गोपालिका। पशुपालिका इति। अत्र गोपालिकादीनाम्प्रतिषेधप्रतियोगित्वासभवादाह कैयट । *सिद्ध्य इति वाक्यशेष इति*। एतेन तृजकाभ्या कर्त्तरीत्यस्य प्रवृत्त्या कर्मषष्ठ्या समासासभवाच्छेषषष्ठ्यैव समासो वाच्य तत्र यदि गतिकारकोपपदानामिति परिभाषाप्रवृत्तिर्न स्यात्तदाऽऽप सुप परत्वादित्वन्दुर्लभमिति भाष्योक्तस्येत्वघटितस्य प्रयोगस्य सिद्ध्ये शेषषष्ठीविषयेऽपि गतिकारकेतिपरिभाषाप्रवृत्ति । ननु प्रकृतसूत्रस्थभाष्यस्य गोपालशब्द साधयित्वा तत स्वार्थे केऽपि सिद्धिरित्यत आह। * उपपदेति *। तत्र हि षष्ठीसमासस्य वैकल्पिकत्वात्तदभावे चोपपदसमास इति षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेतिवार्तिककृतोक्तस्य विप्रतिषेधस्य खण्डनायोक्तम्। अत्र विप्रतिषेधविचारेण षष्ठीसमासस्यापि सुबुत्पत्ते पूर्वमेवोत्पत्तिरिति लभ्यते। अन्यथोपपदसमासस्य सुबुत्पत्ते प्राक् प्राप्ति षष्ठीसमासस्य तु तदनन्तरमिति विप्रतिषेधविचारोऽसङ्गत एव स्यादत षष्ठीसमासस्यापि सुबुत्पत्ते प्राक् प्रवृत्त्या प्राप्तिरिति स्पष्टमेव लभ्यते। षष्ठीसमासस्य सुबुत्पत्ते प्राक् प्रवृत्तिमनभ्युपगम्य समाधानान्तरमाह। * यद्वेति। * तन्निषेधस्य *। तृजकाभ्यां कर्त्तरीति निषेधस्य। * अनित्यत्वात् *। तत्प्रयोजको हेतुश्च जनिकर्त्तु प्रकृतिरितिनिर्देशेनानित्यत्वात्। * आद्युदात्तेति* । धातुस्वरेणाद्युदात्तेत्यर्थ । * एतेन *। अन्तोदात्तस्य सूर्याशब्दस्यासाधनेन। * ङीम्निषेधेन *। सूर्यात्रेतिन्यासेन । ननु सूरी स्त्रीत्वाभिव्यक्तिसम्भवादियमिति व्यर्थं
येति *। ननु पुयोगस्य

सूर्यस्य स्त्री या कुन्तीयं मानुषी न देवतेत्यर्थः ।

महत्त्वे इति । तद्योगे एवैषां स्त्रीत्वमिति भावः । यवनाल्लिप्यामिति । लिप्यर्थकात् ऽत्र ङीप् तस्येदमित्यण्बाधक इति बोध्यः । लिपिरक्षरविन्यासः । मातुलेति । मातुलाच्चि ये प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । या तु स्वयमेवेति । अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीषिति तृतीये इङश्चेति सूत्रे वार्त्तिकादिति भावः । उपेत्याधीयते यस्या इति विग्रहः । अर्येति हस्तादित्वदाह स्वामिनीति । अर्यः स्वामिवैश्ययोरित्युक्तः । आर्येति पाठस्तु कैयटाद्यसम्मतः । स्वार्थे इति । अत एव भाष्ये ऽर्याणी अर्येत्येवोक्तम् । पुंयोग एव मद्वृत्तौ तु उपाध्यायीविवद् अर्यीति पक्षे ङीपमेवोदाहरेत् । यवन्यानिति । सूत्रन्त्विन्द्रीत्यादिव्याख्यानार्थमिति भावः ॥

क्रीतात् ॥ करणादिति वक्तव्ये पूर्वग्रहणादनुदृष्यमातिपदिकरूपान्यपदार्थे ऽवयववाचिपूर्वशब्देन बहुव्रीहिः, तेन वस्त्रेण क्रीतेति वाक्ये न । अत इति चानुवर्त्तते । करणे किम् । सुक्रीता । धनक्रीतेति । कर्तृकरणे इत्यत्र बहुलग्रहणेन गतिकारकोपपदानामित्यस्यानित्यत्वादत्र सुबुत्पत्त्यन-

---

प पूर्वं व्यवस्थापितत्वात्तस्य निषादितायामप्रसिद्धेः कथमियं सूर्यस्य स्त्री । विवाहात्प्रागसूर्यसम्बन्धेन कर्णस्योत्पत्तिरिति प्रसिद्धमिति चेन्न । सूर्यस्य स्त्री सूर्या । देवतायां किम् । सूर्या । एतद्भाष्ये उक्तन्तत्प्रामाण्येन देवतावाचकस्य पुंशब्दस्य संज्ञेयकर्तृस्वीकारकर्मत्वसम्बन्धप्रयोज्या यस्यां प्रवृत्तिः साऽपि तत्स्त्रीत्वेन गृह्यते इति स्वीकारात् । एवमेवेन्द्राणीत्यादावनुपपत्तिः । न च जन्यजनकभावादिसाधारणं पुंयोग श्रुतो न गृह्यत इति वाच्यम् । पुंयोगोपपादनावसरे पवित्र इन्द्राणमनुयतीति किञ्चित्पापमवृष्टा यथयन्धनक्लेशोऽलभते एवम्भूतशब्दमपीतिभाष्यस्वारस्यात् ।

* तद्योग इति * । महत्त्वादियोग इत्यर्थः । अत एवैषामित्यस्योपपत्तिः । हिमारण्ययोर्महत्त्व इत्यादीनि वार्त्तिकानि । एतेषु वार्त्तिकेषूपपात्तो योऽयं उपाधिस्तद्योग एवैषां स्त्रियां प्रवृत्तिः । यदा तु न तत्तदुपाधिविवक्षा तदा स्त्रीत्वमेव नेति तत्तद्योग एवैभ्यो ङीप् अन्यत्र टाप् इति भ्रमो न कार्यः । अत एवोक्तन्तद्योग एवैषामिति * विभाषेयमिति * । एतेन मातुलोपाध्याययोरिति वचनस्य पुंयोग एव प्रवृत्तिस्तत्र ङीप् सिद्धत्वादानुगागममात्रं विकल्प्यते । ननु ब्रह्माणीतिवदिन्द्रमानयतीति व्युत्पत्त्या इन्द्राणीत्यस्यापि सिद्धिरिति इन्द्रवरुणेति सूत्रं व्यर्थमत आह । * सूत्रं त्विति * ।

* तेन * । तादृशबहुव्रीहिसमासाश्रयणेन । * करणेति किमिति * । क्रीतात्करणपूर्वादित्येवास्त्विति प्रश्नः । स्वक्रीतेति । एवं सति कर्तृपूर्वादपि स्यादिति

न्तरमेव समास इति भावः। इदमुपपदमतिङिति सूत्रे कैयटे स्पष्टम्। एवञ्च अयमजादिष्वित्यन्ये। एवञ्च गतीत्यादेरनित्यत्वे न मानमिति तदाशयः। अत एवैतत्कर्तृकरणे इति सूत्रे बहुलग्रहणफलत्वेन भाष्ये नोक्तम्। अम्बाम्बेति सूत्रे गवादिग्रहणन्तु नियमार्थम्, तेन हृदिस्थ इत्यादौ षत्वं नेति दिक्।

अभ्रलिह्मीति। कृद्ग्रहणे गतिकारकपूर्वस्यापीति विशिष्टस्य क्तान्तत्वम्। अल्पाख्यायामिति समुदायोपाधिः। अल्पत्वं करणगतं क्रियागतं वा।

क्तान्तादिति। क्तान्तान्तादित्यर्थः। प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात्। ऊरुभिन्नीति। जातिकालसुखादिभ्यः परा निष्ठेति

---

भाव। कैयट इत्यनेन सूचितामरुचिम्प्रकटयन्स्वसिद्धान्तमाह। * अयमिति *। धनक्रीतेत्यादिशब्द। * अत एव *। तस्या परिभाषाया अनित्यत्वस्यानभिमतत्वादेव। ननु तस्या परिभाषाया अनित्यत्वाभावे गोष्ठादिष्वपि स्थाधातो के क्तान्तस्य सुबुत्पत्ते प्राक् समासे पदादित्वाभावात्सात्पदाद्योरिति निषेधाप्रसेरादेशप्रत्यययोरित्यनेनैव षत्वे सिद्धे अम्बाम्बेतिसूत्रे गवादिग्रहणं व्यर्थमत आह। * अम्बाम्बेतीति *। उत्तरपदभूतस्य स्थ सकारस्य षत्वञ्चेदेभ्य एवेति तेन हृदिस्था शोभते मालेत्यत्र नेति भाव। एतेन गवादिग्रहणमेव गतीत्यादेरनित्यत्वे मानमित्यपास्तम्। नियमार्थत्वेन चारितार्थ्यात्। * पदादाविरिति *। पक्षे तस्य तत्त्वासम्भवाच्च। वस्तुतस्तु न पदान्तसूत्रस्थपदान्तपदस्य पदेऽन्त पदे परे योऽन्तस्तस्य कार्ये कर्तव्य एव निषेध इति गोचेत्यादि सिद्ध्यर्थमनित्यत्वम्परिभाषाया स्वीकार्यमन्यथाऽच इतिसूत्रनिष्पन्नलोपस्य स्थानिवद्भावाद्धवडादेशस्याप्यापत्तिरित्याहु। पदशब्दस्य पदत्वयोग्योपलक्षणत्वमिति त्वन्येषामाशय'। * विशिष्टस्य क्तान्तत्वमिति *। यद्यपि वक्ष्यमाणरीत्या क्तान्तान्तादित्यर्थे कृद्ग्रहणपरिभाषा विनापि निर्वाहस्तथापि तदन्तविधिद्वयाभावेऽपि निर्वाह प्रकृतेऽस्तीति भाव।

* समुदायोपाधिरिति *। स्त्रीप्रत्ययान्तसमुदायविशेषणमित्यर्थ। * करणगतम् *। ईषदभ्रेण लिप्तेत्यर्थ। करणस्याल्पत्वे तल्लेपनस्याल्पत्वं सुकरमेवेत्याशयेनाह। * क्रियागतमिति *। अभ्रेणेषल्लिप्तेत्यर्थ प्रकृत इति भाव। स्त्रीप्रत्ययसमाभिव्याहारस्तात्पर्यग्राहक'। प्रकारान्तरमाह। * क्तान्तादितीति *। एव सति प्रवृत्ते कृद्ग्रहणपरिभाषानाश्रयणेऽपि न क्षति। भिन्नशब्दस्य विशेषणवाचकत्वात्पूर्वनिपानशङ्कायामाह' * । पाणिगृहीतीत्यस्य पाणिर्गृहीतो यस्या इत्यर्थ प्राश

सूर्यस्य स्त्री या कुन्तीयं मानुषी न देवतेत्यर्थः ।

महत्त्वे इति । तद्योगे एवैषा स्त्रीत्वमिति भावः । यवनाल्लिप्यामिति । लिप्यर्थको ऽत्र ङीप् तस्येदमित्यण्बाधक इति बहवः। लिपिरक्षरविन्यासः । मातुलेति । मातुलान्नित्ये प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । या तु स्वयमेवेति । अपादाने स्त्रियां घञ उपसंख्यानं तदन्ताच्च वा ङीषिति तृतीये इङश्चेति सूत्रे वार्त्तिकादिति भावः। उपेत्याधीयते यस्या इति विग्रहः। अर्येति हृस्वादिस्तदाह स्वामिनीति । अर्यः स्वामिवैश्ययोरित्युक्तः । आर्येति पाठस्तु कैयटाद्यसम्मतः । स्वार्थे इति । अत एव भाष्ये ऽर्याणी अर्येत्येवोक्तम् । पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवद् अर्यीति पक्षे ङीषमेवोदाहरेत् । कर्मण्यणिति । सूत्रान्त्विन्द्रीत्यादिव्यावृत्त्यर्थमिति भावः ॥

क्रीतात् ॥ करणादिति वक्तव्ये पूर्वग्रहणादनुवृत्तप्रातिपदिकरूपान्यपदार्थे ऽवयववाचिपूर्वशब्देन बहुव्रीहिः, तेन वस्त्रेण क्रीतेति वाक्ये न । अत इति चानुवर्त्तते । करणे किम् । सुक्रीता । धनक्रीतेति । कर्त्तृकरणे इत्यत्र बहुलग्रहणेन गतिकारकोपपदानामित्यस्यानित्यत्वादत्र सुबुत्पत्त्यन-

---

व पूर्वं व्यवस्थापितत्वात्तस्य विवाहितायामप्रसिद्धेः कथमिव सूर्यस्य स्त्री । विवाहात्प्राक्सूर्यसम्बन्धेन कर्णस्योत्पत्तिरिति प्रसिद्धमिति चेन्न । सूर्यस्य स्त्री सूर्यी । देवताया किम् । सूर्या । एतद्भाष्ये उक्तन्तत्प्रामाण्येन देवतावाचकस्य पुंशब्दस्य तद्देयकर्तृकस्वीकारकर्मत्वसम्बन्धप्रयोज्या यस्याम्प्रवृत्तिः साऽपि तत्स्त्रीत्वेन गृह्यते इति स्वीकारात् । एवमेवेन्द्राणीत्यादीनामुपपत्तिः । न च जन्यजनकभावादिसाधारणः पुंयोगः कुतो न गृह्यत इति वाच्यम् । पुंयोगोपपादनावसरे यथैव ह्रासावद्युवती किञ्चित्पापम्मर्तृश्ता न्वध रन्धनक्रोशात्स्रभते एवम्प्रष्ठशब्दमपीतिभाष्यस्वारस्यात् ।

* तद्योग इति * । महत्त्वादियोग इत्यर्थः । अत एवैषामित्यस्योपपत्तिः । हिमारण्ययोर्महत्त्वे इत्यादीनि वार्त्तिकानि । एतेषु वार्त्तिकेषूपपात्तो योय उपाधिस्तद्योग एवैषा त्रिया प्रवृत्तिः । यदा तु न तत्तदुपाधिविवक्षा तदा स्त्रीत्वमेव नेति तत्तद्योग एवैभ्यो ङीष् अन्यत्र टाप् इति भ्रमो न कार्यः । अत एवोक्तन्तद्योग एवैषामिति * विभाषेयमिति * । एतेन मातुलोपाध्याययोरिति वचनस्य पुंयोग एव प्रवृत्तिस्तत्र ङीष् सिद्धत्वादानुगागममात्र विकल्प्यते । ननु ब्रह्माणीतियदिन्द्रमानयतीति व्युत्पत्त्या इन्द्राणीत्यस्यापि सिद्धिरिति इन्द्रवरुणेति सूत्रव्यर्थमत आह । * सूत्रान्त्विति * । ।

* तेन * । तादृशबहुव्रीहिसमासाश्रयणेन । * करणेति किमिति * । क्रीतात्सपूर्वादित्येवास्त्विति प्रश्नः । स्वक्रीतेति । एव सति कर्तृपूर्वादपि स्यादिति

न्तरमेव समास इति भावः। इदमुपपदमतिङिति सूत्रे कैयटे स्पष्टम्। एवञ्च अयमजादिष्वित्यन्ये। एवञ्च गतीत्यादेरनित्यत्वे न मानमिति तदाशयः। अत एवैतत्कर्तृकरणे इति सूत्रे बहुलग्रहणफलत्वेन भाष्ये नोक्तम्। अम्बाम्बेति सूत्रे गवादिग्रहणन्तु नियमार्थम्, तेन हृदिस्थ इत्यादौ षत्व नेति दिक्।

अभ्रलिप्तीति। कृद्ग्रहणे गतिकारकपूर्वस्यापीति विशिष्टस्य क्तान्तत्वम्। अल्पाख्यायामिति समुदायोपाधिः। अल्पत्व करणगत क्रियागत वा।

क्तान्तादिति। क्तान्तान्तादित्यर्थः। प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात्। ऊरुभिन्नीति। जातिकालसुखादिभ्यः परा निष्ठेति

---

भाव। कैयट इत्यनेन सूचितामरुचिम्प्रकटयन्स्वसिद्धान्तमाह। * अयमिति *। धनक्रीतेत्यादिशब्द। * अत एव *। तस्या परिभाषाया अनित्यत्वस्यानभिमतत्वादेव। ननु तस्या परिभाषाया अनित्यत्वाभावे गोष्ठादिष्वपि स्थाधातो के कान्तस्य सुबुत्पत्ते प्राक् समासे पदादित्वाभावात्सात्पदाद्योरिति निषेधाप्रसेरादेशप्रत्यययोरित्यनेनैव षत्वे सिद्धे अम्बाम्बेतिसूत्रे गवादिग्रहण व्यर्थमत आह। * अम्बाम्बेतीति *। उत्तरपदभूतस्य स्थ सकारस्य षत्वञ्चेदेभ्य एवेति तेन हृदिस्था शोभते मालेत्यत्र नेति भाव। एतेन गवादिग्रहणमेव गतीत्यादेरनित्यत्वे मानमित्यपास्तम्। नियमार्थत्वेन चारितार्थ्यात्। * पदादादिरिति *। पक्षे तस्य तत्वासम्भवाच्च। वस्तुतस्तु न पदान्तसूत्रस्थपदान्तपदस्य पदेऽन्त पदे परे योऽन्तस्तस्य कार्ये कर्तव्य एव निषेध इति गोचेत्यादि सिद्धयर्थमनित्यत्वम्परिभाषाया स्वीकार्यमन्यथाऽच इतिसूत्रनिष्पन्नलोपस्य स्थानिवद्भावा द्यवडादेशस्याप्यापत्तिरित्याहु। पदशब्दस्य पदत्वयोग्योपलक्षणत्वमिति त्वन्येषामाशय। *विशिष्टस्य क्तान्तत्वमिति*। यद्यपि वक्ष्यमाणरीत्या क्तान्तान्तादित्यर्थे कृद्ग्रहणपरिभाषा विनापि निर्वाहस्तथापि तदन्तविधिद्वयाभावेऽपि निर्वाह प्रवृत्तेऽस्तीति भाव।

* समुदायोपाधिरिति *। स्त्रीप्रत्ययान्तसमुदायविशेषणमित्यर्थ। * करणगतम् *। ईषदभ्रेण लिप्तेत्यर्थ। करणस्याल्पत्वे तल्लेपस्याल्पत्व सुकरमेवेत्याशयेनाह। * क्रियागतमिति *। अभ्रेणेषल्लिप्तेत्यर्थ प्रकृत इति भाव। स्त्रीप्रत्ययसमभिव्याहारस्तात्पर्यग्राहक। प्रकारान्तरमाह। * क्तान्तान्तादितीति *। एव सति प्रवृत्ते कृद्ग्रहणपरिभाषानाश्रयणेऽपि न क्षति। भिन्नशब्दस्य विशेषणवाचकत्वात्पूर्वनिपात शङ्कायामाह। * जातिकालेति *। पाणिगृहीतीत्यस्य पाणिर्गृहीतो यस्या इत्यर्थ आश

भिक्षशब्दस्य परनिपातः। पाणिगृहीतीति। अग्निसाक्षिकतया गृहीतपाणिकेत्यर्थः। भाष्ये तु पाणिगृहीत्यादीनां विशेष इत्युक्तम् ॥

अस्वाङ्गपूर्वे ॥ न स्वाङ्गमस्वाङ्गं पूर्वञ्च तत्पदञ्च पूर्वपदं पुनः कर्मधारयः। अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तन्तदन्ताद्बहुव्रीहेरित्यर्थः। उत्तरसूत्रे भाष्ये कल्याणपाणिपादेत्यादौ तत्प्रवृत्तिवारणाय वर्ग्रतदनुवर्त्य कर्मधारयस्याश्रयणेनात्रापि तथौचित्यात्। तत्र यदुपसर्जनं पाणिपादमिति समुदायो न स स्वाङ्गं, स्वाङ्गसमुदायश्च न स्वाङ्गशब्देन गृह्यते, यच्च स्वाङ्गं पादेति न तदस्वाङ्गरूपपूर्वपदात्परमित्युक्तम्। एवञ्च करभुसीत्याद्यसाध्वेव जातिपूर्वादितीहापि संबध्यते, अन्यथा शङ्कुनखादीनामस्वाङ्गत्वेन विकल्पस्य तत्पूर्वके दुर्वारत्वात् तदाह नित्ये प्राप्ते इति। वस्त्रच्छन्ने ति। बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः शेषनिघातेनानुदात्तान्तोऽयम्। पुत्रादिनीत्यादौ सुप्यजाताविति निर्देशेनाकृतिग्रहणत्वाद्यभावेन च पुत्रशब्दस्य जातिवचनत्वाभावे ऽतिपुत्रहतीत्यादौ गौरादिङीषिति बोध्यम्। अस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणं स्पष्टार्थम्। किञ्च, तदभावे ऽस्वाङ्गादिति प्राधान्याद्बहुव्रीहिविशेषणं स्यादिति ॥

स्वाङ्गाच्चो ॥ तदन्तादित्युपसर्जनग्रहणलब्धे बहुव्रीहेरित्यनुवर्त्तमाने उप-

---

स्यश्च ग्रहणे विवक्षितन्तदभिप्रायेणाह। * अग्निसाक्षिकतयेति *। यद्यपि भाष्ये भार्यायामिति नाभिहितन्तथापि तत्र विशेष इत्यभिधानादेवङ्कथनमित्यभिप्रायेणाह * भाष्येत्विति *। न चान्य एव विशेषः कल्प्यतामिति वाच्यम्। पाणिगृहीती भार्या। यस्या हि यथाकथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवतीति भाष्यास्थोक्तमित्यभिप्रायात्।

अस्वाङ्गपूर्वपदादित्यत्र कर्मधारयसमासाश्रयणे बीजमाह। * उत्तरसूत्र इति *। न चास्वाङ्गपूर्वपदादित्यत्र कर्मधारयाश्रयणेऽस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणमस्मिन्सूत्रे सफलमिति वाच्यम्। उत्तरसूत्रार्थमवश्यङ्कर्त्तव्यमित्याशयात्। * एवञ्च *। उत्तरसूत्रे तादृशार्थाश्रयणे च। * तदाह *। उदाशयेनाह। जातिपूर्वादित्यस्य प्रकृतसूत्रे ऽपि सम्बन्ध एव समाननिमित्तकत्वलाभेन नित्यशास्त्रबाधकत्वमिति भावः। पुत्रहतीत्यादावनेन सूत्रेण ङीप् भवतीत्यादिमतमयुक्तमिति ध्वनयन्नाह। * पुत्रादिनीत्यादाविति *। * स्पष्टार्थमिति *। प्रकृतसूत्रे विवक्षितस्यार्थस्य स्पष्टप्रत्ययार्थम्। फलान्तरमप्यस्तीत्याह। * किञ्चेति *। इदमुपलक्षणम्पूर्वोक्तमपि फलम्बोध्यम्। * बहुव्रीहिविशेषणमिति *। एवं सति साध्वी कल्याणपादेत्याद्यातिप्रसङ्गः स्यादिति शेषः।

शिखेति। यदि सूत्रे उपसर्जनपदं स्यात्तदा शिखेत्यत्र टाप बाधित्वा ङीप्

सर्जनग्रहणफलमाह, अतिकेशीति । एकविभक्तीति केशानामुपसर्जनत्वमप्रधानत्वञ्च । शिखेति । इदमेव प्रत्युदाहरणं शोभनेत्यादि सुशिखान्तं प्रक्षिप्तम् । विशिष्टे ऽन्तत्वाभावेनाप्राप्तेः । यद्यपि भाष्ये ऽशिखेति प्रत्युदाहृतं तस्याप्येकदेश एव तात्पर्यम् । नञ्पूर्वे सहनञिति निषेधेन प्राप्त्यभावात् । एतेन क्रोडादिषु शिखाशब्दपाठ इत्यपास्तम् । ननु स्वमङ्ग स्वाङ्गञ्चेत्सुमुखा शालेत्यत्रापि स्यात्, मुखस्यापि शालाङ्गत्वात्सुकेशी रथ्येत्यत्र च न स्यात् । केशानान्तदङ्गत्वाभावादत आह, अद्रवमिति । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः ।

---

स्यादिति भाव । अत्र भाष्यविरोधशङ्कां वारयति । * यद्यपीति * । * एकदेश एव * । शिखेत्यत्रैव । * एतेन * । अनेन निषेधेन तस्य सिद्धौ तत्र पाठे फलाभावेन । केचित्तु शिखेति प्रत्युदाहरणमितिरसङ्गतङ्कल्याणपाणिपादेत्यत्र दोषवारणायास्वाङ्गपूर्वपदादित्यस्यात्र सूत्रेऽनुवृत्त्याऽस्वाङ्गपूर्वपदात्परत्वस्य प्रवृत्तेऽभावेन ङीपोऽप्राप्तेरित्याहु । तन्न । एतत्सूत्रव्याख्यायामुपक्रमेऽशिखेत्युक्तं न त्विदमेव प्रत्युदाहरणमित्यत्र भाष्यकृतो निर्भर । अत्रत्यमूलग्रन्थस्यापि तदनुसारित्वात् । तथाहि अथोपसर्जनग्रहणङ्किमर्थम् । इह मा भूत् । अशिखा । उपसर्जनग्रहणमनर्थकम् बहुव्रीह्यधिकारात् । उपसर्जनग्रहणमनर्थकम् । किङ्कारणम् । बहुव्रीह्यधिकारात् । बहुव्रीहेरिति वर्त्तते । बह्वजर्थन्तर्ह्युपसर्जनग्रहणङ्कर्त्तव्यम् । बह्वचो नेति प्रतिषेध वक्ष्यति तद्बह्वज्ग्रहणमुपसर्जनविशेषणं यथा विज्ञायेत । बह्वच उपसर्जनान्नेति । अथाक्रियमाणे बह्वज्ग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात् बहुव्रीहेरिति वर्त्तते । बहुव्रीहिविशेषणं विज्ञायेत । अस्ति चेदानीं कश्चिद्बह्वज्बहुव्रीहिर्यदर्थो विधि स्यादस्तीत्याह । स्वङ्गा स्वङ्गी इति । अङ्गो वृश्चिकाय यथविशेष । बह्वजर्थमिति चेत् स्वाङ्गग्रहणात्सिद्धम् । स्वाङ्गग्रहणं क्रियते तद्बह्वज्ग्रहणेन विशेषयिष्याम । स्वाङ्गाद्बह्वचो नेति । स्वाङ्गसमुदायप्रतिषेधार्थन्तु स्वाङ्गसमुदायप्रतिषेधार्थन्तर्ह्युपसर्जनग्रहणङ्कर्त्तव्यम् । स्वाङ्गाद्यथा स्यात् स्वाङ्गसमुदायान्मा भूत् । कल्याणपाणिपादेत्याद्युक्ता एतदपि नास्ति प्रयोजनमस्वाङ्गपूर्वपदादिति वर्त्तते तेन स्वाङ्गं विशेषयिष्याम । अस्वाङ्गपूर्वपदात्परं यत् स्वाङ्गमिति यच्चात्रास्वाङ्गपूर्वपदात्परं स्वाङ्गन्न तदन्तो बहुव्रीहि यदन्तश्च बहुव्रीहिर्नासावस्वाङ्गपूर्वपदात्परं स्वाङ्गमिति । इदन्तर्हि प्रयोजनं बहुव्रीहेरिति वर्त्तमाने उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात् निष्केशी यूका । अतिकेशी मालेतीत्युक्तम् । एतेन भाष्यीयप्रघट्टकेनोपसर्जनग्रहणस्य बहुव्रीहेरित्यस्य निवृत्तिरेव मुख्यप्रयोजनम्न तु पूर्वोक्तमुपक्रमस्थमशिखेति प्रदर्शितम्भवति । सूत्रस्थस्वाङ्गशब्दस्य वार्त्तिककारीयपरिभाषाविषयत्वञ्च तु केवलयौगिकत्वमिति प्रदर्शयितुमाशङ्कते । * न[illegible] स्वमङ्गमिति * । स्वीयमङ्गमित्यर्थ । स्व-

रूप्येति । इदानीं प्राणिस्थत्वाभावात्पूर्वलक्षणेनासिद्धिः । एवञ्चेदं पूर्वलक्षणे प्राणिस्थत्वमुपलक्षणमित्यत्र तात्पर्यग्राहकमिति भावः । प्रतिमादिगतस्तनस्य प्राणिनि कदाप्यदृष्टत्वादाह तेन चेदिति । अप्राणिनोऽपि स्वाङ्गं यदि तेन तल्लाती येन वस्तुना प्राणी यथा सम्बद्धस्तथाऽप्राणी सम्बद्धश्चेदित्यर्थः । अत एव तस्य चेत्तथा युतमित्यस्याप्राणिनोऽपि स्वाङ्गमिति शेषो भाष्ये दर्शितः ।

पुरस्तादिति । स ह्यनन्तरस्यैव बाधकः । मध्ये इति । स हि पूर्वस्यैव बाधकः । प्रामाणिका इति । एवञ्च सुगात्रीत्यादयोऽपप्रयोगा एवेति भावः ।

उरः क्रोडेति । दायन्तोऽप स्वभावतो विशेषविषय । शूर्पणखेति ।

---

शब्दस्यात्मीयपरत्वात् । द्रवतीति द्रवम् । न द्रवमद्रवम् । मूर्तिं काठिन्यम् अथ वा असर्वगतद्रव्यपरिमाणम् । अविभु परिमाणमिति यावत् । एतेनाकाशादेर्व्यावृत्तिः । फलितार्थमाह । स्पर्शवदिति । तत् यस्यास्ति तत्स्वाङ्गम् । स्वेदस्य स्वाङ्गत्वप्राप्तिर्द्वितीयार्थे एवेति द्वितीयार्थ एव तात्पर्यम् । ज्ञानस्याङ्गत्वाभावातिव्याप्तिवारणाय मूर्तिमदिति मुमुक्षा शालेत्यत्रातिव्याप्तिवारणाय प्राणिस्थमिति । सुशोफेत्यत्रातिव्याप्तिवारणायाविकारजमिति । विकारो वातादिनैव स्यन्तस्माद्यस्य जातत्वात् । सुकेशी दीर्घकेशी रथ्येत्यत्र स्वाङ्गत्वसिद्धये आह । * अतत्स्थं तत्र दृष्टश्चेति * । सुस्तनी सुस्तना वा प्रतिमेत्यस्य सिद्धये तेन चेत्तथा युतमिति । भाष्ये तु तस्य चेत्तथा.त वाऽऽदृति पाठो दृश्यते तस्याप्ययमेवार्थः । तत्र करणस्य दोषत्वविवक्षायलक्षणा अत्यन्तमदृष्टश्चेति लक्षणान्तरमिति प्रतीयते तत्र युक्त[illegible]त्वादित्याशयेनाह । [illegible]दृशाहस्य सङ्गत्व

पूर्वपदात्संज्ञायामिति णत्वम् । केवलयौगिकत्वे तु शूर्पनखीत्येव । न ङीबि- ति । अस्वरितत्वादिति भावः ।

इतिशब्द इति । एवञ्च भाषायामिति व्यर्थं छन्दसीत्यस्य दिक्पूर्वपदा- दित्यत्रासंबन्धेनास्वरितत्वादसवन्यासिद्धेः । परे तु दिगिति सूत्रे वाह इत्य- त्र च छन्दसीति वर्तते लोके त्वन्तोदात्तमेव । प्राङ्मुखीति । एवञ्च तन्नि- वृत्तिबोधनाय भाषाग्रहणम्, इतिश्चार्थे, तेन छन्दस्यपि । अत एव ङेरामिति सूत्रे कैयटे सख्याशिश्वी च भाषायामिति पाठो दृश्यते इत्याहुः । क्वचिदिति। सर्वविधीनां छन्दसि वैकल्पिकत्वेन सखा सप्तपदी भवेति सिद्धम् । न विद्यते शिशुरस्या इत्यशिश्वी । क्वचिदस्याद्युदात्तत्वन्तु छान्दसत्वात् ।

जातिशब्देन अर्थकार्यासम्भवात्तद्वाचकग्रहणमित्याह । जातिवाचीति । अनन्यभावे विषयशब्द इत्याह । न च स्त्रियां नियतमिति । भिन्नेष्वभिन्ना- भिधानप्रत्ययनिमित्तं जाति, र्नित्यमेकमनेकानुगतं सामान्यमित्यस्य च शु- क्लादिगुणस्यैकत्वनित्यत्वपक्षे तत्रातिव्याप्तिः, जननेन प्राप्यते सा जातिरिति

---

मुखशब्दस्य मुख्यमिव मुख्यमिति प्रधानत्वात्प्रवृत्तिः । नखमुखात्संज्ञायामित्यत्र संज्ञापदेन पौरुषेयस्य ईश्वरीयसङ्केतातिरिक्तसङ्केतस्य ग्रहणम् । मातृषु च पे श्वरसङ्केत एवेति नानुपपत्तिः । * अस्वरितत्वादिति * । दिक्पूर्वपदादितिसूत्र घटकङीप्पदस्यास्वरितत्वादित्यर्थः । इदञ्च व्याख्यानं वृत्तिकृद्रीत्या वस्तुतस्तु सख्याशिश्वीति सूत्रे भाषायामित्यस्योपादानाच्छन्दसीति स्वरितत्वाद्दिगितिसूत्रे वाह इति सूत्रे चानुवर्तत एव ।

एतञ्चाद्युदात्तच्छान्दसमेवेत्याशयेनाह । * परे त्विति * । * अन्तोदात्त मेवेति * । ङीपन्तत्वादिति शेषः । * एवञ्चेति * । तयोः सूत्रयोस्तदनुवृत्तौ च * तन्निवृत्तिबोधनाय * । छन्दसीत्यस्य निवृत्तिबोधनाय । * अत एव * । इति- शब्दस्य चार्थत्वादेव । * क्वचिदस्याद्युदात्तत्वमिति * । आभेनवो धुनय ताम- शिश्वीरित्यत्रेत्यर्थः ।

* जातिशब्देनेति * । करणे तृतीया । * अथ * । जातिस्वरूपे । स्वरूप ग्रहणन्तु न भविष्यति । स्त्रीविषयत्वात् । लोके जननेन प्राप्यते सा जातिरिति- रीत्या जातिशब्दस्य शुक्लादिगुणसाधारण्येन प्रवृत्तिदर्शनात्तस्यैव विवक्षाया गुणेऽतिव्याप्तिः । यदि तन्त्रान्तरप्रसिद्धे भिन्नेष्वित्यादिनित्यमेकमित्यादिलक्षणे वा आश्रीयेते तदापि शुक्लादिगुणानामेकत्ववादिमते तेष्वतिव्याप्तिरिति भाष्यस- म्मत लक्षणमेव सिद्धान्तिसमत मुक्तमित्याशयेनाह । * भिन्न इत्यादि * । अभिन्नयोः समानाकारयोः अभिधानप्रत्यययोर्ज्ञानव्यवहारयोर्निमित्तमित्यर्थः । अन्यातिम्

च युवत्यादावव्याप्तेत आह । आकृतीति । ग्रहणमिति करणे ल्युट् सामान्ये नपुंसकम् । आकृतिरवयवसन्निवेशः आकृतिर्ग्रहणं यस्या इति विग्रहस्तदाह अनुगतेति । ईदृशाकारो गौरित्याकृत्युपदेशादिव्यङ्ग्य इत्यर्थः । न च बालाद्यवस्थाभेदभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन तत्रातिव्याप्तमिदमिति वाच्यम् । समानकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येत्यर्थात् । अवस्थाभेदेऽपि तद्भेदाप्रतीतेश्च स एवायमिति प्रतीतेश्च तज्जातीयोऽयमित्यप्रतीतेश्च । अत एवेन्द्रत्वादिकं न जातिः । पञ्चेन्द्रोपाख्यानादिभिरनेकेषां समकालिकत्वेऽपि सर्वेषां संस्थानस्यैकत्वे मानाभावात् । दुर्गाऽपर्णेत्यादौ स्त्रीविषयत्वादपि न ङीप् । तटीति । अनुगतसंस्थानव्यङ्ग्यमेतत्, जलसमीपदेशविशेषो हि तटम् । नन्वेवं वृषलत्वादीनां जातित्वं न स्यात् । अवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन तस्या आकृतिग्रहणत्वाभावात्किं तु साक्षादुपदेशगम्या सेत्यत आह लिङ्गानामिति । इयमपि जातिरित्यर्थः । लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि लिङ्गानि न भजति इति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि भाष्यप्रामाण्यान्नञो णिवं समासश्च । आख्यातमाख्यानमुपदेशः । कथनात् । उपदेशात् । एकत्रेन्द्र इत्युपदिष्टे अन्यत्र तद्ग्रहे मानाभावान्नेन्द्रत्वादि तथा । ब्राह्मणत्वन्तु एकत्रोपदिष्टे तत्पित्रादिषु सुग्रहम् । वृषलत्वं तदपत्यतत्सहोदरादौ सुग्रहम् । अत्राकृतिग्रहणेति । नित्यानित्यसाधारणमिति

---

व्याह । *युवत्यादाविति* । *उपदेशादिव्यङ्ग्येत्यर्थ इति* । तादृशोपदेशप्रयोज्याऽयङ्गौरिति या प्रतीतिस्तद्विषय इत्यर्थः । यद्यपि शास्त्रे जातिराकृतिपदेनोच्यते तथापीहाकृतिपदमवयवसंस्थानपरत्वेन सामर्थ्याद्व्याख्यातम् । * तत्रातिव्याप्तमिति * । तस्य सत्तारूपतया नेष्टापत्तिः कर्तुं शक्या । *तद्भेदेति* । तदाश्रयदेहभेदेत्यर्थः । यत्राश्रयाणामभेदप्रतीतिस्तत्रैव जातिरस्वीकारात् । प्रत्युताभेदप्रत्यय एवेत्याह । * स एवेति * । * अत एव * । अनुगतसंस्थानव्यङ्ग्यत्वनिवेशादेव । * स्त्रीविषयत्वादपीति * । अपिना कल्पभेदेन दुर्गाशरीराणामभेदेऽपि तेषां समानकालिकत्वाभावः सूचितः । तटत्वस्य रूपजातौ लक्षणं ग्राहयति । * अनुगतेति * । नन्विदं लक्षणं वृषलत्वादिजातावव्याप्तमतो लक्षणान्तरमाह । नेत्यादिना । सापेक्षस्थलेऽपि वृत्तिप्रवृत्तौ गमकत्वम्प्रयोजकन्तच्च प्रवृत्तेऽस्तीत्याह । * भाष्यप्रामाण्यादिति * । अत्रेदम्बोध्यम् । न केवलं द्वितीयलक्षणमेवाऽभिप्रेतम् । किन्तु प्रथममपि । * तेन तटीत्यस्य सिद्धिरिति * । * उपदेश इति * । ब्राह्मणाद्ब्राह्मण्यामुत्पन्नोऽयमित्यादिरूपः । * तत्पित्रादिष्विति * । ब्राह्मणपित्रादिर्ब्राह्मण एव अत्र तदपत्यादिष्विति नोक्तम् । क्षत्रियादिषूत्पन्नस्यान्यजातीयत्वस्यापि सम्भवात् । अथ भाष्ये आकृतिग्रहणेत्युक्त्वा अपर आहेत्यादिना लक्षणान्तरम्प्रणीतमिति तयोर्यद्वैलक्षण्यं तदाह । * अत्राकृतीति * ।

युवत्वादिकमपि जातिरेतन्मते। अपर आहेत्यादिना यावद्द्रव्यभावित्वमित्य-व्याप्तं लक्षणान्तरं भाष्ये दर्शितम्। एवञ्च भिन्नरूपिकर्तृकलक्षणद्वयप्रामाण्येन कुमारादिशब्दे जातिकार्यविकल्पः। अत एव युवजानिरित्यत्र पुंवत्त्वं युवतितरेत्यत्र तदभावश्च भाष्ये उदाहृतः। नन्वेताभ्यामप्यौपगवी कठीत्यादेरसङ्ग्रहः, अनुगतसंस्थानव्यङ्ग्यत्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह। गोत्रञ्चेति। शास्त्रीयमत्र गोत्रमत एव गोत्राद्यूनि प्रत्यया भवन्ति, स्त्रियां लुगिति

---

* नित्यानित्येति *। नित्यं ब्राह्मणत्वादि। अनित्यं युवत्वादि। इत्यादिनेति। एवं हि तत्रोक्तम्। अपर आह।

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥

कः पुनरेतयोर्जातिलक्षणयोर्विशेषः। यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्यम्। यथोत्तरं तथा कुमारभार्य इति भवितव्यमिति। अत्र कैयटः। द्रव्यस्य प्रादुर्भावविनाशाभ्यां या आविर्भावतिरोभावौ प्राप्नोति सा जातिः। जातेर्नित्यत्वाच्च साक्षात्तयोर्जातौ सम्भव इत्याशयेन द्रव्यस्येत्याद्युक्तम्। नन्वियं यदाश्रयस्योत्पत्तिविनाशौ सम्भवतस्तत्र यद्यपि सम्भवति तथाप्यात्मत्वजातौ न सम्भवतीति चेन्न। प्रादुर्भावेत्यादिना यावद्द्रव्यभावित्वस्योपलक्षणात्। यावद्द्रव्यभावित्वञ्च बोध्यम्। युगपद्गुणैरिति। गुणैः सह युगपद्द्रव्येण सम्बध्यते। यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिरहितस्यापीत्यर्थः। देवदत्तेत्यादिसंज्ञानिरासायाह। * बह्वर्थामिति *। * एतन्मते युवत्वादीनां न जातित्वमयावद्द्रव्यभावित्वात्। * एतन्मते इति *। प्रथममते इत्यर्थः। न च वृद्धस्यवित्पादिशब्दात्प्रथमरीत्या जातित्वाज्जातिलक्षणो ङीष् स्यादिति वाच्यम्। अजादिगणे तेषां पाठेन ङीपो बाधनात्। ननु पूर्वोक्तलक्षणभेदेन कुमारत्वस्य जातित्वसन्देहात्कथं साधुत्वव्यवस्थेति चेत्। अत्र कैयटः। पूर्वोक्तमेव लक्षणं भाष्यकारस्य मतम् अपर आहेत्यभिधानादित्याहुरिति। वस्तुतस्तु लक्षणद्वयप्रणेतृऋषिद्वयप्रामाण्याज्जातिकार्यस्य युवशब्दादौ विकल्प एव। अत एव युवजानिर्युवतितरेत्यादौ द्विविधमप्युदाहृतं भगवता इति। * सर्वलिङ्गत्वादिति *। स्त्रीपुंसयोरपत्यान्ता इत्यमरोक्तेः ब्राह्मणनपुंसकमिति दर्शनाच्चापत्यप्रत्ययान्तस्य सर्वलिङ्गत्वं तथा चाचाध्येतृवाचिनोऽपि सर्वलिङ्गत्वं कठः कठी कठकुलमिति दर्शनादिति भावः। अपत्याधिकारादन्यत्र लौकिकं गोत्रं तच्चापत्यमात्रमित्यभिप्रायेण कैयटेनैतद्वार्त्तिकव्याख्यानावसरेऽपत्यमित्येव व्याख्यातमनन्तरोक्तं यु-

न्यासे औपगवी माणविकेत्यत्राण् योऽनुपसर्जनमित्यनुपसर्जनलक्षण इकारो न प्राप्नोति, मा भूदेवमण्ण तादनुपसर्जनादित्येवं भविष्यतीति मौड्या पूर्वपक्षिणोक्ते तदङ्गीकृत्यैव इह तथौपगवीभार्य्यः जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति, मा भूदेवं वृद्धिनिमित्तस्येत्येव भविष्यति एवन्तर्हि ग्लुचुकायनीभार्य्ये दोष इत्येको गोत्रइति सूत्रस्थभाष्ये युवापत्यत्वस्य जातित्वाभावकथनं सङ्गच्छते। अन्यथा जातिलक्षणङीष एव परत्वाद्भवतु युक्तत्वं पुंवत्त्वप्रतिषेधो न प्राप्नोतीत्यसङ्गतिश्च। ग्लुचुकायनीभार्य्ये दोषस्तु ङीष्पुंवत्त्वप्रतिषेधयोरसिद्धिरूपो बोध्यः। सर्वतोऽक्तिन्नर्थादिति ङीषि तु पुंवत्त्वप्रतिषेधासिद्धिरेव दोषः। अत एव प्राह्णोजाताविति सूत्रे ऽपत्ये जातौ नेत्यर्थः सङ्गच्छते, तत्र त्वपत्यस्य जातित्वान्यभिचाराच्चदसङ्गतिः प्राह्णो नारद इत्यसिद्धेः, अत' सामर्थ्येनात्र शार्ङ्गीयगोत्रस्यैव ग्रहीतुमौचित्यम्। अनन्तरापत्यप्रत्ययान्ते ऽवन्तीत्यत्र जातिप्रयुक्तो ङीषित्यनुपसर्जनादिति सूत्रभाष्यन्त्वनन्तरेऽप्रत्याम्नि द्रोणायनिवद्दोषत्वारोप इत्यभिप्रायेण। यूनि तु न शार्ङ्गीयगो-

---

न्तीत्यनन्तरापत्ये उदाहरणाच्च दीक्षितैरपि तदेवानुसृतं तत्र युक्तम्भाष्यविरोधादित्याशयेनाह। * शार्ङ्गीयमत्रेति *। * अत एव *। शार्ङ्गीयगोत्रग्रहणादेव। * न प्राप्नोतीति *। गोत्ररूपस्यार्थस्य यूनि च प्रत्ययस्तदर्थे विशेषणत्वात्। * मौड्येति *। अनुपसर्जनादित्यस्य तदन्तविशेषणत्वेऽनुपसर्जनाधिकारस्यैव वैयर्थ्यं स्यादिति तस्य गृह्यमाणविशेषणत्वमेवेति भाव'। प्रतिषेधो न प्राप्नोतीति। एतस्य युवप्रत्ययान्तत्वा शार्ङ्गीयगोत्रे च प्रत्ययस्तदन्तत्वाभावात्। न च य प्रत्ययो गोत्रे उत्पन्नस्तदन्तत्वमस्त्येवेति वाच्यम्। अण तादनुपसर्जनादिति भाष्यस्य यः प्रत्ययो यून्युत्पन्नो लुतश्च समाश्रितैर प्रवृत्ततया तत्प्रत्ययमाश्रित्य जातित्व वाच्यमिति भाव। मा भूदेवम्। जातश्चेति प्रतिषेधो मा भूदित्यर्थ। ग्लुचकायनीति। प्राचामवृद्धादिति फिञ् तमेतत्। अन्यथा। अपत्यप्रत्ययमात्रग्रहणे। * असङ्गतिश्चेति *। जातित्वस्वाराज्जातेश्चेतिनिषेधप्रासेऽगौरुकरयास्। स्वसिद्धा तरीत्याह। * ग्लुचुकायनीभार्य दोषस्त्विति *। * अत एव *। अपत्यविशेषस्य गोत्रशब्देन ग्रहणादेव। व्याख्यानासङ्गतिमुक्त्वा रूपासिद्धिमप्याह। * प्राह्णोनारद इत्यसिद्धिरिति *। एतस्यानन्तरापत्यप्रत्यया तत्वेऽपि जातित्वसत्त्वेनाजाताविति निषेध स्यादिति भावः। * सामर्थ्येन *। औचित्येन। अथ वा अपत्यस्य जाताविति विशेषणसामर्थ्येन। अनुपसर्जनादितिसूत्रभाष्यविरोधम्परिहरति। * अनन्तरापत्येति *। नन्वेव रीत्या गोत्राद्यूनीतिसूत्रस्य लुग्विधायकत्वपक्षीयमेको गोत्र इति सूत्रस्थभाष्यमपि सुयोजमत आह। * यूनि त्विति *। * प्रकृतिविषयत्वाभावादिति *। एवञ्च शाखायां ङीपोऽभावे-

त्वारोपः, तत्र युवैव न गोत्रमिति नियमेन तत्सञ्ज्ञानिषेधात्तदाह । अपत्य प्रत्ययान्त इति । अपत्य पौत्रप्रभृतीति परिभाषित इति शेषः । शाखाद्ध्ये-त्रिति । षष्ठीतत्पुरुषः । शाखायामस्त्रीविषयत्वाभावात् । जातिकार्यं लभते इति । अनेनास्यातिदेशत्व बोधयति । कठेन प्रोक्तमधीतइति । वैशम्पाय-नान्तेवासित्वात्प्रोक्तार्थे णिनेः कठचरकादिति लुक् । अद्ध्येत्रणः प्रोक्ता-ल्लुक् । बह्वयो ऋचो ऽद्ध्येतव्या यस्या इति विग्रहे ऋक्पूरित्यप्समासान्तः स्त्रिया अद्ध्ययनाभावे ऽपि तद्वद्ध्यत्वात्ताच्छब्द्य, यथा ऽनधीयाने माणव-के । ब्राह्मणीत्यत्रापत्ये ऽणि ब्राह्मोजातावित्युक्तेष्टिलोपाभावः । परे तु आ-कृतिग्रहणेत्येव लक्षणमाकृतिपदमुपदेशोपलक्षणमाकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरित्यर्थः । तत्रेदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजा-तिः । अयं ब्राह्मण इति साक्षादुपदेशग्राह्या ब्राह्मणत्वादिजातिः । यद्वा आकृतिग्रहणं जातिग्राहकोपदेशस्याप्युपलक्षणं, लिङ्गानाञ्च न सर्वभागिति तत्स्वरूपानुवादक, तेन शुक्लादिगुणानामेकत्वे ऽपि जातित्वाभावो बोधि-तः । अत एव विशेषणानाञ्चेति सूत्रे जातेराविष्टलिङ्गत्व भाष्ये उक्तम् । आविष्टलिङ्गत्व नियतलिङ्गत्वमिति कैयटः । तच्च प्रायिकमिति केचित् । भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता, तटन्त्रिष्वित्या दिको-

ष्टापि कठा शाखेति कर्मधारयसमासाभावे भवति कर्मधारयसमासस्य प्रवृत्तौ तु पुंवद्भावेन कठशाखेत्येव प्रयोग । केचित्तु कठशब्दस्य प्रोक्तार्थकणिन्यन्तस्य शाखाया प्रवर्त्तमानस्य योगार्थमादाय कल्पादिसाधारणतयाऽस्त्रीविषयत्वात्क-ठी शाखेति समासाभावे भवतीत्याहु । अध्येत्रर्थकाण्णन्तस्य स्त्रियाम्प्रवृत्ति मुपपादयति । * स्त्रिया इति * । स्वीयसिद्धान्तमाह । * परे त्विति * । उ पदेशोपलक्षणमिति । एवञ्चोपदेशग्राह्या जातिरित्येव सिद्धम् । उपदेशग्राह्यत्व-ञ्च द्वाभ्याम्प्रकाराभ्याम् । यद्वेति पक्षे तु उपदेशाकृत्यन्यतरग्राह्येति लक्षणम् । * लिङ्गानामिति * । शास्त्रीय लिङ्ग जातिरूपार्थेऽपि सम्भवतीत्याशयेनेदम् । * तत्स्वरूपेति * । जातिस्वरूपेत्यर्थ ।*तेन*। तादृशस्वरूपानुवादेन । न चानु वादमात्रेणातिव्याप्तिर्वारयितु न शक्यत इति वाच्यम् । विशेषणतयैतदर्थप्रवेश स्याभिप्रेतत्वात । एव सत्याकृतिग्रहणेत्येवेत्येवकारेण द्वितीयलक्षणकरण व्य वच्छिद्यते । न त्वसर्वलिङ्गत्वे सतीति विशेषणमिति बोध्यम् । * अत एव * । जातावपि लिङ्गसम्बन्धसम्भवादेव । ननु यदा लक्षणद्वैविध्यन्तदा आद्यस्य द्वितीयलक्षणाप्राप्तप्रापणार्थतया तटन्त्रिष्वितिकोशबलेन तटशब्दस्य सर्वलिङ्ग त्वेऽपि जातिकार्यं सिध्यति । एकलक्षणत्वे त्वसर्वलिङ्गत्वे सतीति विशेषणस्य लिङ्गानामित्यस्याभावेऽपि काचिज्जातित्वमिति तेषाम्भाव । स्वसिद्धान्तमाह । *भाष्येति*। ननु कोशस्य का [illegible] आह । * तटमिति * । सङ्कीर्त्यपरान्तर-

शकृतो प्रमाद इत्यन्ये । सकृदाख्यातनिर्ग्राह्येत्यनेनैकत्वमनेकानुगतत्वञ्च बोधितम् । सकृदेकवार क्वचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतु शक्येति तदर्थः । गोत्रञ्चेत्यादि प्राग्वदेव । अत एव ॥

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थान्तां जातिं कवयो विदु'रिति ॥

लक्षणान्तर भाष्ये उक्तम् । सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां या तौ प्राप्नोति सा जातिरिति लक्षणम् । यावद्द्रव्यभाविनीति तदर्थः । अनेन गोत्वब्राह्मणत्वाद्योरुभयोरपि सङ्ग्रहः । गुणैर्युगपद्द्रव्येण सवध्यते, यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिरहितस्यापीत्यर्थ इति कैयटः । इद स्वरूपकथनमेव । अत्र लक्षणे ऽसर्वलिङ्गामित्येतन्प्रदुक्तार्थकमेव न तु लक्षणान्तरमनुपयोगात् । बह्वर्थां सर्वव्यक्तिव्यापिनीमित्यर्थः । कः पुनरेत योर्जातिलक्षणयोर्विशेषः । यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्य, यथोत्तर तथा कुमारभार्य इति भाष्ये लक्षणामित्येकवचनमेव प्रयुक्तम् । अत एवाकडारसूत्रशेषे आकृतिग्रहणा जातिरित्येवोक्तं भाष्ये इत्याहुः । बलाकेति । अयञ्च बिसकण्ठिकापदवाच्यजातिविशेषवाची । स च बकत्वव्याप्यो ऽन्यो नेत्यन्यदेतद् । अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादित्यर्थः । एतेन बलां कायतीति यौगिकस्य सर्वलिङ्गत्वाद्'बलाका बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति कोशे पुल्लिङ्गस्याप्यभिधानाच्च नेद युक्तमित्यपास्तम् । अत

---

प्रयोजनमाह । * सकृदिति * । * एकत्वमनेकानुगतत्वमिति * । एतेन जातिलक्षणयोग्यता दर्शिता । * स्वरूपानुवादेन * । वस्तुत पूर्ववदेतदपि विशेषण तेन देवदत्तत्वादेर्व्यावृत्ति । समानकालिकानेकेत्यस्य निवेशोपि पूर्ववत् । *प्राग्वदेव*।अतिदेश एव । *अत एव* । आकृतिग्रहणेत्यादे पूर्वोक्तार्थोऽङ्गीकारादेव । * अनेन * । एकलक्षणेन । गुणैर्युगपत्सम्बध्यते इत्युक्ते केनेत्याकाङ्क्षाशान्तये आह । * द्रव्येणेति * । * गुणैरिति * । प्रकृत्यादित्वात्तृतीया । तेनैककाले इत्यर्थकेन युगपच्छब्देन योगेपि न क्षति । द्रव्येणेति तु सहार्थयोगे तृतीया । लक्षणान्तरत्वभ्रमप्रसिराचष्टे । * अत्र लक्षण इति * । * अत एव पूर्वोक्तस्याप्येकलक्षणत्वादेव । एकवचनमेवेत्यनेन स्वव्याख्यादृढीकरणम् ।

* अत एव * । पूर्वस्यैकलक्षणत्वादेव । * एतेन * । अस्त्रीविषयादित्यस्य पूर्वोक्तार्थकरणेन । * अपास्तमिति * । सर्वत्र बिसकण्ठिकात्वजाते प्रवृत्तिनिमित्तत्वाभावान्नानुपपत्तिरिति भाव । * अत एव * । अस्त्रीविषयादित्यस्य

एव पाककर्णेति सूत्र चरितार्थ, तद्धि स्त्रीविषयार्थम्, अन्यथा तेषामपि यौगिके ऽर्थे लिङ्गान्तरसभवेन पूर्वेण सिद्धे - तद्वैयर्थ्य स्पष्टमेव ॥

पाककर्ण ॥ जातिवाचिनः किम् । बहुपुष्पा शाखा । स्त्रीविषयादपीति। अजात्यर्थन्तु न । मासपुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु सदच्काण्डेत्यादिनिषेधात् ॥

योपधादपीति । पुनर्जातिग्रहणादिति भावः । अस्त्रीविषयादिति तु पूर्वसूत्रेण विच्छिन्नम् । तित्तिरिरिति । 'स्त्रीपुसयोरपत्यान्ता द्विचतु'षट्पदोरगा' इत्यमराद्य स्त्रियामपीति भावः । इतः किम् । दरत् । द्व्यञ्मगधेत्यणो ऽतश्चेति लुक् ॥

ऊडुतः ॥ ऊकारो नोङ्धात्वोरिति विशेषणार्थः । अन्यथा यवाग्वेत्यादावपि निषेध. स्यात् । दीर्घोचारण प्रश्लेषेणोकारद्वयविधानद्वारा ब्रह्मबन्धू

---

पूर्वोक्तार्थाश्रयणादेव । * बहुपुष्पेति * । यौगिकोऽयम् । न तु जातिप्रवृत्तिनिमित्तक ।

ननु पाककर्णेतिसूत्रस्याप्राप्तप्रापणार्थतयाऽजात्यर्थमेतत्सूत्रमित्यपि वक्तु युक्तमत आह । * अजात्यर्थन्त्विति * । * निषेधादिति * । तस्य ङीष्बाधनार्थमारम्भात् । एतच्चास्मिन्नेव सूत्रे वार्त्तिककृता पठितम् । तच्च भाष्यकृता सदच्काण्डप्रान्तशतैकेभ्य प्रतिषेधो वक्तव्य इति व्याख्यातम् । एव व्याख्यान योपधादित्यस्य सूत्रे श्रवणेन योपधप्रतिषेधे हयगवयेत्यादिना प्रतिप्रसवसूचनेन कृतम् । यदीद सूत्रमजात्यर्थमित्येव स्यात्तदा अस्त्रीविषयादित्यस्य प्रकृतसूत्रेऽपि सम्बन्धात्पूर्वसूत्रस्यास्य चाप्राप्तेरदन्तत्वादेव टापि सिद्धे तदारम्भो व्यर्थ स्यादिति भाव । इदमेव च वार्त्तिकमजाद्यत इति सूत्रव्याख्यानावसरे मूले उपनिबद्धम् ।

* पूर्वसूत्रेण * । पाककर्णेत्यनेन । ननु तित्तिरि ककुभो लाव इति कोशे ककुभशब्दसाहचर्यात्पुस्त्वनिर्णयसम्भवान्नास्य स्त्रीत्वमत आह । * स्त्रीपुसयोरिति * । इदमुपलक्षणम् । नपुसकत्वस्यापि । नाजायनपुसकमितिकोशस्यौपगवकुलमिति प्रयोगस्य च दर्शनात् ।

* अन्यथा * । नोङ्धात्वोरितिसूत्रेऽपि ऊकारानुच्चारणे । * ब्रह्मबन्धूरिति * । ब्रह्म वेदो बन्धुषु यस्या इत्यर्थ । ननु ह्रस्वोकारादूङ्विधानमेवास्तु सवर्णदीर्घेण रूपसिद्धेरत आह । * दीर्घोच्चारणमिति * । * भाष्ये स्पष्टमिति * । तत्र हि किमर्थो ऊकार । विशेषणार्थ नोङ्धात्वोरिति । नोधात्वोरित्युच्यमाने यवाग्वा यवाग्वे इत्यत्रापि प्रसज्येत । अथ दीर्घोच्चारण किमर्थम् ।

रित्यादिबहुव्रीहौ परकप्निवृत्त्यर्थम् । रूपाणां सवर्णदीर्घेण सिद्धेरिति भाष्ये स्पष्टम् । श्वश्रूरिति तु श्वशुरः श्वश्वेति निर्देशात्सिद्धम् । कुरूरिति । एकदेशस्य पूर्वान्तवत्त्वात्स्वादयः । अध्वर्युरिति । अध्वर्युशाखाध्यायिब्राह्मणीत्यर्थः । रज्ज्वादीति । उत इति तु नेह संबध्यते । अलाबूरिति भाष्योदाहरणादिति भावः । कृकवाकुरित्यत्र मनुष्यजातित्वाभावात्पूर्वेणापि न ॥

पङ्ग्वोश्च ॥ पङ्गुशब्दो गुणवाचीति पूर्वेणाप्राप्तिः । श्वशुरस्येति । श्वश्वेति निर्देशादन्त्याकारस्य लोपः । तन्निर्देशसिद्धमेवैतत् । भाष्ये त्विदं न दृश्यते ङ्याब्विति सूत्रस्थभाष्यस्वारस्यात्त्वयमूङन्तोऽव्युत्पन्नं प्रातिपदिकमिति

ऊरूत्त ॥ उपमीयतेऽनयेत्युपमोपमानं तद्वाचि औपम्यमुपमानत्वम् ।

---

प्रहस्य धूः । धीरस्य धूः । नदृतश्चेति कप् प्रसज्येत । नैष दोषः । नद्यन्तानां यो बहुव्रीहिरित्येवं तत् । न चैष नद्यन्तानां बहुव्रीहिः । शेषलक्षणस्तर्हि कप् प्राप्नोति । तस्माद्दीर्घोच्चारणं कर्तव्यम् । अत्र कैयटः । ऊकारप्रश्लेषदीर्घेण निर्दिष्टम् । तत्र द्वितीय ऊकारः परत्वाद्बाधकस्य शेषलक्षणस्य कपो बाधनार्थमिति भावः । ननु यद्येवं यद्योकारो विधीयते तदा श्वशुरस्योकाराकारलोपश्चेत्यनेनोङि कृते श्वश्रूरित्यस्य सिद्धिर्न स्यादत आह । * श्वश्रूरिति त्विति * । * सिद्धमिति * । तथा च तादृशनिर्देशात्पर तादृशरूपसाधकं न तु तदर्थं वचनान्तरमिति भावः । ननु स्त्रिया वेदाध्ययनेऽधिकाराभावादध्वर्युरित्यसङ्गतमत आह । * अध्वर्युशाखेति * । यच्छाखाध्ययनेनाध्वर्युत्वम्भवति तच्छाखाध्यायिब्राह्मणीत्यर्थः । उत इत्यस्य सम्बन्धेऽलाबुशब्दाद्दीर्घान्तान्न स्यादत आह । * उत इतीति * । * अलाबूरितीति * । ऊङि सत्यलाब्वेत्यत्र नाङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधः सिद्धो भवति ।

गुणवाचीतीति । न तु जातिवाचीति शेषः । श्वशुरशब्दावयवाद्याकारस्य लोपाशङ्कानिवारणायाह । * श्वशुरः श्वश्वेतिनिर्देशादिति * । * ङ्याप्सूत्रस्थभाष्यस्वारस्यात्त्विति * । तत्र हि ङ्याब्ग्रहणङ्किमर्थं प्रातिपदिकादित्येव सिद्धमिति प्रश्नेऽप्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोतीति समाधाने एवं सत्यूङ्ग्रहणङ्कर्तव्यमिति पुनः प्रश्ने तत्प्रत्ययस्य तद्धितत्वात्सिद्धमिति समाधाय ऊङन्तादपि पूर्वान्तवद्भावेन सिद्धमित्युक्तम् । श्वश्रूशब्दो यद्यूङन्तः स्यात्तदा तदर्थमूङ्ग्रहणस्यावश्यकत्वेन भाष्ये तस्यानुक्तत्वेन न्यूनतापत्तिरतोऽयमव्युत्पन्न इति कल्प्यत इति ।

ऊरूत्तरपदादित्यधिकारप्राप्तप्रातिपदिकविशेषणमूरूत्तरपदादिति बहुव्रीहिः । औपम्य इति सप्तम्यर्थो वाचकत्वम् । पूर्वपदस्योपमानवाचकत्वे समुदायस्यौपम्यवाचकत्वसम्भव इत्याशयेनाह । * उपमीयत इत्यादि * । अत । उपमानवा

एवं च तद्बोधकोत्तरपदादित्यर्थः । उत्तरपदाक्षिप्तपूर्वपद प्रत्यासत्त्योपमानवाच्येव । अतः करभोपमोरुरित्यत्र न, तदाह । उपमानवाचीति । करभेति । मणिबन्धादाकनिष्ठ करबहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः । उपचारादिति । शफशब्दप्रवृत्तिनिमित्तस्योरूपदार्थे आरोपादित्यर्थः । एवञ्च समासस्योपमानोपमेयभावावोधकत्वेन न पूर्वसूत्रप्राप्तिस्तदारोपे च स निमित्तमित्यन्यदिति भावः ।

ननु सहशब्दग्रहणं व्यर्थं सर्वस्योरुमत्त्वेन सहशब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन सहोरूरिति प्रयोगस्यैवाभावादत आह । सहेते इति । रतिश्रममितिशेषः । सह विद्यमानावूरू यस्या इत्यर्थ इति कैयटः । अतिरमणीयावित्यर्थ इति तदाशयः,कमलानि कमलानीतिवत्।कद्रूरिति नागमातुः ॥

संज्ञा । अच्छन्दोर्थमिति । छन्दसि कद्रुकमण्डल्वोश्छन्दसीत्यनेनैव सिद्धिरिति भावः ॥

अत्रो य इति । शार्ङ्गरवादीति लुप्तपञ्चम्यन्तमत्र इति च षष्ठी अनुपसर्जनादिति विभक्तिविपरिणामेनास्य विशेषणम्, एवं दिद्धेत्यत्रापि लुप्तच-

---

न्धकस्य पूर्वपदस्य ग्रहणेन । * करभोपमोरुरित्यत्रेति * । अत्र पूर्वपदस्योरुशब्दसामानाधिकरण्येनोपमानवाचकत्वाभाव स्पष्ट एव । यत पूर्वपदस्योपमानवाचकस्य विवक्षाऽस्त एवोत्तरपदग्रहणञ्चरितार्थमन्यथोपमानादित्येव वदेत् । उपचारो लक्षणा सा च शक्यतावच्छेदकारोपात्मिका तदाह । * शफशब्देति * । * स निमित्तमिति * । * स * । उपमानोपमेयभाव ।

* सहेते इतीति * । एवञ्च सहशब्द सौत्र क्रियाशब्दो न तु साहित्यवाचीत्युक्तम्भवति । मूलोक्त यद्वेति द्वितीयार्थकल्पनमेव समूलमित्याशयेनाह । * सह विद्यमानाविति * । सर्वस्यापि विद्यमानोरुमत्त्वेन विशेषणवैयर्थ्यशङ्कानिवारणायाह । * अतिरमणीयावित्यर्थ इति * । तत्र दृष्टान्तमाह । कमलानीति । तदा जायन्ते ते गुणा यदा सहृदयैर्गृह्यन्ते रविकिरणानुगृहीतानि भवन्ति कमलानि अत्र च शुद्धकमलत्वमुद्देश्यतावच्छेदकम् । शोभादिगुणयुक्तकमलत्वावच्छिन्नस्य विधेयत्वमिति नोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यत्वाच्छाब्दबोधानुपपत्तिरिति । लोके कद्रूरिति कस्य प्रयोग इत्यत आह । * नागमातुरिति * । .

कमण्डलुशब्दश्च चतुष्पाज्जातिवचन । अत एव चतुष्पाद्भ्यो ढञिति सूत्रस्य कामण्डलेय इत्युदाहरणसङ्गति । पात्रवाची तु न स्त्रीलिङ्ग ।

अत्र इत्यस्याकारविशेषणत्व शार्ङ्गरवादेस्तु नेति द्वन्द्वानुपपत्तिरत आह । * शार्ङ्गरवादीति * । * अस्य * । अत्र इत्यस्य । * एव दिङ्द्धेत्यत्रापीति *

स्वौजसमौडिति त्रिविधस्यादीनामर्थविभागव्यवस्थां दर्शयितुमाह। प्रातिपदिकार्थेति॥ इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते, अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वात्। आख्यातार्थकर्त्रादिना ऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोध्यः। प्रथमार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः। ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणमनर्थकमत आह नियतेति। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य

---

॥ श्रीगणेशाय नमः ॥
॥ श्रीमत्सीतारामाभ्यां नमः ॥

ज्ञानानन्दमयं देवं जानकीवल्लभं विभुम्।
आधारं सर्वविद्यानां श्रीरामं समुपास्महे ॥ १ ॥

अथ ङ्याप्प्रत्ययानां प्रातिपदिकप्रकृतिकत्वात् स्यादीनामपि तथात्वात्तेषामपि निरूपणमावश्यकमिति प्रसङ्गसङ्गत्या तदर्थं निरूपयति। * स्वौजसमौडिति *। प्रथमायाः न कारकविभक्तित्वमिति वादिमतं दूषयितुमुपक्रमते। * इदमपीति *। क्रियायोगश्च न साक्षात्कारकत्वे प्रयोजकः किन्तु साक्षात्परम्परासाधारणः। साक्षात्। यथा कर्मादीनाम्। परम्परया। यथा अधिकरणकारकस्य। एवम्प्रथमार्थस्यापि। सा च क्रिया यत्र क्रियावाचकपदप्रयुज्यते तत्र सैव पचतीत्यादौ तदर्थभूतैव। यत्र तु न प्रयुज्यते घटः पट इत्यादौ तत्राप्यस्तिर्भवन्ती परोऽप्रयुज्यमानोऽप्यस्तीति न्यायेन गम्यमानास्तिक्रियायामेवान्वयः। स च प्रत्ययार्थकर्त्रादिद्वारा। अत एव तिङ्समानाधिकरणे प्रथमेतियार्तिककसङ्गतिः। कारकविभक्तित्वञ्च क्रियाजनकार्थकविभक्तित्वम्। इदमपीत्यपिना कारकाधिकारीयसकलप्रयोज्यसर्वविभक्तिसङ्ग्रहः। * भाष्ये *। अनभिहितपादे। * कृष्णादिशब्देष्विति *। वाचकतासम्बन्धेन स्थितस्येति शेषः। * प्रातिपदिकार्थत्वादिति *। प्रातिपदिकजन्योपस्थितिविषयत्वं हि प्रातिपदिकार्थत्वं तच्च लिङ्गस्याप्यस्तीति भावः। अत्रोपस्थितिनिष्ठकार्यताया अवच्छेदकः सम्बन्धोऽवच्छेदकता। प्रातिपदिकनिष्ठकारणतायास्तु स्वविषयकज्ञानावच्छेदकत्वम्। * यस्मिन्निति *। न च सामग्र्यन्तराभावे प्रातिपदिकमात्रोच्चारणेन कस्याप्यर्थस्योपस्थितिर्न भवतीति प्रातिपदिकजन्यनियतोपस्थितिकत्वञ्च कस्यापीति वाच्यम्। स्वस्वव्याप्येतरयावत्कारणसत्त्वे इत्यस्यापि पूरणात्। स्वम्। प्रातिपदिकम्। तद्व्याप्यस्तदीयसम्बन्धः ताभ्यामितरयावत्कारण-

नियमेनोपस्थितिः स तदर्थ इत्यर्थः। अन्वयानुपपत्तिपूर्वका लक्षणा पदे एव। त्ययोत्पत्तिः सर्वत्र शक्यार्थे एव । शक्यतावच्छेदकारोप एव च लक्षणेति न लक्ष्यासङ्ग्रहो दोषः । तदादिशब्दानान्तत्प्रत्ययसमभिव्याहारे सकल- लिङ्गबोधकतया न किमपि लिङ्गन्ततो नियतोपस्थितिकमिति न तद्वाच्य- लिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः । लिङ्ग मात्रेति । लिङ्गस्यैवाधिक्ये इति क्रमेणार्थः । यद्यपि विशेष्यविशेषणभावो- प्याधिको भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्रनि- मित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोध्यम् । अभेदेन संसर्गेणेति । इत- रसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः । अभेदस्तु न संसर्ग- इत्यन्यत्र प्रपञ्चितम् । इहोक्तार्थत्वादिति । उक्तार्थानामप्रयोगात् । प्रातिप-

---

मित्यर्थं । प्रातिपदिकजन्यनियतोपस्थितिकत्वञ्च प्रातिपदिकोच्चारणकालान न्तरकालव्यापकोपस्थितिविषयत्वम् । कालश्च प्रातिपदिकोच्चारणानन्तरं याव- नुक्षणसमूहेनार्थाभिव्यक्तिर्भवति तावान् समुदायः । न चैतादृशप्रातिपदिकार्थं स्वङ्गौर्वाहीक इत्यादिकलाक्षणिकस्थले न कस्यापि वाहीकाद्यर्थस्येति तत्र प्रथ माया साधुत्वन्न स्यादित्यत आह । * अन्वयानुपपत्तीति * । * पदे एव * । सुबन्त एव । * न लक्ष्यासङ्ग्रह इति * । एवञ्च मुख्ये स्वशक्ये एव तेषां सा- धुत्वम्पश्चात्पदान्तरार्थसम्बन्धवेलायामन्वयतात्पर्यान्यतरानुपपत्तिप्रतिसन्धान न्तत स्वशक्यतावच्छेदकारोपात्मिका लक्षणेति भाव । लिङ्गग्रहणसार्थक्यमा ह । * तदादिशब्दानामिति * । सूत्रे मात्रशब्दोऽवधारणे तस्य च प्रत्येक स म्बन्ध इत्याशयेनाह । * लिङ्गस्यैवाधिक्य इति * । नन्वेवन्नीलो घट इत्यादा वपि नियतत्वाशनिवेशे प्रथमा न स्यात् । विशेषणविशेष्यभावस्याधिकस्य भानेन मात्रपदेन व्यवच्छेदादित्याशयेन शङ्कते । * यद्यपीति * । * संस्कारे ति * । प्रथमारूप । योऽप्यभेदो भासते सोऽपि विशेष्यविशेषणभावान्नातिरि- क्त । एव सत्यय वाक्यार्थ एव । विशेष्यविशेषणभाव पर द्विविध । यत्र भेद संसर्गतया भासते तत्र तत्सम्बन्धावच्छिन्न । समानविभक्तिकनामार्थयोर्यत्रा न्वयस्तत्रेतरसम्बन्धानवच्छिन्न । न चैव घटम्पश्यतीत्यादावपि प्रथमापत्ति । कर्मत्वस्य क्रियासापेक्षत्वेन तस्य वाक्यार्थत्वादिति वाच्यम् । एव सति कर्मणि द्वितीयेत्यादिसूत्राणां वैयर्थ्यापत्ते । प्रातिपदिकपरदेशस्य प्रथमयाऽपहृतत्वा दतस्तासां स्वविषये बाधकत्वमुपेयमिति भाव । * न संसर्ग इति * । राहो शिर इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनपरभाष्यप्रामाण्येन तस्य संसर्ग त्वाभावकल्पनात् । * अन्यत्र * । मञ्जूषादौ । न — ग्रहरित्यत्र प्राति-

स्वौजसमौडिति विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह । प्रातिपदिकार्थेति ॥ इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते, अन्ततो ऽस्तिक्रियायाः सर्वत्र सत्त्वात् । आख्यातार्थकर्त्रादिना ऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोध्यः । प्रथमान्तार्थस्यापि क्रियाजनकत्वादस्या कारकविभक्तित्वेन भाष्ये व्यवहारः । ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणमनर्थकमत आह नियतेति । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य

---

॥ श्रीगणेशाय नमः ॥
॥ श्रीमत्सीतारामाभ्यां नमः ॥

ज्ञानानन्दमयं देवं जानकीवल्लभं विभुम् ।
आधारं सर्वविद्यानां श्रीरामं समुपास्महे ॥ १ ॥

अथ स्त्रीप्रत्ययानां प्रातिपदिकप्रकृतिकत्वात् स्वादीनामपि तथात्वात्तेषामपि निरूपणमावश्यकमिति प्रसङ्गसङ्गत्या तदर्थान्निरूपयति । * स्वौजसमौडिति * । प्रथमाया न कारकविभक्तित्वमिति भ्रान्तिमतन्दूषयितुमुपक्रमते । * इदमपीति * । क्रियायोगश्च न साक्षात्कारकत्वे प्रयोजकः किन्तु साक्षात्परम्परासाधारणः । साक्षात् । यथा कर्मादीनाम् । परम्परया । यथा अधिकरणकारकस्य । एवम्प्रथमान्तस्यापि । सा च क्रिया यत्र क्रियावाचकपदम्प्रयुज्यते तत्र चैत्रः पचतीत्यादौ तदर्थभूतैव । यत्र तु न प्रयुज्यते घटः पट इत्यादौ तत्रा प्यस्तिर्भवन्ती परोऽप्रयुज्यमानोऽप्यस्तीतिन्यायेन गम्यमानास्तिक्रियायामेवान्वय । स च प्रत्ययार्थकर्तृकर्मादिद्वारा । अत एव तिङ्समानाधिकरणे प्रथमेतिवार्त्तिकसङ्गतिः । कारकविभक्तित्वञ्च क्रियाजनकार्थकविभक्तित्वम् । इदमपीत्यपिना कारकाधिकारीयसकलाप्रयोज्यसर्वविभक्तिसङ्ग्रहः । * भाष्ये * । अनभिहितपादे । * कृष्णादिशब्देष्विति * । वाचकतासम्बन्धेन स्थितस्येति शेषः । * प्रातिपदिकार्थत्वादिति * । प्रातिपदिकजन्योपस्थितिविषयत्वं हि प्रातिपदिकार्थत्वन्तच्च लिङ्गस्याप्यस्तीति भावः । अत्रोपस्थितिनिष्ठकार्यताया अवच्छेदकः सम्बन्धोऽवच्छेदकता । प्रातिपदिकनिष्ठकारणतायास्तु स्वविषयकज्ञानावच्छेदकत्वम् । * यस्मिन्निति * । न च सामग्र्यन्तराभावे प्रातिपदिकमात्रोच्चारणेन कस्याप्यर्थस्योपस्थितिर्न भवतीति प्रातिपदिकजन्यनियतोपस्थितिकत्वञ्च कस्यापीति वाच्यम् । स्वस्वव्याप्येतरयावत्कारणसत्त्व इत्यस्यापि पूरणात् । स्वम् । प्रातिपदिकम् । तद्व्याप्यस्तदीयसम्बन्ध तान्यामितरद्यावत्कारण-

नियमेनोपस्थितिः स तदर्थ इत्यर्थः। अन्वयानुपपत्तिपूर्विका लक्षणा पदे एव। प्रत्ययोत्पत्तिः सर्वत्र शक्यार्थे एव। शक्यतावच्छेदकारोप एव च लक्षणेति न लक्ष्यासङ्ग्रहो दोषः। तटादिशब्दानान्तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गन्ततो नियतोपस्थितिकमिति न तद्वाच्यलिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः। लिङ्गमात्रेति। लिङ्गस्यैवाधिक्ये इति क्रमेणार्थः। यद्यपि विशेष्यविशेषणभावोप्याधिको भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोध्यम्। अभेदेन संसर्गेणेति। इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः। अभेदस्तु न संसर्ग इत्यन्यत्र प्रपञ्चितम्। इहोक्तार्थत्वादिति। उक्तार्थानामप्रयोगात्। प्रातिप-

---

मित्यर्थः। प्रातिपदिकजन्यनियतोपस्थितिकत्वञ्च प्रातिपदिकोच्चारणकालानन्तरकालव्यापकोपस्थितिविषयत्वम्। कालश्च प्रातिपदिकोच्चारणानन्तरं यावत्क्षणसमूहेनार्थाभिव्यक्तिर्भवति तावान् समुदायः। नन्वेतादृशप्रातिपदिकार्थत्वस्य गौर्वाहीक इत्यादिलाक्षणिकस्थले न कस्यापि वाहीकाद्यर्थस्येति तत्र प्रथमाया साधुत्वन्न स्यादित्यत आह। * अन्वयानुपपत्तीति *। * पदे एव *। सुबन्त एव। * न लक्ष्यासङ्ग्रह इति *। एवञ्च मुख्ये स्वशक्ये एव तेषां साधुत्वम्पश्चात्पदान्तरार्थसम्बन्धवेलायामन्वयतात्पर्यान्यतरानुपपत्तिप्रतिसन्धानन्तत स्वशक्यतावच्छेदकारोपात्मिका लक्षणेति भाव। लिङ्गग्रहणसार्थक्यमाह। * तटादिशब्दानामिति *। सूत्र मात्रशब्दोऽवधारणे तस्य च प्रत्येकं सम्बन्ध इत्याशयेनाह। * लिङ्गस्यैवाधिक्य इति *। नन्वेवन्नीलो घट इत्याद्यपि नियतत्वाशानिर्देशे प्रथमा न स्यात्। विशेषणविशेष्यभावस्याधिकस्य भानेन मात्रपदेन व्यवच्छेदादित्याशयेन शङ्कते। * यद्यपीति *। * संस्कारेति *। प्रथमारूप। योऽप्यभेदो भासते सोऽपि विशेष्यविशेषणभावाद्यातिरिक्त। एव सत्यय वाक्यार्थ एव। विशेष्यविशेषणभाव परं द्विविध। यत्र भेद संसर्गतया भासते तत्र तत्सम्बन्धावच्छिन्न। समानविभक्तिकनामार्थयोर्यत्रान्ययस्तत्रेतरसम्बन्धानवच्छिन्नः। न चैव घटम्पश्यतीत्यादावपि प्रथमापत्तिः। कर्मत्वस्य क्रियासापेक्षत्वेन तस्य वाक्यार्थत्वादिति वाच्यम्। एव सति कर्मणि द्वितीयेत्यादिसूत्राणां वैयर्थ्यापत्ते। प्रातिपदिकपरदेशस्य प्रथमयाऽवरुद्धत्वादतस्तासां स्वविषये बाधकत्वमुपेयमिति भाव। * न संसर्ग इति *। राहो शिर इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनपरभाष्यप्रामाण्येन तस्य संसर्गत्वाभावकल्पनात्। * अन्यत्र *। मञ्जूषादौ। न च द्रोणो व्रीहिरित्यत्र प्राति-

दिकप्रतिपादितसंख्याविशिष्टे संख्यान्तराभावाच्च तदप्राप्तिः। अनन्वितार्थकविभक्त्यपेक्षयानुवादकविभक्तेरेव न्याय्यत्वाच्च अद्भ्यः सर्वविभक्त्यप्राप्तिरिति भावः। लिङ्गविशिष्टपरिमाणयेन्द्राणीत्यादौ प्रथमासिद्धिः। परिमाणशब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोद्ध्यम्। परे

---

पदिकार्थे एव प्रथमास्तु तस्य च परिच्छेदकभावसम्बन्धेन व्रीह्याद्यन्वयोऽस्त्विति वाच्यम्। समानविभक्तिकनामार्थयोर्भेदसम्बन्धेनान्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा राजा पुरुष इति वाक्याद्भेदसम्बन्धेनान्वयबोधापत्तेः। न च यदि परिमाणमात्रे प्रथमा परिमाणस्य च प्रत्ययार्थतया परिच्छेद्यपरिच्छेदकभावसम्बन्धेनान्वयस्तदा द्रोणो व्रीहिमानयेत्यपि प्रयोग स्यादिति वाच्यम्। प्रातिपदिकार्थेत्याद्यर्थेण परिमाणमात्रे प्रथमापि यत्र समानविभक्तिकनामार्थतदर्थयोरन्वयविवक्षा तत्रैव नान्यत्रेति कल्पनात्। अत एव तिङ्समानाधिकरणे प्रथमेतिवार्तिकविरोधो न। * उक्तार्थत्वादिति *। एकत्वादिष्वर्थेषु विभक्तिर्विधेया ते चार्थाः प्रकृत्यैव प्रतिपादिता इति तेषामभिधानाय विभक्तिर्न स्याद्यथा न हि भवति घटोऽस्ति कलश इति। नन्वेकत्वविशिष्टे एकत्वसामानाधिकरण्ये प्रथमेतिवार्तिकविरोधो न। * उक्तार्थत्वादिति *। एकत्वादिष्वर्थेषु विभक्तिर्विधेया ते चार्था प्रकृत्यैव प्रतिपादिता इति तेषामभिधानाय विभक्तिर्न स्याद्यथा न हि भवति घटोऽस्ति कलश इति। नन्वेकत्वविशिष्टे एकत्वान्तरान्वयार्थैकवचनमस्त्वित्यत आह। * प्रातिपदिकेति *। * संख्यान्तरेति *। प्रकृत्यर्थतावच्छेदकातिरिक्तसंख्यान्तरेत्यर्थः। एकादिशब्दात्तर्हि द्विवचनादिकमुत्पद्यतामित्यत आह। * अनन्वितार्थकेति *। * सर्वविभक्त्यप्राप्तिरिति *। सर्वप्रथमाप्राप्तिरिति भाव। ननु हिमानीन्द्राणीत्यादौ कथम्प्रथमा महत्त्वपुंयोगयोराधिक्यादित्यत आह। * लिङ्गविशिष्टपरिमाणयेति *। प्रातिपदिकार्थमात्र इत्यत्र प्रातिपदिकपदम्प्रातिपदिकप्रकृतिकलिङ्गबोधकप्रत्ययस्यापि बोधकमिति यस्माल्लिङ्गबोधकप्रत्ययान्तात्प्रथमोत्पत्तिरभिमता तद्भिन्ननियतोपस्थितिकोऽर्थो विवक्षित न च प्रकृतेऽस्तीति भाव। * उन्मानादिष्वपीति *। पलम् सुवर्णमित्यादौ। न च प्रातिपदिकेन स्वार्थस्योक्तत्वात्तत्र कथम्प्रथमेति वाच्यम्। प्रातिपदिकार्थे प्रथमाविधानसामर्थ्येन तत्रोक्तार्थानामिति न्यायाप्रवृत्ते। यथा पञ्चकम्प्रातिपदिकार्थ इतिपक्षे कारकस्य प्रातिपदिकार्थत्वेऽपि तत्र द्वितीयादीना विधानमन्यथा विभक्तिरहितस्य प्रयोग स्यात्। स च न केवलेत्यादिवचनबाधितो नापि तेभ्य कर्मादिप्रतीति कस्यापि भवति तथा प्रातिपदिकेन तदर्थे प्रतिपादितेऽपि प्रथमा भवतीति प्राचीनमतनिष्कर्ष। स्वसिद्धान्तमाह। * परे त्विति *। * प्र

त्यत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्त तदाश्रयश्च । स च मुख्ये इवारोपिततदाश्रयो ऽपि । अत एव गोपीत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वे ऽपि न दोष । अत एव लिङ्गग्रहण सार्थकम्, अन्यथा स्वमोर्नपुंसकादित्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव । अत एव स्त्रियामिति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थः इति भाष्ये सिद्धान्तितम् । तस्माच्छस इत्यत्र पुंसीत्यस्य पुम्शब्दस्य प्रकृतित्वे इत्येवार्थः । अभिहिते प्रथमेति वार्त्तिकस्य तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः । एतेन तन्मये कारकस्य प्रत्ययार्थत्वं, तव तु तन्नेति विरोध इत्यपास्तम् । तटादिशब्दानामपि लिङ्गं वाच्यमेव । द्योतकास्तु विसर्गादयः । पूर्वं तत्तल्लिङ्ग बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम् । नियमाशनिवेशो तु न मानम्, इदमेवाभिप्रेत्य वृत्तौ प्रातिपदिकार्थः सत्वेत्युक्तम् । सत्वेति प्रवृत्तिनिमित्तोपलक्षणम्, आश्र-

---

वृत्तिनिमित्तमिति * । यस्माच्छब्दात्प्रथमाविधानन्तच्छब्दप्रवृत्तिनिमित्तमित्यर्थं । * स च * । तदाश्रयश्च । आरोपिततदाश्रय । प्रवृत्तिनिमित्तप्रकारकारोपविशेष्य इत्यर्थं । * अत एव * । आरोपिततदाश्रयग्रहणादेव । * लाक्षणिकत्वेऽपि * । गोपत्वप्रकारकारोपविशेष्यार्थबोधकत्वेऽपि । * अत एव * । प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणादेव । प्रातिपदिकार्थतया * । प्रातिपदिकपदजन्योपस्थितिविषयार्थतया । * तद्वैयर्थ्यम् । * लिङ्गग्रहणवैयर्थ्यम् । * अत एव * । लिङ्गस्य प्रातिपदिकार्थत्वादेव । *सिद्धान्तितमिति * । स्त्रीत्वस्य प्रातिपदिकवाच्यत्वे हि स्त्रीप्रत्ययस्य तद्द्योतकत्व युज्यते । *पुंशब्दस्य प्रकृतित्व इति * । पुंवाचकशब्दस्य प्रकृतित्व इत्यर्थं । एतेन पुंसि विद्यमानस्य शस इति नार्थ इति इति सूचितम् । वार्त्तिकविरोधशङ्कां वारयति । * अभिहित इति * । * एतेन * । उक्तव्याख्यानेन । * तन्मये * । वार्त्तिककारमते । लिङ्गग्रहणस्य सार्थक्याय भूमिकामारचयति । * तटादिशब्दानामपीति * । यदि प्रातिपदिकजन्योपस्थितिविषयस्यैव प्रातिपदिकार्थपदेन ग्रहण स्यात्तदा लिङ्गस्यापि तटादिशब्दजन्योपस्थितिविषयतया प्रातिपदिकार्थपदेन तेभ्य प्रथमासिद्धौ लिङ्गग्रहण व्यर्थं स्यादिति भाव । ननु लिङ्गस्य ततो नियतोपस्थितिकमत आह । * नियमाशनिवेशो त्विति * । अत एव आलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्च प्रातिपदिकार्थमात्रे इत्येतदुदाहरणत्वेन प्रातिपदिकार्थे किमुदाहरणमिति प्रश्ने स्त्री पुमाश्नपुंसकमित्येते दर्शिता । अन्ये लिङ्गाधिक्य इत्यस्य । अत्रैवार्थे वृत्तिकारस्सम्मतिमप्याह । * इदमेवेति * । प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थ

यस्तु तदाक्षिप्तत्वान्न पृथगुक्तः। एवञ्च प्रातिपदिकार्थ इत्यस्यालिङ्गमप्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहरणम्, लिङ्गविशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम्। अन्ये सर्वे लिङ्गाधिक्ये इत्यस्य। द्रोणत्वादिप्रवृत्तिनिमित्तकानाद्द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वयि। एवञ्च तस्य लिङ्गवत्प्रातिपदिकार्थत्वाभावात्परिमाणग्रहणम्। द्रोणः परिमाणमित्येव तु द्वौ ब्राह्मणावितिवत्प्रयोगः द्रोणशब्दस्यानेकार्थत्वाद्वा। मूलोक्त [illegible] न युक्तम्। द्रोणो व्रीहिमानयेत्यस्यापत्तेः। किञ्च तिङ्समाना

---

पदेन ग्रहणस्याभिप्रेतत्वादेव। * अव्ययपुमादयइति *। अव्ययस्य प्रातिपदिकार्थइत्येतदुदाहरणे प्रमाणन्तु प्रातिपदिकग्रहणङ्किमर्थम्। उच्चैर्नीचैरित्यत्रापि यथा स्यादितिभाष्यमेव। * अन्ये सर्वे इति। *। कृष्णादय। तत्र लिङ्गप्रतीतेराधिक्यात्। एव खट्वादिशब्दानामपि लिङ्गप्रवृत्तिनिमित्तकत्वाभावेन लिङ्गाधिक्य इत्येतदुदाहरणत्वमेव। न च मृडानी हिमानीत्यादौ पुयोगमहत्त्वादेरधिकस्य भानेन प्रथमा न स्यादिति वाच्यम्। मृडानीत्यादावारोपितमृडत्वमृडत्वान्यतरप्रवृत्तिनिमित्तमस्य भानमस्त्वे। यदि स्वस्य न भान्तदा स्वारोपितमृडस्वरूपप्रवृत्तिनिमित्तमेव प्रतीयते इति न मात्र-पदेन व्यावृत्ति। एव हीमानीत्यत्र महत्त्वविशिष्टहिमस्य प्रवृत्तिनिमित्तमिति स्वीकारात्। परिमाणग्रहणचारितार्थ्य माह। * द्रोणत्वादिप्रवृत्तीति *। लिङ्गवदिति *। यथाकृष्णादिशब्दजन्यप्रतीतिविषयस्य लिङ्गस्य विशेषणतया भानं तथा द्रोण खारी आढकमित्यादिशब्दे य परिमाणाभिधो द्रोण इत्याद्याकारो बोधो भवतीति द्रोणादिशब्दजन्यप्रतीतौ परिमाणस्याधिकस्य भानमत परिमाणग्रहणमिति भावो द्रोणादिकमखण्डोपाधिजातिविशेषो वा। तद्वयवत्त्वविशेषावच्छिन्नपलादिपरिच्छेदकत्वसमानाधिकरणम्। काकाक्षिवाचकस्य तु लिङ्गाधिक्य इत्येतदुदाहरणत्वमेव। ननु परिमाणमपि यदि द्रोणादिशब्दार्थस्तदा द्रोण परिमाणमिति सह प्रयोगानुपपत्तिरत आह। * द्रोण परिमाणेति *। सम्भेदेनान्यतरवैयर्थ्यमिति न्यायात्। अभ्युपेत्य वादोऽयम्। वस्तुत। सन्देहनिवृत्त्यर्थं तथा प्रयोग इत्याशयनाह। * द्रोणशब्दस्येति *। मूलोक्तरीत्या परिमाणग्रहणस्य सार्थक्य खण्डयति। * मूलोक्तमिति *। न च तिङ्समानाधिकरणे प्रथमेति वार्त्तिकसम्मत्या समानाधिकरणनामान्तरान्वय एव परिमाणमात्रे प्रथमा इति प्रागुक्तत्वात्सद्रीत्या नायन्दोष इति वाच्यम्। [illegible] करणनामार्थ तरार्थेन्वयविवक्षा किन्तु तदर्थस्य सत्त्वमात्र[illegible] थमातापत्तेस्त नियमास्वीकारात्। यदि कल्पनाऽतिग[illegible] यते तदाप्याह। * किञ्चेति *। तिङ्[illegible]धिकरण्य[illegible]

धिकरणे प्रथमेति वार्तिकैकवाक्यतया भेदान्वये द्रोणो व्रीहिरित्यनिष्टम्। न च यदा परिमेये द्रोणादीनां वृत्तिस्तदा तस्यानेकत्वेन परिमाणमात्रपरत्वे तद्बोधने च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाभावेन प्रातिपदिकार्थत्वासिद्धौ कर्मव्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहणमिति कैयटोक्तं युक्तमिति वाच्यम्। सिंहो माणवक इत्यस्यासिद्ध्यापत्तेः, तद्वदस्यापि सिद्धेश्च। नियमांशनिवेशे मानाभावाच्च। एको द्वावित्यादिसिद्धये तु वचनग्रहणम्। अन्यथैतत्सूत्रोपस्थितानभिहित इत्यस्यात्र फलाभावादेकवाक्यतापन्नसङ्ख्यावाक्यान्वयित्वेन तदप्राप्तेः। रामावित्यादौ सङ्ख्याधिक्ये प्रथमा तु

---

भिधायकत्वन्तस्य मूलोक्तरीत्या नास्तीति भावः। प्रत्युत तिङर्थेऽन्वय एव साधुत्वमिति वार्तिकाल्लभ्यते, मूलोक्तरीत्याऽन्वये त्वसाधुत्वमस्य स्यादित्यपि बोध्यम्। कैयटोक्तपरिमाणग्रहणसार्थक्यं दूषयति। * न चेत्यादिना *। न चेत्यादिना। * मेये *। परिच्छेद्ये। * कर्मव्युत्पत्त्या *। परिमीयते यत्तत्परिमाणमितिरीत्या। * असिद्ध्यापत्तेरिति *। अत्र सिंहशब्दस्य सिंहसदृशप्रतिपादकतया कस्यापि सदृशस्य नियतप्रातिपदिकार्थत्वं नास्ति। * तद्वदिति *। पदे एव लक्षणेति प्रागुक्तरीत्या स्वार्थमात्रे सिद्धे तस्य साधुत्वमिति रीत्या यदि सिंहो माणवक इति वाक्यं साध्विति चेत् तदा द्रोण इत्यादीनामपि साधुत्वं तथैव भविष्यतीति भावः। न च परिमाणमात्रविषयकप्रतीतिजनकत्वं प्रथमेत्यस्य द्रोण इत्यादीत्याद्युदाहरणमिति कथं लिङ्गस्याप्येभ्यः प्रतीतिरिति वाच्यम्। परिमाणभिन्नत्वे सति प्रातिपदिकार्थलिङ्गान्यतरभिन्नो यस्तद्विषयकत्वस्य प्रतीतिविशेषणत्वात्। ननु प्रातिपदिकेन प्रातिपदिकार्थस्योक्तत्वेऽपि प्रातिपदिकार्थे प्रथमेति वचनसामर्थ्यात्तदर्थगतसङ्ख्याया अनभिहितत्वमादाय प्रथमा एकादिशब्दस्थले तु सङ्ख्याप्यभिहितेति प्रथमा न स्यात्। यदि न केवलेतिसमयपरिपालनाय एभ्य इव प्रथमेति स्वरूपे तदैकादिशब्देभ्यो द्विवचनबहुवचनयोरप्यापत्तिरत आह। * एको द्वावित्यादीति *। सङ्ख्यावाक्यान्वयित्वेन। प्रातिपदिकार्थस्यानभिहितत्व इत्यर्थस्तु पूर्वोक्तरीत्या वक्तुमशक्य किन्तु तदर्थगतसङ्ख्यामनभिहितायामित्येव वाच्यमेव सति तादृशवाक्यस्यान्यत्र चरितार्थत्वादेको द्वौ त्रय इत्यत्र न स्यादिति भावः। नन्वेवं रामावित्यादौ प्रथमा न स्यात्तेषु लिङ्गाधिक्येऽपि तन्मात्राधिक्याभावादत आह। * रामावित्यादाविति *। * सङ्ख्याधिक्येति *। सङ्ख्याधिक्यस्याविवक्षायामित्यर्थः। लिङ्गमात्राधिक्येऽपि प्रातिपदिकार्थगतद्वित्वादौ विवक्षित इत्यर्थः। न च राम इत्यत्र सङ्ख्याधिक्यसत्त्वात्प्रथमा न स्यादित्येवैकवचनान्तस्य पुरस्फूर्तिकत्वात् कुतो न शङ्का कृतेति वाच्यम्। द्व्येकयोरितिसूत्रस्थैकशब्दस्य प्रत्याख्यानेनादोषात्।

श्रेकयोरित्यत्रैकवाक्यतयेति बोद्ध्यम् । मात्रग्रहणन्तु यथा कर्मणि द्वितीये- ति नियमेन कर्मत्वाश्रयसमानकालिकार्थान्तरस्यैव व्यावृत्तिः न तु तच्छ्रा- नसमानकालिकार्थान्तरस्य । अत एव गां दोग्धि पय इत्यादावपादानत्वा- द्विवोधेऽपि द्वितीया । एवञ्च कर्मणि सत्येव द्वितीया, न तु तदसत्त्वे इति नियमाकारः, तथानेनापि प्रातिपदिकार्थसत्त्वे एव प्रथमा न तु तदसत्त्वे इत्येव नियमः स्यात् । एवञ्चानर्थकनिपातेभ्यः प्रथमा नैव स्यात्, एवञ्च तत्समभिव्याहारे सपूर्वायाः प्रथमेत्यादिशास्त्रप्रवृत्तिर्न स्यात्, तत्सत्त्वे क- र्मादियोग्यार्थकप्रातिपदिकार्थसद्भावितस्वार्थे इत्यर्थात्स दोषः । इदमेव मात्रग्र-

---

सौत्रमात्रग्रहणप्रयोजनमाह । * मात्रग्रहणस्येति * । मात्रग्रहणाभावे त्विति पाठ । अस्य इति नियमः स्यादित्यनेनान्वय । कर्मण्येव द्वितीयेत्येवंविधनिय- मेन मम कर्मत्वाश्रयानन्तरस्यैव द्वितीया व्यावर्त्यते इत्यभिप्रायेणाह । * यथा कर्मणे त्यादि * । * कर्मत्वाश्रयसमानकालिकस्य * । कर्मत्वाभावसमानाधिकरणस्य । * अर्थान्तरस्य * । तृतीयादिप्रयोजककरणत्वादे । * अपादानत्वाद्विवक्षेऽपी ति * । गां दोग्धि पय इत्यत्रान्त स्थितद्रवद्रव्यसंश्लिष्टविभागानुकूलव्यापारानुकू लव्यापारोऽर्थ इति स्वीकारे तद्योगेऽपादानत्वकर्मत्वयो प्राप्तावपादानमुत्तरा णि कारकाणि बाधन्त इत्याकरेतिसूत्रस्थभाष्योक्तरीत्या स्थितकर्मत्वमादाय द्वितीया यथा भवतीति भाव । दार्ष्टान्तिके योजयेति । * तथाऽनेनापीति * । प्रातिपदिकार्थ इतिसूत्रेणापीत्यर्थ । प्रातिपदिकार्थसत्त्व एव प्रथमा न तु तदसत्त्व इत्यस्य प्रातिपदिकार्थसत्त्वाभावविशिष्टशब्दव्यावर्तकता स्यादिति भाव । * अनर्थकनिपातेभ्य * । पादपूरणार्थेभ्य । तेषां प्रवृत्तिनिमित्ततदाश्रयरूपप्राति पदिकार्थाभावस्यात् । इष्टापत्तावाह । * एतच्च तत्समभिव्याहार इति * । अन र्थकनिपातसमभिव्याहार इत्यर्थ । घट पटौ वै मम स्त घट पटौ वै मे स्वामि त्यादौ । तत्सत्त्व इति । मात्रपदसत्त्व इत्यर्थ । * कर्मत्वादियोग्यार्थकेति * । कर्मत्वाद्याधिक्ये प्रथमाव्यावृत्त्यर्थं हि मात्रग्रहण तेन पर्युदासन्यायेनैतल्लाभ । न चानर्थकनिपातेभ्यो मात्रग्रहणाभावे पूर्वोक्तरीत्या यदि प्रथमा न भवेत्तदाऽनर्थ कस्य निपातस्य प्रातिपदिकसंज्ञेतिवार्तिकवैयर्थ्यमिति वाच्यम् । स्वरार्थं तत्स्या त् । न च निपाता आद्युदात्ता इत्यनेन स्वरो भविष्यतीति वाच्यम् । अव्ययेभ्य स मानामपि विभक्तीनामेकवचनानीति पक्षे द्वितीयाद्यर्थन्तदित्याशयात् । कर्म त्वयोग्यार्थकेति निवेशयित्वा यदि नियमस्तदाऽनर्थकनिपातेभ्यः प्रथमा सुतरां सिध्यतीति भाव । ननु भवदुक्तरीतिमे किम्मानमत आह । * इदमेवेति * । * तदकरणलाघवेनेति * । मात्रग्रहणाकरणलाघवेनेत्यर्थ । स्पष्टञ्चेदम्भाष्य इति * । तत्र हि शङ्कासमाधानाभ्यामेवमुक्तम् । अथ गां

हणे कर्मणि द्वितीयेत्यादेर्मदुक्ताकारनियमत्वे मानम् । मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते । तदकरणलाघवेन तु कर्मणि द्वितीयैवेत्यर्थनियम उक्तो भाष्यादौ । स्पष्टञ्चेद सर्वं भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितमित्याहुः ॥

सम्बोधने च ॥ तत्र वर्त्तमानादित्यर्थः । सम्बोधनमभिमुखीकरणं तत्फलं प्रवृत्तिनिवृत्ती सम्बोध्यतावच्छेदकरूपेण सम्बोद्धास्य सिद्धिं विना

---

त्रग्रहणं किमर्थम् । एतन्मात्र एव प्रथमा यथा स्यात् । * कर्मादिविशिष्टे मा भूदिति * । अत्र कर्मादिशब्दस्तच्छक्तिपरः । कटं करोति । नैतदस्ति प्रयोजनम् । कर्मादिषु द्वितीयादयो या विभक्तयस्ता कर्मादिविशिष्टे बाधिका भविष्यन्ति।अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति न कर्मादिविशिष्टे प्रथमा भवतीति। यद्यस्मिन् सम्बोधने प्रथमा शास्ति अधिकस्यार्थस्य सद्भावेपि प्रातिपदिकार्थसद्भावनिमित्ताश्रयेण चेत्प्रथमा तदा सम्बोधनाधिक्येऽप्येवमेव प्रथमा भविष्यति पुनस्तत्किमर्थमिति भावः । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । आमन्त्रितमिति वक्ष्यामीति । यर्ह्यहि योगविभागं करोति । इतरथा सम्बोधने आमन्त्रितमित्येव ब्रूयात् इति * । भाष्यप्रदीपोद्योते निरूपितमिति * । शेखरोक्तरीत्यैव निरूपितम् । * द्वितीयादयो या विभक्तय इति * । कर्मणि द्वितीयैवेत्येवमर्थनियमपक्षे द्वितीयादीनां स्वस्वविषये प्रथमाबाधकतया कर्माद्याधिक्ये प्रथमाया अप्राप्त्या मात्रग्रहणं न कार्यमिति सूचितम् । यदि मात्रग्रहणं न क्रियते तदा सम्बोधने चेतिसूत्रं लिङ्गादिग्रहणञ्च न कार्यमित्यपि ध्वनितम् ।

सम्बोधने चेतिसूत्रं व्याचष्टे । * तत्र वर्त्तमानादिति * । प्रातिपदिकादित्यधिकारतो लब्धम् । सूत्रकारमते मात्रग्रहणप्रातिपदिकार्थेतिसूत्रेऽस्तीत्यस्यारम्भः । * अभिमुखीकरणमिति * । स्वोच्चारितशब्दबोध्यो योऽज्ञातार्थस्तद्बोधानुकूलव्यापारानुकूलो व्यापार इत्यर्थः । सम्बोध्यश्च स्वव्यापारप्रयोज्यो यस्तादृशार्थबोधानुकूलो व्यापारस्तदाश्रय उच्यते । राम मां पाहीत्यादौ तादृशोऽज्ञातार्थबोधे प्रकृत्यर्थस्य समवेतत्वसम्बन्धेनान्वयः तत्रैव विषयभूतार्थेऽभेदसम्बन्धेन प्रेरणाविषयमत्कर्मकरक्षणस्यान्वयः । सम्बोध्यतावच्छेदकत्वेन यो ज्ञातः स एवोच्चारयिताऽभिमुखीक्रियते तेन रूपेण । अत एव ब्राह्मणत्वेन यो ज्ञातः स एव हे३ब्राह्मणात्रागच्छेत्येवमभिमुखीकृत्योच्यते न तु हे३क्षत्रियेति । एवञ्च राम समवेतो यो मत्कर्मकप्रेरणाविषयरक्षणाभिन्नार्थबोधस्तदनुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधः । * तत्फलम्प्रवृत्तिनिवृत्ती इति * । हे देवदत्त तत्र गत्वा जलन्तत आनीयतामितिवाक्यप्रयोगो यत्र कृतो मैत्रेण तत्र देवदत्तस्य

तस्यासम्भवादनुवाद्ये एवैषा विभक्तिः । अत एव विधेयभूतक्रियायामेवैत- दर्थान्वय उद्देश्यतया । अत एव राजा भव युद्धस्व राजन्युद्ध्यस्वेत्यनयो र्व्यवस्थयैव प्रयोगः । राम पाहीत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तना-

---

देवदत्तसमवेततद्देशाधिकरणकगमनाभिन्नार्थविषयकप्रेरणाविष- यानयनाभिन्नार्थबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारक शाब्दबोधो जा यते तदनन्तरन्देवदत्तस्य प्रवृत्तिर्भवति । यत्र तु देवदत्त तवारण्ये व्याघ्रादिसे विते न गन्तव्यमिति यज्ञदत्तेनोक्तन्तत्र देवदत्तस्य प्रेरणाविषयतद्देशाधिकरणक गमनाभावाभिन्नार्थविषयकदेवदत्तसमवेतबोधानुकूलव्यापारानुकूलो व्यापार इ त्याकारकशाब्दबोधे जाते तदनन्तरन्तद्देशाधिकरणकगमनमनिष्टसाधनमिति मानसबोधे गमनान्निवृत्ति । एवं यत्र प्रवृत्तिस्तत्र तादृशशाब्दबोधानन्तरम्प्रेर- णाविषयत्वेन ज्ञातक्रियायामिष्टसाधनताज्ञानमनन्तरम्प्रवृत्तिरित्यूहनीयम्। * त स्यासम्भवादिति * । तेन रूपेण सम्बोध्यत्वासम्भवादित्यर्थः । एतेन सम्बोध्य- स्योद्देश्यत्वे बीजं दर्शितम् । सिद्धं हि लोके उद्देश्यम्भवति । * अत एव * । अस्यानुवाद्यविषयत्वादेव । * एतदर्थान्वय * । उद्देश्यस्य सम्बोधनान्तार्थतया तस्य क्रियाया विधेयभूतायामन्वय । सम्बोधनपदस्य कारकवाचित्वव्यवहारो- ऽप्येतन्मूलक एवास्मिद्युक्तानाम् । ननु पूर्वाक्तरीत्या बोधे सम्बोधनान्तार्थान्वय- स्वीकारे तिङ्समानाधिकरणे प्रथमेतिवार्त्तिकविरोध इति चेत् । एवन्तर्हि स म्बोधनान्तार्थस्य विधेयभूतक्रियाया विशेषणताप्रत्ययो य आख्यातार्थस्तत्रैवान्वय स्वीकार्यः । बोधे सम्बोध्यवृत्तित्वस्य तु प्रत्यासत्त्या लाभ । * अत एव * । सम्बोध्यतावच्छेदकरूपेणसम्बोध्यस्य यत्र सिद्धत्वं तत्रैव सम्बोधनविभक्तिस्वी- कारादेव । * व्यवस्थयैव प्रयोग इति * । यथा रामायणे वाल्मीकीये अयोध्या- काण्डे चित्रकूटे प्रसादनार्थं रामम्प्रति समागतम्भरतम्प्रति रामवाक्ये ।

त्वं राजा भव भरत स्वयन्नराणां वन्यानामहमपि राजराण्मृगाणाम् ॥

गच्छ त्वम्पुरवरमद्य सम्प्रहृष्टः संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ।

इतिपद्ये त्वं राजा भवेति सम्बोधनविभक्त्यन्तोऽभवत्र प्रागुक्तम् । ननु इन्द्रशत्रो वर्धस्वेति भागवते प्रयुज्यमानं सङ्गच्छते कथमिति चेदार्षत्वात् । एवं सति यादृशो ऽर्थः फलितस्तमाह । * राम मामपाहीत्यादाविति * । एवञ्च यद्रूपावच्छिन्नस्य सम्बोध्यता प्रतीयते तद्रूपावच्छिन्न एव त्वम्पदस्य यत्र प्रयोगस्तत्र परामृश्यते । सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्य युष्मदर्थत्वात् । अत एव स- म्बोधनविभक्त्य तत्समानवचनक समानविभक्त्यन्तमेव त्वमित्यादि पदं साधु । यत्र तु विधेयभूतक्रियावाचकन्न श्रूयते तत्र वाक्यार्थपर्यवसानाय यत्किञ्चिदध्य- ए दर्शयति । * भजामि देवदत्त इत्यादि * । यत्र तु देवदत्त त्वम्पण्डित इत्येव।

विषयो रक्षणमिति बोधः। वृजानि देवदत्तेत्यादावपि जानीहि इत्यादिः शेषो बोद्धयः। तत्र वृजनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम्। एकतिङ् वाक्यमित्यस्य च श्रूयमाणैकतिङित्यर्थ इति न दोषः। उद्देश्यविधेयभावो वाक्यार्थः, अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपः। वृजानीति प्राप्तकाले लोट्। अत एव गच्छेत्याद्यध्याहारे धिक् मूर्खेत्यादौ प्रथमा। अनध्याहारे तु द्वितीयैवेति दिक्।

॥ इति प्रथमा ॥

---

कन्तत्र असीत्यध्याहारः। अत एव विधेयभूतक्रियावाचकपदं लोडाद्यन्तमेव प्रयोक्तव्यमिति न नियम इति दिक्॥ ननु प्रजानीत्यादौ जानीहीत्यादेरध्याहारे एकतिङ्वाक्यमितिलक्षणानाक्रान्तत्वात्तेषु निघातादीनामप्रवृत्तिः कथं स्यादत आह। * एकतिङिति *। श्रूयमाणैकतिङित्यर्थ इत्यत्र बहुव्रीहिः। इदं समाधानम्प्राचीनरीत्या। यदि तु प्रविश पिण्डीमित्यत्रेव वाक्यैकदेशन्यायेन बोधः स्वीक्रियतेऽध्याहारपदार्थोऽपि स एवाश्रीयते तदा यथाश्रुतमेव साधु। उद्देश्यविधेयभावस्य कुतो लाभ इत्यत आह। * उद्देश्यविधेयभाव इति *। अभिमुखीभवनानुकूलव्यापारमाह। *अभिमुखीति *। * अत एव *। सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियायामन्वयादेव। यदि धिक्शब्देन योगः स्यात्तदा द्वितीया स्यादिति प्रथमान्तस्याध्याहृतो यो ऽसीतिशब्दस्तत्प्रतिपाद्यक्रियायामन्वयः। * अनध्याहारे *। असीत्यादिशब्दानध्याहारे। तदा धिक्शब्देन योगे द्वितीया भवतीति भावः॥

इति प्रथमाविवरणम्॥

तत्त्वासम्भवादनुवादे प्रथमा विभक्तिः। अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया। अत एव राजा भव युद्धस्व राजन्युद्ध्यस्वेत्यनयोर्व्यवस्थयैव प्रयोगः। राम पाहीत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तना-

---

देवदत्तसमवेततद्देशाधिकरणकगमनविशिष्टअलकर्मकतद्देशापादानकप्रेरणाविषयानयनाभिन्नार्थबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधो जायते तदनन्तरं देवदत्तस्य प्रवृत्तिर्भवति। यत्र तु देवदत्त तत्रारण्ये व्याघ्रादिसत्त्वे न गन्तव्यमिति यज्ञदत्तेनोक्तं तत्र देवदत्तस्य प्रेरणाविषयतद्देशाधिकरणकगमनाभावाभिन्नार्थविषयकदेवदत्तसमवेतबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकशाब्दबोधे जाते तदनन्तरं तद्देशाधिकरणकगमनमनिष्टसाधनमिति मानसबोधे गमनान्निवृत्तिः। एवं यत्र प्रवृत्तिस्तत्र तादृशशाब्दबोधानन्तरं प्रेरणाविषयत्वेन ज्ञातक्रियायामिष्टसाधनताज्ञानमनन्तरं प्रवृत्तिरित्यूहनीयम्। * त-त्त्वासम्भवादिति *। तेन रूपेण सम्बोध्यत्वासम्भवादित्यर्थः। एतेन सम्बोध्यस्योद्देश्यत्वे बीजं दर्शितम्। सिद्धं हि लोके उद्देश्यं भवति। * अत एव *। अस्यानुवादविषयत्वादेव। * एतदर्थान्वय *। उद्देश्यस्य सम्बोधनान्तार्थतया तस्य क्रियायां विधेयभूतायामन्वय। सम्बोधनपदस्य कारकवाचित्वव्यवहारोऽप्येतन्मूलक एवाभियुक्तानाम्। ननु पूर्वोक्तरीत्या बोधे सम्बोधनान्तार्थान्वयस्वीकारे तिङ्समानाधिकरणे प्रथमेति वार्त्तिकविरोध इति चेत्। एवन्तर्हि सम्बोधनान्तार्थस्य विधेयभूतक्रियायां विशेषणतापक्षे च आख्यातार्थस्तेनैवान्वयः स्वीकार्यः। बोधे सम्बोधनवृत्तित्वस्य तु प्रत्यासत्त्या लाभः। * अत एव *। सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य यत्र सिद्धत्वं तत्रैव सम्बोधनविभक्तिस्वीकारादेव। * व्यवस्थयैव प्रयोग इति *। यथा रामायणे वाल्मीकीये अयोध्याकाण्डे चित्रकूटे प्रसादनार्थं रामं प्रति समागतं भरतं प्रति रामवाक्ये।

त्वं राजा भव भरत स्वयं नराणां वन्यानामहमपि राजराण्मृगाणाम्॥
गच्छ त्वं पुरवरमद्य सम्प्रहृष्टः संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये।

इति पद्ये त्वं राजा भवेति सम्बोधनविभक्त्यन्ताभावः प्रागुक्तम्। ननु इन्द्रशत्रो वर्द्धस्वेति भागवते प्रयुज्यमानं सङ्गच्छते कथमिति चेदार्षत्वात्। एवं सति यादृशोऽर्थः फलितस्तमाह। * राम मां पाहीत्यादाविति *। एतच्च यद्रूपावच्छिन्नस्य सम्बोध्यता प्रतीयते तद्रूपावच्छिन्न एव त्वम्पदस्य यत्र प्रयोगस्तत्र परामृश्यते। सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्य युष्मदर्थत्वात्। अत एव सम्बोधनविभक्त्यन्तसमानवचनक समानविभक्त्यन्तमेव त्वमित्यादि पदं साधु। यत्र तु विधेयभूतक्रियावाचकं श्रूयते तत्र वाक्यार्थपर्यवसानाय यत्किञ्चित्स्थले दर्शयति। * अजानि देवदत्त इत्यादि *। यत्र [redacted] देवदत्त त्वं पण्डित इत्येवमा-

विषयो लक्षणमिति बोधः। वृजानि देवदत्तेत्यादावपि आनीहि इत्यादिः शेषो बोध्यः। तत्र वृजनस्य कर्तृत्वाविवक्षयासदस्येत्यादावुभयोः समानवाक्यस्थत्वम्। एकतिङ् वाक्यमित्यस्य च श्रूयमाणैकतिङ्घटितत्वम् इति न दोषः। उद्देश्यविधेयभावो वाक्यार्थः, अभिमुखीभवनानुकूलव्यापारश्च संबोधनविभक्त्यन्तशब्दप्रयोगरूपः। वृजानीति प्रामादिकं लोट्। अत एव गच्छेत्याद्यध्याहारे धिक् मूर्खेत्यादौ प्रथमा। अनध्याहारे तु द्वितीयेति दिक्।

॥ इति प्रथमा ॥

---

त्यन्तश्च असीत्यध्याहारः। अत एव विधेयभूतक्रियावाचकपदं लोडाद्यन्तमेव प्रयोक्तव्यमिति न नियम इति दिक्॥ ननु वृजानीत्यादौ आनीहीत्यादेरध्याहारे एकतिङ्वाक्यमितिलक्षणानाक्रान्तत्वात्तेषु निपातादीनामव्याप्तिरित्यत आह। * एकतिङिति *। श्रूयमाणैकतिङ्घटितत्वमित्यर्थः इत्यत्र बहुव्रीहि। इदं च समाधानम् प्राचीनरीत्या। यदि तु प्रविश पिण्डीमित्यत्रेव वाक्यैकदेशन्यायेन बोधः स्वीक्रियतेऽध्याहारपदार्थोऽपि स एवाश्रीयते तदा यथाश्रुतमेव साधु। उद्देश्यविधेयभावस्य कुतो लाभ इत्यत आह। * उद्देश्यविधेयभाव इति *। अभिमुखीभवनानुकूलव्यापारमाह। * अभिमुखीति *। * अत एव *। संबोधनविभक्त्यन्तस्य विधेयभूतक्रियायामन्वयादेव। यदि धिक्शब्देन योगः स्यात्तदा द्वितीया स्यादिति प्रथमान्तस्याध्याहृतो यो ऽसीतिनामन्त्रितविधेयक्रियायामन्वयः। * अनध्याहारे *। असीत्याद्यध्याहारे। तदा धिक्शब्देन योगे द्वितीया भवतीति भावः॥

इति प्रथमाविवरणम्॥

कारके ॥ कारकत्वं क्रियाजनकत्वम् । भाष्ये करोति क्रियां निर्वर्त्तयतीति व्युत्पत्तिप्रदर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वं पुत्रेणान्यथासिद्ध्या तत्त्वाभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोध्यम् । असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानस्य पूर्वकालत्वेनैव जनकत्वम् ।

---

कारके इत्यधिकृतस्य उत्तरसूत्रैकवाक्यतया बोधकत्वम्तदा स्यादि तदर्थं परिज्ञातं स्यादतस्तस्यार्थमाह । * कारकत्वमित्यादिना * । कारकशब्दः करोति कर्तृकर्मादिव्यपदेशानिति विवक्षया क्रियापरं जनकमित्यध्याहारः । सम्बन्धानिरूपितत्वम् । तस्य जनकशब्दार्थैकदेशजनकतायामन्वयः । एतेन क्रियाजनकस्य कारकत्वमित्यथादुक्तम्भवति । कारकाधिकारप्रयोजनमाह । * ब्राह्मणस्येति * । अकथितञ्चेतिसूत्रमपादानत्वादीनामप्रसक्तिपूर्वकाविवक्षायां सर्वथा तदविवक्षायाञ्च प्रवर्तते इत्यग्रे वक्ष्यते । एवञ्च पुत्रमित्यत्र सर्वथा तदप्राप्तिसत्त्वादकथितञ्चेत्यनेन कर्मसंज्ञाप्राप्तिः स्यात्कारकाधिकारे कृते सति तु न । ब्राह्मणस्य कारकत्वाभावात् । कारकत्वाभावमुपपादयति । * पुत्रेणान्यथासिद्धेति * । जनकत्वस्यानन्यथासिद्धनियतपूर्ववृत्तित्वरूपतया ब्राह्मणेऽपत्यस्य सत्त्वेऽनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथा सिद्धमित्यन्यथासिद्धिसत्त्वेन कारकत्वाभावात् । * अत एव * । कारकाणां क्रियाजनकत्वादेव । * स्वस्वावान्तरक्रियाद्वारेति * । स्वस्वनिष्ठफलोत्पत्त्यनुकूलक्रियाद्वारेत्यर्थः । सर्वस्मिन्नेव कारकत्वेनाभिप्रेते फलानुकूला क्रियाऽस्त्येव । एतावान् परं विशेषः । यदा यन्निष्ठक्रियाया प्राधान्येन धातुवाच्यत्वविवक्षा तदा तस्य कर्तृत्वम् । काष्ठम्पचति । स्थाली पचतीति यथा । यदा तु न तन्निष्ठव्यापारस्य प्राधान्येन धातुवाच्यत्वविवक्षा तदा तेषाम् कर्तृत्वम् । कारणत्वादिकम् । तदुक्तं हरिणा ।

वस्तुतस्तदनिर्देश्यञ्च हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यत इति ॥

ननु यदा सन्निधाने स्थितः स महान्ब्राह्मणं देहीति दातारं याचते तदनन्तरं स ददातीति सम्प्रदानव्यापारस्य दानक्रियापूर्वकालिकत्वात्सम्भवति कारकत्वम् । यदा तु सोऽसन्निहितः अथ च मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । दाता तत्फलमाप्नोति प्रतिग्राही न दोषभागित्युक्तत्वेन तादृशसम्प्रदानमुद्दिश्यन्तदा तद्व्यापारस्य कथं कारकत्वं तस्मिन् व्यापाराभावादत आह । * असन्नि-

एवं स्तोकम्पचतीत्यादौ फलस्यापि घटं करोति स्मरति इत्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोद्ध्यम् ।

कर्तुरीप्सित ॥ ईप्सितशब्दो ऽत्र क्रियापरो नाभिप्रेतपरो रूढः । स्पष्टञ्चेद वारणार्थानामित्यत्र भाष्यकैयटयो' । कर्तुरितिकृतस्य च वर्त्तमान इति कर्तरि षष्ठी । आप्नोतेः सन्नन्तान्मतिबुद्धीति वर्त्तमाने कर्मणि क्तः । मतिरिच्छेति तत्राकरः । एवञ्च कर्त्राप्तुमिष्यमाण कर्मेत्यर्थः । आप्तिश्चात्र

ह्वितेति * । * स्वज्ञानपूर्वकालत्वेनेति * । स्वज्ञानम्पूर्वकाल यस्या सा स्वज्ञानपूर्वकाला तस्या भाव स्वज्ञानपूर्वकालत्वम् । यथा यागस्य साक्षात् स्वर्गाव्यवहितपूर्ववृत्तित्वाभावेऽपि परमापूर्वद्वारा स्वर्गजनकत्वन्तथा विषयविधयाऽसन्निहितसम्प्रदानजन्य यत्तद्विषयक ज्ञान तज्ज्ञानक्रियाऽव्यवहितपूर्वकालवृत्तीति सम्प्रदानस्यापि क्रियाजनकत्वमस्तीति भाव । * फलस्यापीति * । स्वज्ञानद्वारा व्यापारजनकत्वम् । प्रथमम्फलज्ञानन्तत फलेच्छा ततस्तदुपायान्वेषण ततस्तदुपाये फलसाधनताज्ञानन्तत उपायेच्छा तत उपायेनिष्टसाध्यस्याख्यविषयताका प्रवृत्तिरित्येवक्रमेण फलस्य क्रियाजनकत्वमिति भाव । * बौद्धघटादेरिति * । बुद्धिसत्तासमाविष्टस्य घटशब्दवाच्यत्वात् । * स्मृत्यादीनामिति * । आदिना घटङ्करोतीत्यादिसङ्ग्रह ।

* अत्र क्रियापर इति * । इदमुपलक्षणम् । तथायुक्तम्, स्पष्टञ्चेदीप्सित, वारणार्थानामितिसूत्रेप्यप्यारूढ एव । अयम्भाव । कर्तुरिति न शेषे षष्ठी । घटो नीलो जायतामितीच्छया नीलकरणे यत्र प्रवृत्तिस्तत्र पटे नीलङ्करोतीति प्रयोगानुपपत्ते । अधिकरणसञ्ज्ञाम्बाधित्वा पटस्य कर्मत्व स्यात् । किन्तु कर्तुरिति कर्तृषष्ठी । एव सत्यस्य रूढत्वे कर्तृषष्ठ्यन्तस्यानन्वयापत्तिरत क्रियाशब्दोऽयमिति । न चाक्षिप्तक्रियायामन्वयो भविष्यतीति वाच्यम् । श्रोतक्रियान्वयसम्भवे आक्षिप्तक्रियान्वयमादाय कारकषष्ठ्युपादनमनौचित्यमित्याशयात् । * स्पष्टञ्चेदमिति * । तत्र हि किमुदाहरणम् माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावस्तस्य माषा इप्सिता स्युः । यस्य तु खलु गावो न माषा कथन्तस्य माषा इप्सिता स्यु' । अभिप्रेतपर्यायमीप्सितशब्दम्मन्यत इति कैयटः । तस्यापि माषा एवेप्सिता । एवकारो भिन्नक्रम । माषा ईप्सिता एवेत्यर्थ । अतश्चेप्सिता यदेभ्यो गा वारयति । अत्र कैयट । ईप्सितशब्द क्रियाशब्द आश्रीयते न तु रूढिशब्द । तत्र वारणक्रियया परकीया अपि माषा वारयितुमीप्सिता भवन्ति । माऽश्नन्त्वेते इत्येतेभ्योऽसौ गा वारयति । इह कूपादन्ध वारयतीति कूपेऽपादानसञ्ज्ञा न प्राप्नोति न हि तस्य कूप ईप्सित । कस्तर्ह्यन्ध ईप्सितशब्दस्य रूढत्याभिप्रायेण प्रश्न । तस्यापि कूप एवेप्सित पश्यत्ययमन्ध कूपम्मा प्रापदिति ॥ क्रियाशब्दत्वमेवेप्सितशब्दस्येत्याभिप्राय इति । * मतिरिच्छेति * । पुनर्बुद्धिग्रहणात् । एव सति यादृशो वाक्यार्थ सम्पन्नस्तमाह । * एवञ्चेति * । [illegible] । * आप्तिश्चात्रेति * । कर्त्ता च केना

सम्बन्धः । स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारक एव । उपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात् । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बद्धुमिष्यमाणमित्यर्थः । यथा तण्डुलं पचतीत्यादौ । फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम् । अत एव तत्समानाधिकरणे स्तोकम्पचतीत्यादौ कर्मत्वसिद्धिः । क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितं, तेन कटं कृतवान् करिष्यतीत्यादिसिद्धिः । कारकं कर्मसंज्ञं स्यादिति । कारक इति प्रथमार्थे सौत्री सप्तमी । तेन कारकं सत्कर्मसंज्ञमित्यर्थः । संज्ञिनः क्रियाजनकत्वन्तु महासंज्ञयाक्षिप्तम् । यद्वा सप्तमी यथाश्रुतैव । कारकपदञ्च

---

कर्तुमिच्छतीत्याद्याशङ्काया शान्तये आह । * कर्तृपदार्थविशेषणीभूतेति * । प्रधानीभूतव्यापारस्यैव कर्तृपदार्थघटकतया तादृशव्यापारेण सम्बन्धस्य च तज्जन्यफलाश्रयत्वरूपस्य अत्र ग्रहणमिति भावः । फले व्यापारजन्यता च साक्षात्परम्परासाधारणी । तेन तण्डुलम्पचतीत्यत्र साक्षात्प्रधानीभूतव्यापारजन्यविक्लित्त्यादिफलस्य चैत्रः ग्रामं गमयति विष्णुमित्र इत्यत्र परम्परया विष्णुमित्रनिष्ठव्यापारप्रयोज्यस्य संयोगरूपफलस्य च सङ्ग्रहः । फलस्य कर्मत्वमुपपादयति । * फलस्यापीति * । फलसम्बन्धित्वात्फलाश्रयत्वात् । * अत एव * । फलस्य कर्मत्वादेव । * कर्मत्वसिद्धिः * । कर्मसमानाधिकरणस्य कर्मत्वं न्याय्यमेवेति भावः । अत्रेदम्बोध्यम् । व्यपदेशिवद्भावेन फलाश्रयत्वात्फलस्य कर्मत्वं न सकर्मकधातुस्थल एव किन्त्वकर्मकधातूपस्थाप्यफलाश्रयस्यापि आस्ते शेते इत्यादौ कर्तुं कर्तृसंज्ञया बाधान्न कर्मत्वम् । व्यपदेशिवद्भावेन फलाश्रयस्य तु भवत्येव । अत एव ओजः सहोम्भसा वर्तते इति सूत्राट्ठक् इत्यनुवर्तमाने तद्वाच्यक्रियायाः समानाधिकरणकर्मवाचकं तत्प्रत्यनुपूर्वमीपलोमकूलमिति सूत्रे तदित्युपात्तम् । अत्र फलस्य कर्तुरितिसूत्रेण कर्मत्वमस्त्येव । बाधिकायाः कर्तृसंज्ञाया अप्राप्तेः । फलेन कर्मणा सकर्मकत्वव्यवहारस्तु न । एतादृशकर्मणः सर्वत्र सम्भवेनाकर्मकत्वव्यवहारस्यैवोच्छेदापत्तेरिति । * महासंज्ञयाक्षिप्तमिति * । * करोतीति कारकमिति * । किं करोति इति प्रश्ने साध्यत्वेन योऽर्थः प्रतीयते तन्निरूपितसाधनत्वमेव गृह्यते । सा च क्रियैव न तु द्रव्यन्तरस्वभावतः सिद्धत्वेनैव भासते । एतत्पक्षे एकसंज्ञाधिकारे संज्ञाद्वयविधानेऽपि पर्यायः स्यादिति द्वयोः समावेशसिद्धये कारके स्यादित्युक्तम् । गतिकारकोपपदादितिसूत्रे कारकशब्देन कारकसंज्ञकस्यैवोपस्थितिः । एवमेवैतदधिकारोक्तकर्त्रादिसंज्ञासु बोध्यम् । तेन ग्रामे वास इत्यादौ कारकत्वात्कृदुत्तरपदप्रकृतिस्वरस्थायवाप्राप्तिः [illegible] । भाष्योक्तप्रथमपक्षमुक्त्वा द्वितीयपक्षमाह । * य [illegible]

क्रियापर, करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । जनकमित्यध्याहारः । विषयत्व मत्रसप्तम्यर्थः । कारकग्रहणे च स्वरितत्वप्रतिज्ञया एतदधिकारोक्तकर्त्रादिपदक्रमेण, तेन नटश्रवणमित्यादौ न कृदुत्तरपदप्रकृतिस्वरः । ग्रामेवास इत्यादौ च तत्स्वरसिद्धिरित्यन्यत्र विस्तर. । कर्तुं किमिति । तदभावे ऽपि केनाप्तुमित्याकाङ्क्षाया कारकाधिकाराद्व्यापारलाभ इति प्रश्न. । माषेष्विति । माषेषु प्रसक्तमश्व माषनाशो मा भूदित्यन्यत्र व-

---

यायामिति तावत्कारके इत्युक्तम् । एवञ्च एतथा निर्देश उपपन्नो भवति कारके इति । कारकशब्दस्य क्रियापरत्वे युक्तिमाह । * करोति कर्तृकर्मादिव्यपदेशानितीति * । कारके इति वैषयिकाधारे सप्तमी तदाह । * विषयत्वमिति * । स्वरितत्वमिदञ्चोपविशेषरूपङ्कारकशब्दे बोध्यम् । स्वरितेनाधिकार इति सूत्रस्य स्वरितेनाधिकृतङ्कार्यमित्यर्थादेतदधिकारोक्तसंज्ञाविशिष्टस्यैव ग्रहणमित्येव कार्यम्प्रकृते गृह्यते । * नटश्रवणमिति * । अत्र नटस्य श्रवणक्रियाजनकत्वेपि तस्य नैतदधिकारोक्ता कर्त्रादिसंज्ञा । *कृदुत्तरपदप्रकृतिस्वरइति * । उत्तरपदे श्रवणशब्दे लितीतिसूत्रेण प्रथमाकारस्योदात्ततया समुदायो मध्योदात्त स्यात्कर्त्रादिसंज्ञाविरहात्तु न भवति । आदिना नटश्रुतिरित्यस्य सङ्ग्रह । समावेशफलन्दर्शयति । * ग्रामेवास इति * । अत्राधिकरणसंज्ञयो समावेशे सप्तमी थाथादिस्वरयो सिद्धि प्रथमपक्षे । द्वितीयपक्षे आह । * तत्स्वरसिद्धिरिति * । थाथादिस्वरसिद्धिरित्यर्थ । यत्तु कृदुत्तरपदप्रकृतिस्वरस्य पूर्वमुक्तत्वात्पदेन तस्यैव परामर्श इति । तन्न । थाथादिस्वरस्य तदपवादत्वात् । यदपि स्तम्बेरम इत्यत्र सप्तमीकृदुत्तरपदप्रकृतिस्वरयो सिद्धि समावेशफलमिति कैयट । अत्र थाथादिस्वरस्तु न । अणासाहचर्यणैरच एव तत्र ग्रहणात् । तदपि न । उपपदत्वे नेष्टसिद्धे । *व्यापारलाभ इति* । कारकसंज्ञापक्षेऽन्वर्थसंज्ञायलाभ् क्रियापरत्वे तु स्वत एवेतिभाव । *माषेष्विति* । अयम्भाव । कर्तृपदाभावे ह्यप्सिततपदस्यक्रियाशब्दत्वेऽपि कारकवृत्तिव्यापारप्रयोज्यफलाश्रयस्य ग्रहणे कारकवृत्तिव्यापारप्रयोज्य यत्फलन्तत्कालिकतन्माषभक्षणन्तदपि प्रकृतधात्वर्थतावच्छेदक यत्फलन्तत्प्रयोज्यम्भवति बन्धधात्वर्थश्च देशान्तरसञ्चारविरोधिविलक्षणशङ्कुसयोगानुकूलव्यापारानुकूलो व्यापार. । एवञ्च धात्वर्थतावच्छेदकफलदेशान्तरसञ्चारविरोधिविलक्षणशङ्कुसयोगानुकूलव्यापाररूपन्तत्प्रयोज्यता तादृशभक्षणेऽस्ति । यदा माषक्षेत्रसमीपदेशे निहितशङ्कौ बद्धोऽप्यश्वो रज्जुदीर्घत्वेन माषभक्षणङ्कृतवान् ततस्तज्ज्ञानान्तरमन्यत्र बद्धस्तत्र माषाणाम्प्रसक्तिक्रियाधिकरणत्वम्मातन्त्याधित्या प्रत्वाद्बन्धधात्वर्थतावच्छेदकफलप्रयोज्यफलाश्रयत्वात्कर्मसंज्ञा स्यादधिकरणसंज्ञायास्तु कटे आस्ते चारितार्थ्यमस्ति । कर्तृग्रहणसत्वे तु कर्तृपदना-

ध्नातीत्यर्थः । तदाह । कर्मण इति । तमब्ग्रहणं किमिति । अवयवद्वारा समुदायस्य प्रश्नः । कर्तुरुद्देश्यं कर्मैवान्यन्नेति भावः । पयसौदनमिति । यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्तेत तदेदं प्रत्युदाहरणं तत्क्रियायाः पयउद्देश्यकत्वात् । ईप्सिततमशब्दस्य तु क्रियाशब्दत्वात्पयसस्तदा फलाश्रयत्वेनाविवक्षणान्न दोष इति भावः । तमस्य फलं त्वग्नेर्माणवकं वारयतीति । तदभावे हि वारणार्थानामिति सूत्रस्यापवादः स्यात् । एवञ्च माणवकस्य कर्मत्वं न स्यात् । न चासौ तच्चरितार्थम् । तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात् । वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । एष एव प्रवृत्तिविघातः । ईप्सितशब्दे उभयत्रापि क्रियाशब्द एव । न च संयोगो न तत्कर्तृव्यापारजन्य इति अत्र कर्मत्वाप्राप्तिरिति वाच्यम् । कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात् । तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमे अनेन बाधः ।

---

रूपफलकधात्वर्थयोः प्रत्यासत्त्यैकत्वलाभे प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्ये परप्रकृतधात्वर्थफलं तस्य लाभान्नातिप्रसङ्ग इति भावः । तदाह । * तदभिप्रायेणाह । * कर्मण ईप्सिता * । कर्मवृत्तिव्यापारप्रयोज्यफलाश्रया न कर्तुः न प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वेनोद्देश्या । यतस्तादृशफलाश्रयस्य नोद्देश्यस्य कर्मत्वमतः कर्मकारकस्य फले पयान्वयः । पयोऽप्युभयव्यापारैकस्यैकस्य प्रकर्षस्य सम्भवतीत्याशयेन मूलोक्तं योजयति । * अवयवद्वारेति * । कर्तुरिति षष्ठ्यर्थप्रतिसम्बन्धिनोऽभावे आकाङ्क्षाशान्तिर्न भवतीति तच्छान्त्यर्थमुद्देश्यपदमध्याहृत्य व्याचष्टे । * कर्तुरुद्देश्यमिति * । पयस उद्देश्यत्वमुपपादयति । * यदा कृतभोजन इति * । * तत्क्रियायाः * । भक्षणक्रियायाः । पयोलाभेच्छाप्रयोज्यत्वं तत्क्रियाया अतः पय उद्देश्यकत्वमिति भावः । विशिष्टोपादाने तु यथा नातिप्रसङ्गस्तथोपपादयति । * ईप्सिततमेति * । तदा पयसः संस्कारकत्वमात्रविवक्षा न तु प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वविवक्षेति भावः । यदा तु संस्कारकत्वेन करणत्वस्य फलाश्रयत्वेन कर्मत्वस्य च विवक्षा तदा परत्वात्कर्मत्वमेव भवति । * तमस्येति * । तमपोऽस्येत्यर्थः । तमब्ग्रहणाभावे कर्तृवृत्तिव्यापारवाचकधात्वर्थफलाश्रयस्य यस्य तस्य सर्वस्य कर्मत्वप्राप्तौ वारणार्थानामित्यनवकाशं सद्वारयतियोगे कर्मसंज्ञाबाधकमेव स्यादित्येतदुपपादयति । * तदभावे हीत्यादिना * । ननु प्रवृत्तिविघातस्यैव वारयत्यर्थतया संयोगस्य कथं तदुपस्थाप्यत्वमत आह । * वारयतेश्चेति * । संयोगादीत्यादिपदेन भक्षणादिसङ्ग्रहः । * उभयत्र * । सूत्रद्वये तमब्ग्रहणे हि यथा माणवकस्य कर्मत्वं भवति तथाह । * तमब्ग्रहण इति * । ईप्सितमात्रे । प्रकृत

ईप्सिततमत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तच्च नाम्न्यादौ । फलव्यापारयोः प्रकृतधात्वर्थत्वन्तु प्रत्यासत्तिलभ्यं, तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनन्तदा माषेष्वश्वं बध्नातीत्यादौ माषाणां न कर्मत्वम् । बन्धनप्रयोज्यभक्षणफलाश्रयत्वे ऽपि भक्षणस्य बध्नात्यर्थत्वाभावात् । प्रयोज्यत्वनिवेशाद्गां दोग्धीत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये । कर्मेत्यनुवृत्ताविति । अधिशीङ्स्थासां कर्मेति सूत्रात् । आधारेति । कर्तृकर्मद्वारा क्रियाश्रयो हि सः । तदाह, गेहमित्यादि ।

अनुक्ते कर्मणीति । कर्मपदेनैतच्छास्त्रबोधितकर्मसञ्ज्ञकं कर्मत्वशक्तिमद् गृह्यते । सर्वकर्मविहितद्वितीयादीनां कर्मत्वशक्तिमानर्थः । क्रियाकारकभावसम्बन्धश्च तदर्थः । राज्ञः पुरुष इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका कष्टं श्रित इति क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिकेति सम-

---

व्यापारवाचकधातूपस्थाप्यफलाश्रये कूपान्न्यादौ । * व्यापारप्रयोज्यप्रकृतधात्वर्थेति * । एवञ्चैतादृशप्रयोज्यत्वलाभफलकन्तत्प्रग्रहणमिति भावः । * प्रत्यासत्तीति * । कर्तृपदार्थतावच्छेदकतया प्रकृतधात्वर्थप्रधानीभूतव्यापारलाभे तत्फलस्य शीघ्रोपस्थितिकत्वात्तत्रापि प्रकृतत्वलाभ । प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्येति परित्यज्य प्रयोज्येति यन्निवेशितन्तत्प्रयोजनमाह । * प्रयोज्यत्वनिवेशादिति * । नन्वाधारनिवृत्त्यर्थमित्यनुपपन्नं फलाधारस्यैव कर्मसञ्ज्ञाविधानादत आह । * कर्तृकर्मद्वारेति * । यत्र यस्य कर्तृकर्मद्वारा धात्वर्थाधारत्वं स एवाधार इत्युच्यते । तण्डुलम्पचतीत्यादौ तण्डुलादिकन्तु न तादृशपरम्परया आधार इति भाव ।

कर्मणि द्वितीयेत्यादिसूत्राणां स्वसिद्धान्तरीत्याऽर्थमाह । * कर्मपदेनैतदिति * । * कर्मत्वशक्तिमानिति * । एवं सति शाब्दबोधोऽपि कर्मत्वशक्तिमत्त्वेन । ननु कर्मणि द्वितीयाया एवं विधाने न त्वन्यविभक्तेरिति द्वितीयादीनामित्यसङ्गतमिति चेन्न । गत्यर्थकर्मणीतिसूत्रविहितचतुर्थ्यां कर्तृकर्मणोरितिसूत्रविहितषष्ठ्याश्च सङ्ग्रहार्थन्तथाकथनात् । * क्रियाकारकभावसम्बन्धश्चेति * । क्रियाकारकयोर्भाव, क्रियात्वकारकत्वसमूह तद्रूप सम्बन्धश्चेत्यर्थ । कर्मत्वादिशक्तिविशिष्टस्य द्वितीयादिवाच्यत्वे कर्मणि द्वितीयेत्यादिसूत्रे साधकमिति सुप्रसिद्धमेव । सम्बन्धस्य वाच्यत्वे तु भाष्य साधकमाह । * राज्ञ पुरुष इत्यत्रेति * । एतेनाश्रयत्वेनाश्रयस्य वाच्यत्वयादिप्राचीनमतन्निरस्तम । एव सति यादृशो बोधस्तमाह । * एवञ्चेति * । अनभिहित इति सूत्रं यथा प्रत्याख्यात

र्थसूत्रस्थभाष्यात् । एवञ्च हरिं भजतीत्यादौ हरिकर्मकं भजनमिति बोधः । अभिहितेतरेति । अनभिहिताधिकारादिति भावः । पञ्चकं प्रातिपदिकार्थ इति पक्षे कर्मणि द्वितीयेत्यादेर्द्व्येकयोरित्यादेश्च नियमत्वम्, एतदभावेऽपि स्वादि-सूत्रेणानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इति कर्मादौ सङ्ख्यायाश्च स्वादीनां सिद्धेः । तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेर्वैकवाक्यतायामेकस्मिन् कर्मणीत्यन्व-येन सुब्जन्यबोधे कर्मत्वाद्यर्थस्य प्राधान्यं तदा नार्थोऽनेन । सुब्जन्यबोधविषयप्रधान-विषयेणोक्तार्थानामिति न्यायेन सिद्धेः । यद्यपि द्विर्बद्धं सुबद्धमिति न्यायेन द्वौ ब्राह्मणौ व्यतिलुनीत इत्यादौ द्योतकवाचकयोर्द्योतकयोश्च समुच्चयो दृष्टस्त-थापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्य-त्वात् । एवञ्च कर्मादीनां द्योत्यत्वमेव । यदा तु कर्मगत एकत्व इत्यन्वयेन सङ्ख्यायास्तत्त्वं तदा सूत्रमारम्भणीयम् । भाष्ये एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव न त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यं नियमत्वानुपपत्तेरिति स्पष्टं बहुष्विति सूत्रे भाष्यादिषु । द्योतकविषयेऽप्युक्तार्थानामिति न्यायोऽधि-परीति सूत्रे भाष्ये दृश्यते । तत्र हि अध्यागच्छतीत्यादावागच्छतीत्यतोना-धिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति न्यायेनाभावमाशङ्क्यापूपौ द्वावि-त्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम् । तत्र हि द्विशब्दापूपशब्द-योर्वाचकयोः प्रकृतिप्रत्यययोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः । अत एव द्विदशा इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम् । तत्र हि समासः सुचेत्युभयमपि द्योतकं सुजर्थश्च जन्मेति तत्रैव वक्ष्यते ।

---

न्तरप्रकारमाह । * पञ्चकेत्यादि * । * एतदभावेऽपीति * । एतयोः सूत्रयोर-भावेऽपीत्यर्थः । * तत्र यदेति * । कर्मणीत्यस्य नियमार्थत्वपक्षे इत्यादि । भा-ष्यप्रसिद्धप्रत्याख्यानप्रकारमुक्त्वाऽनभिहितसूत्रारम्भवादिसूत्रकारमतमाह । * यदा त्विति । * तत्त्वम् * । वाच्यत्वम् । * सूत्रम् * । अनभिहित इत्येतत् । द्वयोः पक्षयोर्मध्ये द्योतकतापक्ष एव मुख्यो भाष्यसम्मतत्वात् । ननु पञ्चकं प्राति-पदिकार्थस्तदा कर्मादिषु विभक्त्यर्थत्वव्यवहारस्य भाष्यसम्मतस्य का गतिरत आह । * भाष्ये इति * । * विभक्त्यर्थत्वव्यवहार इति * । सुपां कर्मादयोऽप्य-र्थाः सङ्ख्या चैव तथा तिङामित्यत्र तथा व्यवहार इत्यर्थः । ननु द्योतकविषये उक्तार्थानामितिन्यायस्य व्यभिचारः पूर्वत्र प्रदर्शित इति कथन्तन्न्यायमाश्रित्य प्रत्याख्यानमत आह । * द्योतकविषय इति * । * दृश्यत इति * । तत्रत्यपूर्व-पक्ष इति शेषः । * तत्र * तत्सूत्रस्थभाष्ये । केवलद्योतकस्थलमाह । * अत एवेति * । द्योतकविषयेऽपि तन्न्यायाङ्गीकारादेव । यथा प्रातिपदिकविषये प

तथा यद्धितद्विर्वचनयोर्योरनयोरन्यदितिनोक्तत्वाद्वीप्सायां न द्विर्वचनं प्राप्नो-
त्यादाविति सर्वस्य द्वे इति सूत्रे भाष्ये उक्तम् । एवञ्च धातोरपि क्रिय-
त्वक्रियाकाल्कारककर्मत्वादिकं पञ्चकमर्थः । अत एव तद्विषयेऽपि देवदत्तो-
ग्निमादधीतेत्यादौ कर्मणोऽग्निरित्यादेश्च नियमनं भाष्ये सम्मतं सङ्गच्छते । अत एव
दधि अजर्यां अरेदित्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः । अत एव
भावकर्मणोरित्यस्य तद्युक्ताद्धातोरित्यर्थः स्तुनुमोरिति सूत्रे भाष्ये दर्शितः ।
द्योत्यत्वादत्रोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः । प्रथमं
चेति । सा हि प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येवेति भावः । अत
एवाभिहिते प्रथमेति वार्त्तिकं सङ्गच्छते । तिङ्कृदित्यादिपरिगणनादेव कट
भीष्मं कुर्वित्यादौ विशेष्याद्युत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात्सा । य-
दा तु प्रक्रियादशायाङ्कटोऽपि कर्म भीष्मादयोऽपि इत्याश्रयणात् कटत्व-
विशिष्टकटकर्मत्वोक्तावपि भीष्मादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततोऽपि
सा । बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव । कारकाणां भावनान्व-

---

यकपक्षाङ्गीकारस्तथा धातुविषयेऽप्याह । * एवञ्चेति * । अत एव उभयत्र
पञ्चकपक्षाङ्गीकारादेव । * अत एव * । तत्तत्पञ्चकस्य तत्तद्वाच्यत्वादेव । * अत
एव * । उक्तपञ्चकस्य धातुवाच्यत्वादेव । * तद्वाचकात् * । भावकर्मवाचकात् ।
* उभयत्र * । प्रातिपदिकस्थले धातुस्थले । एवञ्च हरिम्भजतीत्यादितः कर्मी-
भूतहरिकर्मकम्भजनमितिरीत्या बोधः । अत एव सत्त्वप्रधानानि नामानीति-
वाक्य स्वार्थादिनिरूपिताप्राधान्य यतो नामार्थस्यात साधु सङ्गच्छते । पच
तीत्यादौ चैत्रकर्तृविशिष्टा वर्त्तमाना पचिक्रियेतिरीत्या बोध । ननु प्रातिपदि
कार्थे प्रथमैवेत्यपि कथन्तत्राप्यनभिहिताधिकारादत आह । * सा हीति * ।
* अत एव * । कर्मादीनामभिधानस्थले प्रथमाया सर्वसम्मतत्वादेव । * वि-
शेषणात्सेति * । भीष्मपदाद्द्वितीयेत्यर्थ । परिगणनप्रत्याख्यानमाह । * यदा
त्विति * । एतत्पक्षस्य यदि कर्मत्व शक्तिविशेषरूप तदोपपत्ति [illegible]
ति । प्राचीनमते तु फलाश्रयत्वमेव कर्मत्वमाश्रयता चाश्रयभेदेन भिद्यते [illegible]
तु नाश्रयभेदो यद्यप्यस्ति तथाप्याश्रयतावच्छेदकभेदादाश्रयताभेद [illegible]
याकथञ्चित्कर्त्तव्या । अत्र प्राञ्च । यथा अन्येन यथा दीपिकया [illegible]
व्रजति चैत्र इत्यादौ सर्वेषां कारकाणामन्यार्थे स्वातन्त्र्येण [illegible]
यस्तथा कटम्भीष्ममित्यादावपि स्वातन्त्र्येणोभयो [illegible]
बोधे पार्थक्यन्तु परस्पराभेदायगाहि मानसमिति [illegible]
वस्थितिः * । * तयो । द्वितीया [illegible]

व्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वान्वयविषयेति तदा परिगणनं भाष्ये प्रत्याख्यातम् । तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति । कृतः कटः सुन्दर इत्यादौ न क्वापि द्वितीयेति दिक् । शत्य इति । अत्र वदन्ति । कर्मादिपद इवात्रापि न विभक्तिवाच्यतावच्छेदकरूपेण कर्मादेर्भानम्, अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहर्तुम् । तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या भानं तेनैव तद्धितान्तादिभिस्समुदायशक्त्या, एतदधिकाराभावे च घट इत्यादौ षष्ठ्यर्थवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थप-

---

वेति * । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावेनैवेत्यर्थः । समानविभक्तिकनामार्थयोरसति बाधकेऽभेदान्वयस्यौत्सर्गिकत्वात् । कर्मभीष्माभिन्नकर्मकस्कर्मक करणमित्यादिरीत्या भीष्मं कटं करोतीत्यादिभ्यो बोध । यदि स्वातन्त्र्येण क्रियायामेवोभयपदार्थान्वयबोधस्तदाऽभेदान्वयबोधसामग्र्यभावसम्पादनाय किञ्चित्प्रतिबन्धकङ्कल्पनीयमिति गौरवम् । किञ्चैतद्वाक्यजन्यशाब्दबोधानन्तरमुद्भूता भीष्मो न वेतिसन्देहनिवृत्त्यर्थमियमेन तादृशमानसकल्पना कार्या एव सति सा मानसव्यक्तिस्तत्प्रागभावस्तद्ध्वंसश्च कल्पनीय इत्यतिगौरवम् । किञ्च प्राचीनमते कटम्भीष्मङ्कुर्वित्याकारकवाक्यजन्यशाब्दबोधसामग्र्या स्वातन्त्र्येण भीष्मभिन्नः कटः सुन्दर इत्याकारकविशिष्टे वैशिष्टे वैशिष्ट्यमितिरीत्या यत्प्रत्यक्षन्तत्र प्रतिबन्धकत्वङ्कल्पनीयमित्यतिगौरवम् । अस्मन्मते तु शाब्दसामग्र्या कटो भीष्म इत्याकारकयोग्यताज्ञानघटिततया तादृशयोग्यताज्ञानसत्त्वे विशेष्यतावच्छेदकप्रकारकज्ञानात्मककारणाभावादेव तादृशविशिष्टे वैशिष्ट्यमितिरीत्या यत्प्रत्यक्ष तदापत्तिवारणे शाब्दसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वन्न कल्पनीयमिति लाघवमिति दिक् । ननु भीष्ममित्यस्य द्वितीयान्तार्थस्याभेदेन कटेऽन्वयस्वीकारे कारकाणा भावमात्रान्वयव्युत्पत्तिभङ्ग इत्यत आह ।* कारकाणामिति । * अन्वयविषयेतीति * । अस्य स्वीकारेणेति शेषः । नन्वेवङ्कृत कटः सुन्दर इत्यत्र कटनिष्ठकर्मत्वस्याभिधानेपि सुन्दरपदार्थनिष्ठकर्मत्वस्यानभिधानाद् द्वितीया स्यादत आह । * तिङ्कृताविति * । यस्य यस्य कर्मतेति * । साक्षात्परम्परया वेति शेषः । मूलादिकं खण्डयति । * अत्र वदन्तीति* । *कर्मादिपद इति * । अस्योच्चारिते सति तज्जन्योपस्थिता यथा न विभक्तिवाच्यतावच्छेदकरूपेण भान्तथेति शेषः । * रूपेण * । कर्मत्वशक्तिमत्त्वेन । यथा वा शब्दजन्यविकल्पोपस्थित्यपेक्षया विकल्पपदजन्यविकल्पोपस्थितिविलक्षणा सखारसत्त्वाभ्यान्तयोर्वैलक्षण्यस्यानुभवसिद्धत्वात् * । समुदायशक्त्येति * । औपगव इत्यत्र तस्यापत्यमित्यर्थे प्रत्ययविधानाच्चित्रगुरित्यत्र षष्ठ्यर्थे बहुव्रीहिविधानादिति भावः । * एतदधिकारेति * । अनभिहिताधिकारेत्यर्थः ।

टेन ग्रहणं स्यात्तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्र संबन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः। वस्तुतस्तु कटभीष्ममिति परिगणनफलमुक्ता तत्प्रत्याख्यानायाशेषत्वान्नात्र शेषलक्षणा षष्ठी। अन्यानभिहितकर्मादीनामभावाच्च नान्या इत्याशङ्क्य न केवला प्रकृतिरिति सपक्षः कृतः। न चान्योत्पद्यमाना एतमभिसंबन्धमुत्सहते वक्तुमिति कृत्वा द्वितीयेत्युक्तं भाष्ये, तेनैवौपगवादावपि षष्ठी वारितैवेति तयोरप्यप्रत्युदाहरणत्वमेव। तदुक्तमनेकमित्यत्र भाष्ये ऽपि चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेन भानात् षष्ठी प्राप्नोतीत्याशङ्क्याभिहितः सोर्थोऽन्तर्भूतः प्रातिपदिकार्थः सपक्ष इति प्रथमेत्युक्तम्। अनेनाशेषत्वरूपं षष्ठ्यप्राप्तिबीजमुक्तम् अन्तर्भूत इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोध्यम्। परे तु शत्य इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रियादेर्भानम्, अत एव न तत्रेतरकारकाणामन्वयः।

---

औपगवश्चित्रगुरित्यत्र षष्ठ्यापादनं तत्रा समुदायात्स्याद्यदा प्रातिपदिकार्थे विधीयमानया प्रथमया बाधो न स्यादित्याशङ्कानिवारणायाह। * घट इत्यादाविति *। * दृष्टानामेवेति *। प्रवृत्तिनिमित्ततदाश्रयरूपाणाम्। *तद्भिन्नस्यैवेति*। प्रवृत्तिनिमित्ततदाश्रयाभ्यां भिन्नस्येत्यर्थः। * षष्ठीवाच्यत्वेन दृष्टतयेति *। अनभिहिताधिकाराभावेऽभिहितानभिहितसाधारणसम्बन्धमात्रस्य षष्ठी शेष इति सूत्रे शेषपदेन ग्रहणं स्यात्। अनभिहिताधिकारे तु कृतेऽनभिहितसम्बन्धस्यैव षष्ठीवाच्यतया औपगवश्चित्रगुरित्यत्र प्रतीयमानस्य तु प्रातिपदिकेनाभिहिततयाऽयं षष्ठ्यवाच्य इति प्रवृत्तिनिमित्तरूपोऽयं सम्बन्धः प्रातिपदिकार्थपदेन गृह्यत इति प्रथमा भवतीति भावः। अत एव प्रकृतसूत्रभाष्ये कर्मणि द्वितीयेत्यादिविषयेऽधिकारफलमुक्त्वाऽन्ते औपगवश्चित्रगुरित्यत्राधिकारफलमुक्तम्। वस्तुत इदमपि न प्रत्युदाहरणफलमित्याशयेनाह। * वस्तुतस्त्विति। * अत्रेति *। भीष्मादौ। * नान्या *। द्वितीयादयः। * एतमभिसम्बन्धमिति *। क्रियाकारकभावरूपम्। * तेन *। अशेषत्वादित्यनेन। अस्मिन्नेवार्थे भाष्यान्तरमपि साधकमित्याह। * तदुक्तमिति *। स्वसिद्धान्तमाह। * परे त्विति। * साध्यत्वेन न भानमिति। * यद्यपि शतेन क्रीत इत्यर्थे शताच्च ठन्यताविति सूत्रेण यति निष्पन्नस्य शत्यशब्दस्य शतकरणकक्रयणकर्मबोधकता तथापि प्रत्ययान्तसमुदायेनोपस्थिता या क्रिया तस्या न साध्यत्वेन भानम्। * अत एव *। साध्यत्वेनाभानादेव। मन्दुरायां शत्योऽश्व इति वाक्यान्मन्दुराधिकरणिका शत्यकर्तृका स्थितिक्रियैवानुभवसिद्धा नतु मन्दुराधिकरणिका शतकरणिका क्रयणक्रिया। कारकान्वययोग्या क्रिया धातूपस्थितैव न तु तद्धितशक्त्योपस्थि

इदञ्च कर्तृकर्मणोरित्यत्र निरूपयिष्यते । एवं मासमानन्द इत्यादौ मासकर्मक-मासिकर्त्रानन्द इति विग्रहतो बोधे समासतश्चानन्दकर्तृकमासकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्यात् । वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च । किं च तथा सति बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूप-सामानाधिकरण्यस्य हानिः । किंचैवं मासो भार्या यस्य स मासभार्य इत्यादौ पुंवत्त्वानापत्तिः । पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याभावात् । तस्मात्कालाः परिमाणिनेत्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः मासिकर्त्रानन्दकर्मत्वेव बोधः । विशेष्ये तन्निरूपकत्वबाधेन तु विशेषणभूतमासौ तत्पर्यवसानं स्वर्गो ध्वस्त इतिवत् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्यः । एवञ्चात्र शब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानम्, अतो न विभक्तिप्रसक्तिः । अत एव गतिकारकोपपदादिति सूत्रे गतिकारकोपपदादिति किमर्थं परम कारक परमकारकमिति प्रतीकमुपादाय यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति तथा कारकशब्दोऽपीति । कृदन्ता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्तीति कैयटेनोक्तम् । अत एव तस्य कर्म-

---

ता । अत एव मात्योऽद्यो देवदत्तेनेति न प्रयोगः । एवम्मासोद्दिक्तो ग्राम इत्यत्र प्राचीनसम्मतबोधप्रक्रियाया दूषणमाह । * एवम्मासेत्यादि * । आदिना मासोद्देश्यस्य सङ्ग्रहः * । कल्प्यः स्यादिति * । इदञ्च न युक्तम् । वृत्तिविग्रहयो समानविशेषणविशेष्यभावावगाहिबोधजनकत्वस्य सिद्धान्तिसम्मतत्वात् । विशेषणविशेष्यभावव्यत्यासे दोषमप्याह । * किञ्चेति * । प्राचीनसम्मतबोधे दोषान्तरमाह । * किञ्चेति * । तादृशबोधे रूपासिद्धिमप्याह । * किञ्चेति * । ननु कर्मत्वं क्रियानिरूपितम् तु द्रव्यानन्दनिरूपितमिति मासिकर्त्रानन्दकर्मेति कथम्बोध इत्यत आह । * विशेष्य इति * । आनन्दे । * तत्पर्यवसानमिति * । कर्मतानिरूपकत्वपर्यवसानम् । * विशिष्टे * । विशेषणविशिष्टे सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाध इति न्यायात् । प्रकृतमाह ।* एवञ्चेति * । अत एव * । उद्भूतकर्मत्वशक्तिमत्त्वेन भानाभावादेव । * कैयटेनोक्तमिति * । एवञ्च कारकशब्दजन्यप्रतीतिविशेष्याभिन्नप्रतिपादकः परम शब्दोऽपि नोद्भूतधात्वर्थनिरूपितकशक्तिमत्प्रतिपादक । गतिकारकोपपदादित्यस्य कृत्प्रत्ययप्रकृतिधात्वर्थनिरूपितोद्भूतशक्तिमत्कारकपरत्व एव प्रवृत्तिरिति भावः । एतच्च हरिणाप्युक्तम् । "स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते । विभाषयाद्भिरित्यादिना" दोषादिवेत्यादिविभक्त्यर्थशक्तिप्रधानान्वय

त्वस्य न क्रियान्वयनियमः। अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन कर्मादिप्राधान्यानापत्तिः। एवं कर्मादिपदैरिव पकादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम्। तिङ्कृत्तद्धितसमासैरभिधाने इत्यस्यायमर्थः। यत्तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिरत्रैवानभिहितइति तात्पर्यग्राहकम्। ध्वनितञ्चेद सुप आत्मन इति सूत्रे भाष्ये। तत्र हि, इष्टः पुत्र इष्यते पुत्र इत्यर्थे क्यचमाशङ्क्य स्वशब्देनोक्तत्वान्नेति समाहितम्, इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वावगतावपि पुत्र इति सु-

---

स्य दधि पश्येत्यादौ लुप्तविभक्तिकप्रातिपदिकस्य च सङ्ग्रहः। * उपकारः *। उपकारकः। स्वावेशेन प्रातिपदिकस्य क्रियाम्प्रति विशेषणतानियामकः। * अत एव *। उद्भूतकारकशक्तिप्रतिपादकत्वाभावादेव। तस्य कारककर्मादिशब्दप्रतिपाद्यशक्तेः। * न क्रियान्वयनियम इति *। द्रव्येऽप्यन्वयदर्शनात्। तथात्वे बाधकमप्याह। * अन्यथेति *। * विभक्तिप्रयोजकरूपेण *। उद्भूतकर्मत्वशक्तिमत्त्वेन। एवञ्चाभिधानविषये प्रातिपदिकस्योद्भूततत्तच्छक्तिविशिष्टेऽर्थे न वृत्तिरिति न तत्र सा सा विभक्तिः। पूर्वोक्तार्थे भाष्यान्तरमपि साधकमाह। * ध्वनितञ्चेदमिति *। अत्र चोऽप्यर्थे। सूत्राप्रासिमुपपादयति। * सुप इति *। तत्र होवमुक्तम्। अथेह क्यचा भवितव्यमिष्टः पुत्र इष्यते पुत्र। केचित्तावदाहुः। न भवितव्यमिति। किङ्कारणं स्वशब्देनोक्तत्वात्। स्वशब्दसामानाधिकरण्या[१]त्पुत्र इत्यनेन निर्मुक्तेऽपि कर्मसंज्ञाप्रयोजकस्य क्रियापेक्षकर्मभावस्यार्थस्य प्रतिपादनादित्यर्थः। *अयमर्थः *। यदा क्रियाफलस्य कर्मणः प्राधान्यम्प्रतिपिपादयिषितन्तदा वाक्यमेव प्रयुज्यते पुत्र इष्ट इत्यादि न तु क्यजन्त[२]। तस्यास्य कर्मकत्वात्कर्मणि प्रत्ययानुत्पादादिति कैयटः। अपर आहुः भवितव्यमिति। किङ्कारणम्। धात्वर्थेऽथ कश्चिदभीयते स चधात्वर्थे केनचिदेव शब्देन निर्दिश्य इति। * स च धात्वर्थ इति *। इच्छाया प्रत्ययार्थात्वम्दर्शयितु वाक्यमुपादेयम्। तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यताम् कर्मप्रत्ययोवा। प्रत्यये तूत्पन्नेऽकर्मकत्वात् कर्मप्रत्ययो न भवति। इह भवन्तस्तावदाहुः। न भवितव्य-

---

१ एवञ्चेष्टशब्दसामानाधिकरण्ये पुत्रशब्दार्थगतकर्मत्वस्य कर्मवाचिना क्तेनाभिहितमिति पुत्रशब्दस्य प्रातिपदिकार्थमात्रवृत्तित्वेन पुत्र इति सुबन्तस्य कर्मत्ववाचित्वाभावादित्यर्थः। निर्मुक्तेति। इतरसामानाधिकरण्याज्ज्ञातकर्मभावस्य न तु स्वत इत्यर्थः। अथ वा निर्मुक्तेति पाठः। तदा निर्मुक्तं स्ववाच्यतया परित्यक्तकर्मभावस्येत्यर्थः।

२ क्यजन्त। अकर्मकत्वात् धात्वर्थसङ्गृहीतकर्मकत्वात्।

यन्त न कर्मवाचीति न तत' क्यजिति तद्भावः । स्व कर्मत्वन्तद्वाचकशब्देन पुत्रगत कर्मत्वमुक्त न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थ. । सुप आत्मन इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थ इति तदाशय' । वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे इह भवन्त इत्यादिना समाद्धयन्तरमुक्त वाक्ये फल विशेष्यं वृत्तौ व्यापार इति समानार्थत्वाभावात्तत्रार्थे वृत्तिर्नेतीत्याहु' । प्राचीनानुसारेणोक्तस्य प्रायेणेत्यस्य फलमाह कचिदिति । परे त्वत्र तुमुनः साधुत्वायेष्यतइत्यध्याहार आवश्यकः । अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच स दुर्लभ स्यात् । अध्याहारे तु इच्छार्थेषु तुमुनिति सुलभः । विपक्षो ऽपि सम्यद्धर्षे छेतुमिष्यतइति यत्तद्साम्प्रतमित्यन्यायाय्यमित्यर्थः । एवञ्चाध्याहृततिङभिधानान्न द्वितीया तादृशेच्छाया अन्याय्यत्वञ्च तद्विषयस्यान्याय्यत्वेन । एवम्, अनु नारद इत्यबोधि स इत्यादौ नारद इतीति श्रीकृष्णीयज्ञानाकारानुकरणम् । नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ. इति प्रथमान्तस्याप्रातिपदिकत्वान्न नात्र द्वितीया । अत एव अधिहरीत्यादौ समासः । तद्वचनसामर्थ्येन यस्य परिगणनत्वकल्पनैव युक्ता । अत एव अभ्रआँ अत्र इत्यादौ सप्तमी । किं च निपातेनाभिधानेऽपि प्रातिपदिकाद्दुद्भूतत्वच्छक्तिमत्त्वेनैव भानमिति तत्र विभक्तिः सुलभा, शब्दशक्तिस्वभावादस्यैवार्थस्य द्योतको निपात. । अत एव परिगणनप्रत्याख्याने ऽपि न दोष इत्याहु ॥ -

---

मिति । समानार्थेन वाक्येन भवितव्यम्प्रत्यया तेन च । यत्रेहार्थो वाक्येन गम्यत इष्ट पुत्र इष्यते पुत्र इति नासौ जातु चित्प्रत्ययान्तेन गम्यते नासौ जातु चिदिति । प्रत्यया तस्याकर्मकत्वात्कर्मणि प्रत्ययानुत्पादात् इति कैयट । * प्राच्यानुसारेणोक्तस्येति * । तिङ्तद्धितसमासैरिति न परिगणनाद्विन्त्वुदाहरणमात्रमिति तद्भाव । प्राचाम्मतन्दूषयन्स्वमतमाह * परे त्विति * । इष्यते इत्यध्याहार । इदमपि पररीत्या स्वमते तु अन्यत्राध्याहारपदार्थ उक्त । * अन्यथा * । तदनध्याहारे । * अन्याय्यमिति * । यद्यप्येतर्हि सम्प्रतीदानी मधुना साम्प्रतन्तथेति कोशात्साम्प्रतमित्यव्ययमिदानीमित्यर्थकमिति प्रतीयते । तथापि निपातानामनेकार्थतया एव व्याख्यातम् । एवमनु नारद इत्यबोधीत्यत्रेति शब्देनोक्त त्वात्र द्वितीयेति प्राचोक्त खण्डयति । * प्रथममिति * । * अत एव * । तिङ्तद्धितसमासैरिति परिगणनादेव । * समास इति * । निपातेनाभिकरणे वचनसामर्थ्यात्सप्तमीत्यन्यथोक्तमेवेत्यत आह । * तद्वचनेति * । * अत एव * । परिगणनादेव । * तत्तच्छक्तिमत्त्वेन * । अधिकरणत्वादिशक्तिमत्त्वेन । अत्र

तथायुक्तम् ॥ तत्रत्र समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्वा-त्वर्थफलाश्रयत्वरूपम् । पराधीनतया विषं भुञ्जाने ऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धम्, तदुक्तं भाष्ये । अतश्च विषमीप्सितं यत्तद्भक्षयतीति तस्माच्चोरान् पश्यतीति द्वेष्योदाहरणं विषयेन्द्रियसम्बन्धाद्दृश्यमाना अपि न दर्शनोद्देश्या अपि तु अनिष्टदर्शना एवेति स्पष्टं भाष्यकैयटयोः । एवञ्च तत्र पूर्वेणाप्राप्तौ वचनम् । अनीप्सितमनुद्देश्यम् । तच्च द्वेष्यमुदासीनञ्च । तृणमिति । यथा स्पृश्यमानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादि फलाधारत्वं तथैव तृणादेरपीति भावः । अनीप्सितपदाभावे इप्सितस्य प्रकर्षहीनस्याप्यनेन संज्ञाप्राप्तौ वारणार्थानामित्यनवकाशं स्यात् । तथायुक्तमिति किम् । विषेणौदनं भुङ्क्ते इत्यादौ करणत्वमात्रविवक्षायां विषस्य मा भूत् । प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य च मा भूत् तत्सत्त्वे तु प्रकृतधात्वर्थफलाश्रयत्वरूपतत्त्वाभावान्न दोषः ।

आपादानादिविशेषैरिति । तत्तद्रूपेणाभासमानमित्यर्थः । अकथित-

---

साधकमाह । * शब्दशक्तीति * । न दोष । न सप्तम्या अनुपपत्ति ।

* तत्रत्रेति * । तथा युक्तत्वञ्चेत्यर्थ । उपक्रमस्थभाष्योक्तमुदाहरणमन्यथा सिद्धं यद्यपि तथापि तदत्यन्तमुख्यमेवोदाहरणं वक्तुमुपक्रमते । * पराधीनेति * । * न दर्शनोद्देश्या इति * । एतेन प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वाभावात्र पूर्वसूत्रेण कर्मत्वासिद्धिरिति बोधितम् । * तच्चेति * । द्वेष्येति शेष । * तथा तृणादेरपीति * । एतेन ता दृशफलाश्रयत्वेनोद्देश्यत्वाभाव सूचित । * तृणादेरपीतीति * । समभिव्याहृतधात्वर्थफल संयोगस्तदाश्रयत्वन्तृणादेरस्तीति तथायुक्तत्वमस्ति । अनीप्सितपदप्रयोजनमाह । * अनीप्सितपदाभावे इति * । * वारणार्थानामित्यनवकाशं स्यादिति * । तथा च यदा यवेभ्यो गवां वारणाय दण्डोद्यमनादिकं कृतं तेनैव व्यापारेण गोषु सञ्चरन्त्यो महिष्योऽपि वारिता भवन्ति तादृशस्थले यवेभ्यो महिषीर्वारयतीति प्रयोगो न स्यादनीप्सितमहिष्या अप्यपादानत्वस्य प्राप्तेरिति । * विषेणौदनमिति * । शतधा धौतस्य घृतस्य द्वेष्यत्वेपि सितया संयोगे उपकारकत्वज्ञानेन तस्य करणत्वाविवक्षेति भाव । * तत्सत्त्वेत्विति * । तथा युक्तमिति पदसत्त्वे त्वित्यर्थ । तादृशस्थले विषस्य स्वव्यापारजन्यत्वसम्बन्धेन प्रधानीभूतव्यापारे एवान्वयविवक्षा न तु गलाधःसंयोगरूपफलाश्रयत्वस्य विवक्षेति भाव । एवम्प्रयागात्काशीङ्गच्छतीत्यत्र प्रयागस्य प्रकृतधात्वर्थफल संयोगस्तदाश्रयत्वविवक्षा नेत्यपि बोध्यम् ।

अपादानादीत्यत्रापादानादिशब्दो नानिर्देशेन। ।प

शब्दो ऽत्रासंकीर्तितपरो नामधानपर इति भावः । एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वक तदविवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोध्यम् । अपादानत्वादिविवक्षायां पञ्चम्यादेव । केन रूपेण विवक्षेति यत्कर्मत्वेनेति गृहाण । कारकत्वव्याप्यसञ्ज्ञानां स्वबोध्यार्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात् । बोधोऽपि तथैव । तत्तच्छास्त्राभावे सर्वत्र षष्ठीप्राप्त्या सर्वासान्तदपवादत्वेन तदपवादत्वमात्रेण सम्बन्धार्थकत्व न युक्तम् । अत कर्मणि द्वितीयेत्यस्य न वैरूप्यम् । अत एवैतत्सूत्रशेषे भाष्ये ऽनेनैव सिद्धे आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्येप्सितमात्रस्याप्यनेन सञ्ज्ञायां वारणार्थानामिति सूत्रस्यानवकाशत्वे माणवकादपि पञ्चमी स्यादिति ईप्सितमित्याद्यारब्धव्यमित्युत्तरितम् । एतेन दुहादीनां व्यापारद्वयार्थकत्वे कर्तुरिति कर्मत्वे तत्त्वेनाविवक्षायामप्यनेन कर्मत्वमिति परास्त वदतो व्याघातात् । अत एव कर्तुरित्यनेन सिद्धिमाश्रित्यास्य वैयर्थ्यं भाष्ये नाशङ्कितम् । कारकमिति क्रियाजनकमित्यर्थः । नन्वेव नटस्य शृणोतीत्यादावतिप्रसङ्गः । सर्वथा तत्र

---

षञ्च य फलितन्ववाद । * तत्तद्रूपेणेति * । यथाभूतार्थवत्त्वेऽपादानत्वादीना यत्र प्रसक्तिपूर्विका अविवक्षा तत्रैव स्यात्सर्वथा पूर्वविधेरप्रसक्तौ ऽर स्यादिति भाव । * पञ्चम्यैवेति * । गो पयो दोग्धीति यथा । अपादानत्वाद्यविवक्षायां यद्रूपम् यदितावच्छेदकत्वेन विवक्षितन्तत्किमित्याकाङ्क्षायामाह । * केन रूपेणेति । * तथैवेति * । कर्मत्वादिशक्तिमत्त्वेनैव । सर्वप्राचीनोक्त सम्बन्धित्वेन बोधकृण्डयति । * तत्तच्छास्त्रेति * । * षष्ठीप्राप्त्येति * । अस्यात इति शेष । * अत एव * । अकथितञ्चेतिसूत्रविषयेऽपि कर्मत्वशक्तिमत्त्वेन द्वितीयाया बोधकत्वादेव । * नवैरूप्यमिति * । यदि पूर्वसूत्रविषये कर्मत्वेन बोधकत्वमप्रष्टतसूत्रविषये ‖ सम्बन्धित्वेनेति तदा वैरूप्य स्यादेवेति भाव । * अत एव * । कर्मत्वेनैव बोधादेव । * आशङ्क्य इति * । इयञ्चाशङ्का यद्यनेन सूत्रेण कर्मसञ्ज्ञा तत्रापि कर्मत्वशक्तिमत्त्वेन बोध एव सङ्गच्छत इति भाव । ईप्सितमात्रस्येत्यनेन कार्त्स्न्यार्थकमात्रशब्देन यत्रेप्सितपदन्तस्य सर्वस्य सङ्ग्रह । प्राचा युक्तिं खण्डयति । * एतेनेति * । * तत्त्वेन * । कर्मत्वेन । * अनेन * । अकथितमित्यनेन । अनेन सञ्ज्ञायां सम्बन्धित्वेन रूपेण इति तेषामभिमान । एतेनेत्यस्यार्थमाह । * वदत इति * । * अत एव * । दुहादीना व्यापारद्वयार्थत्वाविवक्षायाङ्गवादीनामपादानत्वादीनाञ्चाविवक्षायामस्यावश्यकत्वादेव । * क्रियाजनकमिति * । एतेन गवादिपदार्थानामपि धात्वर्थपदार्थेष्वन्वयविवक्षायामनेन कर्मत्वमिति भाव । * एवमिति * । पूर्वोक्तरीत्या सूत्रार्थव्यवस्थायाम् । ननु नटस्य द्वितीयरीत्या कर्मत्वप्राप्त्युद्भावनप्रथमरीत्याप्युचितमित्याशङ्कामि

तदप्राप्तेः। गीतद्वारा च तस्य क्रियाजनकत्वम्। न च तस्य कर्मयुक्त्वाभा- स्तदंशस्यापि परिगणनसमत्वात्। नटस्यापादानत्वविवक्षा तु न कदापि आख्यातेति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरपादानत्वाविवक्षाया बोधनादतः परिगणनमाह। दुह्याजिति। कर्मयुक्त्व धात्वर्थव्यापारात्माक्त- दनन्तर वा तत्सम्बद्धत्वम्। तत्र भ्रुविशास्यतिरिक्तधात्वर्थव्यापारात्मागेव तत्स- म्बन्धत्वम्। तद्विषये तु तदनन्तर तत्सबद्धत्व बोध्यम्। तत्र सति सभवे प्राग् तत्संबद्धत्वमेव ग्राह्यम्। एतेन स्थाल्यादेरपि तद्व्यापारादनन्तर पयः- सबन्धत्वेन कर्मत्वन्तेषां दुर्वारमित्यपास्तम्। तेन गां पयो दोग्धि स्थाल्या- मित्यादौ स्थाल्यादेरधिकरणत्वाविवक्षायामपि नानेन कर्मत्वम्। एवञ्चा पादानादीत्यादिशब्देनापादानसम्प्रदानाधिकरणान्येव। करणन्तु न गृह्यते हस्तादेः करणस्य पय आदिकर्मयुक्त्वाभावात्, यद्यपि गान्दोग्धीत्यादौ गौः पयस्त्यजति गवा पयस्त्याजयतीत्याद्यर्थ प्रतीत्या कर्तुरीप्सिततममित्येव सिद्धं प्रधानकर्मत्वञ्च गवादीनामिति तत्रैव लादिसिद्धि। प्रधानकर्मत्वञ्च कर्तृ- प्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम्। ण्यन्त- विषये ईदृशप्राधान्यस्यैव ग्रहात्। प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठव्यापारस्तदनुकूलव्यापारस्य शब्दतः प्रधान्यात्। गर्गाः शत दण्ड्य-

---

वारणायाह। * नटस्यापादानत्वेति *। * अनुपयोगे *। नियमपूर्वकविद्या स्वीकाराभावे। न च गीतिद्वारा नटस्य क्रियाजनकत्वमित्यसङ्गतम्। गीतेरेव क्रियाजनकत्वसम्भवे नटस्यान्यथासिद्धत्व स्यादिति वाच्यम्। व्यापारेण व्या- पारिणोऽन्यथासिद्धत्वाभावात्। अन्यथा यागस्यापि स्वर्गजनकत्वन्न स्यात्। अपूर्वस्यैव तु तत्स्यात्। कर्मयुक्तत्र सर्वत्रैकरूपमित्याह। * कर्मयुक्त्वमिति *। तत्र। उक्तप्रकारद्वयमध्ये। * प्रागेवेति *। प्रागपीत्यर्थ। * तद्विषय इति *। ब्रुविशासिविषये। * तत्र *। ब्रुविशासव्यतिरिक्ते। * एतेन *। सति सम्भवे प्राक्तत्सम्बन्धत्वस्यैव ग्रहणेन। * एवञ्च *। पूर्वोक्तव्यवस्थासिद्धौ च। अधिकरणान्येवेति *। एतेन कर्तृकरणहेतूनां निरास। एतेषु निदर्शनार्थमाह। * करणन्तु नेति *। धातोर्व्यापारद्वयार्थत्वेन कर्तुरित्येव सिद्धेऽकथितमितिसू त्रवैयर्थ्य मित्याशयेन शङ्कते। * यद्यपीति *। * तत्रैव लादिसिद्धिरिति *। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामित्येव सिद्धे। * ईदृशप्राधान्यस्य *। प्रधानीभूतधात्वर्थविशेषणफलाश्रयस्य। नन्वेव स्वस्वत्वदानकदानानुकूलव्या पारानुकूलव्यापार एव दण्डधात्वर्थो भविष्यति। तथा च गर्गाणामेव प्राधान्य- मिति प्रधानगर्गानुरोधेन शतावृत्ति स्यादिति समुदाये वाक्यसमाप्तिरित्यस्यद स्थलन्दृष्टान्तत्वेन भाष्ये उपात्त तद्विरोध इत्यत आह। * गर्गा शतमिति *।

न्तामित्यत्र गर्गाणामेव तत्रमुद्देश्यत्वरूपमार्थं प्राधान्यन्तु शतस्येत्यनुद्देश्य-
त्वेनाप्रधानगर्गानुरोधाच्च शताद्वृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः ।
एवमेव शकारमसि चोदित इत्याद्युपपत्तिः । अत एव 'प्रधानकर्मण्याख्येये
लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण' इति उ-
क्तत्वोत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के इति प्रश्ने 'नीवह्योर्हरतेश्चापि
गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः' इत्युक्तम् । तत्र
न्यादिग्रहणं तत्र कृषिवन्मम व्यापारद्वयार्थकधातूपलक्षणम् । एवञ्चेदं सूत्र-
व्यर्थं तथापि यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थस्तदापादा-
नाद्यविवक्षायामन्येनासिद्धकर्मकत्वार्थमिदमावश्यकं तदा चाप्राधान्ये दुहा-
दीनामित्युक्तेरप्रधाने गवादावेव लादयः । अप्रधानकर्मत्वञ्चोक्तप्रधानकर्माभि-
न्नकर्मत्वन्तच्चोक्तार्थगवादीनामस्त्येव फलाश्रयत्वात् । गान्दोग्धीति ।
अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादान-
त्वाविवक्षायामनेन कर्मत्वम् । तद्विवक्षायां पञ्चमी गोः पयस्यन्वये षष्ठी ।
द्विकर्मकेषु गवादीनां कर्मत्वाविवक्षया क्रियान्वये षष्ठी न, अनभिधानात्,
षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतोऽव्युत्पत्तेः।

---

*भाष्यविरोध इति* । शतस्यार्थप्राधान्यमादाय तस्य भाष्यस्योपपत्ते । जिज्ञा-
साविषयार्थज्ञानानुकूलव्यापारानुकूलव्यापारः पृच्छिपर्यायब्रुवेरर्थ इति प्रधानी-
भूतव्यापारविशेषणव्यापारस्यार्थप्राधान्यमादाय यत्प्रति पृच्छा तस्य प्रतिपाद-
कत्वे लकारः सिध्यतीत्याशयेनाह । *एवमेवेति* । *अत एव* । व्यापारद्वया-
र्थत्वेन द्विकर्मकत्वादेव । एतत्पक्षे अप्रधाने दुहादीनामित्यत्राप्राधान्यमनुद्देश्य-
त्वरूपम्बोध्यम् । *इदमावश्यकमिति* । एकव्यापारार्थकत्वे गवादीनामकथि-
तञ्चेति सूत्रेण येषां कर्मसंज्ञा तेषामुक्तप्राधान्यविशिष्टपयआदिकर्मभिन्नतयाऽप्रा-
धान्यादेव पूर्वोक्ता व्यवस्था न्याय्येति भावः । ननु गवादीनां क्रियान्वयवि-
वक्षायामपि कर्मत्वेनाविवक्षायां षष्ठी प्राप्नोतीत्यत आह । *द्विकर्मकेष्विति* ।
द्विकर्मकधातुयोगेष्वित्यर्थः । मूलकारपठितदुहादिक्रमेणार्थमाह । *अन्तःस्थिते-
त्यादिना* । अत्र निष्ठान्तत्यागात्यर्थतावच्छेदकविभागस्योपलक्षणत्वं तु दुहधात्व-
र्थकुक्षिनिविष्टम् । तेन न धात्वर्थसङ्गृहीतकर्मकत्वेनाकर्मकत्वापत्तिरिति बोध्य-
म् । *अनभिधानादिति* । अत्र मानं वक्ष्यते अत एवेत्यादिना सर्वत्र षष्ठ्यर्थस्य
क्रियाविवक्षायां षष्ठ्यभाव इति तु न नियमः किन्तु क्वचिदेवेत्याशयेनाह । *स्वा-
न्वययोग्येति* । तेन मातुः स्मरति । भजे शम्भोश्चरणयोरित्यत्र षष्ठीदर्शनेऽपि
न क्षतिः । *तत्रैव* । तत्राभाव एव । तत्रैव मानमाह । *अत एवेति* । तत्र

अत एव तण्डुलानामोदनं पचतीत्यत्र द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठीत्येव कर्तुरिति सूत्रे भाष्ये उक्तमिति दिक्। बलिं याचतइति। यदा परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलो व्यापारो याचेरर्थः। स्वत्वे बलेर्निरूपकतयान्वयस्तदानेन कर्मत्वम्। पूर्वविषयस्य कस्याप्यभावात्। न चात्रापादानत्वप्रसक्तिः विभागस्य धात्वर्थत्वाभावात्। 'न हि याचनादेरापायो भवति याचितो यदि ददाति तदापायेन युज्यते' इति भाष्योक्तेः। असकीर्तितपर्यायाकथितग्रहणे गान्दोग्धि गौर्दोग्धीति च याचिपृच्छिभिक्षयोगे कर्मसञ्ज्ञैवेत्येषा व्यवस्थेति च सिद्धान्ते कैयटोक्तेश्च। व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वं बोध्यम्। वसुधायाः स्वामित्वसंबन्धात् कर्मयुक्तत्वम्। अविनीतमिति याचेः स्वीकारानुकूलव्यापारोऽर्थः। स्वीकारश्चेदमवश्यं करिष्यामीति शब्दप्रयोगजनको ज्ञानविशेषः। विनयेन च तद्विषयज्ञानवत्त्वसंबन्धः। तण्डुलान्विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य कर्त्तुरिति सूत्रस्थभाष्यकैयटसमतत्वेन कर्तुरित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम्। एवं स्वसंप्रदानदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थःदण्डयादियोगेऽपि तेनैव सिद्धम्। एवं व्यापारद्वयार्थत्वेन सति प्रयोगे बहूनां धातूनां द्विकर्मकत्वं बोध्यम्। व्रजमिति। निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति तत्र तां निर्गमप्रतिबन्धकपूर्वकं चिरं स्थापयतीति समन्वयात्। अधिकरणत्वाविवक्षायामनेन कर्मत्वं। व्यापारद्वयार्थत्वे कर्तुरिति कर्मत्वम्। पन्थानमिति। जिज्ञासा

तदभावादेव। * कर्त्तुरितिसूत्रभाष्य इति *। इह हि तण्डुलानोदनम्पचतीति द्व्यर्थं पचिं तण्डुलान्पचन्नोदनान्निर्वर्त्तयतीति। इहेदानीन्तण्डुलानामोदनम्पचतीति द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनन्निर्वर्त्तयतीत्येवमत्रोक्तम्। * द्व्यर्थं पचिरिति *। विक्लेदनोपसर्जने निर्वर्त्तने पचिर्वर्त्तते। तण्डुलान्विक्लेदयन्नोदनान्निर्वर्त्तयतीत्यर्थ। तत्रोपसर्जनविक्लेदनक्रियापेक्षन्तण्डुलानाङ्कर्मत्वम्। प्रधानभूतक्रियापेक्षन्तु ओदनस्य। * द्व्यर्थश्चैवेति *। तण्डुलाना सम्बन्धिनं विकारविशेषमोदनं विक्लित्त्या निर्वर्त्तयतीत्यर्थ। सा च विक्लित्ति सामर्थ्यात्तण्डुलानामेव विज्ञायते इति कैयट। उभयानुकूलो व्यापारः। द्विदापयिपाव्यञ्जको दीयतामित्याकारकशब्दोच्चारणरूप। * कर्मसञ्ज्ञैवेत्येषेति *। एतेन याचिपृच्छिभक्षियोगे पूर्वविधे सर्वथाऽप्राप्ति सूचिता। * स्वामित्वसम्बन्धादिति *। वसुधानिष्ठस्वत्वनिरूपितस्वामित्वात्मकसम्बन्धादित्यर्थ। * याचेरिति *। अस्य अत्रेत्यर्थ। तेनैवेति। कर्त्तुरित्यनेनैवेत्यर्थ। * पथमिति *। पूर्ववत्। * न

विषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपो व्यापारः पृच्छे-रर्थः । ज्ञानविषयत्वेन पथः कर्मत्वं माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः । अपादानत्वन्तु नात्र न प्रश्नादेरापायो भवति पृच्छ्यसौ यदाचष्टे तदापायेन युज्यत इति भाष्योक्तेः । संप्रदानत्वमपि न । कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वा-भावात् । व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वम् । वृक्षमिति । विभागपूर्व-कादाने चिञ् वृक्षात्फलान्यादत्ते इत्यर्थात् । अपादानत्वाविवक्षायामनेन कर्मत्वम् । धर्मं ब्रूते इत्यादिः । ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञर्थः । प्रवृत्तिपर्यवसायी स शासेः । स च धर्मं कुर्वित्यादिविधिघटितो-पदेशः विषयता च फलतावच्छेदकः संबन्धः । वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्तस्य सम्प्रदानत्वम् । तदविवक्षायामनेन कर्मत्व म् । अत्र कर्तृव्यापारानन्तरं तज्ज्ञानाश्रयत्वरूपो माणवकस्य धर्मेण सम्बन्धः । नयतेः संयोगानुकूलव्यापारोऽर्थः । स एव स्कन्धग्रहणादिपूर्वो वहेरर्थः । गत्यनुकूलव्यापारविशेषः कृषेः । बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं हरतेः । एषु कर्तुरिति कर्मत्वं बोध्यम् । एवञ्च भाष्यानुक्तानामत्र ग्रहणं प्राचामनु-रोधेनेति तत्त्वम् । भाष्योक्ता हि 'दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः'। अर्थनिबन्धनेयमिति । इदमपि कैयटानुरोधेन । वस्तुतस्तु येषामेतदर्थाना-न्द्विकर्मकत्वमिष्टन्तेषां व्यापारद्वयार्थत्वेन कर्तुरित्येव सिद्धम्, अन्यथा आ-ख्यातोपयोगे इति सूत्रभाष्योक्तपरिगणनभङ्गापत्तिः । किं च भाष्ये भिक्षि-ग्रहणवैयर्थ्यापत्तिः । उभयार्थकयाचिग्रहणेनैव सिद्धेरित्यन्ये । अकर्मकधा-तुभिरिति । तेषां स्वकरणकव्यापने वृत्त्या व्याप्तिरूपफलाश्रयत्वेन कर्तुरिति कर्मत्वम् । मासमास्त इत्यादेर्मासमासनेन व्याप्नोतीत्यादिक्रमेणार्थ इति

---

प्रश्नादेरापाय इति * । अत्रापायो बोध्य । * विभागपूर्वकादान इति * । विभाग जन्यपरस्थापादानुकूलव्यापार इत्यर्थ । * भाष्योक्ता हीति * । तदुक्तं भाष्ये । किमुदाहरणम् । दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुवि शासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविनेति । * उपयोगनिमित्तमि ति * । उपयुज्य इत्युपयोग । पय प्रभृति तस्य निमित्तम् गवादि । * अपूर्व विधाविति * । अत्र पूर्वग्रहणमन्योपलक्षणम् । विध्यन्तराविषयत्वविवक्षायाम् । ब्रुविशास्योर्गुण प्रधान कर्म । तेन सचते सम्बध्यत इत्यर्थ । * इत्यन्य इति * । भाष्यतत्त्वविद । * तेषाम् * । अकर्मकधातूनाम् । * स्वम् * । अकर्मकधात्व र्थत्वेन प्रसिद्धोऽर्थ । स्वकरणकव्यापनेत्यस्य स्वकरणकव्याप्त्यनुकूल व्यापार इत्यर्थ । मूलकाराभिप्रेतमस्य कर्मसंज्ञाविधायकत्वभ्रमं खण्डयितुमाह । * यत्त्वि

भावः। यत्त्विदमेव कर्मसंज्ञाविधायकमिति चेन्न। भाष्ये तादृशवचनानुपलम्भात्। अकथितश्चेति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्चेति' भाष्ये उक्तम् तच्च न विधायकं हिशब्दघटितत्वात्। किं च कालाध्वनोरिति सूत्रे कालाध्वानौ कर्मवदिति वक्तव्यमिति वार्त्तिकप्रत्याख्याने प्राकृतमेवैतत्कर्म यथा कटं करोतीत्युक्तम्। अस्य वचनत्वे उक्तं वा प्राकृतं वेति वदेत्। तस्मादुक्तरीत्या कालादीनान्तद्योगे कर्मतया द्विकर्मकत्वमित्येवैतात्तत्पर्यम्। अत एव समां समां विजायतइति सूत्रे समायां विजायत इति सूत्रे समायां समायां विजायत इति विग्रहकथनपरं भाष्यं सङ्गच्छते। अन्यथा अनेन द्वितीयाया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव। अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका। 'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते' इति। सकर्मकविषयेऽप्यनेनैव प्रकारेण कालादिकर्मणा सकर्मकत्वं तुल्यन्यायात्। तेन मासमोदनं पचतीति भवति। तत्र कालादिकर्माप्रधानं, द्रव्यकर्म तु प्रधानं कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात्। किं च कठिनपाकस्य महापरिमाणस्य बहुसंख्यस्य च चिरेण पाको ऽन्यस्याचिरेणेति द्रव्यधर्मं पर्यालोच्य क्रियासु कालयोगे इति स च बहिरङ्गः, अपि च साधनसम्बन्धे जाते क्रियायाः परिच्छेदक-

ति *। * तादृशवचनेति *। कर्मसंज्ञाविधायकवचनेत्यर्थः। ननु कालभावाध्वगन्तव्या इति वचनमेव तादृशमस्तीत्यत आह। * अकथितमिति *। * हिशब्दघटितत्वादिति *। हिशब्दस्य प्रसिद्धार्थकत्वं स्वभावसिद्धम्। हिशब्दघटितेन वाक्येन भूतानुवाद एव क्रियत इति भावः। ननु हिशब्दो वाक्यालङ्कारे इदञ्च वार्त्तिकं विधायकमेवेत्यत आह। * किञ्चेति। प्राकृतमेवैतदिति *। अथ प्रशब्द आदित्वबोधकः। तेन प्रकृतशब्द आदिकृतत्वबोधकस्तस्मादुत्सर्गसूत्रलाभः। प्रकृतशब्दाच्च तस्येदमित्यण्। उत्सर्गसूत्रबोधितमित्यर्थः। * अत एव *। अस्यापूर्ववचनत्वाभावादेव। * अत एव *। उक्तभाष्यस्य स्वोक्तार्थकत्वादेव। अकर्मकधातूनामिव सकर्मकाणामपि कालादिकर्मकत्वमाह। * सकर्मकविषय इति *। एतेन व्याख्यानेनापि पूर्वोक्तवचनस्यापूर्वविधायकत्वाभावो ध्वनितः। तस्यापूर्वत्वे तस्य सकर्मकेष्वप्रवृत्त्या सकर्मकाणां द्विकर्मकत्वन्न स्यादिति भावः। ननु सकर्मकधातूनाङ्कालादिकर्मणा द्विकर्मकत्वे तयोः कर्मणोर्गुणप्रधानभावः कथमत आह। * तत्रेति *। तत्र तयोर्मध्ये। * पर्यालोच्येति *। अस्य क्रियास्वित्यत्र सम्बन्धः। तेन का उपपत्तिः। प्रकारान्तरेणापि कालस्य बहिरङ्गत्वमित्याह। * अपि चेति *। नन्वकर्मकत्वव्यवहारे

यागपालाकाङ्क्षेति स बहिरङ्ग', अकर्मकव्यवहारस्तु धातूनामन्यकर्माभावनिमित्त एवान्तर्भीजं वक्ष्यते। तदुक्तम्। 'अतस्मै कर्मभिर्युक्तो धातुर्द्वि-र्थपरकर्मकः। तस्य कर्मणि भावे च निमित्तत्वाय कल्पत' इति।

गतिबुद्धि॥ शब्दः कर्मकारकं येषामित्यर्थो व्याख्यानात्, तेन ह्वाययतिक्रन्दयत्योर्न। अणाविति णिच्यनुत्पन्ने इत्यर्थः। अत्र णिज् हेतुमण्णिजेव स णावित्यत्रापि स एव व्याख्यानात्। अत एव भक्षेर्निषेधश्चरितार्थः। स हि न नित्यण्यन्तश्चुरादिरिति बोध्यम्। अन्यानर्थानत्वलक्षणार्थप्राधान्यशब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद्बलवत्त्वेन कर्तुरित्येन सिद्धे णिजर्थेनाप्यमानस्य चेष्टत्यर्थादीनामेवेति नियमार्थमिदन्तेन पाचयत्यादियोगे नेति हेतुमति चेति सूत्रे भाष्यकृत'। प्रधानकार्यं सर्वतो बलवदिति आकडारसूत्रे कैयटे स्पष्टम्।

---

धातूनामकर्मकत्वमुपपादयितुमत आह। * अकर्मकव्यवहार इति *। * तदुक्तमिति *। हरिणेति शेषः। * ते कर्मभि *। कालादिकर्मभिः। * युक्ते *। द्रव्यकर्मभिः। अयुक्त इति शेषः। धातुरित्यन्वयः। अकर्मकव्यवहारघटकं कर्म द्रव्यात्मकमेव विवक्षितमिति व्यवहारद्वयोपयोगात्मकमकर्मत्वप्रयुक्तकर्मणि यो लकारो भावे वा तन्निमित्तत्वाय कल्पते। आस्यते मासः। मासमास्यते देवदत्तेनेति यथा। अत्र द्रव्यपदं कालादिभिन्नद्रव्यसामान्यपरम्। तेन भावादेरपि लिङ्गसंख्यान्वयि स्वरूपद्रव्यत्वसत्त्वेऽपि न क्षतिः।

गतिबुद्धीतिसूत्रे पच्छब्दकर्मकपदं व्याचष्टे। * शब्दः कर्मकारकमिति *। * व्याख्यानादिति *। इतिनिमाहेत्यनेनाभिप्रायेण कर्मशब्दे कर्मकारकपरत्वे यौगिकत्वमूलकादित्यर्थः। यद्वा प्रकृतसूत्रे कर्मग्रहणोपादानमुत्तरादित्यप्यर्थः। अन्यथाऽर्थशब्दयोरुत्तरत्रसम्बन्धेन। गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणामित्येव ब्रूयात्। * तेन *। तादृशव्याख्यानेन। * ह्वाययतीति *। अनयोः शब्दार्थकत्वेऽपि शब्दः कर्मकारकं येषां तादृशार्थकत्वाभावादित्यर्थः। एतत्सूत्रघटकणिच्पदं हेतुमण्णिच एव बोधकम्। अत्र मानं व्याख्यानमुपवर्णितं तदेव प्रकटयति। * अत एवेति *। हेतुमण्णिच्परत्वादेव। * इति बोध्यमिति *। णिच्सामान्यपरत्वेऽण्यन्तावस्था तत्र न सम्भवतीति भावः। गतिबुद्धीतिसूत्रस्य नियमार्थत्वाभिमतमुपपादयति। * अन्यानर्थानत्वेत्यादिना *। अन्तरङ्गादपीत्यपिना परत्वोपजीव्यत्वयोः समुच्चयः। * भाष्यकृत इति *। तत्र हि कथमिदं विज्ञायते हेतुमत्यभिधेये णिज् भवतीति आहोस्विद्धेतुमति यो धातुर्वर्तते इति रीत्या विचारे वस्तु प्रकृत्यर्थविशेषणमित्युक्तम्। अत्र कैयटः। विनापि णिचा पचत्यभि[illegible] प्रयतीति प्रयोजकव्यापारावगमात्मकत्वेऽप्यर्थस्य हेतुमत उपपद्यते इति। को

तेन गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं पाचयत्यादियोगे कर्तृत्व शक्तिमत्त्वमेवेति बोद्ध्यम् । गमयति देवदत्तेनेति । यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको व्यापार इति बोध. । अत्र देवदत्तस्य न कर्मत्वम् । नियन्त्रिति । नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः । प्रापणार्थवहेर्गत्यर्थत्वाभावे ऽपि ग्रामं प्राप्त इत्यादौ तत्प्राप्तेर्गतिं विना ऽसम्भवादाक्षिप्तगत्यापि गत्यर्थत्वमित्यभिमानेन वार्तिकारम्भः । सुख

---

दोष । इह हि उक्त करोति । प्रेषित करोतीति णिच् प्राप्नोति । प्रकृतिविशेषणत्वपक्षे यथा प्रत्ययाभिहिते प्रयोजकव्यापारे णिज्भवति एवमुक्तप्रेषितादिशब्दाभिहितेऽपि प्राप्नोति हेतुमाक्षिपयत्वात् करोत्यर्थस्य । प्रत्ययार्थविशेषणत्वे उक्तार्थत्वाण्णिजभाव । इह तर्हि पाचयत्योदनन्देवदत्तो यज्ञदत्तेनेति उभयो क र्त्रोर्लेनाभिधानम्प्राप्नोति । प्रत्ययार्थविशेषणसत्वे न दोष । प्रधानकर्तरि लादयो भवति । प्रधानकर्त्ता लेनाभिधीयते । यश्चाप्रधान सिद्धा तत्र तृतीया कर्त्तरीत्येवेत्युक्तम् । अत्र प्रधानकर्त्ता लेनाभिधीयत इत्युक्त्वा प्रधानाप्रधानसन्निधौ प्रधानकार्यस्य बलवत्त्व सूचितम् । ततोऽग्रे प्रत्ययार्थविशेषणपक्ष एव पाचयत्योदनन्देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्त्तरि कर्मसज्ञा प्राप्नोतीति शङ्कायामेव स माहितम् । गतिबुद्धिप्रत्यवसानार्थशब्दकर्मकाणामणीत्येतन्नियमार्थम्भविष्यति । एतेषामेवाण्यन्ताना य कर्त्ता स णौ कर्मसज्ञो भवति नान्येषामिति एवमुक्तम्भाष्ये । अत्र कैयट । ण्यर्थस्य प्राधान्यात्तेनेप्सितस्य प्रयोज्यस्य सिद्धा कर्मसज्ञा । न च स्वव्यापारापेक्षया स्वातन्त्र्यात्परत्वात्कर्तृसज्ञा प्राप्नोतीति युक्त वक्तुम् । प्रयोज्यव्यापारस्याप्राधान्यात्प्रधानाप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वान्नियमेन तु प्रधानकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात्कर्तृत्वम्भवत्येव । तदुक्त हरिणा ॥

गुणक्रियाया स्वातन्त्र्यात्प्रेषणे कर्मताङ्गत ।
नियमात्कर्मसज्ञाया स्वधर्मेणाभिधीयत इति ।

* कैयटे स्पष्टमिति * । तत्र ह्येवमुक्तम् । गुणप्रधानसन्निधौ प्रधानस्य प्रयोजकत्वे सम्भवति सति पृथग्गुणास्तद्विरुद्ध स्वकार्यन्न प्रयुञ्जते । ततश्च सिद्धायाप्रयोज्यस्य कर्मसज्ञायाङ्गत्यर्थादीनामेवाण्यन्तानाङ्कर्त्ता कर्मसज्ञो भवति नान्येषामिति नियम क्रियते । तेन पाचयत्योदनन्देवदत्तो यज्ञदत्तेनेत्यत्र कर्मसज्ञा न भवतीति । * नियन्तृकर्तृकेति * । अत्र नियन्ता पशुप्रेरकमात्रम् । * गत्यर्थत्वाभावेपीति * । प्रापण हि प्राप्त्यनुकूलव्यापारानुकूलव्यापार । प्राप्तिश्च सम्बन्धमात्रम्न तु सयोग एव । सुखम्प्राप्तो विद्याम्प्राप्त इत्यादौ सयोगाभावेऽपि प्राप्तिव्यवहारादिति भाव ॥ * । प्राप्त्यर्थकस्य गत्यर्थकत्वा

प्राप्त इत्यादौ न तदाक्षेपः तत्र कर्तरि क्तः आदिकर्मणि बोध्यः । अत एव ग्रामं प्रापयति देवदत्तेनेत्येवेति ध्वनितं, नयतीति न वेति सूत्रे च भाष्ये । नयतेस्तु या प्रापणे इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोध्यम् । आदिखाद्योरिति । प्रत्यवसनार्थत्वात्प्राप्तिः प्रत्यवमानं भक्षणम् । भक्षयति बलीवर्दानिति । हिंसाहे भक्षणे भक्षेर्वृत्तिः । परकीयसस्यभक्षणे परो हिंसितो भवतीति । तत्स्वामिनोऽत्र हिंसा द्रष्टव्या । जल्पयतीति । पुत्रो धर्मं जल्पति तद्बोधकवाक्यानि कथयति देवदत्तो जल्पयति धर्मं पुत्रमित्यर्थः । शब्दाययतीति । शब्दं करोतीत्यर्थे शब्दवैरेत्यादि क्यङन्ताण्णिच् । परे तु शब्दक्रियाणामित्यर्थे ह्वायतिशब्दाययतिक्रन्दयतीनां प्रतिषेध उक्तो भाष्ये न तु शब्दकर्मकाणामिति पक्षे । एवञ्च तत्र पक्षे भाष्ये शब्दाययतौ प्रतिषेधानुक्त्या ऽकर्मकशब्दायतिसत्त्वे न मानं शब्दस्य धात्वर्थसङ्गृहीतत्वे ऽपि बहिर्भूतपत्रादिकर्मणो ऽभावे मानाभावात् क्यङन्तादिवेति चिन्त्यो ऽयं निषेध इत्याहुः । येषामिति । अयं भावः । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णाविति सूत्रे नियमस्य सजातीयापेक्षत्वात्सकर्मकाणाञ्चेदेषामेवेति नियमपरम् । एवं सिद्धे ऽकर्मकग्रहणं सामर्थ्याद्देशकालादिभिन्नकर्माभाववतो ऽकर्मकग्रहणेन ग्रहणार्थं तच्च

---

भावादेव । * इत्येवेति * । अत्र गत्यर्थत्वाभावेन नियमेन कर्मत्वाप्राप्ते । * ध्वनितञ्च गतीतिसूत्र इति * । तत्रमुक्तञ्च बहिर्गत्यर्थ इति । * नयेति सूत्रे चेति * । तत्र ह्युभयत्र विभाषागणनावसरे हृक्रोरित्युभयत्र विभाषेत्युक्त्वा प्राप्ते ऽभ्यवहरतिमुराहृत्याप्राप्त इत्यति भारन्देवदत्तो हारयति भारन्देवदत्तमित्युक्तम् । अत्राप्राप्त इत्यनेन प्राप्त्यर्थस्य गत्यर्थत्वाभाव सूचित एव । नन्वेवंरीत्यहो नैत्येन नयतेरण्यन्तावस्थाया यः कर्त्ता तस्य ण्यन्तावस्थायाङ्कर्मसञ्ज्ञाप्राप्तिरेव नेति नीग्रहणं व्यर्थमत आह । * नयतेस्त्विति * । अत्र नयतेस्त्विति तुना तस्यापि न गत्यर्थत्वमिति नीग्रहणमुक्तनियमलब्धाप्राप्त्यनुवाद इति ध्वनितम् । * हिंसाङ्ग इति * । बहुव्रीहिः । हिंसा दुःखोत्पत्त्यनुकूलो व्यापारः साऽङ्गं फलं यस्येत्यर्थः । सूत्रकारोक्तं खण्डयति । * परे त्विति । * तत्र पक्ष इति * । मानाभावादिति * । पक्षञ्च पुत्रादिकर्मणाऽस्य धातोः सकर्मकत्वात्र गतिबुद्धीतिसूत्रप्राप्तिरिति भावः । येषामित्यादिना यदुक्तन्तल्लाभप्रकारमाह । * अनन्तर्भाव इति * । * इतिसूत्रमिति * । कर्त्तव्यामिति शेषः । * देशकालादिभिन्नेति * । तेषां सर्वैरेव सम्बन्धे तैर्नाकर्मकत्वव्यवहारक्षतिरिति । कर्मणोऽविवक्षाप्रभेद

सामान्यापेक्षं ज्ञापकं शास्त्रे ऽकर्मकपदेन ईदृशानामेव ग्रहणमिति तेन मासमास्यतइत्यादौ भावे लो भवति । त्विति न तदविवक्षा हि द्वेधा तदन्वययोग्यधात्वर्थत्यागात्। सत्वे च तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयविवक्षणाद्वेति भावः । इदं कैयटानुरोधेन । परे त्वविवक्षितकर्मणामपि अकर्मपदेन ग्रहणं क्तादीनामविवक्षितकर्मकेभ्यः कृतपूर्वी कटमित्यादौ भाष्यकृता कैयटेन चाङ्गीकारात् । लुनातेर्निवृत्तप्रेषणाण्णिचि लावयति केदारं देवदत्त इत्यादौ केदारस्य कर्मद्वितीयान्तस्य णेरणावित्यत्र कैयटेन प्रयोगाच्च । न चाप्यर्थान्तरे वृत्त्याऽकर्मकत्वं न त्वविवक्षयेति वाच्यम् । तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वाभावात् । तदुदाहरणं तु स्यन्दत इत्याद्यर्थकं नदी वहतीत्याद्याकरे स्पष्टम् । अधीगर्थेति सूत्रे कर्मणः शेषत्वविवक्षया ऽकर्मकत्वे मातुः स्मर्यत इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च । यत्तु प्रकृतसूत्रे भाष्ये कालकर्मणामुपसंख्यानं कर्त्तव्यं न कर्त्तव्यं न च केचित्कालभावाध्वभिरकर्मकास्तत एव विज्ञास्यामः कचिदे ऽकर्मका इतीत्युक्तं कचिदित्यस्य कालादेः कर्मसंज्ञाप्रयोजकव्याप्यत्वादिरहिते ऽर्थे इत्यर्थ' । तस्यायं भावः । उक्तरीत्या ऽकर्मकपदसामर्थ्यादत्र शास्त्रे ऽकर्मकपदस्यावस्थान्तरे कर्मरहिते इ-

---

न्दर्शयति । * तदविवक्षा द्वेधेति* । * तदन्वययोग्येति * । कर्मान्वययोग्येत्यर्थं । स च व्यापारव्यधिकरणफलरूपं । * सत्वे चेति * । तादृशफलस्य धात्वर्थत्वेऽपि तादृशफलाश्रयत्वस्य विवक्षितत्वङ्किन्तु तद्धात्वर्थकमत्वाभिप्रेतस्य सम्बन्धित्वेनान्वयित्वमात्रम् । कैयटमतन्दूषयन्स्वमतमाह । * परे त्विति * ।*लुनातेरिति * । द्विधाभवनानुकूलव्यापारार्थको हि लुनाति । तत्र व्यापारत्यागे लूयते केदार' स्वयमेव । पुनस्तस्यैव केदारस्य प्रयोज्यत्वविवक्षया हेतुमण्णिचि केदारस्यानेन सूत्रेण कर्मसंज्ञाया लावयति केदारन्देवदत्त इति भवति । अविवक्षितकर्मकस्याग्रहणे तु एतादृशप्रयोगानुपपत्तिः स्फुटैवा* तत्त्वप्रत्यभिज्ञया* । फले पूर्वकालज्ञातफलाभेदस्य तदेवेदमितिप्रत्यभिज्ञया । तदुदाहरणन्तु । अर्थान्तरे वृत्तेरित्यस्योदाहरणान्त्वित्यर्थं । * नदी वहतीति * । अत्र स्कन्धग्रहणादिपूर्वकदेशान्तरप्रापणार्थकत्वस्याप्रतीते । * भाष्य उदाहृतत्वाच्चेति * । एवञ्चैतादृशभाष्यप्रयोगोपि शास्त्रेऽकर्मकपदेनाविवक्षितकर्मकाणां ग्रहणे मानम् । भाष्यान्तरविरोधशङ्का वारयति । * यत्त्विति * । अस्मिन्भाष्यीयव्याख्याने । न च केचिदितिकथनेन कालादिसम्बन्धसत्त्वाभ्यां सकर्मकत्वमकर्मकत्वमिति न युक्तमित्यर्थं प्रतीयते [illegible] च न युज्यते यथा कृतपूर्वी कटम्भुक्तपूर्वी ओदनमित्यत्र पूर्वङ्कर्मान्वयाविवक्षयाऽकर्मकत्वन्तथा कालाद्यन्वयाविवक्षया कालादिभ्योऽप्यकर्मकत्वसम्भवादिति विरोधो नास्माकम्मते इत्याशयेनाह । * कचिदित्यस्ये

त्यर्थ इति । तादृशत्वञ्च सर्वथा द्रव्यकर्माभावात्तदविवक्षणाद्वेत्युभयविधमपि कृतपूर्वीत्यादि भाष्याद्बोध्यं विनिगमनाविरहाच्च । अत एवाकर्मकाधिकारे श्रुदृशिभ्यामादिभ्य आत्मनेपदविधानं सङ्गच्छते । अकर्मकशब्दे च धातुरेवान्यपदार्थः । अर्थभेदेन च शब्दभेदः । धर्मित्वेन कालाद्यतिरिक्तकर्मानन्वय्यर्थकत्वञ्च तत्त्वमिति बोध्यम् । न च केचिदिति भाष्येण धातुमात्रस्य कालकर्मकार्थवृत्तित्वमिति दर्शितम् । यद्वा यत्कर्म भवति न च भवति तन्नाकर्मकाणां न चैतत्कर्म क्वचिदपि न भवतीति भाष्योक्तपक्षान्तरेण तत्सामर्थ्याद् व्यभिचारिद्रव्यकर्मरहितत्वमर्थो बोधितः । एवञ्च मासादिप्रयोगेऽपि तदवस्थायामेवाकर्मकत्वं बोध्यम् । एतेनात्र सूत्रे न च केचिदिति प्रतीकमुपादाय कालादेरविवक्षया तेऽकर्मकत्वसम्भवोऽस्त्येवेत्याशङ्क्यात्यन्ताविद्यमानकर्मकाणामेवात्र शास्त्रेऽकर्मकपदेन ग्रहणम्, अन्यथा पचादीनामविवक्षितकर्मत्वे लादयः स्युरिति कैयटेनोक्तं तत्परास्तम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति वदन्ति ॥

हृक्रोरन्य ॥ तत्राभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थकरोतेश्चाकर्मकत्वात्प्राप्तेऽर्थान्तरे चाप्राप्ते उभयत्र विभाषेयम् । अभिवादि । हेतुमण्ण्य-

---

ति* । हेत्वन्तरमाह ।*विनिगमनाविरहादिति * । उक्तार्थे प्रमाणमाह । * अत एवेति * । उभयविधाकर्मकग्रहणादेव । मूलोक्तरीत्यनुसरणे तु श्रुदृश्यादीनामविवक्षितकर्मकत्वेऽपि सकर्मकसम्बन्धयत्नेनाकर्मकत्वाभावादेषामकर्मकाधिकारे पाठो व्यर्थः स्यादिति भावः । नन्वकर्मकपदार्थो विद्यते कर्म यस्येति व्युत्पत्त्या धात्वर्थक्रियाबोधादकर्मकाद्धातोरित्यनुपपन्नमत आह । * अकर्मकशब्दे चेति * । ननु तत्रापि कथमविवक्षितकर्मणोऽकर्मकपदेन ग्रहणं यावता तस्यैव यदा कर्मणोऽन्वयविवक्षा तदा कर्मणोऽविद्यमानत्वेनाकर्मकपदव्याख्यार्थविरोधादत आह । * अर्थभेदेनेति * । ननु कालाद्यन्वयित्वेन धातोरपि तत्त्वसाधितमेवेत्यत आह । धर्मित्वेनेत्यस्य निवेशान्मास्तु स्पष्टते इत्यादिसङ्ग्रहः । * व्यभिचारिद्रव्येति * । घटादि । * एतेन * । उक्तभाष्यविरोधेन । * अतिप्रसङ्ग इति * । कैयटोक्तातिप्रसङ्ग इत्यर्थः ।

ननु हृञो सकर्मकत्वाद् हृक्रोरिति सूत्रस्योभयत्रविभाषार्थत्वव्यवहारानुपपत्तिरत आह । * तत्रान्यथेति * । अभ्यवहारयति सैन्धवानित्यादौ । * करोतेश्चाकर्मकत्वादिति * । विकारयति सैन्धवानित्यादौ । * करोतेश्चाकर्मकत्वादिति * । विकारयति सैन्धवानित्यादौ । * अर्थान्तरे * । हरणार्थकहरतेरुत्पत्त्यनुकूलव्यापारार्थकरोतेश्च प्रयोगः । यत्त्वभिवादिदृशोरित्यस्य व्याख्यानाव

न्तस्याभिवादेर्दृशिभक्तिकण्यन्तस्य चेत्यर्थः ॥

अधिशीङ् ॥ आधार इत्यनुवर्त्तते तस्यैव कर्मत्वशक्तिमत्तानेन बोध्यते॥

अभिनिविश ॥ व्याख्यानादभिनीतिद्वन्द्वे तत्पूर्वो विशिति समासः । अभिनिवेश आग्रहः, सन्मार्गविषयकाग्रहवानित्यर्थः । व्यवस्थितेति । परिक्रयणइत्यतोऽन्यतरस्या ग्रहणानुवृत्तेरस्य वैकल्पिकत्वम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । एतच्चेन्न्यर्थेष्वभिनिविष्टानामिति प्रतीके समर्थसूत्रे कैयटे । परे त्वेतद्भाष्यप्रयोगादभिनिविशित्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिरन्यतरस्याग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः ॥

उपान्तु ॥ अलुग्विकरणत्वाद् भ्वादेरेव ग्रहणमित्याह वसतेरिति । भाष्ये ऽश्यर्थस्य नेत्युक्तं भगकार्थो धूम इतिवदशेनिर्दिष्टस्यर्थस्येति तदर्थन्तत्फलितमाह अभुक्त्यर्थस्य नेति । उपोष्य रजनीमेकामित्यादौ कालाध्वनोरिति द्वितीया । ग्रामे उपवसतीत्यत्र ग्रामे वसन् त्रिरात्रमुपवसतीत्यर्थ इतीदं न कार्यमिति भाष्ये स्पष्टम् । उपपदविभक्तिमाह उभेति । उपपदविभक्तीनां सम्बन्धोऽर्थः । विशिष्यानुक्ते षष्ठ्यपवादत्वाच्च । उभसर्वयोस्तसाविति विग्र-

---

सरे यद् सन्देशवचन इति धातोराधृषीयस्यायन्निर्देश इत्याह तत्रेति सूचयन्नाह । * हेतुमण्यन्तस्येति * । तत्राभिवदति गुरुं देवदत्त । अभिवादयति गुरुं देवदत्तमिति भाष्यप्रयोगस्योपपत्ति ।

* तस्यैव * । आधारस्यैव ।

* व्याख्यानादिति * । नेरल्पाच्तरमिति सूत्रबलेन पूर्वनिपाते कर्त्तव्येऽभेः पूर्वनिपातकरणमुक्तादित्यादि । * अस्य * । अभिनिविशश्चेति सूत्रस्य । * अतिप्रसङ्ग इति * । पापेऽभिनिवेश इत्यत्रातिप्रसङ्ग इत्यर्थः । कैयटोक्तं दूषयति । *परे त्विति* । *एतत्प्रवृत्तिरिति* । पापेऽभिनिवेश इत्यत्र तु गुणदर्शनेन नास्य प्रवृत्तिरिति भावः ।

* न मानमित्याहुरिति * । अत एव देवनात इत्यादिपरिगणनविरोधो नेति भावः । * भ्वादेरिति * । निवासार्थस्येति शेषः । तेनाच्छादनार्थस्य न ग्रहणमिति फलितम् । * रजनीमेकामित्यादाविति * । आदिना हरिदिनमुपोषित इत्यस्य सङ्ग्रहः । अभ्यर्थस्य नेतिवचनस्य प्रत्याख्यानप्रकारमाह । * ग्रामेउपवसतीत्यत्रेति * । उपपदविभक्तिमिति * । उपपदस्य विभक्तिमित्यर्थः । * षष्ठ्यर्थः सम्बन्धश्च स्वयोगनिमित्तकत्वम् । * षष्ठ्यपवादत्वाच्चेति * । अत्र चशब्दो यार्थेऽनास्थायाम् । षष्ठ्यपवादत्वस्यैव सम्बन्धार्थकत्वसाधकत्वन्तु न युक्तम् । सर्वासां विभक्तीनां यदि कर्मणि द्वितीयेत्यादिसूत्रं स्यात्तदा तत्र षष्ठी स्यात्तेषामारम्भे तु द्वितीयेति रीत्या कर्माद्यर्थकत्वमितिकल्पनया सम्बन्धार्थकत्वापातात् । * उ-

हः । उभयत इति उभयशब्दात्तसिं परत्वादकच्प्रत्यये आरोप्य तस्प्रकृतिकात्र षष्ठ्य-र्थे । उभयशब्दस्य सर्वशब्दप्रकृतिकतसन्तयोगे इत्यर्थः । आम्रेडितान्तेष्विति । कृतद्विर्वचनेष्वित्यर्थः । धिक् कृष्णमिति । धिगर्थो निन्दा । कृष्णाभक्तस्य-निन्दानिन्देत्यर्थः । उपर्यादीनां समीपार्थे देशादिवृत्तित्वमर्थः । अभितः परित इत्यत्र पर्यभिभ्यां चेति तसिल् । सर्वतोभयत इत्यर्थोऽन्यस्य सर्वत इत्यर्थः इति पर्यभिभ्यासूत्रे भाष्ये ॥

अन्तरान्तरेण ॥ अन्तरेणेत्यव्ययान्तसाहचर्यादन्तरेत्यव्ययान्तम् अन्तरे-त्यतृतीयान्तसाहचर्यादन्तरेणेत्यतृतीयान्तम् । साहचर्यं सादृश्यम् तथा-स्य गौर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इति दृष्टान्तपरभा-ष्येण सदृशानामेव प्रयोगे सहायतेरर्थस्य प्रतिपादनात् । तेन विमनयोरे-व ग्रहणम् । यद्वा, अन्तराशब्दस्य प्रथमैकवचनान्तस्यानभिधानादन्तरा इ-त्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यत इति तत्साहचर्यादन्तरेणेत्यप्यव्यय-मेव । तदुक्तं भाष्ये अन्तराशब्दोऽयमदृष्टापचारो निपात एवेतीति बोध्य-म् । अवधित्वरूपः सम्बन्धो मध्यत्वान्तर्गतो मध्यार्थान्तराशब्दयोगे द्विती-

---

भयसर्वतसोरिति * । प्रकृतिद्वित्वादत्र द्विवचननिर्देशः । ननु नित्यमिति सूत्रेण वृत्तिविषये पृथगेवाप्यभिधानादुभशब्दस्य न तसिप्रत्ययप्रकृतित्वमत आह । * उभयत इति * । आम्रेडितान्तेष्विदं यदुपपदमाम्रेडितसमासविषयेऽपि प्रकृते द्विवचनमात्रेणोपलक्षितमाह इत्याशयेनाह * कृतद्विर्वचनेष्वित्यर्थ इति * । उभयत कृष्णमित्यादौ कृष्णमभ्यभिधायकद्वयाभ्यामागतः इत्यर्थः । * कृष्णाभक्तस्य निन्दानिन्देति * । पतेः षष्ठ्यर्थस्य सम्बन्धो धिक्शब्दार्थे प्रतीयते तद्वाचकाद्वि-तीयेति ध्वनितम् । धिङ्मूर्खत्वात्पांस्तु न सम्बोधनविभक्त्यन्तस्य योपनीया-र्थान्वयित्वेन धिगर्थान्वयाभावात् । * पर्यभिभ्यां चेति तसिलिति * । न चा-भिमुख्यार्थकस्याव्ययस्याभित इत्यस्यैव प्रतिपदोक्तत्वात् ग्रहणं युक्तमिति वा-च्यम् । परित शब्दसाहचर्येण तसिलन्तस्यापि ग्रहणात् ।

रामलक्ष्मणावित्यादिवदिह साहचर्यमपि नियामकमित्याह । * अ-न्तरेणेत्यव्ययस्येत्यादि । ननु रामलक्ष्मणाविति यत्र सदृशरूपग्रहणे प्रसिद्धमत आह । * साहचर्यं सादृश्यमिति * । सहचरितासहचरितयोरितिपरिभाषाया-मेतादृशस्यैव साहचर्यस्य विवक्षितत्वादिति भावः । * तेन * । सदृशस्यैव ग्रहणेन । भाष्यानुरोधेनाह । * यद्वेति * । * अनभिधानादिति * । अत एवा-न्तराशब्दोऽयमदृष्टापचार इति भाष्यमेव । अन्तरा त्वास्मामित्यत्र द्वितीया विमनयोरन्तरा इत्यादौ षष्ठीत्यत्र किं नियामकमत आह । * अवधित्वरूप इति * * मध्याधान्तरेति * । एवञ्च मध्यत्वस्य नित्यसाकाङ्क्षत्वात्तदवधिदेशे त्वा-

यार्थः, तस्यैव सम्बन्धत्वेन बोधे षष्ठी। हर्यादिपदात्तु न द्वितीया, उपपद विभक्तेरिति न्यायेन तत्र प्रथमाया एव प्राप्तेः। युक्तग्रहणन्तु स्पष्टार्थम्।

अधिकृत्येति। विभाषा कृञीत्यन्तमिति बोद्धव्यम्। महासञ्ज्ञाकरणमन्वर्थत्वाय। कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः बाहुलकात् कर्तरि भूते अनीयः। तेन सम्प्रति क्रियां न द्योतयन्ति किन्तु क्रियानिरूपित सम्बन्धविशेषं द्योतयन्ति। क्वचित्सम्बन्धविशेषाद्योतकेऽपि वचनसामर्थ्यात्सञ्ज्ञा, यथाधिपरी अनर्थकौ, सुः पूजायामिति च। निपातसञ्ज्ञासमावेशस्त्वस्याप्युक्तः।

लक्षणे इति। तत्सम्बन्धलक्ष्यलक्षणभावरूपोऽनुना द्योत्यत इत्यर्थः।अपवाद इति। तद्द्योत्यसम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिस्तेन प्रकृते गतिर्गतावितिं निघातो न। द्वितीयार्थो लक्ष्यलक्षणभावः सम्बन्धो हेतुश्चेत्यनुना द्योत्यते।लक्षणत्वञ्च ज्ञानजन्यज्ञानविषयत्वम्।जपज्ञानेन हि कालविशेषनिष्ठा वृष्टिर्ज्ञाप्यते। जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोध इत्याह हेतुभूतेति। परापीति। कर्मप्रवचनीयसञ्ज्ञाप्रकाशो हेतुत्वाविवक्षाया हेतुतृतीयाबकाशो वनेन कुलमिति प्रकृते च हेतुत्वविवक्षायां परत्वात्तृतीयाप्राप्तिरिति भावः। पुनः सञ्ज्ञेति। लक्षणेत्थंभूतेत्येन सिद्धे पुनः सञ्ज्ञाकरणबोधितपुन-

---

स्मामितिद्वितीयान्तार्थो घय। अवधित्वरूपसम्बन्धस्याधेयत्वत्वेन रूपेण विषयत्वविवक्षायान्द्वितीया। तस्येव सम्बन्धत्वेन बोध इति। अत एव हल्योऽनन्तरा इतिसूत्रभाष्ये अनिघमाना अन्तरा येषामिति प्रयोग सङ्गच्छते। नन्वन्तराशब्दार्थानुयोगित्वेन हरिशब्दार्थस्यापि भानाद्धरिशब्दादपि द्वितीया स्यादत आह। * हर्यादिपदादिति *। * यायेनेति *। प्रकृते च हरिरस्तीत्यादिरीत्याहरिशब्दार्थस्य कर्तृत्वात्प्रथमेति भाव।

* क्रियाम्रेति *। क्रियागतविशेषम्नेत्यर्थः।

* यस्या *। कर्मप्रवचनीयसञ्ज्ञाया।* तयो *।गत्युपसर्गसञ्ज्ञयोरित्यर्थ। * तेन *।अनोर्गतित्वाभावेन। लक्ष्यलक्षणभावात्मको य सम्बन्धस्तद्घटकलक्षणत्वे जपस्यान्वये लक्षणत्वान्वितलक्ष्यत्वस्य वर्षणक्रियाया सम्बन्धे सति तादृश सम्बन्धस्य लक्ष्यत्वघटिततया क्रियानिरूप्यत्व स्पष्टमित्यनो कर्मप्रवचनीयत्वम्। एवमेवान्यत्र कर्मप्रवचनीयसम्बन्धविषये ज्ञेयम्। तदेतदुपपादयति। * लक्षणत्वञ्चेत्यादिना *। ज्ञानजनकेत्यत्र ज्ञान लक्ष्यस्याविशेष्यस्यैतादृश सम्बन्ध। लक्षणत्वेनाभिप्रेतस्य ज्ञानजन्यज्ञानविषयत्व सम्बन्ध। कदा वृष्ट इत्येवङ्कस्य चित्प्रश्ने । मूलोक्त सञ्ज्ञाया फल [illegible]।
* [illegible] आदिना *। * स्पष्टमि [illegible] *। [illegible]

द्वितीयाविधानसामर्थ्यादित्यर्थः । एतेन संज्ञया विजातीयत्वाद्विभक्तिबाध कर्तुमशक्य इति परास्तम् । स्पष्टञ्चेदं भाष्ये ॥

तृतीयार्थे ॥ तृतीयाशब्देन तन्निमित्तशब्दः सहयुक्त इत्यत्रोपात्तो ऽनन्तरत्वात्सहशब्दो लक्ष्यते । तदर्थे साहित्ये द्योत्ये इत्यर्थः । साहित्यरूप संबन्धो ऽनुद्योत्यो द्वितीयार्थस्तदाह नद्येति । क्त इति । कर्तरीति भावः ॥

उपो ऽधिके च ॥ चाद्धीने । सप्तमीति । यस्मादधिकमित्यनेनेति भावः । उपखार्यान्द्रोण इति यथा । खार्यपेक्षाधिकत्ववान् द्रोण इत्यर्थः । तेनोभयमस्तीति फलति । इत्थंभूत कश्चित्प्रकार प्राप्त स आख्यायते ऽने

---

मितिसूत्रसिद्धसंज्ञाया जपमनु प्रावर्षदित्यत्र पराभावस्याप्रयुक्ततया चारितार्थ्यन द्वितीयाविधायकत्वे मानाभावेन द्वितीयासाधकत्वेनेत्रमाथद्वयकामिति पुन ग्रणाकरणेत्यनुपपन्नमेवेति वाच्यम् । तत्सूत्रविहितसंज्ञाया उपसर्गसंज्ञाबाधकतया चारितार्थ्येऽपि कर्मप्रवचनीयेति सूत्रेऽपि तस्योपस्थितिः स्यादेवेति द्वितीयाया प्राप्ते । नदीमन्ववसितेत्यत्र तृतीयार्थ साहित्यमनुद्योत्यम् । साहित्यञ्च प्रकृते ऽनुयोगित्वलक्षणमेव । एवञ्च नद्यनुयोगिकसम्बन्धप्रतियोगि पर्वती सेनेति बोध । नद्या यद्यपि तादृशसम्बन्धानुयोगित्वन्तथापि कर्मप्रवचनीयानुद्योत्यानुयोगित्वे स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन नद्या अन्वयात्कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमक्षतमेव । हीने उपोऽधिके चेतिसूत्रयोर्हीनाधिकशब्दौ भावप्रधाननिर्देशेन हीनत्वाधिकत्वपरौ । तादृशसम्बन्धप्रतियोगित्वस्यापृथक्त्वात् । अनुहरिमित्यत्रानुद्योत्ये हीनत्वे निरूपितत्वसम्बन्धेन हरेरन्वय ।

न्यूनतापरिहाराय मूलानुक्तमुपोऽधिके चेतिसूत्रोदाहरणमाह । * उपखार्यान्द्रोण इति यथेति * । अत्राधिकत्वमुपद्योत्यं तत्र खार्या निरूपितत्वसम्बन्धेनान्वय । अधिकत्वञ्च अधिकरणकास्थितिकत्वरूपपारिभाषिकम् । तदेकदेशाधिकरणत्वे तेन सम्बन्धेनान्वय । न तु खारीनिष्ठपरिमाणाधिकपरिमाणपरत्वम् । द्रोणपरिमाणस्य खारीनिष्ठपरिमाणतो न्यूनत्वात् । तथाहि ।

पलम्प्रकुञ्चकम्मुष्टि कुडवस्तच्चतुष्टयम् ।
चत्वार कुडवा प्रस्थश्चतु प्रस्थमथाढकम् ।
अष्टाढको भवेद्द्रोणो द्विद्रोण शूर्प उच्यते ।
सार्द्ध शूर्पो भवेत्खारी द्विशूर्पा गोण्युदाहृता ।
तामेव भारकानीयाद्वाहो भारचतुष्टयम् ।
शुष्कमर्थेष्विदमानं द्विगुण तद्द्रवेषु तु इति ।

तदाह । * नेोभयमिति * । * उभयम * । खारी द्रोण

नेति इत्थभूताख्यान प्रकारविशेषनिरूपकम् । भागशब्देनार्शआद्यजन्तेन तत्स्वामी उच्यते । वीप्सायान्द्विर्वचनविशिष्टवृक्षशब्दगोद्यत्वादाह विषयभूतेष्विति । वृक्ष प्रतीति । वृक्षप्रकाशेन विद्युद्विद्योतदेशज्ञानाद् वृक्षो लक्षणम्। वृक्ष वृक्षमिति । वृक्षस्य व्यापकतासंबन्धेनान्वयो यद्यपि द्विर्वचनबलादेव तथापि प्रत्यादिसत्त्वे सो ऽपि तन्निर्णायक इति संबन्धपरिच्छेदकत्व बोद्धयम् । वृक्षादीना सेचने कर्मत्वे ऽपि तत्त्वेनाविवक्षायामनेन द्वितीया । किं च यद्यत्र कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात्प्रतिवृक्षमितिसमासानापत्तिः । किं च प्रत्यादेः क्रियाविशेषकत्वे ऽन्वर्थतया कर्मप्रवचनीयसंज्ञाया एवानापत्तिः । अत एव भाष्ये किमर्थं पुनरिदमुच्यते न चोपसर्गसंज्ञाबाधनार्थं क्रियायोगाभावादित्युक्त्वा द्वितीयार्थमिति सिद्धान्तितम् । अत एव प्रत्यर्थं शब्दनिवेश इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेप्यर्थमर्थं प्रतीति विग्रहो भाष्ये दर्शितः, वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्यदित्यास्ताम् ।

फलान्तरमप्याह । अत्रेति । यदत्रेति । यद्वस्तु मम भाग स्यादित्यर्थ ।

---

थ । स्वनिष्ठपरिमाणाधिकपरिमाणाख्यायान्तु उपद्रोणे खारीत्युदाहरणम्बोध्यम् । * आख्यायते * । निरूप्यते । भक्तो विष्णुम्प्रति परि अन्वित्यत्र भक्तिस्मात्त आख्यायते । भक्तिश्चाराध्यत्वप्रकारक ज्ञानम् । द्वितीयार्थश्च विषयित्वम्प्रत्यादिद्योत्यन्तस्य भक्तपदार्थैकदेशभक्त्यान्वय । भाग स्वत्ववान् पदार्थ । तद्वाचकादर्शआद्यचि ताद्दशपदार्थस्वामिलाभ । एवञ्च स्वामिनि विषयभूत इति लब्धम् । लक्ष्मीर्हरिम्प्रतीत्यत्र स्वामित्वनिरूपितस्वत्वनिरूपितस्वत्वन्द्वितीयार्थं । तस्य लक्ष्मीपदार्थेन्वय । सूत्रे वीप्सापद व्याप्यत्वपरम् । तदेव वृक्षवृक्षम्प्रतीत्यत्र द्विर्वचनविशिष्टवृक्षशब्दादिद्योत्यम् । तस्मिन्व्याप्यत्वे आधेयतासम्बन्धेन प्रत्त्यर्थस्यान्वय । व्याप्यत्वञ्च स्वनिरूपितव्यापकत्वसम्बन्धेन सेचनेऽन्वेतीत्येषा कर्मप्रवचनीयत्वम्।*द्विर्वचनबलादेवेति*।एवञ्च सम्बन्धपरिच्छेदकत्वाभावात्कथङ्कर्मप्रवचनीयत्वमिति भाव । * सोऽपीति * । व्यतिलुनीत इतिवत्प्रत्यादिरपीत्यर्थं । * तत्त्वेन * । कर्मत्वशक्तिमत्त्वेन । उक्तार्थे भाष्यसम्मतिमाह । * अत एवेति * । प्रत्यादीना क्रियाविशेषकत्वाभावादेव । * अत एव * । कर्मप्रवचनीयसञ्ज्ञाया द्वितीयार्थत्वादेव ।

* फलान्तरम् * । कर्मप्रवचनीयसञ्ज्ञाया फलान्तरम् । * यद्वस्त्विति * । यच्छब्दस्य बुद्धिस्थपरामर्शकतया प्रकृते बुद्धिस्थो भाग परामृश्यते । एवञ्च मत्सम्बन्धियद्भागकर्तृका एतद्देशाधिकारणिका सम्भाव्यमाना सत्ता तत्कर्मकप्रेरणाविषयो दानमिति बोध । अत्र कर्मप्रवचनीयसञ्ज्ञाया अभावे उपसर्गसञ्ज्ञा

कुतोऽधीति । कुत इत्यपादाने पञ्चमी । द्वितीया तु न कर्मप्रवचनीययोगद्योत्यसम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावात् । गतिसंज्ञाबाधादिति । धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद्गतित्वप्राप्तौ विशेषद्योतकत्वाभावाच्चानर्थकत्वव्यवहारो ऽपीति भावः ।

सुसिक्तमिति । सेकगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्वकृते तच्चरितार्थत्वात् पूज्यत्वे गम्ये एवैषा संज्ञा, अत एव सुषिक्तं किं तवेत्यत्र न ।

अतिक्रमणमुचितादधिकानुष्ठानम् । चात्पूजायामित्यनुकृष्यते । अतिदेवानिति । देवेभ्योऽधिको देवपूज्य इति वार्थः । द्वितीये कृगतीति समासस्याभावस्तु अनभिधानात् । आद्ये तु प्राप्तिरेव न स्वतीपूजायामेवेत्युक्तेः ॥

अपिः पदार्थे।पदस्याप्रयुज्यमानपदान्तरस्यार्थे पदार्थे । सर्पिषोऽपीति। अत्र बिन्दुरित्यादेः पदस्यार्थो ऽपिद्योत्यः । तदुक्तं वृत्तिकृता । मात्राबिन्दुस्तोकमित्यस्यार्थे ऽपिर्वर्तत इति । सम्भावनायां लिङिति । उपसंवादाशङ्कयोश्चेति सूत्रभाष्ये पठितेनोपसंवादाशङ्कयोर्लिङित्यनेन । तच्च लोकसाधारणमित्यपि तत्रैव भाष्ये स्पष्टम् । तत्राशङ्कोत्प्रेक्षा । सम्भावनात्तु कटस्फोटिका शङ्केवेति भावः । कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह तस्या एवेति। सम्भावनाया एवेत्यर्थः । कर्तृदौर्लभ्यमिति षष्ठीतत्पुरुषः । कर्तृपदं प्रकृता-

---

संज्ञाद्युपसर्गप्रादुर्भ्यामिति पत्वम् ।

ननु कुत इत्यत्राधिशब्दस्य क्रियायोगाभावाद्गतित्वस्य प्राप्त्यभावेन गतिसंज्ञाबाधादित्ययुक्तमत आह । * धात्वर्थमात्रेति * । * उपसर्गाः क्रियायोग इति * । सूत्रे क्रियायोगपदं धातुना क्रियानिष्ठा या स्वशक्यतावच्छेदकावच्छिन्नाविषयता तच्छाब्दोपस्थितिजनने सहकारित्वन्तच्च प्रकृतेऽप्यस्ति । किन्तु क्रियास्याक्रियातिरिक्ततन्निष्ठताविशेषविषयकबोधजनने सहकारित्वञ्चास्तीति तदभावादेवानर्थकत्वव्यवहार इति भावः ।

सु क्रियापूज्यत्व एव कर्मप्रवचनीय इत्याह । * क्रियापूज्यत्वेति * ।

सर्वेषामेव पदार्थत्वात्पदार्थ इत्यव्यावर्त्तकमत आह । * पदस्येत्यादि * । एतेन यस्याप्रयुज्यमानपदस्यार्थोऽपिना द्योत्यते तस्य पदस्याध्याहारोऽपिशब्दबलादिति कथ्यते ।

ननु सम्भावनायां लिङित्यसङ्कृतन्तादृशसूत्राभावादत आह । * उपसंवादेति * । अत्र यत्कर्मप्रवचनीययुक्तप्राक् प्रयुज्यत इतिभाष्यादप्रयुज्यमानस्येति स्पष्टम् । दौर्लभ्यप्रयुक्तदौर्लभ्यञ्च सम्बन्धः सोऽपिद्योत्य एव । तदेतदुक्तं कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्निति । * प्रकृताभिप्रायमिति * । एवञ्च कर्तृपदं कारकपरम् । सर्पिष इत्यत्र धातोरकर्मकत्वात्कर्मणोऽसम्भवात्कर्तृपदमेवोपात्त-

भिप्रायं, सर्पिषो ऽपि पिबेदित्यादौ कर्मदौर्लभ्येत्यादि बोध्यम्। तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसंबन्धस्य द्योतकोऽपिः। सम्बध्यत इति।स्यात्पदवाच्यक्रियायामपिद्योत्यबिन्दो' कर्तृतया द्योत्योक्तसंबन्धेन चान्वयादिति भावः। तदाह अपिशब्दबलेनेत्यादि। एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका संभावनाविषया सत्तेति बोधः। विशिष्टसत्तायाः संभावनाविषयत्वबोधे दौर्लभ्यस्यापि संभावनाविषयत्वमनुभवसिद्धम्। नन्वेवं कर्मप्रवचनीयद्योत्ये ऽर्थे सर्पिषो ऽन्वयेन तस्य कर्मप्रवचनीययुक्ते वा द्वितीया स्यादत आह।द्वितीया त्विति।न त्वपिनेति।बिन्दुना योगेऽप्यपिद्योत्यसंबन्धेनानन्वय इत्यर्थः।कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वम्। प्रकृते चापिद्योत्यस्योक्तसंबन्धस्य बिन्दुः प्रतियोगी न सर्पिरिति भावः। यदा स्पष्टप्रतिपत्तये ऽपिद्योत्यस्यापि बिन्दोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपदविभक्तिरिति प्रथमैव तत्र कारकविभक्तित्वं क्रियाजनकत्वार्थकविभक्तित्वमिति दिक्। संज्ञाफलमाह, अनुपसर्गत्वादिति। अपि स्तुयादिति। पूर्ववल्लिङ्। क्रियाविषय शक्यत्वादिना संभावनमपिद्योत्यं प्रकृते ऽत्राह मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणम्। अत्युक्तिरसम्भाव्यार्थसम्भावनम्। संभावनपदस्येदृशार्थकत्वे व्याख्यानमेव शरणम्। विष्णुविषया या शक्यत्वसंभावना सा चान्यविषयानिश्चयेन शक्या कर्तुमिति फलति शक्त्युत्कर्षमित्यौचित्योत्कर्षादेरप्युपलक्षणम्।अपि वेदान्तपारगं हन्यादित्यादौ हननक्रियाया संभावनाविषयौचित्योत्कर्षद्योतनात्संभावितौचित्यस्य चानु-

म्। * क्रियाविषयमिति *। स्तुतिक्रियाविषयमित्यर्थः। अपि स्तुयादितिशब्दाद्विष्णुकर्मिका एतत्कर्तृका शक्यत्वेन सम्भाव्यमाना स्तुतिरिति शाब्दबोधः। * शक्त्युत्कर्षाविष्करणम् *। शक्त्युत्कर्षस्य व्यञ्जनया बोधनम्। अपिवेदान्तपारगमित्यादिशब्दाद्वेदान्तपारगकर्मकमेककर्तृकमुचितं हननं सम्भावनाविषय इति बोधे सम्भावनाविषयक्रियायामौचित्योत्कर्षबोधं आश्रित्य सम्भावितत्वं व्यञ्जनया प्रतीयते। यत्क्रियायामौचित्याधिक्यं तस्या अनुष्ठानमेव। यत्र तु वाक्येऽपिपदन्न श्रूयते अथ च तत्क्रियाया अननुष्ठानमेव तात्पर्यविषयस्तत्रापिशब्दाध्याहारः। तद्यथा।

विष्णोर्नाम न गृह्णीयाच्च स्पृशेत्तुलसीदलम्।
परनिन्दा न कर्तव्या परचिन्ता कदा च नेति॥

ननु गर्हायां लडपीतिसूत्रस्य सर्वबाधकतया अपि स्तुयाद्धपलमित्यत्र कथ

ष्ठानमयुक्तमिति अस्य स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः सङ्गच्छते । कामचार इच्छया प्रवृत्तिः स्तुहि मा वा यथेष्टं कुर्विति यावत् । प्रैषातिसर्गेति लिङ् । अपि स्तुयाद्वृषलमिति । उपसंवादेति सूत्रपठितवार्तिकेन परेणान्तरङ्गेण च गर्हायां लडपीति बाधित्वा संभावने लिङ्, क्रियागतं गर्हात्वमपि द्योतयन् वृषलपदसमभिव्याहारात् स्तुतेर्गर्हात्वं फलति तदेव धिगित्यादिना ऽनूद्यते । अपि सिञ्चेत्यादि । अपिद्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं सञ्ज्ञायामुभयत्रापि षत्वाभावः ॥

कालाध्वनोः ॥ अत्यन्तसंयोगो निरन्तरः संबन्धः । स च गुणक्रियाद्रव्यैरभावेन च । तेन मास भोजनाभाव इत्यादेः सङ्ग्रहः । गुणादिभिः कालाध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाध्ववृत्तिभ्यां द्वितीयेत्यर्थः । मासमधीत इति । बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः । एकादश्या

---

लिङित्यत आह । * उपसंवादेनेति * । * बाधित्वेन * । उपसंवादाशङ्कयोर्लिङित्यर्थः । * तत्कर्तृगेति * । वृषलस्तुतिकर्तुरित्यर्थः । ननु धिक्शब्दस्य निन्दार्थतात्पर्यकप्रयोग सा चेद्वृषलपदसमभिव्याहारादेव प्रतीयते तदा धिक्शब्दप्रयोगो व्यर्थोऽत आह । * तदेवेति * ।

* निरन्तरसम्बन्ध * । व्याप्तिरूप । स च किंविध इत्याकाङ्क्षायामाह । * स चेति * । न च यद्गुणादिभिरत्यन्तसंयोगे द्वितीयेति समुदायान्यतमे कालाध्वनिष्ठव्याप्यतानिरूपितव्यापकताया विवक्षितायां द्वितीयेत्यस्य लाभेऽपि द्वितीयाभावस्यालाभ इत्यत आह । * प्रत्यासत्त्येति * । ननु यत्रैकमासव्यापकगणेशस्तोत्राध्ययनं तत्र मासमधीते गणेशस्तोत्रमिति न स्यान्मासान्तरे तत्स्तोत्राध्ययनस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिव्याधिकरणाभावस्य सत्त्वादत आह । * बुद्धिस्थयावदवयवेति * । * अवयव * । दिनादिरूप । एवञ्च मासमधीत इत्यत्र मासपदं बुद्धिस्थतत्तन्मासपरं तदवयवयावद्दिननिष्ठव्याप्यतानिरूपितव्यापकता यत्र तत्रैव तादृशः प्रयोगः । मासपदञ्च त्रिंशद्दिनसमुदायपरम् । दिनपदञ्चैकसूर्योदयावधिकापरसूर्योदयपर्यन्तस्थिताखण्डजन्यद्रव्यपरम् । न तु षष्टिघटीसमुदायो दिनपदार्थः । यत्र प्रत्यहमेकघट्यात्मकक्षणे स्तोत्राध्ययनं तत्रापि घट्यन्तरेऽध्ययनस्याभावसत्त्वेन मासमधीत इति प्रयोगानुपपत्तेः । मासनिष्ठव्याप्यता च तादात्म्यसम्बन्धावच्छिन्ना । व्यापकता तु कालिकसम्बन्धावच्छिन्ना व्यापकताघटकाभावश्च प्रतियोगिव्यधिकरणो विवक्षितः । अत एव तन्मासावयवदिनेऽपि यद्घट्यवच्छेदेन नाध्ययनं तदवच्छेदेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाध्ययनाभावस्य सत्त्वेऽपि न मासमधीत इति प्रयोगानुपपत्तिः । एकादश्यां रात्रौ जागृयादित्यत्र द्वितीयातिप्रसङ्गमिराचष्टे । * एकादश्या

रात्रौ जागृयादित्यादावधिकरणत्वाविवक्षणान्न द्वितीया ।

इति द्वितीया ॥

स्वतन्त्रः कर्ता ॥ कारकाधिकारात्क्रियाजनने स्वतन्त्र इत्यर्थः तदाह क्रियायामिति । स्वातन्त्र्यञ्च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्था-

---

मिति * । न चैवमप्येकादश्यामन्नम्भुञ्जीतेति यत्रोच्यते तत्रैकादशीव्यापकस्य भोजनाभावस्य तात्पर्यविषयत्वाद्द्वितीयापत्तिरिति वाच्यम् । तादृशतात्पर्ये त्वेकादश्यान्न भुञ्जीतेत्येव प्रयोगात् । प्रकृते त्वेकादशीरूपस्य कालस्य भोजनाभावाधिकरणत्वविवक्षैव । स चाभाव प्रतियोगिन्यधिकरण एव विवक्षितोऽतो नानुपपत्ति । न च मासमधीत इत्यत्र धातोरध्ययनपूर्वकयापने वृत्तिकल्पनया कर्तुरित्येव कर्मत्व सिद्धमिति कालाध्वनोरितिसूत्रवैयर्थ्यमिति वाच्यम् । मासन्देवदत्तस्य कोटित्यम्भोजनाभावश्चाति यत्र प्रयोगस्तदर्थमस्यावश्यकत्वात् । मासस्य द्विरधीत इति यत्र प्रयोगस्तत्र मासव्यापकत्वनिवृत्त्यर्थेन तात्पर्येण तु मासाधिकरणकत्वानिवृत्तावपीति कृत्वोऽर्थप्रयोग इति सूत्रेण षष्ठ्येव न त्वनेन द्वितीयेति बोध्यम् ।

इति द्वितीयाविवरणम् ।

* स्वतन्त्र कर्ता * । अत्र स्वतन्त्रपदमन्यानधीनव्यापाराश्रयपरम् । स च व्यापारो न शब्दवाच्य किन्तु कारकाधिकारादुपस्थितक्रियारूप इत्याह ।* कारकाधिकारादिति * । इद ण्यन्तेऽप्यस्तीत्याह । * क्रियाजनन इति * । तत्र प्रयोज्यनिष्ठव्यापारात्मकक्रियाजनने प्रयोजक स्वतन्त्र एव । किन्तत्स्वातन्त्र्यमत आह । * स्वातन्त्र्यञ्चेति * । * प्रधानीभूतेति * । अत्र प्राधान्यञ्च तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वम् । एतादृशस्य स्वातन्त्र्यस्य विवक्षितत्वात्काष्ठम्पचतीत्यत्र काष्ठस्य कर्तृत्वोपपत्ति । धात्वर्थाश्रयत्वञ्च व्यापारतावच्छेदकसम्बन्धेन । तेन न कालिकसम्बन्धमादायातिप्रसङ्ग । * कर्तृप्रत्ययसमभिव्याहार इतीति * । अस्य च कर्तृप्रत्ययसमभिव्याहारे व प्राधान्ये न इष्ट इत्यर्थोऽभिप्रेत । एतेन कर्तृप्रत्ययसमभिव्याहारे प्राधान्य यद्यपि कर्तृव्यापारस्य तथापि कर्मप्रत्ययसमभिव्याहारे फलस्यैव प्राधान्यात्तत्र देवदत्तेन प च्यते तण्डुल इत्यादौ देवदत्तादे कर्तृत्वन्न स्यादितिशङ्काया नावकाश । यद्यपि धातो फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले वा शक्तिस्तथापि तत्तत्प्रत्य

भिव्याहार कर्मणि विहितप्रत्ययसमभिव्याहार

स्तत्र [illegible] स्यैव धातुनोपस्थिति । णिजन्ते प्रयोज्यस्य कर्तृत्वो

श्रयत्वम् । पक्वस्तण्डुलो देवदत्तेनेत्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये कर्तृप्रत्ययसमभिव्याहारे इति । णिचस्तु वाचकत्वमेव । अतस्तत्र ण्यन्तधातुतत्प्रकृतिवाच्योरेतदुभयवाच्यव्यापारयोस्स्वार्थं प्रति प्राधान्याद्देवदत्तेन यज्ञदत्तः पाचयतीत्यादौ प्रयोज्यव्यापाराश्रयस्यापि कर्तृत्वसिद्धिर्द्योतकत्वे तु न तत् सिध्येत् । कारके इति सूत्रभाष्यात्स्वक्रियाकारकप्रवर्तकत्वरूपस्वातन्त्र्यमिति लभ्यते प्रकृतसूत्रभाष्याच्चेति मञ्जूषायां निरूपितम् ।

प्रकृष्टेति । यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम् । तमब्ग्रहणं किमिति ? कारकाधिकारात्करणल्युडन्तकरणेति महासंज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति प्रश्नः । गङ्गायामिति । अधिकरणमित्यधिकरणल्युडन्तमहासंज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सो ऽधिकरणमित्यर्थः स्यात् । एवञ्चेद सूत्रं तिलेषु तैलमित्यादावेव प्रवर्तेत न हि गङ्गातीरं वा सर्वावयवैर्व्याप्तं, तीर-

---

पपत्तये आह । * णिचास्त्विति * । * वाचकत्वमेवेति * । न तु द्योतकत्वमिति शेषः । तथात्वे धात्वर्थस्य विशेषणत्वात्प्रयोज्यव्यापारस्य प्राधान्यापत्तौ गुरुः शिष्येण पाचयतीति यत्र प्रयोग इष्यते तत्र शिष्यो गुरुणा पाचयतीत्यादिप्रयोगापत्तेः । पच्यते तण्डुलः स्वयमेवेति यत्र प्रयोगस्तत्र यद्यपि फलमेव धात्वर्थस्तथापि तत्र व्यापारारोपः । अन्तर्भावितण्यर्थतायामप्रयोज्यस्य कर्मत्वमकथितञ्चेति सूत्रव्याख्यानावसरे उपपादितमेव । * कारक इतिसूत्रभाष्यादिति * । तत्र हि तन्त्रमुक्तम्प्रधानसमवाये स्थाली परतन्त्रा । व्यवाये स्वतन्त्रा । किम्पुनः प्रधानम् । कर्ता । कथं ज्ञायते कर्ता प्रधानमिति । यत्सर्वेषु कारकेषु सन्निहितेषु कर्ता प्रवर्तयिता भवतीति । तत्र प्रयोज्यस्यास्वतन्त्रत्वात्कर्तृसंज्ञा न प्राप्नोतीति पूर्वपक्षे तस्यापि स्वेच्छाधीनप्रवृत्तिकत्वात्स्वातन्त्र्यं साधितम् । प्रकृतसूत्रेऽपि तन्त्रशब्दस्य प्रधानवाचकत्वमस्ति प्राधान्ये वर्तते अन्यथा स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते स्वप्रधाने इति गम्यते तद प्राधान्ये वर्तते तन्त्रशब्दस्तस्येदं ग्रहणमित्युक्तम् । स्वशब्द आत्मवाची । स्व आत्मा तन्त्रं प्रधानं यस्य स स्वतन्त्रः ।

साधकतममितिसूत्रस्थतमपा प्रकर्षः सूचितः स च कारकान्तरापेक्षया ।

कारकपर्यायसाधकशब्दादुत्पन्नेन तमपा प्रकर्षस्य तथापक्षस्यैव प्रकर्षस्य लाभात् । तत्र करणात्करणान्तरे प्रकर्षस्याभावेन कारकान्तरापेक्षयैव प्रकर्षो वाच्यः । स च यादृशस्तमाह । * यद्व्यापाराव्यवधानेनेति * । करणान्तरगतप्रकर्षो विवक्ष्यते तदाऽश्वेन दीपिकया यथा व्रजतीत्यत्र सर्वेषां न स्यात् । अधिकरणे दोषान्तरनिमित्तमप्रकर्षं दूषयति । * अधिकरणेति * । * तिलेषु तैलमित्यादावेवेति * । आदिना दध्नि सर्पिरित्यस्य सङ्ग्रहः । न च आध्रियतेऽस्मिन्निति

धर्मस्य घोपाधारत्वस्यात्यन्तसामीप्यात्प्रवाहे आरोपो ऽत्र बोद्धव्यः । यदा तु व्यवहिते गङ्गातो घोषः तदा गङ्गाशब्दस्य तत्तीरे लक्षणा । तमब्ग्रहणेन शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयत इति ज्ञाप्यतइति गौणाधारस्याप्यधिकरणसंज्ञा सिद्ध्यति । एवञ्च गङ्गायां गाव इत्यप्युदाहरणं सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात्, गौणमप्याधारत्वाश्रित्य सप्तम्यादिशक्यमेवेति बोध्यम् । इदं प्रकृतसूत्रे भाष्ये स्पष्टम् । यदि तु महासंज्ञया तदाक्षेपकरणासमर्थं प्रति आधाराद्विपदं चरितार्थं साधकशब्दस्य यद्व्यापारानन्तरमव्यवधानेन फलोत्पादस्तत्र शक्तिराधारशब्दस्य चाधियते यस्मिन्निति व्युत्पत्त्या

---

व्युत्पत्त्या कर्तृकर्मणोर्धारणक्रियाम्प्रति य आधारस्सोऽधिकरणसंज्ञ इत्यर्था भविष्यतीति वाच्यम् । एवमपि यो मुख्यस्तद्वाराधारस्तस्यैव स्यान्न गङ्गायाङ्घोष इत्यादौ । गङ्गाशब्दबोध्यो न मुख्याधार इत्यभिप्रायेण भूतले घट इत्यादावप्यतीति परित्यज्य गङ्गायां घोष इत्युदाहरन्तस्य मुख्याधारपरमेवाधारपदम्भविष्यतीति कल्पनेन सामञ्जस्यमित्यादाशयात् । यथा च प्रकृते गौणत्वन्तदुपपाद्यति । * तीरधर्मस्येति * । * प्रवाह आरोप इति * । एवञ्च गौणत्वं स्पष्टमेव । * तीरे लक्षणेति * । गङ्गापदशक्यतावच्छेदकस्य गङ्गात्वस्य तीरे आरोपः । शक्यतावच्छेदकारोप एव लक्षणा तदा गङ्गापदबोध्यस्य गौणत्वं स्पष्टमेव । * प्रकर्षो नाश्रीयत इति * । एवञ्च यथाकथञ्चिद आधारस्सोऽधिकरणसंज्ञः । एवञ्च मुख्याधारत्वाभावेऽपि यथाकथञ्चिदस्मिन्नाधारत्वमन्तन्मुख्यगौण वा सर्वमप्यधिकरणसंज्ञम् । गौणा धारस्याप्यधिकरणसंज्ञायाम्भाष्यमपि सा प्रमाणमित्याशयेनाह । * एव गङ्गायां गाव इति * । इदं तावत्कूपे गर्गकुलमित्यस्याप्युपलक्षणम् । * प्रकृतसूत्रभाष्य इति * । तत्र हि तमब्ग्रहणङ्किमर्थम् । सर्वेषां कारकाणां करणसंज्ञा प्रसज्येतेतिविचारे पूर्वसंज्ञानामपवादत्वात्परसंज्ञा नाश्च तथैव वाधकत्वरूभविष्यसीत्यभिधाय धनुषा विध्यतीत्यत्रापायुक्तत्वादपादानसंज्ञा साधकत्वाच्च करणसंज्ञा प्राप्नोति । एवं तर्हि लोकेऽभिरूपाय कन्या देयेति । न चानभिरूपे प्रवृत्तिरस्ति तत्राभिरूपतमायेति गम्यते एवमिहापि साधकं करणमित्युच्यते सर्वाणि च कारकाणि न चासाधके प्रवृत्तिरिति साधकतममिति निज्ञास्यते । एवन्तर्हि सिद्धे सति यत्तमब्ग्रहणङ्करोति तज्ज्ञापयत्याचार्यः कारकसंज्ञायान्तरतमयोगो न भवतीति । आधारमाचार्यः किन्न्याय्यमन्यते यत्र कृत्स्नमाधारमात्मा व्याप्नोति तेनेदं स्यात्तिलेषु तैलन्दध्नि सर्पिः । गङ्गायाङ्गाव कूपे गर्गकुलमित्यत्र न स्यात् । कारकसंज्ञायान्तरतमयोगो न भवतीत्यत्रापि सिद्धम्भवति इति । पक्षान्तरमाह । * यदि त्विति * । * चरितार्थमिति । *अन्यथा संज्ञिलाभो न स्यात् । युक्त्यन्तरमाह । * साधकशब्दस्येति * । ससिद्धत्वं

कर्मणा धारणक्रियां प्रति सर्वावयवव्याप्त्या य आधारस्तत्र शक्तिरित्युच्यते । तदोक्तप्रयोगादिसाधनाय कारकप्रकरणे उद्देश्यवाचके स्वरितत्वप्रतिज्ञया गौणाधारादेर्ग्रहणं वाच्यं स्वरितेनाधिकं कार्यमित्यर्थात् । तमपा तु प्रकृते तदभावो बोध्यते, एवञ्च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम्, एतत्तमब्बलादेवान्यत्र स्वरितत्वमिति ज्ञाप्यते इति दिक् ॥ स्पष्टञ्चेदं स्वरितेनेति सूत्रे भाष्ये ।

रामेणेति । कर्तृतृतीयायाः कर्तृत्वादिशक्तिमान्कर्तृक्रियाभावसम्बन्धश्चार्थः । करणतृतीयायाः करणशक्तिमान् क्रियाकरणभाव सम्बन्धश्चार्थस्तच्छक्तिमत्वञ्च व्यापारवत्त्वेन रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वा-

---

पधातुनिष्पन्नत्वात् । * उक्तप्रयोगादीति * । गङ्गायाङ्घोषः कूपे गर्गकुलमितिप्रयोगसाधनायेत्यर्थ । * प्रकृते * । उद्देश्यवाचके साधकपदे । * तदभाव * । स्वरितत्वाभाव । तमपा तु प्रकर्षो बोध्यत इत्यव्यवधानलाभ । * एवञ्च * । उक्तव्यवस्थासिद्धौ च । ननु व्यवधानेन फलोत्पादकेऽपि करणत्व दृश्यते । यथा राजा चतुर्भिरुपायैः शत्रून्वशीकरोति । अत्रामात्यप्रदानादिद्वारैव वशीकरणञ्च साक्षात् । न चाव्यवधानाविवक्षया तथा प्रयोग इति वाच्यम् । तथा सति व्यवधानेन यत्र फलोत्पादस्तत्र सञ्ज्ञान्तरस्य प्राप्त्या तृतीयाया अप्राप्त्या तादृशोक्त्यसङ्गतेरिति चेन्न । नटस्य शृणोतीत्यत्र नटे गीतद्वारा क्रियाजनकत्वेन कारकत्वस्वीकारात्करणत्वप्राप्त्या तद्बाधनार्थं तमब्ग्रहणमित्याशयात् । करणत्वोपचारेणेत्यस्य करणत्वप्राप्त्येत्यर्थ । तत्र नटस्य कारकत्व आख्यातोपयोग इतिसूत्रस्थमुपयोगग्रहणाद्धिमर्थम् नटस्य शृणोतीतिभाष्यमेव साधकम्बोध्यमिति दिक् । *दिगिति* । दिगर्थस्तु पूर्वोक्तगौणाधारस्याधिकरणसञ्ज्ञाया अप्राप्त्युपपादनाय यद्गौणमुख्यन्यायोपन्यसनम्प्राचां तदसङ्गतमेव । तस्य न्यायस्य पदकार्यविषयस्याद्विशिष्टरूपोपादानविषयत्वाच्चेति ।

* तच्छक्तिमत्त्वम * । करणत्वशक्तिमत्त्वम । * व्यापारवत्त्वेनेति * । अत एव करणत्व व्यापारनियतमिति वक्ष्यमाण सङ्गच्छते । प्रकृत्यादिभ्य इत्यादिशब्द , प्रकारे । समुदायघटकेभ्यस्तृतीयेत्यर्थ । नाम्ना सुतीक्ष्णश्चारित्रेण दान्त । अत्र नामपदार्थस्याभेद सुतीक्ष्णशब्दे भासते । चारित्रेण दान्त इत्यत्र चारित्रपदार्थस्य प्रकृतिस्वरूपस्य दान्तत्वेऽन्वय । घटत्वेनाभाव । अत्र तृतीयार्थोऽवच्छिन्नप्रतियोगिताकत्वम् । घट इतिज्ञाने घटत्वेन घटस्य विषयत्वम् तु द्रव्यत्वेनेत्यत्रावच्छिन्नत्व तृतीयार्थो बोध्य । प्रकृत्या चारु । प्रकृति स्वभाव । प्रकृतिसम्बन्धिचारुत्ववान् । न च कृत इत्यध्याहारेण करण एव तृतीयाऽस्तु । घट

लीति बोधः। प्रकृत्यादिभ्य इति। इदं यथायोगं सर्वविभक्त्यपवादः॥

दिवः कर्म च॥ चेन संज्ञयोः समावेशः। तेन दिवः साधकतमस्य शक्तिद्वययोगो बोध्यते। तेनाक्षैर्देव्यत इत्यत्र तृतीया परत्वात्कर्मत्वाच्च सकर्मकत्वप्रयुक्तपरस्मैपदाभावः। अत्र विप्रतिषेधशास्त्रबलात्तृतीयैव शक्तिद्वयबोधिका। यदाक्षाणां फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदा ऽक्षान्दीव्यतीत्यादि साधु, अक्षाणां देवितेत्यादौ तृतीयातः परत्वात्कृद्योगलक्षणा षष्ठी, मनसा देव इत्यादौ हेतुतृतीयान्तेन पचाद्यजन्तदेवशब्दसमासः। न च शक्तिद्वयस्वीकारे ऽत्र कर्मणि लकारे करणत्वशक्तेरनुक्तत्वेन तृतीयापत्ति-

---

त्येनेत्यादिष्वपि घटत्वादिपदानां घटत्वावच्छिन्नप्रतियोगिताकत्वलाक्षणिकतया ज्ञात इत्यस्याध्याहारेण करणतृतीयया सिद्धिरिति वाच्यम्। यदा न तस्याध्याहारस्तदा शेषलक्षणा षष्ठी प्राप्नोति तद्बाधनार्थमस्यावश्यकत्वात्। प्रायेण याज्ञिक। प्रायःपदमाचारातिशयपरम्। ज्ञात इत्यस्य चाध्याहारः। आचारातिशयेन याज्ञिक इत्यर्थो ज्ञात इत्यर्थो विवक्षितः। गोत्रेण गार्ग्य। गोत्रसम्बन्धिगार्ग्यत्ववान्। सामान्यविशेषभावेनान्वयः। समेन विषमेणैतीत्यादौ द्वितीयार्थे तृतीया। द्विद्रोणेन धान्यं क्रीणाति। पात्रादित्वात्क्रीत्याभावः। परिच्छेद्यत्वं तृतीयार्थः। तस्य धान्येऽन्वयः। सुखेन दुःखेन यातीत्यत्र सुखदुःखपदं तत्साधनपरम्, तच्च याधात्वर्थफलेऽभेदेनान्वेतीति द्वितीयायाम्प्राप्तायामनेन तृतीया।

* शक्तिद्वययोग इति *। करणत्वकर्मत्वात्मकशक्तिद्वययोग इत्यर्थः। तेन संज्ञाद्वयसमावेशेन। * परस्मैपदाभाव इति *। अणावकर्मकादितिसूत्रेण प्राप्त इत्यादिः। ननु करणरूपेऽर्थे तृतीयाया विधानेन कथं तृतीयया कर्मत्वबोधनमत आह। * अत्रेति *। अत्र कार्यकालपक्षे कर्मत्वसामानाधिकरण्यविशिष्टमपि करणत्वं प्रकृतसूत्रप्रदेशोपस्थितकर्तृकरणयोरितिसूत्रघटककरणपदेन गृह्यत इति तृतीयैवोभयबोधिकेति भावः। ननु तर्ह्यक्षान्दीव्यतीति नैव स्यादत आह। * यदाक्षाणामिति *। अत्रेष्टपरिवर्त्तनाद्यनुकूलव्यापारो दीव्यतेरर्थः। फलञ्चेष्टपरिवर्त्तनन्तदाश्रयत्वसमानाधिकरणकर्मत्वस्य कर्तुरीप्सिततममितिसूत्रबोधितस्य विवक्षेत्यर्थः। यदोभयशक्तिमत्त्वन्तदैवोक्तः प्रकार इति भावः। ननु पूर्ववत्षष्ठीप्राप्त्या कथं मनसा देव इति हरदत्तोक्तः प्रयोग इत्यत आह। * मनसादेव इत्यादाविति *। अस्य संज्ञात्वे मनसः संज्ञात्वे मनसः संज्ञायामित्यलुक्। असंज्ञात्वे तु तत्पुरुषे कृतीतिसूत्रघटकबहुलग्रहणेनालुक्। ननु मनसो दिव्धात्वर्थसाधकतमत्वसमानाधिकरणकर्मत्वशक्तिमत्त्वात्कथन्तृतीयेत्यत आह। * हेतुतृतीयान्तेनेति *। अत्र कर्मणि। दिवः कर्म चेतिसूत्रबोधितकर्मत्वशक्तिमति। * तृतीयापत्तिरिति

ध्येत्यन्यत्र विस्तरः । नायात इति । अनेन फलाप्राप्तिरेव स्फुटमुच्यते ॥

सहयुक्ते ॥ पृथग्विनानानाभिरितिवत्सहेनेत्येव सिद्धे युक्तग्रहणं शब्द-विशेषानादरेणार्थयोगे भवत्वित्येवमर्थमित्याह सहार्थेनेति । अत एव क्वचित् शब्दयोगं विनापि भवति तदाह विनापीति । न्यायसिद्धेऽर्थे लिङ्गमप्याह- वृद्धइति । सहार्थः साहित्यं तच्च स्वसमभिव्याहृतक्रियादिसमानकालिक-क्रियादिमत्त्वं क्वचित्समानदेशक्रियावत्त्वमत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे तिलैः सह माषान्वपतीति भवति । यद्यपि पुत्रेण सह आगत इत्यादौ आगमनक्रियाकर्तृत्वादेव पुत्रात्तृतीया सिद्धा तथापि पुत्रेण सह स्थूल इत्याद्यस्य मुख्यमुदाहरणमिति भाष्ये स्पष्टम् ।

अङ्गेन अवयवेन । इदं सन्निधानलब्धम् । अङ्गिनो ऽवयविनः सूत्रे । अङ्गशब्दो ऽर्शआद्यजन्तो व्याख्यानादिति भावः । अक्ष्णा काण इति । यद्यप्यक्ष्येव काणं तथाप्यवयवधर्मस्य समुदाये आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति ध्येयम् । यद्यपि काणशब्दो ऽक्षिगतविकारवाचक एव तथापि द्वौ विभावितिवदक्ष्णेति प्रयोगस्य साधुत्वम्, ईदृशीत्येदृशानां साधुत्वे चेदमेव मानम् । षष्ठ्यपवादो ऽयमित्याह अक्षिसम्बन्धीति । अङ्ग-विकारः किमिति । अङ्गग्रहणप्रयोजनप्रश्नः । अक्षिकाणमिति । प्रथमा वा-

---

एकेनैव सुपुत्रेण सिंही स्वपिति निर्भया ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥

इत्यादौ विद्यमानतावाचिसहशब्दयोगेऽप्यनेन तृतीया । पुत्रशब्दार्थे क्रिया-न्वयित्वमेव नेति विशेष्याभावाद्विशिष्टाभावोऽस्त्येव । न च विद्यमानताविशिष्ट एव सहशब्दार्थोऽस्तु । पुत्रशब्दोत्तरतृतीयाया उपपदविभक्तित्वेन षष्ठ्यपवाद-तया सहशब्दार्थेऽनन्वयापत्तेः । यदि विद्यमानैः पुत्रैर्युक्ता गर्दभीत्यर्थस्तत्राश्रीय-ते तदा कर्तृकरणयोरित्येव तृतीया भविष्यति । सहयुक्त इति सूत्रे द्विविधोऽपि सहार्थो गृह्यत इति दिक् ।

* सन्निधानलब्धमिति * । अङ्गशब्दस्याङ्गिपरतया तत्सन्निधानेन पच्छ-ब्दोऽङ्गपर इति भावः । * व्याख्यानादिति * । अङ्गशब्दोऽयं समुदायशब्द-इति भाष्यमूलकादित्यर्थः । * अक्ष्येव काणमिति * । अस्याक्षि काणमिति व्य-वहारस्य सुप्रसिद्धत्वात् तथा च पुरुषे काणत्वरूपधर्माभावेनाक्ष्णा काण इति व्यवहारो नोपपद्यत इति भावः । * अवयवधर्मस्य * । काणत्वस्य । * समुदा-ये * । काणावयवघटितसमुदायसमवेतेऽवयविनि । तदवच्छिन्ने तादृशावयव-व्यवच्छेदे चैवासौ अक्षिगतविकारवाचक एवेति । तथा च काणोऽयमित्येतावता सर्वसामञ्जस्येऽक्ष्णेति प्रयोगो न प्राप्नोतीति भावः । * द्वौ विभावितिवदिति * ।

धित्वान्नैव स्यात् लेशतो ऽपि दर्शनसामर्थ्यहीनत्व काणत्वम् ।

इत्थशब्दः प्रकारमात्रपरः प्राप्त्यर्थाद् भुवः कर्तरि क्तः । कर्मविभक्त्यन्तेनेत्थंशब्देन भूतशब्दस्य समासः । लक्षणशब्दः करणसाधनः । तस्य कर्मषष्ठ्यन्तेनेत्थम्भूतशब्देन समास इत्याह काश्चिदित्यादि । जटाभिरिति । यद्यपि ताभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां करणत्वादिदं सिद्ध तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम्, इत्थम्भूतस्य यत्र लक्षणवाचकात्पृथगुपस्थितिरेव तत्रैवानेन तृतीया । तेन कमण्डलुपाणि छात्रमद्राक्षीदित्यादौ कमण्डलुपदान्न तृतीया । न चोत्पन्नायास्तृतीयायाः सुपो धात्विति लुगिति वाच्यम् । कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकानवयवत्वादिति कैयटे स्पष्टम् । कमण्डलुः पाणौ यस्येति बहुव्रीहि' । परे तु कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात् । तदुक्तमनुर्लक्षणइति सूत्रे भाष्ये सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव

---

एवञ्च सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन तादृशोऽत्र प्रयोग । यद्यपि चक्षुर्ना शवान् सचक्षुष्क काणपदार्थत्वेन लोके प्रसिद्ध' । तथापि कण निमीलन इत्यभियुक्तवचनस्वरसादातिशायनिकप्रत्ययस्वरसाच्चाह ।*लेशतोऽपीति।*

* प्रकारमात्रपर इति * । इदमस्थमुरिति थमुप्रत्ययान्तो यद्यप्ययमिदमर्थसन्निकृष्टाभिन्नप्रकारप्रतिपादक इति भासमेवञ्च प्रकारसामान्यस्य लाभो न स्यात्तथापि प्रत्ययार्थमात्रेऽस्य लक्षणेति भाव । एवञ्च कञ्चिद्धर्मम्प्राप्तो येन लक्ष्यते तद्वाचकप्रातिपदिकात्तृतीयेति सूत्रार्थ' । सूत्रेऽयमर्थमाशङ्कते । * यद्यपीति * । प्रकृतसूत्रविषये प्राचीनोक्तविशेषमाह । * इत्थम्भूतस्येत्यादिना * । लक्षणवाचकात् पृथगुपस्थितिः । शक्त्या लक्षणवाचकशब्दजन्योपस्थित्यविषयत्वम् । किं त्वन्यशब्दजन्योपस्थितिविषयत्वमेव । * न तृतीयेति * । अस्य लक्षणवाचको य कमण्डलुपाणिशब्दस्तज्जन्योपस्थितिविषयत्वादिति भाव । *अनवयवत्वादिति * । प्रातिपदिकसंज्ञाप्रवृत्तिकाले साकल्येनाभिप्रेतसमुदायघटकत्व यस्य तस्य तदवयवत्वमिति भाव अत्र प्रमाणन्तु प्रकृत सूत्रस्थभाष्यमेव । तत्र हि इत्थम्भूतस्य लक्षणे तत्स्थे प्रतिषेध इति वार्त्तिकम् । * तत्स्थे * । लक्ष्यवाचिशब्दस्थे । अपि भवान् कमण्डलुपाणिञ्छात्रमद्राक्षीदिति । न चेत्थम्भूतस्य लक्षणेनापृथग्भावात् । यत्रेत्थम्भूतस्य पृथग्भूत लक्षण तत्र भवितव्यमित्ययुक्तम् । कैयट इत्यनेन सूचितामरुचिम्प्रकटयति । * परे त्वित्यादिना * । * अनुर्लक्षण इति सूत्रभाष्य इति * । तत्र हि न लक्षस्य तदेव लक्षण-

लक्षणं भवतीति तदेवान्यस्य कमण्डलुपाणित्वमेवेत्यर्थः । कमण्डलोर्लक्षणत्वे हि स एवेति वदेत् । किं च तन्मध्यपातितन्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन तस्य तदनवयवत्वोक्तेरनौचित्येन लुको दुर्वारत्वम् । अत एव नरमन्य इत्यादौ इजन्तस्योत्तरपदपरत्वाय पूर्वं सुपो लुकि उत्पन्नस्यामः सुपो धात्विति लुक् । अग्निधिसामर्थ्येन वारित इच एकाचो ऽमिति सूत्रे भाष्ये इत्याहुः ।

संज्ञो ऽन्यतर ॥ दैवादिकस्य जनेर्न ग्रहणन्तस्याकर्मकत्वात्तदाह जानातेरिति । कर्मत्वशक्तिरेवात्र तृतीयार्थः ।

हेतौ ॥ हेतुरिह कारणम् । न शास्त्रीयः तस्य कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः । ननु लौकिकहेतुरपि करणमित्यत आह द्रव्यादीति । आदिना गुणक्रिये । साधरणमिति । तज्जनके ऽपि वर्तत इत्यर्थः । करणं तु क्रियाजनकमेवेति भावः । वैपम्यान्तरमाह निर्व्यापारेति । करणन्तु व्यापारवदेवेति भावः । एवञ्च करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यम् । स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह करणत्वान्त्विति । हेतुहेतुमद्भाव एव तृतीयार्थः । दण्डेन व्यापारसत्त्वे ऽपि क्रियाजनकत्वाभावान्न करणत्वम् । पुण्ये क्रियाजनकत्वे ऽपि निर्व्यापारत्वान्न तत्त्वम् । फलमपीहेति । इह एतत्सूत्रोदाहरणे । कचित्फलमपि हेतुत्वेन विवक्ष्यत इत्यर्थः । तस्यापि स्वज्ञानद्वारा जनकत्वात् । एतच्च प्रत्ययइत्यादि सूत्रेषु कैयटे स्पष्ट-

---

म्भवति येन पुनः पुनर्लक्ष्यते । किन्तर्हि यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणम्भवतीत्युपक्रम्योक्तम् । कैयटोक्तमभ्युपेत्यापि दूषणमाह । * किञ्चेति * । * अत एव * । पश्चादुत्पन्नस्यापि तन्मध्यपतितन्यायेन तदवयवत्वादेव ।

यदुक्तञ्जानातेरिति तन्निमित्तमाह । * जनेनेति * । लौकिकहेतुरपि करणमिति । व्यापारवदसाधारणङ्कारणङ्करणमिति लोकप्रसिद्धेः ।

* करणन्त्विति * । कर्तृकरणयोरितिसूत्रघटककरणशब्दार्थस्त्वित्यर्थः । साधकतममितिसूत्रेण क्रियाजनकस्यैव करणसंज्ञाविधानात् । * वैपम्यान्तरेति * । लौकिककरणत्वस्य हेतुत्वापेक्षयेत्यादि । *भिन्नैवेति * । हेतुत्वशक्ति । हेतुत्वरूपो धर्मः । स चाखण्डोपाधिहेतुरिति पुण्यादिसदृशे व्यापाररहितेऽपि व्यवहारादिति भावः । तथा च नेदं सूत्रङ्कर्तृकरणयोरितिसूत्रेण गतार्थम् । एवं व्याख्यानेन हेतुत्वकरणत्वयोर्भेदोऽज्ञात एवेति करणन्त्वित्यग्रिमोपपादनावैयर्थ्यमत आह । *स्फुटप्रतिपत्तय इति* । प्रत्ययस्य हेतुत्वविवक्षाया बीजमाह । * तस्यापीति * । जनकत्वात् । क्रियासाध्यकप्रवृत्तिजनकत्वात् । इत्थं हि लौकिकक्रमः । फलज्ञानम् । ततः फलेच्छा । ततः उपायज्ञानम् । अथोपायधर्मिकफलसा

म् । नन्वत्र श्रमेणेत्यादौ क्रियावाचकपदाभावात्क्रियाया अप्रतीत्या कथं करणत्वमत आह गम्यमानापीति । श्रमेणेत्यादिपदजन्यबोधविषयापीत्यर्थः । न तु सूत्रार्थभाणतद्वाचकपदजन्यबोधविषयैवेति भावः । अलमन्यो निर्णयार्थस्त्वाह साक्ष्य नास्तीति । ननु साक्ष्यमित्यर्थज्ञाने ऽपि तस्य श्रमेणेति नामार्थत्वे ऽनेन क्रियात्वमत आह इहेति । स्ववाच्यक्रियां प्रति स्वस्य करणत्वमित्यर्थः । स्पष्टं चेदं सूत्रे भाष्ये पिण्डीमिति वाक्यार्थे वाक्यैकदेशप्रयोग इत्यादिना भाष्ये इति मञ्जूषायां विस्तरः ।

आशिष्टेति । अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । दास्येति । दासीसम्प्रदानकं रतिफलकं दानमिति

---

धातूनाम् । तत्र उदाहरणम् । तत्र क्रिया साधयितुमप्रवृत्तिरिति । गम्यमाना धात्वर्थस्यानुपादीयमानाऽप्याक्षेपेणैव प्रतीयमानेति नार्थः । क्रियारूपार्थस्याध्याहारे तद्धातुघटितस्य पदान्तरान्वयतया शाब्दबोधनियामकत्वासम्भवेन तस्यार्थस्य शाब्दबोधविषयत्वासम्भवात् । नापि शब्दानुसन्धानात् । उच्चारितस्यैव शब्दस्योच्चारितः शब्दः प्रत्यायको नानुच्चारित इति भाष्योक्तेरनुसन्धीयमानस्य शाब्दबोधजनकत्वासम्भवात्पिण्डीमित्यत्र गम्यमानपिण्डीभक्षयेति शाब्दबोधानुपपत्तेः । किन्तु पिण्डीं भक्षयेतिवाक्यस्यार्थ पिण्डीकर्मकभक्षणे पिण्डीमित्येकदेशस्य शक्तिरेव कल्प्यते ऽतस्तत्र प्रमाणं बोधस्तथा प्रकृते ऽपीत्याशयेनाह । * श्रमेणेत्यादिपदजन्यादिना * । नामार्थत्वेन । सुप्तार्थत्वम । * स्वपाच्येति * । स्ववाच्यविशिष्टाया वाक्यैकदेशसाध्याया अर्थसाधनक्रियायाः साम्प्रति स्वस्य श्रमेणेत्येकदेशार्थस्य करणं तत्करणत्वव्यवहार इत्यर्थः । वस्तुतस्तु श्रमेणादमितिवाक्यैकदेशस्य श्रमकरणकसाधनकर्तृकसत्ताऽभावरूपोऽर्थः शक्तिरेव । एवमेव प्रविश पिण्डीमित्यादिवाक्यैकदेशप्रयोगस्थले ज्ञातव्यम् । अशिष्टव्यवहारेत्यत्र कर्मसम्प्रदानयोरनिर्धारणायाह । * अशिष्टानामिति * । अशिष्टपदमत्र न शिष्टभिन्नपरम् । श्रुतिस्मृत्यादिप्रामाण्याभ्युपगन्तॄणामपि रागोत्कर्षात्तादृशव्यवहारस्थले दास्या संयच्छते इतिप्रयोगदर्शनादत आह । * सङ्कीर्णाचाराणामिति * । पात्रभेदेन धर्माधर्मफलकाचारकर्तॄणामित्यर्थः । यद्वेत्र दासीशब्दार्थस्य रतिफलके दाने सम्प्रदानत्वमन्वयास्तादृशव्यवहारस्य सङ्कीर्णाचारकर्तृकत्वं फलमिति भावः । दास्या संयच्छते इत्यत्र दाणश्च सा चेच्चतुर्थ्यर्थे इतिसूत्रेणात्मनेपदम् । या तु भार्या शास्त्रोक्तरीत्या विवाहिता तस्यै दानान्तरं यत्र तत्पत्यन्तरं तस्या उपभोगस्तत्र न चतुर्थ्यर्थे तृतीया अशिष्टव्यवहाराभावादिति न

बोधः ।

॥ इति तृतीया ॥

दानस्येति । दाधात्वर्थस्येत्यर्थः । इदमुपलक्षणं क्रियामात्रस्य । कर्मणेति । सम्बन्धुमिति शेषः । अभिप्रैति इच्छति । कर्मणा सम्बन्धश्च स्वत्वादिरूपः सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः । स एवोद्देश्य इत्युच्यते क्रियाकारकभावः सम्बन्धश्च तदर्थः । विप्रसम्प्रदानकन्दानमिति बोधः । कर्मणेति किम् । तदभावे हि कर्मणोऽप्युद्देश्यतयान्तरङ्गत्वात्तस्यैव संज्ञा स्यात् । कर्मसंज्ञया तु पर्यायो भविष्यति । यमग्रहणं किम् । तदभावे क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादि तस्यैव स्यात् कर्तृसंज्ञा त्वकर्मकविषये सावका-

---

तत्रात्मनेपदमित्याशयेनाह । * मूले धर्मे स्थिति * ॥

इति तृतीयाविवरणम् ।

दानस्य कर्मणेति वाक्यघटकदानेतिप्रातिपदिकार्थस्य न क्रियात्वमिति दानस्य कर्मणेत्यनुपपन्नमत आह । * दाधात्वर्थस्येति * । * इदमिति * । दाधात्वर्थस्येत्येतत् । अत एव भाष्ये क्रियाग्रहणङ्कर्त्तव्यम् । इहापि यथा स्यात् । श्राद्धाय विगर्हते । युद्धाय सन्नह्यते । पत्ये शेते इति । तर्हिं वक्तव्यम् वक्तव्यम् । कथम् । क्रिया हि नाम लोके कर्मत्युपचरन्ति । काङ्क्रियाङ्करिष्यसि । किङ्कर्म करिष्यसीति भाष्ये उक्तम् । श्राद्धायेति । श्राद्धनिमित्ते । नास्तिकत्वात् । युद्धायेति । युद्धविषयकं सन्नहनपूर्वकनिश्चयङ्करोतीत्यर्थः । पत्ये शेत इति । पतिमुपगम्य शेत इत्यर्थः । कर्मणेत्यत्र कर्मपदञ्च यत्किञ्चित्क्रियाकर्मपरम् । किन्तूच्चारितवाक्यघटकधात्वर्थक्रियाकर्मपरम् । एवञ्च कर्मसम्बन्धवत्त्वेनेच्छाविषयो यस्स सम्प्रदानम् स्यादिति सिद्धम् । अत एवाजाङ्ग्रामन्नयतीत्यत्र न ग्रामस्य सम्प्रदानत्वन्तत्र ह्यजाग्रामसम्बन्धो जायतामित्येवेच्छा न तु ग्रामोऽजासम्बन्धो जायतामित्याकारेच्छा । यदा तु संयोगानुकूलव्यापारमात्रन्धात्वर्थः ग्रामसत्कार्थञ्चाजानयनन्तदा ग्रामायाजान्नयतीति भवत्येव । कर्मणेतितृतीयोपपत्तये आह । * सम्बन्धुमिति शेष इति * । * स्वत्वादीति * । आदिना स्वामित्वपरिग्रहः । स एव । सम्प्रदानत्वशक्तिमानेव । ननु कर्मणेति न कर्तव्यम् । यमभिप्रैतीत्युक्त्वापि उद्देश्यस्य लाभात् । क्रियाग्रहणञ्च न कार्यमित्यपरमनुपलम्भविष्यतीत्याशयेनाह । * कर्मणेति * । उद्देश्यतया धात्वर्थफलाश्रयत्वेनेच्छाविषयत्वादस्योद्देश्यत्वम् । अत एवान्तरङ्गत्वम्प्रथमतोऽस्य धात्वर्थफलाश्रयत्वप्रकारकेच्छा ततो विप्रादेस्तत्सम्बन्धित्वप्रकारकेच्छेति । * कर्मणा योऽभिप्रैतीति । * कर्मणाऽभिप्रैतीत्युक्ते आख्यातार्थकर्तुरुपस्थितत्वाद्योऽभिप्रैतीत्यस्य ला-

ज्ञा । न च कर्तुः कर्तृत्वाभावे कथं गोः कर्मत्वम् । कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वात् । अत एव सार्थाद्धीयते इत्यत्र कर्तुरपादानत्वे ऽपि कर्मणि लकारः सिद्धः । ननु कर्मणीत्युक्त्याऽकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह क्रिययेति । कर्मरहितक्रिययेत्यर्थः । सकर्मकेषु कर्मसंज्ञा अस्या बाधिकेत्याशयेनाह पत्ये शेत इति । न च दानादीनान्तदर्थत्वात्तादर्थ्यचतुर्थ्यैव सिद्धे किमनया संज्ञयेति वाच्यम् । दाशगोघ्नौ सम्प्रदानइत्यर्थत्वात् । तत्सम्प्रदानकं दानमिति बोधार्थं तदावश्यकत्वाच्च । अत एव

---

भौ भविष्यतीत्यभिप्रायः । न च य स इत्यस्याध्याहारो भविष्यतीति वाच्यम् । श्रुतपदार्थसम्बन्धेनैवाकाङ्क्षाशान्तेरध्याहारे मानाभावात् । ननु कर्तुरीप्सितं हि कर्म भवति । न हि तदा कर्तास्तीति कथं कर्मसंज्ञेत्याह । * न च कर्तुरिति । स्वतन्त्रोपलक्षणत्वादिति * । स्वातन्त्र्यञ्च धात्वर्थप्रधानीभूतव्यापाराश्रयत्वं स च प्रकृते कर्तृसंज्ञाभावेऽप्यक्षतमेवेति भावः । कर्तुः सम्प्रदानत्वे इष्टापत्तिरिति तु न भ्रमितव्यम् । उपाध्यायाय शिष्येण गौर्दीयत इति प्रयोगो यत्र तत्र शिष्यायोपाध्यायस्य गौर्दीयत इति प्रयोगापत्तेः । अत एव । कर्तृत्वोपलक्षणत्वादेव । * कर्तुरपादानत्वेऽपीति * । सार्थं पतन्त्यजाते अयञ्च सार्थाद्धीयत इति ह्यतः स्मृत्यर्थः । सार्थश्च मनुष्यसमुदायः समुदायश्च समुदायावयवाभिन्नोऽयमपि तत्समुदायावयव इति सार्थस्यापादानत्वेऽपि निरुक्तस्वातन्त्र्यं तस्यास्तीति भावः । * अकर्मकक्रियोद्देश्यस्य * । पत्ये शेत इत्यादौ पत्यादेः । न च कर्मकक्रियास्थलेऽतिप्रसङ्गनिवारणाय कृतस्य क्रियया यमभिप्रैतीतिवचनस्य कर्मण्यतिप्रसङ्ग इत्यत आह । * कर्मरहितेति * । इदञ्च व्याख्यानं भाष्यसिद्धमित्याशयेनाह ।* सकर्मकेष्विति * । * तदर्थत्वात् * । सम्प्रदानत्वेनाभिप्रेतो यो विप्रादिस्तत्तुष्ट्यादिप्रयोजकतया विप्रार्थत्वात् । * दाशगोघ्नावित्येतदर्थमिति * । सम्प्रदाने कारकेऽनेन सूत्रेण दाशगोघ्नशब्दयोर्निपातनात् । अत एव मूले दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिरिति तयोरर्थं वक्ष्यति । ननु सम्प्रदानशब्दस्य सम्प्रदीयते यस्मै पुष्पादिकामनया इत्यर्थे कल्प्यतेऽतो न तत्सूत्रानुपपत्तिरत आह । * तत्सम्प्रदानकमिति * । सम्प्रदानसंज्ञायास्सत्त्वे विप्राय गां ददाति दानीयो विप्र इतिवाक्याद्विप्रसम्प्रदानकं दानमिति दानसम्प्रदानाभिन्नो विप्र इत्यादिरीत्या बोधो भवति । तादर्थ्य एव चेच्चतुर्थीविधानं तदा यूपाय दार्विति शब्दाद्यथा यूपार्थं दार्विति बोधो भवति तथा विप्राय गां ददानीत्यादिशब्दाद्विप्रार्थं गोकर्मकं दानमित्याद्येव बोधः स्यादिति भावः । किं च सम्प्रदानत्वेन तेभ्यः शब्देभ्यो बोधश्चेत्स्वीक्रियते तदा कर्मणा येतिसूत्रस्य क्रियार्थोपपदस्य चेतिसूत्रेण गतार्थता न भवत्यन्यथा विप्रम्पोषयितुमित्याद्यर्थकल्पनयाऽस्य सूत्रस्य तेन सूत्रेण गतार्थता स्यात् । * अत एव * । सम्प्रदानसंज्ञा-

तादर्थ्यचतुर्थ्या दानकर्मणो गवादेः सम्प्रदानार्थत्वे ऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थदानक्रियान्वयानापत्तिरिति हेलाराजः । तादर्थ्यचतुर्थ्यैव सिद्धे चतुर्थी सम्प्रदान इति सूत्र रुच्यर्थानामित्यादिविषये चतुर्थ्यर्थमिति भाष्ये स्पष्टम् । पशुनेति । कर्म तृतीयार्थः । सम्प्रदानन्द्वितीयार्थः । एतच्च दानार्थकयजधातुविषयं पूजार्थत्वे तु पशोः करणत्वं न्यायासिद्धम् । इद छान्दसमिति कैयटः ।

अन्यकर्तृक इति । अभिलषतिकर्त्रपेक्षयान्यदभिलषतिकर्म तत्कर्तृक इत्यर्थः । यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयो ऽभिलषतिकर्ता हरिर्भक्तिमभिलष्यतीति प्रत्ययात् यत्किंचिन्निष्ठप्रीत्यनुकूलप्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्तेति अभिलषते रुच्यर्थत्वाभावान्न तद्योगे सम्प्रदानत्वमिति भावः । तदाह हरिनिष्ठेति । पथीति । न च प्रीयमाणपदाभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षाया सञ्ज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसञ्ज्ञया बाधासिद्धेः कथमेतादिति वाच्यम् । देवदत्त रोचते इत्यस्याप्यापत्तेरित्याशयात् तत्सत्वे त्वस्य कर्मसञ्ज्ञापवादत्वान्न दोषः।

गोपी स्मरादिति । श्लाघादेः स्तुत्यादिना बोधनमर्थः । स्मरादिति ।

---

सत्वादेव । यत्तु चतुर्थीसमासे कारकपूर्वपदकत्वाद्गतिकारकोपपदादिति सूत्रन्तद्विषये प्रवर्तते इति । तन्न । तादर्थ्यचतुर्थ्यैव सिद्धे चतुर्थी सम्प्रदान इति सूत्र रुच्यर्थानामित्यादिविषये चतुर्थ्यर्थमिति भाष्यात्तद्विषये कारकपूर्वपदकत्वाभावस्यापि कल्पनसम्भवात् । (किञ्च चतुर्थी तदर्थार्थेतिसूत्रेण प्रकृतिभाव एव समास इति वक्ष्यते यदि तादर्थ्य एव सर्वत्र चतुर्थी तदा प्रकृतिविकृतिभावस्य सर्वत्रैव सत्येन वक्ष्यमाणव्यवस्थाप्यनुपपन्ना स्यादिति) । * पूजार्थत्वे त्विति * । एतेन शाब्दबोधेऽपि वैलक्षण्य सूचितम् ।

हरिर्भक्तिमभिलष्यतीत्यत्र रुच्यर्थानामिति सूत्रेण चतुर्थ्यप्रवृत्त्यर्थमर्थभेदन्दर्शयति । * अभिलष्यतीत्यादिना * । * प्रीतिव्यधिकरणमिति * । एतेन कर्मसञ्ज्ञापवादभूतेय सम्प्रदानसञ्ज्ञा । न च प्रीधातोरप्येव सति सम्प्रदानसञ्ज्ञाप्रयोजकत्व स्यादिति हरिम्प्रीणयतीत्यनुपपन्नमिति वाच्यम् । प्रीयमाण इति निर्देशेन प्रीधातुयोगे सम्प्रदानत्वाभावस्य कल्पनात् । कारकाधिकारादाह । * क्रियाजनकत्वमात्रेति * । षष्ठीविषये । * इत्यस्याप्यापत्तेरिति * । अत्र कर्मसञ्ज्ञाधिकरणसञ्ज्ञावद्बाधिका स्यादिति भाव ।

ज्ञीप्स्यमान इत्यत्र ज्ञाधात्वर्थकर्मणि चेत्प्रत्ययस्तदा ज्ञानविषयस्यानेन सम्प्रदानसञ्ज्ञा णिजन्तार्थकर्मणि चेत् क्रियते तदा ज्ञानाश्रयस्य लाभ इति व्याख्याभेदेनार्थभेदं दर्शयति । * श्लाघादेरिति * । * आत्मानुरागमिति * । ण्यर्थे

हेतौ पञ्चमी स्तुत्या ऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः । स्तुतिश्च कृष्णस्यैव । एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यर्थः । ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव । एवं स्थित्या शपथेन च कृष्णं स्वानुरागं बोधयतीत्यर्थः । यद्वा स्तुत्या ह्नुत्या च कृष्णं स्ववशीकृत्य बोधयति स्थित्या शपथेन च कृष्णं बोधयतीत्यर्थः । ज्ञीप्स्यमानपदं ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः । स्तुत्यादिमात्रार्थत्वे कृष्णं श्लाघते कृष्णं ह्नुत इत्येव । ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच् ॥

धारेः ॥ धृङवस्थाने इति ण्यन्तस्य ग्रहणं व्याख्यानात् । भक्तायेति । ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्त इत्यर्थः । प्रेरणाया भक्तासत्त्वे ऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोध्यम् । अवश्यदेयत्वेन मोक्षे ऽपि ऋणत्वं बोध्यम् ।

---

कर्मणि प्रत्ययपक्षे इदम् । ज्ञाधात्वर्थकर्मणि प्रत्ययपक्षे त्वाह । यद्वेति । सन्नन्तार्थकर्मत्वमुभयोरपि सम्भाव्यत इति विनिगमनाविरहादुभयत्रैवेति न नियम इति भावः । उभयथापि कर्मसंज्ञापवाद इयम् । ज्ञाप्यमान इत्येव नोक्तं किन्तु ज्ञीप्स्यमान इत्यतोऽयमर्थ इति तत्त्वम् । एतेन ज्ञाधातोः प्रथमोपस्थितत्वमेव विनिगमकमित्यपास्तम् । यत्तु ण्यन्तार्थकर्मण्येव ज्ञाधातोस्तत्र प्रत्यय इति । तन्न । सन्नुपादानस्वारस्यविरोधात् ।

धारेरितिसूत्रे धृञो णिजन्तस्य ग्रहणमितिभ्रमवारणायाह । * धृङवस्थान इतीति * । * व्याख्यानादिति * । यदि धृञो हेतुमण्ण्यन्तस्यापि निर्देश इत्युच्यते तदा मोक्षस्य धृञ्धात्वर्थकर्तृत्वासम्भवः किञ्च धृञः सकर्मकतया मोक्षस्य कर्मत्वञ्च स्यात् धृङस्त्वकर्मकतया ऽण्यन्तावस्थायां कर्तृत्वं मोक्षस्यास्तीति हेतुमति ततो णिचि मोक्षस्य गतिबुद्धीतिसूत्रेण कर्मत्वं सम्भवतीति भक्ताय धारयति मोक्षं हरिरिति प्रयोग उपपद्यते इत्येतदर्थं व्याख्यानादित्यर्थः । भक्तस्य कारकत्वमुपपादयति । * प्रेरणाया इति * । अन्यथा मोक्षस्यर्णत्वाभावे तदा भक्तस्य उत्तमर्णत्वं तस्याभिप्रायादुपपत्स्यते तदेव न । ऋणं हि नाम यत्र सजातीयदानमङ्गीकृत्य परदत्तद्रव्यादानं तदुत्तरकालिकगृहीतद्रव्यसजातीयद्रव्यदाननाश्यो ऽदृष्टविशेषः । प्रकृते मोक्षस्यैवंविधऋणत्वाभावेनैतत्स्वामिनो भक्तस्य उत्तमर्णत्वासम्भवादिदमाह । * अवश्यदेयत्वेनेति * ।

स्पृहेरीप्सित इति सूत्रे यदीप्सितपदं तदिच्छाविषयपरम् । पुष्पेभ्यः स्पृहयतीत्युदाहरणे स्पृहिरिच्छामात्रवाची । पुष्पपदार्थस्य च विषयिताया चतुर्थ्यर्थेऽन्वयः क्रियाजनकत्वञ्च विषयत्वेनैवेति । यदा तु प्रत्यर्थस्य प्रकृतधातूपात्तव्यापारजन्यफलाश्रयत्वस्य विवक्षा तदा कर्मसंज्ञेति मूलग्रन्थात्प्रतीयते । अत एव स्पृहणीयगुणैः स्पृहणीया शोभेत्यत्र कर्मण्यनीयर् । कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्तीत्यत्र तु इच्छासम्बन्धित्वमात्रस्य विवक्षा न तु क्रियाजनकत्वरूपकार-

प्रकर्षाविवक्षायान्त्विति। फलाश्रयत्वेन विवक्षायामित्यर्थः। परत्वादिति। इदं सूत्रं विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः। पुष्पसम्प्रदानकेच्छेति चतुर्थी समभिव्याहारे बोधः। कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेत्यत्र क्रियासम्बन्धित्वमात्रविवक्षया षष्ठी। अन्ये तु भोगायेत्यध्याहृत्य कान्तायेति विभक्तिविपरिणामेन व्याख्येयमित्याहुः।

स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये सम्प्रदानत्वम्, अन्त्ये कर्मत्वम्, ईप्सितत्वन्धात्वर्थजन्यफलाश्रयत्वम्। न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः। कर्मसंज्ञायान्तु यथा तल्लाभस्तथोक्तम्।

---

कत्वस्यापीत्यत षष्ठीत्याशयेनाह। * फलाश्रयत्वेनेति *। प्रकृतसूत्रचारितार्थ्यमाह। * इदं सूत्रमिति *। क्रियाजनकत्वमात्रेत्यत्रत्यमात्रपदेन तादृशफलाश्रयत्वव्यवच्छेदः। स्वीयसिद्धान्तरीत्या शाब्दबोधमाह। *पुष्पसम्प्रेति*। यत्र तु षष्ठी तत्र विशेषमाह। * कुमार्य इवेति *। * क्रियासम्बन्धित्वमात्रेति *। मात्रपदेन क्रियाजनकत्वव्यवच्छेदः। ये तु प्रकृतसूत्रेण सम्प्रदानसंज्ञा क्रियासम्बन्धित्वविवक्षायामेव अत एव षष्ठ्यपवादत्वमस्या इति व्यवहारः। एवं सति कुमार्य इवेत्यत्र कथं षष्ठीत्याकाङ्क्षायामध्याह्रियमाणपदार्थान्वयविवक्षयेत्याहुस्तन्मतमाह। * अन्ये त्विति *। * भोगायेत्यध्याहृत्येति *। अत्र शब्दाध्याहारः। यदि तु स्पृहयतियोगविवक्षैव नेष्यते तदाह। * कान्तायेति *। आहुरित्यस्वरसबीजन्तु अस्य सूत्रस्य कारकाधिकारीयत्वात्क्रियासम्बन्धित्वमात्रविवक्षायामित्यसङ्गतम्। वदतो व्याघातात्। किञ्च कुमार्य इवेत्यत्र शब्दाध्याहारे विभक्तिविपरिणामे वा गौरवम्। सूत्रस्यैतस्य कर्तुरीप्सिततममित्यस्य च विषयविभागश्चोक्त एव।

स्पष्टप्रतिपत्तये अत्र सिद्धान्तमाह। * स्पृहधातुरिति *। फलावच्छिन्नेति। फलमिच्छाया एव। तस्यान्ततो विलक्षणविषयतारूपमवधार्यते अत एवोक्तम्प्रकर्षाविवक्षायामिति। एवञ्च कर्मसंज्ञाया शेषषष्ठ्याश्चापवाद इयमित्युक्तिः प्रत्युक्ता। त्रयाणां सूत्राणाम्परस्परपरिहारेणैव प्रवृत्तेः।

क्रुधद्रुह। एषामर्थ इवार्थो येषामित्यर्थः। क्रोधश्चामर्षरूपो मनसो वृत्तिविशेषः। उत्कर्षविरोधिधर्मारोपानुकूलव्यापारात्मकः। द्रोहश्चापकाररूपः। स च तदीयगुणे दोषत्वारोपरूपव्यापाररूप इति तयोर्भेदः। ईर्ष्या चाक्षमा सा परकीयपाण्डित्यादिगुणानामसहनन्तच्च गुणादिज्ञानजन्यद्वेषात्मकम्। असूया च गुणेषु दोषतादात्म्यारोप इति द्रोहादस्यभेदः। द्रोहविषये नैते देवदत्तस्य गुणाः किन्तुदोषा एवेति ज्ञानम्। असूयाविषये तु देवदत्तो दुष्ट इत्याकारकं ज्ञानम्। कोपश्च देवदत्तीयविपरीताचरणज्ञानजन्यो वृत्तिविशेष इत्येतेषाङ्कोपप्रभवत्वोपपत्तिः।

भार्यामीर्ष्यतीति । नात्र भार्यां प्रति कोपः किं तु परैर्दृश्यमानान्तां न सहत इत्येव, एवञ्चात्र न कोपमात्रमीर्ष्या किन्त्वन्यपुरुषदर्शनमन्येति भावः । हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् क्रियया यमित्यनेन न सिद्धिः न ह्यक्कुपितः क्रुध्यतीति भाष्येण प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावेन न तद्योगे इदम् । कुप्यति कस्मै चिदित्यादयस्त्वेव ।

उपसृष्टयोरित्यस्यार्थमाह सोपसर्गयोरिति । वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्ध । पूर्वसूत्रापवादोऽयम् ।

यदीय इति । यदीय शुभाशुभसम्बन्धांत्पर्य० । राधीक्ष्यो' प्रश्नविषय पर्यालोचनमर्थः । कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकत्वेतौ । अत एव इयन । राधोकर्मकादेवेत्युक्तः कृष्णमप्रदानक शुभाशुभपर्यालोचनमर्थः ॥

---

वस्तुतस्तु वाक्चक्षुरादिविकारानुमेय प्ररूढकोप एव क्रोध । द्रोहश्चापचिकीर्षारूप मूलोत्तमपकारपरम्पराप्यपचिकीर्षापरम् । * तामक्षमते इति * । अत्र क्षमा च परपुरुषदर्शनप्रयोजक देवादिदोषस्थितिरूपफलानुकूलव्यापार एव । अत एव तामिति कर्मत्वम् । ईर्ष्या च तदभाव । ननु क्रियया यमित्यनेनैव सिद्धेऽस्य सूत्रस्य वैयर्थ्यमत आह * हरेरिति * । कुपधातुयोगे कर्मसंज्ञा वारयति । * न ह्यक्कुपित इति * । * क्रोध इतीति * । बोधनेनेति शेष । * तदर्थत्वाभावेन * । क्रोधार्थत्वाभावेन । न तद्योग इदम् । कुप्धातुयोगे सम्प्रदानत्वस्य । किन्तु तद्योगे कर्मत्वमेवेति दाप । अत एव भाष्यार्थं यदोक्त व्याकुप्येतेति कर्मप्रयोगो मनोरमोक्त उपपन्नो भवति । यत्र च ।

दानिरदानिश्च तमुखैनिहान्ति कुप्यासि नरेन्द्र यस्मै त्वम् ।
यस्मै प्रसीदसि पुन समात्युदारोऽनुदारश्चेति ॥

काव्यप्रकाशस्थप्रयोगानुपपत्तिरिति विभाव्यते तदा महाकविप्रयोगदर्शनेन प्ररूढकोपार्थकत्वं कुपधातोरपि कल्पनीयम् । कोपसामान्यार्थकत्व पूधातुयोगे तु नेति समर्थनीयम् । न च चित्तदोषार्थानामित्येव सूत्रमस्त्विति वाच्यम् । क्षिप धातुयोगेऽतिप्रसङ्गात् । अत एवौषधं न्यक्षिपीतिप्रयोग उपपन्नो भवति । क्रोधादय श्चेतनविषया एव । क्षेपस्तु चेतनाचेतनविषय इति ।

ननूपसृष्टपदस्य सोपसर्गयोरिति व्याख्यानं कथमत आह । * वैयाकरणेति * । * निकाय * । गृहे शास्त्ररूपे । * अत एव * । पूर्वोक्तरीत्या राधधातोरकर्मकत्वस्वीकारादेव । धात्वर्थैकदेशे कृष्णपदार्थान्वय । प्रश्नविषयशुभाशुभाश्रयत्वेन कर्मत्वं कृष्णस्येति सकर्मकोऽयं धातुरिति तु न शङ्क्यम् । तस्य फलस्य प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यत्वाभावात् ।

मत्याद्०पम् ॥ व्याख्यानात्प्रत्येकनिमित्तत्वमित्याशयेनोदाहरति । गा प्रतिशृणोतीति । अनयोः प्रवर्तनापूर्वकाभ्युपगमोर्थः । तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम् ॥

अनुप्रतीति । भिन्न पद लुप्तपञ्चम्यन्तम् । शृणइति श्नान्तानुकरणात् षष्ठी । शासितुः शसनविषयहर्षानुकूलव्यापारलक्षण प्रोत्साहनमनयोरर्थः । पूर्वव्यापारस्येति । शसनस्येत्यर्थः । प्रोत्साहयतीति । ओथामेत्यादिशब्दैरिति शेषः ।

शतायेति । करणस्यैव सम्प्रदानत्वेन भानमत्र शतव्यापारश्च दानरूपः एवेति बोध्यम् । तादर्थ्ये । तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः । यदा तादर्थ्यस्य सम्बन्धत्वेन भान तदा षष्ठी गुरोरिद गुर्वर्थमित्यत्र भाष्ये स्पष्टम् । क्लृपीति सप्तमी । अर्थग्रहणश्चात्र । सम्पत्तिरुत्पत्तिः । क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेर्थे वर्तमानाच्चतुर्थीत्यर्थः । हितयोगे । चात्सुखयोगे ऽपि ।

क्रियार्थोप ॥ क्रियार्थः फल यस्य तत्र क्रियार्थन्तेन स्ववाचक लक्ष्यते

---

* व्याख्यानादिति * । द्विवचननिर्देशादर्शनमूलकव्याख्यानादित्यर्थः । *अनयो * । तत्तदुपसर्गपूर्वकयो । अत्र विप्रपदाच्चतुर्थ्या आश्रयत्वमर्थ । तस्य प्रवर्त्तनायामन्वय । वस्तुतस्तु सम्प्रदानत्वशक्तिमत्येनैवान्वय इति । अनुप्रतीतिसूत्रेऽनुप्रतिभ्यामिति समास । यद्वा प्रकृतिवदित्यतिदेशेन लुक् तदाह । लुप्त पञ्चम्यन्तमिति । प्रत्येकमिति शेष । अत एव प्रत्येकान्निमित्तत्वम् । तस्मादाह । * अनयोरिति * ।

* शसनस्येत्यर्थ इति * । उपस्थितत्वात् । करणत्वस्य व्यापारनियतत्व सरक्षणायाह । * व्यापारश्चेति * ।

* तादर्थ्य * तस्मै इदन्तदर्थम् । तस्य भावस्तादर्थ्यम् । अस्याश्चतुर्थ्या उपपदविभक्तित्वेनेव विशेषणादेव उपकारकत्वमत्र न साक्षादेव । किन्तु परम्परयापि । अत एव । मुक्तये हरिम्भजतीत्यत्रेव ब्राह्मणाय पायसमितिवद्धीत्यत्रापि चतुर्थी सिध्यति । ब्राह्मणाय वेद इत्यत्रापि तादर्थ्य एव । फलतीत्यत्र इका निर्देश इति भ्रमवारणायाह । * सप्तमीति * । * अर्थग्रहणमिति * । जायत इत्यादियोगे चतुर्थीदर्शनमूलकाद्व्याख्यानात । न्यूनता वारयति । * सुखयोगे पीति * । यथा तस्मै हितमितिनिर्देशाद्धितशब्दयोगे चतुर्थी तथा चतुर्थी तदर्थार्थेति सूत्रेण चतुर्थ्यन्तस्य सुखशब्देन सह समासविधानाज्ज्ञापकात्सुखयोगेऽपि भवतीति भाव ।

* क्रियार्थमिति * । नवमकत्वमत्रोपपदापेक्षया । अत एव लक्षणा तथा च

क्रियाफलार्थवाचकमुपपदं यस्येत्यर्थः। सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव। स्थानिशब्दश्च प्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः। क्रियार्थक्रियोपपदत्वञ्च तुमुनादेरेवेत्याह क्रियार्था क्रियेति। फलेभ्यो यातीत्यादौ फलकर्मकाहरणफलकं यानमिति बोधः। यथा वाक्यार्थे वाक्यैकदेशप्रयोग स्थले प्रविश पिण्डीमित्यादौ तस्यैव पदस्य सम्पूर्णवाक्यार्थशक्तता तथास्य समुदायस्याहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलात् स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोध्यम्। अयमेवार्थाध्याहारः। नमस्कुर्मो नृसिंहायेति। नमः स्वस्तीत्यनेन तु न सिद्धिः, उपपदविभक्तेरिति न्यायेन द्वितीयापत्तेः। पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति॥

तुमर्थात्॥ तुमुशब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः। इति सूत्रेणेति। भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः। यागायेति। यागफलकं यानमित्यर्थः।

---

यत्सिद्धान्तादाह। * क्रियाफलकार्थेति *। फलेभ्यो यातीत्यादौ फलान्याहर्तुमित्याद्याकारकबोधस्योत्पादित शब्द इति नियमाच्च सम्भवतीति शङ्कानिवारणायाह। * यथा वाक्यार्थ इति *। यत्तु प्रकृतसूत्रभाष्ये तत्सूत्रोदाहरणघटितवाक्यात्पदादुपस्थितस्याप्याहरणस्य शाब्दबोधविषयत्वङ्कल्प्यते। पदजन्यपदार्थोपस्थितिरेव शाब्दबोधहेतुरित्यस्याभ्युपगमस्त्वादृश स्थाल एवेति। तन्न। उक्तरीत्या भाष्याविरोधेन स याकृताभेदकल्पनस्यानुपयोगात्। नमस्कुम इत्यत्र नमःशब्दद्योत्यार्थ नृसिंहशब्दार्थान्वय नमःस्वस्तीतिसूत्रेणैव चतुर्थी सिद्धावस्य सूत्रस्यप्रवृत्तिवैयर्थ्यमत आह। * नमः स्वस्तीत्यनेनेति *। कर्मणि स्थानिन इत्येतावन्मात्रस्यैवोपादानमस्त्वित्यत आह * पिण्डीमित्यादावपीति *।

तुमशब्दस्तु तुमुन्प्रत्ययपरस्स च न कस्यापि भाववचनस्यार्थ इत्यत आह। * तुमुशब्देनेति *। भाववचनग्रहणसामर्थ्यात्सूत्रविशेषस्य लाभे सिद्धे स्पष्टप्रतिपत्त्यर्थं तस्य सूत्रस्यार्थमाह। * भावे य इति *। यागाय यातीत्यादौ फलप्रयोजनस्वरूपसम्बन्धो विभक्त्यर्थः। तादर्थ्य चतुर्थीत्यनेन तु नैतत्सूत्रोदाहरणविषये चतुर्थीसिद्धिः। यजादिना तादर्थ्यस्योक्तत्वेनोक्तार्थानामप्रयोग इतिन्यायेन चतुर्थ्या अप्राप्तेः। एवञ्च प्रातिपदिकार्थेतिसूत्रप्राप्तप्रथमाबाधनार्थमिदं सूत्रम्। द्विषः विघाताय वित्रातुमिच्छत इत्यादिस्थले तु तादर्थ्य एव चतुर्थी। अन्यथा तुमुनन्तस्य प्रयोगात्स्थानिन इत्युक्तत्वाच्च चतुर्थी न स्यात्। नचोक्तार्थानामिति न्यायात्तादर्थ्यचतुर्थ्यपि कथमिति शङ्क्यम्। विधानक्रियातादर्थ्यस्यैच्छानिष्ठस्योक्तत्वेऽपि विधानक्रियानिष्ठ द्विङ्घाततादर्थ्य तस्यानुक्तत्वात्। * वाचलिङ्गमेवे

, उपपदविभक्तेरिति । वाचनिकमेवेदं भाष्ये पठितमिति केचित्, क्रियाकारकयोः सम्बन्धो ऽन्तरङ्गः, उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्धः इति तन्निमित्ता विभक्तिर्बहिरङ्गेति अन्तरान्तरेणेति सूत्रे कैयटः । अत्राहुः । एवं सति नमस्यति देवानित्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थ्यापाशङ्कानेन वारणस्य भाष्योक्तस्यासङ्गतिः । एतेन प्रधानत्वात् क्रियायास्तत्सम्बन्धनिमित्तकत्वेन बलवत्त्वमित्यपि परास्तम् । कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिपदकान्यतमत्वम् । अन्यानभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि । अभिहिते प्रथमेति वार्तिकस्वारस्यादतः प्रथमापि कारकविभ-

---

क्तिरिति * । अत एव तत्र च दीयत इत्यत्र यस्य च भावेनेति सूत्रविहितसप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वं कैयटोक्तं सङ्गच्छते । * केचित् * । भाष्यतत्त्वविद । अन्तरान्तरेणेति सूत्रस्थकैयटोक्तं दूषयितुं तन्मतमाह । * क्रियाकारकयोरिति * । * अन्तरङ्ग इति * । तथा परस्पराकाङ्क्षाया उत्थितत्वात् । यथा प्रकृते कृधात्वर्थं स्वनिष्ठापकृष्टत्वनो वानुकूलो व्यापारस्तस्यैव नम शब्दो द्योतकतयोपकारक । तद्वद्द्वयोश्च किन्निष्ठ इत्याकाङ्क्षा । देवाश्च किंफलाश्रया इत्याकाङ्क्षा द्रष्टव्या । यदि च प्रकृते नम शब्दो वाचकः स्यात्तदा नम शब्दार्थोऽत्र तादृशार्थमात्रम् । व्यापारश्च कृधात्वर्थस्तयोः शीघ्रं परस्पराकाङ्क्षाऽन्वयोत्तरं देवानामप्रधानीभूतव्यापारप्रयोज्यकृधात्वर्थफलाश्रयत्वविवक्षायां कर्मत्वं स्यात् । नम पदस्य द्योतकत्वे तु धात्वर्थव्यापारप्रयोज्यफलाश्रयत्वात्तद्विवाह । एवञ्च क्रियाकारकयोः साक्षात्सम्बन्धो जन्यजनकभावरूपो नियताकाङ्क्षाप्रयोजकः । नम पदेन सम्बन्धश्च स्वद्योत्यव्यापारप्रयोज्यफलाश्रयत्वरूप इति बहिरङ्ग इत्येवङ्कल्पनीयम् । अन्यस्य आकाङ्क्षाया उत्थितत्वादन्तरङ्ग । एवमेव सर्वत्रोपपदार्थेन सहान्वयस्य बहिरङ्गत्वमुपपादनीयमिति तेषामाशय । तदेतद्दूषयति । * अत्राहुरित्यादिना * । क्रियाकारकभावेनैवेति । नमस्यतीत्यत्र करणरूपेण नमोवरिवश्चित्रङ इत्यजितिसूत्रेण क्यचो विधानात्तत्र क्यजन्तार्थान्वयेनैव नम शब्दार्थान्वयो वाच्य । एवं सत्युभयविभक्त्योः समत्वादन्तरङ्गन्यायस्येह सम्भवाभाव । * एतेन * । प्रकृते उभयोरपि समत्वेन । सहयुक्तेऽप्रधाने इति सूत्रेऽप्रधानग्रहणं शक्यमकर्तुम् । न च पुत्रेण सहागतः पितेत्यत्र पितृशब्दादपि तृतीयापत्ति । उपपदविभक्तेरिति न्यायेन प्रथमाया येनाभिप्रायेण कारकविभक्तित्वमुक्तं तदाविष्कर्तुमाह । * कारकविभक्तित्वमिति * । कर्त्रादिपदकान्यतमेत्यत्र कर्त्रादिपद षष्ठ्यादिव्यावर्तकपरम् अतस्तत्सामानाधिकरण्योपपत्ति अभिहितकर्तृत्वाद्वा प्रथमायाः । अपि

क्तिरिति बोध्यम् । द्वावित्यादौ द्वित्वादेरिव देवदत्तः पचतीत्यादौ उभाभ्यामेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधापत्तिः । नमस्करोति देवानिति । उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्वबोधः तदनुकूलव्यापारस्य नमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वं स्वशब्देन मयोक्ता नमःशब्दस्य साक्षात्प्रभृतिपूर्वादिषु वा पाठेन गतित्वात्तत्त्वम् । एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चाग न्याय इति तु न युक्तम् । नमस्यति देवानित्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात् । सदसुक्त इत्यादिसूत्रस्थभाष्यविरोधाच्च । अलमिति । अलमित्यनेन पर्याप्त्यर्थग्रहणे व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह । तस्मै प्रभवतीति । षष्ठ्या अपि साधुत्वे वी-

---

कर्तृत्वादर्थान्वय शाब्दबोधे मानाभावं वारयति । * द्वाविन्यात्रादिति * । न च स्वनिष्ठापकृष्टत्वबोधानुकूलव्यापारस्य नमःशब्दार्थत्वे देवोद्देशेन यत्र नमस्कारः कृतस्तत्र तादृशफलबोधस्य शूद्रादावपि सत्त्वाच्छूद्रमनमस्करोतीत्यपि प्रयोगः स्यादिति वाच्यम् । फलतावच्छेदकसम्बन्धेन फलाश्रयत्वस्यैव द्वितीयाप्रयोजकत्वात् । प्रकृते च स्वविषयापकर्षावधिसामानाधिकरण्यविशिष्टसमवायस्य फलतावच्छेदकसम्बन्धत्वमनेन सम्बन्धेन फलाश्रयत्वं देवेभ्योऽतिरिक्त इति । अयमर्थो नमस्करोतीत्यत्र धातोरेव । नमःशब्दस्तु द्योतकस्तदभिप्रायेणोक्तं नमस्कारस्येति । विवरणे नम इत्यादौ तु नमःशब्दो निपात । स चात्रार्थे निरूपकसमवायविशिष्टतादृशबोधानुकूलव्यापारे शक्त इत्यतस्तत्रापि न शूद्राय नम इत्याद्यापत्तिः । द्विजस्य कर्तृत्वे प्रयोग । नमस्करोतीत्यत्र गतित्व साक्षात्प्रभृतिषु व्यर्थवचनत्वमिति वार्तिकविरोधादत आह । * ऊर्यादिषु वेति * । प्राचीनोक्तं दूषयति । * एकस्या एवेति * । यथा मासे दीयत इत्यत्राधिकरणत्वसमर्थस्य च भावेनेत्यस्य सापेक्षया चन्द्रस्यात्मलाभे इति कैयटेनोक्तम् । * पर्याप्त्यर्थानामिति * । अत्र पर्याप्ति सामर्थ्यम् । तदभिप्रायेण मूले दैत्येभ्यो हरिरलं प्रभुः समर्थ इत्युक्तम् । * व्याख्यानादिति * । भूषणवारणार्थकालशब्दस्य चान्यामलङ्करोति हरिर्दिने भोजनमलङ्करोतीत्यादौ क्रियासाचक्यधातुसमभिव्याहारे प्रयोगात्तत्रोपपदविभक्तेरिति न्यायेन द्वितीयैवेति प्राचीनकृतव्याख्यानादित्यर्थ । अत्र तस्मै प्रभवति सन्तापादिभ्य इतिनिर्देशादर्थविवक्षा अलशब्दविषये ऽपभ्यद्वारैव सोऽर्था भूषणाद्यर्थकालंशब्दप्रयोगे न प्रतीयत इति न तत्र चतुर्थी किन्तु तदभिन्नेतिव्याख्यानात् कल्प्यते । अलमितिपर्याप्त्यर्थग्रहणं ङ्संभवमिहापि यथा स्यात् अलम्मल्लो मल्लाय प्रभुर्मल्लो मल्लायेतिभाष्यमप्यत्र मानम् । अत एवाऽश्रमेणेत्यत्र न भवति । यथा पर्याप्त्यर्थकशब्दयोगे तस्मै प्रभवतीतिनिर्देशाच्चतुर्थी तथा तादृशे विषये स एषामितिनिर्देशात् षष्ठ्यपि भवतीति मूले

ज स एषामिति । आशीर्विवक्षायामिति । आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः कुशल मङ्गल वा स्वस्तियोगे चतुर्थ्या अवकाशः स्वस्ति जाल्मायास्तीति तत्वकथनम् । कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिन्नाः कुशलार्थाः स्वस्तिशब्दो ऽनव्ययमपि ।

'प्रतिगृह्णामि ते धेनु कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु मे नित्य सुखञ्चानुत्तम तथे' ति ।
भविष्योत्तरे प्रयोगात् ॥

मन्यकर्मणि ॥ तिरस्कार इति । अनादरो नादराभावमात्रम्, अपि तु नञो ऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति भावः । तत्रानादर इति मन्यकर्मविशेषणन्तद्द्योतकं यत्कर्मेत्यर्थः । तेन युष्मच्छब्दाच्चतुर्थी न तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेये ऽत्र गृह्यते न त्वपकृष्टसादृश्यरूपः तत्प्रतीतिश्च नञ्समभिव्याहारे एव । तृणतुल्यमपि न मन्ये इत्यर्थः । तृणाय मत्वा रघुनन्दनोपीत्यादौ नञोऽध्याहारः तदाह न त्वा तृणमिति कर्मात्र चतुर्थ्यर्थः । श्यनेति । न तु यका व्याख्यानादिति भावः । श्यस्तूपलक्षणम् । तेन लिडादावपि भवति तत्

---

उक्तम् । * आशीर्विषयत्वेति * । स्वस्त्यर्थस्याशीर्विषयत्वविवक्षायामित्यर्थ । यदुक्तम्मूले परामपीति तच्च परस्परविषयपरिहारेण सम्भवतीत्याशयेन तथा दर्शयति ।*स्वस्तियोग इत्यादिना* । स्वस्तिशब्दार्थश्च मङ्गलम् । यथा स्वस्ति गोभ्यो भूयादित्यादौ । स्वस्त्यर्थस्याशीर्विषयत्वमेवेति तु न नियम । अत एव स्वस्ति घृपलायेत्यत्र तत्त्वकथनेऽपि चतुर्थी भवति । सूत्रे पूर्वोत्तरसाहचर्यात्स्वस्तिशब्दोऽव्ययसज्ञक एव गृह्यते तदेतदाह । * स्वस्तिशब्द इति * ।

मन्यकर्मणीतिसूत्रव्याख्यानवेलाया यदुक्तम्मूले तिरस्कार इति तल्लाभोपायमाह । * अनादर इति * । * व्याख्यानादिति * । तिरस्कारग्रहणङ्कर्तव्यमितिवार्त्तिकमूलकात् । तिरस्कारश्चापकृष्टनिरूपितोपमेयत्वाभावो यत्र प्रतिपाद्यते तत्र स्पष्टम्प्रतीयते । अपकृष्टसादृश्यप्रतिपादने यत्र तात्पर्यन्तत्र न्यूनगुणेषु सादृश्यप्रतिपादनस्य लोकप्रसिद्धत्वाद्यद्यपि तिरस्कारस्तथापि सूत्रे कुत्सित इत्येव वक्तव्येऽनादर इत्युपादानादतिशयविशिष्टानादरस्य यत्र प्रतीतिस्तत्रैव सूत्रप्रवृत्तिरित्यभिप्राय । तादृशानादरप्रतीतिश्च न त्वान्तृणमित्यादौ स्फुटैव । न त्वान्तृणम्मन्ये तृणाय वेत्यत्रोभयोरपि विभक्त्यो कर्मत्वशक्तिविशिष्ट एव शक्ति । * न तु यका व्याख्यानादितीति * । अनभिहिताधिकारस्थास्यमूलवाख्यानादित्यर्थ । मूलकारस्य न्यूनताम्परिहरति । * श्यन्तूपलक्षणमिति * । दैवादिकस्य [illegible] । * लिडाद्यपीति * । यथा

ध्वनयन्नाह तानादिकयोगे नेति । नौकाकेति भाष्ये येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्तीति येष्विति बहुवचनेन शून्युदाहरणत्वेन शेषेष्वपि दृष्टनिर्णय इति भावः ॥

गत्यर्थकर्मे ॥ कर्मण्यपि चतुर्थ्यर्थः । गत्यर्थेति किम् । ओदनं पचति । कर्मणीति किम् । अश्वेन गच्छति । चेष्टाया किमिति । धात्वर्थस्य क्रियारूपत्वात् प्रश्नः । शरीरक्रियाया एव ग्रहणमित्युत्तरम् । पन्थानमिति । अध्वशब्दो ऽर्थपरो व्याख्यानादिति भावः । अधिष्ठित इति । शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । अध्वपदेन गन्तव्याप्यो ऽर्थ उच्यते, तेन गन्तृयुक्तस्त्रिया स्त्रियं गच्छतीत्यादौ न । स्पष्टश्चेद भाष्ये । उत्पथादिति । उत्पथं सन्त्यज्येत्यर्थः । इष्यत इति । न स्यादित्यन्त इत्यर्थः ।

---

कामाधिक्यादत्तकर्माति न स्यान्तृणाय मेने श्वस्याद्राविति स्त्रीणां वाक्ये तासां कामाधिक्यश्चाहारो द्विगुण स्त्रीणाम्बुद्धिस्तासामाश्चतुर्गुणा । षड्गुणो व्यवहारश्च कामश्चाष्टगुण स्मृत इत्यत्र प्रसिद्धम् । नौकाकान्नशुकशृगालवर्जेष्विति मूलका रोक्त्या परिगणनमिदमिति प्रतीयते । तच्च न युक्तम् । भाष्येऽनावादिष्विति वक्ष्यामि । न त्वा नावमन्ये । न त्वामश्वमन्ये इत्युक्त्वा येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ति इतिकथनात् । यदि भाष्यीयमुदाहरणमत्र मूले तदा शृगालशब्दोपादानमधिकमिति तु न शङ्क्यम् । भाष्योदाहरणेषु शृगालशब्दानुपादानेऽपि तत्रत्यबहुवचनादित्यादिप्रामाण्यात्तस्यैवमुपादानात् । तदेतदाह । * नौकाकेति * ।

गतेरिति न वाच्यम् गते कारकस्येत्येव सिद्धमित्याशयेनाह । * कर्मणीति किमितीति * । * शारीरेति * । परस्पन्दादिधात्वर्थभूता इत्यर्थः । * अर्थपर इति * । कर्मणीत्यनेन सामानाधिकरण्यात् । कर्मसंज्ञा हि शास्त्रेणार्थस्यैव विधीयते । * व्याख्यानादिति * । अध्वन्यर्थग्रहणमितिवार्तिकमूलकत्वात् । * समकालिकेति * । एतच्च फलेऽन्वेति । आस्थितप्रतिषेधो वक्तव्य इतिवार्तिकस्वरसमस्मिन्व्याख्याने मूलम् । ननु जीर्णेदा यत्र गम्यते स पन्था इति लोकप्रसिद्ध इति स्त्रियङ्गच्छतीत्यत्रापध्वनीति प्रतिषेधो न प्राप्नोतीत्यत आह । * अध्वपदेनेति * । * स्पष्टश्चेति * । आस्थितप्रतिषेध इत्यादिनेत्यादि । उत्पथादिति ल्यब्लोपे पञ्चमीत्याशयेनाह । * उत्पथं सन्त्यज्य इति * । इष्यत इत्येतद्यन्मूले कथितं तल्लब्धमर्थं स्पष्टप्रतिपत्तये आह । * न त्वेति * । उत्पथेनेति करणे तृतीया गच्छतीत्येतन्निरूपिता चेत्कर्मकरणयोरैक्ये पथः कर्मत्वानुपपत्तिः । यदि पथ शब्दार्थे उत्पथातिरिक्तस्तदोत्पथस्य करणत्वानुपपत्तिरित्येतच्छङ्कानुत्था-

उत्पथेनेति । गन्तुमशक्त इति शेषः ॥

इति चतुर्थी ॥

ध्रुवमपायेऽपादानम् ॥ ध्रुवं स्थिरम् । अपायो विभागजनको व्यापारः, तद्-

---

नायाह । * गन्तुमशक्त इति शेष इति * । अनेदमवधेयम् । गत्यर्थकर्मणि चतुर्थी चेतिमन्यकर्मण्यनादर इत्यस्यानन्तरकृत्यर्थानाश्रेष्ठायामाध्वनीति वा श्रुतो न कृतमिति । यत्तु द्वितीयाग्रहणङ्कर्मणि प्राप्ता या षष्ठी ग्रामङ्गन्तेत्यत्र तद्बाधनार्थमिति । तन्न । सन्दर्शनादिक्रियया गत्यर्थक्रियायाः कृत्रिमकर्मत्वात्कर्मणा यमभिप्रैतीति ग्रामस्य सम्प्रदानत्वेन चतुर्थ्या गत्यर्थकर्मत्वेन द्वितीयायाश्च सिद्धिमाश्रित्यैतस्य प्रत्याख्यानपरभाष्यप्रामाण्येन भाष्यमते षष्ठीस्वीकारवत्सूत्रकारमतेऽपि कृदन्तेन योगे षष्ठ्युत्पत्ताविष्टापत्तेः स्वीकारात् । न च सूत्रारम्भे उभाभ्यामपि विभक्तिभ्याङ्गमनस्पर्शक्रियान्वेनैवार्थस्य शाब्दबोधे भानम्प्रत्याख्यानपक्षे तु कर्मत्वसम्प्रदानत्वाभ्यान्तत्तच्छाब्दबोधे भानं स्वीकार्यमिति वाच्यार्थभेदात्कथमेतत्प्रत्याख्यानमिति वाच्यम् । अर्थभेदेऽपीष्टापत्तिमाश्रित्यैव भगवता प्रत्याख्यानात् । यथोत्तरम्मुनीनाम्प्रामाण्यात् । न च ग्रामाय गच्छतीत्यत्र गम्धातोरुत्तरदेशसंयोगानुकूलव्यापारमात्रमर्थस्तेन । तादृशक्रियायाः कर्मत्वमिति तादृशव्यापारविषयकसन्दर्शने गम्धातोर्धातोरनेकार्थत्वाद्वृत्तिः स्वीकार्या । एवञ्चोत्तरदेशसंयोगरूपफलस्य प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वाभावेन कथङ्ग्रामस्य कर्मत्वप्राप्तिरिति वाच्यम् । अर्थभेदेऽपि प्रत्याख्याने इष्टापत्तिवदेकस्मिन्नेवार्थे धातोर्यदा वृत्तिस्तदा ग्रामं ग्रामाय वा गच्छतीत्यस्यानभिधानवदिष्टापत्तेः स्वीकारात् । न चैवमर्थभेदेऽपि चेदत्र द्वितीयाचतुर्थ्योः स्वीकारस्तदा घटङ्करोतीत्यत्र कृधातोरप्यर्थभेदमाश्रित्य घटङ्घटाय वा करोतीतिप्रयोगापत्तिरिति वाच्यम् । लक्ष्यानुरोधेनैतादृशे विषये तादृशार्थभेदेन विवक्षाया अस्वीकार इति स्वीकारात् । तदुक्तं हरिणा । भेदाभेदविवक्षा च स्वभावेन व्यवस्थितेति ।

इति चतुर्थीविवरणम् ।

* ध्रुवमपाय * । ध्रुधातोः स्थैर्यार्थकात्कुटादेः पचाद्यचि निष्पन्नो ध्रुवशब्दः स्थैर्यार्थक इत्यभिप्रायेणाह । ध्रुवं स्थिरमिति । अपायो विभाग इत्यादि ।

नाश्रयमिति यावत् । विभागश्च न वास्तवसबन्धपूर्वको वास्तव एव किं तु बुद्धिपरिकल्पितसबन्धपूर्वको बुद्धिकल्पितोऽपि माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात् । कर्तृवारणाय ध्रुवमिति । अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात् । अपायविषये यत् कारक तदपादानमित्यर्थसंभवात् । कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था । हरिरप्याह ।

अपाये यदुदासीनश्चल वा यदि वाचलम् ।

ध्रुवमेव तदावेशात्तदपादानमुच्यते' इति ।

स्पष्टञ्चेद कैयटादौ । भाष्यानुसारिणस्तु एव हि अस्तादश्वात्पतितो धावतः पततीत्यादौ ध्रुवत्वाभावादपादानत्व न स्यादित्याशङ्क्याध्रौव्यस्याविवक्षितत्वमत्र यतः सतोऽप्यविवक्षा भवतीति समाहित भाष्ये तदसङ्गत स्यात् । त्वदुक्तध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्वेन सतो ध्रौव्यस्याविवक्षेत्यस्यासङ्गते' । सिद्धान्ते ऽपि त्वदुक्तध्रुवपदार्थकथनमयोचि

---

न च नाशस्यापायपदार्थत्व लोके प्रसिद्धमिति कथमेतद्व्याख्यानमिति वाच्यम् । विभागजनकव्यापारस्य स्वजनकविभागजनकत्वसम्बन्धेनोत्तरदेशसंयोगाश्रसम्बन्धितयाऽपायपदस्य तस्मिन्व्यापारलक्षणास्वीकारात् । पतनमात्र तु नत्वपाय । प्रक्षमजहत्यपि भूमि स्पृशति पर्णे भूमिम्पततीति प्रयोगात् । तत्र विशेषमाह । * विभागश्चेति * । स्वसिद्धान्तमाह । * भाष्यानुसारिणस्त्विति * । * त्वदुक्ताध्रुवत्वस्य * । तद्धात्वर्थव्यापारानाश्रयत्वस्वरूपस्य । एव हि तत्र भाष्ये उक्तम् । प्रतियुक्तेष्वपादानसंज्ञा नोपपद्यते ऽध्रुवत्वात् । रथात्प्रवीतात्पतित । अश्वाद्धस्तात्पतित । सार्थाद्गच्छतो हीन इति । अत्र आसो मनसो धर्म न हि तेनाश्वस्य ध्रुवत्वहानिरिति शङ्कामपनेतुमाह कैयट । आसपूर्वके परिस्पन्देऽनेकार्थत्वाद्धातूनाम्नसिर्वर्त्तते । अस्तश्चाश्व पातस्य निमित्तमिति पूर्वमश्वस्य अस्तत्वेन सम्बन्ध । पश्चात्पतित इत्यनेनेति ध्रुवत्वमश्वस्य नास्ति । तत्समाधानम्भाष्येण वाऽध्रौव्यस्याविवक्षितत्वात् । न वा एष दोष । किङ्कारणमध्रौव्यस्याविवक्षितत्वात् । नात्राध्रौव्य विवक्षितम् । किन्तर्हि ध्रौव्यम् । अत्र कैयट । ध्रुवमेकरूपम् । तच्च ध्रौव्यमपायविषयमाश्रीयते न त्वनवच्छिन्नम् । * अपाय इति * प्रत्यासत्येति भाव । * अपायेति * । विभागसंयोगानुकूलो गतिविशेषो ह्यपाय स च प्रधान एव गृह्यते स चात्र पतत्युपात्त । न च तदाश्रयोऽश्वस्तथात्वे कर्तृत्वापत्ते । * न त्वनवच्छिन्नमिति * । अनिरूपितमित्यर्थ । ततो भाष्ये शङ्का कथ सतो नामाविवक्षा स्यात् । सतोऽप्यविवक्षा भवति । तद्यथा । अलोमिका एडका अनुदरा कन्यकेति । असतश्च विवक्षा भवति । समुद्र कुण्डि

तमिति तदसङ्गतिश्च, लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । अतदावेशादित्यत्र हरिकारिकाया तदावेशाविवक्षणादित्यर्थः। तस्मादपाये गतिविशेषे सति यद् ध्रुवमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रय तदपादानमिति सूत्रार्थः । त्रासादेरवधित्वोपयोगित्वाश्रयणेन शङ्का वृक्षात्पर्णमित्यादौ तस्यासत्त्वान्न तदुपयोगित्वन्तस्येत्युत्तरम् । ध्रुवमपाये इति तु वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्तापादानत्ववारणाय एवञ्चापायेति कारके इत्यस्य क्रियाजनकत्वेन विवक्षितइत्यर्थे तात्पर्यग्राहकं बोध्यम् । ध्रुवग्रहणन्तु कार-

---

का । विन्ध्यो वर्द्धितकम् इति । एतद्भाष्ये असतश्च विवक्षेतिनिदर्शनार्थमुपात्तम् । यथाऽसतो विवक्षा भवति एवं सतोऽप्यविवक्षा भवतीति । यदि प्रकृतभाष्यं कैयटरीत्या व्याख्यायते तदा सिद्धान्तभाष्याक्षराणामक्षरस्वारस्यन्नोपपद्यते। प्रधानव्यापाराश्रयत्वरूपस्य त्वदभिमतस्याध्रौव्यस्यात्र कदाप्यसत्त्वात् । तस्मान्मूलोक्तरीत्या व्याख्यानमेवोचितम् । * लोकसिद्धातिरिक्तेति * । लोकसिद्ध लोकप्रसिद्धो यो ध्रुवपदार्थो निश्चलत्वरूपस्तदतिरिक्त इत्यर्थ । * शक्तिरिति * । न चोक्तरीत्या लक्षणैव कल्प्यत इति वाच्यम् । प्रसिद्धशक्यार्थमादाय शाब्दबोधसम्भवे लक्षणाया अनुचितत्वात् । सूत्रार्थमाह । * तस्मादित्यादि * । स्वरीत्या शङ्कासमाधानभाष्य योजयति । * त्रासादेरिति * । आदिना धावनपरिग्रह । ननु यदि कैयटोक्तरीत्या ध्रुवमपाय इत्यस्याऽर्थो वर्ण्यते तदा कर्तृवारणाय ध्रुवमपाय इति चरितार्थम् । तन्मतेऽपाये गतिविशेषे यद् ध्रुव तदनाश्रय इत्यर्थाद् ध्रुवग्रहणाभावेऽपायात्मकक्रियाजनकमित्यर्थे कर्त्तरि सुत्रप्राप्तेरेव बाध्यतया कर्तृसंज्ञाया इयमपवाद स्यात् । परन्त्वेवन्ध्रुवग्रहणाभावे सूत्रार्थावक्तुमशक्य । ध्रुवग्रहणाङ्किमर्थम् । ग्रामादागच्छति शकटेनेतिकरणेऽतिप्रसङ्गापादनपरभाष्याविरोधात् । न हि करण विभागजन्यसंयोगजनकक्रियात्मकापायजनकम् । किन्तु तादृशग्रामघटकविभागजनकत्वेन करणस्य कारकत्वादपादानसंज्ञाया प्राप्तिरिति भाष्यस्याभिप्रायो वर्णनीय । एवञ्चोत्तरभाष्येण करणसंज्ञात्र बाधिका भविष्यतीत्यनेन यथा परत्वात्करणसंज्ञाया बाधकत्वन्दर्शितन्तथा ग्रामादायातीत्यत्र ग्रामे चरितार्थामपादानसंज्ञाङ्कर्तृसंज्ञा बाधिका भविष्यतीति न कर्तृवारणन्ध्रुवग्रहणप्रयोजनमित्याशयेनाह । * ध्रुवमपाय इति त्विति * । इद च प्रयोजनमपायपदस्य । एतदभावे ध्रुवङ्कारकमित्येवोक्तो वृक्षस्य पर्णम्पततीत्यत्र वृक्षस्य यथाऽपादानत्वप्राप्तिस्तथाह । * वस्तुत इत्यादि * । अत्र वृक्षस्य क्रियायामेवान्वयो न तु पर्णे । तथा सति तस्य कारकत्वाभावसम्भव स्यात् । ध्रुवग्रहणप्रयोजनमाह । * ध्रुवग्रहणन्त्विति * । तथा च तदभावे पूर्वोक्तस्थले करणेऽतिप्रसङ्ग इति भाव । * अतिरिक्तव्यापाराभावेति * । स

नाश्रयमिति यावत् । विभागश्च न वास्तवसंबन्धपूर्वको वास्तव एव किं तु बुद्धिपरिकल्पितसंबन्धपूर्वको बुद्धिकल्पितोऽपि माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात् । कर्तृवारणाय ध्रुवमिति । अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात् । अपायविषये यत् कारकं तदपादानमित्यर्थसंभवात् । कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था । हरिरप्याह ।

अपाये यदुदासीनं चलं वा यदि वाचलम् ।
ध्रुवमेव तदावेशात्तदपादानमुच्यते' इति ।

स्पष्टं चेदं कैयटादौ । भाष्यानुसारिणस्तु एवं हि त्रस्तादश्वात्पतितो धावतः पततीत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्याध्रौव्यस्याविवक्षितत्वमत्र यतः सतोऽप्यविवक्षा भवतीति समाहितं भाष्ये तदसङ्गतं स्यात् । त्वदुक्तध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतो ध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । सिद्धान्ते ऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचि

---

न च नाशस्यापायपदार्थत्वं लोके प्रसिद्धमिति कथमेतद्व्याख्यानमिति वाच्यम् । विभागजनकव्यापारस्य स्वजनकविभागजनकत्वसम्बन्धेनोत्तरदेशसंयोगनाशसम्बन्धितयाऽपायपदस्य तस्मिन्व्यापारे लक्षणास्वीकारात् । पतनमात्रन्तु नैवापाय । अक्षमजहत्यपि भूमिं स्पृशति पर्णं भूमिम्पततीति प्रयोगात् । तत्र विशेषमाह । * विभागश्चेति * । स्वसिद्धान्तमाह । * भाष्यानुसारिणस्त्विति * । * त्वदुक्तध्रुवत्वस्य * । तद्धात्वर्थव्यापारानाश्रयत्वस्वरूपस्य । एवं हि तत्र भाष्ये उक्तम् । प्रतियुक्तेऽप्यपादानसंज्ञा नोपपद्यते ऽध्रुवत्वात् । रथात्प्रवीतात्पतित । अश्वात्त्रस्तात्पतित । सार्थाद्गच्छतो हीन इति । अत्र त्रासो मनसो धर्मो न हि तेनाश्वस्य ध्रुवत्वहानिरिति शङ्कामपनेतुमाह कैयट । त्रासपूर्वके परिस्पन्दे ऽनेकार्थत्वाद्धातूनां त्रसिर्वर्तते । त्रस्तत्वादेव पातस्य निमित्तमिति पूर्वमश्वस्य त्रस्तत्वेन सम्बन्ध । पश्चात्पतित इत्यनेनेति ध्रुवत्वमश्वस्य नास्ति । तत्समाधानम्भाष्येन वाऽध्रौव्यस्याविवक्षितत्वात् । न वा एष दोष । किं कारणमध्रौव्यस्याविवक्षितत्वात् । नात्राध्रौव्यं विवक्षितम् । किं तर्हि ध्रौव्यम् । अत्र कैयटः । ध्रुवमेकरूपम् । तच्च ध्रौव्यमपायविषयमाश्रीयते न त्वनवच्छिन्नम् । * अपाय इति * प्रत्यासत्त्येति भावः । * अपायेति * । विभागसंयोगानुकूलो गतिविशेषो ह्यपाय स च प्रधान एव गृह्यते स चात्र पतत्युपात्त । न च तदाश्रयोऽश्वस्तथात्वे कर्तृत्वापत्ते । * न त्वनवच्छिन्नमिति * । अनिरूपितमित्यर्थ । ततो भाष्ये शङ्का कथं सतो नामाविवक्षा स्यात् । सतोऽप्यविवक्षा भवति । तद्यथा । अलोमिका एडका अनुदरा कन्यकेति । असतश्च विवक्षा भवति । समुद्रः कुण्डि

तमिति तदसङ्गतिश्च, लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च। अतदावेशादित्यत्र हरिकारिकाया तदावेशाविवक्षणादित्यर्थः। तस्मादपाये गतिविशेषे सति यद् ध्रुवमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रय तदपादानमिति सूत्रार्थः। त्रासादेरवधित्वोपयोगित्वाश्रयणेन शङ्का वृक्षात्पर्णमित्यादौ तस्यासत्वान्न तदुपयोगित्वन्तस्येत्युत्तरम्। ध्रुवमपाये इति तु वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्तत्प्रासापादानत्ववारणाय एवञ्चापायेति कारके इत्यस्य क्रियाजनकत्वेन विवक्षितइत्यर्थे तात्पर्यग्राहकं बोध्यम्। ध्रुवग्रहणन्तु कार-

---

कम्। विन्ध्यो वर्द्धितकम् इति। एतद्भाष्ये असतश्च विवक्षेतिनिदर्शनार्थमुपात्तम्। यथाऽसतो विवक्षा भवति एव सतोप्यविवक्षा भवतीति। यदि प्रकृत भाष्यं कैयटरीत्या व्याख्यायते तदा सिद्धान्तभाष्याक्षराणामक्षरस्वारस्यन्नोपपद्यते। प्रधानव्यापाराश्रयत्वरूपस्य त्वदभिमतस्यार्थो यस्यात्र कदाप्यसत्त्वात्। तस्मान्मूलोक्तरीत्या व्याख्यानमेवोचितम्। * लोकासिद्धातिरिक्तेति *। लोकसिद्ध लोकप्रसिद्धो यो ध्रुवपदार्थो निश्चलत्वरूपस्तदतिरिक्त इत्यर्थः। * शक्तिरिति *। न चोक्तरीत्या लक्षणैव कल्प्यत इति वाच्यम्। प्रसिद्धशक्यार्थमादाय शाब्दबोधसम्भवे लक्षणाया अनुचितत्वात्। सूत्रार्थमाह। * तस्मादित्यादि *। स्वरीत्या शङ्कासमाधानभाष्यं योजयति। * त्रासादेरिति *। आदिना धावनपरिग्रहः। ननु यदि कैयटोक्तरीत्या ध्रुवमपाय इत्यस्याऽर्थो वर्ण्यते तदा कर्तृवारणाय ध्रुवमपाय इति चरितार्थम्। तन्मतेऽपाये गतिविशेषे यद् ध्रुव तदनाश्रय इत्यर्थात् ध्रुवग्रहणाभावेऽपायात्मकक्रियाजनकमित्यर्थे कर्त्तरि सूत्रप्राप्तेरेव बाध्यतया कर्तृसंज्ञाया इयमपवादः स्यात्। परन्त्वेवन्ध्रुवग्रहणाभावे सूत्रार्थो वक्तुमशक्य। ध्रुवग्रहणङ्किमर्थम्। ग्रामादागच्छति शकटेनेतिकरणेऽतिप्रसङ्गापादनपरभाष्यविरोधात्। न हि करणं विभागजन्यसंयोगजनकक्रियात्मकापायजनकम्। किन्तु तादृशग्रामघटकविभागजनकत्वेन करणस्य कारकत्वादपादानसंज्ञाया प्राप्तिरिति भाष्यस्याभिप्रायो वर्णनीय। एवञ्चोत्तरभाष्येण करणसंज्ञात्र बाधिका भविष्यतीत्यनेन यथा परत्वात्करणसंज्ञाया बाधकत्वन्दर्शितन्तथा ग्रामादायातीत्यत्र ग्रामे चरितार्थामपादानसंज्ञाङ्कर्तृसंज्ञा बाधिका भविष्यतीति न कर्तृवारणन्ध्रुवग्रहणप्रयोजनमित्याशयेनाह। * ध्रुवमपाय इति त्विति *। इद च प्रयोजनमपायपदस्य। एतदभावे ध्रुवङ्कारकमित्येवोक्तौ वृक्षस्य पर्णं पततीत्यत्र वृक्षस्य यथाऽपादानत्वप्राप्तिस्तथाह। * वस्तुत इत्यादि *। अत्र वृक्षस्य क्रियायामेवान्वयो न तु पर्णे। तथा सति तस्य कारकत्वाभावसम्भव स्यात्। ध्रुवग्रहणप्रयोजनमाह। * ध्रुवग्रहणन्त्विति *। तथा च तदभावे पूर्वोक्तस्थले करणेऽतिप्रसङ्ग इति भावः। *अतिरिक्तव्यापाराभावेति*। स

कान्तराणामिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनायेत्याहुः। अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोध्यम्। एवञ्च वृक्षात्पततीत्यादौ तदपादानविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। वृक्षाद्भूमिं पततीत्यादौ वृक्षापादानविभागपूर्वकः संयोगानुकूलो व्यापार इति बोधः। परस्परस्मान्मेषावपसरत इत्यादौ मेषपदोपात्तयोरेवक्रियाश्रयत्वात्कर्तृत्वस्य परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्व मेषपदोपात्ते तदविवक्षणात् प्रयोगानुसारित्वाद्विवक्षायाः, विभागपूर्वकप्रसृतौ गमनमपसरणम्। आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिकृतभेदवच्छब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात्। शब्दालिङ्गितार्थमानस्यैव सत्वाचेत्यन्यत्र विस्तरः। यत्त्वपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गति प्रति इतरस्यापादानत्वमविरुद्धमिति तन्न। वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवापायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे भाष्ये उक्तं न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वादिति। धनुषा विध्यतीत्यत्र निःसरच्छरजन्यगोधार्थत्वाद्व्यधेरपादानकरणत्वोभयप्राप्तौ परत्वात् करणत्व बोध्यम्। ग्रामादायातीति। आयाते विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः। वृक्षन्त्यजतीत्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयापादानत्वस्य बाधः। स्पन्देस्तु न विभागोऽर्थ इति वृक्षे स्पन्दत इत्येव। चलतेरासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वम्। सार्थाद्धीयत इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽप्यपादाने चाहीयरुहोरिति प्रा-

च वृक्षस्य पर्णमित्यत्र वृक्षेऽपि नास्तीति भावः। * वृक्षात्पततीत्यादाविति *। अत्र विभागजन्यः संयोगोऽर्थः पतेः। * वृक्षाद् भूमिम्पततीत्यादाविति *। अत्र विभागजन्यसंयोगानुकूलव्यापारः पतधात्वर्थः। ननु परस्परस्मान्मेषावपसरत इत्यत्र मेषपदोपात्तयोरेव परस्परशब्दार्थतया तयोरवधिभावोपगमातिरिक्तव्यापारानाश्रयत्वाभावेन कथमपादानत्वमत आह। * परस्परेति *। वाच्यशब्दरूपोपाधिगतभेदस्य वाच्यार्थे आरोपेण तयोरेव्यर्थयोर्भेदात्कर्तृत्वापादानत्वयोरुपपत्तिरिति भावः। * अयञ्च *। उद्योते। कैयटादिमतन्दूषयति। * यत्त्विति *। * अत एव *। निवृत्तभेदस्यैवोपादानादेव। ननु व्यधधातोर्विध्यतीत्यत्राप्यपादानसंज्ञा प्राप्नोतीत्यत आह। * धनुषेति *। ननु त्यजधातोर्विभागानुकूलव्यापारार्थकत्वात्तद्योगेऽप्यपादान[illegible] स्यादत आह। * वृक्षमिति *। स्पन्देर्विभागानुकूलव्यापारार्थत्वे[illegible] [illegible] प्रासामपादानसंज्ञा वारयति *। स्प

पकात्कर्मप्रत्ययान्तहीधातुप्रयोगे ऽपादानत्वं कर्मसंज्ञायाश्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि लकारः सार्थेन त्यज्यते देवदत्त इत्यर्थः । धावत इति । क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशात् धावनस्याविवक्षणाद्वा ध्रुवत्वं बोद्धयम् । जुगुप्सेत्यादि । जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानं तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां सम्बन्धित्वेन च विवक्षाया पापस्य जुगुप्सत इति षष्ठी भवत्येव सत्यभिधाने । एवमुत्तरसूत्रेष्वपि बोद्धयम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धयेद वार्त्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये ।

भय भीत्राणत्रास्तदाह । भयार्थानामिति । हेतुतृतीयापवादो ऽयम् । अरण्ये इति । भयाद्यर्थानां योगे कारकमपादानमित्यर्थे ऽविशेषात्सर्वसंज्ञापवादः स्यादिति भावः ।

पराजे । असोढो ग्लानिविषयः, एवञ्च पराजेरकर्मकत्वे उदाहरणत्व तदाह । ग्लायतीत्यर्थ इति । अभिभवतीति । तिरस्कारानुकूलोव्यापारो धात्वर्थ इति भावः ।

प्रवृत्तिविघात इति । भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्या-

---

न्देस्त्विति * । * कर्मप्रत्ययान्तेति * । अत एव देवदत्त सार्थञ्जहातीत्यत्र नापादानत्वम् । सार्थस्य ज्ञापकेनापादानत्वेपि कर्मसंज्ञामुपपादयति । * कर्मसंज्ञायामिति । धावत इत्यत्रोभयमतेऽप्यपादानत्वमुपपादयति । * क्रियाविष्टेस्यति * ।

भीत्रार्थेति सूत्रे भयहेतुरित्यस्योपादानादाह । * हेतुतृतीयेति * ।

* असोढो ग्लानिविषय इति * । अत्रासोढपदार्थविशेषणीभूता ग्लानिरसहनम् । किञ्चिद्विषयकदुरुद्धरत्वज्ञानमिति यावत् । असोढ इत्यत्र कर्मणि क्त । कर्म चात्र ग्लानिविषय एव स चाध्ययनादि । परापूर्वको जीधातुश्च कचिदभिभवे वर्त्तते । यथा शत्रून्पराजयते इति । इह त्वसोढग्रहणान्न्यूनीभावार्थक । न्यूनीभावश्च शक्तिवैकल्यादिरूप । अध्ययनाच्च पठ्यधाम्भातायामिद य चाम् । ग्लायतीत्यस्य शक्तिविकलो भवतीत्यर्थ । धातोरकर्मकत्वे एवैतत्सूत्रोदाहरणम् । यदा त्वय सकर्मकस्तदा प्रत्युदाहरणम् । उदाहरणे पराजयत इत्य[illegible] कालो न विवक्षित । तेनाध्ययनात्पराजेष्यते इत्यपि सिद्धम् ।

यवेभ्यो गा वारयति कूपादन्ध वारयति दुराचारादनुकम्प्य वारयतीत्यादिसकलसाधारण्येन वारयतेरर्थमाह । * भक्षणेत्यादिना * । आदिनाऽनुप्रवेशानुकूलव्यापाराभावानुकूलव्यापारसङ्ग्रह । * धात्वर्थफलाश्रय इति * । प्रधा-

ति । नटजन्यं श्रवणमिति बोधात् कारकत्व नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम् ।

जनिक ॥ प्रकृतिरुपादानकरण ब्रह्म च मायाशबलञ्जगदुपादानकारणम् । वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्धव्यम् । विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम् । तत्र हि गुणे ऽस्त्रियामिति प्रायिकं बाहुल्कं प्रकृतेस्तनुरष्टेरिति वार्त्तिकप्रयोगात् ।

भुवः । प्रभवनं प्रथमप्रकाशः प्रग्रहणात् तदधिकरणमपादानमित्यर्थः ।

'प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे ।
ज्ञानस्य चादिमस्थान' इति विश्वः ॥

प्रकाशत इत्यस्य योगे तु न प्रथमप्रकाशार्थत्वाभावात्तदाह तत्र प्रकाशतइत्यर्थः इति । ल्यब्लोपइति । ल्यबन्तशब्दाज्ञाने इत्यर्थः । कर्मणीति । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । प्रासादादिति । फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया । आजघ्ने विषमविलोचनस्य वक्ष इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी, वक्ष इत्यस्य प्राप्येति शेषः । गम्यमानापीति । विशिष्य तद्वाचकपदानुपात्तापीत्यर्थः । कस्मात्त्वमित्यादौ फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया ।

---

* नटजन्यमिति * । क्व चित्तु गाथामिति पाठ स चायुक्त । षष्ठ्यन्तार्थस्य स्यान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्य क्लृप्ततया कारकत्वानुपादनात् ।

* प्रकृतिरुपादानकारणमिति * । अस्मिन्नेवार्थे प्रकृतिशब्दस्य लोकप्रसिद्धे । मूलासगतिपरिहारायाह । * वृत्ताविति । * मायेति * । वेदान्तसिद्धान्तात् । ननु ब्रह्मशब्दार्थस्य गुणत्वाभावात्कथ विभाषेत्यस्य प्राप्तिरत आह । * तत्र हीति * ।

भुव प्रभव इति सूत्रघटकप्रभवशब्देऽधिकरणेऽथित्याशयेनाह । * तदधिकरणमिति * । * जन्महेतौ * । जन्मभूमौ । अतिप्रसङ्ग वारयति । * । प्रकाशत इति * । सूत्रे प्रशब्दोपादानात्प्रथमप्रकाशार्थकधातुयोग एवेदमिति भाव । ननु ल्यब्लोपविधायकशास्त्रस्यानुपलम्भाल्ल्यब्लोप इत्यनुपपन्नमत आह । * ल्यबन्तशब्दाज्ञानइति * । * बोधप्रक्रियेति * । वाक्यैकदेशन्यायेनेत्यर्थ । नन्वाजघ्न इत्यत्र यथाश्रुतान्वयेऽकर्मकत्वस्याङ्कर्मकत्वयोरभावेन कथमात्मनेपदमत आह । * आजघ्न इति । * कर्मण * । विषमविलोचनशब्दार्थस्य । वक्ष इत्यस्यानन्वितत्व वारयति । * प्राप्येति शेष इति * । एवञ्चात्र प्राप्येतिशब्दाध्याहारेण ल्यबन्त शब्दज्ञानसत्त्वान्न ल्यब्लोप इति पञ्चम्यापत्तिरितिभाव । * इत्यत्रेव * । वाक्यैकदेशन्यायेनेत्यादि ।

पार इत्यर्थः । ईप्सित इति । वारणार्थधात्वर्थफलाश्रय इत्यर्थः । उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वाधवानामपादानत्वम् ईप्सित इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपः, कर्मलक्षणे ह तमपग्रहणात् प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः ।

अन्तर्धौ । अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थितिरूपस्तद्घटक यत्कर्तृकदर्शनाभावमिच्छति तदपादानमित्यर्थस्तत्फलितमाह । व्यवधाने सतीति । येनेत्यत्र कर्तृकर्मणोरिति षष्ठी न सौत्रत्वात् । आत्मन इति मत्यासत्तिलभ्यम् । मातुर्निलीयत इत्यादावाक्षेपलभ्येच्छा बोद्ध्या । चोरानिति । चोरकर्मकदर्शनेच्छाभाव इति शङ्काऽर्थः स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः । इच्छामात्रस्याक्षेपलभ्यत्वे इयविशिष्टस्याक्षेपलभ्यत्वेऽपि स्यादिति भावः । प्रकृते नान्तर्द्धिरिति दोषः । येनेत्यस्याभावे हि स्वकर्मकदर्शनाभाव य इच्छति इत्यर्थे कर्तुरेव स्यादतस्तत् । इच्छतिग्रहणं किमिति । अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति भावः । सत्यपीति । अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः । अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः ।

नियमेति । उपयोगशब्दस्य तत्रैव रूढेर्नियमो ब्रह्मचर्यादिः । तदन्ये-

---

नोभूतव्यापारप्रयोज्याभावप्रतियोगि यापारजन्यभक्षणसंयोगाद्याश्रय इत्यर्थः ।* अप्रधानेति * । अभावप्रतियोगिभूत । यत्र च तद्व्यापारजन्यफलाश्रयत्वादीप्सितपदाभिधेयत्व यवादे । ईप्सित इत्यत्र कर्मणि क्त । आश्रयमात्रस्य कर्तुः । ननु कर्मसंज्ञापत्तिरित आह ।*कर्मलक्षण इति*। कर्तुरीप्सिततममित्यत्रेत्यर्थ ॥

* तद्घटकमिति * । प्रत्यासत्त्याऽयमेव येनेत्यत्र शब्दार्थ । स चान्तर्द्धिर्यद्यपि इच्छतिशब्दघटकस्याताधकर्तृनिष्ठा तथापि वृद्धे शारीतिवदन्तर्द्धाविति सप्तमी । उपपदविभक्तेरिति न्यायात् । न तु सति सप्तमी । ननु मातुर्निलीयते इत्याद्युदाहरणे व्यवहितदेशस्थितेर्धातुना प्रतिपादनेपि इच्छाया कथ लाभ इत्यत आह । * आक्षेपलभ्येति * । इच्छाया प्रयत्नप्रयोजकत्वादाक्षेप । ननु दिदृक्षत इत्यत्र सन्नन्तादर्शनेच्छालाभेऽपि येनादर्शनमित्यर्थालाभात्कथमपादानत्वप्राप्तिरत आह । * इच्छामात्रस्येति * । विशिष्टस्येति * । चोरकर्तृकस्वकर्मदर्शनाभावरूपविशिष्टस्येत्यर्थं । * य इच्छतीत्यर्थ इति * । इच्छतिशब्दन कर्तृरूपस्थितत्वात्कर्तृलाभ इति भाव ।

उपयोगशब्दस्य प्रयोजनादिपरत्वभ्रमनिरासायाह । * उपयोगशब्दस्येति *।

ति। नटजन्य श्रवणमिति बोधात् कारकत्व नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम्।

जनिक ॥ प्रकृतिरुपादानकरणं ब्रह्म च मायाशबलञ्जगदुपादानकारणम्। वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्धव्यम्। विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम्। तत्र हि गुणे ऽस्त्रियामिति प्रायिकं बाहुलक प्रकृतेस्तनुरष्टेरिति वार्त्तिकप्रयोगात्।

भुवः। प्रभवन प्रथमप्रकाशः प्रग्रहणात् तदधिकरणमपादानमित्यर्थः।

'प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे।
ज्ञानस्य चादिमस्थान' इति विश्वः॥

प्रकाशत इत्यस्य योगे तु न प्रथमप्रकाशार्थत्वाभावात्तदाह तत्र प्रकाशतइत्यर्थः इति। ल्यब्लोपइति। ल्यबन्तशब्दाज्ञाने इत्यर्थः। कर्मणीति। प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः। प्रासादादिति। फलेभ्यो यातीत्यत्रैव बोधप्रक्रिया। आजघ्ने विषमविलोचनस्य वक्ष इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी, वक्ष इत्यस्य प्राप्येति शेषः। गम्यमानापीति। विशिष्य तद्वाचकपदानुपात्तापीत्यर्थः। कस्मात्त्वमित्यादौ फलेभ्यो यातीत्यत्रैव बोधप्रक्रिया।

---

* नटजन्यमिति *। क्व चित्तु गाथामिति पाठ स चायुक्त। पञ्चम्यन्तार्थस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्य क्लृप्ततया कारकत्वानुपादनात्।

* प्रकृतिरुपादानकारणमिति *। अस्मिन्नेवार्थे प्रकृतिशब्दस्य लोकप्रसिद्धे। मूलासगतिपरिहारायाह। * वृत्ताविति। *मायेति*। वेदान्तसिद्धान्तात्। ननु प्रकृतिशब्दार्थस्य गुणत्वाभावात्कथ विभाषेत्यस्य प्राप्तिरत आह। * तत्र हीति *।

भुव प्रभव इति सूत्रघटकप्रभवशब्देऽधिकरणेऽपीत्याशयेनाह। * तदधिकरणमिति *।*जन्महेतौ *। जन्मभूमौ। अतिप्रसङ्ग वारयति। *। प्रकाशत इति *। सूत्रे प्रशब्दोपादानात्प्रथमप्रकाशार्थकधातुयोग एवेदमिति भाव। ननु ल्यब्लोपविधायकशास्त्रस्यानुपलम्भाल्ल्यब्लोप इत्यनुपपन्नमत आह। * ल्यबन्तशब्दाज्ञानइति *। * बोधप्रक्रियेति*।वाक्यैकदेशन्यायेनेत्यर्थ। नन्वाजघ्न इत्यत्र यथाश्रुतान्वयेऽकर्मकत्वस्याङ्गकर्मकत्वयोरभावेन कथमात्मनेपदमत आह।* आजघ्न इति। * कर्मण *। विषमविलोचनशब्दार्थस्य। वक्ष इत्यस्यानन्वितत्व वारयति। * प्राप्येति शेष इति *। एवञ्चात्र प्राप्येतिशब्दाध्याहारेण ल्यबन्तशब्दज्ञानसत्त्वान्न ल्यब्लोप इति पञ्चम्यापत्तिरितिभाव। * इत्यत्रैव *। वाक्यैकदेशन्यायेनेत्यादि।

अन्येत्यर्थेति । तदर्थश्च भेदवान् अत एव घटात् भिन्न इत्यादिसिद्धिः। परे तु ध्रुवमिति सूत्रे अपायशब्देन भेदस्यापि ग्रहणं पञ्चमी विभक्ते इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् भिदिर्विदारण इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात्, अत एव घटात् भेद इति सिद्धं, तद्योगेऽप्यपादानत्वात् तस्यैव सम्बन्धत्वेन विवक्षायां षष्ठीयो भेद इत्यपि, अन्यशब्दार्थस्याक्रियत्वात् तद्योगे एतद्विधानम्, अत एव घटः पटो नेत्यादौ न पञ्चमी, नञो भेदवदर्थकत्वेऽपि अक्रियान्वयात् घटादेरु इत्याद्यस्माच्चैव, अत एवेतरग्रहणञ्चरितार्थम्, अत एव भाष्येऽर्थग्रहणं नोक्तमित्याहुः। आराद्दूरसमीपयोः। एतद्योगे दूरान्तिकार्थैरिति मानम्। नन्वयं देशवाची न दिक्शब्दः, अत आह, दिशि दृष्ट इति। शब्दग्रहणादिति भावः। ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते नैन्द्रीकौबेर्यादयो व्याख्यानात्। अवयववाचीति। तद्वाचिपूर्वादियोगेऽप्यवयववाचकाच्चेत्यर्थः। ज्ञापकस्य सजातीयापेक्षत्वात्। अत एवास्मादयं पूर्वो भागः कायस्येति सिद्धम्। अवयवे पूर्वत्वम् अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोध्यम्। अञ्चूत्तरपदस्येति। दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं तेन सध्र्यङ् इत्याद्यर्थं तच्चेति भावः। बाधितुमिति। परत्वात्प्राप्तमित्यादि। यदि तु षष्ठ्यतसर्थेत्यत्र प्रत्ययग्रहणाच्चस्य श्रूयमाणप्रत्ययपक्ष एव प्रवृत्तिस्तदेद

---

* अत एव * । अन्यशब्दस्य भेदविशिष्टार्थकत्वादेव । मूलोक्तरीत्याऽन्यशब्दस्यार्थपरत्वेन व्याख्यानस्य प्रयोजनमुक्त्वा स्वमतमाह । * परे त्विति * । भेदस्यापीति * । अपिना पूर्वोक्तार्थसङ्ग्रहः । ननु भेदस्य धात्वर्थत्वमत आह । * भिदिरिति * । * अत एव * । तस्यापि तस्मिन्सूत्रेऽपायशब्देन ग्रहणादेव । * तस्य * । नञर्थभेदस्यैव । ननु मूलोक्तरीत्या घटादेक इति भवति । अन्यशब्दस्यार्थपरत्वाभावे तन्न सिध्येदत आह । * घटादेकेति । * अत एव * । अर्थपरत्वाभावादेव । * अत एव * । घटाद्भिन्न इत्यादौ ध्रुवमपाय इति सूत्रेणैव पञ्चम्युपपत्तेरेव । ननु चैत्रात्पूर्वं इत्यत्र पूर्वशब्दः कालवाचको न दिक्शब्द इति कथम्पञ्चमीत्याशयेनावतारयति । * नन्वयमिति * । नन्वेवमैन्द्र्यादिशब्दयोगेऽपि प्राप्नोतीत्यत आह । * ते चेति * । * व्याख्यानादिति * । तेषां यत्र योगस्तत्र पञ्चम्यदर्शनमूलकाद् व्याख्यानादित्यर्थः । * तद्वाचीति * । अवयववाचीत्यर्थः । * अत एव * । अवयववाचकादेव ज्ञापकेन पञ्चम्यभावस्वीकारादेव । * अस्मादिति * । भागविशेषादित्यर्थः । अत्र पूर्वशब्दः पूर्वकालावच्छिन्नपरः । * तस्य * । अञ्चूत्तरपदस्य । * प्रत्ययग्रहणादिति * । प्रत्ययशब्द-

मास्त्वित्ति तत्त्वमिति भाष्ये स्पष्टम् । दक्षिणा ग्रामादिति । दक्षिणस्यान्दिशीत्यर्थे दक्षिणादाजिति आहि च दूरे इत्याजाही पष्ठ्यतसर्थेत्यस्यापवादः। प्रभृतियोग इति । प्रभृत्यर्थयोगइत्यर्थः । अपादाने पञ्चमीति सूत्रे यतश्चाध्वकालनिर्माण ततः पञ्चमी कार्तिक्या आग्रहायणी मास इति वार्तिकप्रत्याख्यानायेदमत्र प्रयोक्तव्य सप्त प्रयुज्यते कार्तिक्याः प्रभृत्याग्राहयणी मासइति भाष्येण प्रभृतिशब्दाभावे ऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेन प्रभृत्यर्थयोगे पञ्चमीति वचनसत्त्वस्य भगवता बोधितत्वाद्, अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः । एवञ्च तदर्थकारभ्यशब्दयोगे ऽपि पञ्चमी यथा अवीचिमारभ्य मेरुपृष्ठपर्यन्त भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोन्तरिक्षलोक इति पातञ्जलभाष्यप्रयोगे प्रभृतीत्यस्य चावधिमादायेत्यर्थः, आरभ्येत्यस्यैतदर्थकतापि, अवधौ पञ्चम्यन्तार्थस्याभेदेनान्वयः । तद्विशेषणत्वे ऽपि न द्वितीया, प्रभृत्यर्थयोगे पञ्चमीति भाष्यकृद्बोधितवचनात् आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्येत्यादौ द्वितीया । वस्तुतो ऽवधेरवन्तस्य समभिव्याहृतपदार्थनिरूपित गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा । कार्तिकीतो वियुक्ते अत एव कार्तिक्यवधिके आग्रहायणीघटिते

---

स्य प्रत्यायकपरतया श्रूयमाणत्वलाभ । श्रूयमाण एव हि प्रत्यायको भवति । * भाष्ये स्पष्टमिति * । तत्र ह्येवमुक्तम् । अथ प्रत्ययग्रहणङ्किमर्थम् । इह मा भूत्। प्राग् ग्रामात् । प्रत्यग् ग्रामात् । अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्तम् तत्रान्यतरच्छक्यमयक्तु मिति । कार्त्तिक्या प्रभृतीति भाष्यप्रयोगात्प्रभृतिशब्दयोगे पञ्चमीति भ्रमनिवारणायाह । * प्रभृत्यर्थेति * । * अन्यथा * । प्रभृतिशब्दयोग एव पञ्चम्यङ्गीकारे । एव सति यत्फलितन्तदाह । * एवञ्चेति * । प्रभृत्यर्थयोगे पञ्चमीत्यर्थस्वीकारे च॥ नन्वेवमवीचीमारभ्येत्यत्रापि पञ्चमी कुतो नेत्यतआह। * अवीचीमारभ्येति * । प्रभृतीत्यारभ्येत्यर्थकमव्ययम् । * एतदर्थकतापि * । अपिना गृहीत्वेत्यर्थकताया सङ्ग्रह । मेरुपृष्ठादारभ्येतिवाक्यस्योपपत्तिमाह । नन्ववीचिमारभ्येत्यस्य कथमुपपत्तिरित्यत आह । * आरभ्येत्यस्येति * । अवीचिर्नरकविशेष । * इत्यादाविति * । अत्रादिना प्रात कालमारभ्य पठतीत्यादिसङ्ग्रह । ज्ञापन विनापि कार्त्तिक्या प्रभृतीतिप्रयोगोपपत्तिमाह। * वस्तुत इति * । समभिव्याहृतपदार्थो मासादि । * गम्यमानक्रियापेक्षमिति * । गम्यमाना या क्रिया गमनादिरूपा तदपेक्षमित्यर्थ । तदेवोपपादयति । * कार्त्तिकीत इति * । नन्वपपरिबहिरञ्चव इतिसूत्रस्थपञ्चम्याइत्यस्यापादियोगे वारितार्थ्यात्पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यस्यानुपपत्तिरत आह । *यस्मा

मासे कार्तिकीमादाय गते आग्रहायणीति बोधः । भवात्प्रभृति आरभ्य वेत्यत्र भवकालाद्विभक्ते अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्यमित्यलं विस्तरेण । ज्ञापकादिति । पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः । अय भावः । परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव । तद्योगे पञ्चम्यपाङ्परिभिरिति वचनात् । लक्षणप्रतिपदोक्तपरिभाषया ऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धं समास, तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समासः इति व्यर्थं तत् बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापनार्थमिति । इदमपपरिबहिरिति सूत्रे भाष्ये स्पष्टम् । पञ्चमीति । सापीत्यर्थः । तेन करस्य करभो बहिरिति सिद्धम् ॥

प्रतिनिधि ॥ यस्मादिति पञ्चम्यर्थः सम्बन्ध । अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ कर्मकिभावल्युडन्तौ । प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः । प्रतिनिधिः सदृशः, प्रतिदानम् दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम् ।

कर्तृवर्जितमिति । कर्तृसञ्ज्ञारहितमित्यर्थः । ऋणत्व वस्तुसन्निमित्त न तु तृतीयावाच्यकोटिमनिष्टम् । हेतुभूतमिति । तेन करणत्वविवक्षायान्तृतीयैवेति भावः ॥

---

ध इति * । सिद्धं समास इति * । एवञ्च पञ्चम्या इत्यस्याभावेऽपि तृतीयान्तस्य सुपेत्यस्यानुवृत्त्यैवेष्टसिद्धिरित्यर्थ । अञ्चूत्तरपदस्य पञ्चम्यन्तेन, समासार्थमपि न पञ्चम्या इतीत्याह । * तत्साहचर्यादिति * । पञ्चम्या अपि ज्ञापनार्थमिति* । एतेन पञ्चम्येत्यस्यादियोगे चारितार्थ्यात्सामर्थ्येनासुब तेन पञ्चम्यन्तेन वा समासोऽस्त्विति परास्तम् । ननु ज्ञापकेन बहि शब्देन योगे पञ्चमी चेत्स्वीक्रियते तदा पञ्चमीप्रकरणे अन्यारादितरर्त्तेइति सूत्र एव बहि शब्दपाठ एवोचित इत्यत आह । * सापीति * । अपिना षष्ठीसमुच्चय ।

* सम्बन्ध * । प्रतियोगित्वादिरूप ।

* अस्मादेवेति * । यस्मादितिनिपातनादित्यर्थ । मूले एतत्सूत्रवृत्तौ बहुवचनप्रयोगभेदात् । * दत्तातुल्येति * । दत्तस्यैव प्रत्यर्पण सर्वत्र न सम्भवतीत्येवमुक्ति । कर्तृवर्जितमित्यस्य कर्तृत्वावच्छिन्नप्रतियोगिताकभेदवदित्यर्थ प्रतीयते स चासङ्गत ।

ज्ञातपदार्थस्यापि स्वस्वरूपधारणात्मकव्यापाराश्रयत्वेन कर्तृत्वादत आह । * कर्तृसञ्ज्ञेति * । एवञ्च कर्तृसञ्ज्ञाया क्रियायोग एव प्रवृत्त्या ज्ञातासिद्ध इत्यत्र

विभाषागुणे ॥ योगविभागादिति । बाहुलके प्रकृतेस्तनुदृष्टेरित्युक्तवार्तिकप्रयोगाद् गुणे ऽस्त्रियामिति प्रायिकमित्यन्ये । धूमादिति । धूमपद स्वज्ञाने ऽग्निमत्पद स्वज्ञानविषये लाक्षणिक बोध्यम् । समुच्चयार्थमिति । स्पष्टश्चेद भाष्ये । एतेनान्यतरस्यामङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम् ।

---

या बन्धनक्रिया तद्योगनिमित्तककर्तृसंज्ञाभावस्य तत्र सत्त्वाददोष । हेतुतृतीयापवादभूतेयम्पञ्चमी । न तु तृतीयाबाध्यकोटिनिविष्टमिति । अत एव ऋणत्वेन शाब्दबोधविषयत्वञ्च । प्रकृतसूत्रोदाहरणे शताद्बद्ध इत्यत्र शतस्य हेतुत्वविवक्षैव न तु कर्तृसंज्ञा । प्रत्युदाहरणे शतेन बन्धित इत्यत्र तत्प्रयोजको हेतुश्चेतिसूत्रेण शतस्य हेतुसंज्ञा कर्तृसंज्ञा च । ,

विभाषा गुणेऽस्त्रियामितिसूत्रे योगविभागस्य पदमञ्जर्युक्तस्यापि भाष्येऽदर्शनादाह । * बाहुलकमिति * । इत्युक्तेति * । अस्य उणादय इति सूत्रभाष्य इत्यादि । प्रकृतसूत्रोदाहरणे जाड्यादित्यत्र जाड्यस्यान्त करणाविशेषावच्छिन्न शरीरनिष्ठधर्मस्य बन्धनक्रियाकारणत्व सम्भवति । गुणत्वञ्च तस्य संज्ञाक्रियाजातिभिन्नत्वात् सम्भवति । धूमादग्निमानित्यत्र धूमपदस्य जात्याश्रयवाचकतया कथ गुणत्वम् । कथञ्चाग्निमन्निरूपित हेतुत्वन्धूमपदार्थस्य तत्कारणत्वाभावादत आह । * धूमपद स्वज्ञान इति * । एवञ्च धूमज्ञानस्याग्निज्ञानेऽनुमितिरूपे कारणताया प्रसिद्धत्वान्न सूत्रोदाहरणत्वानुपपत्तिरिति भाव । * स्पष्टश्चेदमिति * । न चान्यतरस्याङ्ग्रहणस्य विकल्पार्थत्वेपि तृतीयाया अभावे प्रकृतसूत्रे पञ्चमीद्वितीययो अनुवर्त्तनादेव तयो पर्यायेण प्रवृत्तिर्भविष्यतीति किं समुच्चयार्थत्ववर्णनेनेति वाच्यम् । पृथगादिषु पञ्चमीविधानम् । पृथगादिषु पञ्चमीविधेया । पृथग्देवदत्तात् । किङ्कारणम् । न प्रकृतम्पञ्चमीग्रहणमनुवर्त्तते क प्रकृतम् । अपादाने पञ्चमीति । अनधिकारात् । अनधिकार स । अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्य । दक्षिणेन ग्रामन्दक्षिणतो ग्रामस्य । एवन्तर्हि अन्यतरस्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीति भाष्यदर्शनेन समुच्चयार्थत्ववर्णनात् । निपातानामनेकार्थत्वात्समुच्चयार्थं वञ्च नानुपपन्नम् । न चैवम्पञ्चमीद्वितीये अनुवर्त्तेते इति मूले यदभिहितन्तदसङ्गतिरिति वाच्यम् । अनुवृत्त्यभिधानस्य तद्भाष्योत्तरभाष्यग्रन्थेनानुवृत्तिरप्यभिहितेत्यभिप्रायादिति न सन्दर्भविरोध । * एतेन * । उक्तभाष्यविरोधेन । अन्यतरस्यामित्यस्य शब्दस्य तदर्थकत्वे द्वयोरन्यतरस्यामित्यत्राप्ययमेवार्थो वाच्यस्स चासङ्गत । अभावस्य विधेयप्रतियोगिकस्य तत्रानुपस्थितत्वेन तत्रान्यतरशब्देन भावस्याभावस्य च ग्रहणासम्भवात्तन्मते भाष्यान्तरविरोधोऽपीत्याह । * विकल्पविषय इति * ।

विकल्पविषयेऽप्यर्थासङ्गतिश्च । परे तु द्वितीयासमुच्चयेन फल विना चाव् विना वर्षमित्यादौ कृतेशब्दयोगइव ततोऽन्यत्रापि दृश्यतइत्यनेन द्वितीयासिद्धेरत एव भाष्ये द्वितीयासमुच्चयो नोक्तः । पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणतो ग्रामस्येति प्रकृतसूत्रस्य भाष्येण एनपा द्वितीयेति सूत्र षष्ठ्यतसर्थेत्यतः प्रागिति च सूचितम्, अन्यथा सौत्रक्रमत्यागे न्यायविपरीतपूर्वनिपातकरणे च वीजानापत्तिरत एव करणे चेति सूत्रे द्वितीयासमुच्चयो नेत्याहुः ॥

करणे च ॥ करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम् । चकारः तृतीयान्यतरस्यामित्यनुकर्षणार्थः । षष्ठी गापोष्टगितिवत् । अद्रव्येति । द्रव्यभिन्नवचनेभ्य इत्यर्थः । द्रव्यपदेनात्र सर्वनामपरामर्शयोग्य लिङ्गनिरूपितविशेष्य ग्रा । स्तोकशब्दो यद्धर्मावेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः, स च धर्मो ऽल्पादिशब्दप्रवृत्तिनिमित्तमेव । शुक्लादिवदेते धर्मवचना अपि करणत्वञ्च परम्परया, परम्परया ईदृशार्थ एव च साधुत्वं सूत्रबलादिति स्पष्टमल्लुगुत्तरपदइत्यत्र कैयटे । करणे किम् । स्तोकम्पचति । असत्व

---

प्राचीनमतं दूषयन्स्वसिद्धान्तमाह । * परे त्विति * । * विना वर्षमिति * । कोमौ पातितौ हुमायिति शेष । * द्वितीयासमुच्चयो नोक्त इति * । अन्यतरस्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीत्येव हि भाष्ये उक्तम् । अनेन द्वितीयाया समुच्चयकथनं दूषयित्वाऽनुवृत्तिकथनमप्यसङ्गतमित्याह । * पञ्चम्या अधिकार इति * । * प्रागिति चेति * । एवञ्च षष्ठ्यतसर्थेतिसूत्रे द्वितीयाया असम्बन्धवत्प्रकृतसूत्रेऽपि सम्बन्धो न भविष्यतीति ध्वनितम् । * अत एव * । प्रकृतसूत्रे तदसम्बन्धादेव । यद्यत्र द्वितीयासमुच्चयः स्यात्तदा करणे चेतिसूत्रेऽपि पञ्चमीसमुच्चयार्थमप्रकृतान्यतरस्याङ्ग्रहणस्य सम्बन्धावश्यकत्वेन तथापि द्वितीयासमुच्चयः स्यादिति भाव ।

करणे च स्तोकेतिसूत्रे कतिपयस्येति पञ्चम्युपपत्तिः । प्रत्ययविधौ पञ्चम्यायुक्तत्वादत आह । * षष्ठी गापोष्टगितिवदिति * । अद्रव्यवचनेभ्य इत्यस्य द्रव्यवचनभिन्नेभ्य इति नार्थः स्तोकादिशब्दानां शुक्लादिशब्दवत् गुणे गुणिनि वाचकतया द्रव्यवचनभिन्नत्वाभावादत आह । * द्रव्यभिन्नवचनेभ्य इति * । एवञ्च यदा धर्ममात्रपराणां स्तोकादिशब्दानाम्प्रयोगस्तदोदाहरणम् । धर्मिपरत्वे प्रत्युदाहरणम् । ननु धर्मवचनत्वे करणत्वमनुपपन्नमत आह । * करणत्वञ्चेति * । ननु स्तोकम्पचतीत्यत्र धर्मिपरत्वात्कथं द्रव्यवचनत्वमत आह । * असत्त्वभूतेति * । ननु पच्धात्वर्थफलं विक्लित्तिस्सा सा विक्लित्तिरित्येव रीत्या सर्वनाम्ना परामृश्यत एवेति कथमसत्त्वमिति चेन्न । विक्लित्तिशब्देन यदा सोऽर्थ उच्यते

रूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्त्ववचनत्वमिति दिक्॥

दूरान्तिका ॥ अत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामित्यतः समुच्चयार्थकान्यतरस्यां ग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्यानादित्याह चादित्यादि । प्रातिपदिकार्थमात्रे इति । व्याख्यानादिति भावः ॥

इति पञ्चमी ॥

षष्ठी शेषे ॥ शेष उक्तादन्यः स च तत्तद्रूपेण स्वत्वादि' । सम्बन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वं, तत्रापि तन्मूलके सम्बन्धे विवक्षिते षष्ठी तदाह कारक

---

तदा तस्य सर्वनाम्ना परामर्शेऽपि धातुप्रतिपाद्यत्वावस्थायान्तस्य सर्वनाम्ना परामर्शाभावात् । विकल्पशब्दार्थविकल्पस्य वाशब्देन प्रतिपाद्यत्वावस्थायामसत्त्ववत् ।

ननु व्यवहितसमुच्चय प्रागेव निरस्त इति कथमत्र तृतीयार्थत्वकथनमत आह । * व्याख्यानादिति * । व्यवहितसमुच्चयार्थकचकारोपादानमूलकव्याख्यानादित्यर्थः । ननु दूरान्तिकार्थेभ्यो विहितानां द्वितीयातृतीयापञ्चमीनाम्प्रातिपदिकार्थमात्रे प्रवृत्तौ किम्मानमत आह । * व्याख्यानादिति * । दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति सूत्रानन्तरन्तेभ्य द्वितीया चेत्येव सिद्धे दूरान्तिकार्थेभ्य इत्युपादानन्तत्सूत्रविहितविभक्तीनां पूर्वविहिताभ्यो वैलक्षण्यसूचनाय । एवञ्च विशिष्यार्थानुक्तेरनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यनेन ताः प्रातिपदिकार्थमात्रे भवन्तीति लभ्यते इति व्याख्यानादित्यर्थः ॥

इति पञ्चमीविवरणम् ।

षष्ठी शेष इति सूत्रे यच्छेषपदन्तत्र शेष इत्युच्यते कः शेषः कर्मादिभ्यो येऽन्येऽर्थाः स शेष इति भाष्ये उक्तन्तन्मूलकव्याख्यानादाह ।*उक्तादन्य इति*। तत्तद्रूपेण स्वत्वत्वादिरूपेण । * सम्बन्धत्वेन रूपेणचेति * । वाच्य इति शेषः । राज्ञः पुरुषोऽस्तीति वाक्यजन्यशाब्दबोधानन्तरम्पुरुषो राजस्वत्ववान्न वेति सन्देहो न भवतीति यथा विशेषरूपेण वाच्यता कल्प्यते । तथा राजसम्बन्धी न वेति च सन्देहानुत्पत्तेः सामान्येन सम्बन्धत्वेन रूपेण च वाच्यता कल्प्यते । * तन्मूलक इति * । कर्तृत्वनिरूपकक्रियात्वमथ वा क्रियानिरूपितकर्तृत्वम्मूलं यस्य तस्मिन्विवक्षित इत्यर्थः । स्वस्वामिनोर्भावः स्वत्वं स्वामित्वं वा सम्बन्धः षष्ठ्यर्थः । इति प्रतीयते परन्तु तस्य तत्तद्रूपेण षष्ठीवाच्यता न युक्ता । राज्ञः पुरुष इत्यत्र षष्ठ्यर्थः स्वामित्वञ्चेत्तस्याधेयतासम्बन्धेनराजसम्बन्धित्वेऽपि पु

इति । स्वस्वामिभावादिरिति । स्वत्वस्वामित्वसमूहः सम्बन्ध इत्यन्यत्र वि-
स्तरः । एवं सर्वत्र बोध्यम्, षष्ठ्यर्थस्य संसर्गविधयैव भानं कारकविभक्ति-
भ्यो ऽपि क्रियाकारकभावसंसर्गविषया भानमित्युक्तम् । सम्बन्धमात्रविव
क्षायामिति । सम्बन्धत्वेन भाने इत्यर्थः । यद्वा क्रियाकारकभावमूलकसम्बन्ध-

---

रूपावृत्तित्वात् । स्वनिरूपितस्वत्वाश्रयत्वसम्बन्धेन स्वामित्वं पुरुषेऽप्यस्तीति
तु न तस्य वृत्त्यनियामकतया पुरुषे वृत्तितानियामकत्वस्य वक्तुमशक्यत्वात्
यदि तु स्वत्वं सम्बन्धस्तदा तस्य राजवृत्तित्वाभावेन सम्बन्धत्वं वक्तुमशक्य
म् । स्वनिरूपितस्वामित्वसम्बन्धेन राजवृत्तित्वन्तु वक्तुमशक्यम् । तस्य वृत्त्य
नियामकत्वादत आह । * स्वत्वस्वामित्वसमूह इति * । * अन्यत्र * । मञ्जू
षादौ । तत्र सम्बन्धो हि सम्बन्धिभ्यामिन्न उभयसम्बन्धीत्युक्तम् । एवं सर्वत्र ।
अवयवावयविभावजन्यजनकभावादौ । * संसर्गविधयैवेति * । अनेन प्रकारेण
षष्ठ्यर्थस्य प्रकारत्वं व्यवच्छिद्यते । अत एव प्रकृतसूत्रभाष्ये राज्ञः पुरुष इत्यत्र
राजा विशेषणम्पुरुषो विशेष्य इत्युक्तमन्यथा सम्बन्धं विशेष्यतया विशेषणत
या वा ब्रूयात् एतदेकवाक्यतया क्रिया कारकभावसम्बन्धस्य बाधिका द्वितीये
ति भाष्याशयादाह । * कारकविभक्तिभ्य इति * । प्राचीनमतेनाह । * सम्बन्धत्वेन
भान इति * । सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुताया
वा क्रियायामभिधीयते इतिहर्युक्तेराह । * यद्वेति * । कारकाणां कारकपदं
कर्मत्वादिशक्तिपरम् । तन्मूलकसम्बन्धश्च विशेषणविशेष्यभाव एव । इयञ्च
षष्ठी विशेषणत्वेन विवक्षितादेव । न च सम्बन्धे षष्ठी सम्बन्धश्च द्विष्ठ इति सा
विशेषणत्वेन विवक्षितादेव भवति न विशेष्यत्वेन विवक्षितादित्यत्र किं विनि-
गमकमिति वाच्यम् । विशेषणवाचकस्य राज्ञ इत्यादेः पदस्य केवलस्य प्रयोगे
ऽपि विशेषणत्वं स्वसामान्यनिरूपितम्प्रतीयते तच्च विशेषणस्य सम्बन्धसाका-
ङ्क्षमिति विशेषणादेव सा । तदुक्तम्भाष्ये । षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः ।
षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः । षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधो
वक्तव्य इति । तत्र षष्ठीम्प्रतिषिध्य प्रथमा विधेया । राज्ञः पुरुष इति । उक्तम्पूर्वे-
ण । किमुक्तम् वा वाक्यार्थत्वादिति । यदत्राधिक्यं वाक्यार्थः सः । अत्र कैयटः ।
राज्ञ इत्येतत्पदसन्निधाने पुरुषस्य सम्बन्धित्वम्प्रतीयते नान्यथा । पुरुषेतिप्रा-
तिपदिकन्तु स्वार्थमात्रे वर्तेत इति प्रथमा सिध्यतीत्यर्थः । ततोऽग्रे भाष्ये
शङ्कितम् । कुतो नु खल्वेतत्पुरुषे यदाधिक्यं वाक्यार्थ इति न पुना राजनि
यदाधिक्यं स वाक्यार्थः स्यात् । पुरुषपदसन्निधाने एव राज्ञः सम्बन्धित्वाव-
गमो नान्यथेति ततोऽपि प्रथमाप्रसङ्गः । वाक्यार्थत्वञ्च पदान्तरसन्निधाने प्रती-
यमानत्वं तच्चोभयत्राविशिष्टमिति पुरुषनिष्ठविशेष्यत्ववद्राजनिष्ठविशेषणत्वमपि

स्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा विवक्षा क्तस्य च वर्तमानइति सूत्रे छात्रस्य हसितमित्यादौ भाष्ये स्पष्टा । सयोगसंबन्धावच्छिन्नाधारस्य न तथा विवक्षा, अत एव घटवद्भूतलमिति प्रयोगसाधक मतुप्सूत्रे ऽस्मिन्निति चरितार्थमिति तत्रैव भाष्ये स्पष्टम् । लोहितोष्णीषा इत्यादावपि सप्तम्यर्थबहुव्रीहिर्बोध्यः । एधोदकस्येति । एधः कर्तृ कर्ता वा । दकस्योदकस्येत्यर्थः । एधशब्दो ऽदन्तः पुलिङ्गः कारकइति सूत्रे भाष्ये प्रयुक्तः । एधाः पक्ष्यन्ते इति । सान्तः क्लीबो ऽपि ।

---

षाष्ठ्यर्थ एव भविष्यतीति पुरुषपदादिव राजन्शब्दादपि प्रथमाप्रसङ्ग इति भाव । तत समाधानम्भाष्ये अन्तरेणापि पुरुषशब्दस्य प्रयोग राजनि सोऽर्थो गम्यते ।अन्तरेणेति।राज्ञ इति केवलेऽपि पदे उच्चार्यमाणे सम्बन्धित्वमनियतप्रतियोगि गम्यते तस्माद्राजा परोपकारित्वेन विवक्षितो न स्वनिष्ठत्वेन । अत्र सम्बन्धित्व विशेषणत्वरूपम । अनियतप्रतियोगीत्यस्यानियतविशेष्यनिरूपित मित्यर्थ । अत एवोक्त राजा परोपकारित्वेन विवक्षित इति । न स्वनिष्ठत्वेन । न स्वार्थनिरूपितविशेष्यतया इति । हरिणाप्युक्तम् ।

द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तथाभिधीयमानश्च प्राधान्येऽप्युपयुज्यत इति ।

असौ सम्बन्ध । परार्थत्वात् । पर विशेषणत्वमर्थ प्रयोजन यस्य तत्त्वाद्विशेषणतानियामकत्वादित्यर्थ । भेदे सति विशेषणतया विवक्षितस्य सम्बन्ध विना विशेषणत्वासम्भवेन तदाकाङ्क्षितत्वात्तत्र सम्बन्धो व्यतिरिच्यते उद्भूततया प्रतीयते इति तत्रैव षष्ठीत्यर्थ । विशेष्यस्य स्वनिष्ठत्वादेव न विशेष्यता नियामकसम्बन्धाकाङ्क्षेति भाव । प्रधानेऽप्युपयुज्यते । तस्य द्विष्ठत्वस्वभावत्वाद्राजादिनिरूपितविशेष्यताया राजादिपदसन्निधाने प्रतीयमानाया उपकारको भवतीत्यर्थ । ननु कर्मादीनामपीतिग्रन्थेन यथा तेषा सम्बन्धत्वेन विवक्षा प्रतिपादिता तथा कर्त्तुर्न प्रदर्शितेति कर्त्तुस्तथा विवक्षा न भवतीति कश्चिद् भ्राम्येदत कर्त्तुरपि तथा विवक्षामाह । * कर्तुरपीति * । कर्मादीनामित्यनेन सयोगसम्बन्धावच्छिन्नाधारस्यापि तथा विवक्षेति भ्रमनिवारणायाह । * संयोगसम्बन्धेति * । तेन भूतलस्य घट इति न प्रयोग । तत्र भाष्यमपि साधकमाह * एवेति * । ननु तर्हि लोहितोष्णीषा इत्यादौ षष्ठ्यर्थे बहुव्रीहिर्न स्यादत आह । * लोहित इति * । यदुक्तमेध कर्तृ कर्त्ता वा तदुपपत्तये आह । * एध शब्द इति । * उदकस्येत्यर्थ इति * । भुवनममृतजीवनीयन्दकञ्चेतिहलायुधकोशोऽत्र मानम् ।

हेतौ द्योत्ये इति । हेताविति वर्तते हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः । तेनात्र हेतुं पश्येत्यादौ न । षष्ठीति । हेतुवाचकादित्यर्थः । निमित्तेत्यादि । निमित्तादिप्रयोगे तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः । किन्निमित्तमिति । प्रथमान्तं द्वितीयान्तञ्च । प्रायोग्रहणादिति । एवञ्च षष्ठी हेतुप्रयोगे सर्वनाम्नस्तृतीया चेति सूत्रे व्यर्थे इति बोद्धव्यम् ॥

षष्ठ्यत ॥ दिक्शब्दत्वात्पञ्चम्यां प्राप्तायामिदम् । ततः पश्चादित्यत्र तु सार्वविभक्तिकः षष्ठ्यन्त्वात्तसिः ।

षष्ठ्यपीति । स्पष्टञ्चेदं वृत्तौ । भाष्ये तु न दृश्यते । विपरीतं षष्ठ्यन्तसर्थेति सूत्रात्पूर्वमेनपेत्यस्य पाठ इति लभ्यते इति पृथग्विनानानेति सूत्रे उक्तम् ॥

दूरान्तिकार्थैः ॥ यदपेक्षं दूरत्वादिकं ततः षष्ठीत्यर्थः । पञ्चमी चेति । तस्या एव समुच्चयो न द्वितीयातृतीययोरपीति भावः ।

ज्ञो ऽविदर्थे ॥ अत्र सूत्रे ऽविदर्थस्येति छेदो व्याख्यानात् । सर्पिषो ज्ञानमिति । जानातेः प्रवृत्तिरर्थः सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः ।

---

यदुक्तम्मूले हेतौ द्योत्य इति तत्फलमाह । हेतुहेतुमद्भावेनेति । हेतुपदार्थस्य स्वनिष्ठहेतुत्वनिरूपितहेतुमत्त्वसम्बन्धेनेतरान्वय इत्यर्थः । *हेतुवाचकादिति*। हेतुवाचकत्वञ्च विशेषणविशेष्ययोरुभयोरपि वाचकयोरिति हेतुशब्दादन्यस्माच्च षष्ठीत्यर्थः । षष्ठी हेतोरिति वक्तव्ये प्रयोगग्रहणाद्यत्र हेतुबोधनाय हेतुशब्दस्य प्रयोगस्तत्र हेतुवाचकसामान्यात्तस्मिन् वाक्ये षष्ठी यथा स्यादिति । अत एवास्य शोभनस्य हेतोर्वसतीति भवतीति दिक् । सर्वनाम्नस्तृतीया च । अत्र सर्वनाम्न इति प्रयोगापेक्षया षष्ठी । पञ्चम्या तु हेतुशब्दात्परत्वेऽपि तृतीये न स्याताम् । * निमित्तादिप्रयोगे तेभ्य इति * । अत्रार्थे प्रयोगशब्दोपादानमेव मानम् । * सूत्रे व्यर्थे इति * । अनेनैव सूत्रद्वयसाध्यप्रयोगस्य सिद्धेः ।

मूलादिदूषणायाह । * भाष्य इति * । ग्रन्थप्रतिषिद्धमनुमतम्भवतीति न्यायेनोक्तम्भाष्यकारसम्मतमेवेत्यत आह । * विपरीतमिति * । इत्यधिकारात्परेणेत्यादौ यथायथ शास्त्रेणेत्यादिविशेष्यानुरोधात् तृतीया ।

प्रत्यासत्तिन्यायेनाह । * यदपेक्षमिति * । * तस्या एवेति * । पञ्चम्या एवेत्यर्थः । शिष्टकृत व्याख्यानमत्र शरणम् ।

* व्याख्यानादिति * । जानातेरविदर्थकत्वस्य नियततया विशेषणस्यैव वैयर्थ्यापत्तिरतो विशेषणसामर्थ्यमूलकाद्व्याख्यानादित्यर्थः । जानातेरविदर्थत्वं स्पष्टयति । * जानातेरिति * ।

अधीग ॥ अधीगर्थः स्मृतिः किम् । मातुर्गुणस्मरणम् । करणशेषत्वेन षष्ठ्यभावे समासो भवत्येव । अत एवात्र सूत्रे, भाष्ये शेषइत्यनुवर्तते- इत्युक्तम् । प्रतिपदविधाना षष्ठी न समस्यत इत्येतैः षष्ठीसमासनिषेधात् ।

एधोदकस्येति । एध इति पृथक्पदं दकशब्द उदकवाची ॥

रुजार्थानाम् ॥ रोगार्थानां धातूनामित्यर्थो व्याख्यानात्, धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद्वचन इति कर्तरि ल्युट्, भावशब्देन सिद्धरूपार्थ उच्यते ल्युट्प्रकृत्यर्थो ऽविवक्षितस्तदाह । भावकर्तृकाणामिति । रोगकर्तृकाणामिति च । रोगोऽत्र क्षयादिः । भावकर्तृकाणां किम् । श्लेष्मणश्चौररुजा । श्लेष्मात्र न भावः । सर्पिषो नाथनमिति । सर्पिर्मे भूयादित्याशासनमित्यर्थः ॥

जासिनि ॥ जसुमोक्षणे इति दैवादिकस्य न ग्रहणञ्जासीति निर्देशाद्धिंसायामित्युक्तेश्च । निप्रेपसृष्टो हनो निग्रहण दीर्घनिर्देशात् । क्राथनमिति । घटादेः क्रथेः क्राथेरिति सूत्रे निपातनादुपधावृद्धिरिति वृत्तिः । परे तु एतत्सूत्रप्रामाण्यात्घटसाहचर्याच्चायमपि चुरादिर्बोध्यस्तस्याकृतिगणत्वात् निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथ-

---

* मातुर्गुणस्मरणमिति * । गुणेन स्मरणमित्यर्थः । इह गुणरूपस्य करणस्य शेषत्वविवक्षायामपि अनेन सूत्रेण षष्ठ्यभावे षष्ठी शेष इति सूत्रेण षष्ठ्या समासो भवत्येव । एतत्सूत्रविषयेऽपि तेन सूत्रेण षष्ठ्या सिद्धायामेतत्सूत्रं नियमार्थमिति हि प्रसिद्धो मार्गः । * अत एव * । नियमार्थत्वस्येष्टत्वादेव । एतेषां नियमार्थत्वे वार्तिकमपि साधकमित्याशयेनाह । * प्रतिपदविधानेति * । तद्वार्तिकमपि नापूर्वङ्किन्तु नियमसिद्धमेवेति भावः ।

रुजार्थानामिति सूत्रे उपात्तस्तत्र रुजाशब्दो यद्यपि व्याधौ रूढस्तथापि प्रकृते रोगमात्रं विवक्षितमित्याशयेनाह । * रोगार्थानान्धातूनामिति * । अत्र रोगशब्दे प्रकृत्यर्थमात्रं विवक्षितम् । * व्याख्यानादिति * । भावकर्तृकाणामित्यस्य नदी कूलानि रुजतीति प्रत्युदाहरणम्भाष्ये उक्तन्तन्मूलकत्वादित्यर्थः । * ल्युट्प्रकृत्यर्थोऽविवक्षित इति * । भावकर्तृकादितिभाष्यीयव्याख्यानात् । भाष्ये भावकर्तृकादिति ल्यब्लोपे पञ्चमी । भावकर्तृकमाश्रित्येत्यर्थः ।

* न ग्रहणमिति * । किन्तु जसु हिंसायामिति चौरादिकस्येति शेषः । ननु हेतुमण्णिचा जासीतिनिर्देशोपपत्तिर्भविष्यतीत्यत आह । * हिंसायामित्युक्तेरिति * । अनुकरणत्वाप्राप्तेराह । * सौत्रत्वादिति * । मूलादिकन्दूषयति । * परे त्विति * । * अयम् * । क्राथधातुः । नन्वयञ्चुरादौ न दृश्यत इत्यत आह । * तस्येति * । * निपातनस्येति * । अस्यान्यर्थत्वादिः । * सामान्ये

नमित्यस्यानापत्तिः, सामान्येन निपातने चिण्णमुल्विषये कथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः ।

समर्थयोरिति । समपर्यायसशब्देन समासः शब्दाधिक्यात् परूप वा । ब्राह्मणपणनार्थमिति । आयप्रत्ययो वैकल्पिकत्वान्न कृतः । उदाहरणे स्तुतायेनेति नियमादपि न ॥

दिवस्त ॥ कर्मणि षष्ठी स्यादिति । शेषइति त्वत्र न सम्बन्धपरं व्याख्यानात् । अत एव द्वितीया ब्राह्मणे इति सूत्रभाष्ये तदहः सभायान्दीव्येयुरित्यत्र नित्यं षष्ठीसमासौ द्वितीयार्थमिति भाष्ये उक्तं, तत् ध्वनयन् ति-

---

न * । शेषषष्ठीसन्नियोगशिष्टत्वानङ्गीकारेण ।

प्रकारान्तरमप्याह । * उदाहरण इति * ।

* व्याख्यानादिति * । उक्तसूत्रद्वयस्य पाणिनिपठितानुपूर्वीकस्योपादानसामर्थ्यमूलकव्याख्यानादित्यर्थः । अयम्भावः । यत्र शेष इत्यस्य सम्बन्धस्तदा विभाषोपसर्गे इत्यत्र शेषपदसम्बन्धोऽस्ति न वा । आद्ये दिव इति सूत्रेण समासाभावस्य सिद्धौ विभाषोपसर्गे इतिसूत्रवैयर्थ्यम् । न च यदा मानेन षष्ठी तदा षष्ठी शेष इतिसूत्रेण षष्ठी तदा समासप्रवृत्तिरेव फलमस्त्विति वाच्यम् । नोपसर्गे इति न्यासेन दिवसूत्रस्य निषेधे शेषषष्ठ्या समासविकल्पेन रूपद्वयसिद्धौ विभाषाग्रहणस्य तथापि वैयर्थ्यानुद्धारात् । द्वितीये विभाषेतिसूत्रस्य कर्मण्येव विकल्पेन षष्ठीविधायकतया छन्दस्याप्यायमानरूपाभावाद् ब्राह्मणे विभाषेतिसूत्रविहितषष्ठ्यभावे कर्मणि द्वितीयेति सूत्रेण द्वितीयाया सिद्धौ द्वितीया ब्राह्मण इति सूत्रवैयर्थ्यं दुर्वारमेव । न च तन्निरुपसर्गे द्वितीयार्थमस्त्विति वाच्यम् । कर्मत्वविवक्षायान्दिवसूत्रस्याप्राप्तेस्तत्र कर्मणिद्वितीयेति सूत्रेण द्वितीयाया सिद्धौ तस्य सूत्रस्य वैयर्थ्यानुद्धारात् । द्वितीयाब्राह्मणे इति सूत्रे शेषपदसम्बन्धेन शेषत्वविवक्षाया द्वितीयार्थन्तदिति तु वक्तुमशक्यम् । विभाषोपसर्गे इति सूत्रेण विच्छिन्नस्य शेषपदस्य पुनस्तत्र सम्बन्धासम्भवात् । न च कृदन्तेन योगे द्वितीयाब्राह्मणइतिसूत्रे विभाषापदसम्बन्धेन पक्षे दिव इति सूत्रसिद्धषष्ठ्या पुनर्विधानेन समासाभावार्थं तदस्त्विति वाच्यम् । द्वितीया ब्राह्मण इतिसूत्रभाष्ये किमुदाहरणमिति दीव्यन्ति । पूर्वेणाप्येतत्सिद्धम् । इदन्तगामस्य तदह सभायान्दीव्येयुरित्युदाहरणेन कृदन्तेन योगे तस्य प्रवृत्त्यस्वीकारादिति । * अत एव * । दिवस्तदर्थस्येति सूत्रे शेषपदासम्बन्धादेव । * नित्यषष्ठीसमासाविति * । दिवस्तदर्थस्येत्यनेन नित्यषष्ठीसमासावित्यर्थ । * तिङन्तमिति * । यदि शेषपदसम्बन्धेनेदं सूत्रमपि समासनिवृत्तिफलकम्भवेत्तदा

न्तमुदाहरति। शतस्य दीव्यतीति। यद्यपि पूर्वसूत्रे दिव इति पठित्वा तदर्थस्येति त्यक्तुं शक्यते तथापि योगविभाग उत्तरार्थः शेषइत्यस्यासम्बन्धार्थश्च॥

विभाषोप ॥ अत्रापि शेषइति न सम्बद्ध्यते तदर्थस्येति च वर्तते तदाह । पूर्वयोगेति । अत एवेय मासविभाषेति न वेति सूत्रे भाष्ये स्पष्टम् ॥

कृत्वोर्थप्रयो ॥ शेषे किमिति । दिवस्तदर्थस्येत्यादिना विच्छेदादधिकरणकारकएव षष्ठीविधानं युक्तमिति प्रश्नः । द्विरह्नीति । इत्याद्दिमामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । अधीगर्थेति सूत्रे कर्मादीनामविवक्षा शेष इति भाष्य बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च । वस्तुतस्तु कर्माश्रयषष्ठीविषये सूत्रोपात्तसर्मकाणामकर्मवद्वचनमितिँ वार्तिकमत्याख्या

---

यत्र समासस्य प्राप्तिसम्भावना तादृशङ्कृदन्तमेवोदाहृत स्यादिति भाव । पूर्वोक्तमेवार्थं शङ्कासमाधानाभ्यां द्रढयति । * यद्यपीत्यादिना * । * अत एव * । अत्रापि शेषपदासम्बन्धादेव ।

कृत्वोर्थेति सूत्रे शेष इति मण्डूकानुवृत्त्या सम्बध्यत इत्यत्र बीजन्दर्शयति । * अधीगर्थेति सूत्र इति * । * बहुवचनेति * । अधिकरणस्य सङ्ग्रहे हि बहुवचन युक्तम्भवतीति भाव । स्वसिद्धान्तमाह । * वस्तुतस्त्विति * । * सूत्रोपात्तेति * । यद्यप्येवमानुपूर्वी भाष्ये वार्त्तिकस्य नास्ति । तथापि कैयटीयव्याख्यानवशात्फलतीति प्रकृते एवमुक्तम् । तथाहि । अधीगर्थेति सूत्रे कर्मादिष्वकर्मकवद्वचनम् । कर्मादिष्वकर्मकवद्भावो वक्तव्य । किम्प्रयोजनम् । अकर्मकाणाम्भावे लो भवतीति भावे लो यथा स्यात् । मातु स्मर्यते । पितु स्मर्यते । एतद्वार्त्तिके कर्मादिष्वित्यत्रादिशब्द कर्मव्यतिरिक्तस्याभावादनुपपन्न इत्याशङ्कानिवारणायाह कैयट' । आदिशब्दोऽत्राश्रयवाचीति । यथा ।

विष्णुरादि पृथासुनोर्भीष्मादिश्च सुयोधन ।
ते जयन्ति रणे शत्रून्येषा विष्णु समाश्रय इति ॥

तेन कर्माश्रया द्वितीयाविधिनिमित्तभावेनोपात्ता सकर्मका अधीगर्थादय प्रेष्यब्रूपर्यन्ता कर्मादिशब्देनोच्यन्ते । * द्वितीयाविधिनिमित्तभावेनेति * । अत्र द्वितीयाशब्दो लक्षणया द्वितीयापवादषष्ठीपर । तेन षष्ठीनिमित्तभावेनेति फलितम् । दिवुधातुविषये विभाषोपसर्गे द्वितीया ब्राह्मणे इतिसूत्रद्वयारम्भाच्छेषपदासम्बन्ध इत्यतो वार्त्तिकारम्भ । तर्हि वक्तव्यम वक्तव्यम् । अविवक्षिते कर्मणि षष्ठी भवतीति । किं वक्तव्यमेतत् । न हि । कथमनुच्यमान गम्यते । शेष इति वर्त्तते । शेषश्च क । कर्मादीनामविवक्षा शेष । यदा च कर्म विवक्षितम्भवति तदा षष्ठी न भवति । स्मराम्यहम्मातरम् । स्मराम्यहम्पितरमिति भाष्ये उक्तम् । अत्राविवक्षिते कर्मणीत्यनेनाकर्मकत्वाद्भावे लादय सिद्धा भवन्तीति दर्शितम् ।

न्तमुदाहरति। शतस्य दीव्यतीति। यद्यपि पूर्वसूत्रे दिव इति पठित्वा तदर्थस्येति त्यक्तु शक्यते तथापि योगविभाग उत्तरार्थः शेषइत्यस्यासम्बन्धार्थश्च॥

विभाषोप ॥ अत्रापि शेषइति न सम्बद्ध्यते तदर्थस्येति च वर्तते तदाह । पूर्वयोगेति । अत एवेय प्राप्तविभाषेति न वेति सूत्रे भाष्ये स्पष्टम् ॥

कृत्वोर्थप्रयो ॥ शेषे किमिति । दिवस्तदर्थस्येत्यादिना विच्छेदादधिकरणकारकएव षष्ठीविधान युक्तमिति प्रश्नः । द्विरह्नीति । द्त्यादिभामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । अधीगर्थेति सूत्रे कर्मादीनामविवक्षा शेष इति भाष्य बहुवचनेनात्रापि शेषपदसम्बन्धबोधानाच । वस्तुतस्तु कर्माश्रयषष्ठीविषये सूत्रोपात्तसर्मकाणामकर्मवद्वचनमिति वार्तिकमत्याख्या

---

यत्र समासस्य प्राप्तिसम्भावना तादृशाङ्कदन्तमेवोदाहृत स्यादिति भाव । पूर्वो क्तमेवार्थ शङ्कासमाधानाभ्या द्रढयति । * यद्यपीत्यादिना * । * अत एव * । अत्रापि शेषपदासम्बन्धादेव ।

कृत्वोर्थेति सूत्रे शेष इति मण्डूकानुवृत्त्या सम्बध्यत इत्यत्र बीजन्दर्शयति । * अधीगर्थेति सूत्र इति * । * बहुवचनेति * । अधिकरणस्य सङ्ग्रहे हि बहुवचन युक्तम्भवतीति भाव । स्वसिद्धान्तमाह । * वस्तुतस्त्विति * । * सूत्रोपात्तेति * । यद्यप्येवमानुपूर्वी भाष्ये वार्तिकस्य नास्ति । तथापि कैय टीयव्याख्यानवशात्फलतीति प्रकृते एवमुक्तम् । तथाहि । अधीगर्थेति सूत्रे कर्मा दिष्वकर्मकवद्वचनम् । कर्मादिष्वकर्मकवद्भावो वक्तव्य । किम्प्रयोजनम् । अक र्मकाणाम्भावे लो भवतीति भावे लो यथा स्यात् । मातु स्मर्यते । पितु स्मर्य ते । एतद्वार्तिके कर्मादिष्वित्यत्रादिशब्द कर्मव्यतिरिक्तस्याभावादनुपपन्न इत्या शङ्कानिवारणायाह कैयट । आदिशब्दोऽत्राश्रयवाचीति । यथा ।

विष्णुरादि पृथासूनोर्भीष्मादिश्च सुयोधन ।
ते जयन्ति रणे शत्रूनेषा विष्णु समाश्रय इति ॥

तेन कर्माश्रया द्वितीयाविधिनिमित्तभावेनोपात्ता सकर्मका अधीगर्थाश्च प्रेष्यब्रूपर्यन्ता कर्मादिशब्देनोच्यन्ते । * द्वितीयाविधिनिमित्तभावेनेति * । अत्र द्वितीयाशब्दो लक्षणया द्वितीयापवादषष्ठीपर । तेन षष्ठीनिमित्तभावेनेति फलितम् । विसुधातुविषये विभाषोपसर्गे द्वितीया ग्रहणे इतिसूत्रद्वयारम्भाच्छेषपदासम्बन्ध इत्यतो वार्तिकारम्भ । तर्हि वक्तव्यश्च वक्तव्यम् । अविवक्षिते कर्मणि षष्ठी भवतीति । किं वक्तव्यमेतत् । न हि । कथमनुच्यमान गम्यते । शेष इति वर्त्तते । शेषश्च क । कर्मादीनामविवक्षा शेष । यदा च कर्म विवक्षितम्भवति तदा षष्ठी न भवति । स्मराम्यहम्मातरम् । स्मराम्यहम्पितरमिति भाष्ये उक्तम् । अत्राविवक्षिते कर्मणीत्यनेनाकर्मकत्वाद्भावे लादय सिद्धा भवन्तीति दर्शितम् ।

नाय शेषइति वर्तते इतिभाष्यकृतोक्ते परेण शेषश्च क इति पृष्टे शेषेषष्ठीति सूत्रोक्तं कर्मादीनामविवक्षा शेष इति सिद्धान्तिना स्मारितं नैतावता कृत्वो र्थेत्यत्र तत्सम्बन्धो लभ्यते । किं चैतद्भाष्यबलात् दिव इति सूत्रे ऽपि शेष-पदसम्बन्ध आवश्यकः । अन्यथा वार्तिकरीत्या व्रतस्य दीव्यते इति भावे इष्टस्य प्रयोगस्यासिद्धिः । अत एव वार्तिकव्याख्याया अधीगर्थादयः प्रेष्य-ब्रुवपर्यन्ताः कर्माश्रयपदेनोच्यन्ते इति कैयटः । एवञ्च शेषइत्यनुवृत्त्या वार्तिक

---

यतोऽविवक्षितकर्मकत्वेनाकर्मकत्वप्रदर्शनाय शेषपदानुवृत्तिः प्रदर्शिता । * शेष इति वर्तत इति * । नन्वेवं षष्ठी शेष इति सूत्रेणैव षष्ठ्याः सिद्धायामेतत्प्रकरण व्यर्थमत आह कैयट । प्रकरणञ्चेद् समासप्रतिषेधार्थमिति । अत्र प्रकरणपदोपा दानेन मण्डूकानुवृत्तेरयुक्तत्वात्सर्वत्र शेषपदसम्बन्ध इति दर्शितम् । स्मारितम् । यथा षष्ठी शेष इति कर्मादीनां क्रियाकारकभावेन सम्बन्धमविवक्षितं कृत्वा स म्बन्धित्वमात्रविवक्षया षष्ठी भवतीत्युक्तं तथेहापि कर्मादीनामविवक्षया भावे लादयो भविष्यन्तीति दर्शितमित्यर्थः । कर्माश्रयषष्ठीविषय इत्यनेनाधीगर्थेत्या दिदिवस्तदर्थस्येतिसूत्रसमुदायो गृह्यते । * नैतावतेति * । षष्ठी शेष इतिसूत्र वद्वत्रापि सूत्रे आदिशब्द उपात्त इति भाव । प्राचीनव्याख्यायान्दोषमप्याह । * किञ्चेति * । * एतद्भाष्यबलादिति * । अन्यथाहितोक्तभाष्यबलादित्यर्थः । अन्यथेति । दिव इति सूत्रे शेषपदासम्बन्ध इत्यर्थः । * वार्तिकरीत्येति * । तत्र हि यत कर्मादिष्वकर्मकवद्वचनमित्युपात्तम् । अत्र कैयटेन प्रेष्यब्रूपर्यन्ता इत्ये वोक्तन्न तु दृत्योर्थप्रयोग इत्येतत्पर्यन्तामिति तेन दृत्योर्थे इतिसूत्रे शेषपदासम्ब न्धो लभ्यते । दिव इति सूत्रे शेष इत्यस्य सम्बन्धे इदमेव भाष्यं मानम् । दिव इति सूत्रस्यापि तन्मध्यपाठात् । प्रेष्यब्रूपर्यन्त इत्युपादानेन कटिपर्यन्त वास त्यग्रेऽग्रे शेषपदासम्बन्ध इति स्पष्टमेव लभ्यते । * एतत्सूत्रद्वयेति * । विभा-षोपसर्गे, द्वितीयाब्राह्मणे इतिसूत्रद्वयेत्यर्थः । नन्वेवं द्वितीयाब्राह्मणे इति सूत्रे भाष्ये गामस्य तदह सभायान्दीव्येयुरित्यत्र शेषपदासम्बन्धेन दिव इति सूत्रेण प्राप्तषष्ठीबाधनार्थमेतत्सूत्रमित्युक्तन्तस्य का गतिरित्यत आह । * द्वितीया ब्रा ह्मण इतीति * । * वार्तिकरीत्येति * । वार्तिककारेण हि शेषपदानुवृत्तिर्नोक्ता किन्त्वकर्मकवद्भाव एवोक्त इति भाव । सिंहावलोकनन्यायेनाह । * किञ्चेति * । * एवञ्च * । पूर्वोक्तव्यवस्थासिद्धौ च । * एतत्सम्बन्ध * । अधीगर्थस्येति सूत्रे शेषपदासम्बन्ध । तथा सति यत्फलितन्तदाह । * एवञ्चेति * । * तयो

प्रत्याख्यानवदेतत् सूत्रद्वयप्रत्याख्याने एव । भाष्यतात्पर्यन्द्वितीयाब्राह्मणे इति सूत्रस्थभाष्य तु वार्तिकरीत्येत्याहुः । किञ्च यदा कर्म विवक्षित भवति तदा षष्ठी न भवति स्मराम्यह मातरमिति भाष्ये उक्तम् । त्वद्रीत्या तु यदा कर्माद्यविवक्षित भवतीति वदेत् । एवञ्च ज्ञोविदर्थस्येत्यत्रापि तदसंबन्ध एव । एवञ्च तत्प्रयोगे न कदापि तृतीया शत दीव्यतीत्यादि च सिद्ध्यति, अधीगर्थेत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु ॥

कर्तृकर्मणोः ॥ अत्र शेष इति न संबद्ध्यते सूत्रवैयर्थ्यापत्तेः कृद्योगा षष्ठी समस्यतइति वार्तिकेन तत्र समासस्येष्टत्वात् । कृतिरिति भावे क्तिन् । कृष्णः कर्ता । जगत इति । कर्मेदं कर्तृसाहचर्यात् । कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते । तेन स्तोक पाक इत्यादौ न क्रियाविशेषणात् षष्ठी । किंच क्रियाविशेषणेन स्तोकम्पाचक इत्यादौ न समानाधिकरणसमासो नापि

---

गे * । अज्ञानार्थकज्ञानातियोगे । * शतन्दीव्यतीत्यादि चेति * । दिवस्तदर्थेति सूत्रे पूर्वोक्तरीत्या शेषपदसम्बन्धे सति यदा सम्बन्धित्वेन विवक्षा तदा षष्ठी यदा तु कर्मत्वशक्तिमत्त्वेन विवक्षा तदा द्वितीयेति रूपद्वयसिद्धिरिति भाव । ननु ज्ञोविदर्थेति सूत्रे शेषपदासम्बन्धेऽधीगर्थेति सूत्रे कथ शेषपदसम्बन्धो भाष्य उक्त इत्यत आह । * अधीगर्थेत्यादाविति * ।

कर्तृकर्मणो कृति अत्र सूत्रे शेषपदासंबन्धे साधकमाह । * सूत्रवैयर्थ्यापत्ते रिति * । षष्ठी शेष इति सूत्रेणैव तस्या सिद्धे । नन्विद सूत्रमपि ज्ञोऽविदर्थस्येति सूत्रवत्समासनिवृत्तिफलकम्भविष्यतीत्यत आह । * कृद्योगा षष्ठीति * । * कर्तृसाहचर्यादिति * । कर्तृपदार्थो यथा नाभेदेन क्रियान्वयी तथा भेदेनेतर सम्बन्धावच्छिन्नविशेषणविशेष्यभावेन क्रियान्वयि यत्कर्म तद्बोधकमेव कर्म पदमिति भाव ।* स्तोकम्पाक इति * । फलस्य व्यपदेशिवद्भावेन फलाश्रय तया कर्मत्वेन तत्राभेदेनान्वितो य स्तोकपदार्थ सोऽपि कर्मैवेति भाव । अत्र विशेषमाह । * किञ्चेति * । * असामर्थ्यादिति * । सुबन्तार्थविशेषान्वये समाससञ्ज्ञाविधायकतयाऽनयोश्चारितार्थ्यादिति भाव । ननु स्तोकम्पाक इत्यनेन समासाभावे प्रदर्शनीये स्तोकम्पाचक इति प्रयोगान्तराभिधान किमर्थमिति चेन्न । ओदनस्य पाचक इत्यत्र तृजकाभ्यामिति सूत्रोदाहरणीये यथा षष्ठ्येव क्रियाविशेषणवाचकाद्भवति तथा स्तोकम्पाचक इत्यत्रापि स्यादिति शङ्कावारणाय प्रयोगान्तराभिधानस्य कृतत्वात् । षष्ठी तु स्तोकम्पाक इत्यत्रेव स्तोकम्पाचक इत्यत्रापि धात्वर्थेऽभेदेनान्वयान्न भवतीति पूर्ववत् यद्यपि सम्भवति

धे क्तस्तु नात्र तस्याप्यकर्मकस्य एवेष्टेः । अविवक्षितकर्मतयाऽकर्मकत्वेन क्तस्तु कृतपूर्वीत्यादिविषय एवेत्युक्तम् । एवञ्चेदमहेः सृप्तमित्यादौ परत्वेन क्तोऽधिकरणे चेत्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठीसाधनस्यावश्यकत्वेनेदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम् । वार्तिकेन चानेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते, शेषत्वविवक्षया भाष्योक्तप्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा, पूरणगुणेति सूत्रे भाष्ये ध्वनितमिदं, तत्र हि सति किमुदाहरणं ब्राह्मणस्य कुर्वन् नैतदस्ति कारकषष्ठीनिषे

---

धोऽप्यत्र निर्दिश्यत इत्यत्र कप्रत्ययस्य प्रयोगेण तस्य वर्णरूपत्वबोधनात् । वर्णग्रहणे च सर्वत्रेति तदन्तविधिः । तथा चोकारान्तो यः प्रत्ययस्तद्योगे षष्ठी नेति फलितम् । तेन कन्यामलङ्करिष्णुरित्यादावपि निषेधसिद्धिः । उश्च उकश्च ऊकौ लश्च ऊकौ चेत्यादिविग्रहः । * व्याख्यानादिति * । कन्यामलङ्करिष्णुरित्यादिप्रयोगदर्शनमूलकाद्व्याख्यानादित्यर्थः । * उकान्तस्येतीति * । उकप्रतिषेधे कमेर्भाषायामप्रतिषेध इतिवार्त्तिकस्वारस्यात् । तेन लक्ष्म्या आगामुकमान इत्यत्र प्रतिषेधो भवत्येव । एतदपवादतया । निष्ठेत्येतदपवादतया । * अत एव * । तत्सूत्रविहितक्तान्तस्य ग्रहणादेव । * नात्र * । भ्रान्तन्देशमित्यादौ । * एधेरिति * । तद्बीजं तूक्तम् । भ्रमधातुश्च सकर्मकस्तस्मान्नपुंसके भावे इत्यनेन क्तस्यासम्भवाद्गत्यर्थेत्यनेन भावे क्तप्रत्ययो यदा क्रियते तदा भ्रमणक्रियाकर्तृत्वाश्रयत्वात्कर्तृकर्मणोरिति प्राप्तषष्ठ्या निष्ठेति निषेधो भवत्येवेति तृतीयैव भवतीति भावः । * एवञ्च * । पूर्वोक्तव्यवस्थासिद्धौ च । अकर्मकधातुविषये विशेषमाह । * अहेः सृप्तमिति * । अत्र सृप्धातोश्चलनमात्रमर्थः । * परत्वेन * वार्त्तिकापरत्वेन । * शेषत्वविवक्षयैव * । कर्तुः शेषत्वविवक्षयैव । कर्तृकर्मणोरिति तु निष्ठेति प्रतिषिद्धम् । * भाष्ये प्रत्याख्यातमिति * । तत्र हि क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम् । क्तस्य च वर्तमाने नपुंसके भाव उपसङ्ख्यानङ्कर्तव्यम् । नटस्य भुक्तम् । छात्रस्य हसितम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतमिति । अत्र क्तस्य च वर्तमान इत्यस्योपादानमस्मिन् वार्त्तिके तस्यैतस्यानुवृत्तिसूचनाय । नपुंसके भाव इति विहितः क्तस्तु कालोदासीन एव । एवञ्च कालोदासीनभावविहितक्तान्तेन योगे एव निष्ठेतिनिषेधम्बाधित्वा नपुंसके भाव इति षष्ठी । यद्यप्यत्र कर्तुः शेषत्वविवक्षया सिध्यति । तथापि कर्तृत्वप्रकारकबोधे षष्ठ्यर्थमिदमिति वार्त्तिककाराशयः । ततो भाष्ये पूर्ववार्त्तिकम्प्रत्याख्यातम् । शेषविज्ञानात्सिद्धम् । शेषलक्षणात्र षष्ठी भवति । शेष इत्युच्यते । शेषश्च कः । कर्मादीनामविवक्षा शेषः । सा चाविवक्षा इतोऽप्यविवक्षा भवतीत्यनेन प्रकारेणोपपादिता । * इदम् * नपुंसकभावे इत्येतत् । विशेषं वक्तुम्पुनराह । * वार्त्तिकेनेति * । * एताविति * । वार्त्तिकमित्यर्थः । * क्तातिरि

धात्, शेषषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यादित्याद्यर्थकमुक्तमिति परे । अधीयन्निति । इङ्धार्योः शत्रकृच्छ्रिणीति शता । द्विषन्निति । द्विषोऽमित्र इति शता । शेषषष्ठी त्विति । इदञ्चिन्त्यमित्युक्तं परैः ॥

अकेनो ॥ अत्र यथासङ्ख्यं नेष्यते । अकस्याऽऽधमर्ण्येऽसंभवादाह । भविष्यत्यकस्येति । वर्षशतस्य पूरक इत्यादौ एतत्कर्मकयाचनकर्तार इत्यर्थकेऽत्र यजता लप्स्यन्तेऽस्य याजका इत्यादौ च षष्ठी भवत्येव । कर्तुमात्रार्थके ण्वुल्तृचाविति ण्वुलि पदान्तरसम्बन्धेन भविष्यत्वमतीतावप्यकस्य संप्राप्ते तुमुन्ण्वुलाविति ण्वुल् तु भविष्यतीत्यधिकृत्य विधानाद्भविष्यदर्थक एवेति भावः । व्रजङ्गमीति । गमेरिनिरित्यौणादिक इनिः । स च भविष्यति, भविष्यति गम्यादय इत्युक्तेः । गामीति पाठे बाहुलकाद् वृद्धिः । शतन्दायीति । आवश्यकाधमर्ण्ययोरिति णिनिः, आवश्यके णिनावप्यय

---

केति * । एतेन पदसंस्कारपक्षे ग्रामं देशमित्यादौ चाविवक्षितकर्मकत्वेनाकर्मत्वाद्भावे भूते क्त निष्ठान्तेन योगे षष्ठी नेति निषेधाच्च षष्ठी किन्तु पुनः कर्मयोगेऽपि द्वितीयैवेति परास्तम् । एव रीत्यास्य साधने पदसंस्कारपक्षमादाय कटङ्कृतमिति प्रयोगस्यापत्ते । ननु वार्त्तिकारम्भप्रत्याख्यानयोः फलभेदाभिप्रायेण पुनर्भाष्ये शङ्कितम् यद्येवमुत्तरत्र चातु शब्यामाप्नोति । इदमहं सुप्तम् । अत्राधिकरणे क्त षष्ठी कर्त्तरि । इहाहिना सुप्तम् । अत्र भावे क्त । इहाहि सुप्त अत्र कर्त्तरि । अहे सुप्तमिति । अत्र भावे अत्र शेषे षष्ठ्यपि प्राप्नोति । वार्त्तिकारम्भे तु क्तोऽधिकरणेचेतिकविषये नपुंसके भावे क्त इत्यस्याप्रवृत्त्या वार्त्तिकेन कर्त्तरि षष्ठी न शेषत्वविवक्षायाश्च तन्मतेऽभाव एवेति भेदाच्यमिति चेन्न । इहाहे सुप्तम्ग्रामस्य पार्श्वे ग्रामस्य मध्य इति दृश्यत एव चातु शब्यमिति । अत्र ग्रामस्य पार्श्वे इति सप्तम्युल्लेखेनाधिकरणस्यानाभिहितत्वोपपत्त्यर्थमभाव एव प्रत्ययो विधेयस्तदा वार्त्तिकेन कर्त्तरि षष्ठी स्यादेव इहेत्यस्य विवरणं ग्रामस्य पार्श्वे इतीति फलभेदाभावात् कारितरिक्तविषय इत्यनेनान्यत्र लादेशादिनिषेधविषये शेषत्वविवक्षाभावो बोधित । तत्र साधकमाह । * पूरणेति * । *असामर्थ्यात् * । ब्राह्मणस्येत्यस्य स्वान्वययोग्यनामार्थेऽन्वयेनासामर्थ्यात् । * इदञ्चिन्त्यमिति * । यदि ब्राह्मणस्येत्यस्य क्रियायामन्वय स्यात्तदेदं सूत्रोदाहरणं युक्तमामार्थान्वये तु क्रियायामनन्वयेन शेषे षष्ठीति वक्तुमशक्यमिति भाव ।

* नेष्यत इति * । अकस्य भविष्यतीति वक्तव्यम् । यथान् लावको व्रजति । ओदनम्भोजको व्रजति । सक्तून्पायको व्रजतीति । इन् आधमर्ण्ये चेति वक्तव्यम् । शतन्दायी । सहस्रन्दायी । ग्रामङ्गमीति । अत्रैतादृशयोगविभागेन व्याख्यातोऽभ्यत इति सिद्धम् । नन्वेवमुभयोरभयत्र सम्भवोऽस्त्वित्यत आह । * अकस्येत्यादि * । * कर्तृमात्रार्थक मात्रपदेन भविष्यत्त्वव्यवच्छेदः ।

निषेधः सूत्रे आधमर्ण्यपदेन तत्सूत्रोक्तार्थोपलक्षणात् । अत एवात्र हारीति निर्देशः सङ्गच्छते । तत्र आवश्यके णिनिः । न च तत्र भविष्यदर्थकत्वेन सिद्धिः भूतवर्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम् । वस्तुतो भविष्यतो बोधे ऽपि तत्त्वेनाबोधात् णिनेस्तदर्थकत्वाभावाच्च । अत एवावश्यं कारी कटस्येति इत्युदाहृतं सङ्गच्छते । तत्र हि नानेन णिनिः, अवश्यपदोपादानात् किं तु सुप्यजातौ णिन्ताच्छील्ये इति सूत्रेणेति नव्याः ।

कृत्यानाम् । अनुवर्तत इति । निषेधोऽयं कर्तरि कर्मणि च । कर्तरि चेति त्वनुभयप्राप्तिविषयमिति हरदत्तकैयटादयः । व्रजामित्यत्र गुणकर्मणि वे प्यत इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मण उक्तत्वात् प्रधानचरितार्थेनानेन परत्वाद् बाधात् ।

तुल्यार्थे योग इति । तुल्यत्वार्थैरित्यर्थः । अत एवातुलोपमाभ्यामिति चरितार्थम् । अत एव पर्युदासादनव्यययोग एवेद, तेनेवशब्दयोगे न ॥

---

* सूत्र इति * । अकेनोरितिसूत्र इत्यर्थः । * तत्सूत्र इति * । आवश्यकाधमर्ण्ययोरिति सूत्रेत्यर्थः । * अत एव * । उपलक्षणादेव । *भूतवर्तमानयोरिति*। भूतस्य ज्ञाततया तत्र तथा कथनं व्यर्थमेव । वर्तमाने च प्रमाणान्तरेणैव तथा निश्चयसम्भवादेतत्कथनानुपयोग इति भावः । * तत्त्वेन * । भविष्यत्त्वेन । * अत एव * । णिनेर्भविष्यदर्थकत्वाभावादेव । * नव्या इति * । अनेन सु प्यजातावितिसूत्रेण णिनिप्रत्यये ऽप्युक्तरीत्या भविष्यत्त्वप्रतीतावपि न दोष इति सूचितम् ।

* निषेधोऽयमिति * । कृत्यानामिति निषेध इत्यर्थः । * कर्तरि कर्मणि चेति * । विशिष्यानुपादानादुभयत्र निषेधोऽयमिति भावः । प्राचीनोक्तं खण्डयति । * व्रजमिति * । न चानभिहिताधिकारीयषष्ठ्या उपपादनावसरे कर्तव्यः कट इत्यत्र परत्वात्कृद्योगलक्षणषष्ठीप्रसङ्गादिति मनोरमायामभिहितं तस्य कथमुपपत्तिरिति वाच्यम् । यत्रोभयोः प्रयोगस्तत्रैवोभयोः प्राप्तिरिति कर्तव्यः कट इत्यत्र नास्य निषेधस्य व्यापार इत्याशयात् । न चोभयप्रयोग एव चेदाक्रष्टव्या ग्राम शाखेति कृत्यानामिति निषेधसूत्रोदाहरणभाष्ये उक्तं तस्य का गतिरिति वाच्यम् । कर्तृपदाध्याहारेण तस्य भाष्यस्योपपत्तेः ।

यथाश्रुते तुल्यशब्दस्य धर्मिवचनतया साम्यं कृष्णस्य कृष्णेन वा प्रयुक्त इत्यादौ प्राप्तासङ्गतेः परिहारायाह । *तुल्यत्वार्थैरिति* । * अत एव * । भावप्रधाननिर्देशादेव । अन्यथा तुलोपमाशब्दयोस्तुल्यार्थकत्वासम्भवेन तयोरुपादानं व्यर्थमेव स्यादिति भावः । * अत एव * । अस्मादेव ।

चतुर्थी चाशिषि ॥ आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः । अत एवैतदर्थकचतुर्थ्यन्तेन सुखहितादिभिर्न समासः । उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं सङ्गच्छते । यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथाऽन्वयान्न समास इति तन्न, वृत्तावपि प्राप्तत्वादिपर्यालोचनेन लोहितोष्णीषेत्यादौ तथान्वयदर्शनात् । भाष्ये तथान्वये वृत्तेरसाधुतया अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः । व्याख्यानादिति । सूत्रेऽर्थशब्दः पृथङ्गनिमित्तमिति भावः । भाष्ये तु नैतद् दृश्यते ।

इति षष्ठी ॥

---

चतुर्थीसम्प्रदाने इतिवच्चतुर्थीचाशिषीत्युक्तत्वेनाशीश्चतुर्थ्यर्थ इतिभ्रमवारणायाह । * आशीर्विषयेति * । * तद्द्वारकेति * । क्रियाद्वारकेत्यर्थः । * अत एव * । क्रियाद्वारकसम्बन्धस्वीकारादेव । * उभयोरपीति * । देवदत्ताय सुखम्भूयादित्यादौ देवदत्तायेत्यस्य सुखमित्यादेश्च । * क्रियान्वयेन * । सुखमित्यस्य कर्तृतया देवदत्तायेत्यस्य सम्बन्धित्वेन भूयादित्येतच्छब्दद्योत्यक्रियायामन्वयेन । * अत एव * । एतद्विहितचतुर्थ्यन्तस्य तेन समासाभावादेव । अनेन सूत्रेण यत्र चतुर्थी तत्र चतुर्थ्यन्तार्थस्योद्देश्यत्वमाशीर्विषयक्रियान्वयिनश्च विधेयत्वमिति वाक्यस्योद्देश्यविधेयभावावगाहिबोधजनकत्वं वृत्तौ च न तथेति वृत्तिविग्रहयोः समानार्थत्वाभावान्नैतद्विहितचतुर्थ्यन्तेन समास इति प्राचोक्तं खण्डयति । * यत्त्विति * । * अतथान्वयात् * । उद्देश्यविधेयभावेनान्वयात् । * न समास * । उद्देश्यविधेयभावेनान्वयबोधे पृथगुपस्थितेस्तन्त्रत्वादिति भावः । वृत्तावपि प्राप्ताप्राप्तविवेकेन यत्प्राप्तं तदुद्देश्यं यच्चाप्राप्तं तद्विधेयमिति कल्पनयोद्देश्यविधेयभावेनान्वयेन वृत्तौ सर्वत्र तथाऽनन्वय इति नियमे मानाभाव इत्यभिप्रायेण दूषयति । * तत्रेति * । * लोहितोष्णीषा इत्यादाविति * । लोहितोष्णीषा ऋत्विजः प्रचरन्तीतिवाक्येनोष्णीषस्य प्राप्तत्वात्तदनुवादेन लौहित्यमात्रस्य विधानादिति भावः । वृत्तेस्तथा स्वभावे प्रमाणाभावमाह । * भाष्य इति * । * मूले व्याख्यानादिति * । प्राचां व्याख्यानादित्यर्थः । ननु सुप्तशब्दा तद्ध द्वन्द्वात्याऽर्थशब्देन कृते द्वन्द्वान्त इति न्यायेनैवार्थलाभे सूत्रेऽर्थशब्दः इति * । तथा

द्वन्द्व ति

आधारो ॥ कारके इत्यधिकारात्क्रियाजनके एतन्मतूब्योपस्थितत्वादाधारः क्रियाया एव, तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणं, परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह । कर्तृकर्मद्वारेति । यद्यपि । कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव तथैवानुभवात् । साक्षात्तदाधारत्वेऽपि आधारपदे स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किञ्च साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात्कालः पचति भूतानीतिवत् । एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव । यस्य यद्द्वारा कारकत्वन्तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः, अत एवाक्षशौण्ड इत्यादौ समासः । अत्र आसत्त्यादिक्रियान्तर्भावेन बोधानुभवात्क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम् । मूले वृक्षः कपिसंयोगीत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वं विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽग्रावयवे तद्विशिष्टवृक्षाभावप्रतीतेः कपिसंयोगे तदवच्छेद्यत्वं फलतीति दिक् ।

---

* तदाश्रयस्य * । क्रियाश्रयस्य । * व्याख्यानादिति * । "कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति" हर्युक्तिमूलकव्याख्यानादित्यर्थः । हरिकारिकायां यदुक्तमसाक्षाद्धारयत्क्रियामिति तद्व्यभिचारेऽपि क चिदस्तीत्याह । *यद्यपीति* । ननु मन्मते साक्षात्तदाधारत्वे कथम्परम्परया तदाधारस्य ग्रहणमत आह । * आधारपद इति *। साक्षात्तदाधारस्य तु चैत्रादितुल्यत्वमेवेत्याशयेनाह । * किञ्चेति * । तत्र दृष्टान्तमाह । * काल इति * । * एवञ्च * । परम्परयाधारस्य ग्रहणसिद्धौ च । * अस्य * । आधारस्य । * अत एव * । पूर्वोक्तनियमस्वीकारादेव । कारकाणाङ्क्रियान्वयित्वमिति नियमोऽप्यधिकरणविषये परम्परयैव । * अक्षशौण्ड इत्यादाविति * । यथा कटे शेते चैत्र इतिवाक्यात्कटाधिकरणचैत्रकर्तृकं शयनमितिबोधे त्वक्षेषु शौण्ड इति वाक्यादपि अक्षाधिकरणकशौण्डकर्तृका भवनक्रियेत्येवरीत्या बोधात्साक्षादेव सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्यमिति समाससंज्ञासिद्धिः । * अत्र * । अक्षशौण्ड इत्यादौ । * न युक्तमिति * । भाष्यकृता तस्यार्थस्यानुक्तेरिति शेषः । यत्र तु क्रियावाचकपदन्नश्रूयते तत्रापि तदन्वययोग्यक्रियावाचकपदमध्याहृत्य क्रियाधारत्वमुपपादनीयमिति तदाह । *मूले वृक्ष इति * । फलतीति * । एवमभिधानेन कपिसंयोगादौ मूलाद्यवच्छेद्यत्वावगाहिनी मानसी प्रतीतिरित्युक्तम् । तत्र कटे शेते स्थाल्याम्पचतीत्यादावाधारत्वेनाभिमते कर्तृकर्मणोः संयोगोऽस्तीति तद्द्वाराधारत्वम् । * चिरत्वमवच्छेदक-

सकारादिति । प्रातिपदिकार्थे इति शेषः । त्रिधेति । तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम् । यथा तिलेषु तैलमिदमेव मुख्यमधिकरणमिति स्वरितेनेत्यत्र साधकतममित्यत्र च भाष्ये स्पष्टम् । उप समीपे श्लेषः सम्बन्धस्तत्कृतमौपश्लेषिकम्, अत एवेको यणचीत्यादावौपश्लेषिक आधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये । तत्राजादिसामीप्यमेवेगादीनाम् । यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमित्युक्तं तत्र च दीयते इति सूत्रे भाष्ये तदस्मिन्नधिकमिति सूत्रे च भाष्ये स्पष्टमिदम् । कटे

---

तासम्बन्धेन । शिरसि वेदना पादे मे सुखमित्यादौ यथा । क्वचित्तु प्रतियोगितानिरूपितानुयोगितया । यथाऽभावे प्रतियोगितया घटः प्रकारोऽस्तीत्यादौ । एवमन्यत्राप्यूह्यम् । चकारेण विहिता या सप्तमी सा स्वार्थे न तु तस्मिन्वाक्येऽधिकरण इत्यस्य सम्बन्धः ।

वाक्यभेदसामर्थ्यात्तदभिप्रायेण । *प्रातिपदिकार्थे इति* । *तत्र* । तेषु मध्ये । *सकलेति* । सकलावयवावच्छेदेन व्याप्तिरित्यर्थः । *व्याप्ताविति* । अत्र व्यापनं व्याप्तिपदार्थः स च व्यापकत्वाभिन्न इत्यभिप्रायेणाह । *व्यापकाधारत्वमिति* । व्यापकत्वञ्च व्याप्यतानिरूपितम् व्याप्यता च किन्निष्ठेत्याकाङ्क्षायामन्यस्यानुपस्थितत्वात्प्रकृत्यर्थनिष्ठैव ग्राह्या प्रकृत्यर्थस्य व्याप्यता च समवायसम्बन्धेन । व्यापकत्वन्तु संयोगसम्बन्धावच्छिन्नमाधेयनिष्ठं विवक्षितमिति संयोगसम्बन्धावच्छिन्नाधेयनिष्ठव्यापकतानिरूपिता या समवायसम्बन्धावच्छिन्ना व्याप्यता तद्विशिष्टाधारोऽभिव्यापकाधारः । तिलेषु तैलमित्यत्र स्वावयवेषु समवायेन तिलस्य सत्त्वात्तेषु सर्वत्र तैलस्य संयोगेन सत्त्वादुक्तव्यापकभावो द्रष्टव्यः । एवमेव दध्नि सर्पिरित्यादावपि ज्ञेयम् । * मुख्यमिति * । आधारमाचार्याः किम्न्याय्यम्मन्यते यत्र कृत्स्न आधारात्मा व्याप्तो भवति तेनैव स्यात्तिलेषु तैलन्दध्नि सर्पिरिति हि साधकतममिति सूत्रभाष्येऽभिहितम् । * अत एव * । औपश्लेषिकपदस्योक्तार्थस्वीकारादेव । एवञ्चेको यणचीत्यादौ निमित्तत्वेनाभिप्रेतेऽच्पदार्थसामीप्यादेवेगाधारत्वव्यवहारः । एतादृशाधारस्य गौणत्वव्यवहारः । अत एव साधकतममितिसूत्रभाष्ये गङ्गायाङ्घोषः । कूपे गर्गकुलमित्यत्र न स्यात् । कारकसञ्ज्ञयान्तरतमयोगो न भवतीत्यत्रापि सिद्धम्भवतीत्युक्तम् । औपश्लेषिकाधारस्याप्याधिकरणसञ्ज्ञेत्यत्र भाष्यान्तरमपि साधकमाह । * यन्मास इति * । अत्र दानक्रियायां उपश्लेषः सम्बन्धः स च स्वाधिकरणकालपूर्वत्वरूपः ; औपश्लेषिकमप्यधिकरणं सप्तमीशक्यमित्यत्र मानान्तरमाह । * तदस्मिन्निति * । तत्र, एकादशाधिका अस्मिन् शत इत्यत्र शतस्याधिकरणत्वाभावात्कथं सप्तमीत्याशङ्क्यौपश्लेषिकमिदमधिकरणमित्युक्तम् ।

आधारो ॥ कारके इत्यधिकारात्क्रियाजनके एतत्प्रत्ययोपस्थितत्वादाधारः क्रियाया एव, तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्म-कर्तृसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणं, परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह। कर्तृकर्मद्वारेति। यद्यपि। कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव तथैवानुभवात्। साक्षात्तदाधारत्वे ऽपि आधारपदे स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम्। किञ्च साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात्कालः पचति भूतानीतिवत्। एवञ्च क्रियान्वयोऽप्यस्य कर्त्रोरन्वयद्वारैव। यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः, अत एवाक्षशौण्ड इत्यादौ समासः। अत्र आसत्त्यादिक्रियान्तर्भावेन बोधाननुभवात्क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम्। मूले वृक्ष कपिसंयोगीत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वं विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽन्यत्रावयवे तद्विशिष्टवृक्षाभावप्रतीतेः कपिसंयोगे तदवच्छेदकत्वं फलतीति दिक्।

---

* तदाश्रयस्य *। क्रियाश्रयस्य। * व्याख्यानादिति *। "कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति" इति हर्युक्तिमूलकव्याख्यानादित्यर्थः। हरिकारिकायां यदुक्तमसाक्षाद्धारयत्क्रियामिति तद्व्यभिचारोऽपि क्वचिदस्तीत्याह। *यद्यपीति*। ननु सम्भवति साक्षात्तदाधारत्वे कथं परम्परया तदाधारस्य ग्रहणमत आह। * आधारपद इति *। साक्षात्तदाधारस्य तु चैत्रादितुल्यत्वमेवेत्याशयेनाह। * किञ्चेति *। तत्र दृष्टान्तमाह। * काल इति *। * एवञ्च *। परम्परयाधारस्य ग्रहणसिद्धौ च। * अस्य *। आधारस्य। * अत एव *। पूर्वोक्तनियमस्वीकारादेव। कारकाणां क्रियान्वयित्वमिति नियमोऽप्यधिकरणविषये परम्परयैव। * अक्षशौण्ड इत्यादावित्ति *। यथा कटे शेते चैत्र इतिवाक्यात्कटाधिकरणचैत्रकर्तृकं शयनमिति बोधे त्वक्षेषु शौण्ड इति वाक्यादपि अक्षाधिकरणकशौण्डकर्तृका भवनक्रियेत्येवंरीत्या बोधात्साक्षादेव सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्यमिति समाससंज्ञासिद्धिः। * अत्र *। अक्षशौण्ड इत्यादौ। * न युक्तमिति *। भाष्यवृत्तौ तस्यार्थस्यानुक्तेरिति शेषः। यत्र तु क्रियावाचकपदं न श्रूयते तत्रापि तदन्वययोग्यक्रियावाचकपदमध्याहृत्य क्रियाधारत्वमुपपादनीयम्। तदाह। *मूले वृक्ष इति *। फलतीति *। एवमभिधानेन कपिसंयोगादौ मूलाद्यवच्छेद्यत्वावगाहिनी मानसी प्रतीतिरित्युक्तम्। तत्र कटे शेते स्थाल्यां पचतीत्यादावाधारत्वेनाभिमते कर्तृकर्मणोः संयोगोऽस्तीति तद्द्वाराधारत्वम्। * निरवयवच्छेदक-

सकारादिति । प्रातिपदिकार्थे इति शेषः । त्रिधेति । तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम् । यथा तिलेषु तैलमिदमेव मुख्यमधिकरणमिति स्वरितेनेत्यत्र साधकतममित्यत्र च भाष्ये स्पष्टम् । उप समीपे श्लेषः सम्बन्धस्तत्कृतमौपश्लेषिकम्, अत एवेको यणचीत्यादावौपश्लेषिक आधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये । तत्राजादिसामीप्यमेवेगादीनाम् । मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमित्युक्तं तत्र च दीयते इति सूत्रे भाष्ये तदस्मिन्नधिकमिति सूत्रे च भाष्ये स्पष्टमिदम् । कटे

---

तासम्बन्धेन । शिरसि वेदना पादे मे सुखमित्यादौ यथा । क्वचित्तु प्रतियोगितानिरूपितानुयोगितया । यथाऽभावे प्रतियोगितया घट प्रकारोऽस्तीत्यादौ । एवमन्यत्राप्यूह्यम् । चकारेण विहिता या सप्तमी सा स्वार्थे न तु तस्मिन्वाक्ये ऽधिकरण इत्यस्य सम्बन्धः ।

वाक्यभेदसामर्थ्यात्तदभिप्रायेण । *प्रातिपदिकार्थे इति* । *तत्र* । तेषु मध्ये । *सकलेति* । सकलावयवावच्छेदेन व्याप्तिरित्यर्थः । *व्याप्ताविति* । अत्र व्यापनं व्याप्तिपदार्थः स च व्यापकत्वाभिन्न इत्यभिप्रायेणाह । *व्यापकाधारत्वमिति* । व्यापकत्वञ्च व्याप्यतानिरूपितम् व्याप्यता च किन्निष्ठेत्याकाङ्क्षायामन्यस्यानुपस्थितत्वात्प्रकृत्यर्थनिष्ठैव प्राह्या प्रकृत्यर्थस्य व्याप्यता च समवायसम्बन्धेन । व्यापकत्वन्तु संयोगसम्बन्धावच्छिन्नमाधेयनिष्ठं विवक्षितमिति संयोगसम्बन्धावच्छिन्नाधेयनिष्ठव्यापकतानिरूपिता या समवायसम्बन्धावच्छिन्ना व्याप्यता तद्विशिष्टाधारोऽस्मिन्व्यापकाधार । तिलेषु तैलमित्यत्र स्वावयवेषु समवायेन तिलस्य सत्त्वात्तेषु सर्वत्र तैलस्य संयोगेन सत्त्वा दुक्तव्यापकभावो द्रष्टव्य । एवमेव दध्नि सर्पिरित्यादावपि ज्ञेयम् । * मुख्यमिति * । आधारमात्रार्थे किन्त्वाप्यममन्यते यत्र कृत्स्न आधारात्मा व्याप्तो भवति तेनेहैव स्यात्तिलेषु तैलन्दध्नि सर्पिरिति हि साधकतममिति सूत्रभाष्ये ऽभिहितम् । * अत एव * । औपश्लेषिकपदस्योक्तार्थस्वीकारादेव । एवञ्चेको यणचीत्यादौ निमित्तत्वनाभिप्रेतेऽचपदार्थसामीप्यादेवेगाधारत्वव्यवहार । एतादृशाधारस्य गौणत्वव्यवहार । अत एव साधकतममितिसूत्रभाष्ये गङ्गायाङ्गावः । कूपे गर्गकुलमित्यत्र न स्यात् । कारकसञ्ज्ञा तरतमयोगो न भवतीत्यत्रापि सिद्धम्भवतीत्युक्तम् । औपश्लेषिकाधारस्याप्यधिकरणसञ्ज्ञेत्यत्र भाष्यान्तरमपि साधकमाह । * यमास इति * । अत्र दानक्रियाया उपश्लेष सम्बन्ध स च स्वाधिकरणकालपूर्वत्वरूप ; औपश्लेषिकमप्यधिकरण सप्तमीशक्यमित्यत्र मानान्तरमाह । * तदस्मिन्निति * । तत्र, एकादशाधिका अस्मिन् शत इत्यत्र शतस्याधिकरणत्वाभावात्कथ सप्तमीत्याशङ्क्यौपश्लेषिकमिदमधिकरणमित्युक्तम् ।

आधारो ॥ कारके इत्यधिकारात्क्रियाजनके एतत्प्रत्ययोपस्थितत्वादाधारः क्रियाया एव, तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणं, परम्परा च कर्तृकर्मद्वारि कैव व्याख्यानादित्याह । कर्तृकर्मद्वारेति । यद्यपि । कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव तथैवानुभवात् । साक्षात्तदाधारत्वे ऽपि आधारपदे स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किंच साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात्कालः पचति भूतानीतिवत् । एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव । यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः, अत एवाक्षशौण्डे इत्यादौ समासः । अत्र आसत्त्यादिक्रियान्तर्भावेन बोधाननुभवात्क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम् । मूले वृक्षः कपिसंयोगीत्यादावस्तिक्रियाध्याहृत्य तस्याः स्वकर्तृकपिसंयोगित्वद्वारा मूलवृत्तित्वादाधारत्वं विशिष्टस्य मूलवृत्तित्वबोधेऽन्यत्राश्रयत्वे तद्विशिष्टस्याभावप्रतीतेः कपिसंयोगे तदवच्छेद्यत्वं फलतीति दिक् ।

---

* तदाश्रयस्य * । क्रियाश्रयस्य । * व्याख्यानादिति * । "कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति" हर्युक्तिमूलकव्याख्यानादित्यर्थः । हरिकारिकायां यदुक्तमसाक्षाद्धारयत्क्रियामिति तद्व्यभिचारोऽपि च विद्यतेत्याह । * यद्यपीति * । ननु सम्भवति साक्षात्तदाधारत्वे कथम्परम्परया तदाधारस्य ग्रहणमत आह । * आधारपद इति * । साक्षात्तदाधारस्य तु चैत्रादितुल्यत्वमेवेत्याशयेनाह । * किञ्चेति * । तत्र दृष्टान्तमाह । * काल इति * । * एवञ्च * । परम्पराधारस्य ग्रहणसिद्धौ च । * अस्य * । आधारस्य । * अत एव * । पूर्वोक्तनियमस्वीकारादेव । कारकाणां क्रियान्वयित्वमिति नियमोऽप्यधिकरणविषये परम्परयैव । * अक्षशौण्ड इत्यादाविति * । यथा कटे शेते चैत्र इतिवाक्यात्कटाधिकरणचैत्रकर्तृकं शयनमितिबोधे तथाक्षेषु शौण्ड इति वाक्यादपि अक्षाधिकरणकशौण्डकर्तृका भवनक्रियेत्येवंरीत्या बोधात्साक्षादेव सम्बन्धस्तस्य शौण्डादिभिः सामर्थ्यमिति समाससंज्ञासिद्धिः । * अत्र * । अक्षशौण्ड इत्यादौ । * न युक्तमिति * । भाष्यकृता तस्यार्थस्यानुक्तेरिति शेषः । यत्र तु क्रियावाचकम्पदन्न श्रूयते तत्रापि तदन्वययोग्यक्रियावाचकम्पदमध्याहृत्य क्रियाधारत्वमुपपादनीयम् । तदाह । * मूले वृक्ष इति * । फलतीति * । एवमभिधानेन कपिसंयोगादौ मूलाद्यवच्छेद्यत्वाद्यवगाहिनी मानसी प्रतीतिरित्युक्तम् । तत्र कटे शेते स्थाल्याम्पचतीत्यादावाधारत्वेनाभिमते कर्तृकर्मणोः संयोगोऽस्तीति तद्द्वाराधारत्वम् । क्व निरवच्छेदक-

शेषषष्ठ्यपवादो ऽयं साधुनिपुणाभ्यामित्येव सिद्धेर्न चार्थमत्र साधुग्रहणन्तेन तत्त्वकथने ऽपि भवति । सूत्रेऽर्चाग्रहणन्तु निपुणार्थम् । निमित्तादिति । निमित्तवाचकात् सप्तमी भवति तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योग इत्यर्थः । निमित्तञ्चात्र क्रियाफलम्, एवञ्च फल सप्तम्यर्थः । चर्मणीति । चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनत्वात् । कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम् । द्वीपिचर्मणोरण्डकोशमृगयोश्च समवाय इतरयोः सयोगः । मुक्ताफलाय करिण रघुवीरेत्यादौ क्रियार्थोपपदस्येति चतुर्थी । घ्नन्तीति शेषः । मुक्ताफलान्याहर्तुमित्यर्थः ॥

यस्य च भा ॥ भावः क्रिया । ततः ज्ञापकक्रियाश्रयवाचकात्, तेन

---

धातुसामान्यकर्मतया तत्त्यागे मानाभाव । पदसन्दर्भस्यापि शब्दत्वात्मकसामान्यरूपेण प्रकृतधात्वर्थकर्मतया कस्मिंश्चिदिति विशेषाकाङ्क्षायां सामान्यज्ञानपूर्विका भवतीति तस्यापि ग्रहणमिति । एतद्व्यतिरिक्तव्याख्यानोत्तरम्मूले निमित्तात्कर्मयोग इति यस्य चेति च सूत्र व्याख्याय साध्वसाधुप्रयोग इति वार्त्तिक व्याख्यातम् तन्न युक्तम् । भाष्ये कस्येन्वयस्येत्येतद्व्याख्यानानन्तर साध्वसाधुप्रयोगे चेत्यस्य व्याख्यानादिति तेनैव क्रमेण व्याचष्टे । *साध्वसाध्विति* । *तत्त्वकथनेऽपीति* । अर्चा हि यत्राविद्यमानस्यापि धर्मस्य पूजनीयत्वद्योतनाय द्योतनन्तत्र भवतीति भाव । * निपुणार्थमिति * । अत एव मूले अर्चायाश्चिम् । निपुणो राज्ञो भृत्य इत्येवोपात्तम् । इतोऽग्रे अर्हाणामित्येतद्व्याख्यानानन्तरम्भाष्यीयक्रमानुरोधेन व्याख्यानमुचितम् । मूलकारानुरोधेन तु व्याचष्टे । * निमित्तादितीति * । *फल सप्तम्यर्थ इति* । अनिर्दिष्टार्थ इतिन्यायादिति भाव । *तल्लाभेच्छाधीनत्वादिति* । एवञ्च फलेच्छाया उपायेच्छाप्रयोजकत्वस्य प्रसिद्धत्वाद्धननरूपोपायेच्छाप्रयोजकेच्छाविषयचर्मलाभस्यैव मुख्यफलत्वम् । चर्मणस्तु लाभकर्मत्वात्फलत्वमुपचरितम्बोध्यम् । चर्मणि द्वीपिन हन्तीत्यादिभाष्योदाहरणादिति भाव । * स्वरूपसन्नेव निमित्तमिति * । न तु तस्य शाब्दबोधविषयत्वपर्यन्तमाग्रह इति शेष । कर्मयोग इत्यत्र योगपद सम्बन्धवाचि स च सम्बन्धः संयोगसमवायान्यतरात्मकस्तदभिप्रायेणाह । * द्वीपिचर्मणोरित्यादि* । *अण्डकोशमृगयोरिति * । यद्यपि मृगशब्दस्याल्पाच्तरत्व तथापि सीम्नि पुष्कलको हत इति भाष्ये येन क्रमेणोपादानङ्कृतन्तेनैव क्रमेण व्याख्यानमुचितमित्यभिप्रायेण पूर्वनिपातप्रकरण समुद्राभ्राद्ध इति सौत्रनिर्देशेनानित्यमतो वैपरीत्येन व्याख्यातम् । मुक्ताफलायेत्यत्र चतुर्थ्या असाधुत्वभ्रमनिवारणायाह । *मुक्ताफलायेति*

यस्य च भावेनेत्यत्र भावपदार्थाविवेचनतया यस्येत्युपादानाल्लक्षकक्रियाम स्यान्धिनाचफगवादिशब्दादेव सप्तमी प्रकृतसूत्रेण विधीयत इतिभ्रमनिरासाया

शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयो दर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोध्यम् । अन्यथोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते, कदाचिद्धि गोषु दुह्यमानास्वसौ गतः, इदञ्च मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्तते भाष्यस्वरसात् । राहूपरागे स्नायादित्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति अधिकरणसप्तम्येव । विवाहे नान्दीमुखङ्कुर्यादित्यत्र विवाहपदेन तत्पाक्काल उच्यते । गवान्दोहे आगत इत्यत्राप्यधिकरणसप्तम्येवेत्यन्यत्र

---

अन्यथा * । भूय सहचारदर्शनसहकारेण यत्र ज्ञाप्यज्ञापकभावप्रतीतिस्तत्रैवे तत्सूत्रप्रवृत्तिस्वीकारे । * मानान्तरेण * । प्रमाणान्तरेण * । ज्ञातस्वरूपस्यार्थस्य * । ज्ञात स्वरूप यस्य तादृस्यार्थस्य क्रियाद्वयस्य । यथा गोदोहगमनोजन्यस्मृतिविषय । पुरुषविशेषे गमनन्तु तद्देशाधिकरणस्थितिकर्तृत्वाभावेनानुमितम् । * भाष्यस्वरसादिति * । नावश्यन्तदेव लक्षणम्भवति येन पुन पुनर्लक्ष्यते । सकृदपि यन्निमित्तत्वाय कल्पते तदपि लक्षणम्भवतीतिभाष्यस्वरसादित्यर्थं । *निमित्तत्वाय* । परिच्छेद्यपरिच्छेदकभावनिमित्तत्वायेत्यर्थ । स च परिच्छेद्यपरिच्छेदकभाव क्रियाद्वारा कालयो फलति । क चित्तु निर्ज्ञातदेशक्रिया अनिर्ज्ञातदेशविशेषक्रियाया लक्षणम्भवति । यथा द्रव्य गुणकर्मान्यत्वे सति सत्त्वादित्यादौ । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर" इत्यादौ च । अत्र सतीत्यस्याध्याहार । सत्त्वादित्यत्र तु सतीत्यनन्तर सत इत्यस्याध्याहारो विवक्षित । नन्वेव राहूपरागे स्नायादित्यत्र ज्ञापकक्रियावाचकपदाभावात्कथमेतत्सूत्रप्रवृत्तिरत आह । * राहूपराग इत्यादि * । अधिकरणसप्तम्येवेति * । यद्यत्र राहूपरागे सति स्नायादित्येव क्रियावाचकपदाध्याहारेण यस्य च भावेनेतिसप्तमीत्युच्यते तदा राहूपरागसत्त्वस्नानयोर्लक्ष्यलक्षणभावस्य समानकालिकत्वस्य वा लाभेऽपिराहूपरागसत्त्वस्य स्नाननिमित्तत्वालाभ । इष्टापत्तिस्तु न । स्नाननिमित्तत्वाभावे सति आलस्यादिना शक्तेन स्नानाद्यकरणे प्रायश्चित्तविधेरनुपपत्तेः । अधिकरणसप्तम्यान्तु राहूपरागकालत्वावच्छेदेन स्नानस्य विधानेन राहूपरागस्य निमित्तत्वम्फलति । यथादेशोऽत्र इवेति भाव । तथैवाह । * विवाह इति * । लक्षणाया उदाहरणान्तरमप्याह । * गवामिति * । माना तरप्रसिद्धस्य कालदेशविशेषज्ञापनाय यत्र प्रयोगस्तत्रैव यस्य चेतिसप्तमीस्वीकारेणैतेषु स्नानादीनामेतैरेव विधानेन तत्सूत्राप्राप्ते । राहूपरागादीनानिर्ज्ञातदेशकालत्वाभावाच्चेति तदाह । * अन्यत्र विस्तर इति * । * अर्हाणाम् * । भाष्ये यद्यप्यत्र कारकार्हाणाञ्च

गोपदद्वुसमानपदयोरुभयोरपि सप्तमी सिद्धा । क्रियाश्रयः कर्ता कर्म च । तत्र ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम्, कर्मण्याह । गोष्विति । यत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा मङ्गने, काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा गोषु धोक्ष्यमाणास्वित्यादौ, काचित्स्वाधारकालान्तरकालेन यथा गोषु दुग्धास्वित्यादौ । ज्ञापकत्व सप्तम्यर्थस्तस्य च भावलक्षणमित्युक्तं. क्रियायामेवान्वयः लक्ष्यलक्षणाभावः

---

ह् । * ज्ञापकक्रियाश्रयवाचकादिति * । * क्रियापदस्य धात्वर्थप्रतिपादकतया फलव्यापारयोश्च धात्वर्थत्वादाह । * कर्ता कर्म चेति * । अत्र कर्म कर्तो चे तिवक्तव्ये कर्तृशब्दस्य प्रथममुपादान कर्मसंज्ञाविधायकसूत्रे कर्तृशब्दस्य प्रथमो पादानाभिप्रायेण । क्रिययो परस्पर ज्ञाप्यज्ञापकभाव प्रकृतसूत्रस्य प्रवृत्तौ नियामक । तत्र निर्ज्ञातकाला क्रियाऽनिर्ज्ञातकालक्रियाया ज्ञापिका अत्र कालो न वर्तमान एव विवक्षित किन्तु भूतभविष्यतोरपि सम्भवति यद्वक्ष्यमित्याशये न तत्तत्कालस्थले सूत्रप्रवृत्ति दर्शयति । * तत्र यत्र चित्क्रियेति * । तत्र ज्ञापकत्वमिति * । न च सप्तम्यर्थज्ञापकत्वे कृदन्तार्थविशेषणतापन्नक्रियाया एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयाऽन्वयायोग इतिव्युत्पत्तिविरोधाद्विशेषणतयाऽन्वयो न सम्भवतीति वाच्यम् । सप्तम्यर्थस्य क्रियाविशिष्टकृदन्तार्थस्याधेयतयाऽन्वयस्वीकारात् । विशेष्ये ज्ञापकान्वयबोधेऽपि विशेषणे पर्यवसानम् । स्वर्गी ध्वस्त इति यथा । तस्य च ज्ञापकत्वस्य स्वनिरूपितज्ञाप्यत्वसम्बन्धेन गतशब्दार्थघटकगमनक्रियायामन्वय । वस्तुतस्तु क्रिययोर्ज्ञाप्यज्ञापकभाव सूत्रप्रवृत्त्या पदस्य साधुतायामुपयुज्यते । सप्तम्यास्तु ज्ञापकत्वेनाभिप्रेता क्रियैवार्थः । तस्याश्च समानकालिकत्व ज्ञाप्यक्रियाया सम्बन्धो गोषु दुह्यमानासु गत इत्यादौ वर्तमानार्थककृत्समभिव्याहारे । एवञ्च दुह्यमानगोवृत्तिदोहनसमानकालिकगमनकर्तेति शाब्दबोध । यत्र भविष्यदर्थककृत्समभिव्याहारस्तत्र गोषु धोक्ष्यमाणास्वित्यादौ सप्तम्यर्थदोहनक्रियाया प्राक्कालिकत्वसम्बन्धेन ज्ञाप्यगमनक्रियायामन्वय । यत्र तु भूतार्थक कृत्तत्र गोषु दुग्धास्वित्यादौ सप्तम्यर्थदोहनक्रियाया उत्तरकालिकत्वसम्बन्धेन गमनक्रियायामन्वय इत्यूह्यम् । अस्मिन् पक्षे च ज्ञाप्यज्ञापकभावस्य शाब्दबोधाविषयत्वे लक्ष्यलक्षणभाव शाब्दबोधविषयैतच्छास्त्रप्रवृत्तौ निमित्तमित्युत्तरग्रन्थासङ्गतिरिति तु न वाच्यम् । तस्य पूर्वोक्तपक्षाभिप्रायकत्वात् । द्वितीयपक्षे तु वस्तुत क्रियाद्वयनिष्ठ इत्यर्थे कार्ये । ननु लक्ष्यलक्षणभावो यत्र भूय सहचारदर्शनन्तत्र युक्त । यथा वह्निधूमयो । प्रकृते तु गमनक्रिया सकृदेव जातेति कथङ्कालिकसम्बन्धघटितो ज्ञाप्यज्ञापकभाव इत्यत आह । * लक्ष्यलक्षणभाव इति * । *भावान्तरम् * । ज्ञानान्तरम् । *

नेऽन्वेति नित्यसाकाङ्क्षत्वाद् वृत्तिः । दायादशब्दः स्वामिपर्याय इत्यन्ये । षष्ठ्यामेवेति । शेषषष्ठीत्यनेनेति भावः ॥

तात्पर्ये इति । आसेवापदस्य तत्र रूढेरिति भावः । तात्पर्यञ्च तदेकव्यापारता । आयुक्तयोगेऽधिकरणत्वविवक्षाया सप्तमीमाप्तौ सम्बन्धविवक्षायामत्र कुशलयोगे च षष्ठीमाप्तौ वचनम् ॥

यतश्च ॥ जातिगुणक्रियासंज्ञाभिरिति । विशिष्टस्येत्यभ्याहारः । तद्विशिष्टस्य एकदेशस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणक पृथक्करणन्तद्वाचकात् षष्ठीत्यर्थः । यत इति किम् । यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनन्तत एव मा भूत् पष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात् । स्वघटितसमुदायावधिकस्वेतरसमुदाय-

---

दायादः * गवादिकञ्चेति * । गवां गोषु वा दायाद इत्यत्रेत्यादिः । * स्वामिपर्याय इति * । अस्यात्रेत्यादिः । एतेन पृथिव्या दायादो राजेति प्रयोगापत्तिनिरासः ।

नन्वासेवापदाद्दक्षरमर्यादया तात्पर्यस्य न लाभ इत्यत आह । * आसेवापदस्येति * । * तदेकपरता * । तन्मात्रसाध्यकप्रवृत्तिमत्त्वम् । * अधिकरणत्वविवक्षयेति * । वैषयिकाधारत्वविवक्षयेत्यर्थः । * अत्र * । आयुक्तशब्दयोगे । * वचनमिति * । षष्ठ्यर्थे सप्तम्यर्थेञ्च वचनमित्यर्थः ।

यतश्च निर्द्धारणमितिसूत्राद्यथाश्रुतादयस्मात्समुदायान्निर्द्धारणम् पृथक्करणन्तादृशसमुदायघटकावृत्तिधर्मवत्त्वबोधन यत्र तत्र तादृशसमुदायवाचकप्रातिपदिकात् षष्ठीसप्तम्याविरयर्थः प्रतीयते परन्त्वयन्न युक्त । नराणां क्षत्रियः शूर इत्यत्र नृशब्दस्य समुदायवाचकत्वाभावादनुपपत्तिरत सूत्रार्थ उक्तो मूले जातिगुणक्रियासंज्ञादिभिरिति । एवमपि जात्यादिभिरेव पृथक्करणमिति भ्रान्तिर्भवतीत्यत आह । * विशिष्टस्येत्यध्याहार इति * । एवमपि जात्यादिविशिष्टस्य यतो निर्द्धारणमिति भ्रम स्यादत पूरणेन व्याचष्टे । * एकदेशस्येति * । एतेन तादृशसमुदायवृत्तिधर्माश्रयस्य लाभ । यथा नराणां शूर इत्यत्र नृसमुदायवृत्तिनरत्वाश्रयस्य क्षत्रियस्य जातिविशिष्टस्य लाभ । समुदायवृत्तित्वञ्च समुदायत्वाश्रयवृत्तित्वमेव न तु समुदायत्वपर्याप्त्यधिकरणपर्याप्तत्वम् । क्षत्रियत्वस्य तथात्वासम्भवात् । न हि नृत्व समुदायत्वपर्याप्त्यधिकरणे समुदाय पर्याप्तम् । तस्य प्रत्येकपर्याप्तत्वात् । एवञ्च प्रकृते नृशब्दो नृसमुदायबोधकतया तादृशसमुदाये वर्तमान यत्समुदायत्व स्वरूपसम्बन्धेन तादृशसमुदायत्वाश्रयवृत्तिनृत्वावच्छिन्नस्य लाभ । क्षत्रियपदार्थश्चात्रैकदेश । * स्वघटितसमुदायात् * । नृसमुदायात् । * स्वेतरसमुदायघटकेति * । स च ब्राह्मणादि, । स्वमेकदेशो जात्यादिविशिष्ट । स्वेतरेत्यस्य समुदायघटकेन्वय । तस्य च व्यावृत्तौ

विस्तरः। अर्हाणाम्। कर्तृत्वार्हाणाम्। तद्वैपरित्ये अर्हाणामकर्तृत्वेनर्हाणाञ्च कर्तृत्वे इत्यर्थः। वाक्यचतुष्टयमेतत्, कर्तृसमर्पकाच्च सप्तमीत्यर्थः। सप्तम्यान्तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव। लक्ष्यलक्षणभावाविवक्षार्थमिदम्। सत्स्विति। सन्तो हि तरणक्रियाकर्तृत्वार्हाः तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमिति बोधः। स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः। असत्स्विति। तरणक्रियाकर्तृत्वानर्हाणान्तदकर्तृत्वमत्र। यद्यपि स्थितिक्रिया कर्तृत्वार्हत्वेनेद सिद्ध तथाप्यसत्तान्तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः। सत्स्विति। तरणक्रियाकर्तृत्वार्हाणान्तदकर्तृत्वमत्र। असत्स्विति। तरणकर्तृत्वानर्हाणान्तत्कर्तृत्वम्॥

षष्ठी चा॥ अनादरइति विषयसप्तमी, यस्य च भावेनेत्याद्यनुवर्तते। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः। फलितमाह, अनादराधिक्यइति। लक्ष्यलक्षणाभावः षष्ठ्यर्थः। अनादरविशिष्ट मव्रजनन्धात्वर्थः। तत्र षष्ठी तात्पर्यग्राहिका, अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः॥

स्वामीश्वरा॥ शब्दपरत्वाद्विरूपाणामपीति नैकशेषः। पर्यायान्तरमङ्ग्रहापत्त्या स्वाम्यर्थेइति नोक्तम्। दीयते इति व्युत्पत्त्या दीयमानाशरूप दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात्कः गवादिकश्च दीयमा-

---

कारकत्वे। कारकार्हाणाञ्च कारकत्वे सप्तमी वक्तव्या। अकारकार्हाणाञ्चाकारके सप्तमी वक्तव्या। ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते इति। तद्विपर्यासे च सप्तमी वक्तव्या ऋद्धेषु आसीनेषु मूर्खा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति इत्युक्तम्। कारकशब्दोऽत्र भावप्रधानः। कारकत्वमर्हन्ति ते कारकार्हा इत्यर्थः। तथापि प्रत्यासत्त्या अर्हता कारकत्वस्यैव लभ्यत इत्याशयेन कारकशब्दः परित्यक्तः। अत्रार्हत्वमनर्हत्वं वा न भिन्नक्रियामादाय किन्त्वेकक्रियामादायैव। अन्यथा सर्वेषामेव यत्किञ्चित्क्रियाकर्तृत्वार्हतयाऽनर्हाणामप्रसिद्धिः स्यात्। अर्हाणामिति वचनस्य फलान्तरमप्याह। * यद्यपीत्यादि *।

षष्ठी चानादर इति सूत्रे यस्य च भावेनेत्याद्यनुवृत्तौ यादृशो वाक्यार्थस्तमाह *। * अनादरे गम्यमाने इति *। * षष्ठी तात्पर्येति *। इदमुपलक्षणम्। सप्तम्यपि तत्त्वे तात्पर्यग्राहिका। वैशिष्ट्यञ्च समानकर्तृकत्वस्योत्तरकालिकत्वोभयसम्बन्धेन।

* पर्यायान्तरेति *। प्रभ्वादेरित्यर्थः। समुदायविशेषणत्वेऽर्थासङ्गतिपरिहा-

पञ्चमी वि॥ यतश्च निर्धारणमित्यनुवर्तते विभागोऽत्र भेदः तत्र निर्धारणे सर्वत्र यथाकथ चिद्भेदस्य सत्वेन विभक्तग्रहणसामर्थ्यात् यत्र भेद एव न तु केनाप्युपात्तरूपेण भेदस्तत्रैव प्रवृत्तिरित्याह, भेद एवेति । अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव । पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । एवञ्च त्रितयोपादानएव निर्धारणप्रतीतिरिति पुरुषोत्तम इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति समाससिद्धिरिति तरप्सूत्रे कैयटः ॥

साधुनि ॥ निपूर्वाद् णुण कर्मणि शुभे इत्यत इगुपधलक्षणः कः अर्चतेश्च भौवादिकाद् गुरोश्च हल इत्यप्रत्ययः । अर्चा । चौरादिकात्तु ण्यासश्रन्थेति युच् स्यात् पठ्यपवादो ऽयम् । अमत्यादिभिरिति । लक्षणेत्थमिति

---

* पञ्चमी वि * । अस्मिन् सूत्रे अनुवर्त्तमाननिर्द्धारणपदमवृत्तिधर्मप्रकारकज्ञानविषयत्वपरमेव । एतद्घटकाभावप्रतियोगिवृत्तित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नस्य निरूपितत्वसम्बन्धेनान्वयो निर्द्धारणस्य च स्वरूपसम्बन्धेन भेदाश्रयविशेषणत्वम् । भेदश्च प्रकृत्यर्थतावच्छेदकानाश्रयत्वमेवात्र पारिभाषिको विभक्तग्रहणसामर्थ्यान्न त्वन्योन्याभाव एवञ्च यत्सिद्धन्तदाह । * तत्र निर्द्धारण इति * । * पाटलिपुत्रकावधिकेति * । अवधित्वमत्र निरूपकत्वमेव संसर्गघटकतया भासते । एवं सति यादृशो वाक्यार्थबोधस्तमाह । * पाटलिपुत्रकावधिकेति * । * त्रितयोपादान इति * । निरुक्तनिर्द्धारणनिरूपकवाचकस्य तदाश्रयवाचकस्य निरुक्तनिर्द्धारणप्रयोजकधर्मवाचकस्य च यत्रोपादान शब्देनोपादानेन प्रतीतिस्तत्रैतत्सूत्रनिष्पन्नपञ्चम्यन्तस्य साधुत्वमिति फलितम् । यत्र तु साकाश्यकानाम्पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमा इति प्रयुज्यते तत्र निर्द्धार्यमाणेषु पाटलिपुत्रकेषु न भेद । एक च शाब्दार्थैकबुद्धिविषयत्वरूपसाहित्याश्रयत्वेनाभेदस्यापि सत्त्वात् । सा बुद्धिश्च पूर्वकालिकी साकाश्यकाश्च पाटलिपुत्रकाश्चाभिरूपा इत्याकारो ग्राह्येति न तत्र पञ्चमी । ननु पुरुषोत्तम इत्यत्र पुरुषाणामुत्तम इत्यर्थे प्रतीयते । एवञ्चात्र पूर्वसूत्रेण षष्ठी वाच्या तथा च न निर्द्धारण इति सूत्रेण समासनिषेधापत्तिरत आह । * सम्बन्धसामान्य इति * । तथा च नञानिर्द्धारण इति सूत्रप्राप्तिरिति भाव । * कैयट इति * । अत्रारुचिबीजन्तु पुरुषोत्तम इत्यत्र षष्ठीसमाससत्त्वे हि तदुक्तरीत्या पुरुषोत्तमपदस्य साधुत्वङ्कल्पनीयम् । स एव तु न । उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृत इति वाक्यात्कर्मधारयस्यैव प्रतीते । न चोत्तमपदस्य पूर्वनिपातापत्ति । राजदन्तादित्वात्पूर्वनिपातप्रकरणस्यानित्यत्वाद्वा ।

* अर्चतेश्चेति * । अर्चतेस्त्विवत्यर्थ । गणपाठे भत्यादिगणपाठाभावादाह । * लक्षण इति * । न च साधुशब्दोपादानमत्र विफलम् साध्वसाधुप्रयोगे चेत्येव

घटकव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च सम्बन्धो विभक्त्यर्थः । नृसमुदायावधिकद्विजेतरनरव्यावृत्तश्रेष्ठत्वकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः। संसर्गघटककरणं श्रेष्ठत्वादिरूपमेव प्रत्यासत्तेः । अत एव न निर्धारणइति सूत्रबोधितनिर्धारणस्य विभक्त्यर्थत्वं सङ्गच्छते । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनं तिरोहितावयवभेदविवक्षया निर्धारणविषये एकवचनं त्वसाविति कारके इति सूत्रे भाष्ये स्पष्टं, तत्र हि निर्धारणे कारकेष्विति भूपादिष्वित्युक्तम् । मिदचोऽन्त्यादित्यादौ तु सौत्रो निर्देशइति तदाशयः । द्वन्द्वः सामासिकस्य चेत्यत्र समाससमूहमध्ये इत्यर्थः । समूहेऽर्थेऽपिचेति ठक् ॥

---

तादृशसमुदायघटकावृत्तिर्धर्मः शूरत्वम्तत्करणकम्पृथक्करणञ्च क्षत्रियस्य शूरत्वाश्रयत्वबोधनमेवेति नृशब्दादत्र षष्ठ्युपपत्तिः । यद्यपि तद्धर्माश्रयत्वबोधनस्य तद्धर्मप्रकारकबोधानुकूलव्यापाररूपतया तस्य धर्मस्य करणत्वं सम्भवति । तथापि तद्धर्मवत्त्वबोधने तस्य धर्मस्य करणत्वविवक्षयैव हेतुः । एवञ्च जात्यादिविशिष्टस्य यद्धर्मावच्छिन्नस्य तादृशजात्यादिशून्यतद्धर्मावच्छिन्नावृत्तिविधेयवत्त्वबोधनं यत्र तत्र तद्धर्मावच्छिन्नवाचकप्रातिपदिकात् षष्ठीसप्तम्यौ भवत इति सूत्रार्थे पर्यवसन्नः । यथा क्षत्रियत्वविशिष्टस्य नरत्वावच्छिन्नस्य क्षत्रियत्वशून्यनरत्वावच्छिन्नब्राह्मणावृत्तिशूरत्ववत्त्वबोधनं नराणां क्षत्रियः शूर इत्यत्रास्तीति भवति नृशब्दाद्विभक्तिः । यतः इत्यस्याभावे यस्य जातिविशिष्टस्येत्यस्य लाभः स्यात्तदा क्षत्रियपदादेव षष्ठी स्यादित्याशयेनाह । * यतः किमित्यादि * । ननु क्षत्रियपदात्प्रथमा परत्वात्स्यादत आह । * षष्ठ्यपवादत्वादिति * । * अत एव * । निरुक्तस्य विभक्त्यर्थत्वादेव । नृणामिति बहुवचनोपपत्तये आह * उद्भूतावयवेति * । यद्धर्मावच्छिन्नस्येत्युपादानान्नराणां व्याघ्रः शूर इति न किन्तु नरेभ्यो व्याघ्रः शूर इत्येव । तादृशजात्यादिशून्येत्युपादानाद्विधेयतया विवक्षितस्य शूरत्वस्य नरत्वावच्छिन्नावृत्तित्वबाधेऽपि न क्षतिः । तद्धर्मावच्छिन्नावृत्तित्वम्परित्यज्य तादृशजात्यादिशून्ययत्किञ्चिदवृत्तित्वनिवेशे नराणां क्षत्रियो गौरः इत्यपि स्यात् । गौरत्वस्य क्षत्रियत्वशून्यशूद्रावृत्तित्वात् । तादृशजात्यादिशून्यसामान्यावृत्तित्वनिवेशेऽस्य प्रयोगस्यापत्तिनिरासेऽपि नराणां क्षत्रियः शूर इत्यस्यैवानुपपत्तिः । शूरत्वस्य विधेयस्य क्षत्रियत्वशून्यसामान्यान्तर्गतरक्षआदिवृत्तित्वेन क्षत्रियत्वशून्यसामान्यावृत्तित्वबाधादतस्तद्धर्मावच्छिन्नावृत्तित्वनिवेशः । ननु निर्धारणस्य यदि नैकवचनं तदा गीतावाक्यस्य का गतिरत आह । * द्वन्द्व इत्यादि * ।

स्मिन्नधिकमिति सूत्रभाष्येतु उपश्लिष्टपदाध्याहारेणोपश्लेषिके ऽधिकरणे सप्तमीत्युक्तम् । कर्मणिक्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरिणेति प्रथमैव ।

उपपरार्द्धे इति । उपोधिके चेति कर्मप्रवचनीयत्वम् । ननु मामुद्दिश्य-विनियोक्ष्यतइत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह । अगतित्वादिति । तिङि चेति । उदात्तवति तिङन्ते गतिर्निहन्यतइत्यर्थः ।

---

क्रियायोगाभावादिति भाव । इदमनध्याहारपक्षेऽध्याहारे त्वधिकरणसप्तम्येव तदाह । * तदस्मिन्नेति * । यश्च कर्मार्थकाध्यारूढशब्दात्क्तनि कृते उत्तरपदलोपे च सिद्धोऽधिकशब्दस्तद्योगे त्वाह । *कर्मणीति * । अधिकमितिसूत्रेण तन्त्रेणोभयोरप्यधिकशब्दयोर्निपातनादिति भाव । अधिकमितिसूत्रे भाष्ये स्पष्टमेतत् ।

उपशब्दस्य कर्मप्रवचनीयत्वमुपपादयति । * उपोऽधिक इति * । परार्द्धादधिकेत्यत्र पूर्वोक्तज्ञापकादेव पञ्चमी । मूले पर्यायेणेति । यदि यस्य चेश्वरवचनमित्यत्र यच्छब्द स्ववाचीश्वरशब्दस्तु धर्मिपर एव तदा यस्य स्वस्येश्वर उच्यते तद्वाचकात्सप्तमीत्यर्थो यदा तु यच्छब्द स्वामिपर ईश्वरशब्दश्च भाव प्रधानत्वेनेश्वरस्तदा यस्य स्वामिन ईश्वरत्वमुच्यते तद्वाचकात्सप्तमीत्यर्थे स्वामिवाचकात्सप्तमीत्यर्थ । उभयत्राप्यधिरीश्वर इति कर्मप्रवचनीयसंज्ञा । इयञ्च सप्तमी विशेषणवाचकादेव । षष्ठ्यपवादत्वात् । विशेष्यवाचकात्तु प्रातिपदिकार्थे प्रथमैव । अधिभुवीत्यस्माद् भूमिनिरूपितस्वामित्ववानिति बोध । अधिरा-म इत्येतस्मात्तु रामनिरूपितस्वत्ववती भूरितिबोध इति भाव । अधिकशब्दस्य शौण्डादिगणे पाठफलमाह । * सप्तमी शौण्डैरितीति * । यदा तु विभक्त्यर्थेऽव्ययीभावस्तदा त्वधिरामम्भूरिति प्रयोग । * ईश्वरेऽर्थ इति * । गम्यमान इत्यर्थ । तदुपपादयति । * विनियोक्तुरिति * । ननु मामित्यत्र कर्मणिद्वितीयेतिसूत्रेणैव द्वितीया भविष्यति किङ्कर्मप्रवचनीयसंज्ञयेत्याशयेन शङ्कते । * नन्विति * । *अत्रेति* । यदत्र मामधिकरिष्यतीत्यत्रेत्यर्थ । * उदात्तवत्त्वमिति * । विकरणेभ्यो नियमस्य बलवत्त्वेन करिष्यतीत्यत्र तिङि कृते विकरणे च कृते उदात्तवत्त्वमिति । * सर्वेष्टसिद्धिरिति * । सर्वेषामिष्टानाम्निघातवारणकर्मप्रवचनीयसंज्ञासाफल्योदात्तश्रवणरूपाणामित्यर्थ । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानीति भाष्यकारोक्तेर्मङ्गलस्यावश्यकत्वाभिप्रायेणात्र सिद्धिशब्दोपादानम् । मूलेऽप्यधिरीश्वर इतिसूत्रादीश्वरइति विभाषा कृञीति सूत्रेऽनुवर्त्ततेऽतस्तज्ज्ञानेनेश्वरस्मरणरूपमङ्गल सर्वेषाम्भवत्वित्यभिप्रायेण प्रकरणान्तेऽस्य सूत्रस्योपन्यास इति शिवम् ॥

सूत्रोपात्ताः प्रत्ययादयः ॥

नक्षत्रे च ॥ लुप्शब्देन लुप्सञ्ज्ञया लुप्तप्रत्ययार्थो लक्ष्यते इति बोध्यम् । अधिकरणे किम् । अद्य पुष्यः । असत्यान्वदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थे एव स्यात् । मूलेनेति । नक्षत्रेण युक्तः काल इत्यणो लुबविशेष इति लुप् । नक्षत्रे किम् । पञ्चालेषु तिष्ठन्ति । जनपदे लुबिति लुप् ॥

सप्तमीपञ्चम्यौ ॥ कालाध्वनोरित्यतस्तदनुवर्तते तच्च पञ्चम्या विपरिणम्यते मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः बोधस्तु शक्तित्वेन शक्तिद्वयस्य न तु द्वित्वेनेति बोध्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह । शक्तिद्वयमध्ये यावितिः । कर्तृत्वादिशक्तिरेव कारकम् । सा च क्रियाभेदेन भिन्नेति भावः । यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः । षष्ठ्यपवादो ऽयम् । स्वानन्तरकालवृत्तित्वादिक विभक्त्यर्थः । शक्तिद्वयमध्यवर्तित्वन्तु वस्तुमत्रिमित्तम् । अधिकशब्देनेति । कर्तरि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकशब्दयोगे लोकशब्दात् पञ्चम्याम्प्राप्तायाञ्ज्ञापकादिमे इष्येते इत्यर्थः । तद-

---

सिद्धस्यादिति वाच्यम् । मर्यादायाम्प्रत्यादियोगे नियमार्थमस्योपादानात् ।

प्रसितोत्सुकाभ्याम् । प्रसितशब्दोऽत्रासक्तपरो न तु प्रकर्षेण सित इत्यर्थकः । तत्परे प्रसितासक्त इतिकोशात् ।

लुप्शब्दस्याभावबोधकतया नक्षत्रवाचकस्य तस्मिन्नर्थे न वृत्तिरत आह । * लुप्शब्देनेति * । अधिकरण इति किमिति । मण्डूकप्लुत्याऽधिकरणशब्दानुवृत्ति किमर्थेत्यर्थः । अनुवृत्त्यभावे सर्वविभक्त्यपवादत्वमस्य स्यात् । अनिर्दिष्टा इतिन्यायात् । * अन्तरङ्गत्वात् * । इतरानपेक्षत्वेनान्तरङ्गत्वादित्यर्थः ॥

* द्विवचनान्तेन समास इति * । अन्यथा सूत्रस्यैवैतस्यानुपपत्तिः स्यादिति भावः । अभेदैकत्वसङ्ख्याया वृत्तौ मानानुरोधेनाह । * बोधस्त्विति * । कारकस्य द्रव्यरूपतया तन्मध्यत्वमनुपपन्नमिप्रायेणाह । * ननु कर्तृरूपस्येति * । * शक्तिरेव कारकमिति * । अत्र कारकपदेन विवक्षितेत्यर्थः धर्मधर्मिणोरभेदादिति भावः । * क्रियाभेदेन * । भिन्नभिन्नकालोत्पन्नक्रियाभेदेन । * तदाधारकालग्रहणादिति * । लक्षणया शक्त्याधारकालग्रहणादित्यर्थः । अत्र कालाध्वनोर्विभक्त्योश्च न यथासङ्ख्यमस्वरितत्वात् । * कर्तरि क्तप्रत्ययान्तेति * । अधिकमिति सूत्रेण कर्तरि क्तप्रत्यये कृते उत्तरपदलोपे च सिद्धो यस्तेन योग इत्यर्थः । * षष्ठ्यामिति * । निरूपितत्वार्थकषष्ठ्यामित्यर्थः * । ज्ञापकादिति * । उक्तसूत्रद्वयनिर्देशरूपज्ञापकादित्यर्थः । ननु सप्तम्यधिकरणे चेतिसूत्रेण सप्तमी-

मासः। अत एव यथा सादृश्य इति सूत्रे सादृश्यसम्पत्तीति माप्नोतीति भाष्य उक्तम्। यथाशब्देन तु भवत्येवोक्तसूत्रारम्भादिति भावः। ननु नित्यसमासत्वाद्वाक्यं दुर्लभमत आह। प्रतिशब्दस्येति। इह प्राचामनुरोधेन। वस्तुतः प्रतिस्थानमित्यादौ पन्थाभावसम्पादनेन मा चारितार्थ्या त स्मादर्थमर्थ प्रतिशब्दस्य वीप्सार्थचिताभावात्समासाभाप्त्या वाक्यं साध्विति तत्त्वम्। दृष्टौ द्विवचनन्तु न समासेन वीप्साया द्योतितत्वात् इति द्वन्द्वस्तूत्रे कैयट'। प्रतिना तस्या उक्तत्वादिति तत्त्वम्। शक्तिमनतिक्रम्येति। परावरयोगे चेति त्वा परावरत्वञ्च बोद्धम्। हरेः सादृश्यमिति। हरि टा सहेत्यलौकिकम्। वक्ष्यमाणेनेति। अत्र सूत्राल्लेखो वैचित्र्यार्थ' यथा सूत्रेपूत्तरत्र कृतस्य पूर्वत्रापकर्षेण वैचित्र्याय तद्वत्। अनुज्येष्ठं कार्य क्रमनुज्येष्ठ मणमतीत्यादौ करणत्वेनान्वयात्पर्गेनिष्ठितार्भतया समासमभिमेत्याह। ज्येष्ठस्यानुपूर्व्येणेति। आनुपूर्व्यं क्रमः पूर्वं क्रमेणेत्यनुपूर्वमिति सुप्रगृहीताव्ययेनाप्यनुना समास एतस्मात्सूत्रप्रयोगात्। युगपच्छब्देन तु न समासः सूत्रगृहीतत्वात्। उभयत्रापि स्वार्थे ष्यञ् तत् ध्वनयन्नाह। चक्रेण युगपदिति। गुणभूते इति। व्याख्यानात्सादृश्यइति स्वार्थे ष्यञिति भावः। सपक्षिसमृद्ध्यो' पर्यायत्वमाशङ्क्याह। ऋद्धेरिति धनधान्यादेरित्यर्थः। अनुरूपो योग्य, आत्मनः समस्यमानोत्तरपदस्य भाव० महाविभनिमित्त सत्र-

दकत्वम। इदञ्च यथार्थाभावपद्घटके नभि वर्तते तथा स्वस्मिन्नपीति पञ्चाच्छब्दस्य पश्चादर्थघटकत्वम्। * अत एव *। तदर्थबोधकपदघटकतया गृहीतेनेत्यादिक एवादेव। भाष्यप्रयोगादेव पश्चाच्छब्दस्य न समास इति तु गा युक्तम्। उक्तसूत्रत्रयभाष्यप्रयोगस्थले तदभावकल्पना यथासादृश्य इतिसूत्रस्थाभ्यानस्थले स्वशाकर्यानकान्यायेन यथार्थ इत्युक्त्वा सादृश्यसम्पत्तीत्युक्तमित्यस्य च कल्पनापेक्षया एव कल्पनायामत्र लाघवमिति भाव'। यथाशब्दस्य तु समासस्योपपत्तिमाह। * यथाश देनाग्निति *। * इदम् *। कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यं कथनम्। * तस्या *। वीप्साया। एवञ्च न वीप्साद्योतनाय द्विवचनम्। * योद्धम् *। यथाऽतिक्रम्य पर्वतमद्रौत्यत्र पर्वतनद्या योगो गम्यते तथा यथाशक्त्युत्तरत्र गच्छतीत्यत्र शक्तिसद्भावकालोत्तरदेशागमनकालयोरपि योगोऽनुदिष्टतां द्रष्टव्य। * वैचित्र्यार्थ इति *। तदाह। * यथासूत्रेष्विति *। करणत्वेनान्वयात्। क्रमस्य करणत्वेनान्वयात्। * युगप च्छब्देनेति *। अत एव तत्र सचक्रमित्युक्तम। एतेन युगपच्चाद इत्यत्राव्ययीभाव इति कस्य चिदुक्तिः प्रत्युक्ता। * व्याख्यानात् *। सादृश्यशब्दापादोनमूल्कात्। गुणभूते सादृश्य इत्यस्य सादृश्य इत्यनेन कथं लाभ इत्यत आह। * स्वार्थ इति *। अन्यथा पूर्वपदार्थप्रधानोऽव्ययीभाव इति भाष्यादत्र सादृश्यस्य गुणत्वान्न स्यात्। * क्षा

मानोपमेययोः समानविभक्तिकत्वसिद्धिः । एवञ्च पूर्वपदार्थप्राधान्याभावेन नात्राव्ययीभावप्रसक्तिस्तथापि प्रसिद्धत्वात्प्रकारवचनस्यैवात्र ग्रहणे तत्सामर्थ्याद् द्विगुणीत्यादाविव तदभावेऽपि समासःस्यादतोऽसादृश्य इति सूत्र कृतम्। तत्र कृते तु तद्भिन्नस्याव्युत्पन्नस्यैवात्र सूत्रे ग्रहणम्।न च यथाबलमित्याद्युदाहरणे प्रकारवाचिथालन्तस्यैव ग्रहणमस्तु सादृश्यसम्पत्तीत्यनेन च समासात् इद सूत्रञ्च मास्तु पूर्वसूत्रे यथाग्रहणञ्च वाच्यम् । एतत्सूत्रारम्भसामर्थ्येन तत्र तदप्रयोगात् । तत्रार्थे साधोरन्यत्रार्थेऽ साधुत्वापत्तेश्च । इदमेव सूत्रमव्युत्पन्नस्य तदर्थकस्य यथाशब्दस्य सत्त्वे मानम् । तथा च भाष्यम् । असादृश्यइत्युच्यते तत्रेद न सिद्ध्यति । यथाशक्ति यथाबल प्रकारे यस्थाल् तदन्तस्य सादृश्यएव वृत्तेरित्याशङ्क्य वीप्सादिवाचिनोऽत्र सूत्रे यथाबलमित्युदाहरणे च ग्रहणमित्यर्थकोक्त्यनन्तरमथ यः प्रकारवचने थाल् तदन्तस्य

---

अत्रोपनायकसमीपे प्रेषिता या दूती सा तन्नायकमुपभोगेन निवृत्तेच्छकृत्वा पुनर्नायिकाया निकटे समागत्य स नायातीत्युक्त्वा विरता तत उपभोगचिह्नेन स वृत्तान्त ज्ञात्वा ता दूतीम्प्रति नायिकाया उक्तिरियम् मम प्रिय रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यते । तेन कामुकविषय स्वापराधत्वप्रकाशन व्यङ्ग्यम् । उभयो वाच्यार्थव्यङ्ग्यार्थयो तत्र यथा व्यञ्जना न लक्षणया गतार्था तथात्रापि व्यञ्जना न गतार्थेत्याशय । * अत एव * । उपमानोपमेययोरभेदान्वयायेव । * पूर्वपदार्थप्राधान्याभाव * । पूर्वपदार्थत्वेनाभिप्रेतो यो यथाशब्दार्थस्तत्प्राधान्याभाव इत्यर्थ । * प्रसिद्धत्वात् * । सादृश्ये प्रसिद्धत्वात् । तत्सामर्थ्यात् * । समासविधानसामर्थ्यात् । * तदभावेपि * । पूर्वपदार्थप्राधान्याभावेऽपि । अत्र प्रकारवचने थालन्तस्य साधुत्वान्वाख्यानेऽपि कुशलशब्दस्य प्रवीण इव पदार्थानतिवृत्त्यादिष्वपि प्रयोगो भविष्यतीत्यभिप्रायेणाशङ्कते । * न चेति * । सादृश्यसम्पत्तीत्यनेन चेति * । तस्य सादृश्येपि वृत्तेर्दर्शनादिति भाव । * तत्र * । सादृश्ये । * तदप्रयोगात् * । पदार्थानतिवृत्तिबोधकस्याप्रयोगात् । * तत्रार्थे * । प्रकाररूपेऽर्थे । साधो । यथाशब्दस्य । एवञ्चाव्युत्पन्नयथाशब्दस्यैव समासबोधकमिद सूत्रमिति भाव । अत्र मानमाह । * इदमेवेति । * अतदर्थकस्य * । असादृश्यार्थकस्य । * इत्यर्थकोक्त्येति * । एव हि तत्र भाष्यमसादृश्य इति किमर्थम् । यथा देवदत्तस्तथा यज्ञदत्त । असादृश्य इत्युच्यते तत्रेदन्न सिध्यति । यथाशक्ति यथाबलमिति । किङ्कारणम् । यथेत्ययम्प्रकारवचने थाल् स च सादृश्ये वर्त्तते । नैष दोष । अय यथाशब्दोऽस्त्येवाव्युत्पन्न प्रातिपदिक वीप्सावाचि अस्ति प्रकारवचने थाल् । तत्र यदव्युत्पन्न वीप्सावाचि तस्येदङ्ग्रहणम् । अत्र वीप्साग्रहणमुपलक्षणम् । तेन योग्यतापदार्थानतिवृत्ती अपि यथार्थौ इति कैयट । अथ य प्रकारवचने थाल् तस्य

रैकत्वावगमे ऽर्थादुपमानत्वप्रतीतिरिति भावः। सूत्रे ऽपि सादृश्यशब्देनोपमानत्वमेव थाल्सूत्रे सादृश्यस्य प्रकारशब्देन ग्रहणे यत्सादृश्यवान्हरिस्तत्सादृश्यवान्हर इत्येव बोधः स्यान्न तु हरिसदृशो हर इति। भाष्यानुसारिणस्तु यथासादृश्ये इत्यस्य यथाशब्दः सुबन्तेन समस्यते सादृश्ये द्योत्ये नेत्यर्थः यथाशक्तियथाबलमित्याद्युदाहरणम्। अत एव भाष्ये असादृश्ये इति किमर्थं यथा देवदत्तस्तथा यज्ञदत्त इत्युक्तं न तु सूत्रमेव किमर्थमित्युक्तम्। यथार्थत्वेन तु न सिद्धिः सूत्रगृहीतान्वयेन तेनासमासात्। अत्र चेदमपि ज्ञापकम्। न च प्रकारवचने थाला निष्पन्नस्य यथाशब्दस्य सर्वथा सादृश्यद्योतकत्वेन सूत्रोदाहरणासम्भव इति सूत्रं व्यर्थमिति वाच्यम्। अत्र सूत्रे अव्युत्पन्नस्य वीप्सायोग्यतापदार्थानतिवृत्तिबोधकस्यैव ग्रहणेनादोषात्। यथाशक्ति इत्युदाहरणे एतदर्थक एव सः। यद्यपि यथाशब्द उपमानत्वं द्योतयतीति सकलाभियुक्तोक्तेर्यद्विशेषणानित्यादिमागुक्तबोधोत्तरमुपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्त इति बोधः। गृहीतविशेषधर्म एव च साधारणधर्मः। लक्षणामूलव्यञ्जनाजन्यबोधस्थल इवोभयोः शाब्दत्वं सुवचम्। अत एवोप-

---

स्य सादृश्येऽन्वित्यर्थः कृत। एवञ्च यथा हरिस्तथा हर इत्यत्र हरे सादृश्यं द्योतयतीति वाच्ये उपमानत्वं द्योतयतीत्यनुपपन्नमत आह। * सूत्रेऽपीति *। थाल्सूत्रे सामान्यस्य भेदको यो धर्मस्तद्रूप इत्युक्तत्वं तु थाल्यर्थे सादृश्य प्रकृतबोध्ये प्रकार इत्युक्तमत्र किं बीजमित्यत्र नियामकमाह। * थाल्सूत्र इत्यादि *। सिद्धान्तमाह। * भाष्यानुसारिणस्त्विति *। यथाशक्ति यथाबलमित्यस्य शक्तिमनतिक्रम्य इत्याद्यर्थः। * अत एव *। उक्तार्थस्याभिप्रेतत्वादेव। पदार्थानतिवृत्तौ समासार्थं यथाशब्दस्यावश्यकत्वेन सम्पूर्णसूत्रस्य वैयर्थ्यशङ्का न भवतीत्यभिप्राय। ननु पूर्वसूत्रेणैव समासे सिद्धेऽस्य सूत्रस्य वैयर्थ्यमत आह। * यथार्थत्वेनेति। * सूत्रगृहीतत्वात् *। यथार्थशब्दघटकत्वात्। * इदमपि *। एतत्सूत्रकरणमपि। उक्ताशयानभिज्ञ शङ्कते। * न चेति *। उक्ताशयं प्रकटयति। * अत्र सूत्र इत्यादि *। * तदर्थक एव स इति *। पदार्थानतिवृत्तिबोधकोयथाशब्द परिशेषादित्यर्थः। असादृश्यग्रहणस्य वैयर्थ्यशङ्कापरिहारायाह। * यद्यपीत्यादि *। द्योतयतीत्यस्य द्योतनया प्रतिपादयतीत्यर्थः। द्योतना च व्यञ्जनैव तयोपस्थापितार्थस्य शाब्दबोधविषयत्वं भवत्येव तदाह। * उपमानदेवदत्ताभिन्न इति। * लक्षणामूलव्यञ्जनास्थल इवेति *। यथा।

सा यान्ती सखि सुभग क्षण क्षणे दूनासि मम कृते।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया।

यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणमिति भाष्यात् । एवञ्च स्पष्टमेवोपक्रमोपसंहाराभ्यामस्य सूत्रस्य विधित्वं भाष्याल्लभ्यते । अत्र सूत्रे यथाशब्देन यथार्थस्य न ग्रहणं मानाभावात् । पूर्वसूत्रे तु वचनग्रहणात्तथाविभक्तिशब्देनेत्याहुः ॥

यावदव ॥ सङ्ख्यादिनैयत्यापरिच्छेदोऽवधारणम् । तद्बोधक यावदित्यव्ययं समस्यते इत्यर्थः । अवधारणे किम् । यावद्दत्तं तावद् भुक्तं कियद् भुक्तमिति नावधारयामीत्यर्थः ॥

सुप्प्रतिना । मात्राशब्दोऽल्पपर्यायः । पुनः सुप्ग्रहणमव्ययनिवृत्त्यर्थम् । अन्यथा दोषामन्यमहरित्यादौ दोषादीनां वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययेनैव समासः स्यात् । वृक्ष प्रति इति । लक्षणे प्रतिः । कर्मप्रवचनीयत्वन्तु प्रतेर्गतिर्गतावपिति निघाताभावायेत्याहुः ॥

अक्षशला ॥ समस्यन्त इति शेषः । पराजय एवेति । पञ्चिकानाम द्यूते पञ्चभिः कपर्दैर्भवति तत्र यदि सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयिता जयत्यन्यथा जीयते विपरीतवर्त्तने कर्तृत्वेनाक्षादेस्तृतीया वृत्तौ परस्तदर्थः अक्ष ङस् परीत्यलौकिकम् । नित्यसमासत्वादस्वपदविग्रहः । वैपरीत्यञ्च जयापेक्षयेति भावः । अक्षेणेति । अक्षाभ्यां विपरीतं वृत्तमित्याद्यर्थे न समासो ऽनभिधानात् । अक्षत्वेनैकाक्षबोधे, एवास्य साधुत्वम् । न तु

---

विद्यमानं यदव्ययमितिव्याख्यानं कुतो नेत्याशङ्क्याह । * अत्र सूत्र इति * ।

* अव्ययमिति * । अनव्यययावच्छब्दव्यावृत्तये अव्ययग्रहणानुवृत्ते । अव्ययस्य समास । यावन्त श्लोका इति वतुबन्तेनानव्ययेनास्वपदविग्रह । अन्यथाप्यव्ययमव्ययसंज्ञको दृष्ट । यावदमत्र ब्राह्मणानामन्त्रयस्वेत्यत्र यथा । *अव्ययनिवृत्त्यर्थमिति * । पूर्वसूत्रे तु तदनुवृत्तिरस्त्येव । * तादृशाव्ययेनेति * । तद्वृत्तात्पर्यवतात्पर्येण यत्र प्रयोगस्तत्रेति शेष ।

ननु वृक्षम्प्रतीत्यत्र समासे कर्मप्रवचनीयसंज्ञाविधान व्यर्थमत आह । * कर्मेति * ।

* तदर्थ इति * । विपरीतवर्त्तनमर्थ । मूलोक्तोदाहरण इति शेष । लौकिकविग्रहे वृत्तमितिक्रियावाचकशब्दसत्त्वात्तृतीयान्तमुक्तम् । समासे तदभावादाह । * अक्ष ङसिति * । * एवास्य साधुत्वमिति * । अक्षादयस्तृतीयान्ता पूर्वोक्तस्य यथा न तत् । कितवव्यवहारे च एकत्वेऽक्षशलाकयोरितिधार्त्तिकस्वारसात् । पूर्वोक्तस्य पूर्वसूत्रस्य । धातूनामनेकार्थत्वाद्वृत्तिरिह वर्त्तने । यथा न तत् । तद्वत्तन यथा पूर्वं वृत्तम तथा चेदित्यर्थ । स्पष्टप्रतिपत्त्यर्थमेतस्यैव विव-

ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति पूर्वपक्षिणोक्ते प्रतिषेधवचनसामर्थ्यान्न भविष्यतीति उत्तरितम्। नानेन भाष्येण प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणं साक्षाल्लभ्यत इति वक्तुं युक्तम्। असादृश्यइत्यस्य सूत्रे श्रवणात्। यद्यपि तद्विस्मरणेनायं पूर्वपक्ष इत्यपि वक्तुं शक्यम्। तथापि पूर्वेण प्राप्नोतीत्यादेरसङ्गतिः। तस्मादुदाहरणे थाऽन्तस्य ग्रहणं तत्र सादृश्यार्थकेन समासं कृत्वा ऽन्यपदार्थे प्रयोगे यथथाभाव इत्यभिमानेनार्थघटितं साधुत्वमित्यजानतो ऽव्युत्पन्नस्य तत्त्वे मानप्रश्ने वक्ष्यतः शङ्केयमिति युक्तं प्रतिषेधवचनसामर्थ्यादित्यर्थः। एवञ्च व्युत्पन्नतत्त्वाय तत्रे ऽर्थघटितं साधुत्वमित्यत्र चैतदेव मानमिति भावः। यत्तु प्रतिषेध इति प्रतीकमुपादाय यथार्थे यदव्ययं तेन समस्यत इति पूर्वेण सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्येति कैयटस्तन्न, सूत्रगृहीताव्ययेन तेन सूत्रेणासमासात्। नियमत्वापेक्षया तदर्थज्ञापकत्वस्यैवोचितत्वात्। तत्र सूत्रे यथार्थशब्देन सादृश्याग्रहणात्। अत एव तत्र सूत्रे सादृश्यग्रहणं चरितार्थम्। अत एव भगवता सादृश्यसम्पत्तीति प्राप्नोतीत्युक्तम्। न च सादृश्यग्रहणं गुणभूतसादृश्यग्रहणार्थम्। लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्त्योभयत्रापि तेन सिद्धेः। यथा योग्यताया यथार्थत्वे ऽपि रूपस्य योग्यमनुरूपमित्यादौ तद्वदर्थकेनापि समासस्तद्वत्। पूर्वसूत्रे यथार्थग्रहणं तदर्थकान्याव्ययग्रहणार्थम्। एवञ्च यथाशक्तीति तदुदाहरणमेवेति भाष्ये स्पष्टम्। वीप्सादावपि यथाशब्देन समासो भवत्येव।

---

ग्रहणङ्कस्मान्न भवति पूर्वेण प्राप्नोति। प्रतिषेधवचनसामर्थ्यान्न भविष्यतीति। एतद्भाष्ये ऽसादृश्ये यथेन इत्यस्योपमानोपमेयत्वपर्यालोचन इत्यर्थः। इदङ्ग्रहणमित्यस्यैतत्सूत्रीयमित्यर्थः। * तद्विस्मरणेन *। असादृश्य इत्यस्य विस्मरणेन। *असङ्गतिरिति*। तद्विस्मरणे पूर्वेण प्राप्तिशङ्काया एवाभावः स्यादिति भावः। तज्ज्ञाप्यप्रयोजनायाह। * तस्मादिति *। * कैयट इति *। सूत्रगृहीतेत्यादेस्तेनानङ्गीकारात्। परन्तु पूर्वोक्तरीत्या तथा कल्पनमावश्यकमित्याशयेनाह। * सूत्रगृहीतेति *। अन्यकृतं व्याख्यानं यथार्थग्रहणसम्भवदुक्तिकमप्यसङ्गतमित्याशयेनाह। * नियमत्वापेक्षयेति *। विधिनियमसम्भवे विधिरेव ज्यायान्। विशेषमाह। * तत्र सूत्र इति *। * अत एव *। सादृश्याग्रहणादेव। * अत एव *। पूर्वोक्तोऽर्थः। * इत्युक्तमिति *। न तु यथार्थमिति शेषः। मूलोक्तमनूद्य दूषयति। * न चेति *। * अन्याव्ययग्रहणार्थमिति *। तेन रूपस्य योग्यमनुरूपमित्यस्य सिद्धिः। * वीप्सादावपीति *। अव्ययाद्विना योग्यतापरिग्रहः। वीप्सायामुदाहरणं यथास्वमिति प्रसिद्धमेव। योग्यतायामुदाहरणन्तु यथास्वरूपं दक्षिणादानमित्यत्र ज्ञेयम्। नन्वस्मिन्नपि सूत्रे यथार्थे

दिपदघटितसमासरूपोद्देश्यामसिद्धा तेषु समाससञ्ज्ञाविधानस्यावश्यकत्वे- नार्थाधिकारानुरोधात्सर्वत्र तस्य विधेयसमर्पकत्वम् । प्रथमानिर्दिष्टमिति सूत्रे समास इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधायके लक्षणया ऽव्ययादीना- मुपसर्जनत्वं साधयितुं शक्यमिति न तदर्थं समाससञ्ज्ञाविधानं चरितार्थ- मिति भावः । विग्रहप्रदर्शनपरोक्तभाष्यादपि तस्यानित्यत्वं बोध्यम् ॥

लक्षणेनाभिप्रती ॥ अभिप्रती आभिमुख्यस्याग्निज्ञापकत्वसम्बन्धेनान्व- यस्य च द्योतकौ अग्निज्ञाप्य शलभकर्तृक पतनमिति बोधः । उदाहरणे तथाबोधे चाग्न्यभिमुखत्वं शलभपतनस्य लोकप्रसिद्धया मनसा गृह्यते इत्याभिमुख्यद्योतकताभिशब्दस्य अग्निज्ञाप्य शलभकर्तृक प्रत्यासत्त्याग्न्यभि मुखं पतनमिति बोध इत्यन्ये । कर्मप्रवचनीयद्योत्यसम्बन्धेनान्वयाद्वाक्ये द्वितीया तदाह । अग्निमभीति । लक्षणे नेति किम् । स्रुघ्नं प्रति गतः स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः । आभिमुख्ये किम् । वृक्षं प्रति विद्योतते इत्यादावाभिमुख्यद्योतनाभावे समासो मा भूदिति । अस्य समा- सस्य वैकल्पिकत्वेन पक्षे कर्मप्रवचनीयत्वे चरितार्थम् । अभिप्रती इति- किम् । अग्नेः सम्मुखं शलभाः पतन्तीत्यर्थः सांमुख्यार्थकसशब्देन लक्षणत्वस म्बन्धेनान्वये समासो मा भूदिति ।

अनुर्य ॥ लक्षणेनेति वर्त्तते समयेत्यधिकरणशक्तिप्रधानम् । यदिति सामान्ये नपुंसक द्वितीयान्तम् । य पदार्थं समयेत्यर्थद्योतकोऽनुस्तेन लक्षण- भूतेन तद्वाचकेन समस्यतइत्यर्थस्तदाह । यमिति । वनादेर्लक्षणत्वं समीप- द्वारा स्वसामीप्येन हि वनेनाशनिदेशो ज्ञाप्यते लक्षणत्वन्तु वस्तुसन्निमितं न तु तेन सम्बन्धेनान्वयस्तदाह । वनस्य समीपमिति ।

---

नेकेति * । नन्वव्ययमित्यादिसूत्रे समाससञ्ज्ञाविधानाभावे कथमुपसर्जनसञ्ज्ञे त्यत आह । * प्रथमानिर्दिष्टमितीति * । * उक्तभाष्यादपीति * । विस्पष्टं पटु रितिभाष्यादपीत्यर्थः ।

मानसबोधविषयस्य न शाब्दबोधविषयत्वमित्यभिप्रायेणाह । * अग्निज्ञा प्यमित्यादि * । द्योत्यस्याप्यर्थस्य शाब्दबोधविषयत्वं बहुषु दृष्टमिति तदत्रा प्युचितमित्याशयेनाह । * अग्निज्ञाप्यमिति * । * कर्मप्रवचनीयद्योत्यसम्बन्धे न * । लक्ष्यलक्षणभावेन । * द्योतनाभाव इति * । लक्ष्यलक्षणभावस्तु तत्रा पीष्यत एव । नन्वेवङ्कर्मप्रवचनीयसञ्ज्ञाविधानवैयर्थ्यमत आह । * अस्य समास स्येति * ।

* अशनिदेश इति * । अशनिगमनदेश इत्यर्थः । * तेन सम्बन्धेन * । लक्ष्यलक्षणभावसम्बन्धेन । एवञ्चानुगङ्गं वाराणसीत्यत्रानुशब्दद्योत्योऽर्थो दैर्घ्य

तेन रूपेणानेकार्थबोधः । एकत्वादिना बोधस्तु वृत्तौ नास्त्येवेति भाष्ये स्पष्टम् ॥

विभाषा ॥ यद्यपि एकार्थीभावे समासस्य व्यपेक्षायां वाक्यस्य च सिद्धेरिदं व्यर्थम् । एकार्थीभाव एव समाससञ्ज्ञादिविकल्पस्तु नेष्यते । एवं समासनिषेधसूत्राणि नित्य क्रीडेत्यत्र नित्यग्रहणञ्च व्यर्थं निषेधविषये एकार्थीभावाभावेन समासाभावात् । नित्याधिकारविषयेऽस्वभावेन वाक्याभावाच्च तथापि लक्षणैकचक्षुष्कान्मन्दान्प्रति एकार्थीभावो नित्यः क्व पाक्षिकः क्व नास्त्येवेत्यर्थबोधनार्थं सर्वमावश्यकम् । ध्वनितं चेदं समर्थानामिति सूत्रे भाष्ये । लक्षणैकचक्षुष्कं प्रति समर्थ इति सूत्रे भाष्ये तत्प्रत्याख्यातम् । एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पादिबोधकानीमानि । अत एव पारेमध्ये इति सूत्रे भाष्ये एकया वृत्तिविभाषापरया वृत्तिविषये ऽनित्योऽपवाद इत्युक्तम् । तत्र वृत्तिरेकार्थीभावः । एतत्सामर्थ्यादिति । अनेनैतत्करणात्तत्सम्बन्धेन तद्विषये एकार्थीभावस्य नित्यत्वमिति भावः । नन्वेवं सुप्सुपेत्यस्यापि नित्यतापत्तिः । एवञ्च भाष्ये सुप्सुपेत्युदाहरणभूते निस्पष्टपटुरित्यत्र निस्पष्ट पटुरिति विग्रहप्रदर्शनासङ्गतिरत आह । सुप्सुपेति त्विति । एतत्समासानुवादेनैवाव्ययीभावादिसञ्ज्ञाविधानेन सिद्धे पुनस्तैः समाससञ्ज्ञाविधानं सदानित्यत्वज्ञापकम् । उपपदमतिङ् कर्तृकरणे कृता आख्यातमाख्यातेनेत्यादावुद्देश्याप्रसिद्ध्या अनेकमन्यपदार्थे इत्यादौ व्या-

---

रणभाष्ये वृत्तमयथाद्योतन इति । * यथाशब्दो वैपरीत्ये विपरीतत्वद्योतने । पराजयद्योतन इति यावत् । * वृत्तौ नास्त्येवेति * । अस्य द्योतकाभाव इति शेषः । तेन कुमार्यगारम् । वध्वगारम् । यौष्माकीणस्तावकीन इत्यादौ सङ्ख्याऽऽगमसत्त्वेऽपि न क्षतिः ।

* नेष्यत इति * । न च सञ्ज्ञाया भावाभावाविष्येते इति भाष्यविरोधात् । न ह्येकार्थीभावे सञ्ज्ञाया अभाव इत्यर्थः । * ध्वनितञ्चेदमिति * । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । तत्र स्वभावतश्चैतद्भवति वाक्यञ्च वृत्तिश्चेत्यनेनोक्तसूत्रस्थभाष्येण ध्वनितमित्यर्थः । * तत्प्रत्याख्यातम् * । विभाषाऽधिकारस्य प्रत्याख्यानम् । प्रत्याख्यानम् । * अत एव * । एकार्थीभावविकल्पबोधकत्वादेव । * एतत्करणात् * । विभाषेतिसूत्रकरणात् । सुप्सुपेत्यस्य नित्यत्वाङ्गीकारे दोषमाह । * एवञ्चेति * । तस्य नित्यताङ्गीकारे चेत्यर्थः । ननु अव्ययमित्यादिसूत्रे समाससञ्ज्ञाविधानमेवास्त्वित्यत आह । * उपपदेति * । * उद्देश्याप्रसिद्धेति * । क्वचित्सुबुत्पत्तेः प्राक् समासस्येष्टत्वात् । क्वचित्सुबन्तत्वासम्भवादिति भावः । बहुव्रीहिसञ्ज्ञाविषयेऽपि क्वचिदप्रसिद्धिमाह । *अ

षष्ठीति। अयं भावः। महाविभाषैकार्थीभावस्य विकल्पबोधिका वृत्तिश्चैकार्थीभावे नित्येति येन नाप्राप्तिन्यायेनाव्ययीभावस्तत्पुरुषं बाधेत यथैकदेशिसमासः षष्ठीतत्पुरुषमिति पक्षे तल्लाभाय पुनर्वाग्रहणमिति संख्येत्यादित्रिसूत्री स्वभावात्समानाधिकरणविषया।

वंश इति। एकस्वभावः सन्तानप्रबन्धो वंशः, द्वौ मुनी पाणिनिकात्यायनौ त्रिमुनि भाष्यकृत् तौ च, स्वपदार्थप्राधान्ये एवाय समासः। नन्वेवं त्रिमुनि व्याकरणमिति सामानाधिकरण्यानुपपत्तिरत आह। विद्येति। अन्ये तु बहुव्रीहौ त्रिमुनि व्याकरणमव्ययीभावे व्याकरणस्येति स्वरभेदश्चेष्ट एवेत्याहुः। परे तु विद्यावशोनाम गुरुशिष्यपरम्परा। न चैतस्य मुनित्रयस्य तत्त्वे मानमस्ति त्रिमुनिव्याकरणस्येति यदीष्यते तदेद तिष्ठद्गुप्रभृतिषु पाठात्साध्यमित्याहुः। मूल तु वृत्त्यनुसारेण। किंच न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते इति न्यायेन द्विमुनीति व्यवहारासङ्गतिर्बोध्या। जन्मनोदाहरति। एकविंशतीति। एकविंशतिर्भरद्वाजवंश्या इति विग्रहः। वृत्तौ तृतीयासप्तम्योरिति सूत्रस्थभाष्यप्रयोगात्प्रामाण्येनोपकादिष्वनयोः पाठात् यञञोश्चेति लुगभावोबोध्यः॥

नदीभिश्च॥ अत्र च बहुवचननिर्देशान्न सञ्ज्ञाया ग्रहणं नापि शब्द-

---

यप्रवृत्त्युपायमाह। * अयम्भाव इति *। * एकस्वभाव *। समानस्वभाव। स्वभावशब्दोऽत्र धर्मवाची। * नन्वेवमिति *। स्वपदार्थप्राधान्यस्वीकारे इत्यर्थ।

* मूले विद्यातद्वतामिति *। तद्वत्त्वञ्चात्र तत्प्रणेतृत्वसम्बन्धेन। एवञ्च विद्यात्वात्मकधर्मसम्बन्धात्त्रिमुनिशब्दस्य यत्प्रवृत्तिनिमित्तन्तदारोपेण व्याकरणे त्रिमुनिशब्दस्य प्रवृत्तिरिति भाव। इम क्लेशम्परिहर्त्तुमुपायान्तरमाह। * अन्ये त्विति *। नन्वेवम्बहुव्रीहौ पूर्वपदप्रकृतिस्वरोऽव्ययीभावे त्वन्तोदात्तत्वमिति स्वरभेदापत्तिरत आह। * स्वरभेदश्चेति *। * इष्ट एवेति *। समासभेदेन स्वरभेदे इष्टापत्ते सर्वसम्मतत्वादिति भाव। लोकप्रसिद्ध्यनुसारेणाह। * परे त्विति *। नन्वेव त्रिमुनि व्याकरणस्येत्यस्य कथमुपपत्तिरत आह। * यदीष्यत इति *। ननु गर्गस्य गोत्रापत्यानाङ्कुलमित्यर्थ गर्गकुलमित्यत्र यथा यञञोश्चेतिसूत्रेण यञो लुग्भवति तथा एकविंशतिभारद्वाजमित्यत्राञो लुक् स्यादित्येतादृशप्रयोगानुपपत्तिरत आह। * वृत्तानिति *। * अनयोरिति *। अनयो एकविंशतिभारद्वाजम् त्रिपञ्चाशद्गौतममित्यनयोः।

ननु नदीभिश्चेतिसूत्र समानाधिकरणसमासमात्रबाधकमथ वा पुरस्तादपवादन्यायेन पूर्वकालैकेत्यस्य बाधकमुभयथा एकनदीतरेतिप्रयोगानुपपत्तिरत्य

यस्य दैर्घ्यमिति। यद्दैर्घ्यसदृशदैर्घ्यमित्यर्थः। अत्रापि लक्षणत्वं वस्तुसदेव निमित्तम्। तद् ध्वनयन्नाह गङ्गाया अन्विति। तद्द्योत्यसम्बन्धेनान्वयाभावान्न द्वितीया। उपलक्षितेति। विशिष्टेत्यर्थः। दैर्घ्यसदृशदैर्घ्यविशिष्टत्वमनोरर्थः। तथा बोधे च गङ्गाया ज्ञापकत्वस्य गङ्गासमीपे गत इति बोधे गङ्गाया ज्ञापकत्वस्य च नियमेन मनसा बोधादन्यलभ्यत्वेन नात्र तदनोर्द्योत्यमिति तात्पर्य्यम्। तेन सम्बन्धेनान्वये तु वनमनुगङ्गामन्विति द्वितीयैवेति बोध्यम्। निवेश्य गङ्गामनु तां महानदीं चमूमिति रामायणे प्रयोगात्। वाराणस्याः स्वरूपेण ज्ञातत्वेऽप्यायामवैशिष्ट्येन ज्ञाप्यत्वं बोध्यम्॥

तिष्ठद्गुप्र॥ चेनैषां वृत्त्यन्तरे प्रवेशो न। आतिष्ठद्गु जपेत्सन्ध्यां पश्चिमामायतीगवादिति भट्टिश्लोके आ तिष्ठद्गु आ आयतीगवादिति भिन्ने पदे। इह। उक्तोदाहरणद्वये। तत्राद्ये शत्रादेशमात्रम्। प्रथमासामानाधिकरण्यात्तदप्राप्तिः। यद्यपि पचन्पुरुष इतिवत्सिध्यति तथाप्युपायान्तरमिदम्। समासान्तश्चेति। इदमन्त्ये चेनान्यपदार्थे ऽव्ययीभाव इति बोद्ध्यम्। पक्षे

---

सदृशदैर्घ्यवद्देशे प्रथमतो भासमाने दैर्घ्ये गङ्गापदार्थस्याधेयतासम्बन्धेनान्वयो न त्वनेन गङ्गापदार्थस्य वाराणस्यामन्वयस्तदभिप्रायेणाह। * तद्द्योत्य सम्बन्धेनान्वयाभावादिति *। एवञ्च गङ्गापदार्थस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वाभावान्न द्वितीयेत्यर्थः।

यस्य चायाम इतिसूत्रविषये आह। * तथा बोध इति *। पूर्वसूत्रविषये आह। * वनस्य समीपङ्गत इतीति *। * तेन सम्बन्धेनान्वये त्विति *। अनुद्योत्यसम्बन्धेनान्वये त्वित्यर्थः। तत्र प्रमाणमाह। * निवेश्येति *। ननु ज्ञाप्यत्वं ज्ञापकत्वाभिमतविषयकज्ञानजन्यज्ञानविषयत्वमेव तच्चाज्ञातस्य सम्भवति प्रकृते च वाराणस्यास्तस्य तदा प्रथमं वाराणसीपूर्वमज्ञाता स्यात्तत्तु नेत्याशयेनाह। * वाराणस्या इति *।

वृत्त्यन्तरे प्रवेशो नेति *। समुच्चेतव्यस्याभावादेतदर्थमेव चकारः। उक्तं भाष्ये। किमर्थश्चकारः। एवकारार्थः। तिष्ठद्गुप्रभृतीन्येव। क्व मा भूत्। परमन्तिष्ठद्गु। अत्र चकारार्थ इत्यनेनैतत्सूचितं तिष्ठद्गुप्रभृतीन्येवैकार्थीभावविषयाणि न त्वेतेषां शब्दान्तरेणैकार्थीभाव। नन्वातिष्ठद्गु इत्यादौ समासान्तरे प्रवेशदर्शनादिदमयुक्तमत आह। * आतिष्ठद्गु जपेदिति *। * अन्यपदार्थेऽव्ययीभाव इति *। तिष्ठद्गुकालविशेषे। तिष्ठद्गुकालविशेष इति वक्तव्यम्। तिष्ठन्ति गावो यस्मिन् काल इतिभाष्यात्। * इदम् *। निपातनरूपम्। * अन्त्ये *। आयतीगवमित्यत्र। अव्ययीभावविषये अव्ययीभावाभावे तत्पुरु

यत्रालौकिकविग्रहवाक्ये समाससञ्ज्ञासमकालमेव समासान्ता इति सिद्धान्तः। न च पूर्वं समासान्ते तत्सन्नियोगशिष्टाद्युदात्तत्वे तदेकवाक्यतापन्ने पूर्वस्य निघाते च कृते पूर्वपदस्योदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वराप्रवृत्तौ डचश्चित्त्वं व्यर्थमिति वाच्यम्। तत्सामर्थ्येन समासान्तविधावाद्युदात्तश्चेत्यस्यासंबन्धज्ञापनात्। तेन समृद्धा पूर्यस्य समृद्धपुरो राजेत्यादौ पूर्वपदप्रकृतिस्वरसिद्धिः। द्वित्रिभ्यामिति सूत्रस्थं समासान्ता इत्येतत्परं

---

विष्यति। इदमिह सम्प्रधार्यम्। कप् क्रियताम्। ह्रस्वत्वमिति। परत्वात्कप्। समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम्। अन्तरङ्गतरं कप्। ननु चाय कप्समासान्त इत्युच्यते। तादर्थ्यात्ताच्छब्द्यम्भविष्यतीत्युक्तम्। न कपीतिनिषेधस्त्वनन्तरस्येतिन्यायेन केऽण इत्यस्यैव बाधक इति भावः। * अन्त इतिसूत्रे भाष्ये चेति *। तत्र हि किं समासस्यान्त उदात्त आहो स्विदुत्तरपदस्य। आद्ये इदम्प्रथमका इत्यादौ कपि पूर्वस्योपसङ्ख्यानङ्कर्तव्यम्। अन्त्येऽनूच इत्यादौ नञ्सुभ्यामित्यनेनान्त्याकारस्योदात्तत्वानापत्तिरित्युक्तम्। यदि समासे कृते समासान्तः प्रवर्तेत तदा इदम्प्रथमका इत्यत्र समासे कृते समासान्तपेक्षया परत्वाद्विदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्फुटैव पूर्वोक्तव्याख्यानेनयत्सिद्धान्तत्वमाह।*एवञ्चेति*।समाससञ्ज्ञासमकालमेवेत्यत्र समासपदमव्ययीभावादीनामप्युपलक्षणम्। समासार्थौ लौकिकविग्रहवाक्यस्यान्ता समासान्ता इति सिद्धान्ते शङ्कते। * न च पूर्वं समासान्त इति *। अत्र पूर्वमित्यस्य समाससञ्ज्ञाप्रयोज्यकार्यान्तरप्रवृत्तेः पूर्वमित्यर्थः।एतेन पूर्वोक्तसमकालत्वोक्तिविरोध इत्यपास्तम् *चित्त्वं व्यर्थमितीति*। प्रत्ययाद्युदात्तत्वेनैवान्तोदात्तत्वसिद्धेः। न च यस्य मते समाससञ्ज्ञोत्तरं समासान्तस्तन्मतेऽपि सति शिष्टत्वेन प्रत्ययस्वरस्य बहुव्रीह्यन्तोदात्तत्वं सिद्धमेवेति डचश्चित्त्वं व्यर्थमेव। बहुव्रीहौ प्रकृत्येति सूत्रेण पूर्वपदप्रकृतिस्वरविधानसामर्थ्यात्प्रत्ययस्वरो न भविष्यतीति वक्तुमशक्यम् कचविषये ,चारितार्थ्यादिति वाच्यम्। अनुदात्तम्पदमिति सूत्रे पदग्रहणस्य परिमाणार्थतया समासान्तस्य समासावयवत्वबोधनेन च पूर्वपदम्बहुव्रीहौ प्रकृत्या तञ्च वर्जयित्वा यावान्बहुव्रीह्यवयवः सन्निहितो भावो वा सोऽनुदात्त इत्यर्थेन डप्रत्ययस्यानुदात्तत्वस्याद्वश्चित्त्वं सफलमित्याशयात्। * तत्सामर्थ्येनेति *। डचश्चित्त्वसामर्थ्येनेत्यर्थः। * तेन *। आद्युदात्तश्चेत्यस्यासंबन्धेन। * पूर्वपदप्रकृतिस्वरसिद्धिरिति *। यदि समासान्तविधावाद्युदात्तश्चेत्यस्य सम्बन्धः स्यात्तदा तदेकवाक्यतापन्नशेषनिघातेन पूर्वपदस्यानुदात्तयोदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरो न स्यादिति भावः। तेन समृद्धशब्दस्वरस्यैव श्रवणं परिनिष्ठिते भवति। ननु समाससञ्ज्ञा-

स्वरूपस्याशब्दसञ्ज्ञात्वाच्च। किन्तु नदीत्यर्थग्रहणम्। तेन तद्वाचके सर्वत्र प्रवृत्तिः। एतच्च सर्वनामसञ्ज्ञासूत्रे भाष्ये स्पष्टम्। समाहारे चेति। तत्रैवेत्यर्थः। एवञ्च तदाविवक्षायां पूर्वकालैकेति समासे एकनदीतरः सिद्धो ऽन्यथा समानाधिकरणतत्पुरुषं बाधित्वाव्ययमिति नपुंसकह्रस्वापत्तिः। अन्यत्यन्त्वेतियोगविभागसिद्धोऽभियुक्तोक्तो गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरं यदीत्यत्र तु न योगविभागस्येष्टसिद्ध्यर्थत्वात्। भाष्यकृता तदनुक्तेश्चेति भावः॥

अन्यपदा॥ सङ्ख्येति निवृत्तम्। नदीग्रहणमनुवर्त्तते। सञ्ज्ञानवगमादिति। सञ्ज्ञेति कर्मण्यद्। तेन सञ्ज्ञिनो देशविशेषस्यानवगमादित्यर्थः। नित्यसमासइति। तत्सदृश इत्यर्थः। तत्सादृश्यञ्च समाससमानार्थकवाक्याभावेन। समासघटकपदानां विग्रहस्त्वस्त्येव महाविभाषाया असम्बन्धे मानाभावात्। अत एव द्वितीयातृतीयेति सूत्रे ऽन्यतरस्यांग्रहणेनोत्सर्गापवादयोर्महाविभाषाविषयत्वे ऽपवादाभावे उत्सर्गप्रवृत्तिरित्यर्थे ज्ञापिते वन्मघगङ्गमित्युदाहृतम्। अव्ययीभावेन मुक्ते बहुव्रीहिरिति चोक्तं भाष्ये अस्य नित्यत्वे तेन मुक्त इत्यसङ्गतिः स्पष्टैव। एवमन्यत्रापि बोध्यम्।

समासान्ताः॥ अत्र समासपदन्तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरमतमव्ययीभावादिपदान्यपि तत्पराणि। अत एव बहुकुमारीक इत्यादौ ह्रस्वो न। गोस्त्रियोरित्यत्र भाष्ये स्पष्टमेतत्। अन्त इति सूत्रे भाष्ये च। ए-

---

यीभावनपुंसकह्रस्वत्वापत्तेरत आह। * तत्रैवेत्यर्थ इति *। * । तदविवक्षायाम् *। समाहाराविवक्षायाम्। एतेनैकपूर्वीयत्समाहाराविवक्षायामेकनदीतरे इति भवत्येव। समासान्तापत्तिं वारयति। * अन्यत्यन्वेति *।

* वाक्याभावेन *। लौकिकविग्रहवाक्यसम्बन्धित्वाभावेन। एवञ्च नित्यसमासस्थले विशेष्याभावाद्विशिष्टाभाव। प्रकृते तु लौकिकविग्रहवाक्यसत्त्वे ऽपि तस्य सदृशबोधकतया विशेषणाभावाद्विशिष्टाभावोऽक्षत एवेति भाव। न चैतावता लौकिकत्वस्वसमानार्थकत्वाभ्यां विशिष्टस्य वाक्यस्याभावेनेति सिद्धम्। लौकिकत्वसमानार्थकत्वोभयाभाववद्वाक्यकत्वेनेत्यर्थात् तदेतदाह। * समासघटकेति *। * अत एव * । विग्रहसत्त्वादेव। अथ वा अत एव एतस्य नित्यसमाससदृशत्वञ्च न नित्यसमासत्वमेवेति स्वीकारादेव।

* अत एव *। समासपदस्य समाससम्बन्ध्यलौकिकविग्रहवाक्ये लक्षणास्वीकारादेव। अन्यथा समाससामान्यापेक्षत्वरूपान्तरङ्गत्वस्य ह्रस्वत्वे सत्त्वेन तत्प्रवृत्त्यापत्तिः स्यात्। समासार्थालौकिकविग्रहे लक्षणायान्त्वन्तरङ्गतर कपिति न दोष। * गोस्त्रियोरित्यत्र भाष्य इति *। तत्र हि कपि ह्रस्वत्वस्य प्रतिषेधो वक्तव्य। बहुकुमारीक। न वक्तव्यः। कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वम भ-

पञ्चराजमित्यादावपि तत्प्रवृत्त्यापत्तावकारान्तोत्तरपदेत्यत्रोत्तरपदग्रहणस्य व्यर्थत्वापत्तिश्च । अन्त इत्यादिसूत्रस्थभाष्यविरुद्धं चोत्तरपदावयवत्वम् । एवं हि तत्र भाष्यम् । समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये इदम्प्रथमका इत्यादौ कपोन्तोदात्तत्वापत्तिमुक्त्वा ऽन्त्ये वृच इत्यचान्तोदात्तत्वासिद्धिरित्युक्त्वा उभयोरपि प्रकरणेन लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्वमिति । सरूपसूत्रस्थभाष्यात्तदनाश्रयणे ऽपि योजयितुं शक्यम् । तथाहि कृतद्वन्द्वाना विभक्तौ परत एकशेष इति पक्षे ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति इति भाष्ये समासावयवत्वे ऽपि तत्प्राग्भागस्य विभक्तिपरत्वाभावस्तद्विशिष्टस्य तु न सरूपत्वमिति तद्भावः । न च तस्यानर्थक्येन तदनुक्त्या भाष्यस्य न्यूनता द्वन्द्वावयवानामर्थवत्तामेवैकशेष इत्यर्थे मानाभावात् । विशिष्टरूपोपादानाभावे न तत्परिभाषाया इहाप्रवृत्तेः । भाष्यान्तरं तु तादृशं नोपलभ्यत एवेति दिक् । स च समासान्तो बहु जस् गोमत् जसित्यवस्थायामलौकिके वाक्ये सुपः परस्तादेव ततः पूर्वत्वे तु वाच्यार्थविरोधः । न हि सुब्रहितं समासार्थः किन्तु तद्विशिष्टमेव । न च विशिष्टस्य सुबन्तत्वाभावेन सुबन्तात्तद्धित इति सिद्धान्तविरोधः, तेषामर्थाभावेन परिपूर्णं पदमिति तन्मूलभूतन्यायस्यात्र विषयाभावात् । अत एव प्रयोगादिति सूत्रे ऽस्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्तिर्भाष्ये उक्ता। किंच समासान्तप्रकरणे ङ्याप्प्रातिपदिकादित्यस्याप्यसम्बन्धः । तस्यामवस्थायां वाक्यस्याप्रातिपदिकत्वात् । तत्र कप्युत्पत्ति-

---

यति । अन्त इत्यादिसूत्रेति । * अन्तोदात्तत्वासिद्धिरिति * । यद्ययमुत्तरपदावयवः स्यात्तदा नञ्सुभ्यामिति सूत्रेणान्तोदात्तत्वमत्र चकारस्य स्यादेवेति भावः । विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोधं वारयति । * सरूपेति * । * तस्यानर्थकत्वेन * । समासान्तराहितस्य ऋच इत्यस्यार्थवत्त्वाभावेन । * मानाभावादिति * । न च द्वन्द्वापवादत्यव्यवहार एव मानम् द्वन्द्वसमासस्यार्थवत्त्वात् प्रातिपदिकसंज्ञायाम्प्रत्येकं सुबुत्पत्तावेव प्राप्ते । एतद्द्वन्द्वानामितिपक्षे तु सुतरान्तथेत्यत आह । * विशिष्टरूप इति * । अर्थबोधकतावच्छेदकानुपूर्वी विशिष्टरूपेत्यर्थः । * तद् विशिष्टमेव * । सुब्विशिष्टमेव । * तन्मूलभूतेति * । सुबन्तात्तद्धित इति सिद्धान्तमूलभूतेत्यर्थः । * अत एव * । परिपूर्णमिति युक्तेः सार्थकविषयत्वादेव । * तस्यामवस्थायाम् * । वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत आह । * तत्रेति * । तद्ग्रहणेन । न च समासान्तस्य मयडुक्तरीत्या वाक्यावयवत्वेन वाक्यग्रहणेन ग्रहणम्भवतु न तु समासग्रहणेन ग्रहणम्भविष्यतीति

भाष्यमेकदेश्युक्तिरुक्तभाष्यद्वयविरोधादित्यन्यत्र प्रपञ्चितम् । अन्तशब्दश्चरमावयववाची न च समुदायावयवः । अत एवोपशरदमित्यत्र नाव्ययीभावादित्यम् । अव्ययानादिति टिलोपाभावश्च सिद्धिः । पूर्वभागस्याव्ययीभावत्वाभावेनाव्ययत्वात् । यत्तु कैयटेन गोस्त्रियोरिति सूत्रे समासपदस्य समासार्थविग्रहवाक्यस्योत्तरपदलक्षणयोत्तरपदावयवत्वमुक्तम् । तथा सरूपसूत्रेउक्तम् । उत्तरपदावयवत्वमित्यपि भाष्यकारस्य मतमिति तन्न फलाभावात् । द्विधुरीत्यादौ स्त्रीत्वस्य लोकतः सिद्धे लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्येण लिङ्गप्रकरणस्य नियमार्थत्वाभावबोधनात् । अत एव परवल्लिङ्गमिति सूत्रसत्त्वेऽपि द्विनावमर्द्धखारमित्यादौ नपुंसकत्वसिद्धिः

---

समकालमेव समासान्तप्रवृत्तिस्वीकारे द्वित्रिभ्यामितिसूत्रस्थभाष्यविरोधः प्राप्नोति । तत्र हि कृतसमासात् तपादृत्साहचर्यात्कृतसमासान्ते मूर्द्धन्शब्देऽस्य प्रवृत्तिस्तदा समासान्ते कृते एव द्विमूर्द्धानमित्यादौ प्रवृत्तौ नान्तर्यं वक्तव्यम् । यदि तु मूर्द्धस्विति निर्देशात्साहचर्यमनादृत्याकृतसमासान्ते प्रवृत्तिस्तदा कृते समासान्ते द्विमूर्द्ध इत्यत्र स्वरो न प्राप्नोति । एवं वितर्क्याकृतसमासान्तस्यैव मूर्द्धस्विति निर्देशाद् ग्रहणम् । समासान्तविषये तु समासान्तापेक्षया परत्वात्स्वरे कृते ततः समासान्ते टिलोपे च कृते उदात्तनिवृत्तिस्वरेण सिद्धिरित्युक्तम् । यदि समाससंज्ञासमकालमेव समासान्तप्रवृत्तिस्तदा समासान्तात्परत्वात्स्वरप्रवृत्तिः स्यादित्येतदसङ्गतं स्यादत आह । * द्वित्रिभ्यामिति सूत्रेति * । * उक्तभाष्यद्वयेति * । गोस्त्रियोरिति सूत्रान्त इति सूत्रस्थभाष्येत्यर्थः । समाससंज्ञासमकालसमासान्तप्रवृत्तिपक्षे तु द्वित्रिभ्यामित्यत्र मूर्द्धस्विति निर्देशाददर्शनादकृतसमासान्तेऽस्य प्रवृत्तिः । समासान्तविधिश्चानित्यः । यत्र तु समासान्तस्तत्रापि समासस्य कार्यित्वेनाश्रयणात्समासान्तसङ्घातस्यापि ग्रहणेनानेनैव स्वरस्य सिद्धिरिति कल्पनया निर्वाहो बोध्यस्तदाह । * अन्यत्रेति * । * अत एव * । समुदायावयवत्वादेव । * टिलोपाभाव इति * । अव्ययग्रहणेन समासान्तस्य ग्रहणात् । कैयटोक्तोत्तरपदावयवत्वपक्षस्त्वसङ्गत इत्याह । * यत्त्विति * । * फलाभावादिति * । समासपदस्य समासार्थालौकिकविग्रहवाक्यात्मकसमुदायपरत्वम्भाष्यकारोक्तं यत्तादर्थ्याच्चाच्छब्द्यमिति तदनुगृहीतम्भवति । उत्तरपदावयवत्वे तु न तादृशभाष्योपलम्भ इत्यपि बोध्यम् । ननु यदि समासान्तो नोत्तरपदावयवस्तदा द्विधुरीत्यत्राकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट इत्यस्य कथम्प्रवृत्तिरत आह । * द्विधुरीत्यादाविति * । * अत एव * । लिङ्गस्य लोकाश्रयत्वादेव । * नपुंसकत्वसिद्धिरिति * । उत्तरपदावयवत्वाभावमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भावः । उत्तरपदावयवत्वस्वीकारे भाष्यविरोधमपि दर्श

रादिति भावः। अत्र गणसूत्रे परग्रहणं प्रक्षिप्तमिति परोक्षेलिडिति सूत्र-स्थभाष्यकैयटस्वरसः। तत्र हि समासान्तो ऽपि निपातनात्साधितः।

पूजार्थमिति। वेति वक्तव्ये तत्पूजार्थमपीत्यर्थः। अन्यतरस्याग्रहणस्य तु स्वरितत्वं नास्त्येव। अत एव नदीपौर्णमासीति सूत्रे नदीशब्देन विशे-षाणामग्रहणे शरदादिषु विपाट्शब्दपाठस्य ज्ञापकत्वमुक्तं सङ्ख्यासञ्ज्ञासूत्रे भाष्ये। नदीत्यादेर्वैकल्पिकत्वे नित्यत्वाय पाठस्यावश्यकतया ज्ञापकत्वास-ङ्गतिः स्पष्टैव। तत्र ङ्यन्तपाठस्तु प्रपञ्चार्थस्तत्र नदीसञ्ज्ञकस्य न ग्रहणं पौ-र्णमास्यादिग्रहणात्। न चाशब्दसञ्ज्ञेति निषेधात्स्वरूपस्यापि ग्रहणं न स्या-दिति वाच्यम्। लक्ष्यानुसारेण सामर्थ्येन च तस्यात्र त्यागात्। अत एव तत्सूत्रं भाष्ये प्रत्याख्यातमिति प्रामाणिकाः॥

॥ इत्यव्ययीभावः ॥

---

त्याप्नोति भाव। वस्तुतस्त्वस्मिन् गणसूत्रे परस्यपाठ आकरविरुद्ध इत्याह। अत्रेति

ननु पूजार्थमितिमूलमन्यारेवेत्यतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते तन्न युक्तम्। वक्ष्यमाणयुक्तेरित्याशयेनाह। * वेति वक्तव्य इति * * अत एव *। अन्यतरस्यामित्यस्य स्वरितेत्यस्य स्वरितत्वाभावादेव। * भाष्ये इति *। तत्र हि कृत्रिमाकृत्रिमन्याय व्युत्पाद्योक्तम्। यदि तर्हि कृत्रिमाकृत्रिमयो कृत्रिमे कार्यसम्प्रत्ययो भवति नदीपौर्णमास्याग्रहायणीभ्य इत्यत्रापि प्रस-ज्येत। पौर्णमास्याग्रहणीग्रहणसामर्थ्यान्न भविष्यति तद्विशेषेभ्यस्तर्हि प्राप्नोति * गङ्गायमुने इति *। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति यदय विपाट्शब्द शरत्प्रभृतिषु पठतीति। अत्र पौर्णमास्याग्रहायणीग्रहणसाम-र्थ्यादिति। यदि नदीसञ्ज्ञकस्य ग्रहणेन्तदा तऽनयोरुपादान व्यर्थं स्यात्। नन्वन-योरुपादान नियमार्थम्भविष्यति ईकारान्तस्य चे दनयोरेवेति चेत्। एवं तर्हि पौर्णमास्याग्रहायणीभ्य इत्येव वदेदिति नदीशब्दोपादान ज्ञापकमेव। साहचर्या-च्च रूपदेन नदीसञ्ज्ञकोकारान्तस्य ग्रहण भविष्यतीत्यभिप्राय। ये तु नदीपौर्ण-मासीतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध वदन्ति अस्य च सूत्रस्य व्यवस्थित-विभाषात्व स्वीकुर्वन्ति तेषां देवत्रात इत्याद्युक्तव्यवस्थितविभाषात्वपरिगणन-विरोध स्पष्ट एव। * तस्यात्रेति *। अशब्दसञ्ज्ञेतिनिषेधस्येत्यर्थः। * अत एव *। लक्ष्यानुसरणस्य सूत्रसत्वेऽप्यावश्यकत्वादेव। * तत्सूत्रम् *। स्वरूप-मितिसूत्रम्॥

इत्यव्ययीभावविवरणम् ॥

काले एव तत्पूर्वभागस्य समाससञ्ज्ञाविरोधाभावात् । समासान्तस्य च तद्वाक्यावयवत्वेन तद्ग्रहणेन ग्रहणात् । बहुकुमारीका इत्यादावुपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकाभावाच्च ह्रस्वः । कप् इत्यादन्तरङ्गतरः । तादर्थ्याच्छन्दस्यम् । येषां पदानां समासो न तावच्चेषामन्यदन्तरङ्गमिति कथं तावत्प्रतीक्षत इति भाष्येण स्पष्टं तथाभिधानात् । तत्राद्यस्य तावदित्यस्य कपः प्रथममित्यर्थः अन्यत्समाससञ्ज्ञारूपम् । कपा मह स्वभवनाय कथं पश्यतीत्यर्थः । पूर्वं स्वमप्रवृत्तौ हि तदर्थकवाक्याभावेन कप्शास्त्रवैयर्थ्यभिया तद्भवनकालप्रतीक्षा । अन्यथा तदनपेक्षत्वेन कप्प्रतीक्षोक्तिरत्यन्तासङ्गता स्यात् । अत एव प्रत्ययस्यादिति सूत्रभाष्योदाहृते बहुचर्मिकेत्यादावापः सुपः परत्वाभावादित्वासिद्धिरिति दिक् । अथाव्ययीभावेऽसाधारणसमासान्तानाह ॥

अव्ययीभावे ॥ अव्ययीभावे उत्तरपदतया वर्तमानं यच्छरदादिप्रकृतिकसुबन्तं तदन्ताट्टच् । स च समासार्थविग्रहवाक्यस्यान्तावयव इत्यर्थः । राजाह इत्यतष्टजनुवर्तते । अनन्तादव्ययीभावादित्यादि तु फलितार्थपरतया कथंचिन्नेयम् । अत्र गणे ये झयन्तास्तेषां झय इति विकल्पे प्राप्ते नित्यार्थः पाठ इति केचित् । प्रत्यक्षमिति ॥ लक्षणेनाभीति समासः । परोक्षमिति । इन्द्रियाजन्यज्ञानम् । विषये त्वर्शआद्यजन्तः प्रयोगः । नन्वत्राव्ययीभावाभावमाशिङ्क्य आह । सामर्थ्यादिति । परस्यौकारेति । परशब्दस्य ओकारान्तादेश इत्यर्थः । एङ इति पूर्वरूपत्वम् । परस्योकारेति पाठे परस्याक्षिशब्दस्यादेरकार इत्यर्थः । आद्गुणः । अर्शआद्यचीति । धर्मप-

---

थाव्ययम् । वाक्यस्यैव समाससञ्ज्ञाविधानेन समासशब्दाभिधेयतया समासशब्देन विशिष्टस्य ग्रहणमाधेष्यतीत्याशयात् । अन्यथा । प्रदुक्तरीत्या तावदित्यस्य व्याख्यानाभावे । * तदनपेक्षत्वेन * । कपनपेक्षत्वेन । * अत एव * । सुपः परस्तादित्यस्याश्रयणादेव । * दिगिति * । दिगर्थस्तु यदन्यत्रोक्तमलौकिकविग्रहवाक्ये समासान्ते कृते तद्धिता तत्वात्प्रातिपदिकत्वे सुब्लुकि प्रत्ययलक्षणेन प्रत्येक सुबन्तत्वेन समाससञ्ज्ञेति तन्न युक्तमुक्तभाष्यस्वारस्येन समासान्तस्य समाससञ्ज्ञायाश्चैककालप्रवृत्तिकत्वस्यैव लाभ इत्यादि ।

सूत्रार्थमाह । * अव्ययीभाव इति * ।

नन्वेवमनक्षेत्यस्यापि अनन्त यत्प्रातिपदिकन्तत्प्रकृतिकसुबन्तोत्तरपदका व्ययीभावार्थवाक्यादित्येवार्थे उचित इत्यनन्तादित्युपपन्नमत आह । * अनन्तेति * केचिदिति * । झय इति सूत्रस्य वैकल्पिकत्वबाधेन इत्यर्थः । वस्तुतस्तु वक्ष्यमाणरीत्या झय इति नित्यमेव । * लक्षणेनेति * । अक्षणः सन्मुखमिति विग्रहः । * अव्ययीभावाप्राप्ति * । परमित्यर्थे विधायकाभावादव्ययाधारित